PUBLISHED BY

JAYA KRISHNA DAS HARIDAS GUPTA

*The Chowkhamba Sanskrit Series Office,*

BANARAS.

श्रीः



आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तबकः ४२५

*Printed by Jaya Krishna Das Gupta*

*at the Vidya Vilas Press, Banaras.*

कवितार्किकसार्वभौमश्रीश्रीहर्षप्रणीतम् ।

# खण्डनखण्डखाद्यम् ।

## प्रथमः परिच्छेदः—

अविकल्पविषय एकः स्थाणुः पुरुषः श्रुतोऽस्ति यः श्रुतिषु ।
ईश्वरमुमया न परं वन्देऽनुमयापि तदधिगतम् ॥ १ ॥

### शाङ्करी ।

हरिशङ्करयोः सितासितं, भुजगारातिभुजङ्गलाञ्छनम् ।
वपुरस्तु मुदे विरुद्धयोरपि संसर्गि न भिन्नतां गतम् ॥ १ ॥
विरुद्धधर्मद्वयसन्निपातेऽप्यभेद एवेति विभावयन्तम् ।
पुनातु भेदप्रतिभासशून्यं स्त्रीपुंसरूपं शिवयोः शरीरम् ॥ २ ॥

### खण्डनभूषामणिः ।

आनम्य भक्तिनम्रः शम्भुं नाम्नाथ गिरिजाकान्तम् ।
श्रीरघुनाथस्तनुते, खण्डनभूषामणिं कुतकात् ॥ १ ॥

### खण्डनदर्पणः ।

यस्माद्विश्वमशेषमुत्थितमिदं यस्मिन्पुनर्लीयते
यद्भासा स्फुरति स्वतो जडमपि प्रायो यदज्ञानतः ।
जीवोऽयं स्वपदच्युतो जडमतिर्मग्नो भवाम्भोनिधा-
वात्मानं तमसङ्गमद्वयमजं स्वाभीष्टसिद्ध्यै भजे ॥ १ ॥

### खण्डनरत्नमालिका ।

प्रणम्य भगवत्पादश्रीशङ्करपदाम्बुजम् ।
सूर्यनारायणः शुक्लस्तनुते रत्नमालिकाम् ॥

ग्रन्थारम्भे प्रेक्षावत्प्रवृत्तिप्रयोजकज्ञानविषयीभूताधिकारिप्रयोजनसंबन्धाभिधेयप्रदर्शनगर्भं शिष्टाचारपरम्पराप्राप्तकर्त्तव्यताकं परदेवतानमस्कारात्मकं मङ्गलमाचरति— **अविकल्पविषय** इति । यः अविकल्पविषयः अविकल्पः निर्विकल्पकं स्वरूपज्ञानं तद्विषयः अद्वैते प्रकाराभावेन सविकल्पकविषयत्वस्यासम्भवात् तद्विषयत्वं च तत्प्रयुक्तव्यवहारवत्त्वं न तु फलव्याप्यत्वम् आवरणभङ्गे सति चित एव फलत्वेन भेदगर्भभग्नावारणचित्सम्बन्धस्य चिद्रूपे ब्रह्मण्यसम्भवात् एतेन—अवेद्यत्वे सत्यपरोक्षव्यवहारविषयत्वरूपं स्वप्रकाशत्वं ब्रह्मणः प्रतिपादितं भवति ।

ननु न अवेद्यत्वे सत्यपरोक्षव्यवहारविषयत्वं स्वप्रकाशत्वम् सुषुप्तिप्रलयमोक्षेष

शाङ्करी ।

भवनाथसूक्तिगुम्फनसिह खण्डनखाद्यटीकायाम् ।
श्रीशङ्करेण विदुषा विदुषामानन्दवर्द्धनं क्रियते ॥ ३ ॥

खण्डनभूषामणिः ।

धीराः कुशाग्रमतयो नितरां नितान्तं ग्रन्थानिमं परिशीलयन्ति ।
तेभ्यो ममेदमुपढौकितमल्पबुद्धेः क्षोभप्रदं यदि भवेन्मम कोऽपराधः ॥ १ ॥

खण्डनदर्पणः ।

यस्मिन् देवा अपि सुरपुरीवासमास्वादयन्तो-
धन्याः स्मः किं वयमिति जनाः सादरं कामयन्ते ।
लाढीवंशे खलु खलरहिते तत्र पुण्यप्रभावा-
द्धीरः श्रीमन्नरपतिमहामिश्रवर्यो बभूव ॥ २ ॥

खण्डनरत्नमालिका ।

व्यवहाराभावेन तद्विषयत्वास्याप्यसम्भवेनाव्याप्तेः न चाऽवेद्यत्वे सत्यपरोक्षव्यवहारविषयत्वयोग्यत्वम् लक्ष्ये लक्षणास्यत्वस्यैवाव्याप्तितया तादृशयोग्यत्वस्य च ब्रह्मणि कदाचित्सत्त्वेनाव्याप्त्यभावेऽपि अविकल्पविषय इत्यनेन सूचितायाः स्वप्रकाशत्वस्य ब्रह्मस्वरूपलक्षणताया लाभानुपपत्तेरिति चेन्न—अवेद्यत्वे सत्यपरोक्षव्यवहारविषयत्वयोग्यत्वात्यन्ताभावानधिकरणत्वरूपस्य स्वप्रकाशत्वस्य अविकल्पविषय इत्यनेन विवक्षणेनादोषात् । न च मोक्षेऽनधिकरणत्वरूपधर्मस्याभावेन स्वरूपत्वानुपपत्तिरिति वाच्यम् अनधिकरणत्वस्य स्वरूपतया तदापि सत्त्वात् । न च वेदान्तिनये ब्रह्मणि योग्यताया [illegible]त्वात्तेन तदत्यन्ताभावस्य ब्रह्मणि सत्त्वमिति कथं तदत्यन्ताभावानधिकरणत्वमिति वाच्यम् व्यावहारिकात्यन्ताभावस्य विवक्षणेन ब्रह्मणि च योग्यत्वात्यन्ताभावस्य ब्रह्मस्वरूपत्वेन तात्त्विकत्वात् व्यावहारिकात्यन्ताभावानधिकरणत्वस्य ब्रह्मणि सत्त्वे बाधकाभावात् ।

ननु किमिदमवेद्यत्वमिति चेत् फलाव्याप्यत्वमेवेति गृहाण । घटादेः फलव्याप्यतया न तत्र विशिष्टलक्षणातिव्याप्तिः न च ब्रह्मणो वृत्तिप्रतिबिम्बितचिद्रूपफलभास्यतयोक्तलक्षणासम्भव इति वाच्यम् तस्य फलरूपत्वेन फलभास्यत्वासम्भवात् ।

ननु अपरोक्षव्यवहार इत्यनेन अपरोक्ष इति शब्दप्रयोग एव विवक्षणीयोऽन्यस्य दुर्वचत्वात् तथा चालौकिकप्रत्यक्षविषये धर्माधर्मादौ तादृशव्यवहारयोगितयाऽतिव्याप्तिरिति चेन्न—योगजधर्मातिरिक्तलौकिकप्रत्यासत्तेरङ्गीकारेणादोषात् योगजधर्मोऽपि स्वयोग्ये व्यवहिते एव सामर्थ्यापादको न धर्मादौ इति तमादायापि नातिव्याप्तिः शङ्कनीया ।

ननु अवेद्यत्वे सति अपरोक्षव्यवहारविषयत्वं तद्योग्यत्वं च व्याहतम् तदपरोक्षव्यवहारे तद्विषयकस्फुरणस्य हेतुत्वादिति चेन्न अन्यत्र तद्विषयकस्य स्फुरणस्य तद्व्यवहारजनकत्वेऽपि स्वभावभेदेन स्फुरणस्य स्वाविषयकस्यापि स्वस्मिन् व्यवहारजनकत्वात् । न च घटादावप्येवमेवास्त्विति वाच्यम् तेषामस्फुरणरूपतया तद्विषयकस्फुरणं विना अपरोक्षव्यवहारविषयत्वायोगात् ।

शाङ्करी ।

प्रारिप्सितप्रतिबन्धकदुरितनिवारणकारणेष्टदेवतानमस्काररूपं मङ्गलं कुर्वन्नेव प्रेक्षावत्प्रवृत्त्यङ्गप्रयोजनाभिधेयसम्बन्धप्रतिपादनपरः परमतनिराकरणचिकीर्षया स्व-मतं ब्रह्माद्वैतमास्थाय‌ुक्तो वैतण्डिकोऽपि स्वप्रौढिप्रकटनाय सूचयन्नाह—अविकल्प इति । एकः पुरुष इति । अद्वितीयं ब्रह्मेत्यर्थः, श्रुतिषु तथा श्रुतत्वात्, यद्यथा श्रुतिषु श्रुतं तत्तथा ; यथा ब्रह्मण आनन्दमयत्वं, तथा चाद्वितीयं ब्रह्म इति स्थापन-सूचना ।

खण्डनभूषामणिः ।

जाततत्त्वसाक्षात्कारोऽपि लोकसंग्रहार्थं मङ्गलमातनोति—अविकल्पेत्यादिना । वि-कल्पो विरुद्धकोटिकं ज्ञानं संशयस्तदविषयः यः श्रुतिषु उपनिषत्सु श्रुतः अस्ति सद्रूपः एकः, 'स्थाणुः पुरुष' इति संशये हि स्थाणुविशेष्यके स्थाणुपुरुषाभेदो भासमानो

खण्डनदर्पणः ।

तस्यात्मजः सकलशास्त्रनिरूढचेताः
श्रीमच्छुभङ्कर इति प्रथमः कवीनाम् ।
आविर्बभूव भुवि विश्रुतकीर्तिचन्द्रो
लाढीयवंशसरसीरुहवासरेशः ॥ ३ ॥

खण्डनरत्नमालिका ।

ननु अनवस्थाभयेन स्फुरणान्तरानङ्गीकारेऽपि स्वस्यैव स्वविषयत्वमस्तु अन्यत्र क्लृप्तस्य तद्विषयत्वरूपस्य नियामकस्य त्यक्तुमशक्यत्वात् अन्यथा प्रमेयत्वस्य स्ववृ-त्तित्वं विना स्वत एव 'प्रमेयम्' इति व्यवहारजनकत्वोपपत्त्या केवलान्वयित्वभङ्गः स्यादिति चेन्न अनवस्थया स्फुरणान्तरत्यागवदभेदे भेदनियतस्य विषयविषयिभावस्या-प्ययुक्ततया त्यागोपपत्तेः प्रमेयत्वे च केवलान्वयित्वभङ्गस्येष्टत्वात् ।

ननु ब्रह्मणः स्वप्रकाशत्वे सदाविदिततयाऽविदितत्वाभावेन शास्त्रागोचरत्वमिति तस्यौपनिषदत्वानुपपत्तिरिति चेन्न अविद्यावृतत्वेन अविदितमिव भवति यतोऽतः शा-स्त्रगोचरत्वसम्भवात् न च स्वरूपज्ञानस्याविद्यानिवर्तकत्वेन तत्राविद्यावस्थानानुपपत्ति-रिति वाच्यम् प्रमाणज्ञानस्यैवाविद्यानिवर्तकतयाऽदोषात् स्वरूपभूतं ज्ञानम् अविद्यायाः साधकमपि श्रवणादिसाध्यापरोक्षवृत्तिसमारूढं सत् अविद्याया निवर्तकम् 'तृणादेर्भासिका-प्येषा सूर्यदीप्तिस्तृणं दहेत् । सूर्यकान्तं समारुह्य तन्न्यायं विनियोजयेत्' इति ।

ननु त्वन्मते ईश्वरः आत्मैव आत्मा चानुभवाश्रयतयाऽपरोक्षः इति तत्प्रकाशेऽनु-भवस्यापेक्षणीयत्वेन कथं स्वप्रकाशत्वमत आह—एक इति । अयं भावः आत्मा नानुभवाश्रयतयाऽपरोक्षः आत्मनो जडत्वे घटादिवदनुभवाश्रयत्वायोगात् अजडत्वे ततो भेदाभावेन भेदनिबन्धनविषयविषयिभावस्यासम्भवात् । किञ्च आत्मा न स्वमानसप्र-त्यक्षः ज्ञानासमवायिकारणसंयोगाश्रयत्वान्मनोवत् नात्मान्तरप्रत्यक्षः आत्मन आत्मा-न्तरप्रत्यक्षविषयत्वस्य परैरनङ्गीकारात् स्वमते आत्मान्तराभावाच्च ।

शाङ्करी।

तमीश्वरं वन्दे यः अविकल्पविषयः, विकल्पः संशयस्तदऽविषय इत्यर्थः । विरुद्धनानाप्रकारकं हि ज्ञानं संशयः स चाद्वैते न संभवति न वा सर्वसिद्धेः संशयावकाश इति भावः । यद्वा विकल्पः विशिष्टज्ञानं, तदविषय इत्यर्थः, अद्वैते प्रकाराभावात् सप्रकारकज्ञानानुत्पत्तेरिति भावः । यद्वा अविकल्पः निर्विकल्पकं तद्विषयः तन्मात्र-

खण्डनभूषामणिः ।

वार्थोल्लेखी अयं तु श्रुतौ न तथा प्रतीतः किन्तु निश्चित इति चित्रे यदि च धर्मिभेदेन तथाज्ञानं स्यात् स्यादप्यविरोधः नचैवं किन्तु एक एव अथ च स्थाणुः स्थिर एव 'वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्' इत्यन्ता 'अयं स्थाणुः' इत्याद्याः

खण्डनदर्पणः ।

तेनाक्षुण्णविचारमन्थमथनैरुद्धृत्य विद्यार्णवात्
प्रज्ञानेत्रतया निरूढविलसत्सत्खण्डनार्थमृतम् ।
श्रीमच्छंकरवर्धमानचरितोपायान्विलोड्यापि च
श्रीहर्षस्य कृतेर्मया कृतिमुदे श्रीदर्पणो रच्यते ॥ ४ ॥

खण्डनरत्नमालिका ।

ननु ब्रह्मणो जगदुपादानतया मृदादिवत्परिणामित्वमिति जगदाकारपरिणामिनस्त-स्य कथमेकत्वम् अत आह—स्थाणुः इति । कूटस्थनित्योऽविकारीति यावत् तथा हि ब्रह्मणो नैकदेशेन परिणामो निरंशत्वात् । न च जीवानां तदंशत्वम् ब्रह्मणो जीवारम्य-त्वप्रसङ्गात् 'ममैवांशो जीवलोके जीवभूतः सनातनः' इति स्मृतिषु अंशत्वोक्तिश्च घटा-काशस्य महाकाशं प्रतीव कल्पितप्रदेशत्वरूपमंशत्वमादाय नेया । न वा सामस्त्येन परिणामः स्थितिकाले ब्रह्मणोऽभावप्रसङ्गात् ।

नन्वेकमविकारि वस्तुतत्त्वं चेत् भेदालम्बनस्य कर्मकाण्डस्य प्रत्यक्षादेश्च कथं प्रामाण्यमत आह—पुरुषः इति । पुरुषः—क्षेत्रज्ञः एतेन क्षेत्रज्ञभेदः सूचितः । ततश्च काल्पनिकं भेदमाश्रित्य कर्मकाण्डप्रवृत्तिः प्रत्यक्षादेः प्रामाण्यं च ।

नन्वीदृशे वस्तुनि किंमानमत आह—श्रुतः इति । वेदान्ता एव तत्र मानमिति भावः ।

ननु भ्रमेऽध्यस्तस्यैव भानेनेतरेतराध्यासाभ्युपगमेन तत्त्वज्ञानस्याध्यस्तमात्रनिवर्त-कत्वेन अधिष्ठानस्य ब्रह्मणोऽपि निषेधे शून्यवादापत्तिरत आह—अस्ति इति । निरधि-ष्ठानारोपासम्भवेन बाधावधितया स परिशिष्यते स्वरूपेण संसृष्टतया वाऽध्यस्तस्यैव भ्रमविषयत्वात् प्रतीचः पराक्संसृष्टत्वाकारेण मिथ्यात्वेऽपि स्वरूपेण सत्यत्वान्न शून्य-वाद इति भावः ।

ननु श्रुतत्वं कर्मकाण्डस्यापीति तस्यापि तात्त्विकत्वापत्तिरत आह—श्रुतिषु इति। तात्पर्यलिङ्गैरभ्यासादिभिरकर्तृत्वादेरेव तात्त्विकत्वं न तु कर्मकाण्डादेरिति भावः ।

शाङ्करी ।

विषय इत्यर्थः । अद्वैते प्रकाराभावेन सविकल्प ( विषय ) त्वाऽभावादिति भावः । यद्वा विकल्पस्य कल्पनायाः अविषयः पारमार्थिकत्वात् । यद्वा अविकल्पः निर्विकल्पकज्ञानं, तद्विषयो यस्येति बहुव्रीहिः, ब्रह्मणः स्वप्रकाशचिद्रूपत्वात् ।

खण्डनभूषामणिः ।

श्रुतयः । तथा—

उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम् ।
ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात् ॥

खण्डनरत्नमालिका ।

इत्थं स्वरूपलक्षणमुक्त्वा तटस्थलक्षणमाह—**ईश्वरमिति** । मायोपाधिकतया जगज्जन्मादिकर्तारं 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इति श्रुतेः ।

तस्य परमानन्दरूपतां सूचयति—उमयाधिगतमालिङ्गितम् प्रियापरिष्वङ्गकथनेन परमानन्दः सूचितः ।

नन्वेवंभूतेश्वरसत्त्वे किं श्रुत्यतिरिक्त—प्रमाणाभावोऽत आह—**अनुमयापीति** उमया केवलं परं नाधिगतं किन्तु अनुमयापि अनुमानेनापि अधिगतम् ।

ईश्वरसाधनाय—इयं पृथिवी, सकर्तृकाऽकर्तृकवृत्तित्वरहितानेकाकर्तृकवृत्तित्वरहितानेकतन्निष्ठधर्माधिकरणम् मेयत्वाद्घटवदिति, पृथिव्युदके प्रयत्नवता धृते गुरुत्वे सत्यपातित्वात् करतलन्यस्तामलकवत् इति च अनुमानद्वयं श्रीमदानन्दपूर्णाचार्यैर्**विद्यासागर्यां** निरूपितम् ।

श्रीमदानन्दपूर्णेन यमिनेश्वरसिद्धये ।
अनुमानद्वयं प्रोक्तं तदिदानीं विशद्यते ॥

अत्र श्रीवञ्झाझापराभिधानमहापण्डितधर्मदत्तमहोदयाः—अत्र पृथिवीपदेन कार्यपृथिवी विवक्षिता अवच्छेदकावच्छेदेन च साध्यता तत्र च सामानाधिकरण्येन सिद्धिर्न विरोधिनी इति घटत्वादिकमादाय न सिद्धसाधनम् । अवच्छेदकावच्छेदेनानुमितौ सामानाधिकरण्येनापि बाधस्य विरोधितया भूमण्डलरूपावयविवृत्त्यसाधारणधर्ममादाय नानुमानस्य कृतार्थता, जन्यत्वं च सावयवस्य भूमण्डलस्य सकर्तृकत्वे एव भवत्यनेकाकर्तृकवृत्तित्वरहितम् , अन्यथा सावयवे ह्यकर्तृके भूमण्डले एव जन्यत्वस्य तादृशवृत्तित्वसत्त्वेन तद्रहितत्वमसम्भवीत्युक्तानुमानस्य कृतार्थता । सकर्तृकाकर्तृकवृत्तित्वरहितत्वविशेषणविशिष्टत्वेनैव धर्मस्य साध्यघटकत्वे घटादौ पृथिव्यां तादृशसकर्तृकत्वरूपधर्ममादायेव भूमण्डलाङ्कुरादौ तादृशाकर्तृकत्वरूपधर्ममादाय प्रसिद्धिसम्भवेनानुमानस्य विवक्षितार्थसाधकता न स्यादित्यनेकाकर्तृकवृत्तित्वराहित्यं धर्मविशेषणतयोपात्तम् । वृत्तित्वपदस्य द्वन्द्वान्ते श्रूयमाणत्वादनेकवृत्तित्वे सत्यकर्तृकवृत्तित्वराहित्यं फलितार्थः न एकमात्रतया विद्यते यस्य तदनेकं सावयवमिह विवक्षितं निराश्रयस्य परमाण्वादेरकर्तृकपदेनैव लाभात् । तथा चानेक-

शाङ्करी ।

**एकः**—अद्वितीय इत्यर्थः ।

**स्थाणुरिति** । स्थिर इत्यर्थः, कूटस्थनित्यत्वात् ।

यद्वा स्थाणुरिव स्थाणुः सुखदुःखाद्युपाधिसम्भेदरहित इत्यर्थः ।

पुरुषः—क्षेत्रज्ञः, तेन क्षेत्रज्ञाऽभेदो ध्वनितः । सर्वत्र प्रमाणमाह—**श्रुत इति** । 'श्रुतिषु' इति सर्वाः श्रुतीराह, तथा च कर्मकाण्डस्यापि ब्रह्मपरत्वमिति ध्वनितम् । 'अस्ति' इति स्वसाक्षिकविद्यमानैकरूपताभाह ॥

खण्डनभूषामणिः ।

इति कैवल्योपनिषत्प्रतिपाद्यं तस्य रूपं नमस्यतौपयिकमाह—**ईश्वरमुमयाधिगतमिति** । उमा पार्वती तया आश्लिष्टं अर्द्धनारीश्वरमित्यर्थः लोकमपि प्रमाणं तत्रा-

खण्डनरत्नमालिका ।

त्तित्वस्य सावयववृत्तित्वम्फलितार्थः सावयवस्य क्षित्यङ्कुरादेरकर्तृकत्वोपगमे तादृशधर्मान्तर्गतत्वस्याकर्तृकत्वे नास्ति सम्भवः क्षित्यङ्कुरादावेव सावयववृत्तित्वविशिष्टाकर्तृकवृत्तित्वसम्भवात् । तादृशधर्मतया सकर्तृकत्वस्यैवागतया परिग्रहतया भवत्यनुमानस्य कृतार्थता । अकर्तृकवृत्तित्वमात्रोपादाने परमाण्वाद्यकर्तृकधर्ममात्रस्याकर्तृकवृत्तित्वरहितत्वासम्भवेन तत्र व्यभिचारः स्यादिति, सावयववृत्तित्वमुपात्तम् । तद्रहितत्वमात्रोपादाने सकर्तृकत्वस्य परिग्रहो न स्यात् सावयवे व्यभिचारश्च स्यादिति विशेष्योपादानम् । सकर्तृकाकर्तृकवृत्तित्वराहित्यानुपादाने सत्त्वद्रव्यत्वपृथिवीत्वादेरनेकाकर्तृकवृत्तित्वराहित्यविरहेण तान्यादाय सिद्धसाधनासम्भवेऽपि गुरुत्वं तादृशमादायार्थान्तरं स्यादिति तदुपात्तम् । तत्र विशेषणविशेष्ययोः सकर्तृके च व्यभिचारवारणायोपादानम् । न च गुरुत्वादेर्बाधग्रहान्नैवमिति वाच्यम् निरवयवाकर्तृसकर्तृकवृत्त्यपूर्वधर्मसिध्यार्थान्तरापत्तेस्तावता सकर्तृकत्वसिद्धेरप्राप्तेरिष्टापत्तेरयोगात् । न च निरवयवाकर्तृकमात्रवृत्तिधर्मेणार्थान्तरावकाशः सावयवत्वग्रहेण तद्विरोधात् । सावयवत्वस्य निरवयवमात्रवृत्तिधर्माभावव्याप्यत्वात् । प्रागुक्तधर्मस्य तु सावयत्वविरोधित्वाभावेन तत्सिद्धिप्रतिरोधासम्भवात् उक्तविशेषणोपादाने तु तादृशधर्मस्य सकर्तृकवृत्तित्वे सति अकर्तृकवृत्तित्ववत्त्वेन तद्रहितत्वाभावेन तादृशविशेषणविशिष्टधर्मत्वेन तत्परिग्रहासम्भवेनार्थान्तरवारणात् । अनेकतन्निष्ठेति अङ्कुरत्वादिसिद्धधर्मवारणायाभिमतसकर्तृकत्वस्यैव परिग्रहाय चोपात्तम् ।

यद्यपि अङ्कुरत्वभूमण्डलत्वादेरुक्तविशेषणवत्त्वग्रहो न तस्य सकर्तृकत्वं विनेति सिध्यत्येव सकर्तृकत्वं तथापि यथैतदनुमानत एव तस्यैव सिद्धिः स्यान्नतरस्य तथोपरअकतया तद्विशेषणोपादानम् । न च तद्विशेषणेनापि कथं वारणमिति वाच्यम् अनेकपदेनानेकजातीयस्य विवक्षितत्वात् सा च जातिः पृथिवीत्वसाक्षाद्व्याप्या ग्राह्या तथा च तादृशजातिविशिष्टत्वं विशेषणं पर्यवसितं । वै० स्वाश्रयवृत्तित्व स्वविरुद्धतादृशजात्याश्रयवृत्तित्वोभयसम्बन्धेनेति मेयत्वाधिकरणनिखिलवस्तुनि जन्यत्वे नित्यत्वञ्चादाय साध्यसत्त्वं बोध्यम् ।

शाङ्करी ।

उमाया इव स्वस्यापि भगवदेकतानतामाह—उमया परमधिगतमेव न, किन्नाम श्रवणादनु पश्चान्मयापि श्रीहर्षेणाप्यधिगतमेवेति । नुशब्दः सम्बन्धने वा । अधिगमस्त्वत्र मननमेव । उमानुमे विद्याविद्ये वा । ताभ्यां स्वर्गिसंसारदशाविशेषेणाधिगतत्वाद्विषयीकृतत्वात् ।

यद्वा उमया=गौर्या, मया=च लक्ष्म्या, अधिगतम्=आश्लिष्टं । तेन विष्णुगौरीश्वराभेद उक्तः "मा मातरि च माने च, मा च लक्ष्मीः प्रकीर्तिता" इति कोशात् ।

खण्डनभूषामणिः ।

स्तीत्याह—अनुमयानुमित्या न परम् उमया किन्तु अनुमित्यापीत्यर्थः श्रुतिसहायीकृत्यनुमापि तत्र प्रवर्तत इत्याशयः ।

नुः सम्बन्धने मया लक्ष्म्या चाश्लिष्टं 'मा मातरि च माने च मा च लक्ष्मीः प्रकी-

खण्डनरत्नमालिका ।

वस्तुतस्तद्विशेषणोपादानेऽपि घटभूमण्डलान्यतरत्वजन्यजलाङ्कुरसंयोगद्वित्वादिवारणस्याशक्यत्वेन तस्य न विशेषणत्वम् अपि तु विवक्षितस्य सकर्तृकत्वस्योपरञ्जकमेव नातो वैयर्थ्यशङ्काऽन्यतरत्वस्योक्तस्य परिग्रहेपि तस्यानेकाकर्तृकवृत्तित्वराहित्यरूपविशेषणवत्त्वं न भूमण्डलाङ्कुरादेः सकर्तृकत्वं विनेति नोक्तानुमानस्य विवक्षितार्थपर्यवसायित्वमिति चिन्त्यम् इति व्याचख्युः ।

महामहोपाध्यायशिवकुमारमिश्रचरणास्तु—अत्रानुमाने 'इयं पृथिवी' इति पक्षः,'सकर्तृकाकर्तृकवृत्तित्वरहितानेकाकर्तृकवृत्तित्वरहितानेकतन्निष्ठाधिकरणम्' इति साध्यम् 'मेयत्वादि'ति हेतुः, सकर्तृका-घटादयः अकर्तृका-गगनादयः एतदुभयवृत्तित्वरहितः अथ च अनेकेऽकर्तृकाः परमाणवः आत्मानो जात्यादयश्च तन्निरूपितवृत्तित्वरहितं यदनेकम् शब्दः घटत्वादिकं च [ यतः शब्दः आकाशरूपेऽकर्तृके वर्तते किन्त्वाकाशोऽनेको न भवति तथा च घटत्वमनेकेषु घटेष्वस्ति किन्तु घटा अकर्तृका न भवन्ति ] तन्निष्ठो धर्मः शब्दगतः सकर्तृकत्वरूपः घटत्वनिष्ठो नित्यत्वरूपः एतदुभयधर्मान्यतरस्याधिकरणत्वमत्र साध्यते ।

इयं पृथिवीत्यत्र स्थूला पृथिवी विवक्षिता तस्यां च नित्यत्वांशस्य बाधितत्वात् सकर्तृकत्वमात्रसिद्धावनुमानं पर्यवस्यति । वाच्यत्वप्रमेयत्वघटाभावादिकमादाय सिद्धसाधनवारणाय सकर्तृकाकर्तृकवृत्तित्वरहितेति तन्निष्ठस्य धर्मस्य विशेषणम् सकर्तृकाकर्तृकोभयनिरूपितवृत्तित्वशून्य इत्यर्थः वाच्यत्वादिकं सकर्तृकेऽकर्तृके चास्तीति तद्व्यावृत्तिः नित्यत्वं तु अकर्तृके एवास्ति सकर्तृके घटादौ नास्ति सकर्तृकत्वं पुनः सकर्तृके एवास्ति न अकर्तृके इत्येतयोर्नित्यत्वसकर्तृकत्वयोः संग्रहः अस्मिन्ननुमाने नास्तिकाभिमतं कार्यत्वसामान्यमादायार्थान्तरं भवतीत्यतः पृथिव्युदके प्रयत्नवता धृते गुरुत्वे सत्यपातित्वात् करतलन्यस्तामलकवत् इत्यनुमानेनेश्वरः साधनीय इति व्याचक्षते ।

राखालदासन्यायरत्नमहाशयास्तु—सकर्तृकाद्यधिकरणमित्यन्तवाक्यात् साध्यत्रयबोधः श्रीमदानन्दपूर्णाचार्याभिप्रेतः तत्रैकं साध्यं सकर्तृकाकर्तृकवृत्तित्वरहितेत्यंशान

शाङ्करी ।

विरोधाभासश्चालङ्कारोऽयं, तथाहि—'एकः, स्थाणुः पुरुषश्च' इति विरुद्धं; स्थाणुः पुरुषः, संशयाविषयश्च' इति विरुद्धं; 'श्रुतिषु श्रुतश्च, विशिष्टज्ञानाऽविषयश्च' इति विरुद्धम्; उमयाऽधिगतस्याऽनुमाधिगतत्वं च विरुद्धम्; यथाच न विरोधस्तथा व्याख्यातमेव ।

अत्र पुरुषसमभिव्याहृतस्यैकपदस्य कैवल्यार्थकतया पुरुषकैवल्यं परमप्रयोजनमुक्तं, सङ्ख्यार्थतया पुरुषस्य ब्रह्मण एकत्वमद्वैतमभिधेयमुक्तम्, अवान्तरप्रयोजनं चाऽनुमया मननेनाधिगतत्वमुक्तं वेदितव्यम् ॥ १ ॥

खण्डनभूषामणिः ।

तिते'ति कोशात् तेनेश्वरस्य विष्णोरभेदो ध्वनित इति शंकरमिश्राः ।

वन्दे—स्तौमि अभिवादयामि चेत्यर्थः अनु उमातः पश्चान्मयाप्यधिगतं साक्षात्कृतमित्यपि व्याचक्षते ॥ १ ॥

खण्डनरत्नमालिका ।

प्राप्तं द्वितीयतृतीयसाध्यबोधकवाक्यन्तु द्वन्द्वगर्भसमानतत्पुरुषघटितकर्मधारयनिष्पन्नम् । विग्रहत्रयं च–अनेके च तच्चेति द्वन्द्वविग्रहः, तत्र निष्ठमितितत्पुरुषविग्रहः, अनेकाकर्तृकवृत्तित्वरहितं च तत् अनेकतन्निष्ठं चेतीति कर्मधारयविग्रहः वाक्यस्थिततत्पदमव्ययं न तु सर्वनाम तथा सति अनेकपदलोपेन तत्पदस्यैवैकशेषापत्तिः । किं च प्रयोजनविशेषस्य सुस्पष्टप्रतिपादनार्थं सर्वनामपदस्य नैकशेषः अतो दर्शितवाक्यस्थततपदस्य सर्वनामत्वेऽपि स्वत्वप्रतियोगिसामानाधिकरण्येति जगदीशप्रभृतिग्रन्थकृल्लिखनं नासङ्गतम् एवं यावन्तः साध्याभावाः प्रत्येकं तत्तत्सजातीया इति दीधितिप्रयुक्तवाक्यमध्ये तत्तदितिप्रयोगोऽपि ।

अथवा अनेकपदस्य बहुव्रीहित्वस्वीकारेण तत एव अनेकनिष्ठरूपसाध्यलाभसंभवेन तद्वाक्यघटकश्रुतनिष्ठपदार्थे तस्यानन्वयेऽपि न साध्यालाभः बहुव्रीहिविग्रहस्तु एकमात्रं न यस्येत्याकारः यस्येत्यत्र षष्ठ्यर्थोऽधिकरणत्वं अधिकरणत्वार्थे षष्ठीप्रयोगो न दृष्टचर इति नाशङ्क्यं यतस्तद्विशिष्टस्येति दीधितिकारपङ्क्तिस्थषष्ठीविभक्तेरधिकरणत्वार्थकत्वं सिद्धान्तलक्षणविचारे जगदीशेन स्वहस्तितम् अनारूढवानरो वृक्षः अनारूढसर्वजीवं तत्पीठमित्यादिस्थलीयबहुव्रीहेर्विग्रहवाक्यस्थद्वितीयार्थकर्मत्वस्याभावबोधे व्युत्पन्नत्ववत् अनेकेति बहुव्रीहेरपि विग्रहवाक्यस्थषष्ठ्यर्थाधिकरणत्वरूपसंबन्धस्याभावबोधे व्युत्पत्तिः सर्वसंमता ।

इयं पृथिवीति वाक्यं पक्षतात्पर्यकं द्वन्द्वविग्रहस्थितप्रथमवाक्यस्यार्थः—कृतिमज्जन्ये तदजन्ये चोभयत्र वृत्तित्वरहितरूपं साध्यम्, एवंभूतसाध्यान्तर्गतं सकर्तृकत्वं जन्यत्वाभावादिकं च, दृष्टान्ता घटगगनादयः सर्व एव, न्यायमते क्षितिः सकर्तृका कार्यत्वादित्येवमनुमानाकारः तत्र तु दृष्टान्तं जन्यमात्रं न तु नित्यमपि, एवं च नैयायिकप्रदर्शितानुमानापेक्षया स्फुटतरमीदृशानुमानप्रदर्शनं नित्यानित्यसकलपदार्थमादायैव दृष्टान्तदृष्टेः ।

खण्डनरत्नमालिका ।

ईदृशसाध्ये साधनीये साध्यान्तर्गताजन्यत्वस्यास्मदादिकर्तृकत्वस्य च तत्र बाधेन साध्यान्तर्गततया यत्सिध्येत् तदेवाक्लृप्तभगवन्निष्ठकर्तृताकत्वरूपपदार्थान्तरम् । अत्र कल्पे एतत्पृथिवीगततद्व्यक्तित्वादेरपि साध्यान्तर्गततया प्राप्तत्वेन तस्य च मतद्वय एव क्लृप्तत्वेन सिद्धसाधनमित्यपरितोषेण कल्पान्तरमाहृतम् ।

कल्पान्तरीयप्रथमसाध्यम् अनेकाकर्तृकवृत्तित्वरहितानेकेत्यन्तेन लब्धम् साध्ये अनेकाकर्तृकवृत्तित्वराहित्यविशेषणं तु पक्षीभूततत्पृथिव्यां सकर्तृकत्वसिद्धिप्रयोजनकं विशेष्यांशानुपादाने पक्षगततद्व्यक्तित्वरूपसाध्यघटकपदार्थमादाय सिद्धसाधनम् एवं च ईदृशानुमानात् साध्यतावच्छेदकरूपेण तत्पृथिवीगगनादिरूपनित्यव्यक्त्यन्यतरत्वस्यैव पक्षेऽनुमितिविषयतया तत्पृथिव्यां सुतरां सकर्तृकत्वसिद्धिपर्यवसानम् । तादृशानुमितिश्च अकर्तृकद्व्यवृत्तिज्ञानं प्रति विरोधिनी अतस्तत्र अकर्तृकत्वशङ्का कथमपि न भवितुं प्रभवेत् ।

तत्पृथिव्यामकर्तृकत्वपक्षावलम्बिमते प्रकृतसाध्यतावच्छेदकरूपेण पक्षघटान्यतरत्वस्यापि तादृशानुमानविषयतया प्राप्तत्वेन तत्राकर्तृकत्ववादिनामपीष्टसिद्धिरित्यस्वरसात् कल्पान्तरमाह—तदित्यादिना ।

तृतीयकल्पीयसाध्यं तु अकर्तृकद्व्यावृत्तित्वे सति तन्निष्ठम् अर्थात् अकर्तृकनिष्ठं प्रागभावाप्रतियोगिनिष्ठमिति यावत् न तु नित्यवृत्तिधर्मः, तथा सति प्रागभावे व्यभिचारः स्यात् न च कालिकसम्बन्धेनैव प्रमेयत्वस्य हेतुत्वं तस्याभिप्रेतमिति वाच्यम् तथा सति उदयनाचार्यप्रभृतिग्रन्थकारप्रदर्शितहेतूपेक्षाया निर्बीजतापत्तेः ।

ननु कार्यत्वरूपहेतुः कथमुपेक्षितः कथं वा पक्षे सकर्तृकत्वसाधनार्थं दर्शितकुसृष्टिकल्पनया साध्यप्रयोगोऽर्थापत्तितः साध्यसिद्धिप्रयासश्च कृतः अनायासबोधगम्यार्थकस्य क्षितिः सकर्तृका कार्यत्वात् इत्याकारकस्यानुमानपरवाक्यस्यैव प्रयोक्तुं युक्तत्वात् यत—ईदृशवाक्यलब्धानुमानतः आहृत्यैव साध्यसिद्धिः संभवति—

नचेदृशानुमाने सर्वत्रैव सहचारदर्शनजं व्याप्तिज्ञानं भवेत् कार्यत्वरूपहेतुपक्षे तु न तथेत्येतन्मतस्योत्कर्ष इति वाच्यम् यतः सहचारदर्शनं हि हेत्वधिकरणे व्यभिचारशङ्कानिवर्तनद्वारा व्याप्तिनिश्चयोपयोगि भवेत् एवं च स्वल्पस्थानवृत्तिहेतुस्थले तादृशस्वल्पस्थल एव सहचारदर्शनं व्याप्तिनिश्चयोपयोगि अधिकस्थलवृत्तिहेतौ चाधिकस्थल एवेति एतावताधिकस्थले सहचारदर्शनस्य क उत्कर्ष इति चेन्न

वेदनित्यतावादिमीमांसकमतस्य च्छलतःखण्डनार्थं तार्किकमतखण्डनाय गगने परमाणुषु च सकर्तृकत्वसाधनार्थं च प्रदर्शितानुमानप्रवृत्तेः कार्यत्वहेतुना शब्दादौ कृतिमज्जन्यत्वव्यवस्थापनं न भवितुमर्हति हेतोस्तत्रासत्त्वात् तथा च जितमद्वैतवादिभिरिति ।

अत्र सूक्ष्ममीक्ष्यते ध्वंसप्रागभावाकल्पनाकृतलाघवज्ञानरूपतर्कसहकृतजन्यत्वविरोध्यनुमानस्यैव सत्त्वेन गगने परमाणुषु च सकर्तृकत्वानुमितिर्न सम्भवति अनुमानं

खण्डनरत्नमालिका ।

यथा—गगनमजन्यं निरवयवद्रव्यत्वात् दृष्टान्ताः परमेश्वरादयः अथवा गगनं द्रव्यवृत्ति-जन्यत्वाभाववत् निरवयवत्वात् गगनस्य नित्यत्वे लाघवं जन्यत्वे तद्ध्वंसप्रागभाव-तत्प्रागभावध्वंसादिकल्पनप्रयुक्तमहागौरवापत्तिरितितर्कसहितानुमानात् गगनादौ नि-त्यत्वसिद्धिः । एतेन प्रमाणवोऽपि व्याख्याताः तस्य नित्यत्वसाधकमहावाक्यान्यपि यथा—आकाशवत्सर्वगतश्च नित्यः, यथा सर्वगतः सौक्ष्म्यादाकाशोनोपलिप्यते, यथा सर्व-गमाकाशमित्यादि । एतादृशवाक्यनिकरतो दर्शिततर्कसहितानुमानतश्च गगनादेर्नित्यत्व-सिद्धेः कथमपि खण्डयितुमशक्यत्वात् एवं च द्विविधप्रमाणेन गगनस्य नित्यत्वसिद्ध्या एकमात्रशब्दप्रमाणस्य यथाश्रुतार्थकत्वरक्षार्थं तस्य जन्यत्वस्वीकार उपहासास्पदमेव अर्थवादात्मके कस्मिन्नपि परमवाक्ये किं लाक्षणिकत्वं नास्ति अत एव तस्मादाकाशः सम्भूतः इत्यादावाकाशपदम् इन्द्रियविशेषे लाक्षणिकमथवाकाशपदशक्यतावच्छेदकेषु शब्देष्वेव महाकविरित्यादौ कवित्वांशे महत्त्वान्वयवत् व्युत्पत्तिवैचित्र्येण जन्यत्वा-न्वयं स्वीकृत्य तद्वाक्यमुपपादनीयम् एवं रीत्यैवाहं बहु स्यां प्रजायेय तदात्मानं सृजा-म्यहमित्यादिवाक्यानुपपादनीयानि । प्रजायेयेत्यत्र जनधातुना पूर्वशरीरपरिग्रहः प्रत्या-य्यते आद्यक्षणसम्बन्धस्यैव तस्मिन्नपि जनेरर्थताया गदाधरादिग्रन्थकारैः स्वहस्ति-त्वात् भूधातुरसूधातुश्च क्वचिज्जनधातुसमानार्थकोऽपि सृजधातोरर्थस्तु तादृशजन्य-प्रयोजकप्रयत्नोऽपि कृञ्धातुश्च सृजधातुसामानार्थक एव न तु प्रयत्नमात्रं तथा—प्रति यतधातोरपि सकर्मकतापत्तेरिति तु केषाचिन्मतम् आकाशस्य जन्यत्वे तस्य सर्वगतत्वहान्यापत्तिः स्वस्मिन् स्वप्रागभाववत् कालमात्रवृत्तिसंबन्धत्वस्य कस्मि-न्नप्यसत्त्वात् ।

इदन्त्ववधातव्यम्—विद्यासागरोक्तमनुमानमप्रयोजकं तत्पृथिव्यामकर्तृकत्वानुमा-नमपि सम्भवति तद्यथा सकर्तृकत्वाभावातिरिक्ता ये ये तत्पृथिवीवृत्तिधर्मास्तदतिरिक्त-धर्मवान् प्रमेयत्वात् इति तर्कराहित्यं तु मतद्वय एव समानम् अतः क्षितिः सकर्तृका कार्यत्वात् इत्युदयनाचार्यप्रभृतिप्रदर्शितानुमानाकार एव समीचीनः अत्रास्ति सत्त्वको नास्ति च सत्प्रतिपक्षादिरूपो दोषः एतत्परिपाटी च कुसुमाञ्जल्यादौ द्रष्टव्या इत्याहुः ।

**श्रीपञ्चाननतर्करत्नमहाशयास्तु**—इदं गुरुवरश्रीराखालदासन्यायरत्नकृतं व्या-ख्यानं प्रौढिवादमात्रम् । प्रकृतानुमित्यन्यूनानतिरिक्तबोधकवाक्यस्य प्रतिज्ञात्वेन साध्यत्रयबोधकैकवाक्यस्य प्रतिज्ञात्वासम्भवेनानुमानाकारप्रदर्शनाय तादृशवाक्यप्रयो-गस्यायुक्तत्वात्, साध्यत्रयबोधकवाक्यस्य कर्म्मधारयसमासत्वे प्रत्येकप्रकारकैकैकमु-ख्यविशेष्यकबोधानुपपत्तेः न हि शीतोष्णं जलमित्यतः शीतं जलमुष्णं जलञ्चेति बोधो भवति, भवति तु शीतोष्णं जलमित्येकमुख्यविशेष्यकविशिष्टबोधः, समाहारद्वन्द्वाभ्यु-पगमे च ततोऽपि नैकैकमुख्यविशेष्यैकैकप्रकारकबोधः तथा सति सच्छिद्रनिश्छिद्रं घट इत्यपि प्रयोगः सच्छिद्रो घटः निश्छिद्रश्च घट इति बोधं जनयन् साधुः स्यात् । किञ्च

खण्डनरत्नमालिका ।

समस्तवाक्यस्यैकसाध्यपरत्वे सम्भवति समासघटकवाक्येभ्यः खण्डशः साध्यत्रयबोध इत्येतादृशकल्पनाया अन्याय्यत्वात् । अन्यथा पर्व्वतः पर्व्वतीयवह्निमानित्यादावपि पर्व्वतीयत्वमात्रावच्छिन्नवह्नित्वमात्रावच्छिन्नयोः सध्ययोर्बोधः स्यात् । प्रथमकल्पे पक्षीभूतद्व्यणुकादावकर्त्तृकत्वसिद्ध्यार्थान्तराच्च । अपि च यत्किञ्चिद्द्व्यणुकघटादिगतान्यतरत्वमादाय सिद्धसाधनं द्वितीयकल्पपरित्यागबीजतया पक्षीभूतद्व्यणुकादिगततत्तद्व्यक्तित्वमादाय सिद्धसाधनं च प्रथमकल्पपरित्यागबीजतया स्वयमुपदर्शितम् । तथा च प्रथमद्वितीयकल्पदोषस्तृतीयेन परिहरणीयः न च तथा भवति, यतोऽकर्त्तृकद्व्यावृत्तितन्निष्ठधर्माधिकरणत्वमत्र साध्यं तत्पदञ्चाकर्तृकवाचकं तस्य प्रक्रान्तत्वात् । एवं स्थिते द्व्यणुकादिगततत्तद्व्यक्तित्वमादाय तद्द्व्यणुकघटादिगतान्यतरत्वमादाय च सिद्धसाधनमत्र तदवस्थम्, न चाकर्त्तृकनिष्ठेतिविशेष्यदलस्थाकर्त्तृकपदं प्रागभावाप्रतियोगिपरं तेनैव तद्दोषवारणं भवतीति वाच्यं साध्यनिर्द्देशे विशेष्यांशे साक्षादकर्त्तृकपदासत्त्वात् तत्पदस्य च सत्त्वात् तत्पदस्य प्रक्रान्तकृतिमदजन्यस्वरूपाकर्त्तृकबोधकतया प्रागभावाप्रतियोगिबोधकत्वासम्भवात्, न च कृतिमदजन्यघटकाजन्यस्य प्रक्रान्ततया तस्यैव प्रागभावाप्रतियोग्यर्थकत्वमिति वाच्यं तत्र जन्यताया अन्यथासिद्ध्यनिरूपकत्वादिरूपायाः कृतिमदन्विततया प्रवेशात् प्रागभावाप्रतियोग्यर्थकाजन्यस्य प्रक्रान्तत्वाभावात् । न च यद् यत् कृतिमदजन्यं तत् तत् प्रागभावाप्रतियोगीति वस्तुगतिमनुरुध्य तस्य प्रक्रान्तत्वमुच्यत इति वाच्यं सकर्त्तृकाकर्त्तृकेत्यादेः कृतिमद्विशिष्टवृत्तिताशून्यार्थकत्वे तात्पर्य्यस्य प्रागुपवर्णितत्वेन कृतिमदजन्यस्याप्रवेशादेवाजन्यस्य कथमपि प्रक्रान्तत्वासम्भवात्, वृत्तितायां वैशिष्ट्यं च स्वजन्यनिरूपितत्व स्वाजन्यनिरूपितत्वोभयसम्बन्धेन । अन्यथा जन्याकर्त्तृकवृत्तित्वरहितेत्यस्य सम्यक्त्वेन प्रथमकृतिमदंशवैफल्यं स्यात् द्वितीयतृतीयकल्पानुसरणं च निर्बीजं स्यात् पक्षीभूतद्व्यणुकादिगततद्व्यक्तित्वस्य परमते जन्यवृत्तितयाऽकर्त्तृकवृत्तितया च साध्यकोटावप्रवेशात् स्वमते तत एव तत्र सकर्त्तृकत्वसिद्धेः । किंच तदित्यादिना तृतीयकल्पः स्वयमुपन्यस्तः, तत्र तन्निष्ठधर्माधिकरणत्वमात्रं लभ्यते, न तु अकर्त्तृकद्व्यावृत्तित्वे सतीति स्वोक्तविशेषणम् द्वितीयकल्पोक्तसाध्यतावच्छेदकशरीरप्रविष्टानेकाकर्त्तृकवृत्तित्वरहितस्य तदर्थकत्वे सम्भवत्यपि तृतीये तत्प्रवेशासम्भवात् । न च स्वयमेव पूरणेन तत्साध्योपन्यास इति युक्तं निष्कृष्टकल्पतया कथितस्य चरमकल्पस्य द्रव्यत्वादिकमादाय प्रथमकल्पतोऽपि स्फुटतरसिद्धसाधनादिदुष्टत्वे पूरणीयविशेषणेन तदुद्धारेऽपि मूलन्यूनताया वज्रलेपादिति ।

एवं महामहोपाध्यायशिवकुमारमिश्रव्याख्यानमपि न समञ्जसं तादृशव्याख्याने अनेकतन्निष्ठेतिगर्भस्थं तत्पदं व्यर्थम् अनेकनिष्ठधर्मयोः सकर्तृकत्वनित्यत्वयोरन्यतराधिकरणत्वस्य साध्यत्वेऽनेकपदार्थेन निर्विशेषणकनिष्ठेत्यस्यान्वये कर्तव्ये तत्पुरुषसमासान्तर्गत 'तत्' पदस्य व्यवधायकतया अभिमतान्वयबाधकं सामर्थ्याभावात्समासासंभवश्च ।

खण्डनरत्नमालिका ।

चरमस्यानेकपदस्य वैयर्थ्यमेव अनेकाकर्तृकवृत्तित्वरहितनिष्ठत्वेनैव शब्दनिष्ठसकर्तृकत्वस्य घटत्वादिनिष्ठनित्यत्वस्य च लाभसंभवात् किंच द्वितीयरहितान्तदलस्य निष्प्रयोजनकत्वम् न च तदनुपादाने द्व्यणुकादीनां ग्रहणसम्भवेन तन्निष्ठधर्म्मस्य तावदन्यतमत्वस्य लाभात् सिद्धसाधनमिति वाच्यं तदुपादानेऽपि अनेकाकर्तृकवृत्तित्वरहितं यदनेकं घटपटादि तन्निष्ठत्वेन तावदन्यतमत्वस्यव्युदासासम्भवेन सिद्धसाधनतादवस्थ्यात् । द्व्यणुकानां परमाणुद्वयवृत्तितया द्वितीयरहितान्तत्वविरहेऽपि द्व्यणुकघटपटाद्यन्यतमत्वस्य द्व्यणुकेष्विव घटपटादावपि वृत्तितया तथाविधानेकनिष्ठत्वाक्षतेः । न च तथाविधानेकमात्रनिष्ठ एव धर्म्मो विवक्षितः द्व्यणुकसाधारणान्यतमत्वस्य तथात्वाभावान्नोक्तदोष इति वाच्यं सकर्तृकत्वस्य द्व्यणुकसाधारणतया तस्य साध्यकोटौ प्रवेशानुपपत्तेः । न च निरीश्वरमते द्व्यणुकादौ सकर्तृकत्वं नास्तीति न तस्य साध्यकोटिबहिर्भाव इति वाच्यं तन्मते तु अकर्तृकजन्ये द्व्यणुकादौ सकर्तृकत्व नित्यत्वान्यतराधिकरणत्वाभावाद् व्यभिचारप्रसङ्गात् । प्रथमरहितान्तं तन्निष्ठधर्म्मविशेषणमपि व्यर्थं न च वाच्यत्वादिकमादाय सिद्धसाधनवारणाय तत्, एवमपि द्व्यणुकाद्यन्यतमत्वं परमाणुवृत्तिगन्धप्रागभावादिकं नित्यत्वं चादाय सिद्धसाधनस्य दुर्वारत्वात् । किञ्च सकर्तृकत्वं नित्यत्वञ्चेतिवत् सकर्तृकत्वमकर्तृकत्वं च साध्यकोटौ प्रवेष्टुमीष्टे तथा च द्यणुकाङ्कुरादावकर्तृकत्वसिद्धावर्थान्तरं दुर्वारम्, निरीश्वरमते द्व्यणुकादावकर्तृकत्वजन्यत्वयोरङ्गीकारात् इति अतः—एवं व्याख्येयम् ।

इयं पृथिवीति द्व्यणुकाङ्कुरादिकं दृश्यमानभूमण्डलं वा सकर्तृकत्वेन विमता पृथिवीति समुदितार्थः घटपटात्मकपृथिव्याः पक्षत्वव्युदासाय इयमिति विशेषणम् । सामानाधिकरण्येन सिद्धेः पक्षतावच्छेदकावच्छेदेनानुमितिप्रतिबन्धकत्वमिति प्राचां मतमादृत्यैव तद्व्युदासप्रयासः । यस्मिन् सकर्तृकत्वाकर्तृकत्वयोरन्यतरनिश्चयः तस्य पक्षत्वं न भवति सन्दिग्धसाध्यकस्यैव पक्षतौचित्यात् तदतिरिक्ता पृथिवी पक्ष इति बोधयितुमियमिति वा । रहितान्तद्वयमेकस्यैव विशेषणम् । विशेष्यदलञ्च अनेकतन्निष्ठेति । तदर्थश्च एकतन्निष्ठभिन्नो धर्मः। एकं एकव्यक्तिमात्रस्वरूपं यत् तत्पदवाच्यं सकर्तृकं प्रकान्तेषु तस्यैव प्रथमोपस्थितत्वात् तत्र निष्ठो वृत्तिमानिति कर्म्मधारयगर्भतत्पुरुषः । न एकनिष्ठः अनेकनिष्ठः स च धर्म्मः अनेकसकर्तृकवृत्तिः सकर्तृकत्वादिः, अकर्तृकैकमात्रवृत्तिः तत्तद्व्यक्तित्वादिश्च तदधिकरणत्वं साध्यम् साध्यानुगमायाधिकरणत्वप्रवेशः । सकर्तृकाकर्तृकोभयनिरूपितवृत्तित्वशून्येति प्रथमरहितान्तार्थः एतद्दलानुक्तौ एकैकद्व्यणुकादिव्यक्तिघटपटाद्यन्यतमत्वमादाय निरीश्वरमतेऽपि साध्यसिद्ध्यार्थान्तरं स्यात् । तन्मते द्व्यणुकादेरकर्तृकत्वेऽपि तत्साधारणप्रागुक्तान्यतमत्वस्य ह्येकैकद्व्यणुकादिवृत्तितयानेकाकर्तृकवृत्तित्वविरहात् एकमात्रसकर्तृकनिष्ठभिन्नत्वाच्च । तद्दलोक्तौ तु निरीश्वरमते तथाविधान्यतमत्वस्य सकर्तृकाकर्तृकवृत्तित्वेन न साध्यकुक्षौ प्रवेशः । न च तद्दलोक्तावपि तन्मते द्व्यणुकाद्यकर्तृकमात्रवृत्त्यन्यतमत्वमादायार्थान्तरतादवस्थ्यमिति वाच्यं द्वितीयरहितान्तदलेन तद्वारणात् । किञ्च द्वितीयरहितान्तानुपादाने सकर्तृकत्वमकर्तृकत्वं चेति

खण्डनरत्नमालिका ।

द्वयमेव साध्यकोटौ प्रविशति ततश्च निरीश्वरमते द्व्यणुकादावकर्त्तृकत्वसिद्ध्यार्थान्तरं स्यात् तदुपादाने तु अकर्त्तृकत्वस्यानेकाकर्त्तृकवृत्तित्वविरहाभावेन ग्रहीतुमशक्यत्वात् नोक्तदोषः । परमाण्वादौ व्यभिचारवारणाय अनेकेत्यकर्त्तृकविशेषणम् । अनेकतदित्यादिविशेष्यदलानुक्तौ च गन्धाद्यधिकरणत्वमादाय सिद्धसाधनम्, तदुपादाने तु घटादिगन्धस्यैकसकर्त्तृकनिष्ठत्वात्तत्साधारणनिरूपकताकाधिकरणत्वस्य न साध्यकोटौ लाभसम्भवः । न चैकसकर्त्तृकावृत्तिर्यः परमाणुगन्धः तन्निष्ठा या गन्धत्वावच्छिन्ननिरूपकता तन्निरूपिताधिकरणत्वस्य सर्वत्र पृथिव्यां सत्वात सिद्धसाधनतादवस्थ्यमिति वाच्यम् अनेकतन्निष्ठेत्यनेन एकमात्रसकर्त्तृकवृत्त्यवृत्तित्वस्याधिकरणतानिरूपकतायां विशेषणतया विवक्षितत्वात् । गन्धत्वावच्छिन्ननिरूपकतायास्तत्तद्घटादिगन्धसाधारणतया तत्तद्घटादिगन्धस्य चैकमात्रसकर्त्तृकवृत्तितया ग्रहीतुमयोग्यत्वात् । नन्वनेकनिष्ठेत्येवोच्यतां तेनैव गन्धादिव्यावृत्तिसम्भवे किं सकर्त्तृकार्थकेन तदित्यनेनेति चेन्न रहितान्तद्वयविशेषणकस्यानेकनिष्ठधर्मस्य परमाण्वादावसत्त्वेन तत्र व्यभिचारात् । तदित्युक्तौ च परमाण्वादिनिष्ठतत्तद्व्यक्तित्वादेरेकमात्रसकर्त्तृकवृत्तिभिन्नत्वेन रहितान्तद्वयलभ्यत्वेन च साध्यमध्ये प्रविष्टतया व्यभिचारशङ्कानवकाशात् । न चैवमपि निरीश्वरमते द्व्यणुकादेरप्यकर्त्तृकत्वेन तत्तद्व्यक्तित्वमादायार्थान्तरमिति वाच्यं तदिति तत्पदेन सकर्त्तृकतया स्वाभिमतस्य जन्यमात्रस्य फलतः प्रक्रान्तत्वेनोपादानात् तथा चानेकतन्निष्ठेत्यनेनानेकजन्यनिष्ठस्य धर्म्मस्य साध्यकोटौ प्रवेशात् द्व्यणुकादिगततद्व्यक्तित्वस्य निरीश्वरमतेऽपि एकजन्यनिष्ठत्वेन व्युदासान्नार्थान्तरमिति । अथवा तत्पदप्रयोगोऽयमापाततः, द्व्यणुकादिगततत्तद्व्यक्तित्वमादाय दोषः समुद्भाव्यते चेत तद्वारणाय तत्पदस्थाने जन्यमात्रं निवेशनीयम् । कल्पद्वय एवानेकजन्येत्यस्य एकमात्रजन्यभिन्नेत्यर्थः, घटद्वयं नैको घटः इति प्रत्ययाद् द्व्यणुकद्वये एकमात्रजन्यभिन्नत्वं वर्त्तत एवञ्च सकर्त्तृकत्वमात्रस्य साध्यकोटौ प्रवेशः एतेन "सकर्त्तृकेति प्रथमविशेषणदले कृतिमज्जन्यार्थकसकर्त्तृकेत्यत्र कृतिमदंशो विफलः जन्याकर्त्तृकवृत्तित्वरहितेत्यस्यैव सम्यक्त्वात्, तद्वैफल्ये च द्वितीयविशेषणदलविशेष्यदले अपि विफले द्व्यणुकादिमात्रवृत्तिधर्म्मस्यापि निरीश्वरमते जन्याकर्त्तृकोभयवृत्तित्वेन धर्त्तुमशक्यतया तमादायार्थान्तरासम्भवात्, स्वमते द्व्यणुकादेः सकर्त्तृकत्व एव तद्वृत्तिधर्म्मस्य साध्यकोटौ प्रवेशात् तत एव फलतः सकर्त्तृकत्वस्य तत्र तत्र सिद्धिरिति न सिद्धिसाधनापत्त्यवकाशः । निरीश्वरमते द्व्यणुकादौ जन्यत्वमकर्तृकत्वं चास्तीति तद्धर्मस्य तन्मते साध्यकोटौ न प्रवेशसम्भव इति भवत्येवान्तिमविशेषणदलस्य विशेष्यदलस्य च वैफल्यम् । तस्मात् सकर्त्तृकेत्यादिप्रथमदलस्य कृतिमद्विशिष्टवृत्तित्वशून्येत्यर्थो वाच्यः वैशिष्ट्यं च स्वजन्यनिरूपितत्वस्वाजन्यनिरूपितत्वोभय सम्बन्धेन । वृत्तित्वांशे कृतिमत एव सम्बन्धद्वयेन विशेषणत्वबोधनाय सकर्त्तृकाकर्त्तृकेति न तु साध्यकोटौ कृतिमतो द्विधा प्रवेशः न वा वस्त्वन्तरस्य जन्यतानिरूपकतया प्रवेशः

खण्डनरत्नमालिका ।

एवञ्च सकर्तृकाकर्तृकेत्यत्र कृतिमज्जन्यस्य प्रकारविधया प्रवेशाभावेन कृतिमदंशवैफल्यं न शङ्कास्पदं भवितुमर्हति । सकृतप्रविष्टकृतिमदंशमनुपादाय वस्तुमात्रप्रवेशे तु निरीश्वरमते तत्परमाणुजन्यत्वादिमात्रसिद्ध्यार्थान्तरं स्यात् तत्परमाणुजन्यत्वं हि तत्परमाणुविशिष्टवृत्तित्वशून्यं भवति स्वजन्यनिरूपितत्वसम्बन्धेन तद्वृत्तित्वे तत्परमाणोः सम्बन्धित्वेऽपि स्वाजन्यनिरूपितत्वघटिततथाविधोभयसम्बन्धेन तस्यासम्बन्धित्वात् । किञ्च स्वमते सकर्तृकत्वस्य साध्यकोटावुपादानं न स्यात् सकर्तृकत्वनिष्ठवृत्तित्वस्य कपालादिरूपवस्तुविशिष्टत्वेन शून्यान्तदलेन तद्वारणात्, नचैवं चैत्रवैशिष्ट्यस्य निरुक्तोभयसम्बन्धेन सकर्तृकत्वनिष्ठवृत्तित्वे सत्वात् कृतिमदंशप्रवेशेऽपि तद्दोषतादवस्थ्यमिति वाच्यं कृतिमद्विशिष्टवृत्तित्वशून्यत्वात्मकसामान्याभावशरीरे कृतित्वस्य प्रतियोगितावच्छेदककुक्षौ प्रवेशेन तद्दोषशङ्काया अनवकाशात् । एवं स्थिते जन्यस्य पदानुपस्थिततया प्रक्रान्तत्वाभावेन तच्छब्देन जन्यग्रहणमनुपपन्नम्" इति पूर्वपक्षो निरस्तः विवक्षितविवेके तत्पदस्थले जन्यस्यैव विशेष्यकोटौ निवेशात् । ननु माभूत् सकर्तृकेत्यत्र कृतिमज्जन्यस्य प्रवेशः, तथापि द्वितीयविशेषणदलविशेष्यदलाप्रवेशेन जन्याकर्तृकवृत्तित्वरहिताधिकरणत्वमेव लाघवात् कथं न साध्यं कृतमिति चेन्न प्रकृतसाध्यविशेषणतानापन्नधर्मघटितस्य तस्य साध्यान्तरत्वेऽपि प्रकृतसाध्ये दोषाभावात् प्रतिपक्षनिग्रहाय निर्दोषदुरूहसाध्यनिर्देशस्य प्राचीनकथकसम्प्रदायसिद्धतया तदुपन्यासस्यैव युक्तत्वाच्च । अन्यथा लघीयः सकर्तृकत्वमेव साध्यत्वेन निर्दिश्येत । अथवा अनेकतन्निष्ठेति द्वन्द्वगर्भतत्पुरुषसमासः । अनेकानि च तच्च, इति द्वन्द्वसमासः, तत्र निष्ठो तद्वृत्तिधर्मः, अनेकधर्मोऽकर्तृकधर्मश्चेति फलितम्, तदधिकरणत्वं साध्यम् । तत्पदेनाकर्तृकग्रहणमनेकपदसाहचर्यात् अनेकाकर्तृकेत्यनेन प्रक्रान्तत्वाच्च । नच द्वन्द्वाश्रयणे एकशेषापत्तिः 'भेदाख्यानाय नैकशेषः' इतिकोपरीत्या तदापत्तेर्निरसनीयत्वात् । सत्येकशेषे समासघटकपदे विभक्त्यभावात् । लुप्तपदानवबोधेन पदार्थविशेषोपस्थापकपदाभावेन च प्रकृतसाध्यानुपन्यासे निग्राह्यत्वप्रसङ्गात् । नच रहितान्तद्वयविशेषणकधर्मयोः सकर्तृकत्वनित्यगततद्व्यक्तित्वयोरेकाधिकरणाप्रसिद्ध्या साध्याप्रसिद्धिरितिवाच्यं पूर्वकल्पसामान्यात् न च सोऽपि हेय एवेति अन्यतराधिकरणत्वस्यैव साध्यत्वेनाभिमततया कल्पद्वयस्यैवादुष्टत्वात् । अनेकनिष्ठतन्निष्ठधर्मयोः प्रत्येकाधिकरणत्वमादायैव वा साध्यप्रसिद्धेः सुसम्पादनीयत्वात् घटतदभावयोरधिकरणं भूतलं गोत्वतदभावयोरधिकरणं द्रव्यमिति प्रतीतेरबाधितत्वात् । रहितान्तद्वयमनेकनिष्ठाकर्तृकनिष्ठयोर्विशेषणम् । तादृशानेकनिष्ठधर्मः सकर्तृकत्वं नित्यगततद्व्यक्तित्वादिकं च साध्यकोटौ प्रविष्टम् । अत्र जन्यवृत्त्युभयावृत्तिवृत्तिभिन्नत्वं निरूपकतायां विशेषणं देयम्, नातो द्व्यणुकादिगततत्तद्व्यक्तित्वमादायार्थान्तराद्यवकाशः । नचानेकतन्निष्ठेतिव्यर्थम्, निरूपकतायां तथा विशेषणलाभार्थमेव तदुपादानात् । अनेकनिष्ठधर्मस्य निय-

खण्डनरत्नमालिका ।

मेनोभयावृत्तिभिन्नतया अकर्त्तृकमात्रवृत्तिधर्म्मस्य च नियमेन जन्यवृत्तिभिन्नतया जन्यवृत्तित्वावच्छिन्नोभयावृत्तित्वावच्छिन्नप्रतियोगिताकभेदघटितस्य जन्यवृत्त्युभयावृत्तिवृत्तिभिन्नत्वस्य नात्यायासेन लाभसम्भवात् । इति कल्पद्वयीसंक्षेपः ।

अत्र द्व्यणुकादिगततत्तद्व्यक्तित्वमादाय अर्थान्तरं दोषोऽस्त्येवेतीत एवास्वरसात् पृथिव्युदके प्रयत्नवता धृते इत्यनुमानान्तरप्रदर्शनं विद्यासागर्य्यां कृतं तस्मात् तद्दोषवारणाय प्रयासो नास्थेय इति तु प्रकारान्तरम् । नचानेकाकर्त्तृकवृत्तित्वरहितप्रागभावाप्रतियोगिनिष्ठाधिकरणत्वमेव साध्यमस्तु शेषांशो विफल इति वाच्यम्, अत्रानुमाने पक्षीभूतपृथिवीगगनान्यतरत्वादेः साक्षाद्विधेयतया पक्षे सकर्त्तृकत्वसिद्धेरुदीच्यत्वेन साक्षात् सकर्तृकत्वसाधनाय गुरुसाध्यानुसरणात्, साध्यान्तरेण प्रकृतसाध्यस्य गुरुशरीरस्याप्यन्यथा कर्तुमशक्यत्वात् दुरूहसाध्योपन्यासस्य युक्ततायाः प्राक् प्रतिपादितत्वाच्च । अन्यथा क्षितिः सकर्तृकेति लघुसाध्योपेक्षा निर्बीजा स्यात् । नच नित्यानित्यसाधारणदृष्टान्तलाभाय तदुपेक्षा युक्तेतिवाच्यं प्रत्यक्षयोग्यघटादेर्दृष्टान्तत्वे सम्भवति परोक्षाणां दृष्टान्ततया लाभस्याकिञ्चित्करत्वादिति विशिष्टैकसाध्यस्थापनप्रकाराः ।

अथ प्रकारान्तरम्—तत्र सकर्तृकेत्यादिसाध्यनिर्द्देशवाक्ये प्रथमान्तपदत्रयमस्ति-तथाहि "सकर्तृकेत्येकम्, अकर्तृकवृत्तित्वरहितेत्यन्यत्, अनेकाकर्तृकवृत्तित्वरहितानेकतनिष्ठाधिकरणमित्यपरम् । पूर्वद्वयं पृथिवीविशेषणतया स्त्रीलिङ्गम् अन्त्यन्तु अजहल्लिङ्गम् । इति साध्यत्रयं पर्य्यवसितम् । चकाराद्यभावेऽप्यसमस्तविभिन्नपदाद् विभिन्नसाध्यबोधो नाप्रसिद्धः, साध्यव्याप्यहेतुमान् पक्षः साध्यवानिति दीधितिव्याख्यायां गदाधरभट्टाचार्य्येण साध्यद्वयनिर्द्देशपक्षव्यवस्थापनात् । इयं पृथिवी सकर्त्तृका मेयत्वादित्येकोऽनुमानप्रदर्शकाकारः अकर्त्तृकवृत्तित्वरहिता मेयत्वादित्यपरः अनेकाकर्त्तृकवृत्तित्वरहितानेकतन्निष्ठधर्माधिकरणं मेयत्वादिति तृतीयः । अन्त्ययोः पक्षस्तु प्रथमवदेव । साध्यनिर्द्देशवाक्यानामसमस्तत्वे पक्षादिपदानामावृत्त्या न्यायवटकत्वसम्भवात् । न च मेयत्वं हेतुः सकर्त्तृकत्वादौ साध्ये व्यभिचारी नित्यसाधारणत्वादिति वाच्यम् परिमेयत्वरूपमेयत्वस्य हेतुत्वात्, परिमेयत्वं च परिमातुं शक्यत्वं, तुलादिना सूत्रादिना वा मानसाधनेन निर्णेयपरिमाणविशेषवत्वमिति फलितं तच्च सावयवद्रव्यमात्रवृत्तीति व्यभिचारासम्भवात् । स च गुरुत्वविशेषो वा परिमितिविशेषो वा अन्यो वा धर्म्मो यथा भवतु नित्ये नास्त्येवेति । ननु परिच्छिन्नपरिमाणवति गुरुत्ववति च परिमाणौ तदभ्युपगमे बाधकाभावाद् व्यभिचारतादवस्थ्यम् तदवृत्तिपरिमाणादेः प्रकृतिप्रत्ययालभ्यत्वेऽप्युपादाने तु लाक्षणिकत्वापत्तिः, न च मातुं शक्यत्वं परमाणौ नास्ति अतीन्द्रियत्वादिति वाच्यं तथा सति तादृशमेयत्वस्य द्व्यणुकेऽप्यभावेन भागासिद्धेः द्व्यणुकस्याप्यतीन्द्रियत्वादित्यतः साध्यान्तरमाह अकर्तृकवृत्तित्वरहितेति, अकर्त्तृकञ्च वृत्तिश्च तयोर्भावः अकर्त्तृकवृत्तित्वम् अकर्त्तृकत्वं वृत्तित्वञ्च तदर्थः तद्रहिता, वृत्तिरिति

खण्डनरत्नमालिका ।

कर्त्तरि क्तिन् । नित्यद्रव्ये वृत्तित्वराहित्यादुभयराहित्यं वृत्तौ जन्यद्रव्ये अकर्तृकत्वराहित्यादुभयराहित्यं जन्यत्वेन वादिप्रतिवादिभ्यामङ्गीकृते व्यणुकादौ वृत्तित्वरूपे अकर्तृकत्वविरहेणोभयाभावसिद्ध्या सकर्तृकत्वसिद्धिः । मेयत्वस्य केवलान्वयिरूपस्यैव प्रसिद्धतया तथाविधहेतौ यत्साध्यस्याव्यभिचारित्वं तदाह—अनेकाकर्तृकवृत्तित्वरहितेत्यादि । एकमात्राकर्तृकं सकर्तृकं च यद्वर्त्तते एकैकपरमाणुघटान्यतरत्वमेकैकजातिघटाद्यन्यतमत्वं समवायसकर्त्तृकान्यतमत्वादिकं च तद्वानेकाकर्तृकवृत्तित्वरहितम् अनेकतन्निष्ठं च, अनेकनिष्ठं तन्निष्ठं च पूर्ववद् द्वन्द्वगर्भसमासः, अथवा अनेकं तद्विष्टमिति कर्म्मधारयः, एकमस्यास्ति इत्येकमर्शआदित्वादच् , अस्येति सम्बन्धश्चाश्रयत्वरूपः गुरोर्देशः निःस्वानां ग्रामः इत्यादिवत् एकमात्राधिकरणकमिति यावत् तन्न भवतीत्यनेकं नास्ति एकं यस्येति तु भट्टाचार्य्याः । तन्निष्ठमित्यत्र तत्पदं वृत्तित्वरहितपरम् । अनेकाकार्तृकवृत्तित्वरहितेत्यत्र प्रक्रान्तेषु समानाधिकरणयोरनेकाकर्त्तृकयोरनेकमात्रग्रहणेनेतरस्याकर्त्तृकस्य वर्जनं सिद्धमिति पारिशेष्यात्, यद्वि वृत्तित्वरहितं तदपि नियमेनानेकाकर्त्तृकवृत्तित्वरहितमकर्त्तृकवृत्तित्वरहितञ्चेति प्रकर्षाच्च तत्पदेन वृत्तित्वरहितमात्रग्रहणम् । तच्च नित्यद्रव्यम् । वृत्तित्वरहितत्वरूपेण तस्य न्यायशरीरे प्रवेशः । एवञ्च द्रव्यत्वादेर्विशेष्यदललभ्यत्वेऽपि अनेकाकर्त्तृकवृत्तित्वराहित्यरूपविशेषणविरहेण न सिद्धसाधनादिप्रसङ्गः । एकैकनित्यद्रव्यमात्रवृत्तिधर्म्मतत्तद्व्यक्तित्वादिनिरूपकताकाधिकरणत्वानामनन्तानामनुमितिविधेयत्वव्युदासायानेकेति विशेष्यदलेऽन्तर्भावितम् । विधेयभेदेन पक्षतानुमित्योः कार्य्यकारणभवभेद इति प्राचां मतमादृत्य कारणलाघवसम्पिपादयिषयैवेदम् । न चैवं घटत्वादौ व्यभिचारः, घटत्वमात्रवृत्तिधर्म्मस्य अनेकनिष्ठत्वाभावाद् वृत्तित्वरहितनिष्ठत्वाभावाच्च । घटत्वघटान्यतरत्वादेर्वृत्तित्वरहितनिष्ठत्वाभावात् घटत्वगगनान्यतरत्वादेरनेकाकर्त्तृकवृत्तित्वाच्च गगनद्व्यणुकान्यतरत्वस्य तु निरुक्तरूपस्याभाववति घटत्वे प्रमेयत्वस्य वृत्तेरिति वाच्यम् अनेकाकर्त्तृकेत्यत्राकर्त्तृकपदस्याकर्त्तृकद्रव्यपरत्वेन घटत्वगगनान्यतरत्वादेः साध्यकोटिप्रविष्टतया व्यभिचारासम्भवात् । तद्व्यणुकघटान्यतरत्वादेर्वृत्तित्वरहितवृत्तित्वाभावान्नार्थान्तरादिशङ्का । एकैकपरमाणुद्व्यणुकान्यतरत्वस्य निरीश्वरमतेऽनेकाकर्त्तृकवृत्तित्वमिति न तन्मतेऽर्थान्तरं स्वमते तादृशान्यतरत्वसिद्धयैव सकर्त्तृकत्वसिद्धिरिति प्राहुः ।

अत्र पुरुषपदसमभिव्याहृतैकपदस्य कैवल्यार्थकतया पुरुषकैवल्यरूपं परमं प्रयोजनम् । संख्यार्थतया ब्रह्मण एकत्वमद्वैतमभिधेयम् अनुमया मननेनाधिगतत्वमवान्तरप्रयोजनमुक्तम् ग्रन्थप्रयोजनयोः प्रयोज्यप्रयोजकभावः सम्बन्धश्चस्फुटतयानोक्तः मुमुक्षुश्चाधिकारी सूचितइत्यवधेयम् ॥ १ ॥

मानापनोदनविनोदनते गिरीशे
भासेव संकुचितयोरुचितं तदिन्दोः ।
भेत्तुं भवानिशचितं दुरितं भवानि
नम्रीभवानि घनमङ्घ्रिसरोजयोस्ते॥ २ ॥

शाङ्करी ।

शिवं नत्वा शक्तिं नमस्यति—"**मानापनोदन**" इति । हे भवानि ! भवस्य पत्नि !, घनं निरन्तरं यथा स्यादेवं, तवाङ्घ्रिसरोजयोश्चरणकमलयोर्नम्रीभवानि अवनतः स्याम् । किंविशिष्टयोरङ्घ्रिसरोजयोः ? गिरीशे महेशे, मानापनोदनविनोदनते मनस्विनिरकरणक्रीडानम्रे, तदिन्दोः तन्मौलिचन्द्रस्य, भासेव ज्योत्स्नयेव, उचितं यथा स्यादेवं सङ्कुचितयोः उपजातसङ्कोचयोः । भर्त्तरि प्रणिपातायोद्यते लज्जया चरणसङ्कोचस्तावदुचितः तत्र तदिन्दोर्भासेवेत्युत्प्रेक्षा । दवीयस्यपि चन्द्रमसि सरोजसङ्कोचो नेदीयसि सुतरामित्युत्प्रेक्षोद्दीपनम् । किं कर्त्तुं ? भवानिशचितं दुरितं भेत्तुं; संसारविश्रान्तसञ्चितकल्मषनिरासायेत्यर्थः । **यद्वा** हे भवानि ! अहं त्वच्चरणयोर्नम्रीभवानि, त्वं पुनरनिशचितं दुरितं भेत्तुं भव प्रभवेत्यर्थः । एतेन जगद्वन्दनीयस्यापि गिरीशस्य वन्दनीययोर्भवानीचरणकमलयोरत्यन्तवन्द्यत्वमुक्तम् ।

**अथवा** "हे ब्रह्माद्वैतोपदेशक ! त्वं ममानिशचितं दुरितं भेत्तुं भव प्रभव, अहं तवाङ्घ्रिसरोजयोर्नम्रीभवानि" इति गिरीशे वादिनि मानापनोदनविनोदनते, वादित्वाभिमानखण्डनक्रीडानम्रे सति, अहं भवानि अर्थादनुगतवादिदुरितभेत्ता भवानि भविष्यामि; तथा तत्त्वमुपदिशानि यथाऽनुगतवादिनो दुरितं भङ्क्ष्यतीति ग्रन्थकृतः स्वं प्रत्याशंसा । तदिन्दोर्भासा सङ्कुचितयोः, स चासाविन्दुश्चेति तदिन्दुर्वादी पराजय-

खण्डनभूषामणिः ।

यस्याः प्रसादात्सर्वशास्त्रार्थविज्ञानमात्मसाक्षात्कारपर्यन्तं जातं तां द्वितीयश्लोकेन प्रणमति—हे **भवानीति** । अङ्घ्रिसरोजयोः घनं निरन्तरं नम्रीभवानि किमर्थं भवे संसारे अनिशं सर्वदा चितं संचितं दुरितं भेत्तुं नाशयितुम् । **यद्वा** नत्वा प्रार्थयतेऽनिशचितं दुरितं भेत्तुं भवेति । प्रार्थनायां लोट् । गिरीशे मानापनोदन-

खण्डनरत्नमालिका ।

सकलसौभाग्यकरीं देवतां गौरीं कृतियुवतिसौभाग्यसिद्धये प्रणमति—**मानेति** । हे भवानि भवपत्नि भवानिशचितं भवे संसारेऽनिशं चितमुपचितं जातं दुरितं भेत्तुं तेऽङ्घ्रिसरोजयोश्चरणकमलयोः 'पदङ्घ्रिश्चरणोऽस्त्रियाम्' इत्यमरः अङ्घ्री सरोजे इवेत्युपमितसमासः घनं निरन्तरं नम्रीभवानि कथंभूतयोः गिरीशे गिरेरीशे शङ्करे मानस्य—स्वामुत्सङ्गे सपत्नीं गङ्गामुत्तमाङ्गे दधतं शङ्करं दृष्ट्वा 'पत्युरन्यप्रियासङ्गे दृष्टेऽथानुमिते श्रुते । ईर्ष्यामानो भवेत्स्त्रीणाम्' इतिलक्षणलक्षितस्य ईर्ष्यामानस्य, अपनोदनमेव विनोदः क्रीडा

शब्दार्थनिर्वचनखण्डनया नयन्तः
सर्वत्र निर्वचनभावमखर्वगर्वान् ।
धीरा यथोक्तमपि कीरवदेतदुक्त्वा
लोकेषु दिग्विजयकौतुकमातनुध्वम् ॥ ३ ॥

शाङ्करी ।

कलङ्कवानित्यर्थः; तस्य भासा जितत्वेन मन्दया प्रभयेत्यर्थः, भवति हि स्वव्यवसायेन भङ्गिनं वादिनं दृष्ट्वा साधोः सङ्कोचः "विप्रं निर्जित्य वादतः" इत्यादिनिन्दाश्रवणात् ॥ २ ॥

वीतरागाणामेतद्ग्रन्थप्रवृत्त्यौपयिकं मननलक्षणं प्रयोजनं दर्शयित्वा रागिणामपि विजिगीषूणां विजयलक्षणं प्रयोजनमाह—"शब्दार्थ" इति । हे धीराः ! कीरवदेतद् अस्मदुक्तं खण्डनमुक्त्वा, लोकेषु भुवनेषु, दिग्विजयकौतुकमातनुध्वं विस्तारयत; किं

खण्डनभूषामणिः ।

विनोदनते सति तदिन्दोः भासा सङ्कुचितयोरिव चन्द्रकिरणेन पद्मसङ्कोचनमुचितमेव वस्तुगत्या चोचितं सङ्कोचनं भर्तुः शिरःस्पर्शभयादित्यर्थः उचितं यथा स्यात्तथा सङ्कुचितयोरित्यर्थः ॥ २ ॥

श्रुतिजनितबोधरक्षामेव खण्डनप्रयोजनं मत्वा परान् शिक्षयति—शब्दार्थेति । यथोक्तमेतद्ग्रन्थस्वरूपं शुकवदुक्त्वापि दिग्विजयेन यत्कौतुकं तद्विस्तारयत दिक्ष्वित्यर्थः । कुतर्काभ्यासरसिकानां पराजयः कौतुकं क्रीडा तथा च ईदृशक्रीडैव बहिर्मुखतादृशायां कार्येत्युपदेशः । कौतुकमाश्चर्यं लोके हि दर्शयतेत्यपि केचित् । अखर्वगर्वान् अनल्पगर्वान् शब्दश्चार्थश्च तयोर्निर्वचनं निरुक्तिः तत्त्वानुभूतिः प्रमेत्यत्र तस्य भावस्तत्त्वमिति किमयं यौगिकः शब्दः किं वाऽखण्डमेव तत्त्वपदं क्वचिदर्थे रूढमिति शब्दनिरुक्तिः, तत्त्वं यदि अबाधितं रूपं तदापि किं स्वस्याबाधितम् उत

खण्डनरत्नमालिका ।

तेन नते नम्रे सति तदिन्दोः शङ्करभालस्थितचन्द्रस्य भासेव किरणसम्पर्केणेव उचितं यथा स्यात्तथा सङ्कुचितयोरित्यन्वयः । चन्द्रकिरणसम्पर्कात्पद्मसङ्कोच उचितः इहापि पत्युः शिरःस्पर्शभयात् चरणसङ्कोच उचित इति भावः ॥ २ ॥

ननु 'अविकल्पविषय' इति सूचितयोर्विषयप्रयोजनयोर्भाष्यादिनैव संभवे किं त्वत्प्रयासेनेत्यत आह—शब्दार्थेति । हे धीराः यथोक्तमूहापोहरहितमपि एतत् खण्डनं कीरवत् उक्त्वा पठित्वा लोकेषु दिग्विजयकौतुकमातनुध्वं विस्तारयत किं कुर्वन्तः सर्वत्र वादजल्पवितण्डासु अखर्वोऽनल्पो गर्वो येषां तार्किकादीनां ते तान् शब्दश्चार्थश्च शब्दार्थौ तयोर्निर्वचनस्य या खण्डना तया निर्गतं वचनं येभ्यस्ते निर्वचनास्तेषां भावस्तं निर्वचनभावं मूकत्वं नयन्तः प्रापयन्तः इत्यन्वयः शब्दस्य निरुक्तिः तत्त्वानुभूतिः

कथायां प्रमाणादिसत्त्वाभ्युपगमनैयत्यप्रदर्शनम्—

**अथ कथायां वादिनोर्नियममेतादृशं मन्यन्ते "प्रमाणादयः सर्वतन्त्र-सिद्धान्ततया सिद्धाः पदार्थाः सन्तीति कथकाभ्यामभ्युपेयम्" ।**

---

श्रीचित्सुखाचार्यविरचिता खण्डनभावदीपिका ।

(१)······प्रमाणसत्ताभ्युपगमस्यैतन्मतप्रतिकूलत्वात्तदभ्युपगमप्रकारं दर्शयति

शाङ्करी ।

कुर्वाणाः ? सर्वत्र विवादपदेषु शब्दार्थयोः शब्दतदर्थयोर्निर्वचनं निरुक्तिस्तत्खण्डनया तदनुपपन्नत्वव्यवस्थापनेन,निर्वचनभावं मूकत्वम् , अखर्वगर्वान् प्रौढाहङ्कारान् , नयन्तः प्रापयन्तः सन्त इत्यर्थः । मदुक्तस्य खण्डनस्य सर्ववादिविजयः फलमिति ध्वनितम् ॥३॥

नन्वद्वैतव्यवस्थापनं विजयो वा यत्फलद्वयमुक्तं तत् कथासाध्यं, कथायां च न

खण्डनभूषामणिः ।

परस्य तत्रापि किं यस्य कस्य चिदथ सर्वस्याथवा स्वपरसाधारणस्य सर्वस्य तदपि किञ्चित्कालनियतं सर्वकालनियतं वेत्याद्यर्थनिरुक्तिः, तस्याः खण्डना दोषज्ञापना, सर्वत्र सर्वस्यां कथायां वादजल्पवितण्डात्मिकायां यद्वा सर्वत्र शब्दे अर्थे लक्ष्ये लक्षणे च निर्गतं वचनं येभ्यस्ते निर्वचना मूकास्तस्य भावो मूकत्वं नयन्तः प्रापयन्तः उत्कापि उच्चार्यापि अर्थज्ञानाधिकोत्प्रेक्षाहीना अपीत्यर्थः ।

शब्दार्थयोर्निर्वचने निरुच्येते इति निर्वचने सदसत्त्वे शब्दार्थौ न सन्तौ बाध्यमानत्वात् नाप्यसन्तौ प्रत्यक्षत्वादिति तत्खण्डना—न सन्नाप्यसन्नापि सदसत्कित्वनिर्वचनीयं शब्दार्थयुगलमित्येवंरूपा तया सर्वत्र देवासुरमानुषयोनिषु येऽभिमानाः गर्वापरपर्याया अहङ्कारा अखर्वाश्चते गर्वास्ताञ्चिर्वचनभावमनिर्वचनीयत्वं नयन्तः अध्यासरूपतामापादयन्त इति यावत् । दिश्यते व्यपदिश्यते आचार्येणेति दिक् ब्रह्म विजयते इति दिग्विजयोऽविद्यादि तस्य कौतुकं कोलाहलमातनुध्वं किं कृत्वोत्क्वा निरुच्य सत्त्वेनेति शेषः । एतत्—नामार्थयुगलं यथोक्तं प्रथमश्लोकोक्तविशेषणयुक्तमपिशब्दाद्वक्ष्यमाणस्वरूपं ब्रह्म ध्यात्वा कीरः शुकइत्यर्थः इत्यपि व्याचक्षते तदसाधीयः तथा सति ब्रह्मोपासनैव निदिध्यासनात्मिकेत्युक्तं भवति (इति खण्डनप्रणयनानर्थक्यं स्यात्) ॥ ३ ॥

विजयकौतुकस्य कथाफलत्वाद्विजयकामिभिरवश्यं कथारभ्येति तदर्थं कथा-

खण्डनदर्पणः ।

नन्वद्वैतव्यवस्थापनं विजयो वा यत्फलमुक्तं तत्कथासाध्यं कथायाञ्च वैतण्डिकस्य

खण्डनरत्नमालिका ।

प्रमा इत्यादौ तत्त्वपदं किं यौगिकमुत रूढमित्येवंरूपा, अर्थस्य निरुक्तिः तत्त्वशब्दार्थो यद्यबाधितं रूपं तत्किं स्वस्य परस्य वेत्येवंरूपा तस्याः खण्डना वक्ष्यमाणा ॥ ३ ॥

ननु यदिदं शब्दार्थनिर्वचनखण्डनेन वादिनिर्जयः फलमुक्तं तत्कथायामुतान्यत्र

---

( १ ) सरस्वतीभवनपुस्तकालयीयमतिदुर्लभसंस्कृतपुस्तकसंग्रहशीलवाराणसेयस्वर्गीय बाबू गोवि·

खण्डनभावदीपिका ।

**अथ कथायामिति ।(१) सर्वतन्त्रसिद्धान्तेति ।** सिद्धान्तश्चतुर्विधः सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसिद्धान्तभेदात् । सर्वतन्त्राविरुद्धस्तन्त्रेऽधिकृतोऽर्थः सर्वतन्त्रसिद्धान्तः यथा प्रमाणाधीना प्रमेयसिद्धिरिति । समानतन्त्रसिद्धः परतन्त्रासिद्धः प्रतितन्त्रसिद्धान्तः यथा मीमांसकानां शब्दनित्यत्वम् । यत्सिद्धावन्यप्रकरणसिद्धिः सोऽधिकरणसिद्धान्तः यथा द्व्यणुकादिकं पक्षीकृत्योपादानगोचरापरोक्षकृतिमज्जन्यत्वे साधनीये ईश्वरस्य सर्वज्ञत्वम् । अभ्युपगमसिद्धान्तो नाम यस्य कस्यचिदर्थस्य स्वेच्छयाऽभ्युपगमे तस्य

शाङ्करी ।

वैतण्डिकस्य प्रवेशः, तस्याः प्रमाणादिसत्त्वाभ्युपगमाधीनत्वात्, तस्य च प्रमाणाद्यनभ्युपगन्तृत्वात्, प्रमाणाद्यभ्युपगमे च नाद्वैतव्यवस्थापनं, न चाऽद्वैतलक्षणस्वपक्षरक्षणाधीनो विजयः इति प्रमाणाद्यभ्युपगमाधीनत्वं कथायाः खण्डयितुमुपक्रमते—"अथे" ति । अथेति मङ्गलम्, "ओङ्कारश्चाथ शब्दश्च द्वावेतौ ब्रह्मणः पुरा, कण्ठं भित्त्वा विनि-

खण्डनभूषामणिः ।

भूनिबद्धं विचारमारभते—**अथेति** । अथशब्दः आरम्भे अधिकृतं खण्डनं वेदितव्यमित्यर्थः । मङ्गलमथशब्द इति तु **मिश्रः । वस्तुतस्तु** प्रश्नवचनोऽथशब्दः तथा च

खण्डनदर्पणः ।

न प्रवेशः तस्याः प्रमाणादिसत्त्वाभ्युपगमाधीनत्वात् तस्य च प्रमाणादिसत्त्वानभ्युपगन्तृत्वात्प्रमाणादिसत्त्वाभ्युपगमे च नाद्वैतव्यवस्थापनम् न चाद्वैतलक्षणस्वपक्षरक्षाधीनो विजय इति प्राप्ते प्रमाणादिसत्त्वाभ्युपगमाधीनत्वं कथायाः खण्डयितुमुपक्रमते—**अथेति** । अथशब्दो मङ्गलार्थः, आरम्भार्थो वा । अधिकृतं खण्डनं वेदितव्यमित्यर्थः । नियमस्वरूपमाह—**प्रमाणादय इति** । प्रमाणाधीना हि प्रमेयसिद्धिः इति सर्वेषु त-

खण्डनरत्नमालिका ।

नाद्यः कथाङ्गभूतस्य प्रमाणसत्ताभ्युपगमस्यानिर्वचनवादिनोऽभावेन कथानधिकारात् कथार्थं प्रमाणसत्ताभ्युपगमे चापसिद्धान्तात् न द्वितीयः कथातोऽन्यत्र वादिनो निग्रहाभावादिति निष्प्रयोजनं खण्डनप्रणयनमित्यभिप्रायेण शङ्कते—**अथेति** । अथशब्दः प्रश्नार्थः खाण्डनिकस्य कथाधिकार एव नास्ति कुतो दिग्विजयसम्भावनेति प्रश्नाकूतम् । **कथायामिति** । नानाप्रवक्तृको विचारगोचरो वचनसन्दर्भः कथा तस्यां वादिनाः—

---

न्ददाससंग्रहस्थमेकमेव खण्डितं खण्डनभावदीपिकाख्यं श्रीमच्चित्सुखाचार्यविरचितं पुस्तकं मयाऽऽसादितं पुस्तकान्तरं तु चिरमान्विष्याप्यद्य यावन्न दृष्टिगोचरं नापि श्रुतिगोचरमिति कीटादिदष्टं कदाचिदिदमपि दुर्दर्शं माभूदित्यवधार्य वाराणसेयराजकीयसंस्कृतमहाविद्यालयाध्यक्षमहामहोपाध्याय पण्डितप्रवरप्राच्यप्रतीच्योभयदर्शननिष्णात श्री गोपीनाथकविराज एम, ए, महोदयैराशसेन यावदुपलब्धमेव सम्पाद्यते ।

(१) सर्वतन्त्रसिद्धान्त इतीत्यारभ्य भाव इत्यन्तः ग्रन्थोऽत्यन्तं त्रुटितः न्यायदर्शनभाष्यादना संवाद्य समीकृत्य मया निवेशितः ।

उक्तनैयत्यपक्षस्य खण्डनाय विकल्पचतुष्टयप्रदर्शनम्—

**तदपरे न क्षमन्ते तथा हि प्रमाणादीनां सत्त्वं यदभ्युपेयं कथकेन तत्कस्य हेतोः, (१) किं तदनभ्युपगच्छद्भ्यां वादिप्रतिवादिभ्यां तदभ्यु-**

---

खण्डनभावदीपिका ।

मूलप्रमाणपरिशोधनेन स्थापनम् , यथा तार्किकाणां मनस इन्द्रियत्वम् । तत्र प्रमाणाधीना प्रमेयसिद्धिरिति सर्वतन्त्रसिद्धत्वात्प्रमाणसत्ताऽवश्यमाश्रयणीयेति भावः ।

इदानीमेतदेव दूषयति **तदपर इति** ।·········नियमसिद्धिरिति यावत् ।

शाङ्करी ।

यातौ तेन माङ्गलिकावुभौ" इति स्मरणात् । कथायां कर्त्तव्यायां तत्पूर्वं 'प्रमाणादीनि सन्ति'–इति द्वाभ्यामपि वादिभ्यामवश्यमभ्युपगन्तव्यमिति भेदवादिनो मन्यन्ते ।

**तद् अपरे**ऽभेदवादिनो न सहन्ते इति, तत् इत्यवश्याभ्युपगन्तृत्वमर्थलभ्यं परामृशति । कथकेनेत्येकवचनं खाण्डनिकाभिप्रायेण, तदितरस्य प्रमाणाद्यभ्युपगन्तृत्वसिद्धेः ।

खण्डनभूषामणिः ।

कथाधिकार एव नास्ति कुतः खाण्डनिकस्य दिग्विजयसम्भावना इति प्रष्टुराशयः ।

**उत्तरमाह-तदपर इति** । कश्चित्तु प्रथमश्लोके श्रुतिप्रमाणकं ब्रह्म प्रतिज्ञातं तत्र प्रमाणसत्त्वानभ्युपगमे विरुध्यतेत्याशङ्क्य प्रमाणसत्त्वाभ्युपगमः कथाङ्गं न भवति किन्तु प्रमाणाभ्युपगम इति कथयितुं विचारमारभते अथेत्यादिना इति **व्याचष्टे** तन्न समयबन्धस्यैव कथाङ्गत्वात् । नन्वद्वैतबोधरक्षा द्वैतखण्डनसाध्या न च खाण्डनिकस्य तत्संभावनास्ति सर्वपदार्थखण्डनस्य प्रमाणसाध्यत्वात् न च प्रमाणं खण्डयतस्तत्संभवति न वा प्रयोजनमपि द्वैतभयात् खण्डयतो वितण्डायां प्रवृत्तिरपि संभवति प्रयोजनमनुद्दिश्य न मन्दोपि प्रवर्तते किमुत ब्रह्मवादी विशेषदर्शी यश्च चार्वाकादिः प्रवर्तते तेन सह

खण्डनदर्पणः ।

न्त्रेष्वभ्युपगम्यमानता सर्वतन्त्रसिद्धान्तता तया प्रमाणादिसत्त्वमवश्यमभ्युपेयमित्यर्थः । क्वचित्सर्वतन्त्रसिद्धा इति पाठः स च सुगमः ।

सर्वतन्त्रसिद्धान्तसिद्धत्वमेव न प्रमाणादिसत्त्वस्य कैश्चित्तदनङ्गीकारादित्याह—**तदपर इति** । प्रमाणादिसत्त्वाभ्युपगमस्य कथानङ्गत्वं प्रतिपादयितुमङ्गीकारबीजं विकल्पयति—**तथा हीति** । कथकेनेत्यद्वैताभिप्रायकमेकवचनम् । **कस्य हेतोरिति** । कस्माद्धेतोरित्यर्थः । तदभ्युपगमसाहित्यनियतस्येति हेतुगर्भं विशेषणम् अत्र

खण्डनरत्नमालिका ।

वादिप्रतिवादिनोः । मन्यन्ते न्यायभाष्यकारादयः इति शेषः । नियमस्वरूपमाह–'प्रमाणादय इत्यारभ्य 'अभ्युपेयम्' इत्यन्तेन । प्रमाणादयः–प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानरूपाः । **सर्वतन्त्रसिद्धान्तेति**—'सर्वतन्त्राविरुद्धस्तन्त्रेऽधिकृतोऽर्थः सर्वतन्त्रसिद्धान्तः' गौ०

खण्डनभावदीपिका ।

तत्र तावच्चतुर्द्धा विकल्पयति किंतदित्यादिना । तदभ्युपगमस्य साहित्यनियमो व्याप्तिरिति हेतुगर्भं विशेषणं नियतत्वं व्याप्तत्वम् 'विवादाध्यासितो व्यवहारः प्रमाणादि-

शाङ्करी ।

यो यः कथकः स प्रमाणाद्यभ्युपगन्ता, या या कथा सा प्रमाणाद्यभ्युपगन्तृकर्तृका, यत्र वा कथकत्वं तत्र प्रमाणाद्यभ्युपगमः, इति प्रथमविकल्पार्थः ।

खण्डनभूषामणिः ।

कथा आस्तिकानां धर्मशास्त्रे निषिद्धेत्याशयेन भेदवादिभिरास्तिकैः कथाया निमित्तभूत वादिनोर्नियममेतादृशं मन्यन्ते पाषण्डत्वाभावज्ञानाय ततश्च यदि ब्रह्मवादिनापि नाङ्गीकर्तव्यं प्रमाणादिकं तर्हि केन नास्तिकेन सह कथा कार्या । न च नास्तिकेन सह प्रसङ्गो भवतोऽप्युचितः सर्वास्तिकप्रवरस्याशरीरं सत्त्वादित्याशङ्क्य न प्रमाणादिखण्डनमात्रेण नास्तिकता किं तु तेषामप्रमाणत्वज्ञापनेन न तु वयं तथा ब्रूमः किं तु प्रमामसतीमेव तानि जनयन्ति न सन्ति श्रुतिविरोधाद्युक्तिबाध्यत्वाच्चेति ततश्च ब्रह्मवादिना मम पाषण्डत्वं दूरापास्तं तथापि च मया सह कथा नास्तीति वदतः कथाप्रयोजकाभावात् कथा मम न संभवतीति तैर्बोधनीयं तदर्थं तेषां योऽयं प्रकार उपन्यस्तः स तस्य प्रयोजकत्वाभावप्रदर्शनेन खण्डनीय इत्याशयेन तन्मतं सिद्धवन्निर्दिशति—**कथायामित्यादिना** । कथायामिति निमित्तसप्तमी । **वादिनोः** कथकयोः वादिप्रतिवादिनोरित्यर्थः । **मन्यन्ते**—भेदवादिनो न्यायभाष्यकारादयः, प्रमाणादयः षोडश सन्तीति सत्त्वेन प्रकारेण । अन्यथा प्रमाणाभ्युपगमो ब्रह्मवादिनामस्त्येवेति कथाप्रवेशो दुर्वार एव स्यादिति भावः । **कथकेनेत्येकवचनं** खाण्डनिकाभिप्रायेण । तदितरस्य प्रमाणसत्त्वाभ्युपगमस्य सिद्धत्वादेव तदभ्युपगमविशिष्टं सत्त्वं सत्त्वाभ्युपगमनमित्यर्थः । **कस्य हेतोः** कस्माद्धेतोरित्यर्थः तत्र किं निमित्तमिति यावत् निमित्तकारणहेतुषु सर्वासां प्रायदर्शनात् इति कात्यायनस्मरणात् साहित्यस्य नियमोऽविनाभावः । या या कथा सा प्रमाणादि-

खण्डनदर्पणः ।

प्रमाणादीनां सत्त्वाभ्युपगमेन साहित्यनियतिरविनाभावः तदविनाभूतस्येति यावत् । तेन साहित्यपदं व्यर्थमिति निरस्तम् । साहित्यनियतेत्यनेन समुदायेनाविनाभूतस्याभिधानात् ॥ **अशक्यत्वादिति** । अत्र तत्तत्सत्ताभ्युपगम इति शेषः । तेन साध्या-

खण्डनरत्नमालिका ।

अ०१आ०१सू०२८॥ यथा प्रमेयं प्रमाणाधीनम् इति जात्यादेरसदुत्तरत्वमिति वा ।

प्रमाणसत्ताभ्युपगमस्य कथानङ्गत्वं प्रतिजानीते **तदपरे इति** । कथकेनेत्येकवचनं खाण्डनिकाभिप्रायेण । **कस्य हेतोरिति** । 'निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्' इति वार्तिकात् षष्ठी । प्रमाणसत्ताभ्युपगमस्य कथानङ्गत्वं प्रतिज्ञातमुपपादयितुं विकल्पानाह **किमित्यादिना** । **साहित्यनियतस्येति** । साहचर्यनियम-

**पगमसाहित्यनियतस्य वाग्व्यवहारस्य प्रवर्तयितुमशक्यत्वात् , (२) उत कथकाभ्यां प्रवर्तनीयवाग्व्यवहारं प्रति हेतुत्वात् (३) उत लोक-**

---

### खण्डनभावदीपिका ।

सत्ताभ्युपगमपूर्वकः वाग्व्यवहारत्वात्संप्रतिपन्नवाग्व्यवहारवदित्यर्थः । **हेतुभावात्** जनकत्वात् । एवं कार्य्येण वाग्व्यवहारेण कारणरूपप्रमाणादिसत्ताभ्युपगमानुमानं दर्शितम् । पूर्वत्वं विना भावमात्रेण कथारूपवाग्व्यवहारविशेषेणेति ? शेषः । तत्त्वनिर्णयो वादस्य फलं विजयो जल्पवितण्डयोः तेन फलसिद्ध्यर्थं तदभ्युपगम इति भावः ।

### शाङ्करी ।

प्रमाणादीनामभ्युपगमः कथाकारणम् , इति द्वितीयविकल्पार्थः । "प्रमाणादीनामेव कथाकारणत्वं विकल्पितं न तु तदभ्युपगमस्यापि" इति केषाञ्चिदाक्षेपोऽसङ्गतः द्वितीयविकल्पदूषणावसरे प्रमाणाद्यभ्युपगमस्यैव कथाकारणत्वखण्डनात् ।

### खण्डनभूषामणिः ।

सत्त्वाभ्युपगमपूर्विकेति व्याप्तिरिति प्रथमविकल्पार्थः । हेतुभावादित्यत्र प्रमाणादीनामित्यनुषङ्गः । तथा च कथकव्यवहारं प्रति यतो हेतुरतः कारणत्वात्तेषां सत्त्वमभ्युपेयमसतोऽकारणत्वादित्यनुमितिस्वरूपम् । अत एव द्वितीयविकल्पनिरासग्रन्थोऽपि साधु सङ्गच्छते । प्रमाणाद्यभ्युपगमः कथाकारणमिति द्वितीयविकल्पार्थः वाग्व्यवहारं प्रति प्रमाणादीनां हेतुत्वं सम्भाव्येतापि तु तदभ्युपगमस्यापि माध्यमिकादिवाग्व्यवहारे व्यभिचारादित्यर्थः ।

### खण्डनदर्पणः ।

काङ्क्षाशान्तिः । यथा रूपं स्पर्शमविनाभावमात्रबलेन गमयति तथा कथकवाग्व्यवहारः प्रमाणादिसत्ताभ्युपगममविनाभावेन गमयतीति प्रथमविकल्पार्थः ।

यथा ज्ञानं कार्यतया करणं कल्पयति एवं कथकवाग्व्यवहारोपि प्रमाणादिसत्ताभ्युपगमं कल्पयतीति द्वितीयविकल्पार्थः । न च द्वितीयविकल्पनिरासेऽग्रे कर्त्तव्ये तथा हि स्यादेवं यदि कथकप्रवर्तनीयवाग्व्यवहारं प्रति प्रमाणादीनां हेतुतेति ग्रन्थस्यैव मसंगतिः अप्रसक्तप्रमाणादिहेतुत्वस्य लिङ्गस्य हेतुतानिराकरणादिति वाच्यम् ।

### खण्डनरत्नमालिका ।

इति समुदितेनेव साहित्यनियम इति समुदितेनापि व्याप्तिरभिधीयते । तेन नियतेत्यनेनैव व्याप्तेत्यर्थलाभे साहित्यपदं व्यर्थमित्यपास्तम् । तथा च तदभ्युपगमसाहित्यनियतस्येत्यस्य तदभ्युपगमव्याप्तस्येत्यर्थः । कर्मक्तान्तोऽयम् । कर्मणोऽविवक्षया कर्तृक्तान्तनियतशब्दस्य तु व्यापक इत्यर्थः यथा नियतोपस्थितिकः प्रातिपदिकार्थ इत्यत्रेति ध्येयम् । **अशक्यत्वादिति** । प्रमाणादिसत्तानभ्युपगमे इति शेषः । लोकसिद्धत्वम्—प्राणिनिकायेन व्यवह्रियमाणत्वम् । **अतिप्रसञ्जकत्वादिति** । प्रमाणसत्तामनभ्युपेत्य व्यवहरतो जयादौ प्रमत्तस्यापि जयादि स्यादिति भावः ।

सिद्धत्वात् (४) अथ वा तदनभ्युपगमस्य तत्त्वनिर्णयविजयफलातिप्रसञ्जकत्वात् ।

शाङ्करी ।

लोकाः प्रमाणाद्यभ्युपगच्छन्तीति कथकाभ्यामभ्युपगन्तव्यम् ? इति तृतीयविकल्पार्थः । अनतिप्रसक्ततत्त्वनिर्णयविजयफलाकाङ्क्षया कथकाभ्यां प्रमाणादिसत्त्वमवश्याभ्युपगन्तव्यमिति चतुर्थविकल्पार्थः ॥

खण्डनभूषामणिः ।

ननु यदि प्रमाणादीनां हेतुत्वं ब्रूषे तदा तदभ्युपगमस्यापि मंस्यसे यतो नियतपूर्वसत्त्वं हेतुत्वं स्वावश्यमभ्युपेयमित्यवर्जनीय एव प्रमाणादिसत्त्वाभ्युपगम इत्याशङ्क्ते–अथेति । यद्यदा सत्तया ज्ञायते तत्तदाभ्युपगम्यत इति व्याप्तेरुभयसिद्धत्वादिति शङ्करमिश्रव्याख्यानं यथाश्रुतवक्ष्यमाणग्रन्थविरुद्धं हेयमेव तत् इदं तु स्यात् प्रमाणस्य न व्यवहारहेतुताशङ्कयशङ्का ज्ञानेच्छादीनामेव तद्धेतुतायाः परैरङ्गीकारात् यदि च विधायकानां प्रामाणानामपि ज्ञानद्वाराप्रवर्तकत्वं भट्टैरङ्गीकृतमिति तदभिप्रायेण शङ्का तदापि न युक्ता तेषामपि वाग्व्यवहारहेतुता नास्ति तेषां विधायकत्वव्यपदेशात्तावन्मात्र एव हेतुत्वात् यदि च हेतुपदं प्रयोजकमात्रपरं तदा पूर्वविकल्पाभेद इति चेन्नादिपदग्राह्यप्रमेयमध्यपातिवृत्तिपरत्वात् संशयाभिप्रायकत्वाद्वा शङ्काया इति । तृतीयविकल्पे लोकपदं प्राणिनिकायव्यवहारपरं 'लोकावगतसामर्थ्यः शब्दो वेदेपि बोधक' इति व्यवहारे लोकशब्दस्य प्रयोगदर्शनात् अत एव विकल्पस्यास्य दूषणावसरे स्वयमेव तथा व्याख्यास्यति तथा च यतो लोकाः प्रमाणादीनि सत्तया व्यवहरन्ति अतो लोकप्रसिद्धसत्त्वात् कथकेनापि सत्त्वमभ्युपेयमिति तृतीयविकल्पार्थः । यद्यप्येवमपि कथारम्भे सत्त्वाभ्युपगमो न आयाति स च प्रकृतोपयोगी तथापि कथकव्यवहारसिद्धत्वात् कथारम्भकाले तदभ्युपगमोऽपि लोकव्यवहारसिद्ध इत्यभिप्रायः

खण्डनदर्पणः ।

तस्यापि प्रमाणादिसत्ताभ्युपगमकरणताखण्डनार्थत्वेनाभिधानात् । न चाद्यविकल्पेनैव कारणाकारणसाधारण्येन व्यापकत्वस्याभिधानात् तल्लाभाच्च पृथक्प्रमाणादिसत्ताभ्युपगमकारणता विकल्पयितुमुचितेति वाच्यम् । प्रथमविकल्पेन कारणव्यावृत्ताविनाभावमादायाभिधानात् । न च साहित्यनियमपक्षदूषणदूष्यत्वान्न पृथग्विकल्पो युक्त इति वाच्यम् । प्रथमविकल्पदूषणसत्त्वेपि अधिकदोषाभिधाने पर्यनुयोगाभावात् । न ह्येकत्र दूषणद्वयं वक्तव्यमित्यस्ति नियमः ।

लोकेति । लोकाः प्रमाणादिसत्त्वमभ्युपगच्छन्ति इति कथकाभ्यामभ्युपेयमिति तृतीयविकल्पार्थः । यद्वा प्रमाणादिकं सत्त्वेन स्वीकार्यं लोकव्यवहारसिद्धत्वादिति तृतीयविकल्पार्थः । लोकशब्देन लोकव्यवहार उक्त इति । अनतिप्रसक्ततत्त्वनिर्णयादिफलाकाङ्क्षया कथकाभ्यां प्रमाणादिसत्त्वमवश्याभ्युपेयमिति चतुर्थविकल्पार्थः ।

प्रथमविकल्पखण्डनम्—

**न तावदाद्यः, तदनभ्युपगच्छतोऽपि चार्वाकमाध्यमिकादेर्वाग्विस्त·**

खण्डनभावदीपिका ।

तत्राद्यं कल्पं दूषयति । न तावदिति । तदनभ्युपगच्छतोऽपीति । अत्र यद्यपि प्रत्यक्षप्रमाणसत्तां चार्वाकः स्वीकुरुते तथाप्यनुमानादिभिर्व्यवहरन्नपि तानि न स्वीकुरुते इति माध्यमिकेनैकीकृत्य स उपन्यस्तः । चार्वाकमाध्यमिकादिवाग्व्यवहाराणां प्रमाणादिसत्ताभ्युपगमपूर्वकत्वसाधनं बाधितं तेषां प्रमाणानभ्युपगन्तृत्वस्योभयवादिसिद्धत्वात् किंचिद्व्यभिचारोद्भावनमेतन्मन्यन्ते तत इत्युक्तम् । पक्षे

शाङ्करी ।

**चार्वाकः**—इति । यद्यपि चार्वाकस्य प्रत्यक्षाऽभ्युपगमोऽस्ति तथाप्यनुमानैकगम्यतत्प्रामाण्यस्यानुमानानभ्युपगमेऽनभ्युपगम इत्यभिप्रेत्य तद्वाग्व्यवहारे व्यभिचारो दर्शितः । अथवा यत्किञ्चित्प्रमाणाऽभ्युपगमः सकलप्रमाणाऽभ्युपगमो वा कथाव्यापकः? आद्ये माध्यमिककथायां व्यभिचारोऽन्त्ये चार्वाककथायाम् । यद्वा प्रमाणादीत्यादिपदेन तर्कादेः परिग्रहः, तथाच चार्वाकस्य प्रमाणाऽभ्युपगमेपि तर्काभ्युपगमो नास्तीति व्यभिचारः । चार्वाकैकदेशी वा चार्वाकः ॥

ननु चार्वाकादेर्वाग्व्यवहार एव नास्ति कुत्र व्यभिचारः? इत्यत आ-

खण्डनभूषामणिः ।

परपामिति । तत्त्वनिर्णयो वादस्य फलं विजयस्तु जल्पवितण्डयोः फलं तस्य अतिप्रसक्तिरप्रमाणेन व्यवहर्तरि सम्बन्धः स तदनभ्युपगमे स्यादिति अनतिप्रसक्तफलाकाङ्क्षया कथकेन प्रमाणादिसत्त्वाभ्युपगमः कथावत्समये कार्य इति चतुर्थविकल्पार्थः ।

**नाद्य** इति । तथा च व्यभिचाराद्व्याप्तिभङ्ग इति यदि च चार्वाकादिव्यवहारोपि पक्षेऽन्तर्गतस्तदांशतो बाध इति भावः, तन्निराकरणानुपपत्तिरेव तद्व्यवहारं पूर्वपक्षाख्यं व्यनक्तीत्याशयः ।

खण्डनदर्पणः ।

तत्र व्यवहारमात्रस्य तदविनाभावः किं वा विशिष्टस्येति प्रथमविकल्पं द्वेधा विभज्याद्यं दूषयति—न तावदिति । यद्यपि चार्वाकस्य प्रत्यक्षप्रमाणसत्त्वाभ्युपगमोऽस्ति तथाप्यनुमानैकगम्यतत्प्रामाण्यस्यानुमानानभ्युपगमेनानभ्युपगम इत्यभिप्रेत्य तद्वाग्व्यवहारे व्यभिचारो दर्शितः । **यद्वा** यत्किञ्चित्प्रमाणसत्त्वाभ्युपगमो वा सकलप्रमाणसत्त्वाभ्युपगमो वा कथाव्यापकः आद्ये माध्यमिककथायां व्यभिचारः । अन्त्ये चार्वाककथायाम् । यद्वा प्रमाणादीत्यादिपदेन तर्कादिपरिग्रहः । तथा च चार्वाकस्य प्रमाणसत्त्वाभ्युपगमेपि तर्कादिसत्त्वाभ्युपगमो नास्तीति तत्कथायां व्यभिचारः ।

खण्डनरत्नमालिका ।

प्रथमं विकल्पं दूषयति नेति । तदनभ्युपगच्छतोपि—प्रमाणादिसत्तामनङ्गी-

राणां प्रतीयमानत्वात् तस्यैव वाऽनिष्पत्तौ भवतस्तन्निरासप्रयासानुपपत्तेः। सायमपूर्वः प्रमाणादिसत्तानभ्युपगमात्मा वाक्स्तम्भनमन्त्रो भवताऽभ्युहितो नूनं, यस्य प्रभावाद्भगवता सुरगुरुणा लोकायतकानि सूत्राणि न प्रणीतानि; तथागतेन वा मध्यमागमा नोपदिष्टाः

खण्डनभावदीपिका।

पक्षतुल्ये व्यभिचार इव तस्यासम्भवत्वात्। तद्व्यवहारसद्भावे विप्रतिपन्नं प्रत्याह—तस्यैवेति। उपहासव्याजेन तेषां वाग्व्यवहारं समर्थयते,—सोऽयमिति। विशेषमाशङ्कते—प्रमाणादीति। अद्वैतादिस्वपक्षसाधनव्यवहाराभ्युपगमात्। प्रमाणादिलक्ष-

शाङ्करी।

ह—तस्यैवेति। त्वद्दर्शने तदुक्तयुक्तिनिराकरणान्यथानुपपत्तिरेव तद्वाग्व्यवहार प्रमाणमित्यर्थः। सोपहासमाह—सोऽयमिति। तथागतेन—बुद्धेन, मध्यमल-

खण्डनभूषामणिः।

परिहसति सोऽयमपूर्व इति। अन्यस्मिन् वाक्स्तम्भनमन्त्रे प्रयुज्यमाने वाङ्न निःसरति त्वन्मन्त्रे तु प्रयुज्यमाने पुनःस्थित एव निःसरतीति विलक्षणोऽयं मन्त्र इत्यर्थः। प्रभावात्—सामर्थ्यात् प्रमाणादिसत्तायाः सर्वस्या वा अभ्युपगमो व्यापकः य स्याः कस्याश्चिद्वा आद्ये सुरगुरुणेति द्वितीये तथागतेनेति। मध्यमाग-

खण्डनदर्पणः।

ननु चार्वाकादेर्वाग्व्यवहार एव नास्ति कुत्र व्यभिचार इत्यत आह—तस्यैवेति। सोपहासमाह सोऽयमिति। व्यभिचारमेव द्रढयितुं व्यतिरेकमुखेनोदाहरति नूनमिति। तथागतेन—बुद्धेन यद्यपि बहुस्थले व्यभिचारोद्भावनं न युक्तं तथापि महाजनत्वेन भवदङ्गीकृतशिष्टानामपि वाग्व्यवहारे व्यभिचार इति दर्शनेन त्रयाणां खण्ड-

खण्डनरत्नमालिका।

कुर्वतोऽपि। प्रतीयमानत्वादिति। तथाच विमतो वाग्व्यवहारः प्रमाणादिसत्ताङ्गीकारपूर्वकः वाग्व्यवहारत्वात् संप्रतिपन्नवाग्व्यवहारवदित्यनुमानस्य चार्वाकादिव्यवहारे व्यभिचारः नच चार्वाकादिवाग्व्यवहारस्यापि पक्षत्वं ततश्च न व्यभिचारः 'पक्षे पक्षसमे च न व्यभिचारः' इत्युक्तेरिति वाच्यम् तथा सति तत्रैव भागे बाधापत्तेरिति भावः। ननु चार्वाकः प्रत्यक्षस्य प्रामाण्यं मन्यत एव माध्यमिकस्तु सर्वशून्यतया व्यवहाराभाववानेवेति न बाधव्यभिचारावत आह—तस्यैवेति। वस्तुतस्तु चार्वाकः अनुमानादिभिर्व्यवहरन्नपि तत्सत्तां न मनुते माध्यमिकस्यापि सांवृतो व्यवहारोऽस्त्येवेति बाधव्यभिचारयोस्तादवस्थ्यमेवेति भावः। वाग्व्यवहारस्य प्रमाणादिसत्ताभ्युपगमव्याप्यतां निरस्योपहसति—सोऽयमिति।

अपूर्व इति। प्रसिद्धवाक्स्तम्भनमन्त्रे प्रयुक्ते वाणी न निस्सरति अस्मिंस्तु प्रयुक्तेऽपि निस्सरति। सभासु वक्तुमनर्हतया रहसि वक्तव्यत्वेनास्य मन्त्रत्वम् इति भावः।

भगवत्पादेन वा बादरायणीयेषु सूत्रेषु भाष्यं नाभाषि ।

प्रथमविकल्पखण्डनाक्षेपः—

प्रमाणाद्यनभ्युपगमस्यापि प्रवर्तयन्तु नाम ते वाचोभङ्गीः, तास्तु

शाङ्करी ।

क्षणा आगमा मध्यमागमा यदध्ययनान्माध्यमिक इत्युच्यते, भगवत्पादेन = शङ्कराचार्यपादेन, बादरायणो व्यासः, अत्र सर्वत्र त्वदुक्तव्याप्तेर्व्यभिचार इति भावः ॥

ननु चार्वाकादिव्यवहारो रथ्यापुरुषवाग्व्यवहारवदनुपादेय एव, प्रमाणाद्यभ्युपगमस्तु साधनबाधनक्षमवाग्व्यवहारव्यापकत्वेन मयोपन्यस्तस्तत्र च न व्यभिचारः ? इ-

खण्डनभूषामणिः ।

माः—सर्वशून्यताबोधका आगमाः यदध्येतृषु माध्यमिकत्वप्रसिद्धिः नोपदिष्टा इत्यपि न वाग्व्यवहारः स्पष्टितः । भगवत्पादेन वेति श्रीशङ्कराचार्य्येणेत्यर्थः तस्य प्रमेयमध्यपतितस्यापवर्गस्य प्रयोजनत्वानभ्युपगमेन पुनरुपन्यासः तस्य हि नापवर्गेपि प्रयोजनं कूटस्थानन्दरूपस्य पुरुषप्रवृत्तयेऽप्रयोजकत्वात् येन हि प्रयुक्तः पुरुषः प्रवर्तते तत्प्रयोजनमिति हि न्यायविदः भेदाभेदवादिभाष्यव्यावृत्तये भगवत्पादेनेत्युक्तं भाष्यं'तमेतमात्मानात्मनोरितरेतराध्यासमविद्याख्यं पुरस्कृत्य सर्वे प्रमाणप्रमेयव्यवहाराः प्रवृत्ता' इत्यादि। वाचोभङ्गीः साधनदूषणप्रकारान् कथा इति यावत्। तास्तु वाचोभङ्ग्य

खण्डनदर्पणः ।

निकानामत्र मुख्यत्वमिति सूचितम्। न च दूषणस्य बाधकत्वस्य विपरीतप्रमाजनकत्वरूपस्य स्वीकारे ऽद्वैतवादित्वव्याहतिरिति वाच्यम् व्यावहारिकसत्त्वाङ्गीकारेऽदोषात् । एवं व्यावहारिकप्रमाणादिसत्त्वाभ्युपगमेपि खाण्डनिकस्य न कापि हानिरिति बोध्यम् । प्रथमविकल्पद्वितीयविकल्पं शङ्कते प्रमाणेति । कथकवाग्व्यवहारः प्रमाणादिसत्ताभ्युपगमपुरस्सरः साधनबाधनयोरन्यतरक्षमवाग्व्यवहारत्वात् संमतवत् । साधनबाधनयोः फलतः ऐक्येपि लोकप्रसिद्धिमनुरुध्य भेदेनोपन्यासः । ननु साधनक्षमत्वं न्यायमते खाण्डनिकवाग्व्यवहारे स्वरूपासिद्धमिति चेन्न पराभ्युपगमरीत्याऽभिधानात् । वाचोभङ्गीः—वाक्प्रकारान् । उक्तानुमानव्यतिरेकव्याप्तावुपाधिं

खण्डनरत्नमालिका ।

भगवत्पादेनेति । श्रीशङ्कराचार्य्येण यत्प्रमाणादीनां प्रतिपादनं कृतं तद्व्यावहारिकरीत्यैव न तत्त्वत इति तदीयवाग्व्यवहारोऽपि न भवेत् ।

ननु वाग्व्यवहारमात्रस्य प्रामाणादिसत्ताभ्युपगमव्याप्यतां न ब्रूमः किन्तु साधनबाधनक्षमव्यवहारस्येति चार्वाकादिवाग्व्यवहारो न साधनबाधनक्षम इति न व्यभिचार इत्याशङ्कते—प्रमाणादीति । तथा च कथकवाग्व्यवहारः प्रमाणादिसत्ताभ्युपगमपूर्वकः साधनबाधनक्षमव्यवहारत्वात् भट्टादिव्यवहारवदित्यनुमानस्वरूपं निष्पन्नम् । परिहरति नेति । अयम्भावः भवता चार्वाकादिवाग्व्यवहारः साधनबाधनाक्षमः प्रमा-

**साधनबाधनक्षमा न भवन्ति तावता इति ब्रूमः ? इति चेत् ।**

प्रथमविकल्पखण्डनाक्षेपपरिहारः—

**न प्रमाणाद्यनभ्युपगम्य प्रवर्तितत्वं तदीयसाधनबाधनाक्षमतायां न नियामकं, किन्तु सद्वचनाभासलक्षणयोगित्वमित्यवश्याभ्युपेयं भवता,**

खण्डनभावदीपिका ।

णखण्डनाय न च समर्था भवन्तीति यावत् । हेत्वाभासोद्भावनेन तत्परिहरति–**न प्रमा-**

शाङ्करी ।

त्याह–। **प्रमाणादीति** । साधनबाधनयोः फलत ऐक्येपि लोकप्रसिद्धिमनुरुध्य भेदेनोपन्यासः । एवमपि माध्यमिकादिवाग्व्यवहार एव व्यभिचारस्तस्यापि साधनबाधनक्षमत्वात् । न च "माध्यमिकादिवाग्व्यवहारः साधनबाधनाक्षमः, प्रमाणाद्यनभ्युपगम्य कृतत्वात्, रथ्यापुरुषवाग्व्यवहारवत्" इत्यनुमानान्माध्यमिकादिवाग्व्यवहारस्य साधनबाधनाक्षमत्वसिद्धिः । तस्य सद्वचनाभासलक्षणयोगित्वोपाधिकवलितत्वादित्याह–**प्रमाणादीति** । सद्वचनाभासःस्फुटावभासो व्यभिचारादिस्तल्लक्षणं साध्याऽन्त्यन्ताभावसमानाधिकरण्यादि, तद्योगित्वमित्यर्थः, तथाच–वाग्व्यवहारसाधनबाधनाक्ष-

खण्डनभूषामणिः ।

इत्यर्थः । तथा च ताः कथाभासा इति साधनं–स्वपक्षस्य स्थापनं, बाधनं–परपक्षस्य दूषणत्वज्ञापनं, **तत्क्षमाः**—स्वपक्षप्रमितिपरपक्षस्याभावप्रमितिजनका इत्यर्थः । **तावतेति**–तथानभ्युपगम्यात्प्रवर्तनेऽपीत्यर्थः । **तदीयेति** वाग्व्यवहारीयेत्यर्थः तथा च वाग्व्यवहारत्वावच्छिन्नसाध्यव्यापकसद्वचनाभासलक्षणयोगित्वमुपाधिः अन्यथा वटादौ साध्याव्यापकतापत्तेः तथा च कथाविशेषव्यापकतायां न व्यभिचार इति भावः । **सद्वचनं–सद्वाक्यं**—साधनबाधनक्षमं वाक्यमित्यर्थः । तथा भासते

खण्डनदर्पणः ।

**वक्तुमाह–प्रमाणादीति** । अयमर्थः व्याप्यवृत्तिव्यतिरेकवतो साध्यसाधनयोरन्वयव्याप्तिवैपरीत्येन व्यतिरेकव्याप्तिनियमात् प्रकृतहेत्वभावव्याप्यः प्रकृतसाध्याभावः चार्वाकादिवाग्व्यवहारे दर्शनीयः स चाशक्यस्तत्सम्बन्धस्य सोपाधित्वात् तथा च हेतौ व्यभिचारस्तत्रेति भावः । **सद्वचनेति** सद्वचनाभासलक्षणन्यसिद्ध्यादिलक्षणानि तेषामन्यतमयोगित्वमुपाधिरित्यर्थः ।

खण्डनरत्नमालिका ।

णाद्यनभ्युपगम्य प्रवर्तितत्वात् इत्यनुमानेन चार्वाकादिवाग्व्यवहारे साधनबाधनक्षमव्यवहारत्वरूपहेतोरसत्त्वमभ्युपेत्य व्यभिचारः परिहरणीयः तदेव न सम्भवति त्वदुक्तानुमानस्य सद्वचनाभासलक्षणयोगित्वरूपोपाधिमत्त्वात् तथा हि साधनबाधनाक्षमे आस्तिकनास्तिकयोर्व्यवहारे सद्वचनाभासलक्षणयोगित्वस्य सत्त्वेन साध्यव्यापकत्वं साधनबाधनक्षमे प्रमाणाद्यभ्युपगम्य प्रवर्तिते चार्वाकादिवाग्व्यवहारे सद्वचनाभास-

येनाभ्युपगम्यापि प्रमाणादीनि प्रवर्तिता मतान्तरानुसारिभिर्व्यवहारा अभ्युपगतप्रमाणादिसत्त्वैर्मतान्तरव्यवहारिभिरपरैरतथाभूता इति

खण्डनभावदीपिका ।

णादीति । कथं निर्णय इत्यत आह येनेति । तथाभूताः साधनबाधनाक्षमाः । (प्रमाणाद्यन)··· ··भ्युपगम्य प्रवर्तितत्वं साधनबाधनाक्षमत्वे न प्रयोजकं प्रमाणादिस-

शाङ्करी ।

मत्वे साधनाभासत्वं दूषणाभासत्वं तन्त्रं, न तु प्रमाणाद्यनभ्युपगन्तृप्रणीतत्वमिति भावः । सद्वचनाभासं निग्रहस्थानं, तल्लक्षणं कथाङ्गतत्त्वज्ञानाभावलिङ्गं, तद्योगित्वमित्यन्ये ॥

प्रमाणाद्यनभ्युपगमस्य साधनाद्यक्षमत्वे ऽप्रयोजकत्वमेव दर्शयितुमनभ्युपगमपूर्वकत्वसाधनासत्त्वेपि साधनाद्यक्षमत्वसाध्यसत्त्वमाह—येनेति । अन्यथा व्यापकव्यभिचारोपदर्शनमसङ्गतं स्यात् नैयायिकमीमांसकयोः कथायां प्रमाणाद्यभ्युपगम्य प्रवर्तितायामपि साधनबाधनाक्षमत्वं तदेकतरेण व्यवस्थाप्यते तत्राभासत्वमेव तन्त्रं न तु प्रमाणाद्यनभ्युपगम्य प्रवर्तितत्वमिति न तुल्ययोगक्षेमत्वमपीत्यर्थः ।

वैतण्डिकवाग्व्यवहारे पक्षे एव प्रमाणाद्यनभ्युपगम्य प्रवर्तितत्वं साधनमस्ति, सद्वचनाभासलक्षणयोगित्वमुपाधिर्नास्तीत्युपाधेः साधनाव्यापकत्वमाह—यदि त्विति ।

खण्डनभूषामणिः ।

न तु तत् यद्वचनं तत्सद्वचनाभासं तस्य यल्लक्षणं हेत्वाभासादि आभासीभूतार्थबोधकत्वेनैव वाक्यमाभासीभवति तथा चायं हेतुर्व्यभिचारादिदोषान्यतर(म)वानित्येवं व्यभिचारादिर्दर्शनीयः सति च तस्मिन् साधको बाधको वार्थाभासो भवतीत्यर्थः । अन्ये तु सद्वाचनाभासा निग्रहस्थानं तल्लक्षणं कथाङ्गं तत्त्वज्ञानाभावलिङ्गं तद्वत्त्वमित्यर्थं इति व्याचक्षते । प्रयोजको हि धर्म उपाधिर्भवति न च तस्मिन् सत्यपि क्व भवतस्तत्प्रयोज्यत्वमित्याशयेनाह—यो न सभ्यत इत्यर्थोसद्वचनाभासलक्षणयोगित्वमेवान्वयव्यतिरेकाभ्यां कथायां कार्यक्षमत्वाभावप्रयोजकं न तु भवदुक्तं प्रमाणाभावादीत्याशयः । एवं व्याख्यायमाने व्यापकव्यभिचारादर्शनमतन्त्रं स्यात् यद्वा व्याप्यवृत्तिव्यतिरेकिणो व्यतिरेकव्याप्ताविवान्वयव्याप्तिरित्यभिप्रायेणानभ्युपगमव्यतिरेकेपि न कथाभासत्वव्यतिरेक इत्याह—

खण्डनदर्पणः ।

न च घटादौ साधनक्षमत्वाभावोऽस्ति नोक्तोपाधिरिति वाच्यम् , कथकवाग्व्यव-

खण्डनरत्नमालिका ।

लक्षणायोगित्वस्य असत्वेन साधनाव्यापकत्वमितिभवति तस्योपाधित्वम् ।

प्रमाणाद्यनभ्युपगम्यप्रवर्तित्वस्य साधनबाधनाक्षमत्वाप्रयोजकत्वे प्रयोजकमाह येनेति । अतथाभूता—साधनबाधनाक्षमाः। क्वचित् 'तथाभूताः' इति पाठस्तस्यापि उक्त एवार्थः । अयम्भावः यदि प्रमाणाद्यनभ्युपगम्य प्रवर्तित्वं साधनबाधनाद्यक्षमत्वे नियामकं स्यात् तर्हिआस्तिकानां परस्परं त्वदीयो हेतुः साधनबाधनाक्षम इति कथन-

न्यथेति किं नाम सन्ति न सन्ति वा प्रमाणादीनीत्यस्यां चिन्तायामुदासीनैः यथा स्वीकृत्य तानि भवता व्यवह्रियते तथा व्यवहारिभिरेव कथा

खण्डनभावदीपिका ।

सिद्धान्ती—मैवमिति । कथारम्भदशायां प्रमाणादीनि न सन्ति, इति यदि वदामस्तदा व्याघातः स्यात् । किं त्वप्रतिज्ञायैव प्रमाणादीनामसत्तां तत्सत्त्वासत्त्वोदासीना एव परं व्यवहराम तेन केन विरोधः स्यात् । कथारूपोऽपि व्यवहारः कथामध्ये नास्माभिः प्रतीतत्वेनाप्रतीतत्वेन वा निरूप्यते किन्तु यथा प्रसिद्ध एवोपादीयत इति भावः । भवता

शाङ्करी ।

न्तीति तदानीमेव वदामो येनेदं देश्यं स्यादित्याह—न ब्रूम इति । अन्यथेति । यदि

खण्डनभूषामणिः ।

भूषणाविभागोपि सर्वपदेन परिगृह्यते । परिहरति-मैवमिति । प्रमाणादिसत्त्वाभ्युपगमो न कथाङ्गमिति वदतामस्माकं प्रमाणादिसत्त्वाभासः स्वीकृत इति लोकोत्तरप्रश्नेन कथं ज्ञातं येनैवं वदता त्वया निरनुयोज्यानुयोगादपि न भीतं भ्रान्तेन तथा च धर्मी दूषणादिश्चास्माकं प्रतीतमेवेति तावतैव व्यवहारनिर्वाहः सा च प्रतीतिः प्रमाणजन्या नवेति विचारस्य नायमवसरोऽर्थान्तरापत्तेरिति भावः यद्यपि प्रमाणादिसत्ता स्वीकृतन्येव परस्याशङ्केत्यनुक्तोपालम्भोऽयं तथापि तव हृदयस्थमीदृशमन्यथा तदङ्गत्ववादिना मम निग्रहायेदमुच्यमानं संगच्छेत त्वया प्रमाणाद्यभावे व्यवहारः कथं पक्षीक्रियत इति यतो मया निरनुयोज्यानुयोगेनैव त्वं पराजेयो भावः केनोच्यते प्रमाणादीनि न सन्तीति तस्मादयं तव भ्रमः यतः कथारम्भे प्रमाणादिसत्त्वाभ्युपगमं न कुरुते अतोऽस्य न सन्ति प्रमाणादीनीत्यभ्युपगम इति कथाकालेपि तत्स्वीकारोऽस्त्येवेति तत्पूर्वक एवारम्भः कथाया इदमेव व्यक्तीकरिष्यति न सन्ति प्रमाणादीनीति—मतमारोप्यति । किन्नामेत्याद्युदासीनैरित्यस्य कथा प्रवर्त्यतामित्यनेन सम्बन्धः । तानि प्रमाणादीनि स्वीकृत्य यथा भवता व्यवह्रियते भोजनादिव्यवहारः क्रियते तथा व्यवहारिभिर्भोजनादिकाले प्रमाणादिसत्त्वासत्त्वचिन्तोदासीनैः सेति । अयंभावः यथा भोजनादिव्यवहारप्राक्काले प्रमाणादिसत्त्वासत्त्वचिन्ता नोपयुज्यते अन्यथा बालकादीनां व्यवहारलोपापत्तेस्तथा कथात्मकव्यवहारेपि समानसामग्रीकत्वात् सति कथाङ्गतत्त्वज्ञाने दूषणसाधनताज्ञानादिभिर्वावश्याभ्युपेयैरुपपत्तेरिति भावः । यद्वोदासीनैरित्यस्य कथारभ्यतेत्यनेनैवान्वयः लोकप्रसिद्धिसिद्धमेव प्रमाणादिकथामाश्रित्य व्यवह्रियतां यथा तानि प्रमाणादीनि सद्रूपाणि प्रमाण-

खण्डनदर्पणः ।

सन्ति इति वेदानीं वदामो येनेदं देश्यं स्यादित्याह—न ब्रूम इति—वस्तुतस्तु व्यावहारिकप्रामाण्याभ्युपगमेपि न दोष इति भाव्यं तथा च व्यवहारिभिरिति उपेक्षितसदसत्त्वे

खण्डनरत्नमालिका ।

किं तर्हि तदपर इत्यादिनोच्यत इत्याहकिमिति ।

**प्रवर्त्यतामिति । अन्यथा न सन्ति प्रमाणादीनीति मतमस्माकमारोप्य यदिदं भवता दूषणमुक्तं तदपि न वक्तुं शक्यम् ,**

### खण्डनभावदीपिका ।

प्रमाणादिसत्तानभ्युपगमेऽपि कथाप्रवृत्तिरवश्याश्रयणीयेत्याह—**अन्यथेति** । न सन्ति प्रमाणादीनीति स्वीकृत्य कथारभ्येति नास्मदीयं मतं तथाप्यस्मदीयमतत्वेनारोप्य यदि-

### शाङ्करी ।

प्रमाणाद्यभ्युपगममन्तरेण कथाप्रवृत्तिर्न स्यात्तदेत्यर्थः । **आरोप्येति** । प्रमाणाद्यभ्युपगमः कथाप्रवृत्तावतन्त्रमित्यस्माकं मतं, प्रमाणादिकं विनापि कथाप्रवृत्तिरिति तत्र तवारोप इत्यर्थः । **दूषणमिति** । प्रमाणाद्यसत्त्वेपि तदधीनदूषणादिव्यवहारसत्त्वमित्यभ्युपगमे व्याघातलक्षणं दूषणमित्यर्थः । दूषणाभिधानस्याशक्यत्वं व्युत्पादयति—

### खण्डनभूषामणिः ।

मेव वस्तुसाधकं न तदाभासमित्यादि त्वया व्यवह्रियते तथाव्यवहारिभिः सर्वैरेव सत्त्वासत्त्वचिन्तायामुदासीनैः कथा प्रवर्त्यतामिति त्वपव्याख्यानं सद्रूपाणीत्यभ्युपगमे तदसत्त्वसाधने व्याघातापत्तेः किन्तु लोकप्रसिद्धैः प्रमाणादिभिरेव व्यवहरणशीलैः खण्डनिकैरित्यर्थः । न हि ते लोकप्रसिद्धिमुल्लङ्घ्य व्यवहरन्ति किन्तु लोकप्रसिद्धिमेव प्रमाणमूलिकां न पश्यन्ति । यदाहुरिष्टसिद्धिकाराः—'सत्यं प्रसिद्धिरस्त्यत एव व्यवहरामः किंतु नास्या मूलं पश्याम' इत्येव यथा त्यादेरर्थान्तरं ? प्रमाणादिसत्तामनभ्युपगम्य कथाप्रवृत्तिस्तत्राप्यस्त्येव परतद्ब्रह्मवादिभिः सह विद्वेषवशान्न कथ्यते वृद्धैरिव पूर्वापरामर्शशून्यतया चेत्याह—**अन्यथेति** । प्रमाणादिसत्त्वाऽभ्युपगमो न कथाङ्गमित्यस्माकं मतं प्रमाणाद्यसत्त्वावगमविषयत्वेनारोपितमित्येको दोषः। **दूषणमिति** । कथायां हि दूषणमिदमाश्रयासिद्ध्यादिकमुद्भाव्यं न हि भुञ्जानस्य गच्छतो वा तदुद्भाव्यते इत्य-

### खण्डनदर्पणः ।

प्रमाणमात्रमूलकव्यवहारशालिभिरित्यर्थः । **अन्यथेति**—यदि प्रमाणादिसत्ताद्यभ्युपगममन्तरेण कथाप्रवृत्तिर्न स्यात्तदेत्यर्थः। प्रमाणादिसत्त्वाभ्युपगमः कथाप्रवृत्तावतन्त्रमित्यस्माकं मतं प्रमाणादिकं विनापि कथाप्रवृत्तिरिति तत्र तवारोप इत्यर्थः । **दूषणमिति** ।

### खण्डनरत्नमालिका ।

**यथेति** । यथा तानि प्रमाणादीनि भवताभ्युपगम्य व्यवह्रियते तथा प्रमाणादीनि सन्ति न सन्ति वेतिचिन्तायामुदासीनैः तथाव्यवहारिभिः उपेक्षितसदसत्त्वप्रमाणमात्रमूलव्यवहारिभिः कथा प्रवर्त्यतामिति निष्पिण्डितोऽर्थः । यथेति यच्छब्दोपादानादेकस्तथाशब्दोऽध्याहर्तव्यः । **अन्यथा**—कथा प्रमाणसत्ताभ्युपगममूलैवेत्यभ्युपगमे । **आरोप्येति** । न हि प्रमाणादीनि न सन्तीति मम मतं किन्तु प्रमाणादिसत्त्वासत्त्वोदासीनैरेव मया कथारभ्यते कथायां प्रमाणादीनां सत्त्वस्येवासत्त्वस्याप्यभ्युपगमो

**कथ्यन्ते। यदि त्वस्मद्वचसि सद्वचनाभासलक्षणं न भवान् दर्शयितुमीष्टे, तदा 'ऽनभ्युपगम्य प्रमाणादीनि भवता प्रवर्तितोऽयं व्यवहार' इति शतकृत्वस्त्वयाख्यमानेऽपि नास्माकमादरः। अन्यथाभ्युपगम्य प्रमाणादीनि भवता प्रवर्तितोऽयं व्यवहार इत्येतावता भवदीयो व्यवहाराभास इत्यस्माभिरपि वक्तुं शक्यते एव।**

खण्डनभावदीपिका।

त्तामभ्युपगच्छतोनैयायिकमीमांसकयोर्नित्यः शब्दोऽनित्यः शब्द इति परस्परं विवादे सद्वचनाभासलक्षणस्यो·········तायां प्रयोजकत्वादित्यर्थः प्रमाणाद्यनभ्युपगम··· ···············शक्यत्वाच्च साधनव्यापकतापोत्यभिप्रेत्याह **यदि** त्विति। विपक्षबाधकतर्कोपन्यासेन······**अन्यथेति**। साधनबाधनाक्षमत्वे सद्वचनाभासलक्षणयोगित्वस्यैव प्रयोजकत्वप्रमाणादिसत्तानभ्युपगमस्य चाप्रयोजकत्वादप्रयोजकत्वेन तेन प्रत्य-

शाङ्करी।

यथा प्रमाणाद्यभ्युपगमपूर्वकत्वमतन्त्रं साधनबाधनक्षमत्वे तथा प्रमाणाद्यनभ्युपगमपूर्वकत्वमप्यतन्त्रमेवेत्यप्रयोजकत्वमेवानिष्टोपदर्शनमुखेन द्रढयति—**अन्यथेति**।

खण्डनभूषामणिः।

**तथाभूता इति**। साधनाक्षमा इत्यर्थः। **शक्यत एवेति**। एतेन भवदीयो व्यवहारः आभासः प्रमाणाद्यभ्युपगमपूर्वकत्वात् अभ्युपगतप्रमाणादिसत्त्वसम्मतकथाभासवदि-

खण्डनदर्पणः।

हारत्वावच्छिन्नसाधनबाधनाक्षमतायां प्रयोजकं किञ्च सद्वचनाभासयोगित्वं नात्र नियामकमस्तु वा विनिगमकाभावात् पूर्वहेतुना तुल्ययोगक्षेमतेत्यत आह—**येनेति**। शब्दो द्रव्यं साक्षात्सम्बन्धेन ग्राह्यत्वाद् घटवत् शब्दो न द्रव्यं बहिरिन्द्रियव्यवस्थापकत्वात् रूपवदिति व्यवहारस्य प्रमाणादिसत्त्वाभ्युपगमपुरस्सरत्वेऽप्यन्योऽन्याभासतया प्रतिषेधो दृश्यते प्रमाणाद्यनभ्युगम्य प्रवर्तितत्वस्य साधनाद्यक्षमत्वप्रयोजकत्वे तन्न स्यादिति भावः। प्रमाणादिसत्त्वमनभ्युगम्य प्रवर्तितत्वरूपसाधनव्यापकत्वमाशङ्क्याह—**यदि हीति**। यदि प्रमाणादिसत्तानभ्युपगमपूर्वकत्वेन साधनाद्यक्षमत्वं तदा प्रमाणादिसत्त्वाभ्युपगमत्वेन तवापि वाग्व्यवहारः साधनाद्यक्षमः किं न स्यादित्यत आह—**अन्यथेति**। ननु प्रामाणादीनामसत्त्वे व्यवहारस्याप्रमितत्वादाश्रयासिद्धिः। किञ्च—प्रमाणाधीनत्वात्

खण्डनरत्नमालिका।

मसङ्गतं स्यात्। एवं च सद्वचनाभासलक्षणयोगित्वस्यैव कथाव्याघातकारणत्वमिति निगमयति **यदिति**। **अन्यथेति**। तुल्ययुक्त्या त्वद्व्यवहारः साधनाद्यक्षमः प्रमाणादिसत्ताभ्युपगमपूर्वकतद्व्यवहारत्वात् व्यवहारान्तरवत् इति सत्प्रतिपक्षः स्यादिति भावः।

ननु चार्वाकादिवाग्व्यवहारस्य प्रमितत्वे धर्मिग्राहकमानविरोधान्न त्वदुक्तानुमानसम्भवः 'न सन्ति प्रमाणादीनि' इति प्रतिज्ञाहानिश्च प्रतीतत्वमात्रेण धर्मित्वं न तु प्रमितत्वे-

आक्षेपान्तरम्—

**ननु यदि प्रमाणादीनि न सन्ति तदा व्यवहार एव धर्म्मी कथं सिद्ध्येत्, दूषणादिव्यवस्था वा कथं स्यात्, सर्वविधिनिषेधानां प्रमाणाधीनत्वात् ।**

आक्षेपपरिहारः—

**मैवम्— न ब्रूमो वयं न सन्ति प्रमाणादीनीति स्वीकृत्य कथार-**

खण्डनभावदीपिका ।

वस्थाने प्रमाणाद्यभ्युपगमेनापि त्ववस्थानं किं न स्यादित्यर्थः । प्रमाणादिसत्तामनभ्युपगम्य कथारम्भव्याघातः स्यादिति शङ्कते—नन्विति । व्यवहारः कथारूपो वाग्व्यवहारः दूषणादिव्यवस्था दूषणसाधनविभागप्रमितिविधिनिषेधानां भावाभावप्रमितानां कथानामसाधकत्वेन बाधकत्वेन प्रमितवस्तुजातस्य प्रतिपादकत्वेन प्रमीयमाणो वाग्व्यवहारः तथा च प्रमितत्वोक्तिः प्रमाणाभावोक्तिश्च परस्परं विरुद्धेत्यर्थः । परिहरति

शाङ्करी ।

ननु प्रमाणादीनि न सन्तीत्यभिमानिनस्तव प्रमाणानभ्युपगम एव चेत्तदा प्रमाणमन्तरेण न कथासिद्धिर्न वा साधनदूषणनिष्ठा स्यादित्याह—ननु यदीति ।

कथापूर्वकाले प्रमाणाभ्युपगमस्याऽप्रयोजकत्वमाचक्ष्महे न तु प्रमाणादीनि न स-

खण्डनभूषामणिः ।

तिप्रयोगसूचितः । अत्रैव भ्रान्त आश्रयासिद्धिं शङ्कते नन्विति । तथा च धार्मिग्राहकतया प्रमाणसत्त्वसिद्धौ तदनभ्युपगमो व्याहतः यच्च कथाभासलक्षणयोगित्वं कथाया आभासत्वप्रयोजकमित्युक्तं तदपि प्रमाणादिसत्ताभ्युपगमं विना नोपपन्नमित्याह दूषणादीति । आभासताप्रयोजकं दूषणमभिप्रेत्योक्तम् । ननु न मया तथोच्यते किंतु भवता तथा वाच्यमित्येव अत एवावश्यमभ्युपेयं भवतेत्येवोक्तमित्यनुक्तोपालम्भोऽयमिति चेत्सत्यमुक्तं किन्तु प्रमाणाद्यनभ्युपगम्य प्रवर्तितत्वं न नियामकमित्यपि चोक्तं किं चान्यथेत्यादिना साधनप्रयोगोऽपि कृतः सोऽनुपपन्न एव स्यादित्याशयेनाह—सर्वविधिनिषेधानामिति । विधिर्भावः निषेधोऽभावः अदूषणादित्यादिपदपरिगृहीतो दूषण-

खण्डनदर्पणः ।

प्रमेयसिद्धेः प्रमाणाभावे दूषणादिविभागोऽपि न स्यादित्यादेशयति—ननु यदीति । न चासतः सत्त्वमात्रसिद्धावपि न तदभ्युपगमसिद्धिरिति वाच्यं यद्येन यदा सत्त्वेन ज्ञायते तदा स तेन सत्त्वेन अभ्युपगम्यत इति भावः । न च चतुर्थविकल्पेनाभेद एवं स्यादिति वाच्यम् । प्रमाणादिसत्त्वानभ्युपगमे तत्त्वनिर्णयाद्यतिप्रसञ्जकत्वस्य तदर्थत्वात् । प्रकृते प्रमाणाद्यभावे व्यवहारधर्म्याद्यभावस्यापाद्यत्वादिति भेदात् कथापूर्वकाले प्रमाणादिसत्त्वाभ्युपगमस्याप्रयोजकत्वमाचक्ष्महे—न तु प्रमाणादीनि सन्ति न

खण्डनरत्नमालिका ।

नेत्याशयेन अप्रमितत्वे आश्रयासिद्धिरिति पृच्छति ननु इति । परिहरति—मैवमिति ।

न्येति किं नाम सन्ति न सन्ति वा प्रमाणादीनीत्यस्यां चिन्तायामुदासी-नैः यथा स्वीकृत्य तानि भवता व्यवह्रियते तथा व्यवहारिभिरेव कथा

खण्डनभावदीपिका ।

सिद्धान्ती—मैवमिति । कथारम्भदशायां प्रमाणादीनि न सन्ति, इति यदि वदामस्तदा व्याघातः स्यात् । किं त्वप्रतिज्ञायैव प्रमाणादीनामसत्तां तत्सत्त्वासत्त्वोदासीना एव परं व्यवहराम तेन केन विरोधः स्यात् । कथारूपोऽपि व्यवहारः कथासमये नास्माभिः प्रतीतत्वेनाप्रतीतत्वेन वा निरूप्यते किन्तु यथा प्रसिद्ध एवोपादीयत इति भावः । भवता

शाङ्करी ।

न्तीति तदानीमेव वदामो येनेदं देश्यं स्यादित्याह—न ब्रूम इति । अन्यथेति । यदि

खण्डनभूषामणिः ।

भूषणाविभागोपि सर्वपदेन परिगृह्यते । परिहरति-मैवमिति । प्रमाणादिसत्त्वाभ्युपगमो न कथाङ्गमिति वदतामस्माकं प्रमाणादिसत्त्वाभावः स्वीकृत इति लोकोत्तरप्रश्नेन कथं ज्ञातं येनैवं वदता त्वया निरनुयोज्यानुयोगादपि न भीतं भ्रान्तेन तथा च धर्मी दूषणादिश्चास्माकं प्रतीतमेवेति तावतैव व्यवहारनिर्वाहः सा च प्रतीतिः प्रमाणजन्या नवेति विचारस्य नायमवसरोऽर्थान्तरापत्तेरिति भावः यद्यपि प्रमाणादिसत्ता स्वीकृतेत्येव परस्याशङ्केत्यनुक्तोपालम्भोऽयं तथापि तव हृदयस्थमीदृशमन्यथा तदङ्गत्ववादिनो मम निग्रहायेदमुच्यमानं संगच्छेत त्वया प्रमाणाद्यभावे व्यवहारः कथं पक्षीक्रियत इति यतो मया निरनुयोज्यानुयोगेनैव त्वं पराजेयो भावः केनोच्यते प्रमाणादीनि न सन्तीति तस्मादयं तव भ्रमः यतः कथारम्भे प्रमाणादिसत्त्वाभ्युपगमं न कुरुते अतोऽस्य न सन्ति प्रमाणादीनीत्यभ्युपगम इति कथाकालेऽपि तत्स्वीकारोऽस्त्येवेति तत्पूर्वक एवारम्भः कथाया इदमेव व्यक्तीकरिष्यति न सन्ति प्रमाणादीनीति—मतसारोप्येति । किन्नामेत्याद्युदासीनैरित्यस्य कथा प्रवर्त्यतामित्यनेन सम्बन्धः । तानि प्रमाणादीनि स्वीकृत्य यथा भवता व्यवह्रियते भोजनादिव्यवहारः क्रियते तथा व्यवहारिभिर्भोजनादिकाले प्रमाणादिसत्त्वासत्त्वचिन्तोदासीनैः सहेति । अयंभावः यथा भोजनादिव्यवहारप्राक्काले प्रमाणादिसत्त्वासत्त्वचिन्ता नोपयुज्यते अन्यथा बालकादीनां व्यवहारलोपापत्तेस्तथा कथात्मकव्यवहारेपि समानसामग्रीकत्वात् सति कथाङ्गतत्त्वज्ञाने दृष्टसाधनताज्ञानादिभिरवश्याभ्युपेयैरुपपत्तेरिति भावः । यद्वोदासीनैरित्यस्य कथारभ्यतामित्यनेनैवान्वयः लोकप्रसिद्धिसिद्धमेव प्रमाणादिकथामाश्रित्य व्यवह्रियतां यथा तानि प्रमाणादीनि सद्रूपाणि प्रमाण-

खण्डनदर्पणः ।

सन्ति इति वेदानीं वदामो येनेदं देश्यं स्यादित्याह—न ब्रूम इति—वस्तुतस्तु व्यावहारिकप्रमाण्याभ्युपगमेपि न दोष इति भाव्यं तथा च व्यवहारिभिरिति उपेक्षितसदसत्त्वे

खण्डनरत्नमालिका ।

किं तर्हि तदपर इत्यादिनोच्यत इत्याहकिमिति ।

**प्रवर्त्यतामिति । अन्यथा न सन्ति प्रमाणादीनीति मतमस्माकमारोप्य यदिदं भवता दूषणमुक्तं तदपि न वक्तुं शक्यम् ,**

खण्डनभावदीपिका ।

प्रमाणादिसत्तानभ्युपगमेऽपि कथाप्रवृत्तिरवश्याश्रयणीयेत्याह—अन्यथेति । न सन्ति प्रमाणादीनीति स्वीकृत्य कथारभ्येति नास्मदीयं मतं तथाप्यस्मदीयमतत्वेनारोप्य यदि-

शाङ्करी ।

प्रमाणाद्यभ्युपगममन्तरेण कथाप्रवृत्तिर्न स्यात्तदेत्यर्थः । आरोप्येति । प्रमाणाद्यभ्युपगमः कथाप्रवृत्तावतन्त्रमित्यस्माकं मतं, प्रमाणादिकं विनापि कथाप्रवृत्तिरिति तत्र तवारोप इत्यर्थः । दूषणमिति । प्रमाणाद्यसत्त्वेपि तदधीनदूषणादिव्यवहारसत्त्वमित्यभ्युपगमे व्याघातलक्षणं दूषणमित्यर्थः । दूषणाभिधानस्याशक्यत्वं व्युत्पादयति—

खण्डनभूषामणिः ।

मेव वस्तुसाधकं न तदाभासमित्यादि त्वया व्यवह्रियते तथाव्यवहारिभिः सर्वैरेव सत्त्वासत्त्वचिन्तायामुदासीनैः कथा प्रवर्त्यतामिति त्वपव्याख्यानं सद्रूपाणीत्यभ्यु पगमे तदसत्त्वसाधने व्याघातापत्तेः किन्तु लोकप्रसिद्धैः प्रमाणादिभिरेव व्यवहरणशीलैः खाण्डनिकैरित्यर्थः । न हि ते लोकप्रसिद्धिमुल्लङ्घ्य व्यवहरन्ति किन्तु लोकप्रसिद्धिमेव प्रमाणमूलिकां न पश्यन्ति । यदाहुरिष्टिसिद्धिकाराः—'सत्यं प्रसिद्धिरस्त्यत एव व्यवहरामः किंतु नास्या मूलं पश्याम' इत्येव यथा त्यादेरर्थान्तरं ? प्रमाणादिसत्तामनभ्युपगम्य कथाप्रवृत्तिस्तवाप्यस्त्येव परतद्ब्रह्मवादिभिः सह विद्वेषवशान्न कथ्यते वृद्धैरिव पूर्वापरामर्शशून्यतया चेत्याह—अन्यथेति । प्रमाणादिसत्त्वाऽभ्युपगमो न कथाङ्गमित्यस्माकं मतं प्रमाणाद्यसत्त्वावगमविषयत्वेनारोपितमित्येको दोषः। दूषणमिति । कथायां हि दूषणमिदमाश्रयासिद्ध्यादिकमुद्भाव्यं न हि भुञ्जानस्य गच्छतो वा तदुद्भाव्यते इत्य-

खण्डनदर्पणः ।

प्रमाणमात्रमूलकव्यवहारशालिभिरित्यर्थः । अन्यथेति—यदि प्रमाणादिसत्ताद्यभ्युपगममन्तरेण कथाप्रवृत्तिर्न स्यात्तदेत्यर्थः। प्रमाणादिसत्त्वाभ्युपगमः कथाप्रवृत्तावतन्त्रमित्यस्माकं मतं प्रमाणादिकं विनापि कथाप्रवृत्तिरिति तत्र तवारोप इत्यर्थः । दूषणमिति ।

खण्डनरत्नमालिका ।

यथेति । यथा तानि प्रमाणादीनि भवताभ्युपगम्य व्यवह्रियते तथा प्रमाणादीनि सन्ति न सन्ति वेतिचिन्तायामुदासीनैः तथाव्यवहारिभिः उपेक्षितसदसत्त्वप्रमाणमात्रमूलव्यवहारिभिः कथा प्रवर्त्यतामिति निष्पिण्डितोऽर्थः । यथेति यच्छब्दोपादानादेकस्तथाशब्दोऽध्याहर्तव्यः । अन्यथा—कथा प्रमाणसत्ताभ्युपगमूलैवेत्यभ्युपगमे । आरोप्येति । न हि प्रमाणादीनि न सन्तीति मम मतं किन्तु प्रमाणादिसत्त्वासत्त्वोदासीनैरेव मया कथारभ्यते कथायां प्रमाणादीनां सत्त्वस्यैवासत्त्वस्याप्यभ्युपगमो

आक्षेपोक्तदूषणस्य विकल्पासहत्वम् ।

**कीदृशीं मर्यादामालम्ब्य प्रवर्तितायां कथायामिदं दूषणमुक्तं ? किं प्रमाणादीनां सत्त्वमभ्युपगम्याभाभ्यां वादिभ्यां प्रवर्तितायां कथायाम् ? उतासत्त्वमभ्युपेत्य ? अथैकेन सत्त्वमपरेण चासत्त्वमङ्गीकृत्य? नाद्यः, अभ्युपगतप्रमाणादिसत्त्वं प्रत्येतादृशपर्यनुयोगानवकाशात् । द्वितीये च**

खण्डनभावदीपिका ।

दं व्याघातलक्षणं दूषणमुक्तं तदप्यनुपपन्नं स्यादित्यर्थः । एतदेव परिशेषमुखेन दर्शयति—**कीदृशीमिति । एतादृक्पर्यनुयोगानवकाशादिति** । पर्य्यनुयोगे निरनुयोज्यानु-

शाङ्करी ।

**कीदृशीमिति** । कथायामेव दूषणाभिधानध्रौव्यादयं विकल्पावसरः । **एतादृशेति** । यदि प्रमाणादीनि न सन्ति तदा व्यवहार एव धर्मी न सिद्ध्येदित्येतादृशपर्य्यनुयोगा-

खण्डनभूषामणिः ।

र्थः। तथा च निग्रहस्थानोद्भावनावसरसमयाभावात् दूषणाभिधानस्य शक्यत्वाज्ञानमप्य-परमिति भावः । **इदृक्पर्यनुयोगानवकाशादिति** । तवाश्रयासिद्धिदूषणादिभिर्भा-गासिद्धिरिति पर्यनुयोगस्यावसरो नास्ति तथा च तदुद्भावने तवैव निरनुयोज्यानुयोगो निग्रहः स्यादिति भावः। **आपत्तेरित्यस्य** पर्य्यनुयोगस्येत्यनुषङ्गः । तथा च जात्युत्त-रत्वम् । **कश्चित्तु** चकारं पठित्वा पर्यनुयोगनिरवकाशश्चेति व्याचष्टे । ननु तथापि मदीयप्रमाणादिसत्ताभ्युपगमसत्त्वात् कथायाः प्रमाणादिसत्त्वाभ्युपगमाव्यभिचारः

खण्डनदर्पणः ।

प्रमाणाद्यसत्त्वेपि तदधीनव्यवहारदूषणादिसत्त्वमित्यभ्युगमे व्याघातलक्षणं दूषणमित्यर्थः। दूषणाभिधानस्याशक्यत्वं व्युत्पादयति—**कीदृशीमिति**। कथायामेव दूषणाभिधानध्रौ-व्यादयं विकल्पावसरः। प्रमाणादिसत्तानभ्युपगमात्तु कथामूलतया प्रमाणादिसत्त्वाभ्युपगमे कथारम्भसमय एवापसिद्धान्तेन निगृहीतत्वाद् अनुत्पन्नममिव कथा स्यादित्यपरितोषा-त्कल्पान्तरमाह—**उतेति** । उभाभ्यां वादिभ्यामित्युपरितनकल्पद्वयेऽप्यनुषङ्गः । असत्त्वाभ्युपगमे तु सद्वादिनो निग्रह इति तदुभयोर्विकल्पान्तरमाह—**अथैकेनेति**। कुत इत्यत

खण्डनरत्नमालिका ।

निरर्थक इति तत्र प्रमाणादीनि न सन्तीति मम मतं त्वयाऽऽरोपितमिति भावः । कथास-म्भवमुपपादयितुं पृच्छति **कीदृशीमिति**। सामान्यतो ज्ञातो विशेषतोऽज्ञातः सन्दिग्ध-श्चार्थो जिज्ञासागोचरो भवति इह चातथात्वात्कथं प्रश्न इत्यत आह—**किमित्यादिना**। उभाभ्यां वादिभ्यां प्रवर्तितायां कथायामिति उपरितनकल्पेऽपि सम्बध्यते। **एतादृशेति**। यदि प्रमाणादीनि न सन्ति तदा व्यवहार एव धर्मी न सिध्येदित्येतादृशेत्यर्थः। **अन-**

**स्वतोऽप्यापत्तेः । न तृतीयः, तथैव कथान्तरस्यापि प्रसक्तेः उभयाभ्युपगमानुरोधित्वाच्च कथानियमस्य । अन्यथा स्वाभिप्रायमालम्ब्य तेना-**

खण्डनभावदीपिका ।

योगापत्तेरित्यर्थः । तृतीये त्वस्य पाथमेवानुक्तोपालम्भो ? न भवत इत्याह–न तृतीय इति । यस्यां कथायां त्वया व्याहतोक्तिरुपन्यस्यते सैव यथा कथा प्रवृत्ता तथा परापि प्रवर्तिष्यत इत्यर्थः । उत्तरत्राऽप्युत्पाद्यमानसमयबन्धस्यैव नयादिव्यवस्थापकतोपपत्तेरप्रयोजकः प्रमाणादिसत्ताभ्युपगम इति–दूषणान्तरमाह–उभयेति । वादिप्रतिवादिभ्यामभ्युपगतः समयबन्ध एवेदं साधनमित्युद्भावनीयमिदं दूषणमित्युद्भावनीयमित्यस्ति कथानियमहेतुरित्यर्थः । इत्थमनभ्युपगच्छतो–जयपराजयादिव्यवस्थादिर्न सिद्ध्येदित्याह—अन्य-

शाङ्करी ।

नवकाशादित्यर्थः । **स्वतोऽपीति** । त्वमपि प्रमाणादिसत्त्वमनङ्गीकृत्य प्रवृत्त इति तन्मूलको व्याघातस्तवापि तुल्य इत्यर्थः । **तथैवेति** । प्रकृतनिग्रहाधिकरणकथाप्रवृत्तिवत् कथान्तरप्रवृत्तिरपि न दुर्लभेत्यर्थः । नन्वेतावता कथाप्रवृत्तिः समहिता व्याघातस्तु न समाहितः इत्यत आह—**उभयेति** । प्रमाणादिकमन्तरेण व्यवहारासिद्धिलक्षणो यो व्याघातस्त्वया दत्तः स मया नेष्यते इत्यर्थः । ननु त्वदनिष्टोऽप्ययं दोष एव, न हीष्टत्वमपि दोषत्वे तन्त्रमित्यत आह—**अन्यथेति** । वागात्मनि–वाङ्-

खण्डनभूषामणिः ।

स्थित एवेत्याह--**उभयाभ्युगमेति** । तथा च सन्नपि अन्यतराभ्युपगमो न तन्त्रं

खण्डनदर्पणः ।

आह–**अभ्युपगमेति**। अतिरिक्तेनेत्यनुषङ्गः। **तथैवेति** । प्रकृतनिग्रहाधिकरणकथाप्रवृत्तिवत् कथान्तरप्रवृत्तिरपि न दुर्लभेत्यर्थः । ननु कथाहेतुनियमबन्धः प्रमाणादिसत्ताभ्युपगमं विना न भवतीति तदनुकूलतया साभ्युपगम्यतामित्यत आह–**उभयेति** । न नियमबन्धस्तत्सत्ताभ्युपगमेनैव भवति किन्तु यथैवोभाभ्यामित्येतत्तथैवेत्युभयाभ्युपगममात्रं कथाहेतुर्न तु तत्सत्ताभ्युपगमो विशेष इत्यर्थः । चकारस्तु स्वपक्षस्य प्राधान्यख्यापनार्थो न तु दूषणान्तरसमुच्चयार्थः । यद्वा नन्वेतावता कथाप्रवृत्तिः समाहिता व्याघातस्तु न समाहित इत्यत आह–**उभयेति** । प्रमाणादिकमन्तरेण व्यवहारासिद्धिलक्षणो यो व्याघातस्त्वया दत्तः स मया नेष्यते इत्यर्थमाहुः । अभ्युपगमानुरोधेनैव कथानियमोपपत्तावुभयेति विशेषणं गौरवाद्व्यतिरेकाभावाच्च हातव्यमित्याशङ्क्याह—**अन्यथेति** ।

खण्डनरत्नमालिका ।

**वकाशादिति** । अन्यथा निरनुयोज्यानुयोगेन निग्रहः स्यादिति भावः । **स्वतः**—स्वस्य । प्रमाणानभ्युपगन्तृत्वापत्तिः तथा चापसिद्धान्तेन निग्रहः स्यादिति भावः सार्वविभक्तिकस्तसिः । किमिदं दूषणमारब्धायां कथायां कथान्तरे वा नाद्यः आरब्धत्वात्। द्वितीये त्वाह—**तथैवेति**। विमताः कथाः कथासत्तानभ्युपगमपुरस्सराः कथात्वात् आरब्धकथावदित्यनुमानप्रयोगः । **अन्यथेति** । तार्किकेण प्रमाणादि

**पि त्वद्वचसि यत्किञ्चिद्वागात्मनि दूषणे ऽभिहिते कस्य जयो व्यवतिष्ठतां ? प्रमाणाद्यभ्युपगन्तुरेव यावन्नियमभरयन्त्रणा महती स्यात् ।**

खण्डनभावदीपिका ।

थेति । वागात्मनि दूषणे परेण दूषणत्वेनानङ्गीकृतस्य दूषणत्वेनाभिधाने वादिनः प्रतिवादिनो वा कस्य जयः स्यादिति न निर्णीयेतेति यावत् । प्रत्युत प्रमाणाद्यभ्युपगन्तुरेव नियमभरयन्त्रणा स्यादिति भावः ।..........................

शाङ्करी ।

मात्ररूपे, त्वदुपात्तो व्याघातो वाङ्मात्रमेवेति भावः । किञ्च यद्युभयाननुमतोपि दोषस्तदा प्रमाणाद्यभ्युपगन्तुस्तव प्रामाणिकदोषानुसरणव्यग्रता स्यादुद्भावितदोषस्य प्रामाणिकत्वव्यवस्थापनप्रयासश्च भवेदस्माकं तु नेयं व्यापृतिरित्याह—**प्रमाणाद्यभ्युपगन्तुरेवेति** । कथातः पूर्वं प्रमाणाद्यभ्युपगमनियमोभयवाद्यननुमतदो-

खण्डनभूषामणिः ।

किन्तु वक्ष्यमाण उभयवाद्यनुमतः समयबन्ध एव तथा अन्यथा न तवाभ्युपगममात्रेण चेदिष्टसिद्धिस्तदा नैयायिकेन पञ्चावयवन्याये प्रयुक्ते सौगतेन द्व्यवयववादिना तत्राधिक्ये दूषण उक्तेपि निग्रहः स्यान्नैयायिकस्येति । **यत्किंचिद्वागात्मनीति** । **वाङ्मात्ररूपे**—न तु वास्तवदोषप्रतिपादके, न ह्यत्राधिकनिग्रहस्थानं संभवति नैयायिकैर्न्यायः पञ्चावयवः सौगतेन तु द्व्यवयवः प्रयोज्य इति समयबन्धे उभाभ्यां नियमस्य कृतत्वादिति । तत्किं नैयायिकेन प्रमाणादिसत्त्वं सौगतेन प्रमाणाद्यसत्त्वमभ्युपेत्य कथा कार्येत्युभयाभ्युपगमानुरोधिनी कथा भविष्यति नेत्याह—**प्रमाणादीति** । सत्त्वेनेति शेषः । **यावन्नियमेत्** । यावांश्चासौ नियमश्चेति यावान् प्रमाणादिसत्त्वाभ्युपगमस्तावानेव स भरस्तेन गौरवं लक्ष्यते तेन महती यन्त्रणा पीडा स्यादित्यर्थः । प्रमाणादिसत्त्वाभ्युपगन्त्रा

खण्डनदर्पणः ।

वागात्मनि—वाङ्मात्ररूपे त्वदुपात्तो व्याघातो वाङ्मात्रमेवेति भावः । किञ्च यद्युभयाननुमतोपि दोषस्तदा प्रमाणादिसत्ताभ्युपगन्तुस्तव प्रामाणिकदोषानुसरणव्यग्रता स्यादुद्भावितदोषस्य प्रामाणिकत्वव्यवस्थापनप्रयासश्च भवेत् अस्माकन्तु नेयं व्यापृतिरित्याह—**प्रमाणाभ्युपगगन्तुरिति** । **एवं यावदिति** निपातद्वयमवधारणे । प्रमाणदिसत्त्वासत्त्वाभ्युपगमौदासीन्येन समयबलात् प्रवृत्तायां कथायामेव भवतेदं दूषणमुक्तं मन्तव्यम् । तथा च तद्वदेव कथान्तरमपि स्यादिति विचारफलमुपसंहरति—

खण्डनरत्नमालिका ।

मानोपन्यासे सुगतेन द्व्यवयवानुमानवादिना अधिकमिति स्वाभिप्रायेण वागात्मनि निग्रहे उद्भाविते कस्य जयो निर्णीयेतेत्यभिप्रायः । एवं च प्रमाणसत्त्वासत्त्वाभ्युपगमौदासीन्येनारब्धायां कथायां यथेदं भवता दूषणमुक्तं तथा कथान्तरमपि सम्भव-

प्रमाणादिसत्त्वासत्त्वौदासीन्ये एव दूषणसंभवः—

**तस्मात्प्रमाणादिसत्त्वासत्त्वाभ्युपगमौदासीन्येन व्यवहारनियमेन समयं बध्वा प्रवर्तितायां कथायां भवतेदं दूषणमुक्तमित्युचितमेव तथा सति स्यात् । योऽयं भवान्स्वाभिप्रायमपि नावधारयितुं शक्नोति दूरत-**

शाङ्करी ।

षोद्भावनयोरकर्त्तव्यतामुपसंहरति—**तस्मादिति** । उचितमेव तथा सति स्यादित्यत्र यद्युभयाभ्युपगतं स्यादिति शेषः । उपसंहृत्य परस्याहृदयज्ञत्वमुपपादयति **योऽयमिति**। प्रमाणाद्यनभ्युपगम्य प्रवर्त्तितायां कथायां व्याघातोऽयं दत्तः प्रमाणाद्यनभ्युपगम्य कथायामप्रवृत्तिरिति चाभिधत्से, इति स्वाभिप्रायानवधारणम्, कथातः पूर्वं प्रमाणाद्यभ्युपगमो न तन्त्रमिति मयोक्तं प्रमाणादीनि न सन्तीतिमदुक्तत्वेन त्वया गृहीतमिति पराभिसन्धानानवधारणम् इयमस्माकं पैतृकी व्याख्या । **व्याख्यान्तरं** तु—ननु मदीयस्तत्रापि प्रमाणाद्यभ्युपगमोऽस्त्येवेति प्रमाणाद्यभ्युपगमपूर्वकत्वं कथायां न व्यभिचरतीत्यत आह—**उभयेति** । तथा च नान्यतराभ्युपगमोपि तन्त्रं, न चान्यतरसिद्धदोषाभिधानमुचितमित्यर्थः । कथातः पूर्वमवश्यं समयबन्धः स्यात् अन्यथा तवेदमनिष्टं स्यादित्याह—**अन्यथेति** । उभयानभ्युपगतदूषणभावस्यापि यदि दूषणत्वं

खण्डनभूषामणिः ।

हि प्रमाणेन तेन च निश्चितसत्त्वेनैव वक्तव्यमन्येन तु प्रमाणाभासेनापि निश्चितासत्त्वेनापीति तथा च तस्यावसादो न स्यात् स्याच्च पूर्वस्येति एवं भूतायाः कथाया विरामो न संभवति बलवदनिष्टानुबन्धितया ज्ञाते प्रवृत्त्यसंभवात् तत्किं त्वया सह मम कथा न जातैव यदि चैवं तथा सति मया कथं दूषणमभिहितं त्वया च कथं लोकसिद्धेन व्यवह्रियतेऽस्माभिरित्युक्तं निरनुयोज्यानुयोगो वा मां प्रति कथं नोच्यत इत्याह—**तस्मादिति** । वक्ष्यमाणसमयबन्धनियम एव कथाङ्गं न तु सत्त्वासत्त्वाभ्युपगमौ ताभ्यां विनापि कथासंभवात् ततश्च तादृश्यां कथायामिदं दूषणं भवता वक्तुमुचितमेवेति मयापि तत्परिहार एव कृतो न तु निरनुयोज्यानुयोग उद्भावितः एवं बोधयित्वा परिहसति—**योथमिति** । प्रमाणादिसत्तामन-

खण्डनदर्पणः ।

**तस्मादिति** । ननु एकेन सत्त्वमपरेण चासत्वमङ्गीकृत्य कथारम्भतत्साधनादौदासीन्येन कथारम्भ इति उपसंहारे तद्विरुद्धमिति चेन्न—अपरेणासत्त्वमित्यस्य ग्रन्थस्यापरेणसत्त्वासत्त्वमङ्गीकृत्येत्यर्थाददोषात् यद्वा उभयाभ्युपगमानुरोधित्वादित्यत्रेदमुपसंहरणं युक्तमुचितमेव तथासति स्यादित्यत्र यद्युभयाभ्युपगतं स्यादिति शेषः । **योऽयमिति**।

खण्डनरत्नमालिका ।

तीति विचारफलमुपसंहरति—**तस्मादिति** । **समयं** वक्ष्यमाणं प्रमाणतर्काभ्यां व्यवहर्तव्यमित्यादिरूपं सङ्केतम् । नन्वौदासीन्येनापि तव कथानुपपन्नाऽसत्त्वानङ्गीकारलिङ्गेन त्वया सत्त्वमङ्गीकृतमिति त्वदभिप्रायस्य मया विभाव्यमानत्वादत आह—**योऽ-**

**स्तस्मिन्पराभिसन्धानावधारणप्रत्याशा ।**

आक्षेपान्तरम्-शिष्यं प्रत्येवोक्तकथानधिकारप्रदर्शनम् ।

**अथ वादीकृत्य दुर्वैतण्डिकं तस्मिन्नुपाधौ बाधेऽभिधीयते इत्येव नेष्यते, शिष्यादयस्तु तस्य कथानधिकारं ज्ञाप्यन्ते, अत एव भाष्यकारः**

शाङ्करी ।

तदा जयपराजयादिव्यवस्था न स्यादित्यर्थः । प्रमाणादिसत्तानभ्युपगन्ता हि प्रमाणाभासेनाप्यभिदध्यात् तदभ्युपगन्ता हि प्रमाणत्वेन निश्चितेनैवेति तस्य महती यन्त्रणेत्याह—प्रमाणेति । 'एव'-'यावत्'इति निपातद्वयमवधारणे, उचितमेवेति सोपहासम् । तदिदं व्याख्यानमसत्सन्दर्भमिव(१) । ननु मया त्वयि व्याघातो नोक्तो येन तदनुरोधात्कथाऽभ्युपगमः, सा च कथा प्रमाणाद्यभ्युपगममन्तरेणैव प्रवृत्ता स्यादपि तु शिष्या एवं ज्ञाप्यन्ते यद्वैतण्डिकः कथानधिकारीत्याशङ्कते—"अथे" ति । यदि वैतण्डिकस्य जयाद्युद्देश्यं, तदा तदनुरोधात् प्रमाणाद्यभ्युपगन्तृत्वमपि, अथ

खण्डनभूषामणिः ।

भ्युपगम्य प्रवर्तितायां कथायां दोषो दीयते प्रमाणादिसत्तामनभ्युपगम्य कथं प्रवृत्तिरिति स्वाभिप्रायानवधारणम् यद्वा ईदृश्यां कथायामहं दोषमवादिषमिति स्वाभिप्रायानवधारणं पराभिसन्धाने—परस्य ममाभिप्रायस्तदवधारणं कथाङ्गं न प्रमाणादिसत्त्वावधारणमिति मदिच्छा तवाप्रत्यक्षा अनुमानेन कथं ज्ञातुं शक्या स्वस्य प्रत्यक्षयोग्यापि सेच्छा येन न प्रत्यक्षीकृता मन्दबुद्धिनेति । स्यादेवायं परिहासो यदि दुर्वैतण्डिकेन सहास्माकं कथा प्रवृत्ता स्यान्न चैवमित्याशयेनाशङ्कते—अथेति । दुर्वैतण्डिकः सर्वशून्यवादी माध्य-

खण्डनदर्पणः ।

ईदृश्यां कथायां दोषमवादिषमिति स्वाभिप्रायानभिज्ञो भवान् मदभिप्रायं कथं जानीयात् मम सत्त्ववदसत्त्वस्याप्यनिष्टेरिति भावः । ननु सत्तानभ्युपगमे कथानधिकारो न कथायां प्रतिपाद्यते किन्तूपदेशद्वारेण शिष्यशिक्षापरं क्रियते न ततो व्याघात इति शङ्कते—अथेति । अत एवेति । वैतण्डिकः कथाफलं जयाद्युद्दिश्य यदि

खण्डनरत्नमालिका ।

**यमिति । पराभिसन्धानम्**-पराभिप्रायः ।

ननु प्रमाणसत्तानभ्युपगमे कथायामधिकारो नास्तीति यदिदं मयोक्तं तत् न कथायां येन प्रमाणाद्यभ्युपगमं विनापि कथाप्रवृत्ता स्यात्किन्तु शिष्या एवं प्रतिपाद्यन्ते यत् वैतण्डिकः कथायामनधिकारी इत्याह—**अथेति** । प्रमाणाद्यनभ्युपगन्ता दुर्वैतण्डिकः । **उपाधौ**—वाग्व्यवहारमूले । **शिष्यादीति** । आदिपदेन पुत्रपरिग्रहः अत्रार्थे वात्स्यायनसम्मतिमाह—**अत एवेति** । स दुर्वैतण्डिकः अनुयुक्तः-पृष्टः यदि

(१) अस्य व्याख्यानस्य असत्सन्दर्भत्वं कथाप्रवृत्तेः समाहितत्वेऽपि व्याघातस्यासमाहितत्वाद्बोध्यम् पूर्वोक्तस्य स्वीयव्याख्यानस्य तु व्याघातसमाधानपक्षे योजितत्वात्सत्सन्दर्भत्वम् ।

"स प्रयोजनमनुयुक्तो यदि प्रतिपद्यते" इत्याह स्म न तु प्रतिपद्यसे इति ।

आक्षेपान्तरासम्भवप्रतिपादनम् ।

मैवम्-शिष्यादीन्प्रत्यपि 'चार्वाकादेर्दोषोयमि' त्येवाभिधातव्यम्,

शाङ्करी ।

किञ्चिदनुद्दिश्यैव कथायां प्रवर्तते तदोन्मत्त इवोपेक्षणीय इति शिष्यशिक्षा 'न तु प्रतिपद्यसे' इत्युपलक्षणं न तु त्वं प्रयोजनमनुयुक्त इत्यपि द्रष्टव्यम् । वादिनि सम्बोध्ये मध्यमपुरुषप्रयोग उचित इति भावः । शिष्योपि हि वैतण्डिकस्यायं दोष इति बोधनीयो, दोषश्च कथायामेवेति सा कथा प्रमाणाद्यभ्युपगममन्तरेणैवेति स्वीकार्य्यमित्याह– "शिष्यादीन्"इति । प्रयोजनसत्ता न प्रवर्त्तिका किन्तु

खण्डनभूषामणिः ।

मिकः–तदाहुर्भट्टचरणाः "अर्थशून्यमिदं ज्ञानं योगचाराः प्रपेदिरे । तस्याप्यभावमिच्छन्ति ये माध्यमिकवादिन" इति । तस्मिन्बाधोऽभावः अधिकारस्य प्रमाण्यत इत्यर्थः । यदि च बाधः आश्रयासिद्ध्यादिरित्युच्यते तदा तस्मिन्निति निमित्तसप्तमी । भाष्यकारः–न्यायसूत्राणां वात्स्यायनः । प्रतिपद्यते इत्यनन्तरं स एवास्य स्थाप्यः पक्ष इति वैतण्डिकत्वं विजहाति नो चेन्नासौ लौकिको न वा परीक्षक इत्युन्मत्तवदुपेक्षणीय इति शेषः । स वैतण्डिकः कथाप्रयोजनं तत्त्वनिर्णयविजयाख्यं प्रतिपद्यते इति प्रथमपुरुषः न तु प्रतिपद्यस इति मध्यमपुरुषः कथाधिकाराभावेन पुरोऽनवस्थानादित्याशयः । इदमुपलक्षणं त्वं प्रयोजनमनुयुक्त इत्यपि द्रष्टव्यं । वादिनि संबोध्ये मध्यमपुरुषस्यैवोचितत्वादिति मिश्रः यद्यपि भवान् प्रतिपद्यत इत्यप्रयोगेपि युष्मदो युक्त एव तथापि स इति परोक्षनिर्देशोपष्टम्भेनेदमुक्तं कथं च तथा स्यादिति दोषाभिधानं स्यादित्यर्थः ।

खण्डनदर्पणः ।

प्रवर्तते तदा तदङ्गीकारे तदुपायं प्रमाणादिसत्त्वमङ्गीकृतवान् अथ तदनुद्दिश्यैव तत्र प्रवर्तते तदोन्मत्तवदुपेक्षणीयः स्यादित्यर्थः । न त्विति । कथायामाभिमुख्ये मध्यमपुरुषः स्यादिति प्रतिपद्यत इत्यनुपपन्नं स्यादित्यर्थः । शिष्योऽपि हि वैतण्डिकस्यायं दोष इति ज्ञापनीयो दोषश्च कथायामेवेति सा कथा प्रमाणादिसत्त्वाभ्युपगममन्तरेणैवेति स्वीकार्यमित्याह—शिष्यादीति । प्रयोजनसत्ता न प्रवर्त्तिका किन्तु प्रयोजनज्ञानं तच्च वैतण्डिकस्यास्तीति न तस्य कथानधिकारोपीति हृदयम् । न च प्रयोज-

खण्डनरत्नमालिका ।

प्रयोजन प्रतिपद्येत एतादृशविजयादिकं फलमुद्दिश्याहं कथायां प्रवृत्त इहि तदा प्रतिपद्येतैव प्रमाणं तदधीनत्वात्प्रतिपत्तेरतो व्याघातः अथ न तदा उन्मत्तवदुपेक्षणीय इति भाष्यार्थः । भाष्ये प्रतिपद्यते इति प्रथमपुरुषप्रयोगेण तस्य परोक्षतया कथानधिकारो द्योतितः यदि स वादीकृतः स्यात्तदा प्रतिपद्यस इति ब्रूयादिति भावः । वैतण्डिकस्य कथाधिकारानधिकारयोरेतद्द्विफलमित्याह-मैवमिति । चार्वाकादेः कथा-

कथं च तथा स्यात्, तस्य कथाप्रवेशनाऽप्रवेशनयोस्तद्बाधात्मत्वात्, कथायामेव हि निग्रहः।

शाङ्करी।

तज्ज्ञानं, तच्च वैतण्डिकस्यापीति न तस्य कथानधिकारोऽपीति हृदयम्। "कथाया-

खण्डनभूषामणिः।

कथाप्रवेशाप्रवेशयोरिति। ननु तस्य कथाधिकारो नास्त्युन्मत्ततुल्यो हि स इति कथायामप्रवेशेऽपि वक्तुं शक्यम्, अत एव कथायामेव हि निग्रह इत्यपि न हि निग्रहस्थानत्वेनोद्भावनमिहाभिमतं,तथा सति अखण्डिताहङ्कारेण पराहङ्कारखण्डनस्य कथाङ्गत्वज्ञानाभावात्मनो वा निग्रहस्य कथाप्रवेशनियतत्वात् स्यादप्येवं न त्वेवं किंतु कथाङ्गप्रयोजनशून्यस्य नास्ति कथाधिकार इति शिष्यान् प्रत्युपदेशः स च प्रवेशाभावबोधनोपयोगी कथातः प्रागपि वर्तमानस्य चार्वाकादेर्न वा बाधः सत्यमेवं परं त्वेवमुपदेशः शिष्यान् प्रति किं कथायां प्रविष्टस्य चार्वाकादेरधिकाराभावबोधनाय अप्रविष्टस्य वा नाद्यः प्रविष्टस्य प्रवृत्तिमतोऽधिकाराभावबोधनस्याशक्यत्वात् न हि प्रयोजनं विना कश्चित् प्रवर्तते न च प्रयोजनसत्ताधिकारे उपयुज्यते अग्निहोत्रादावप्रवृत्त्यापत्तेः दुष्कर्मणामायुर्नाशे फलानुत्पत्तेः किं च तदधिकाराभावबोधनस्य प्रयोजनं कथाप्रवेशस्य जातत्वात् नापि द्वितीयः शिष्यान् प्रति तदुपदेशो न चार्वाकादेः कथाविरोधी व्यधिकरणत्वात् यदि तु शिष्याणां कथानधिकारं तस्य जानतां तेन सह कथा नास्ति ततश्च तस्य कथायां प्रवेश एवानया प्रणाल्या निरस्यते एकाकिनः कथकत्वाभावादिति दुष्प्रत्याशापि न युक्ता कथां प्रत्युत्सुकं तमवलोक्य त्वच्छिष्याणामपि तदधिकाराभावनिर्णयाशक्तेः न चात एव प्रयोजनं बुध्वा तदभावो निर्णेय इति वाच्यं तथा सति स चेद् ब्रूयात् किमेतेनाप्रस्तुतप्रश्नेन तव यद्यस्ति कथासामर्थ्यं तदा कथयेति तदा त्वच्छिष्याः किं कुर्युः तर्हि न कथयेयुरिति सिद्धं नः समीहितमिति चेन्न शिष्या अपि सभायां गताः समर्थाश्च कथं भवच्छिक्षामात्रान्निवर्तेरन् तथा सति तेषां कथासामर्थ्याभावमेव परिषदोपि निश्चिनियुरिति विनैव कथं स्वापकर्षं प्रकाशयन्तः कथं स्वगृहस्यागच्छेयुः परं तु परिपत्स्वकथाधिकाराभावं प्रकाशयेयुः न चैतावतापि निस्तारः सभासदामपि कथमनधिकार इति जिज्ञासासम्भवात् न च तेपि त्वदुपदेशमात्रश्रवणादेव निराकाङ्क्षा इति कथानधिकारव्यवस्थार्थं कथाप्रवेश आवश्यक इति साधूक्तं कथायामेव हि नि-

खण्डनदर्पणः।

नस्यासत्त्वनिश्चये सति तज्ज्ञानेपि कथं प्रवृत्तिरिति वाच्यम् व्यावहारिकसत्त्वज्ञानात्प्रवृत्तेरिति न किञ्चिदेतत्। कथायामेवेति। ननु शिष्यादीन् प्रति तथा बोधने कथा

खण्डरत्नमालिका।

धिकारो नास्तीत्येव शिष्यादयो बोधिताः तत्रायं दोषः कथायामुतान्यत्र नाद्यः तथा-सति सा प्रमाणाद्यभ्युपगममन्तरेणापि वृत्तेति उपदेशानर्थक्यम् न द्वितीयः कथातो-

प्रागुक्तविकल्पचतुष्टये द्वितीयस्य खण्डनम् ।

**नापि द्वितीयः, तथाहि स्यादप्येवं यदि कथकप्रवर्तनीयवाग्व्यवहारं-प्रति प्रमाणादीनां हेतुता तत्सत्त्वानभ्युपगमे निवर्तेत, नत्वेवं सम्भवति तथा सति तत्सत्त्वानभ्युपगन्तॄणां वाग्व्यवहारस्वरूपमेव न निष्पद्येत हे-त्वनुपपत्तेः, उक्तश्चायमर्थो यन्माध्यमिकादिवाग्व्यवहाराणां स्वरूपाप-लापो न शक्यते इति ।**

---

शाङ्करी ।

मेव" इति । अखण्डिताहङ्कारेण पराहङ्कारखण्डनस्य कथाकारणसम्यग्ज्ञानाभावस्य वा निग्रहत्वादिति भावः । प्रमाणाद्यभ्युपगमो वाग्व्यवहारहेतुः इति द्वितीयं पक्षं—निराचष्टे-नापि इति । वाग्व्यवहारं प्रति प्रमाणादीनां हेतुत्वं सम्भाव्येतापि न त्वभ्यु-पगमस्यापि, माध्यमिकादिवाग्व्यवहारे व्यभिचारादित्यर्थः । ननु प्रमाणादीनां हेतुत्वं यदि मनुषे तदा तदभ्युपगमस्यापि हेतुत्वं मंस्यसे, यतो नियतपूर्वसत्त्वं

खण्डनभूषामणिः ।

ग्रह इति । सत्यां हि कथायां प्रयोजनानङ्गीकर्त्तुरनधिकाराख्यो दोषो भवदभिमतः श-क्यनिर्णय इति। किञ्च यदि शिष्या अपि गुरुं प्रति वैतण्डिकोक्तयुक्त्या प्रत्यवतिष्ठेरं-स्तदा गुरोः किमुत्तरं स्यादित्यसङ्गतमेवैतदथेत्यादि । प्रसिद्धा च भट्टाचार्यप्रभृतीनां तैः सह कथा कथमपलप्या । किञ्च प्रवृत्त्युत्सुकं प्रति प्रयोजनप्रश्नोऽयं त्वयापि कथं कार्यः प्रवृत्त्यैव स्वयमुन्नीयतामिति तस्मात्तैरप्येवं शक्यं वक्तुं कथारम्भेऽमुं प्रति प्रयोजनप्रष्टा चोन्म-

खण्डनदर्पणः ।

तेन कथं प्राप्ता इति चेत् कथाकारणीभूतसम्यग्ज्ञानविरहस्य निग्रहत्वात् तल्लिङ्गस्य निग्रहस्थानत्वात् तेन सह कथाया अभावे तदुद्भावनस्यासम्भवः स्यादित्यभिसन्धिः । प्रमाणादिसत्त्वाभ्युपगमो वाग्व्यवहारहेतुरिति द्वितीयपक्षं निराकरोति **नापीति** । प्रमाणादीनां वाग्व्यवहारं प्रति हेतुत्वं यदि प्रमाणादिसत्त्वाभ्युपगमनियन्त्रितं भवेत्तदा तथा स्यान्न हि तदस्त्यन्यथासिद्धनियतप्राक्सत्त्वस्य तदनियम्यत्वादन्यथाप्रमाणादि-सत्त्वानभ्युगन्तुर्वाग्व्यवहारादि न स्यात् दृश्यते च तदिति भावः । ननु प्रमाणा-

खण्डनरत्नमालिका ।

ऽन्यत्र निग्रहाविषयत्वात्तथा च व्याघात इति भावः । प्रयोजनसत्ता न प्रवर्तिका किन्तु प्रयोजनज्ञानमिति तत्त्वम् । कथकाभ्यां प्रवर्तनीयवाग्व्यवहारं प्रति हेतुत्वात्प्रमाणादिसत्ता-भ्युपगम इति द्वितीयं विकल्पं दूषयति—**नापीति** । कारणत्वं हि 'यस्मिन्सत्येव यद्भवति नासति' इत्यन्वयव्यतिरेकाभ्यां निश्चेयं तत्रेह प्रमाणादिसत्तानभ्युपगमेऽपि कथकप्रवर्तनी-यवाग्व्यवहारस्य दर्शनेन व्यतिरेको नास्तीति प्रमाणादिसत्ताभ्युपगमस्य वाग्व्यवहारं प्रति कारणत्वमशक्याध्यवसानमित्याह—**तथाहीति** । ननु प्रमाणादिसत्ताभ्युपगमरूप-कारणस्याभावान्माध्यमिकादेर्वाग्व्यवहार एव नास्तीति इष्टमेवेति न व्यतिरेकव्यभि-

द्वितीयविकल्पस्य तात्पर्यान्तरवर्णनम् ।

**अथ मन्यसे कथकवाग्व्यवहारं प्रति हेतुत्वात् प्रमाणादीनां सत्त्वं, सत्त्वाच्चाभ्युपगमो, यत्सत्तदभ्युपगम्यते इति स्थितेरिति ।**

द्वितीयविकल्पस्य तात्पर्यान्तरखण्डनम् ।

**मैवम् कयापि नियमस्थित्या प्रवृत्तायां कथायां कथकवाग्व्यवहा-**

शाङ्करी ।

त्वयाऽवश्याभ्युपेयमित्यवर्जनीयसिद्ध एव प्रमाणाद्यभ्युपगम-इति शङ्कते–**अथ** इति। यद्यदा सत्तया ज्ञायते तत्तदाऽभ्युपगम्यते इति व्याप्तेरुभयसिद्धत्वादिति भावः। प्रमाणादीनि सन्ति हेतुत्वात् ब्रह्मवत्, प्रमाणादीन्यभ्युपगमविषयः सत्त्वात् ब्रह्मवत्, इति यस्यां कथायां त्वया साधनीयं तद्वदेव कथान्तरमपि स्यात्, अथ सापि प्रमाणाद्यभ्युपगमादेव प्रवृत्ता तदा तस्यां प्रमाणाद्यभ्युपगमहेतुत्वसाधनानर्थक्यम्, अथ तस्यामेव कथयां प्रमाणाद्यभ्युपगमस्य हेतुत्वं प्रसाध्य तत्कथाप्रवृत्तिस्तदाऽन्योन्याश्रय इत्याह–**कयापि** इति। अग्रे वक्ष्यमाणयेत्यर्थः। नियमस्थितिः–समयबन्धः।

खण्डनभूषामणिः ।

त्वदुपेक्षणीय इति। **यत्सत्तदभ्युपगम्यत** इति। यद्यप्येतावताभ्युपगमात्रमेव सिद्ध्यति न तु कथारम्भकाले तथाऽपि यद्यदा सत्तया ज्ञायते तत्तदाभ्युगम्यत इति व्याप्तेरुभयसिद्धत्वात्तत्कालेभ्युपगमोपि सिद्ध्यति। यद्यपि प्रमाणादीनामेव हेतुत्वात् सत्तया ज्ञातत्वं हेतुरेव नास्ति तथापि प्रमाणादिपदस्य कञ्चित्परतया तस्याः अप्रकाशत्वादिदमुक्तम्। **वस्तुतस्तु** अयमपि दोषोस्त्येव तथापि दोषान्तरमाह-**मैवमित्यादिना**। भवता प्रसा-

खण्डनदर्पणः ।

दीनां हेतुत्वं यदि मनुषे तदा तदभ्युपगममपि मंस्यते यतो नियतपूर्वसत्त्वं हेतुत्वं तच्चावश्यमभ्युपेयमित्यवर्जनीयसंनिधिसिद्ध एव प्रमाणादिसत्त्वाभ्युपगम इति शङ्कतेऽथेति। यद्यदा सत्त्वेन ज्ञायते तत्तदाभ्युगम्यत इति व्याप्तेरिति भावः। न च सत्त्वेन ज्ञानेपि यत्राभ्युपगमो न जातस्तत्र व्यभिचारो बाधकं विना इत्यस्य बोद्धव्यत्वादिति भाव्यम्। **हेतुत्वादिति**। हेतुत्वं न पारमार्थिकसत्त्वघटितं तेन न साध्यसमतेति बोध्यम्। प्रमाणादीनां सत्त्वमेव पारमार्थिकं मम मते नास्ति–कुतस्तदधीनस्तदभ्युपगमस्तथा च कयापि नियमस्थित्या प्रवृत्तायां कस्याञ्चित्कथायां प्रमाणादीनि सन्ति हेतुत्वात् ब्रह्मवदिति तथा प्रमाणादीन्यभ्युपगमविषयः सत्त्वात् ब्रह्मवदिति त्वया साधनीयं तद्वदेव कथान्तरमेव स्यात्। अथ सापि प्रमाणाद्यभ्युपगमादेव प्रवृत्ता तदा तस्यां कथायां प्रमाणाद्यभ्युपगमहेतुत्वसाधनानर्थक्यम्। अथ तत्रैव कथायां प्रमाणाद्यभ्युगमस्य हेतुत्वं

खण्डनरत्नमालिका ।

दिवाग्व्यवहारस्य दर्शनाद्व्यतिरेकव्यभिचारोऽस्त्येवेति भावः। उक्तस्य द्वितीयविकल्पस्य अभिप्रायान्तरमाशङ्कते–**अथेति**। कथकवाग्व्यवहारं प्रति प्रमाणादीनां कारणत्वं तच्चेष्टं नियतप्राक्सत्त्वमेव च कारणत्वमिति प्रमाणादीनि सन्ति हेतुत्वात् ब्रह्मवत् इत्यनुमानेन सत्त्वे सिद्धे प्रमाणादीन्यभ्युपगमविषयः सत्त्वाद्ब्रह्मवत् इत्यनुमानेन प्रमाणादिसत्ताभ्युपगमसिद्धिरावश्यिकेति भावः। अत्रानुमाने व्याप्तिमाह–**यत्सदिति**। **मैवमिति**।

रं प्रति हेतुत्वात् प्रमाणादीनां सत्त्वं, सत्त्वाच्चाभ्युपगमो भवता प्रसाध्यः।

कथायां समयबन्धस्यावश्यकत्वनिरूपणम् ।

कथातः पूर्वं तत्त्वावधारणं वा परपराजयं वाऽभिलषद्भ्यां कथकाभ्यां यावता विना तदभिलषितं न पर्यवस्यति तावदनुरोद्धव्यं, तच्च व्यवहारनियमसमयबन्धादेव द्वाभ्यामपि ताभ्यां सम्भाव्यते इति व्यवहारनियमसमयमेव बध्नीतः ।

शाङ्करी ।

ननु प्रमाणाद्यभ्युपगमवत्समयबन्धोपि कथायामतन्त्रमेवेत्यत आह—कथातः पूर्वमिति । ननु प्रमाणादिसत्तापि तथैवानुरुद्ध्यतामित्यत आह—तच्चेति । सम-

खण्डनभूषामणिः ।

ध्यइति । भवतेत्युक्त्यास्माकं तु न साध्यः बाधादेव प्रसाध्यो न तु सिद्ध इत्यत्रापि कथारम्भकाल इति शेषः तथा च कथाहेतुत्वं व्यभिचारीति दोष उक्तः अन्यथा उक्तकालप्रमितमपि प्रमाणसिद्धमेवेत्यदोषापत्तेः वस्तुतोऽप्रयोजक एवायं हेतुरित्यत्रापि तात्पर्यम् । अन्ये तु कथायामारब्धायां सत्त्वसाधनं सिद्धे च सत्वे कथारम्भ इत्यन्योन्याश्रयः यदि चान्या कथारभ्या तदा चक्रकम्, अन्यान्या चेदनवस्था पूर्वकथारम्भस्यापि सत्त्वसाधनपूर्वकत्वादित्यर्थः इति व्याचक्षते तन्न कथायामपि समयस्थित्यारब्धायामिति मूलविरोधात् । विद्यासागरस्तु सत्ताभ्युपगमे मानमिदं कथायाश्चेव सा च कथा प्रमाणसत्वाभ्युपगमपूर्विका समयबन्धमात्रपूर्विका वा आद्ये असिद्धिः अन्ते अस्मत्समीहितसिद्धिरितिव्याचष्टे । एतेन पराभिमतं कथाङ्गं दूषयित्वा समयबन्धस्य तथात्वं व्यवस्थापयितुं भूमिमारचयति—कथातः पूर्वमिति ।

खण्डनदर्पणः ।

प्रसाध्य तत्कथाप्रवृत्तिस्तदान्योऽन्याश्रय इत्याह—कथापीति । अग्रे वक्ष्यमाणयेत्यर्थः । नियमस्थितिर्नियमबन्धः । ननु प्रमाणादिसत्त्वाभ्युपगमवत् समयबन्धोपि कथायामतन्त्रमेवेत्यत आह—कथातः पूर्वमिति । तर्हि प्रमाणादिसत्त्वमेवानुरुध्यतामित्यत आह—तच्चेति । प्रमाणादिसत्त्वाभ्युपगन्त्रापि समयबन्धो-

खण्डनरत्नमालिका ।

यदिदं सत्त्वेन सत्ताभ्युपगमानुमानं तत्कथायामुतान्यत्र नान्यत्र कथातोऽन्यत्र निग्रहाविषयत्वात् आद्येऽपि प्रमाणसत्ताभ्युपगमेन प्रवृत्तकथायामुतसमयबन्धेन आद्ये कथाप्रवृत्तौ सत्ताभ्युपगमसिद्धिः तत्सिद्धौ च कथाप्रवृत्तिरिति अन्योन्याश्रयः द्वितीये चास्मत्समीहितसिद्धिरित्यर्थः । नियमस्थित्या—समयबन्धेन । भवता प्रसाध्य इति । अयं भावः यदिदं सत्त्वेन हेतुना प्रमाणादिसत्त्वाभ्युपगमसाधनं क्रियते तत् न प्रमाणादिसत्ताभ्युपगमेन प्रवृत्तकथायां तस्यां प्रमाणाद्यभ्युपगमहेतुत्वसाधनानर्थक्यात् किन्तु समयबन्धेन प्रवृत्तकथायामेवेति । व्यवहारनियमसमयमेवेति । यद्येन विनानु-

समयबन्धस्वरूपदर्शनम् ।

स च 'प्रमाणेन तर्केण च व्यवहर्तव्यं वादिना, प्रतिवादिनापि कथाङ्गतत्त्वज्ञानविपर्य्ययलिङ्गप्रतिज्ञाहान्याद्यन्यतमनिग्रहस्थानं तस्य दर्शनीयं, तद्व्युत्पादने प्रथमस्य भङ्गो व्यवहर्त्तव्यः, अन्यथा तु द्विती-

खण्डनभावदीपिका ।

······दर्शयति—स चेति । तत्त्वज्ञानविपर्ययेत्यनेनाप्रतिपत्तिर्विपरीतप्रतिपत्तिश्च सर्वव्याजेन·································विपरीतप्रतिपत्तिस्थलेऽपि तत्त्वाप्रतिपत्तेर्भावात् । एवं कथाप्रवृत्तिप्रकारं प्रदर्श्य तत्फलव्यवस्थां दर्शयति—तद्व्युत्पादन इति । प्रतिवादिना तद्व्युत्पादने प्रदर्शितनिग्रहस्थानसमर्थने प्रथमस्य—वादिनो भङ्गो व्यवहर्तव्य इति । तत्समर्थनासामर्थ्ये तु प्रतिवादिन एव भङ्गो व्यवहर्तव्य इत्याह—अन्यथे-

शाङ्करी ।

यबन्धस्यावश्यकत्वात् तन्मात्रमनुरोध्यं न तु प्रमाणाद्यभ्युपगमोपीत्यर्थः । अनुरोध्यं समयबन्धं दर्शयति—स चेति । कथाङ्गतत्वज्ञानविपर्ययो ऽज्ञानमसम्यग्ज्ञानं वा । कथाव्यवस्थामुक्त्वा फलव्यवस्थामाह—तद्व्युत्पादने इति । उद्भावितनिग्रहस्थानव्यवस्थापने

खण्डनभूषामणिः ।

तच्चेति । फलं चेत्यर्थः । स चेति 'इत्यादिरूप' इत्यनेन संबध्यते कथाङ्गानि प्रमा-

खण्डनदर्पणः ।

ऽवश्याभ्युपगन्तव्यस्तर्हि आवश्यकत्वात्स एवानुबध्यत एव इत्यर्थः । तत्स्वरूपमाह—स चेति । 'इत्यादिस्वरूप' इत्यग्रेतनेनान्वयः । वादिना प्रथमप्रयोक्त्रा कथाङ्गतत्त्वज्ञानविपर्ययः कथाङ्गतत्त्वज्ञानविरहः कथाव्यवस्थामुक्त्वा फलव्यवस्थामाह—तद्व्युत्पादन इति। प्रतिवादिना वादिसाधने उद्भावितनिग्रहस्थानव्युत्पादने प्रथमस्य

खण्डनरत्नमालिका ।

पपन्नं तत्तेनाक्षिप्यते यथा दिवाभोजनरहितस्य देवदत्तस्य पीनत्वं शार्वरं भोजनमेवं यदि प्रमाणादिसत्ताभ्युपगमं विना तत्त्वावधारणं परपराजयो वाऽनुपपन्नः स्यात् तदा प्रमाणादिसत्ताभ्युपगमाक्षेपः स्यात् नैवं समयबन्धादेव तदुपपत्तेः तथा च समयबन्धस्यावश्यकत्वात्तन्मात्रमेव कथायामनुरोद्धव्यं न तु प्रमाणादिसत्ताभ्युपगमोऽपीति भावः । स च—व्यवहारनियमश्च । कथाङ्गेति । कथाङ्गं कथाहेतुभूतं यत्तत्त्वज्ञानं तस्य विपर्ययः अज्ञानमसम्यग्ज्ञानं च तस्य लिङ्गमनुमापकं प्रतिज्ञाहान्यादिकमित्यर्थः । तद्व्युत्पादने-उद्भावितनिग्रहस्थानव्यवस्थापने प्रथमस्य वादिनः भङ्गः—पराजयः, अन्यथा—उद्भावितनिग्रहस्थानाव्यवस्थापने निरनुयोज्यानुयोगात् द्वितीयस्य प्रतिवादिनः भङ्ग इति । तादृशेतरौ—निग्रहीताभ्यामितरौ । ननु यथा प्रमाणसत्ताभ्युपगमो हेतुसाध्यः स च

यस्यैव, तादृशेतरौ च जेतृतया व्यवहर्त्तव्यौ, प्रामाणिकः पक्षस्तत्त्वतया व्यवहर्त्तव्यः' इत्यादिरूपः ।

खण्डनभावदीपिका ।

ति। एवं भङ्गे व्यवहारविषयौ प्रदर्श्य जेतृत्वव्यवहारविषयौ दर्शयति-तादृशेतराविति। तादृशाभ्यां भङ्गाधिकरणत्वेन निर्दिष्टाभ्यामितरौ जेतृत्वेन व्यवहर्तव्यौ निग्रहस्थानसमर्थने दूषणवादिनो जयः, असमर्थने तु साधनवादिनो जयो व्यवहर्तव्य इत्यर्थः । एवं विजिगीषुकथयोर्जल्पवितण्डयोर्व्यवस्थां प्रदर्श्य वादकथायां व्यवस्थामाह-प्रामाणिक इति। तत्त्वतया-प्रमाणजन्यतत्त्वनिर्णयविषयतया। आदिशब्देन तत्त्वनिर्णयाविषयं ( जल्प

शाङ्करी ।

प्रथमस्य भङ्गः, तदव्यवस्थापने निरनुयोज्यानुयोगात् द्वितीयस्यैव भङ्ग इत्यर्थः । तादृशेतराविति। समर्थितनिग्रहाशक्यसमर्थननिग्रहभङ्गप्रयोजकरूपरहिताविति्यर्थः(१)। जल्पे वितण्डायां च फलव्यवस्थामभिधाय वादे तामाह—प्रामाणिक इति । व्यवहारश्च

खण्डनभूषामणिः ।

णादीनि तस्य तत्त्वं स्वरूपं तस्य ज्ञानं तन्निश्चयः तद्विपर्ययोऽज्ञानं भ्रमो वा तत्व्यापकं प्रतिज्ञाहान्यादि भङ्गो निग्रहः तादृशेतरौ निगृहीतेतरौ द्विवचनमविवक्षितमेकस्यैव जेतृत्वात् यद्वा तादृशो निगृहीतः इतरश्च जेतृतया च चकारात् पराजेतृतया च व्यवहर्तव्याविति चशब्दयोगेनान्वयाद्विवक्षितुमेव द्विवचनं प्रयुज्यते निगृहीते व्यवहारस्यापि प्रदर्शनं कथायां, (नियमस्य) अपरमप्यंशमाह-प्रामाणिक इति। तत्त्वतया फलनिश्चयविषयत्वेनेत्यर्थः। आदिपदेन वादिनि साधनमात्रं प्रयुज्य संक्षेपतो विस्तरतो वा हेत्वाभासानुद्धृत्य विरते सत्यनुक्तग्राह्योच्यमानग्राह्यहेत्वाभासतिरिक्तोक्तग्राह्यरूपनिग्रहस्थानालाभे तद्वाक्यार्थमनूद्य हेत्वाभासेन दूषयित्वा प्रतिवादी स्वपक्षस्थापनां प्रयुञ्जीत अप्रयुञ्जानो हि दूषितपरपक्षोऽपि न विजयेतात्मानमरक्षन् परघाती वीर इवेति तस्मिन्नपि च विरते तद्वाक्यगतोक्तनिग्रहस्थानमलभमानो वादी तद्वाक्यार्थमनूद्य तदुक्तदूषणमुद्धृत्य उक्तदूषणत्रयहीनामपि तदीयां स्थापनां दूषयेत् अन्यथा सुरक्षितस्वपक्षोऽपि न जयी स्यात् श्लाघ्यस्तु भवेदेव वञ्चितपरप्रहारो वीर इव तमप्रहरमाणः दूषणत्रयलाभे तावतैव कथाविरतिर्न तु साधनविचारावकाशः शरसंधानसमय एव यो मूर्छितस्तस्य तद्वाणवारणतत्प्रहरणानुष्ठानवद्विफलत्वात तत्रानुक्तग्राह्यमप्रतिभादि उच्यमानग्राह्यमपभ्रंशाप्राप्तकालादि हेत्वाभासातिरिक्तोक्तग्राह्यं प्रतिज्ञाविरोधादि एवंविधो जल्पः स एव प्रतिपक्ष-

खण्डनदर्पणः ।

भङ्गः तदव्यवस्थापने तु निरनुयोज्यानुयोगात् द्वितीयस्यैव भङ्ग इत्यर्थः। तादृशेति। तादृशाभ्यां भङ्गित्वेन निर्दिष्टाभ्यामितरौ जेतृत्वेन व्यवहर्त्तव्यौ । निग्रहस्थानसमर्थने दूषणवादिनो जयोऽसमर्थने साधनवादिनो जयो व्यवहर्त्तव्य इत्यर्थः । जल्पवितण्डयोर्व्यवहर्त्तव्यफलव्यवस्थामुक्त्वा वादस्य फलव्यवस्थामाह-प्रामाणिकइति। तत्त्वतया

(१) समर्थितो यो निग्रहः अशक्यसमर्थनश्च यो निग्रहः एतदुभयं भङ्गप्रयोजकं तद्रहिताविर्त्यथः।

कथायामन्योन्याश्रयभिया प्रमाणसत्ताभ्युपगमस्येव समयबन्धस्यापि हेतुत्वास-म्भवमाशङ्क्य समयबन्धस्य स्वेच्छापरिगृहीतत्वादन्योन्याश्रयपरिहरणम् ।

अत एव 'व्यवहारनियमसमयबन्धेऽपि हेतुर्वक्तव्यः तथाच सोऽपि हेतुः कथायां प्रवृत्तायामभिधातुं युक्त' इति प्रमाणसत्त्वाभ्युपगमहेत्वभि-

खण्डनभावदीपिका ।

वितण्डादिकं) संगृह्णाति। ननु यथा प्रमाणसत्ताभ्युपगमात् प्रागेव कथाप्रवृत्तेर्न तस्य कथा-प्रवृत्तावङ्गत्वम्, एवं व्यवहारनियममन्तरेणैव कथाप्रवृत्तेर्न तस्यापि कथाङ्गत्वं प्रवृत्ता-यामेव कथायां तदङ्गत्वसाधनस्यापि कर्तुमुचितत्वादित्याशङ्क्याह—अत एवेति। यतः कथकाभ्यां कथातः पूर्वमेव जयपराजयादिव्यवस्थाहेतुत्वेन व्यवहारनियमबन्धोऽनुरोद्धव्य इत्युक्तमत एवेति यावत् । प्रमाणसत्ताभ्युपगमे हेत्वभिधानवत् कथायां प्रवृत्तायामेव व्यवहारनियमबन्धेऽपि हेतुरभिधातुं युक्त-इति यदिदं नैयायिकस्य प्रत्यवस्थानं तदनव-काशमित्यन्वयः । अत एवेति परामृष्टं हेतुं विस्पष्टयति-द्वाभ्यामिति,। तत्त्वव्यवस्था

शाङ्करी ।

वस्तुसत्त्वं विनापीति भावः । ननु समयबन्धस्यापि कथाहेतुत्वे विप्रतिपन्नः कथायामेव प्रबोध्य इति तत्कथावत् कथान्तरमपि स्यादित्यत आह-अत एवेति । अत एवेत्यस्यातिदेश्यमाह—द्वाभ्यामपीति । यद्यपि समयबन्धस्येच्छापरिगृहीतत्वे

खण्डनभूषामणिः ।

स्थापना हीनो वितण्डा इत्यादेः परिग्रहः। अत एव वक्ष्यमाणहेतोरेव विवादे हि हेतुप्रयो-गोऽपेक्षित इति भावः। अत्रापि समयबन्धस्य स्वेच्छापरिगृहीतत्वे विप्रतिपन्नः कथायामेव बोध्य इति स दोपस्तदवस्थ इति शङ्करमिश्राणां या आशङ्का सा कथाया न विरो-धिनी अन्यथानुपपद्यमानया कथया समयबन्धस्य कारणत्वप्रमितेः समयबन्धोऽपि च स्वे-च्छामात्रमेव हेतुमाक्षिपति न तु विचारसाध्यं स्वस्यानिष्पत्त्यापत्तेः। न च स्वेच्छामात्रपरि-

खण्डनदर्पणः ।

इति । प्रमाणजन्यज्ञानविषयतयेत्यर्थः। व्यवहारमात्रं तु वस्तुसत्त्वं विनापीति न तदनुरो-धेनापि प्रमाणादिसत्ताभ्युपगमः सिद्ध्यतीति भावः । ननु समयबन्धस्यापि कथाहेतुत्वे विप्रतिपन्नः कथायामेव प्रबोध्यत इति समयबन्धं विना तत्कथावत्कथान्तरमपि स्या-दित्यत आह-अत एवेति—अतएवेत्यस्यातिदेश्यमाह-द्वाभ्यामपीति । न च सम-

खण्डनरत्नमालिका ।

कथायां सा च प्रमाणसत्ताभ्युपगमाधीनेति अन्योन्याश्रयात् तमन्तरेणैव कथा एवं नियमबन्धोऽपि हेतुसाध्यः स च कथायां वक्तव्यः कथा च नियमबन्धाधीना इत्यन्योन्याश्रयः इति नियमबन्धमन्तरेणैव कथा स्यात् इति नियमबन्धस्यापि कथाहेतुत्वं न सिद्ध्येदि-त्यत आह-अत एवेति । यतः कथकाभ्यां कथातः पूर्वमेव जयपराजयादिव्यवस्थाहेतु-त्वेन व्यवहारनियमबन्धोऽनुरोद्धव्य इत्युक्तमत एवेत्यर्थः । परामृष्टं हेतुं स्पष्टयति द्वाभ्या-

धानवत् प्रत्यवस्थानमनवकाशम्, द्वाभ्यामपि वादिभ्यां विचारप्रवृत्त्याभिलष्यमाणतत्त्वव्यवस्थाजयमूलत्वेन व्यवहारनियमस्य स्वेच्छयैव परिगृहीतत्वात् ।

समयबन्धस्य स्वेच्छामूलत्वेऽपि विचारादिविप्लवासम्भवनिरूपणम् ।

नचैवं प्रमाणानुपन्नस्वेच्छामात्रपरिगृहीतमूलत्वात् मूलापरिशुद्धि-

---

खण्डनभावदीपिका ।

वादे, जयो जल्पवितण्डयोस्तन्मूलत्वेन, कथायाः प्रमाणमूलमन्तरेण स्वेच्छापरिगृहीतव्यवहारनियमबन्धसाध्यत्वे कथकाभिलषितमेव न सिद्ध्यतीत्याशङ्क्य परिहरति-नचैवमिति । प्रमाणानुपन्नः प्रामाणिकज्ञानशून्यः स्वेच्छामात्रगृहीतो व्यवहारनियम-

शाङ्करी ।

विप्रतिपन्नः कथायामेव प्रबोध्यते इत्यत्रापि दोषस्तदवस्थ एव तथापि समयबन्धमात्रेण कथाप्रवृत्तौ प्रमाणाद्यभ्युपगमस्य कथाङ्गत्वकल्पना गौरवपराहतेति भावः । समयबन्धस्यावश्यहेतुत्वेऽनिष्टमाशङ्कते—नचैवमिति । विचारविप्लवः—साधनदूषणप्रयो-

खण्डनभूषामणिः ।

गृहीतत्वज्ञानं समयबन्धोपयोगि किंतु स्वरूपसत्येच्छैवेति। प्रमाणानुपन्नेति। प्रमाणानुपन्ना प्रमाणादिगोचराद्यज्ञानशून्या या स्वेच्छा तन्मात्रेण गृहीतो नियमबन्धो मूलं यस्य विचारस्येत्यर्थः। ज्ञानमात्रं तु पूर्वापरकोटिरेवेह शून्यं वर्तमानमपि पूर्वज्ञानमूलमेव न तु प्रमाणमूलकं पूर्वपूर्वज्ञानसापेक्षमूलत्वात् यद्धि आद्यं ज्ञानं तत् प्रमाणमूलकं तच्चेह नास्तीत्याशयः यदि हि प्रमाणमूलकज्ञानवदिच्छया परिगृहीतोयं समयनियमः स्यात्तदा स्यादपि विचारः सन्मूल इह तु तन्नास्तीति बोधायेच्छाविशेषणं मात्रपदं विचारपूर्वकत्वाभावप्रदर्शनार्थं यदि विचारपूर्विका कथा इच्छया परिगृहिता स्यात्तदा स्यादपि समूलः स च न संभवत्युक्तदोषादेवेति भावः । विचारविप्लवः प्रमानुत्पादकत्वं, विचार्यस्य

खण्डनदर्पणः ।

यबन्धस्य स्वेच्छापरिगृहीतत्वे विप्रतिपन्नः कथायामेवेत्यत्रापि स दोषस्तदवस्थ इति वाच्यं तादृशस्य त्वन्मतवदुपेक्षणीयत्वात् न हि सर्वत्र विप्रतिपन्नः कथाधिकारीति भावः । ननु स्वेच्छामूलस्य ज्ञानस्य प्रमात्वमवश्यं वाच्यं नहि यथायथं विधिं विना यथार्थतेति चेन्न-व्यावहारिकप्रमाणमूलकत्वेनादोषात् । समयबन्धस्याप्रामाणिकत्वेऽनिष्टमाशङ्कते-नचैवमिति। विचारविप्लवः प्रमित्यजनकत्वं विचार्यविप्लवः प्रमित्यविषयत्वं-

खण्डनरत्नमालिका ।

मिति। प्रमाणसत्ताभ्युपगमवत् यदि नियमबन्धो हेतुसाध्यः स्यात्तदाऽयं दोषः स्यात न त्वेवं द्वाभ्यां फलरागादेव नियमबन्धस्य स्वीकारादित्यर्थः । ननु स्वेच्छामात्रगृहीतादप्रामाणिकान्नियमबन्धात् कथारम्भे कथकाभिलषितफलविप्लवः स्यान्मूलाशुद्धेरित्याशङ्क्याह नचैवमिति । प्रमाणानुपन्नेति । प्रमाणेन उपन्ना आद्यज्ञानं यस्य नास्ति

विचारस्यैव तस्यैव संभावितदोषसमयबन्धमूलकत्वेन दुष्टत्वस्योक्तत्वात् । न वा संवादः समयबन्धे संभवी किंतु विचार एव तस्यैव प्रमित्युत्पादकत्वेन प्रवृत्तिसंवादत्वात्। पारंपर्येणायातस्य प्राप्तस्य तथा च न तस्यान्धपरंपरातुल्यत्वं स्वयमपि दृष्टत्वेन पराधीनप्रमाणत्वाभावात् अनादिपरंपरागतविचारस्य प्रामाण्यं लोकव्युत्पत्तौ शब्दस्य संकेतग्रहे गृहीतसंवादस्य, अन्यथा तन्मूलकशाब्दव्यवहारोच्छेदापतेः । यद्वा विप्रलम्भकव्यवहारो योऽन्यथाभावः संभवति तथाभूतस्यान्यथाभावस्य याऽसंभाव्यता तल्लक्षणा या स्वतः सिद्धिस्तया शुद्धत्वात्। असंभाव्यतैव कुत इत्याशङ्क्योक्तं-लोकेति । लोकः कथकस्तद्व्युत्पत्त्या तद्व्यवहारेण गृहीतोन्यथा न भवतीति संवादो यस्येत्यर्थः । लोकस्य किं मूलमित्याकाङ्क्षायाम् अनादिपारंपर्यं मूलमिति व्याख्येयम्। कथायास्तावद्विचार्यनिश्चयः सर्वपरिषदामनुभवसिद्धः स च स्वतः सिद्धिरूपः तस्य चाशुद्धता अर्थस्यान्यथाभावनिश्चयेन वाधितविषयतया स्यात् सा चेह प्रवृत्तिसंवादेन निरस्ता। अत एवान्यथाभावसंभावना उत्कटकोटिकसंशयात्मिका सापि नेह संभावनार्हा । न च तथाप्यज्ञा-

खण्डनदर्पणः ।

मनादित्वम्-अनादित्वम् , अनादिपारम्पर्यायातत्वमुक्तमवश्याभ्युपेयत्वार्थम्। गृहीतसम्वादस्येत्यप्रामाण्यशङ्कानिरासाय । तथा चानादिलोकव्यवहारसिद्धत्वेन गृहीतसंवादत्वेन च यान्यथाभावासम्भाव्यतालक्षणा स्वतः सिद्धिस्तया शुद्धत्वादविप्लवादित्यर्थः । व्यवहारदशायामुभयमर्यादानतिक्रम एवाविप्लवो मूलशुद्धिश्चेति भावः ।

खण्डनरत्नमालिका ।

अनादीतिवक्तव्ये एवमुक्तिर्मूलकारस्य वक्रोक्तिप्रियत्वात् । शङ्करमिश्रास्तु अविद्याविद्यमानानादिपारम्पर्यायातस्येति पाठमभिप्रयन्ति तत्र अविद्यया विद्यमानश्चासौ अना-

सम्भवेन सर्वविचारविचार्य्यफलविप्लवापत्तिः स्यात् । अविद्यमानादि-पारम्पर्य्यायातस्य लोकव्युत्पत्तिगृहीतसंवादस्य च तस्यान्यथाभावास-

खण्डनभावदीपिका ।

बन्धस्तन्मूलकतया कथालक्षणव्यवहारस्य प्रमाणमूलविधुरत्वाद् विचारादिविप्लवः स्या-दित्यन्वयः। विचारविप्लवः प्रमित्यजनकत्वं, विचार्यविप्लवो प्रमाणज्ञानाविषयत्वं, फल-विप्लवस्तत्त्वनिर्णयाभावो वादे, जयाभावो जल्पवितण्डयोः तत्राह अविद्यमानेति । लोकव्युत्पत्त्या गृहीतसंवादस्य अन्यथाभावस्य याऽसम्भाव्यता तल्लक्षणा या स्वतः सिद्धिस्तया शुद्धत्वादविप्लुतार्थत्वादिति योजना । अयमभिसन्धिः—यद्यप्यस्य विचारविचार्य्यतत्फलानामविप्लवो वास्तवो नास्ति तथापि व्यवहारदशायामुभयसम्म-त्यास्तां ·····························परिशुद्धिश्च तेनाविप्लवो व्यावहारिको विचारा-

शाङ्करी ।

गाव्यवस्था । विचार्यविप्लवः पक्षविपक्षाव्यवस्था, वादिप्रतिवाद्यव्यवस्था वा; तयो-रपि विचार्य्यत्वात् । फलविप्लवः जयभङ्गाऽव्यवस्था, तत्त्वनिर्णयाऽव्यवस्था च । यद्वा विचारविप्लवः प्रमित्यजनकत्वं, विचार्य्यविप्लवः प्रमित्यविषयत्वं, फलविप्लवः जया-द्यभावः । अविद्याविद्यमानत्वाभिधानं समयबन्धस्याप्यपारमार्थिकत्वाय । अनादि-पारम्पर्य्यायातस्येत्यवश्याभ्युपगन्तव्यत्वार्थम् । गृहीतसंवादस्येत्यप्रामाण्यशङ्कानि-

खण्डनभूषामणिः ।

विप्लवो भ्रान्तिविषयत्वं, फलस्य विप्लवोऽवधारणस्यासिद्धिर्वादे इतरयोस्तु जयस्येति । 'प्रमाणेन नास्त्युपज्ञा आद्यज्ञानं यस्य तत्प्रमाणानुपज्ञं प्रमाणामूलं यत् स्वेच्छामात्रं तस्य समयबन्धमूलत्वेन गृहीतत्वात् सर्वस्य विचारस्य विचार्यस्य तत्फलस्य च जयादेरनिश्चया पत्तिरित्यर्थः' इति शिष्यहितैषिण्या मनुभूतिस्वरूपश्रीपादाः। अविद्यमानेति। अवि-

खण्डनदर्पणः ।

फलविप्लवो जयाद्यभाव इत्यर्थः। शङ्कां निराकरोति—अविद्यमानेति—अविद्यमानादित्व-

खण्डनरत्नमालिका ।

स प्रमाणानुपज्ञः 'उपज्ञा ज्ञानमाद्यं स्याज्ज्ञात्वारम्भ उपक्रमः' इत्यभिधानात् । स चासौ स्वेच्छामात्रगृहीतमूलश्चेति कर्मधारयः । विचारस्य विप्लवः प्रमित्यनुत्पादकत्वं, विचार्यस्य विप्लवः भ्रान्तिविषयत्वं, फलस्य विप्लवः वादे तत्त्वावधारणासिद्धिः जल्प-वितण्डयोर्जयासिद्धिः । विप्लवाभावे हेतुमाह—अन्यथेति । अन्यथाभावश्चासौ असं-भाव्यश्चेत्यन्यथाभावासंभाव्यः तस्य भावस्तत्ता तल्लक्षणा या स्वतःसिद्धिः तया शुद्ध-त्वाद्विचारस्य न विप्लवः तत्र हेतुः—लोकेति । लोकव्युत्पत्त्या वृद्धव्यवहारेण गृहीतो-ऽन्यथा न भवतीति संवादो यस्य समयबन्धस्येति । तस्य समयबन्धस्य । ननु लोकस्य किं मूलं प्रमाणं चेत्तदेवादौ स्वीक्रियतां व्यवहारान्तरं चेदनवस्था इत्याशङ्क्यानादित्वा-त्परिहरति--अविद्यमानेति । अविद्यमानः आदिर्यस्य परंपराभावस्य तेनायातस्येत्यर्थः

म्भाव्यतालक्षणस्वतःसिद्धिपरिशुद्धत्वात् ।

खण्डनभावदीपिका ।

देरविप्लुतत्वव्यवहारस्तस्यां दशायामस्त्येव ········ व्यवहारः नियमबन्धः कथाङ्गत्वेन स्वीक्रियते चेत्तर्हि प्रमाणादिसत्तापि तथैव स्वीक्रियतामित्यत आह–

शाङ्करी ।

रासाय । ननु समयबन्धस्याज्ञानरूपतया स्वतः सिद्धत्वमनुपपन्नम् ? अत उक्तमन्यथाभावासम्भाव्यतालक्षणेति । समयबन्धो न कर्त्तव्यः-इति सम्भावनाविरह एव तस्य

खण्डनभूषामणिः ।

श्चेतिसमयबन्धस्य पारमार्थिकत्वनिरासाय अनादिपारंपर्यायातस्येत्यवश्याभ्युपगन्तव्यत्वार्थमिति मिश्रव्याख्यातो ग्रन्थः प्राचीनैर्न धृतः किं त्वविद्यमानादिपारंपर्यायातस्येत्येव अत एव विद्यासागरेणोक्तमनादीति वक्तव्ये अविद्यमानादित्वाभिधानं वक्रकारित्वस्वभावादिति न वा समयबन्धस्यापारमार्थिकत्वाभिधानं प्रकृतोपयोगि । यच्चावश्याभ्युपगर्थान्तव्यत्वार्थमिति तदपि न अन्वयव्यतिरेकाभ्यामेव तस्यावश्यकतेत्युक्तेरनन्तरं वक्ष्यमाणत्वाच्चेति । तस्येत्यनेनापि न समयबन्धस्य परामर्शः किं तु विचारस्यैव तस्यैव संभावितदोषसमयबन्धमूलकत्वेन दुष्टत्वस्योक्तत्वात् । न वा संवादः समयबन्धे संभवी किं तु विचार एव तस्यैव प्रमित्युत्पादकत्वेन प्रवृत्तिसंवादत्वात्। पारंपर्येणायातस्य प्रासस्य तथा च न तस्यान्धपरंपरातुल्यत्वं स्वयमपि दृष्टत्वेन पराधीनप्रमाणत्वाभावात् अनादिपरंपरागतविचारस्य प्रामाण्यं लोकव्युत्पत्तौ शब्दस्य संकेतग्रहे गृहीतसंवादस्य, अन्यथा तन्मूलकशाब्दव्यहारोच्छेदापतेः । यद्वा विप्रलम्भकव्यवहारो योऽन्यथाभावः संभवति तथाभूतस्यान्यथाभावस्य याऽसंभाव्यता तल्लक्षणा या स्वतः सिद्धिस्तया शुद्धत्वात्। असंभाव्यतैव कुत इत्याशङ्कयोक्तं–लोकेति । लोकः कथकस्तद्व्युत्पत्त्या तद्व्यवहारेण गृहीतोन्यथा न भवतीति संवादो यस्येत्यर्थः । लोकस्य किं मूलमित्याकाङ्क्षायाम् अनादिपारंपर्य्यं मूलमिति व्याख्येयम्। कथायास्तावद्विचार्य्यनिश्चयः सर्वपरिषदामनुभवसिद्धः स च स्वतः सिद्धिरूपः तस्य चाशुद्धता अर्थस्यान्यथाभावनिश्चयेन बाधितविषयतया स्यात् सा चेह प्रवृत्तिसंवादेन निरस्ता। अत एवान्यथाभावसंभावना उत्कटकोटिकसंशयात्मिका सापि नेह संभावनार्हा । न च तथाप्यज्ञा-

खण्डनदर्पणः ।

स्नादित्वम्–अनादित्वम् , अनादिपारम्पर्यायातत्वमुक्तमवश्याभ्युपेयत्वार्थम्। गृहीतसम्वादस्येत्यप्रामाण्यशङ्कानिरासाय । तथा चानादिलोकव्यवहारसिद्धत्वेन गृहीतसंवादत्वेन च यान्यथाभावासम्भाव्यतालक्षणा स्वतः सिद्धिस्तया शुद्धत्वादविप्लवादित्यर्थः । व्यवहारदशायामुभयमर्यादानतिक्रम एवाविप्लवो मूलशुद्धिश्चेति भावः ।

खण्डनरत्नमालिका ।

अनादीतिवक्तव्ये एवमुक्तिर्मूलकारस्य वक्रोक्तिप्रियत्वात् । शङ्करमिश्रास्तु अविद्याविद्यमानानादिपारम्पर्यायातस्येति पाठमभिप्रयन्ति तत्र अविद्यया विद्यमानश्चासौ अना-

व्यवहारनियमवत्प्रमाणसत्तावश्यकत्वमितिशङ्काया निराकरणम्।

**न च प्रमाणादीनां सत्तापीत्थमेवोभाभ्यामङ्गीकर्त्तुमुचिता। तादृश व्यवहारनियममात्रेणैव कथाप्रवृत्त्युपपत्तेः। प्रमाणादिसत्त्वाभ्युपगमेपि**

---

खण्डनभावदीपिका।

**नचेति।** ..........न नियमबन्धादेव कथोपपत्तौ तदधिकस्य तदङ्गत्वकल्पनायां गौरवं स्यादित्यर्थः। विपरीतं किं न स्यादित्याशङ्क्याह-**प्रमाणादीति।** नि-

शाङ्करी।

स्वतःसिद्धत्वमिति भावः। **इत्थमिति।** समयबन्धाङ्गताङ्गीकारप्रकारेणैवेत्यर्थः। अन्यथासिद्धिमाह-**तादृशेति।** समयबन्धस्योपजीव्यत्वमाह-**प्रमाणादीति।**

खण्डनभूषामणिः।

नात्मकज्ञानाजनकत्वलक्षणप्रामाण्यं विचारस्य वाच्यं तज्जन्यस्य स्वतः सिद्धिरूपत्वात् तथा च 'अप्रामाण्यं त्रिधाभिन्नं मिथ्यात्वाज्ञानसंशयैः' इति भट्टोक्तमप्रामाण्यत्रयं निरस्तं हेतुदोषदुष्टत्वं तु अनादिपरम्परागतत्वेनैव निरस्तमिति। ततश्च स्वतः अशुद्धिः शङ्क्यते कारणदोषतो वा नाद्यः स्वतः सिद्धत्वेनैव शुद्धत्वात् नादिज्ञानं स्वरूपतो दुष्टं किन्तु कारणदोषेणैव अन्त्यश्चेन्नास्ति तदा सिद्धं तस्य शुद्धत्वमित्यपि शक्यं योजयितुमिति।

खण्डनदर्पणः।

**इत्थमिति।** समयबन्धाङ्गीकारप्रकारेणैवेत्यर्थः। **वाग्व्यवहारेति।** उभयाङ्गीकारे गौरवं स्यादुक्तवैतण्डिकवाग्व्यवहारे व्यभिचारश्चेति भावः। आवश्यकत्वार्थमाह—**प्रमाणेति।** गौरवादित्यर्थः। न च प्रामाण्यसन्देहेऽर्थसन्देहात् प्रवृत्तिर्न स्यादिति वाच्यं, व्यावहारिकप्रामाण्यनिश्चयादर्थनिश्चयात्तदुपपत्तेः। लोकव्यवहारसिद्धत्वात्सत्ताङ्गीकार इति

खण्डनरत्नमालिका।

दिपारम्पर्यायातश्चेति विग्रहः। **विद्यासागरास्तु** प्रमाणेनानुपक्रम्य स्वेच्छामात्रगृहीतो नियमबन्धो मूलं यस्य विचारस्येति विग्रह इति वदन्तः संभावितदोषसमयबन्धमूलकत्वेन विचारस्यैव दुष्टत्वाशङ्कानादिमानि विशेषणानि विचारस्येति मन्यन्ते एवं च **तस्येत्यस्य** विचारस्येत्यर्थः। युक्तं चैतत् तस्यैव प्रवृत्त्युत्पादकत्वेन प्रवृत्तिसंवादत्वादिति तत्त्वम्। ननु यथा तत्त्वव्यवस्थाजयरूपफलहेतुत्वेन व्यवहारनियमः स्वेच्छयव द्वाभ्यां कथाहेतुत्वेनाङ्गीकृतस्तथा तत्त्वव्यवस्थाजयरूपफलहेतुत्वेन प्रमाणसत्ताऽपि कथाहेतुत्वेनाङ्गीक्रियतामत आह—**नचेति।** **इत्थमेव**-फलहेतुत्वेन स्वेच्छयैव। **तादृशेति।** **सच**-इत्यादिना इत्यादिरूप इत्यन्तेनोक्तेत्यर्थः। **व्यवहारनियममात्रेणेति।** अयं भावः व्यवहारनियमादेव कथाप्रवृत्तिसम्भवे व्यवहारनियमस्य प्रमाणसत्तायाश्च उभयोः कथाहेतुत्वे गौरवमिति। ननु प्रमाणसत्त्वैव कथाहेतुरस्तु न तु व्यवहारनियमः उभयोः कथाहेतुत्वे गौरवादिति विपरीतमेव कुतो नेत्यत आह—**प्रमाणादिसत्त्वेति।** तथा च प्रमाणसत्ताऽभ्युपगमेऽपि तथा व्यवहारनियमाभावे कथाप्रवृत्तिर्न भवति इत्यन्वयव्यभिचारात् प्रमाणसत्ताया न कथाहेतुत्वमिति भावः। लोकसिद्धत्वा-

तथाविधव्यवहारनियमव्यतिरेके ( कथाप्रवृत्तिं विना ) तत्त्वनिर्णयस्य जयस्य वाऽभिलषितस्य कथकयोरपर्य्यवसानात् ।

प्रागुक्तेषु विकल्पेषु तृतीयस्य खण्डनम् ।

नापि तृतीयः, लोकव्यवहारो हि प्रमाणव्यवहारो वा स्यात्?, पामरादिसाधारणव्यवहारो वा? । नाद्यः, विचारप्रवृत्तिमन्तरेण तस्य दुर्निरूपत्वात् तदर्थमेव च पूर्वं नियमस्य गवेषणात् । नापि द्वितीयः, शरी-

खण्डनभावदीपिका ।

यमबन्धं विना कथाप्रवृत्तेरेवासम्भवादित्यर्थः । अनिर्द्धारितविशेषप्रत्यक्षादिसिद्ध एव लोकसिद्ध इत्यङ्गीकृत्य प्रामाणिकव्यवहारो वा स्यादित्युक्तम् । तथा चोक्तं भट्टाचार्यैः 'न चैतानि परित्यज्य पृथग् लोकप्रमाणता' इति । पामरादिभिः शास्त्रसंस्कारवर्जितैर्लौकायतिकैश्च विवेकिनामपि यस्तुल्यो व्यवहारः स पामरादिसाधारणव्यवहारः । विचारेति । प्रवृत्ते विचारे प्रमाणादिसत्तायां प्रमाणोपन्यासः तेन लोकव्यवहारस्य प्रामाणिकत्वसिद्धिः तथा च प्रमाणसत्ताभ्युपगममन्तरेण विचारप्रवृत्तेर्न तस्य विचारप्रवृत्तिकारणत्वमित्यर्थः । नियमबन्धस्यापि तर्हि कथं कारणत्वमित्यत आह-तदर्थमिति । तदर्थं-विचारप्रवृत्त्यथम् । शरीरात्मेति । पामरादिसाधारणलोकव्यवहारसिद्धत्वादितिहेतुः शरीरात्मत्वादावनैकान्तिक इत्यर्थः । विचाराबाध्यलोकव्यवहारसिद्धत्वं हेतुत्वेन विव-

शाङ्करी ।

लोकेति । लोक्यते इति लोकः प्रमाणमित्यर्थः(१) । प्रामाणिकलोकव्यवहार इति वाऽर्थः । तस्येति । प्रमाणव्यवहारस्येत्यर्थः । तर्हि विचारप्रवृत्त्यैव तन्निरूप्यतामत आह—तदर्थमेवेति । विचारार्थमेवेत्यर्थः । तथाच—विचारप्रवृत्त्या प्रमाणाद्यभ्युपगमस्य प्रमाणसिद्धत्वं, तत्प्रमाणसिद्धत्वेन च तदधीनविचारप्रवृत्तिरित्यन्योन्याश्रय इति भावः । शरीरेति । 'अहं स्थूलः' इति प्रत्ययात् शरीरे एवात्मव्यवहारादित्यर्थः । विचाराऽबाध्यलोकव्यवहारसिद्धत्वमभ्युपगम्यतायां तन्नेमित्याह—पश्चादिति ।

खण्डनदर्पणः ।

तृतीयं विकल्पं दूषयति-नापीति । तस्येति । निष्कर्षप्रामाणिकव्यवहारस्येत्यर्थः। नन्वेवं समयबन्धस्यापि तद्धेतुत्वं न स्यादित्यत आह-तदर्थमिति । विचारप्रवृत्त्यर्थमित्यर्थः । तथा च तत्र विवाद इति भावः । अबाध्यत्वे सति लोकप्रसिद्धत्वं स्वीकार-

खण्डनरत्नमालिका ।

त्प्रमाणसत्ताङ्गाकार इति तृतीयविकल्पं निराचष्टे नापीति । पामराः शास्त्रसंस्काररहिताः। तस्य—व्यवहारनिष्ठप्रमाणिकत्वस्य। दुर्निरूपत्वादिति। विचारसिद्धौ व्यवहारप्रामाणिकत्वसिद्धिः तत्सिद्धौ प्रमाणसत्ताभ्युपगमः ततश्च विचार इति चक्रकापत्तिरितिभावः । ननु अबाध्यत्वे सति लोकसिद्धत्वं प्रमाणसत्ताङ्गीकारे प्रयोजकं तथाच शरीरादिषु य आत्मत्वव्यवहारो लोकसिद्धः स उत्तरकाले बाध्यते इति न लोकसिद्ध-

(१) लोकव्यवहार इत्यत्र कर्मधारय इति भावः । षष्ठीतत्पुरुषमभिप्रेत्याह—प्रामाणिकेति ।

रात्मत्वादीनामपि तथा सति भवता स्वीकर्त्तव्यतापातात्। पश्चात् तद् विचारबाध्यतया नाभ्युपेयते?—इति चेत्, तर्हि प्रमाणादयोऽपि यदि विचारबाध्या भविष्यन्ति तदा नाभ्युपेया एव, अन्यथा तूपगन्तव्याः, इति 'लोकव्यवहारसिद्धतया सत्त्वमभ्युपगम्यते'—इति तावन्न भवति।

प्रागुक्तेषु विकल्पेषु चतुर्थस्य खण्डनम्।

नापि चतुर्थः, यादृशो भवता प्रमाणादीन्यभ्युपगम्य व्यवहारनियमः कथायामालम्ब्यते तस्यैव प्रमाणादिसत्त्वाऽसत्त्वानुसरणोदासीनैरस्माभिरप्यवलम्बनात्, तस्य यदि मां प्रति फलातिप्रसञ्जकत्वं, तदा त्वां प्रत्यपि समानः प्रसङ्गः।

खण्डनभावदीपिका।

क्षितमिति शङ्कते—पश्चादिति। विशेषणासिद्धो हेतुरित्यभिप्रेत्य परिहरति—तर्हीति। केवललोकव्यवहारसिद्धत्वस्य हेतुतां सूचयति—अन्यथा त्विति। यद्वा विचाराबाध्यत्वमेवाभ्युपगमे हेतुरिति शङ्कते—पश्चादिति। हेत्वन्तरं तर्हि निग्रहस्थानमापन्नमिति परिहरति—तर्हीति। प्रमाणादिसत्तानभ्युपगमस्य कथाफलातिप्रसञ्जकत्वात् सत्त्वं प्रमाणादीनामभ्युपेयमिति चतुर्थं पक्षं प्रतिक्षिपति—नापीति। प्राप्ताप्राप्तविवेकेन समयबन्धस्यैवातिप्रसक्तिनिवारकत्वादन्यथासिद्धो हेतुरित्यर्थः। नियमबन्धमन्तरेण प्रमाणादिसत्ताश्रवणमात्रेण फलव्यवस्थायाः सिद्धेरुभयासंमतत्वान्नियामकान्तरस्य चोभाभ्यामप्यनङ्गीकरणात् फलातिप्रसक्तिदोषस्तुल्य एवोभयोरपीत्याह—तस्य यदीति।

शाङ्करी।

विचाराऽबाध्यलोकव्यवहारसिद्धत्वं प्रमाणादीनामप्यसिद्धमित्याह—तर्हीति। यादृशइति। तत्त्वनिर्णयविजयातिप्रसङ्गभिया प्रमाणाद्यभ्युपगमः कथातः पूर्वं त्वया

खण्डनदर्पणः।

प्रयोजकमिति नोक्तव्यभिचार इति शङ्कते—पश्चादिति। तर्हीति। तथा च विशेषणासिद्धो हेतुरित्यर्थः(१)। प्रमाणादय इति प्रमाणादौ विचाराबाध्यत्वानिश्चये तद्व्यवहारेऽपि तदनिश्चय इति हृदयम्। यादृश इति। समयबन्धादेरतिप्रसङ्गनिवृत्तेरन्यथासिद्धो

खण्डनरत्नमालिका।

त्वमात्रेण मया स स्वीकर्तव्य इत्याह—पश्चादिति। परिहरति—प्रमाणादय इति। तावन्न भवतीति। किन्तु अबाध्यतयेति शेषः। एवं प्रमाणसत्ताङ्गीकारे लोकव्यवहारसिद्धत्वं प्रयोजकमुक्त्वा सांप्रतमबाध्यत्वं प्रयोजकमुच्यते ततश्च हेत्वन्तरं नाम निग्रहस्थानं तवेति भावः। तदनभ्युपगमस्य फलातिप्रसञ्जकत्वादिति चतुर्थं विकल्पं दूषयति—नापीति। अवलम्बनादिति। अयं भावः तत्त्वनिर्णयविजयरूपफलाऽतिप्रसङ्गभयात्त्वया प्रमाणसत्तामभ्युपगम्य व्यवहारनियमोऽवलम्ब्यते इति व्यवहारनियमस्यावश्यश्रयणीतया तन्मात्रादेव फलातिप्रसङ्गभङ्गे प्रमाणसत्ताभ्युपगमो वृथेति भावः। तस्य—व्यव-

(१) अबाध्यत्वे सति लोकव्यवहारसिद्धत्वस्य हेतोर्विशेषणमसिद्धमित्यर्थः।

समयबन्धस्य प्रमाणादिसत्ताभ्युपगमनान्तरीयकत्वशङ्का—

स्यादेतत्, नियतवाग्व्यवहारक्रियासमयबन्धेन(१) कथां प्रवर्तयतापि व्यवहारसत्ताभ्युपगन्तव्या, न हि सत्तामनभ्युपगम्य व्यवहारक्रियाऽभिधातुं शक्या क्रिया हि निष्पादना, असतः सद्रूपताप्रापणमिति या-

खण्डनभावदीपिका ।

अङ्गीकृतनियमबन्धसिद्ध्यन्तर्गते च प्रमाणादिसत्तासिद्धिः तेन तत्सत्ताभ्युपगमस्य कथं कथाहेतुतापह्नूयत इति शङ्कते-स्यादेतदिति । व्यवहार एवाभ्युपगम्यतां किं तत्सत्तया, इत्यत आह-न हीति । कुत इत्यत आह-क्रिया हीति । विवक्षितार्थसिद्धये निष्पादनशब्दार्थमाह-असत इति । भवत्येवं व्यवहारसत्ता प्रमाणादिसत्तायाः

शाङ्करी ।

क्रियते, यदि नियतसमयबन्धेनैव तद्द्वयं निवर्तेत तदा वृथा प्रमाणाद्यभ्युपगम इत्यर्थः । ननु द्वैतापत्तिभयेन प्रमाणादिसत्तां नाभ्युपैषि, तच्च व्यवहारसत्त्वाभ्युपगमेप्यविशिष्टं, किञ्च व्यवहारादिसत्ताभ्युपगमनान्तरीयक एव प्रमाणादिसत्ताभ्युपगमोऽपीति कथायां तद्धेतुत्वमवर्जनीयमिति शङ्कते—स्यादेतदिति । व्यवहारसत्ताभ्युपगमस्नुप-

खण्डनदर्पणः ।

हेतुरित्यर्थः(२)। ननु स्वीकृतनियमसिद्ध्यन्तर्गतव्यवहारक्रियया व्यवहारसत्त्वसिद्धिः सत्त्वसिद्ध्या च तदभ्युपगमसिद्धिरिति वैतण्डिकस्याद्वैतसिद्ध्यर्थं प्रवृत्तौ व्याघात इति शङ्कते-स्यादेतदिति । अभ्युपगममुपपादयति—न हीति । न च व्यवहारक्रियासत्त्वज्ञानं तदभिधाने हेतुरस्तु किंसत्ताभ्युपगमहेतुत्वेनेति वाच्यं, यत्सत्त्वेन ज्ञायते तदभ्युपगम्यत इति व्याप्तेरिति तात्पर्य्यम् । करणभावस्येति । करणत्वस्य कारणविशेषत्वात् कारणत्वस्य च सत्त्वघटितत्वेन तत्स्वीकारे तत्सत्ताभ्युपगम इति भावः । दूषणानां चेति । दूषणानि सन्ति व्याप्तिरस्ति इत्यादिवचनं न सत्ताभ्युपगमं विनेति

खण्डनरत्नमालिका ।

हारनियमस्य । त्वां—प्रमाणसत्तामभ्युपगम्य व्यवहारनियमावलम्बिनम् । फलातिप्रसङ्गः—यस्य कस्यचित्फलापत्तिः । अयं भावः यद्यप्रामाणिकत्वाद्व्यवहारनियमो न व्यवस्थापकस्तर्हि अप्रामाणिकत्वादेव तवापि व्यवस्थापको न भवेदिति । एवं चतुर्धापि प्रमाणसत्त्वानभ्युपगमो न कथाङ्गमिति साधिते—पुनः सद्वादी प्रत्यवतिष्ठते—स्यादेतदिति । नियतो यो वाग्व्यवहारक्रियासमयः तस्य बन्धः स्वीकारः । नियमबन्ध एव अपर्यवस्यन् व्यवहारसत्तां स्वीकारयिष्यतीति भावः । ननु सत्तां विनानुपपत्त्यभावान्न स्वीकारयिष्यति इत्यत आह-न हीति। सद्रूपताप्राप-

(१) नियतत्वं समयबन्धस्य विशेषणं तथा च वाग्व्यवहारक्रियया क्रियमाणो वा वाग्व्यवहारक्रियारूपो वा वाग्व्यवहारक्रियायाः सम्बन्धी वा यो नियतः समयबन्धस्तेन कथां प्रवर्त्तयतापीत्यर्थः ।

(२) प्रमाणादीनि सत्त्वेनाभ्युपगम्यानि तत्त्वनिर्णयविजयफलातिप्रसङ्गवारकत्वात् सम्मतवत् इत्यत्र यो हेतुः सोऽन्यथासिद्धः समयबन्धादेव समीहितसिद्धेरिति भावः ॥

वत्। 'प्रमाणैर्व्यवहर्त्तव्यम्' इति नियमबन्धनं प्रमाणकारणभावस्य नियमान्तर्भावात् नियतपूर्वसत्त्वं कारणत्वं प्रमाणानामनादाय न पर्य्यवस्यति। दूषणानां चास्तित्वेन भङ्गावधारणनियमबन्धने, साधनाङ्गव्याप्त्यादीनां सत्त्वेन तद्विषयस्य तत्त्वरूपताव्यवहारनियमनादौ च, कण्ठोक्तमेव तस्य तस्य सत्त्वमङ्गीकृतमिति रिक्तमिदमुच्यते—'प्रमाणादीनां सत्तामनभ्युपगम्य कथारम्भः शक्यते'—इति ? ।

---

खण्डनभावदीपिका ।

किमायातमित्यतआह-**प्रमाणैरि**ति । नियमबन्धनं न पर्य्यवस्यतीति तत्र हेतुमाह **प्रमाणे**ति । तथापि सत्त्वं कुत इत्यत आह-**नियते**ति । तदनङ्गीकृत्य नियमबन्धनं न सिद्ध्यतीत्येवमर्थं प्रमाणादीनां सत्ताङ्गीकरणं प्रसाध्य साक्षादेव सत्त्वाङ्गीकरणस्थलमाह **दूषणानामि**ति। भङ्गावधारणनियमबन्धने तत्त्वरूपताव्यवहारनियमनादौ च तस्य सत्त्व मङ्गीकृतमित्यन्वयः। व्यवहारक्रिया कर्तव्येत्यभिधाय तत्सत्त्वं नाभ्युपगम्यत इति वचनं प्रमाणैर्व्यवहर्तव्यमिति चोक्त्वा प्रमाणसत्ता नाभ्युपगम्यत इतिवचनं दूषणानां साधनानां चास्तित्वेन भङ्गतत्त्वावधारणे चाभिधाय पुनस्तत्सत्तानभ्युपगमवचनं च माता मे

शाङ्करी ।

पादयति—**नही**ति । प्रमाणसत्ताभ्युपगममुपपादयति—**प्रमाणैरि**ति । **कण्ठोक्तमि**ति । 'दूषणानि सन्ति' 'व्याप्तिरस्ति'—इत्यादिवचनं तत्सत्ताभ्युपगमपरमेवेत्यर्थः । प्रवृत्तायामेव कथायामयं बाधस्त्वया वाच्यः, तत्कथाप्रवृत्तिवत् कथान्तरप्रवृत्तिरपीति

खण्डनभूषामणिः ।

**रिक्तमि**ति। परस्परपराहतत्वेन वाक्यमिदमर्थशून्यमित्यर्थः। ननु अर्थस्य मया न सत्त्वं साध्यते किन्तु व्यवहारनियमस्यैव सत्ताङ्गीकारपर्यवसानमात्रमुच्यत इत्याशङ्क्य निषेधति

खण्डनदर्पणः ।

भावः । उपसंहरति-**रिक्तमि**ति । प्रवृत्तायामेव कथायामेव बाधस्त्वया वाच्यः । तत्कथाप्रवृत्तिवत् कथान्तरप्रवृत्तिरपीति न किञ्चिदेतदिति आह—**एभिरपी**ति । न

खण्डनरत्नमालिका ।

**णमि**ति। तथाच असतो व्यवहारस्य सद्रूपताप्रापणे व्यवहारसत्त्वमेवापततीति भावः। नन्वेतावता व्यवहारसत्त्वाभ्युपगमसिद्धावपि न प्रमाणसत्ताभ्युपगमसिद्धिरत आह-- **प्रमाणैरि**ति । तृतीयया प्रमाणस्य व्यवहारे करणत्वमुच्यते कारणविशेषश्च करणत्वं कारणत्वं च अन्यथासिद्धिशून्यत्वे सति नियतपूर्वसत्त्वमिति प्रमाणानां सत्त्वमन्तरा कारणत्वमेव न सिद्ध्यति नतरां करणत्वमिति 'प्रमाणैर्व्यवहर्तव्यम्' इति नियमबन्ध एव प्रमाणसत्तामनभ्युपगम्य न पर्यवस्यतीति भावः । एवं यस्य व्यवहारे दोषाः सन्ति तस्य पराजयो व्यवहर्तव्यः यस्य तु साधनाङ्गानि व्याप्त्यादीनि तस्य जय इति वदन्नपि दोषाः व्याप्त्यादयश्च न सन्तीति वदन् कथं सभ्यः स्यादित्यत आह-दूष-

चक्रकापत्त्या उक्ताशङ्कापरिहारः ।

**मैवम्, एभिरपि बाधकैः कथायामारब्धायामेवाभिमतस्य प्रसाध-नीयत्वे पूर्वोक्तबाधाया अनिस्तारात् ।**

पूर्वोक्तबाधायाः ( चक्रकस्य ) परिहाराशङ्कानिराकरणम् ।

**नच व्यवहारनियमस्य स्वेच्छास्वीकृतस्यैव प्रमाणादिसत्तास्वीका-**

---

खण्डनभावदीपिका ।

वन्ध्येतिवदन्योऽन्यं व्याहतमिति भावः । उक्तोत्तरमेतदिति परिहरति-**एभिरपीति** । व्याघातरूपबाधकानामपि प्रवृत्तायामेव कथायामुद्भावनेन प्रमाणादिसत्ताभ्युपगमस्य साधनीयत्वात् ततः प्रागेव कथाप्रवृत्तेः प्रमाणादिसत्ताभ्युपगमो न तत्कारणमिति पूर्व मेवोक्तमित्यर्थः । व्याघातपरंपरोद्भावनेन प्रमाणादिसत्ता परैर्नाङ्गीकार्य्या किं तु कथातः प्रागेव स्वयमङ्गीकृतव्यवहारनियमबन्धसिद्ध्यन्तर्गतैव प्रमाणादिसत्तेति परो ज्ञाप्यते,

शाङ्करी ।

न किञ्चिदेतदिति परिहरति—**एभिरपीति** । यद्यपि सा कथा प्रमाणाद्यभ्युपगमपूर्वि-कैव, त्वं पुनरिदानीं तत्र विप्रतिपन्नः समयबन्धमङ्गीकुर्वन् प्रमाणादिसत्ताभ्युपगममङ्गी-कार्य्यसे, इति नानुपपत्तिः,[तथापि प्रमाणादिसत्ताभ्युपगमेऽपि न प्रमाणादिसत्तासिद्धिः, अग्रे वक्ष्यमाणयुक्तेरिति हृदयम् । ननु कथायां कस्याञ्चित्प्रमाणादिसत्त्वाभ्युपगमो न मया त्वां प्रति साध्यते, किं तर्हि, स्वेच्छया यः समयबन्धः परिगृहीतः स प्रमाणादिसत्त्वाभ्युपगमपर्य्यवसन्नः—इति त्वं बोध्यसे ? इत्यत आह—**नचेति** ।

खण्डनभूषामणिः ।

**नचेत्यादिना**। नन्वेवं सति प्रमाणादिसत्त्वावगमे उभयसिद्धे कथकाभ्यामभ्युपेयमिति

खण्डनदर्पणः ।

चैतत्कथाप्रवृत्तिरपि न तत्सत्ताभ्युपगमं विना उक्तयुक्तेरिति वाच्यम् विवादश्चेन्नास्ति तदा साधनवैयर्थ्यं विवादे सत्येतत्कथाप्रवृत्तिवत्कथान्तरप्रवृत्तिरपि स्यादिति भावः । ननु न मया सत्त्वं साध्यते किन्तु स्वेच्छास्वीकृतस्यैव व्यवहारनियमस्य प्रमाणा-दिसत्ताभ्युपगमने पर्यवसानमात्रमुच्यते तेन न स मम दोष इत्यत आह—**नचेति** ।

खण्डनरत्नमालिका ।

**णानामिति** । तत्त्वरूपता–सत्यता । **कण्ठोक्तमिति** । यस्य हेतौ दूषणानि सन्ति तस्य भङ्गोऽवधारणीयः यस्य हेतौ साधनाङ्गानि व्याप्त्यादीनि सन्ति तस्य पक्षस्त-त्स्वरूपतया व्यवहर्तव्य इत्येवं नियमबन्धेन तस्य तस्य दूषणादेः व्याप्त्यादेश्च कण्ठोक्त-मेव सत्त्वमङ्गीकृतमित्यर्थः । उपसंहरति–'**रिक्तमिति**' '**शक्यत**' इतीत्यन्तेन । रिक्तं परस्परपराहतत्वेन शून्यवचनम् । [परिहरति-**मैवमिति** । **पूर्वोक्तबाधाया** इति । कथायामेव एतान् बाधकानुपन्यस्य प्रमाणसत्त्वाभ्युपगमः साधनीयस्तं विना च न कथासिद्धिः कथासिद्धिमन्तरा च न बाधकोपन्यासस्तं विना च न प्रमाणसत्तासिद्धिः

रपर्य्यवसायितया नायं दोषः स्यात् । यतः सत्ताज्ञानस्य तत्राङ्गत्वं, न तु सत्तायाः । तत्र किं सत्त्वावगममात्रात् सत्ताभ्युपगम्येति मन्यसे ?, अबाधितात्तदवगमाद्वा ? न तावदाद्यः, मरुमरीचिकादौ जलरूपतासद्भावाभ्युपगमप्रसङ्गात् । द्वितीयेऽपि किं वादिप्रतिवादिमध्यस्थमात्रस्य

खण्डनभावदीपिका ।

इति मतमाशङ्क्य परिहरति—नचेति । तत्र हेतुमाह यत इति । प्रमाणादिसत्तावगमएव व्यवहारनियमसिद्धेराधारभूतो न तु तदवगमलब्धा सत्तापीत्यर्थः । ननु सत्तावगमश्चेदङ्गं तदा तदालम्बनभूता सत्ताप्यङ्गमेव निरालम्बनावगमायोगादित्याशङ्क्याह—तत्र किमिति । द्वितीयं कल्पं विकल्पयति—द्वितीयेऽपीति । वादिप्रतिवादिमध्य-

शाङ्करी ।

समयबन्धः प्रमाणादिसत्ताज्ञानमात्रमाक्षिपति, न तु प्रमाणादिसत्तामपि, येन द्वैतापत्तिरिति भावः । ननु प्रमाणादिसत्ताज्ञानं चेदायातं तदा तदभ्युगमोपि सिद्धः, तत्रैव च त्वं विप्रतिपन्नः ? इत्यत आह—तत्र किमिति । यद्वा 'नावग-

खण्डनभूषामणिः ।

किमिदमभ्युपगमः साध्यते किं वेदमुच्यते स प्रयोजनमनुयुक्त इत्यादीनि पर्यनुयोगार्हो भेदवादीति चेत्सत्यं तथापि प्रौढवादितया तदुपेक्ष्य दूषणान्तरमुच्यते अन्यथा यदि कश्चित्पार्श्वस्थ एवं वदेत्तस्य किमुत्तरमिति तन्निराकरणं कथं स्यात् स ह्येवं वदेद्भेदवादी सर्वांश्च उन्मादादेव सर्वान्विस्मृत्य विवादं कुरुत इति न तु सत्ताया इति व्यवहारे व्यवहर्तव्यज्ञानमेव हेतुरसत्यपि व्यवहर्तव्ये तज्ज्ञानाद्व्यवहारात् सत्यपि तस्मिन्नज्ञाने व्यवहाराभावादिति भावः। ननु ज्ञानमात्रं नाङ्गं किन्तु सत्तापीति सिद्धं तर्हि प्रमाणादिकमिति काद्वैतबुद्धिप्रत्याशेत्याशङ्क्य विकल्प्य दूषयति—तत्र किमिति। यद्यत्र प्रतीयते तत्तत्र सदित्यत्र व्यभिचारमाह—नाद्य इत्यादि। अभ्युपगमप्रसङ्गादिति। तत्र जलं सत्स्यादित्यर्थः न च तत्राप्यनिर्वचनीयं जलमुत्पद्यत एवेति कस्यचिद्वेदान्तिनो मत इष्टापत्तिरिति वाच्यं, तथा सति सत्त्वेनैव निर्वचनादनिर्वचनीयताक्षतिप्रसङ्गात्। न चोत्पन्नावपि

खण्डनदर्पणः ।

प्रमाणादिसत्ताज्ञानमेव समयसम्बन्धसिद्ध्यन्तर्गतं न तु तत्सत्तापि । न च ज्ञाने सति तत्सत्तावश्यकत्वं, भ्रमजप्रवृत्तिस्थले व्यभिचारादिति भावः । ननु सत्ताज्ञानात्तदभ्युपगमः साध्य इत्यत आह—तत्रेति। ज्ञानमात्रस्य ज्ञेयसाधकत्वे मरीचिसलिलादेरपि

खण्डनरत्नमालिका ।

इत्येवं चक्रकस्येत्यर्थः । ननु मया न सत्त्वं साध्यते किन्तु स्वेच्छास्वीकृत एव व्यवहारनियमः प्रमाणादिसत्तां स्वीकारयति तथा च न चक्रकमित्याह—नचेति । कुत इत्यत आह—यत इति । समयबन्धे सत्ताज्ञानस्य हेतुत्वं न तु सत्तायाः सत्ताऽभावेऽपि सत्तावगमे सति व्यवहारदर्शनात् इति भावः। नायं दोषः—न चक्रकम् । तत्र—कथायाम् । तत्र—कथायां प्रमाणादिसत्ताज्ञानस्य कारणत्वस्वीकारे सति ।

तस्यापि कथाकालमात्रे एव बाधितावगमाभावात् ?, अथवा कस्यचि-

खण्डनभावदीपिका ।

स्थमात्रस्य बाधितावगमाभावात् इत्यन्वयः । तस्यापीति । वादिप्रतिवादिमध्यस्थमात्रस्येति यावत् । कालान्तरेऽपि वादिप्रतिवादिमध्यस्थानां बाधितावगमाभावात् इत्यवशिष्टं पक्षं पक्षान्तरेणैकीकृत्य विकल्पयति–अथवेति । अतिप्रसङ्गमेव

शाङ्करी ।

समात्रं कथाहेतुरपि तु प्रमाणादिसत्तावगमः इति विशिष्टकारणताग्राहकं मानं विशेषणमपि विषयीकरोतीति प्रमाणादिसत्ताभ्युपगमोपि कथाहेतुः,—एवं तदव-

खण्डनभूषामणिः ।

किञ्चित्प्रमाणमस्ति। न चापरोक्षतैव मानं शशविषाणादिवत् परोक्षत्वाभावादिति वाच्यं तावतापि तद्वैलक्षण्यमात्रं सिद्ध्यति न तूत्पत्तिरपि । अपरोक्षता तर्हि कुत इति चेद्-परोक्षज्ञानविषयत्वादेव नहि शशविषणादौ परोक्षधीसामग्रीवदिह शब्दादिकमस्ति प्रत्युतान्धादीनां तदनुत्पत्तेरिन्द्रियघटितैव संस्कारसध्रीचीना दोषसमवहितैव तत्सामग्री । न च तर्हि नदीजलमेव तत्र भासतामित्यन्यथाख्यातिप्रसङ्ग इति वाच्यं नदीजलप्रत्यक्षे तदीन्द्रियसंनिकर्षस्य कारणत्वेन क्लृप्तस्याभावेन तस्यानुत्पत्तेः । न च तोयप्रत्यक्षे तोयेन्द्रियसन्निकर्षो हेतुः क्लृप्त इति कथं तेन विनेदमपि प्रत्यक्षं, तोयाभासमेवेदं न तु तोयमित्यङ्गीकारात् । प्रतीत्यविशेषात्तोयान्तरमेवेदमिति किन्न स्यादिति चेत्तथा सति सत्प्रत्यक्षतापत्तेरेव । न च तोयप्रत्यक्षप्रमायामेव सन्निकर्षो हेतुः, गौरवापत्तेः । 'स्मृतिरूपः परत्र पूर्वदृष्टावभास' इत्यध्यासं लक्षयतो भाष्यकृतोऽप्येवमेव संमतमिति लक्ष्यते । तर्हि अध्यस्तं जलमनादि स्यादिति चेन्नाविद्यमानत्वादनादितापि नास्ति यदि च स्यात्तदा बाध्यमानतापि न स्यादात्मवत् ततो विलक्षणा त्वविद्यायामिव नानिष्टा 'षडस्माकमनादय' इति तु व्यवहारः सतां संख्यानियमाभिप्राय इति दिक्। अस्तु तर्हि प्रमाणादिसत्ता परमार्थिकी अबाधितप्रतीतिविषयत्वादित्यत्र स्व-

खण्डनदर्पणः ।

सत्त्वस्वीकारप्रसङ्गेनाद्यं दूषयति–नेति । प्रमाणादि परमार्थसत् अबाधितावगमगोचर-

खण्डनरत्नमालिका ।

ननु प्रमाणादि न परमार्थसत् अबाधितावगमगोचरत्वादात्मवदित्यनुमानेन प्रमाणादिसत्ता सेत्स्यतीत्याशङ्कां दूषयितुं विकल्पयति किमिति । किं वादिप्रतिवादिमध्यस्थमात्रस्य कदाचिदपि बाधितावगमाभावात् प्रमाणसत्ताभ्युपेया उत तस्यापि ( वादिप्रतिवादिमध्यस्थमात्रस्य ) कथाकाले बाधितावगमाभावात् एवमथवेत्यादिनोक्तविकल्पेऽपि कस्यापि प्रतीतिकाले बाधितावगमाभावात् सत्ताभ्युपगन्तव्या उत कस्यापि कदाचिदपि बाधितावगमाभावात् इतिविकल्पद्वयमिति चत्वारो विकल्पाः ।

दपि कालान्तरेपि च बाधितबोधविरहात्? । नाद्योऽतिप्रसङ्गात्, पुरुषत्रयावगतस्यापि एकक्षणावगतस्य पुरुषान्तरेण, तेनापि क्षणान्तरे, बहुलं बाध्यत्वदर्शनात्। नचासावर्थोऽसन्नपि द्वित्रादिपुरुषमात्रपूर्वजाततत्प्रतीत्यनुरोधाद्, बाधदर्शने सत्यपि, तथैव सन्नित्यभ्युपगम्यते। तस्माद्, द्वितीयः

---

खण्डनभावदीपिका ।

विवृणोति । पुरुषत्रयेति । वादिप्रतिवादिमध्यस्थाः पुरुषत्रयं पुरुषत्रयावगतस्य पुरुषान्तरेण बाधो दृश्यते, एकक्षणे पुरुषत्रयावगतस्य तेनैव पुरुषत्रयेण क्षणान्तरे बाधो दृश्यत इत्यन्वयः । बहुलमिति । बाहुल्यप्रदर्शनमुक्तं दृढीकर्तुम् । ननु पूर्वावगमस्यसंजातविरोधितया तदालम्बनसत्तैव किन्नाभ्युपेयत इत्याशङ्क्य शुक्तिरजतादिविभ्रमेष्वदर्शनान्नैवमित्यभिप्रेत्याह—न चासाविति । असौ पुरुषत्रयेणाधिगत इत्यर्थः । कतिपयकालतथात्वावगमानुरोधादसत्योऽप्यगत्या सन्नित्यभ्युपेयते तमेव पक्षं दर्शयति—तस्मादिति । ननु सर्वप्रकारबाधविरहात् प्रमाणादिसत्ता सिद्ध्यतीति पक्षे प्रवृत्ते

शाङ्करी ।

गमोपीत्यत आह—तत्र किमिति । अतिप्रसङ्गमेव दर्शयति—पुरुषत्रयेति । द्वितीय

खण्डनभूषामणिः ।

रूपासिद्धिमाह—द्वितीयेपि किमित्यादिना । द्वित्रेति । द्वौ वा त्रयो वा द्वित्रास्तदादय एव पुरुषा द्वित्रादिपुरुषास्त एव मात्रा प्रमाणं यस्य तस्य पूर्वजाता सा च तस्य वस्तुनः प्रतीतिरिति विग्रह इति विद्यासागरः। द्वित्राः पुरुषा आदिभूता कारणभूता न तु विशेषतस्तस्यैव याः प्रतीतयः पूर्वजाताः प्रमास्तदनुरोधेनेति वार्थः । बाधदर्शन इत्यत्र तेषामेवेति शेषः । तथैव प्रतीतरूपेण न तु प्रमेयत्वादिना सद्रूपतायाअभ्युपगम्य तादवस्थ्यसिद्धयः ।अथवा स एव पदार्थः अभासात्मना सन्नभ्युपेयत इत्याशङ्कावारणाय

खण्डनदर्पणः ।

त्वादात्मवदित्याशङ्क्याह—द्वितीय इति । अतिप्रसङ्गमेव दर्शयति—पुरुषत्रयेति । असाविति । पुरुषत्रयेणाबाधिततयावगत इत्यर्थः । द्वितीयःपक्ष इति । द्वितीयपक्षस्य

खण्डनरत्नमालिका ।

द्वितीयतृतीयविकल्पौ दूषयति—अतिप्रसङ्गादिति । अतिप्रसङ्गमेवाह—पुरुषत्रयेति । पुरुषत्रयावगतस्यापि पुरुषान्तरेण बहुलं बाध्यत्वदर्शनात् एकक्षणावगतस्यापि तेनापि पुरुषत्रयेणापि क्षणान्तरे बहुलं बाध्यत्वदर्शनादिति योजना तथा च अबाधितावगमः सत्त्वव्यभिचारीति न तेन प्रमाणादिसत्ता साधयितुं शक्येति भावः । विगीतप्रत्ययाः यथार्थाः प्रत्ययत्वात्संप्रतिपन्नप्रत्ययवदिति अनुमानेन बाधदर्शनेपि सत्त्वमेवास्तु इति क्व व्यभिचार इत्याशङ्कां परिहरति—न चेति । नहीत्यर्थे । प्रातीतिकसत्त्वसाधने सिद्धसाधनम् अर्थसत्त्वसाधने बाध इति नोक्तानुमानेन सत्त्वसिद्धिसंभव इति भावः । प्रथमचतुर्थविकल्पयोर्नास्माकं हानिरित्याह—द्वितीय इति । द्वितीयविकल्पस्य द्वितीयः

पक्षः परिशिष्यते—यत्र सर्वप्रकारैर्बाधितत्वं नास्ति तत्सदित्यभ्युपगन्तव्यम् ।

प्रमाणसत्ताभ्युपगमस्य अबाधितसत्तावगममूलकत्वनिरासः ।

तदित्थं यदि नाम वादिप्रतिवादिमध्यस्थमात्रस्य दूषणादिसत्ता-

खण्डनभावदीपिका ।

किमायातमित्यत आह-तदित्थमिति । तैः—वादिप्रतिवादिमध्यस्थैः । किमायातमिति । सर्वप्रकारैर्देशान्तरकालान्तरस्वरूपप्रकारैर्यस्तस्य तस्य प्रमाणप्रमेयादेः सत्तावगमस्तदायत्तस्तदधीनो यस्तस्य तस्य सत्ताभ्युपगमस्य कथाङ्गता नास्तीत्यस्मत्पक्षस्य किमायातं किं दूषणमायातं न किंचिदित्यर्थः । सर्वथाऽबाध एव प्रमाणादि कथाङ्गमित्यशक्यं तथाविधबाधवैधुर्य्यस्य साधनदूषणादौ केनाप्यवगन्तुमशक्यत्वात् , जयपराजयादि-

शाङ्करी ।

इति । द्वितीयपक्षस्य द्वितीयः पक्ष इत्यर्थः । तमेवाह—यत्र सर्वप्रकारेणेति । कथाव्यवहारे सर्वप्रकारबाधितत्वं नास्तीत्यत आह—तदित्थमिति । ननु प्रमा-

खण्डनभूषामणिः ।

विशेषादर्शनदशायां द्वित्रिचतुःपुरुषाणां प्रतीतिस्तैरेव विशेषदर्शनदशायां बाध्यत इति अन्धकारे च भुजङ्गतया पश्यतां जातकम्पानामुत्तरकालं भयाभावदर्शनादिति भावः । योगाचारसौत्रान्तिकवैभाषिकावगतस्य क्षणभङ्गस्य वाद्यन्तराणां बाध्यतादर्शनादिति तु विद्यासागरः। यत्र सर्वप्रकारैरिति।देशान्तरकालान्तरपुरुषान्तरैर्बाधो नास्तीत्यर्थः। अभ्युपगन्तव्यमिति। न चेदं शक्यं परकीयबाधाभावस्य विषयनिष्ठस्यायोग्यत्वादिति भावः। ननु भवतामप्यबाधितः व्याप्त्याद्यभ्युपगमः कथाङ्गं चेत्तर्हि न असत्यत्वं न चेत्तर्हि बाधितमपि दूषणमादाय व्यवहरतो जयभङ्गव्यवस्थादौस्थ्यमित्याशङ्क्य स्वमतं प्रतिपादयति तदित्थमिति । तैरिति बाधाभावः स्वरूपसत्वे च हेतुरिति नातिप्रसङ्ग इति । ननु प्रमाणादिसत्ताभ्युपगमः कथाङ्गं न भवतीति प्रतिज्ञाय सर्वप्रकाराबाधितप्रमाणादिसत्ताभ्युपगमः कथाङ्गं न भवतीति वदतस्तव प्रतिज्ञान्तरं दोषः स्यादिति चेन्न भवतो यादृशी प्रतिज्ञा तद्विपरीतार्थविषयिकैव मम प्रतिज्ञेति कुतः प्रतिज्ञान्तरत्वमित्येवमुद्भावयतो निरनुयोज्यानुयोगापत्तिः । ननु कथायाः सम्यक्त्वासम्यक्त्वं तदधीना च वस्तुनो व्यवस्था न स्यात् पुरुषत्रयव्यवस्थापितस्याप्यपरर्दूषयिष्यमाणत्वादिति चेत्सत्यं नास्त्येव वस्तुनो व्यवस्था न्यायतः किंकुर्मः सर्वो हि लौकिको व्यवहारस्तत्कालप्रतीत्या तत्कालेऽबाध्यमानतया जन्यते अन्यथा क्षुधार्तो

खण्डनदर्पणः ।

द्वितीयः पक्ष इत्यर्थः । सर्वप्रकारेणेति । सर्वत्र देशे काले च सर्वपुरुषेण यत्र बाधितत्वे-

खण्डनरत्नमालिका ।

पक्षइत्यर्थः । आक्षिपति—तदित्थमिति । वादिप्रतिवादिमध्यस्थानां कथाकाले अबाधितो दूषणादिसत्त्वावगमः कथाङ्गमिति । तावतैव कथासिद्धौ अत्यन्ताबाध्यत्वरूपं

**वगमः कथाकालमात्रे तैरबाध्यमानः कथाङ्गत्वेनाभ्युपेयते तदा किमायातं सर्वप्रकाराबाधिततत्तत्सत्त्वावगमायत्ततत्तत्सत्ताभ्युपगमकथाङ्गतानङ्गीकारस्य । कतिपयप्रतिपत्तृकतिपयकालतथात्वावगमादेव प्रायेण**

खण्डनभावदीपिका ।

व्यवस्था लोकसिद्धा न सिद्ध्येदित्यभिप्रेत्याह—कतिपयेति । भवतु लोकव्यवहारशाङ्करो ।

णादिसत्ताभ्युपगमे त्वं विप्रतिपद्यसे, स च त्वयैवाङ्गीकृतः इत्यत आह—**किमायातमिति** । सर्वप्रकारेणाऽबाधितो यः प्रमाणादिसत्तावगमस्तदायत्तः प्रमाणादिसत्ताभ्युपगमः कथाङ्गं न भवतीति मदीयः पक्षः, तत्र त्वया न किञ्चिदुक्तमिति भावः । ननु प्रतिज्ञान्तरमिदं यत्प्रमाणाद्यभ्युपगमः कथाङ्गं न भवतीति प्रतिज्ञाय सर्वप्रकाराऽबाधितप्रमाणादिसत्ताऽधिगमायत्तप्रमाणाद्यभ्युपगमः कथाङ्गं न भवतीति प्रतिज्ञायते-इति चेन्न, पूर्वमपि विशिष्टस्यैव प्रतिज्ञानात्, प्रतिज्ञान्तरस्यापि खण्डनीयत्वाच्चेति भावः । नन्वबाधित एव प्रमाणादिसत्ताभ्युपगमः कथाङ्गमस्त्वित्यत आह—**कतिपयेति** ।

खण्डनभूषामणिः ।

भोजनमपि न कुर्याद्यथा च तत्र फललाभात् स व्यवहारः सर्वलोकानां प्रकर्षेण जायते न तु तद्व्यवहारः केनापि लौकिकेन बाध्यते तथा कथात्मको व्यवहारोपि समयबन्धानुल्लङ्घी चेत्सम्यक्त्वेन व्यवह्रियते कथकेषु प्रतीयते च न केनापि प्रति जन्यते चेत्याशयवानाह **कतिपयेत्यादि** । घटोयमित्यादिव्यवहार आत्मतत्त्वबोधात् प्राक् सर्वेषां तथावगमादेव भवतीत्यत आह-**प्रायेणेति** । विधिविधेयव्यवहारे व्यभिचारमाशङ्क्याह-

खण्डनदर्पणः ।

नावगम्यत इत्यर्थः । **किमायातामिति** । सर्वप्रकारेणाबाधितो यः प्रमाणादिसत्तावगमः कथाङ्गं न भवतीति मदीयः पक्षस्तत्र च त्वया न किञ्चिदुक्तमित्यर्थः । ननु प्रतिज्ञान्तरमिदं यतः प्रमाणादिसत्ताभ्युगमः कथाङ्गं न भवतीति प्रतिज्ञाय सर्वप्रकाराबाधितप्रमाणादिसत्ताभ्युपगम- कथाङ्गं न भवतीति प्रतिज्ञायत इति चेन्न—तत्र किं सत्ताभ्युपगमस्येति मन्यसे अबाधिततदवगमाद्वेत्यत्र हेतुं विकल्प्य दूषणाभिधानेन प्रतिज्ञान्तरत्वाभावात् । ननु सत्त्वं व्यवहाराङ्गमङ्गीकृतं चेन्मुख्यसत्त्वव्यतिक्रमे कारणाभावादबाधितमपि सत्त्वमङ्गीकृतमेवेति नैवम् लौकिकव्यवहारस्यापि प्रातीतिकसत्त्वमूलकत्वादित्याह—**कतिपयेति** । प्रतीयते स प्रपञ्चो ज्ञायत इत्यर्थः ।

खण्डनरत्नमालिका ।

प्रमाणादीनां सत्त्वं किमित्यभ्युपेयं वेदान्तिना येनाद्वैतव्याघातः स्यादिति भावः । **सर्वप्रकारेति** । सर्वप्रकारैः कालान्तरदेशान्तरपुरुषान्तरैः अबाधितो यः तस्य तस्य प्रमाणस्य प्रमेयस्य च सत्त्वागमः तेन आयत्तो यस्तस्य तस्य दूषणादेः सत्त्वावगमः तस्य कथाङ्गता तस्या अङ्गीकार इति विग्रहः तस्य किमायातमितियोजना तथाच अत्यन्ताबाध्यत्वरूपस्य प्रमाणादिसत्त्वस्याभ्युपगमो न कथाङ्गमिति भावः । **तथात्वावगमात्**—

लौकिको व्यवहारः प्रतीयते, तादृशश्चायं सत्त्वावगमः कथाङ्गम् । एतत्त-दुच्यते 'व्याचहारिकीं प्रमाणादिसत्तामादाय विचारारम्भः' इति ।

---

खण्डनभावदीपिका ।

स्यैतादृशी गतिस्तथापि कथाङ्गं कीदृशमित्यत आह—तादृश इति । उक्तमेवार्थमभि-युक्तसंमत्या द्रढयति एतदिति । "देहात्मप्रत्ययो यद्वत्प्रमाणत्वेन कल्पितः । लौकिकं

शाङ्करी ।

त्रैकालिकसार्वलौकिकबाधवैधुर्याकलनमशक्यमिति कतिपयप्रतिपत्तृमात्रबाधविरह एव प्रवृत्त्यङ्गम्, इत्यवश्यं वाच्यं, नैतावता वस्तुस्थितिरिति भावः । एतत्तदुच्यतेइति । तदेतदुच्यते इत्यर्थः । व्यावहारिकीमिति । पारमार्थिकत्वस्य दुष्परिच्छेद्यत्वादिति भावः । ननु प्रमाणादिसत्ता माभ्युपगम्यतां, नियमबन्धश्चेदङ्गीकृत एतावतै-

खण्डनभूषामणिः ।

लौकिक इति । ननु शास्त्रविदां व्यवहारः कथं तथा तव तु ते तत्त्वविद इत्याशङ्क्याह तादृशश्च सत्तावगमः कथाङ्गमिति । कथाङ्गमपि तादृगवगम एव अत्र शास्त्रकृता-मेव संमतिमाह-एतदुच्यते व्यावहारिकीं सत्तामादाय विचारारम्भ इति । यदुच्यते तदेतदेव सत्त्वावगमरूपमेव इत्यर्थः । व्यावहारिकीं व्यवहाराय समर्था नत्वबाध्यां विचारासहत्वात् नाप्यवगमादतिरिक्तः मध्यमसत्तां प्रमाणाभावात् शुक्ति-रजतप्रतीतिजव्यवहारस्यापि दृश्यमानत्वेन व्यवच्छेदाद्यशक्यत्वात् । न च सति प्रमातरि अबाध्यमानत्वमेवाकाशादीनां व्यावहारिकं सत्त्वमिति वाच्यं सापि च प्रतीतेर्बाध्यमा-नतैव पर्यवस्यतीति प्रतीतिप्रतीतिसत्तैव भङ्ग्यन्तरेणोक्ता भवति न हि प्रतीतौ बाधि-तायामसत्यां सा सत्ता आकाशादीनामस्तीति शक्यं वक्तुं सा हि सत्ता नाकाशादेः स्वतः सम्भवति जडत्वात् नापि प्रमाणात् प्रत्यक्षादेर्लौकिकमानत्वात्तस्य सम्भावित-दोषत्वेन निश्चायकत्वासम्भवात् नापि यतो वा इमानि भूतानि जायन्ते तस्मादात्मनः आकाशः सम्भूत इत्यादिश्रुतिस्तस्यास्तद्ब्रह्मेति ब्रह्मपदार्थस्यालौकिकस्य बोधकत्वात् तद्विजिज्ञासस्वेति जिज्ञासाविधिशेषत्वात् जन्मस्थितिभङ्गानां च ज्ञानातिरिक्तानां स्वीकारे द्वैतापत्तेः ब्रह्मपदार्थासत्त्वापतेः शक्तिग्राहकत्वाभावप्रसङ्गाच्च नेह नानास्ति किञ्चनेति श्रुत्या प्रपञ्चाभावस्य बोध्यत्वात् सत्त्वमेव तेषां नास्ति कुतो व्यावहारि-

खण्डनदर्पणः ।

शास्त्रीयव्यवहारः प्रातीतिकसत्त्वमूलकः व्यवहारत्वात् लौकिकव्यवहारवदित्याह—तादृशश्चेति । तत्त्वविदां संमतिमाह—एतदिति । स्वप्नव्यवहारवत् व्यवहारोऽयमु-च्यत इति भावः । नियमस्योभयसंप्रतिपन्नत्वाल्लाघवाच्च स एव कारणमित्युपपा-

खण्डनरत्नमालिका ।

अबाध्यसत्त्वावगमात् । तादृशः—कथाकालेऽबाधितः । उक्तेऽर्थे तत्त्वविदां समति-माह—एतदिति । उभयवादिसंप्रतिपन्नो नियम एव कथायामावश्यको न तु प्रमा-

व्यवहारनियमस्य कथाकारणत्वोपसंहारः ।

तस्माद् 'यादृग्व्यवहारनियमः कृतस्तन्मर्यादाऽनेन नोल्लङ्घिता'–इति यद्वादिवाग्व्यवहारे मध्यस्थावगमः, स विजयते; यस्य तु वचसि नैवं तस्यावगमस्तस्य पराजयः; यत्र वाद्युक्तनिग्रहसत्त्वावगमः, स निगृहीत; तदितरस्तु न तथा इत्यादिनियम एव कथारम्भाय ग्राह्यः ।

व्यवहारनियमस्य कथाकारणत्वेऽपि तत्सत्ताभ्युपगमनिरासः ।

अनेन नियमेन वक्तव्यम्'–इत्यस्य ह्ययमर्थः,–'अनेन नियमेनोक्तमनेने'-ति मध्यस्थावगमस्य विषयीभवितव्यमिति ।

---

खण्डनभावदीपिका ।

तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात्'' । ''सत्यं प्रसिद्धिरस्त्यत एव व्यवहरामः किन्तु नास्या मूलं पश्याम'' इत्यादौ मायावादिभिरेतदुक्तमित्यर्थः ।..........................

शाङ्करी ।

व द्वैतापत्तिरित्यत आह—अनेनेति । अवगमसत्तया द्वैतापत्तिं निरस्यति—

खण्डनभूषामणिः ।

कत्वाव्यस्तद्विशेषस्तदाहुर्भट्टचरणाः ''तस्माद्यन्नास्ति नास्त्येव यस्त्वस्ति परमार्थतः । तत्सत्यमन्यन्मिथ्येति न सत्यद्वयकल्पना'' इति । तस्मात्प्रतीतिरेव तेषामपि सत्तेति भावः । व्यावहारिकपदसिद्धिस्तु स्वागतादीनां चेत्यनेनैजागमनिषेधाद्वृद्धिभ्यां यथाह स्वागतिकः स्वाध्वरिकः स्वाङ्गिः व्याङ्गिः व्याडिः व्यावहारिक इति । वस्तुसत्ता न व्यवहाराङ्गं किंत्ववगम इति प्रागुक्तं निगमयति तस्मादिति । अदुष्टेपि न्याये दुष्टमिति विप्रलम्भकवाक्याद्दोषावगमो न पराजयहेतुरिति सूचयितुं मध्यस्थस्यावगम इत्युक्तम् । ननु वचसि नेत्यनेनाधिकरणतया वचसः स्वीकारे किमपराद्धं प्रमाणादिसत्त्वेनेति चेन्नासत्ख्यात्युपनीते तस्मिन् साहश्यावगमविषयत्वाभावज्ञानादिति भावः । समयबन्धमादाय तर्हि द्वैतापत्तिरित्याशङ्क्य तत्रापि ज्ञानगर्भतां व्युत्पादयति अनेन नियमेनेति । यद्यपि वक्तव्यमित्यन्तस्य नानेनोक्तमित्यादिरर्थः तथापि त्वयानेन नियमेन वक्तव्यमिति समय-

खण्डनदर्पणः ।

दितमित्युपसंहरति—तस्मादिति । तस्य मध्यस्थस्य तर्हि तन्नियमस्वीकारेपि द्वैतापत्तिरत आह—अनेनेति । तर्ह्यवगमस्यैव सत्ता स्वीकृता स्यादित्यत आह—

खण्डनरत्नमालिका ।

णादिसत्तापीत्युपपादितमुपसंहरति—तस्मादिति । यद्वादिवाग्व्यवहारे 'यादृग्व्यवहारनियमः कृतः तन्मर्यादाऽनेन नोल्लङ्घिता' इति मध्यस्थावगमः स विजयते इति योजना । अदुष्टेऽप्यनुमाने दुष्टमिदमनुमानमिति विप्रलम्भकवाक्यादवगमो न पराजयहेतुरिति सूचयितुं मध्यस्थग्रहणम् । यत्र—प्रतिवादिनि । नियम एवेति एवकारेण प्रमाणादिसत्तावगमस्य व्यवच्छेदः । ननु प्रमाणादिसत्त्वस्य कथाङ्गतानभ्युपगमेऽपि नियमबन्धस्य साभ्युपगतैवेति तावतैवाद्वैतक्षतिरिति शङ्कां परिहर्तुमाह—अनेनेति ।

मध्यस्थावगमसत्ताभ्युपगमेऽपि द्वैतापत्तिशङ्का तत्परिहारश्च ।

न च वाच्यमन्ततस्तदवगमस्यापि सत्ताभ्युपेयेति । तस्यापि सत्ताचिन्तायां तत्सत्तावगमान्तरस्यैव शरणत्वात् ।

ज्ञानव्यवहारार्थं ज्ञानान्तरानुसरणेऽनवस्थापरिहरणम् ।

नचैवमनवस्था । तदनुसरणाऽवश्यम्भावानङ्गीकारात् ,

---

शाङ्करी ।

**नच वाच्यमिति**। आपाततः सर्वशून्यतानयनगरप्रवेशे तात्पर्यम् । ननु ज्ञानमपि चेन्न परमार्थसत् किन्तु तज्ज्ञानात्तद्व्यवहारसिद्धिरेवं तत्र तत्रापि मन्तव्यं तदाऽनवस्थया कोपि व्यवहारो न सिद्ध्येदित्यत आह—**न चेति**। भवेदेवं यदि ज्ञानमवश्यं स्वव्यवहारार्थं स्यात्, किं तर्हि विषयव्यवहारार्थमनुसृतस्य व्यवजिहीर्षायां ज्ञानान्तरमनुस्रियतां न तु तत्त

खण्डनभूषामणिः ।

बन्धस्याशक्यत्वादुक्तव्यपदत्यागेन नियमबन्धः कार्य इत्याशयः। **अनेनेति** । द्वितीयस्य कथकेनेत्यर्थः इत्यन्तः प्रकारसमर्पक इत्यतो न नियमसिद्धिरिति भावः । अवगमे भरमादाय त्वया चेदेव निर्वाह्यते तर्हि किमवगमोस्ति चेत्तर्हि अवगमस्यापि किमवगमान्तरात् सिद्धिरङ्गीकार्या सापि नाबाधितसत्ता सम्भाव्यमाना अतः कथमवगमभ्रमादवगमः सिद्ध्येदित्यभिप्रायेण शङ्कते **न चेत्यादि अभ्युपेयेत्यनेन** । **शरणत्वादिति** । तथा च तस्यापि प्रातीतिकी सत्ता न पारमार्थिकीति भावः । अवगमः सन्निति वीक्षायामवगमोस्तीत्यवगमान्तरं चेच्छरणं तत्राप्यपरं तत्राप्यपरमित्यनवस्थापत्तिरित्याशङ्कते **नचेति**। यथा रत्नतत्त्वपरीक्षायां त्रयाणां चतुर्णां वा वाक्यात्सम्यग्ज्ञाने जाते न पुनः पुनर्ज्ञानान्तरमपेक्षते तथात्रापि ज्ञानान्तरानुसरणस्यानावश्यकत्वादित्याशयेन परिहरति **तदनुसरणावश्यम्भावानङ्गीकारादिति** । अन्यथा सर्वव्यवहारोच्छेदप्रसङ्गाद्यावद्धिज्ञानतज्ज्ञानपरम्परा नोदेति तावज्ज्ञानानामप्रतीतानामसत्त्वात् न च तान्यविरलप्रान्यनुभूयन्त इति तस्मादन्तिमज्ञानमप्रतीतमेव सत् न चैवं प्रमेयान्तरस्यापि

खण्डनदर्पणः ।

**न चेति** । आपाततः सर्वशून्यतावादमास्थायेदमुक्तं तथा च ज्ञानस्य व्यवहारोऽपि न ज्ञानसत्तयाऽपि तु तज्ज्ञानान्तरेणैवेत्यर्थः । ज्ञानमपि चेन्न परमार्थसत् किन्तु तज्ज्ञानात्तद्व्यवहारसिद्धिरेवं तत्र तत्रापि मन्तव्यं तदानवस्थया कोऽपि व्यवहारो न सिद्ध्येदित्यत आह—**न चेति—तदनुसरणेति**। त्रिचतुरकक्षापर्यन्तमेव ज्ञानानुसरणा-

खण्डनरत्नमालिका ।

तथाच अवगमसत्तैव सिद्धा न नियमबन्धसत्तेति भावः । नन्ववगमसत्ताङ्गीकारेऽपि द्वैतापत्तिरिति शङ्कते **न चेति। तदवगमस्य**—नियमबन्धावगमस्य । परिहरति—**तस्येति** । अर्थसत्त्वे प्रमाणाभावादवगमः कथं सन्निति जिज्ञासायामवगमोऽस्तीति अवगमान्तरमेव तस्य सत्त्वमित्यर्थः। प्रतीतेरेव सत्त्वं चेत्तदानवस्था स्यादित्याशङ्क्याह—**नचैवमिति** । यथा रत्नपरीक्षायां त्रयाणां चतुर्णां वा वाक्यात्सम्यग्ज्ञाने जाते न पुनः पुनर्ज्ञानान्तरमपेक्षते तथात्रापीति ज्ञानान्तरानुसरणमनावश्यकमिति नानवस्थेत्यभिप्रायः । [illegible]

"एवं त्रिचतुरज्ञानजन्मनो नाधिका मतिः"–इति न्यायात् ।

उक्तपरिहारे पूर्वासत्त्वाशङ्कापरिहारौ ।

नचान्तिमासत्त्वे पूर्वपूर्वप्रवाहाऽसत्त्वापत्तिः, तथाचाऽत्रगममादायापि

---

शाङ्करी ।

ज्ज्ञानव्यवहारपरम्पराधौव्यं, येनाऽनवस्था स्यादित्यर्थः अत्रार्थे भट्टाचार्य्यानुमतिमाह-एवमिति । प्राकट्यानुमेयज्ञानपक्षे तत्तज्ज्ञानपरम्परानुमानानवस्थापरिहारार्थं भट्टाचार्य्यचरणैरिदमुक्तमिति भावः । ननु ज्ञानस्यापि व्यावहारिकी सत्ता तथा चान्तिमज्ञानमव्यवह्रियमाणमसत्स्यात् तन्मात्राधीनसत्ताकं तत्पूर्वज्ञानमप्यसदापद्येत इत्याशङ्क्य सर्व-

खण्डनभूषामणिः ।

सत्ता परैरङ्गीक्रियते प्रमाणव्युत्पादनवैयर्थ्यापत्तेरिति भावः । आपततः तदनुसरणं हि विषयव्यवहारार्थं न ज्ञानव्यवहारार्थं न च सर्वस्यावश्यं व्यवहार्य्यता न चान्यव्यवहार सिद्धये ज्ञानज्ञानापेक्षा तथा सति सर्वव्यवहारोच्छेदापत्तेरिति भाव इति शङ्करमिश्राः ज्ञानत्रये चतुष्टये वा जाते ज्ञानान्तरं नापेक्ष्यत इत्यत्र भट्टाचार्याणां सम्मतिमाह एवमिति । "प्रार्थ्यते तावदेवैकं स्वतः प्रामाण्यमश्नुत" इत्युत्तरार्द्धम् तच्च प्रकृतविरुद्धतया न लिखितम् न वा तत्सम्मतिरत्रोक्ता तन्न्यायस्य ज्ञानस्वतःप्रामाण्यविषयत्वात् । एवं हि तत्र विचारितं किं सर्वमेव पूर्वज्ञानं परेण विरोधिविषयिणा बाध्यत एव नैवं यदि परं दुष्टकारणजन्यत्वबोधेन नैतदेवमिति विषयान्यथात्वबोधेन वा बाधितं न भवति तदेव स यदि हि बाधको द्वितीये प्रथमं निरपवादमेवौत्सर्गिकं प्रामाण्यं लभते ननु तृतीयमेव किमिति द्वितीयेन न बाध्यत इति चेन्नाज्ञायमानदोषो हि बाधको भवति न च द्वितीयं तथा किन्तु तृतीयमेव यदा तु तृतीयेपि ज्ञाने दोषनिर्णयो बाधकं वा जायते तदा द्वितीयेनैव पूर्वज्ञानस्य बाध इति चतुर्थज्ञानावसान एव निर्णयः यथाहुः "पूर्वबाधेन चोत्पत्तिरुत्तरस्य हि सिध्यति । तत्र दोषान्तरज्ञानं बाधधीर्वा परा न चेत् ॥ तदुद्भूतौ द्वितीयस्य मिथ्यात्वाद्बाध्यमानता" तृतीयेपि यदि बाधधीस्तदा चतुर्थेनैव द्वितीयस्य बाधकस्य निर्णयः न पुनः पञ्चमस्यावकाश इत्याशयेनाह–"एवं त्रिचतुरज्ञानजन्मनो नाधिका मतिः । प्रार्थ्यते तावतैवैकं स्वतः प्रामाण्यमश्नुत" इति अयं भावः प्रथमस्य स्वतः प्राप्तमपि प्रामाण्यं द्वितीयेन बाध्यते प्रकारीभूतधर्मस्य धर्मिणि अभावबोध एव पूर्वज्ञानस्य बाधः न तु तदुत्पत्तिप्रतिबन्धकत्वम् उत्पन्नं हि तत् न च तज्जातीयज्ञानान्तरोत्पत्तिप्रतिबन्धकत्वं द्वितीयस्य प्रमात्वे

खण्डनदर्पणः ।

अनवस्थेत्यर्थः । यथोक्ते भट्टाचार्यसंमतिमाह—एवमिति । "त्रिचतुरज्ञानजन्मनो नाधि-

खण्डनरत्नमालिका ।

संवादेन द्रढयति—एवमिति । प्रार्थ्यते तावतैवैकं स्वतः प्रामाण्यमश्नुते इति कारिकोत्तरार्द्धम् । अयमर्थः—दूरत्वादयो हि दोषा मिथ्यात्वहेतवो यत्र न सन्ति तज्ज्ञानं प्रमाणं यथा जागर्यायामालोके स्वस्थेन्द्रियमनस्कस्य सन्निहितघटज्ञाने यत्र तु दूरत्वादिदोषसम्भ-

व्यवहरतो न निस्तारः इति वाच्यम् । अस्तु, एवं हि, तथापि त्रिचतुर-

शाङ्करी ।

शून्यताभिप्रायेणेष्टापत्त्या परिहरति—अस्त्विति । अस्त्वितीष्टापादनं, सर्वासत्त्वमस्त्वित्यर्थः । एवं हीति । एवमेव यतो विचारबलात् सेत्स्यतीत्यर्थः । हि शब्दः

खण्डनभूषामणिः ।

पूर्वस्य भ्रमत्वनियमेन तज्जनकदोषाभावादेव तदनुत्पत्तेः, न च द्वितीयज्ञानाभाव एव तत्र दोषाभावः तथा चायातमेव तस्य तत्र प्रतिबन्धकत्वमिति वाच्यं द्वितीयज्ञानस्य दोषत्वे इतः पूर्वमपि तदनुत्पादापत्तेः कारणाभावे कार्याभावस्यावश्यकत्वात् , नापि पूर्वज्ञाननाशकत्वं पूर्वज्ञानजसंस्कारस्यापि बाधकत्वापत्तेः प्रमाया अपि स्वोत्तरेच्छाबाध्यतापत्तेः, नापि पूर्वज्ञानस्याप्रामाण्यबोधकत्वमेव बाधः द्वितीयज्ञानस्य बोधरूपत्वेन स्वतस्तथासामर्थ्याभावात्, नापि पूर्वज्ञानभ्रमः तदभाववति तत्प्रकारकत्वादिति लिङ्गोत्थापकतया ततः प्राक् तस्याबाध्यतापत्तौ तस्य प्रवर्तकतापत्तेः, न चेदं ज्ञानं भ्रम इति धीर्बाधः किन्तु ग्राह्याभावनिश्चय एव तथेति सौत्रान्तिकराद्धान्तः, नचैवं पूर्वधीरप्युत्तरस्य बाधिका स्यादिति वाच्यं ज्ञानान्तरगृहीतविषयाभावबोधस्य तथात्वादस्ति चोत्तरस्य तथात्वं न तु पूर्वस्येति न किञ्चित् तथा चोत्तरज्ञानं चेद्विषयाभावनिश्चयात्मकं तदा बाध एव अथ तत्र दुष्टकारणजन्यत्वनिश्चयस्तदा तद्विषयाभावनिश्चय एवेति पूर्वज्ञानमनपोदितप्रामाण्यं स्वविषयनिश्चयमेव अथ तृतीये ज्ञाने अप्रामाण्यनिश्चयस्तदा द्वितीयं ज्ञानमेव स्वविषयनिश्चयरूपं पूर्वधीबाधकमिति कुत्र पञ्चमज्ञानापेक्षा तद्द्वितीयज्ञानकार्यकारितया तृतीयस्थान एव निवेश्यं एवं षष्ठज्ञानमपि चतुर्थस्थानएवेति सम्यगुक्तं नाधिका मतिः प्रार्थ्यते बाधकत्वेनेति न त्विह तथा पूर्वज्ञानसत्ताया उत्तरज्ञानात्मकतया अवश्यं प्रार्थनीयत्वात्, यच्च रत्नतत्त्वपरीक्षावदिति व्याख्यानं तदपि न युक्तं समानविषयकज्ञानानां विसंवादाभावो ज्ञानत्रयेणापि सिध्यति न तु भिन्नविषयकज्ञानचतुष्टयस्य मिथोऽस्पष्टविपयस्येति, तस्मादेवमुत्तरार्द्धं वार्तिककारिकायां संयोज्यं "प्रार्थ्यते तावतैवेह कथाकार्य्यं प्रसिद्ध्यति" इति अप्रार्थने साम्यमुक्तन्यायस्तत्र प्रार्थने हेतुरिह तु कथासिद्धिरिति विशेषः प्रार्थनाभावस्तूभयत्राप्यविशिष्ट इति । अस्त्वेवं हि तथेति ।

खण्डनरत्नमालिका ।

वादप्रामाण्यशङ्का तदा तृतीयज्ञानेन निर्णयः अन्यथा तु द्वितीय एव निर्णयावधिः एवं च तृतीयेन चतुर्थेन वा द्वितीयस्य तृतीयस्य बाधे एकमाद्यं द्वितीयं वा प्रामाण्यमश्नुते स्वाभाविकं प्रामाण्यं तस्यानपोदितं तिष्ठतीति एवं प्रकृतेऽपि तावतैव पर्यवसानमिति भावः । ननूत्तरोत्तरज्ञानमेव पूर्वपूर्वज्ञानसत्त्वमिति सत्त्वावगमप्रवाहस्याविच्छेदेऽनवस्था विच्छेदेऽन्तिमज्ञानस्य प्रातीतिकसत्त्वमपि नास्ति इति उत्तरोत्तरासत्त्वेन आमूलमसत्त्वापत्तौ नकथारम्भसम्भव इति शङ्कते—नचेति । आमूलमसत्त्वापत्तौ इष्टसिद्धिरित्याह—अस्तु इति । एवं—तथा । आमूलमसत्त्वेऽपि व्यवहारमुपपादयति—

ज्ञानकक्षागवेषणमात्रविश्रान्तेन विचारेण ततः परमननुसरणरमणीयेनैव च समयं बद्ध्वा कथायां मिथः सम्प्रतिपत्त्या प्रवर्त्तनात् । अन्यथा प्रमाणादिसत्त्वाऽभ्युपगमेऽपि ज्ञानाऽनवस्थायाः दुष्परिहरत्वात् ।

---

शाङ्करी ।

किलाऽर्थे वा । ननु प्रमाणादिसत्त्वमनभ्युपगम्यापि कथाप्रवृत्तिरितीदानीं तवोद्देश्यं, तच्च सर्वासत्त्वस्वीकारविरुद्धं प्रमाणाद्यसत्त्वे विचारप्रवृत्त्यनवकाशादत आह—तथापीति । ननु प्रमाणादिसत्त्वैव कुतो नाभ्युपगम्यते इत्यत आह—अन्यथेति । त्रिचतुरकक्षाविश्रान्तिरेव तत्रापि शरणमनवस्थाभयादित्यर्थः । ननु मत्पक्षे ज्ञानं स्वरूपसदेव विषयव्यवहारसमर्थं, त्वत्पक्षे स्वरूपासतो ज्ञानस्य ज्ञानान्तरमेव सत्त्वमिति तज्ज्ञानस-

खण्डनभूषामणिः ।

एवं सति भवदुक्तयुक्त्युद्भावने सति तथैवास्त्वसत्त्वमेवास्तु हि शब्द एवार्थे अथ वास्तु तथा असत्त्वं हि यस्मादेवं भवदुक्तं भूषणं तस्मात् । अस्त्वेव हि तथेति पाठे क्वाचित्के हि यस्माद्विचार्यमाणं सर्वासत्त्वमेवास्त्वित्यर्थः । अस्तु इत्यपपाठः अस्त्वेव हीति तु सत्पाठः।न चैतावता व्यवहारभङ्ग इत्याह—त्रिचतुरेति । अननुसरणेनाविचारेणैव रमणीयेन न तु वस्तुतोपि तथैव समयबन्धान्न कथाभङ्ग इति भावः । कथाकोटेः गवेषणं पर्यालोचनं तावन्मात्रेण विश्रान्तः पर्याप्त एवं हि समयबन्धाधीना कथेति भवताप्यभ्युपेयेत्यत्र विपक्षबाधकमाह—अन्यथेति । वक्तव्यत्वे "को ब्रूते मती सा वित्तिरस-

खण्डनदर्पणः ।

का मतिः।प्रार्थ्यते तावतैवैकं स्वतः प्रामाण्यमश्नुत" इति भट्टाचार्यैरभिहितं अन्तिमज्ञानस्य प्रतीत्यन्तराङ्गीकारे वस्तुत आमूलमसत्त्वमापद्येतेति चेदिष्टसिद्धिरित्याह—अस्त्वेवमिति । अस्तु नाम तथेत्यर्थः । कथं तर्हि व्यवहार इत्याशङ्क्य त्रिचतुरज्ञानादूर्ध्वमविचार्यैव कथारम्भ इति संकेतकरणात्तत्सिद्धिरित्याह—त्रिचतुरेति। स्वरूपसत्त्वाङ्गीकारे लाघवमनवस्थाभावश्चातः सैवाङ्गीकार्येत्यत आह अन्यथेति । अर्थसत्त्वाङ्गीकारेऽपि तत्प्रमाणाननुसरणे न तत्सिद्धिरिति दुष्परिहरैवानवस्थेत्यर्थः । ननु ज्ञानसत्त्वपक्षे स्वरूपसदेव

खण्डनरत्नमालिका ।

**तथापीति** । त्रिचतुराणि च तानि ज्ञानानि तेषां कक्षासु कोटिषु गवेषणमात्रेण पर्यालोचनमात्रेण विश्रान्तो यो विचारस्तेन ततः परमविचारितरमणीयेन समयं संकेतं बध्वा कथायां प्रवृत्तिसम्भवादित्यर्थः । ननु अनवस्थाभावादर्थसत्त्वैव कुतो नाङ्गीक्रियतेऽत आह—अन्यथेति । अर्थसत्त्वाङ्गीकारे तत्प्रमाणस्याननुसरणे न तस्य सत्त्वम् अनुसरणेऽनवस्थेत्यर्थः । ननु मत्पक्षे स्वरूपसदेव ज्ञानं विषयव्यवहारजनकमिति प्रतीत्यन्तरानुसरणाभावान्नानवस्था त्वत्पक्षे तु स्वरूपेणासदेव ज्ञानमिति ज्ञानान्तरमेव तस्य

स्वरूपसत्तामादायाप्यनवस्थाया दुष्परिहरत्वम्—

**न च वाच्यं–मत्पक्षे स्वरूपसत्ता ज्ञानेन व्यवहारस्य चरितार्थयितुं शक्यत्वात् तज्ज्ञानपरम्पराऽननुसरणमुचितं, नत्वेवं त्वत्पक्षे स्वरूपसत्ता ज्ञानेन व्यवहारस्य चरितार्थता, ज्ञानस्वरूपसत्त्वाङ्गीकारप्रसङ्गादिति । स्वरूपसत्त्वमादायापि परिहरतो ऽनवस्थाप्रसङ्गस्य स्वप्रकाशप्रस्तावे वक्तव्यत्वात् । यथा च त्वत्पक्षे स्वरूपसत्त्वाऽविशेषेपि विज्ञानस्व-**

खण्डनभावदीपिका ।

......कथं तर्हि व्यवहारहेतुत्वमसत्त्वाविशेषादर्थस्यैव व्यवहारहेतुत्वं किं न स्यादित्याशङ्क्याह—**यथा चेति** । ननूपपादकमिति (उपपत्ति) जनकमुच्यते जनकं च नियतपूर्वक्ष-

शाङ्करी ।

स्वार्थमपरापरज्ञानानुसरणमवश्यमित्यनवस्थेति वैषम्यमाशङ्क्य परिहरति—**न च वाच्यमिति** । अज्ञायमानतायां–ज्ञानस्य स्वरूपसत्तापि न स्यात् "को(१) ब्रूते सती सा वित्तिः ? असत्येव किं न स्यात्—"इत्यादेः स्वप्रकाशप्रस्तावे वक्ष्यमाणत्वात् न वैषम्यमित्यर्थः । ननु ज्ञानस्याऽसत्त्वे कथं तदधीनो व्यवहारः ? अथाऽसदपि व्यवहारहेतुस्तदा सदैवासतो व्यवहारः स्यादविशेषादित्याशङ्क्याह—**यथा चेति** ।

खण्डनदर्पणः ।

तद्व्यवहारजनकन्न तु ज्ञानेन हि सति ज्ञाने तज्ज्ञानं विना व्यवहार इति नानवस्थात्वत्पक्षे तु स्वरूपासतो ज्ञानस्य ज्ञानान्तरमेव सत्त्वमिति तज्ज्ञानसत्वार्थमपरापरज्ञानानुसरणमित्यवश्यमनवस्थेति वैषम्यमाशङ्क्य परिहरति–**नचेत्यादिना वक्तव्यत्वादित्यन्तेन** । अज्ञायमानतायां ज्ञानस्य स्वरूपसत्तापि न स्यात् 'को ब्रूते सती सा वित्तिरसत्येव न कुत' इत्यादिषु **स्वप्रकाशप्रस्तावे** वक्ष्यमाणत्वान्न वैषम्यमित्यर्थः । न च सुषुप्त्याद्यनन्तरं प्रथमज्ञानस्य सत्त्वं द्वितीयज्ञानं तदभावे प्रथमज्ञानस्याप्यभावे व्यवहारो न स्यादिति वाच्यम् । असता ज्ञानेन तन्मते तदा व्यवहारादिति । ननु यदि ज्ञानं न सत्तदा तदसत्कथं व्यवहारहेतुरसदपि चेत्तथा तदा घटादिकमपि तथा स्यादविशेषादत आह–**यथा चेति** ।

खण्डनरत्नमालिका ।

सत्त्वमिति प्रतीत्यन्तरानुसरणादनवस्थेत्यावयोर्महद्वैलक्षण्यमित्याह—**नचेति** । कुत इत्यत आह—**स्वरूपेति** । **स्वप्रकाशप्रस्तावे** 'को ब्रूते सती सा वित्तिरसत्येव न कुतः' इत्यादौ अनवस्थाप्रसङ्गः स्वरूपसत्त्वमादाय प्रत्यवतिष्ठमानस्य वक्ष्यते इति न वैषम्यमित्यर्थः । ननु ज्ञानस्य असत्त्वे अर्थेनेव न तेन व्यवहारसम्भव इत्यत आह—**यथेति** । अयं भावः यथा सद्वादे अर्थस्य ज्ञानस्य च सत्त्वाविशेषेऽपि ज्ञानमेव व्यव-

(१) कोऽनुभवः ब्रूते–अनुभावयति यत् सत्येव सा वित्तिरिति न कोपि, ततश्चानुभावकाभावात्सा वित्तिरसत्येव किं न स्यादित्यर्थः ।

रूपसत्तैव परं व्यवहारोपपादिका, न घटादिसत्ता, एवमेव(१) असत्त्वाविशेषेपि ज्ञानमेवासद् व्यवहारोपपादकं नान्यत्।

इति कथारम्भे नैयायिकाभिमतप्रमाणसत्तास्वीकारावश्यकत्वस्य खण्डनम्

---

प्रसङ्गात्—असतः कारणत्वसमर्थनम्

असच्चोपपादकं च–इति व्याहतम्–इति चेन्न 'सदुपपादकम्'–इति कुतो ? न व्याहतम्। न हि सदुपपादकम्, असन्न,–इति क्वचिदावयोः सिद्धम्।

---

खण्डनभावदीपिका।

णसत् तेनोपपादकशब्देन सत्त्वस्याभिधानादसत्पदेन तदभावाभिधाने परस्परं व्याहतमिति शङ्कते-असच्चेति। कारणशब्दस्य नियतपूर्वक्षणवर्त्तिसत्तावाचकत्वं नास्माकं संप्रतिपन्नं तेन कुतो व्याघात इत्यभिप्रेत्य प्रतिवन्द्या परिहरति—न सदिति। तदेव-स्फुटयति–न हीति। कारणस्य सर्वदैव सत्त्वात् ततश्चेत्कार्यजन्म सर्वदैव तत्स्यादिति शाङ्करी।

असच्चेति। उपपत्तिकारणमुपपादकं, कारणं च नियतप्राक्कालसदिति व्याघातः॥कारणं(२) नियतप्राक्सदित्येव नास्ति, कुतो व्याघात इत्याह—सदिति। ननु यद्यसत्का-

खण्डनभूषामणिः।

त्येव किं न स्यादि"त्यनेन नान्यदिति। नाज्ञातं घटादिकं शशविषाणं वा। व्याहतमिति। उपपादकत्वं कारणत्वं तच्च सत्त्वगर्भमिति भावः। क्वचिदावयोः सिद्धमिति। यद्यपि

खण्डनदर्पणः।

उपपादकत्वन्नाम कारणत्वं तच्च नियप्रातक्सत्त्वरूपं तदभावश्चासत्त्वं तेन परस्परव्याघात इति देशयति–असच्चेति। नियतप्राक्सम्बन्धिकारणं नतु प्राक्सत्त्वम्। सम्बन्धश्च–सदसतोरविशिष्टः इत्यभिप्रायवान् प्रतिवन्दीन्यायेन परिहरति–नेति। न हीति। कारणपदवा-

खण्डनरत्नमालिका।

हारोपपादकं नार्थः एवमसद्वादे अर्थस्य ज्ञानस्य च असत्त्वाविशेषेऽपि ज्ञानमेव व्यवहारोपपादकं नार्थ इति। इदमत्र तत्त्वम् असद्वादे ज्ञानं न व्यवहारोपपादकमसत्त्वादर्थवदिति ज्ञानस्य व्यवहाराजनकत्वसाधने सद्वादेऽपि ज्ञानं न व्यवहारोपपादकं सत्त्वादर्थवदिति आभाससमानयोगक्षेमत्वमिति। उपपादकत्वमुपत्तिकारणत्वं कारणत्वं च नियतप्राक्सत्त्वरूपम् तदभावश्चासत्त्वम् तथा च परस्परं व्याघात इति शङ्कते—असदिति। सदिति। सदुपपादकमिति कुतः तथा च न व्याहतमित्यन्वयः। नियतप्राक्संबन्धि

---

(१) मत्पक्षे इति शेषः।

(२) कारणं यत्तन्नियतप्राक् सदेव नासदित्येवनाथापि सिद्धमिति कथं तदादाय व्याघात इत्यर्थः। यद्वा कारणं–नियतप्राक्सत् तथा च यथाऽसत्सदिति नास्ति तथा नियतप्राक्सत् नियतप्राक्सदित्येव नास्ति कुतोऽस्मान्प्रति व्याघात इत्यर्थः।

असतः कारणत्वाक्षेपः ।

**ननु तदसत्त्वाविशेषात्कार्य्यस्याऽन्यदापि जन्मप्रसङ्गः ।**

प्रतिवन्द्या परिहारः

**"न, कार्यस्याद्यसत्त्वात्क्षणे (१)इवान्यदापि सामग्र्यसत्त्वाऽविशेषात् तवापि किंनान्यदा कार्यजन्म ।**

---

खण्डनभावदीपिका ।

शङ्कते—**नन्विति** । प्रसङ्गसम्पादनेन परिहरति—**न कार्य्यस्येति** । यद्यपि त्वन्मते

शाङ्करी ।

रणं तदैतत्कालीनोत्पत्तिको घटः पूर्वमेव कथं नोत्पन्नः?इत्याह—**नन्विति** । एतद्घटोत्पत्तिक्षणभिन्नाः (२)क्षणा यद्येतद्घटथावत्कारणाऽधिकरणक्षणाऽव्यवहितोत्तरत्वविशिष्टाः स्युः, एतद्घटोत्पत्त्याधिकरणानि स्युरित्यापादनार्थः । **यद्वा** । (३)एतद्घटोत्पत्तिक्षणपूर्वक्षणो यद्येतद्घटसामग्र्यव्यवहितोत्तरक्षणः स्याद् एतद्घटोत्पत्तिक्षणः स्यादित्यापाद्यम् । कार्योत्पत्तिक्षणे सामग्री त्वयापि नेष्यते प्रागभावस्य तद्घटकस्याऽभावात्, तथाच यथा सामग्रीविरहिणि तस्मिन् क्षणे कार्यं, तथा क्षणान्तरेपि कथं न स्यादविशेषादित्याह—**न कार्यस्येति** । क्षणान्तराणां सामग्रीविनाकृतत्वात् त्वया घटोत्पत्त्यधिकर-

खण्डनभूषामणिः ।

शशविषाणे कारणत्वाभाव उभयसिद्धस्तथापि न सत्तां पुरस्कृत्य किंतु शशविषाणत्वादिकं

खण्डनदर्पणः ।

र्थं—तथा न निर्व्यूढमस्तीत्यसदेव कारणं किन्न स्यादित्यर्थः । **नन्विति** । न चाप्रसिद्धिः । घटोत्पत्तिपूर्वक्षणो यद्येतद्घटोत्पत्तिप्रयोजकयावदुत्तरक्षणः स्यादेतद्घटोत्पत्तिक्षणः स्यादित्यर्थात् । यद्यपि कारणवत् कार्यमप्यसदेवेति न नियम्यं व्यवहारस्तु तदज्ञानमात्रादेव तथाप्यभ्युपगम्य कार्यसत्त्वमत्र परिहारमाह—**न कार्यस्येति**—

खण्डनरत्नमालिका ।

कारणम् न तु सत्त्वगर्भम् सम्बन्धश्च सदसतोरविशिष्टइति भावः । ननु असतः कारणत्वे कार्यकालादन्यदापि तद् असदेव तथा च तदानीमपि कार्यं स्यादिति शङ्कते—**नन्विति** । **परिहरति—कार्यस्येति** । अयंभावः कार्योत्पत्तिकाले सामग्री अस्ति न वा आद्ये कार्यो-

---

( १ ) तवापि सत्कारणवादिनोमतो किं कारणसामग्रीघटकस्य प्रागभावस्याभावात् कार्यजन्म ! वा पूर्वभाविसामग्रीसत्त्वात् ! आहोस्वित् सकलसामग्र्यव्यवहितोत्तरत्वात् तत्राद्ये आह—कार्यस्येति ।

( २ ) यथाश्रुतमौलिकार्थव्याख्याने कार्यस्यान्यदाजन्मप्रसिद्ध्यभावादप्रसिद्धापादनं दोष इति तन्निरासाय विशिष्टमापादनार्थमाह—एतदिति । वस्तुगत्या एतद्घटोत्पत्त्यधिकरणक्षण एवैतद्घटकारणाव्यवहितोत्तरत्वविशिष्टः यदि तु एतद्घटोत्पत्तिक्षणभिन्नाः अपि क्षणा एतद्घटकारणदण्डाद्यव्यवहितोत्तरत्वविशिष्टाः स्युस्तदैतद्घटोत्पत्त्यधिकरणानि स्युरित्यर्थः ।

( ३ ) पूर्वं घटोत्पत्तिक्षणभिन्नेषु यावत्सु क्षणेषु घटाधिकरणत्वमापादितमिदानीं घटाव्यवहितप्राग्भाव्येकक्षणे तदापादयति यद्वेति ।

प्रतिबन्दीपरिहारः ।

अथ न मम तदानींतनं सामग्रीसत्त्वं तदानींतनस्य कार्यजन्मनो

खण्डनभावदीपिका ।

कार्य्यक्षणान्नियतपूर्वक्षणे सामग्र्याः सत्त्वं तथापि न तत्कार्यजन्मक्षणेऽप्यस्ति एवं व्यवहितपूर्वक्षणेऽप्यपि तत अव्यवहितपूर्वक्षणेष्वपि कार्यजन्म स्यादित्यर्थः । यद्वा कार्यसत्ताक्षणेषु न सामग्र्याः सत्त्वासत्त्वे प्रयोजके सामग्र्या स्वानन्तरक्षणे कार्य्यजन्मनियमात् तदप्रसङ्गात् । एवं सामग्र्यसत्त्वस्य कार्यजन्मनियामकत्वे सामग्रीप्रागभावप्रध्वंसक्षणेषु सदा कार्य्यं स्यादित्यर्थः । ननु ममासत्त्वं सामग्र्या न कार्य्यजन्मनियामकं किंतु तत्सत्त्वमेवेति शङ्कते—अथेति । ननु सामग्रीसत्त्वकार्यजन्मनोरेककालताभावात् कथं नियम्यनियामकभाव इति तत्राह—तथेति । प्रमाणसिद्धस्य शुष्कतर्केणापह्नवो

शाङ्करी ।

णत्वमापाद्यते तच्च तदा स्याद् यदि सामग्र्यसत्त्वं कार्योत्पत्तिनियामकमस्माभिरुक्तं भवेत्, नचैवं, किन्तु कार्य्याव्यवहितपूर्वक्षणसामग्रीसत्त्वमिति शङ्कते—अथेति। तस्मिन् क्षणे(१) नियमतः कार्योत्पत्तिदर्शनात् यथा पूर्वक्षणसामग्रीसत्त्वं तत्र नियामकं, तथा ममापि नियतकालकार्यदर्शनात् पूर्वक्षणसामग्र्यसत्त्वमेव किं न नियामकं स्यादिति परि-

खण्डनभूषामणिः ।

पुरस्कृत्यैव न च दण्डत्वादिपुरस्कारेण जनकत्वाभावः सिद्धः अवच्छेदको धर्म एव च कारणता न त्वन्यथासिद्धत्वे सति नियतप्राक्सत्त्वं नियमस्य प्रागभावस्य च दुर्निरूपत्वात् सत्त्वस्याबाधितत्वापरपर्यायस्य क्वाप्यप्रसिद्धेः कारणताघटकत्वाभावादिति भावः । ततश्च सदुपपादकमित्यपि नोभयसिद्धमिति किं सकलकारण एव कार्यमिति नियमात् कारणाभावकाले कथं कार्यं यदि स्यात्सर्वदा सदिति तव हृदयम् । यद्वा यावत्कारणाभावकालो न कार्यकालो यदि स्यात्तदा घटोत्पत्तिप्राक्कालोपि घटकालः स्यात् घटजन्मकालवद्घटकारणाभाववत्वादिति तत्र नाद्यः घटोत्पत्तिकाले घटप्रागभाववत्यपि कार्यजन्माङ्गीकारेण व्यभिचारात् अत एव न द्वितीयोपि अत एव नातिप्रसङ्गोपि केवलं मयैव समाधेय इत्याशयेन परिहरति नेति । कार्यस्याद्यक्षणे यथा सामग्री

खण्डनदर्पणः ।

आद्येति । तवापि कार्योत्पत्तिक्षणे कार्यप्रागभावघटितसामग्री नास्तीति सामग्र्यसत्त्वाविशेषादन्यदापि न कुतः कार्यजन्मेत्यर्थः । अथेति । सामग्र्यसत्वमसत्त्वादेव न नियामकं

खण्डनरत्नमालिका ।

त्पत्तिद्वितीयक्षणेऽपि कार्योत्पादप्रसङ्गः द्वितीये प्रागूर्ध्वं च तदसत्त्वाविशेषात् तवापि कार्यजन्म स्यादिति । ननु कार्यजन्मकाले न मया सामग्री अपेक्ष्यते किन्तु ततः पूर्वकाले इति न मम दोषइत्याशङ्कते—अथेति । ननु कार्यजन्मकाले सामग्र्या असत्त्वा-

(१) तस्मिन् क्षणे—कार्यक्षणे ।

नियामकं, किंतु ततः प्राक् सामग्रीसत्त्वं, तथादर्शनात् ।

तद्रीत्यैव असतःकारणत्वाक्षेपपरिहणम् ।

तर्हि ममापि कालान्तरस्थमपि तदसत्त्वं तदातनकार्यजन्मनो निया-

खण्डनभावदीपिका ।

न युक्त इति भावः । यथा तव सामग्रीक्षणोत्तरक्षणत्वाविशेषेऽपि प्रथमक्षण एव कार्यजन्म नोत्तरेपु एवं मम कारणस्यासत्त्वाविशेषेऽपि पूर्वक्षणावच्छिन्नमेव तदसत्त्वं कार्यजन्मनियामकं तथादृष्टत्वादिति परिहरति—तर्हीति । कारणस्य सदसत्त्वयोरव्याप्यनिर्णीतत्वात् कार्यजन्मनियमस्य चोभयवादिसम्प्रतिपन्नत्वात् दर्शनमुभयवादिसाधारणमित्यर्थः।

शाङ्करी ।

हरति—तर्हीति । सामग्रीसत्त्वं पूर्वक्षणमात्रे, तदसत्त्वे च सार्वत्रिकमिति महद्वैषम्यम्, तथापि कार्यमप्यसदेवेति हृदयम्(१)। पूर्वापादनं तु तदा स्याद् यदि घटोत्पत्तिक्षणातिरि-

खण्डनभूषामणिः ।

नास्ति तत्सत्त्वे तदुत्तरक्षणेपि कार्योत्पत्तिः किं तु पूर्वक्षण एव तथा च सामग्र्यसत्त्वकाल एव कार्योत्पाद इति भवतां मतं तदा घटादिप्राक्कालेपि कुतो न घटोत्पत्तिप्रसङ्गः तच्च "यत्रोभयोः समो दोषः परिहारोपि वा समः । नैकस्तत्रानुयोक्तव्य स्तादृगर्थविचारणे" इति वा पद्यं "तत्र वैकोनुयोज्यः स्यात्स्वस्य दोषप्रसङ्गतः।यदि च तव सामग्र्या असत्त्वं न नियामकम्" अतिप्रसङ्गादेव किं तु सामग्रीसत्त्वं तदपि न निर्विशेषणं किं तु प्राक्कालावच्छिन्नं तन्ममापि प्राक्कालविशेषावच्छिन्नं कारणसत्त्वं घटव्यवहितप्राक्काले नास्तीति नातिप्रसङ्गः यदि चावच्छेदकावच्छेदकस्य कार्यं प्रति प्रयोजकता यदा कदाचित् स्थित्यैवेति कार्योत्पादानन्तरमपि द्वितीयक्षणे घटोत्पादो दुर्वारो मम तु प्रागभावादेव नातिप्रसङ्ग इति शक्यते वक्तुं त्वया तथापि असतः अवच्छेदकावच्छिन्नस्यैव नियामकत्वं

खण्डनदर्पणः ।

तव तु न तथेति वैषम्यमित्यर्थः । तर्हीति । यथा तव सामग्र्युत्तरत्वाविशेषेपि प्रथमक्षण एव कार्यजन्म नोत्तरक्षणेपु तथा ममापि कारणसत्त्वाविशेषेऽपि पूर्वक्षणावच्छिन्नमेव तदसत्त्वं कार्यजन्मनियामकं, तथा दृष्टत्वादेव—कार्यजन्मनः स्फुटत्वादेव—कारणस्य सत्त्वासत्त्वयोरव्याप्यनिर्णीत्वादित्यर्थः । ननु सामग्र्याप्यसत्त्वे कार्यस्य पूर्वक्षण

खण्डनरत्नमालिका ।

द्विभिन्नकालीनयोः कथं नियम्यनियामकभावइत्याह—तथादर्शनादिति न हि दृष्टेऽनुपपन्नं नामेतिभावः । परिहरति—तर्हीति । कालान्तरस्थं—घटाव्यवहितप्राक्कालीनम् । पूर्वकालावच्छिन्नसद्वत् पूर्वकालावच्छिन्नासदेव कार्यनियामकमिति भावः ।

(१) अयं भावः भवेदिदं वैषम्यं यद्येतादृशं कार्यस्याप्यसत्त्वं मया नोच्येत किन्तु पारमार्थिकत्वधर्मपुरस्कारेण कार्यकारणयोरुभयोरप्यसत्त्वमेव, व्यावहारिकत्वेन तु कदाचित्कार्यस्य सत्त्वोपलम्भात्तदव्यवहितप्राक्क्षणमात्रे परमार्थतोऽसतोऽपि कारणस्य व्यवहारिकं सत्त्वं मयाप्यङ्गीकरणीयमेवेत्यतो न वैषम्यमिति।

**मकं, तथादर्शनादेव ।**

सत्कारणत्ववादिना स्वमतेनियामकान्तरस्य कथनम् ।

**मम तु तदव्यवहितोत्तरत्वं तदा कार्यजन्मनो नियामकम्—इति चेत्,**

खण्डनभावदीपिका ।

सामग्र्यवच्छेदकक्षणाव्यवहितोत्तरक्षणत्वं कार्यजन्मनियामकं मन्मते तेन क्षणान्तरेषु न कार्य्यजन्मप्रसक्तिः तस्य तन्मात्रवृत्तित्वात् नापि वैयधिकरण्यमिति (१) शङ्कते—**ममेति**।

शाङ्करी ।

त्नानामपि क्षणानां यावद्धटप्रयोजकोत्तरत्वं(२) मयाऽभ्युपगम्येत, नत्वेवं, किन्तु घटजन्मक्षणस्यैव, तत्पूर्वक्षणवर्त्तिसामग्र्यसत्त्वस्यैव घटप्रयोजकत्वेन मयाभ्युपगमात् । न वयं भिन्नकालीनं सामग्रीसत्त्वं कार्यजन्मनियामकं ब्रूमोऽपि तु कार्योत्पत्तिसमानकालीनमेव सामग्रीसत्त्वाव्यवहितोत्तरत्वं तथा च न साम्यमित्याह—**मम त्विति** । **सम-**

खण्डनभूषामणिः ।

फलानतिप्रसङ्गायास्थेयम् अस्तु वा प्राक्कालेपि नियामकः सोऽपि चासन्नेवावच्छेदकवन्नियामकः । न चाव्यवहितप्राक्कालः तत्पूर्वमप्यसत् कथं नियामकः स्यादिति वाच्यं भवता प्रमीयमानसत्त्वस्यैवास्माभिरसत्वेनाभिमतत्वात् न चासावन्यथा भवदभिमतसत्त्वम् । **एतेनैव** यद्यपि सामग्रीसत्त्वं पूर्वक्षणमात्रे सामग्र्यसत्वं तु सार्वदिकमिति महद्वैषम्यमिति **निरस्तम्** । भवदभिमतायाः सामग्र्या एव मया पारमर्थिकत्वाभावेनासत्वेनाभ्युपगमात् तथा च भवदभिमतसामग्रीत्वव्याप्यमसत्त्वं पूर्वक्षणमात्रवृत्त्येवेत्यदोष इत्याशयेनाह—**कालान्तरस्थमपि तदसत्वमिति** । घटाव्यवहितप्राक्कालावच्छिन्नमसत्त्वमित्यर्थः **यद्वा** कालान्तरं घटकालाद्भिन्नः कालः प्रागभावानवच्छिन्नोपि तत्स्थं तत्स्थत्वेन प्रतीयमानं शशशृङ्गाद्यसत्वतो विलक्षणतत्कार्यकालत्वेनाभिमते काले यत्कार्यस्य जन्मनो नियामकमेतत्कालीनकार्यत्वं तस्य जन्यतावच्छेदकम् **अथवा** अस्मिन् काल एव तेन कार्यं जन्यते यथा घटप्रागभावोऽनादिरपि चरमकारणकाल एव घटकालोपधायकः किं तु सामग्र्यव्यवहितोत्तरत्वकार्यजन्मनोः समानकालीनयोरेवेत्याशङ्कते **ममेति** । त्वया तु नैतच्छक्यं वक्तुमसत्वाविशेषादिति भावः । यद्यपि त्वया तथाभ्यु-

खण्डनदर्पणः ।

इत्येव न स्यात् किं तु स्यादेव न स्यादेव वा न तु कदाचित्स्यादिति चेन्न, कार्यदर्शनादर्शनाभ्यां तथा नियमादिति। **तदव्यवहितेति**।सामग्रीकालाऽव्यवहितोत्तरत्वमित्यर्थः।

खण्डनरत्नमालिका ।

नियतप्राक्सत् कारणं नियतोत्तरं सत्कार्यमित्यङ्गीकारात् सामाग्रीकालाव्यवहितोत्तरत्वं प्रयोजकत्वं तथा च न क्षणान्तरे कार्यसत्त्वप्रसङ्गः सामग्र्यव्यवहितोत्तरत्वकार्यजन्मनोरेककालीनतया न नियम्यनियामकभावानुपपत्तिरपीत्याशयेनशङ्कते **ममेति** ।

(१) न च भिन्नकालीनत्वमित्यर्थः तथा च न नियम्यनियामकभावानुपपत्तिशङ्केतिभावः ।
(२) यावत्स्वस्य प्रयोजकेऽन्वयः ।

उक्तस्य नियामकान्तरस्य खण्डनम्—

न, समसमयत्वादाऽऽगन्तुकत्वाच्चाऽविशेषेण नियम्यनियामक-

खण्डनभावदीपिका ।

परिहरति—न समसमयत्वादिति । उत्तरक्षणत्वकार्यजन्मनोर्यौगपद्यात् सव्येतरगोविषाणयोरिव न नियम्यनियामकभावः संभवतीत्यर्थः । ननु समसमयत्वेऽपि

शाङ्करी ।

समयत्वादिति । यदेव कार्योत्पत्तिक्षणत्वं तदेव सामग्र्युत्तरक्षणत्वमिति कथमभेदेनैव नियम्यनियामकभावः, समयस्य—क्षणस्य, समत्वादेकत्वादित्यर्थः । नचोपाधिभेदाद्भेदः । तथा सति दण्डित्वकुण्डलित्वाभ्यां देवदत्तो भिद्येत, देशकालौ कामं भिद्येयातां नतु तदुपरक्तस्वभावः(१) पद्मरागो मणिः–इति च तत्रैव वाचस्पतेरभिधानादिति भावः । यद्वा तुल्यकालयोः सामग्र्युत्तरक्षणत्वकार्यक्षणत्वयोः सव्येतरविषाणवन्नियम्यनियामकभावाऽभावादित्यर्थः । यद्वा समयः—व्यवस्था, तेन समसमयत्वान्नियम्यनियामकयोः समव्यवस्थत्वात्, तथाच कार्यनियामकत्वेनाभिमतस्य सामग्र्युत्तरत्वस्य नियामकान्तरं वाच्यमित्यर्थः । एतदेवाग्रे "अन्यथा यद्विशेषान्तरं तदपि"—इत्यादिना स्फुटयिष्यति । यद्वा समयः सङ्केतः तथाच कार्यक्षणसामग्र्युत्तरक्षणयोरेकार्थवाचकत्वेन

खण्डनभूषामणिः ।

पगमेऽप्यस्माकं तदनभ्युपगमान्न क्षतिः भिन्नकालयोस्तदभ्युपगमादेव स्वाभीष्टसिद्धेस्तस्यापि न समसमयत्वादिति । अव्यवहितोत्तरत्वस्य कार्येण समकालत्वात् । ययोरेकमनागन्तुकं स्यात्तत्र तदेव नियामकं स्यादिह तु द्वयोरप्यागन्तुकयोर्नियामकाकाङ्क्षायामविशेषान्नियामकत्वं न विनिगन्तुं शक्यते । यद्वा समयो व्यवस्था अवस्थितिनियमः सा द्वयोरपि साध्या कार्यजन्मनोर्व्यवस्था सामग्र्युत्तरत्वमपि कुत्रचिदेवास्ति अत्र किन्नियामकमत्र हेतुः आगन्तुकत्वात् अस्वाभाविकत्वात् यथा हि

खण्डनदर्पणः ।

तथा च नातिप्रसङ्ग इति भावः । नियतोत्तरत्वन्नाम धर्म्मः कार्यस्य भिन्नकालोऽभिन्नकालो वा प्रथमे दत्तमुत्तरं द्वितीये सामग्र्युत्तरक्षणत्वकार्यक्षणत्वयोर्नियम्यनियामकभावानुपपत्तिःसव्येतरकरयोरिवेति परहरति–नेति । कारणकार्यनियम्यनियामकभावस्य पूर्वापरीभावगर्भत्वादित्यर्थः। न च समानकालयोरपि रूपरसयोरिव नियम्यनियामकभावोऽस्त्विति–वाच्यं दृष्टान्तासिद्धेरिति भावः । उत्तरत्वमपि नियामकान्तरपूर्वकं चेदनवस्था न चेत्

खण्डनरत्नमालिका ।

परिहरति–नेति । समसमयत्वादिति । समः समयो ययोस्तयोर्भावस्तत्त्वं तस्मात् समकालीनत्वादित्यर्थः । अयंभावः समकालीनयोः समग्रीकालाव्यवहितोत्तरत्वकार्ययोः सव्येतरविषाणयोरिव नियम्यनियामकभावानुपपत्तिः नियम्यनियामकभावस्य पूर्वापरीभा-

(१) देशकालौ कामं—यथेष्टं भिद्येयातां नतु देशकालभेदेन पद्मरागो मणिर्भिद्यत इत्यर्थः।

व्यवस्थाऽनुपपत्तेः ।

खण्डनभावदीपिका ।

नियम्यनियामकभावो दृश्यत इत्यत आह—आगन्तुकत्वादिति। नियामकत्वेनाभिमतस्य पूर्वमिहासत्त्वान्नियम्यनियामकयोश्चान्यत्र पूर्वापरभावगम्यत्वनियमान्नियामकापेक्षयोर्युगपदुत्पन्नत्वात्तयोरन्यत एव नियम्यत्वं न तु परस्परमित्यर्थः । यद्वा किमिदं नियामकत्वं किं कारणत्वमुत व्याप्यत्वमाद्ये दूषणमाह-समसमयत्वादिति । द्वितीये दूषणमाह-आगन्तुकत्वादिति । सर्वस्यासत्त्वाविशेषात्सामग्र्याश्चाप्यसत्त्वमेवेति सामग्रीसत्त्वस्य पूर्वमप्रसिद्धत्वात्, न तदवच्छिन्नोत्तरक्षणत्वव्याप्यतया सिद्ध्यतीत्यर्थः । इहागन्तुकशब्देन तत्प्रागसिद्धत्वं विवक्षितमिति द्रष्टव्यम् । परिशेषा-

शाङ्करी ।

तदुपस्थाप्ययोर्घटकलशपदोपस्थाप्ययोरिव न नियम्यनियामकभाव इत्यर्थः । आगन्तुकत्वादिति । अव्यवस्थितोपनिपातित्वात्, आकस्मिकोपनिपातिन्यतिथ्यादावागन्तुकपदप्रयोगात्, तथाचाऽऽगन्तुकाऽऽकस्मिकी सामग्री स्वोत्तरत्वेन कार्यजन्म कथं नियमयेदित्यर्थः। यद्वा(१) प्रागभावेतरयावत्कादाचित्ककारणप्रागभावानाधारः कार्यप्रागभावाधारः क्षणः सामग्रीत्युच्यते, कार्यप्रागभावः कार्यानुत्पाद एव, तथाच-कार्यानुत्पादः कार्योत्पादं नियमयति इति पर्यवसितं, तच्चाऽनुपपन्नं, कार्यानुत्पादस्य कार्योत्पादं प्रति आगन्तुकत्वात्—उदासीनत्वात्, उदासीनो ह्यागन्तुक इत्युच्यते इत्यर्थः । तथाच समसमयत्वाऽऽगन्तुकत्वाभ्यामविशिष्टयोस्त्वदभिमतनियम्यनियामकयोर्न नियम्यनियामकभाव इति समुदायार्थः । अन्ये तु आगन्तुकत्वादन्यथासिद्धत्वादिति वा आगन्तु-

खण्डनभूषामणिः ।

आकाशस्य शब्दाश्रयत्वं स्वाभाविकं न तथा कालस्य सामग्र्युत्तरत्वं सर्वक्षणानां तथा त्वापत्तेरिति भावः। "आगन्तुकत्वात्-अन्यथासिद्धत्वात्-अप्रसनियामकत्वादिति वार्थः" इत्येके तच्चिन्त्यम्। यत्तु-समसमययोरपि रूपरसयोरागन्तुकयोरपि च वह्निधूमयोर्नियम्यनियामकभावो दृष्ट इति केचित्तन्न तत्रापि रूपनियामकस्य तेजोरूपकालोपाध्यव-

खण्डनदर्पणः ।

स्वयमव्यवस्थितं कथमन्यद् व्यवस्थापयेदित्याह-आगन्तुकत्वादिति । तस्मात्प्राक्सा-

खण्डनरत्नमालिका ।

वगर्भत्वादिति भावः। आगन्तुकत्वादिति । अव्यवस्थितोपनिपातित्वादित्यर्थः । उत्तरत्वं नियामकपूर्वकं नवा आद्येऽनवस्था द्वितीये स्वयमव्यवस्थितं कथमन्यद्व्यवस्थापये-

(१) कार्यप्रागभावाधारः क्षणः सामग्रीत्येतावन्मात्रोक्तौ दण्डादिकारणप्रागभावक्षणस्यापि घटादिसामग्रीत्वं स्यादत उक्तं यावत्कारणप्रागभावानाधार इति एवमपि यावदन्तर्गतानां देशकालादीनां प्रागभावस्यैवाभावात्तदनाधारः क्षणः सर्वदैवास्तीति पुनरपि स दोषस्तदवस्थ इत्यत उक्तं कादाचित्केति । कादाचित्कं कारणमनादिप्रागभावोऽपीति पुनरुक्तदोषानुद्धार इति प्रागभावेतरेत्युक्तम् ।

उपसंहारः—

तस्मात् 'अन्यदास्थाया एव सामग्र्यास्तदा कार्यजन्मनियमोऽभ्युपेयः, तथा दर्शनात्'—इत्येव मन्तव्यम् , तथाच समः समाधिः ।

खण्डनभावदीपिका ।

तस्मादुक्तमेवापतेदित्याह—तस्मादिति । अन्यदास्थायाः कालान्तरवर्तिन्याः तदा सामग्र्यव्यवहिते क्षणे समः समाधिरिति । दर्शनबलादेवान्यदास्थमपि कारणासत्त्वं कार्यजन्मसमय एव नियामकमन्यकालीनत्वस्य सत्त्वासत्त्वयोः साधारणत्वात् । सामग्रीसत्ताऽव्यवहितोत्तरक्षणत्वं यद्यपि नियामकं न भवति तथापि कार्यजन्मकालस्य

शाङ्करी ।

कत्वादक्लृप्तनियामकत्वादिति वाऽर्थः—इत्याहुः । यद्यपि समसमययोरप्यागन्तुकयोरपि रूपरसयोर्वह्निधूमयोरिव नियम्यनियामकभावो दृष्ट एव, तथापि कार्यस्याऽसत्त्वमेवेति हृदयम् । तस्मादिति । सामग्र्युत्तरक्षणत्वस्य नियामकत्वे खण्डिते भिन्नकालापि त्वया सामग्र्येव नियामिका वाच्या, तथा च भिन्नकालसामग्र्यसत्त्वमेव किं न नियामकमिति समः समाधिरित्यर्थः । ननु क्षणान्तरेभ्यः कार्यजन्मक्षणस्य वैलक्षण्यमवश्यमभ्युपेयं, तच्च वैलक्षण्यं न तावत्सामग्र्यसत्त्वं, तस्य क्षणान्तरसाधारण्यात्, तथाच सामग्र्युत्तर-

खण्डनभूषामणिः ।

च्छेदेन जन्यरसनियामकस्य च प्रलयेऽधिककालवृत्तित्वात् आगन्तुकस्य स्वातन्त्र्येणाहेतुत्वाच्च । अन्यदास्थाया इति । अन्यदा तिष्ठतीत्यन्यदास्था । ननु असतः कार्यकाल एव जनकत्वं दर्शनबलादिति वदता कार्यकालस्य विशेषो निरस्यः सद्वादिनस्तु कार्य-

खण्डनदर्पणः ।

मग्रीसत्त्वं नियामकमिति पक्षोऽवशिष्यते इत्याह—तस्मादिति। अन्यदास्थायाः पूर्वक्षणवर्तिन्या इति यावत् । भवतु तव तावता को लाभ इत्यत आह—तथाचेति । यथा तव भिन्नकालीना सामग्री नियामिका तथा ममापि भिन्नकालीनसामग्र्यसत्त्वमेव किं नियामकं न स्यादिति समः समाधिरित्यर्थः । ननु सामग्रीसत्त्वाऽव्यवहितोत्तरक्षणत्वस्य नियामकत्वाभावेपि कार्यजन्मकालस्य व्यावर्त्तकं वक्तव्यमेव त्वत्पक्षे तु साम-

खण्डनरत्नमालिका ।

दिति भावः । अविशेषेणेति । समसमयत्वस्य आगन्तुकत्वस्य च उभयोः समत्वेन को नियम्यः को नियामक इति व्यवस्था न स्यादिति भावः । उपसंहरति—तस्मात—सामग्र्युत्तरत्वस्य नियामकत्वासम्भवात् । अन्यदास्थायाः अन्यस्मिन् कार्यक्षणान्यस्मिन् कार्यपूर्वक्षणे इति यावत् आस्था स्थितिर्यस्या इतिविग्रहः—अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु'' इति सूत्रेण अन्यशब्दस्य दुगागमः। सामग्र्युत्तरत्वस्य कार्यनियामकत्वे खण्डिते भिन्नकालीनायाः सामग्र्याः सत्त्वस्यकार्यनियाकत्वं त्वयाभ्युपेयम् तथा च मयापि भिन्नकालीनसामग्र्यसत्त्वं कस्मान्न नियामकमभ्युपेयमिति समः समाधिरित्यर्थः । ननु सामग्रीसत्त्वाव्यवहितोत्तरक्षणत्वं यद्यपि

असतः कारणत्वमिति वदता कार्यकालाकार्यकालयोर्विशेषस्य प्रदर्शनम्—

तथापि कार्यजन्मकालस्य को विशेषः । कार्यजन्मैव । अन्यथा

खण्डनभावदीपिका ।

व्यावर्तकं भवत्येव तव तु सामग्र्यसत्त्वमङ्गीकुर्वतो न व्यावर्तकं पश्याम इति शङ्कते **तथापीति**। कार्योत्पत्तिकालत्वमेवेतरकालात्तस्य व्यावर्तकमिति परिहरति-**कार्येति**। ननु तेनैव कथं तन्निवृत्तिरित्यत आह-**अन्यथेति** । अनवस्थापरिहाराय ततोऽपि गत्वा त्वयापि विशेषान्तरमन्तरेण कस्यापि विशेषस्य व्यावर्तकत्वं वक्तव्यम् । तत्प्रथमकक्षायामेव लाघवान्मयोक्तमित्यर्थः । व्यावृत्तेषु कार्योत्पत्तिकालेष्वमन्मतं

शाङ्करी ।

क्षणत्वमेव तथा वाच्यम् क्षणान्तरव्यावृत्तत्वादिति तदेव नियामकमित्यनुशयानः पृच्छति । **तथापीति** । उत्तरम्—**कार्येति** । विनिगमकमाह—**अन्यथेति** । सामग्र्युत्तरत्वेपि विशेषान्तरमनुसरणीयम् , एवं तत्र तत्रापीत्यनवस्थेत्यर्थः । यद्यपि कार्यजन्मकाले सामग्र्युत्तरत्वं, तत्र च सामग्री, तस्यामपि तत्सामग्रीत्यपर्यवसानमेवेष्टं प्रा-

खण्डनभूषामणिः ।

सत्तासम्बन्ध एव विशेषः न च भवतां कार्यस्यापि सत्तास्तीत्याशयेन शङ्कते—**तथापीति** । सिद्धान्ती त्वाह-**कार्येति** । नह्यसत्कार्यजन्म कार्यजन्मने प्रभवति त्वयापि हि कार्यजन्मैव विशेषो वाच्यः अन्यथा यद्विशेषान्तरं कार्यसत्तासम्बन्धादिकं त्वयोच्यते तदपि निर्विशेषस्य कालस्य चेत्तर्हि अनियमः सविशेषस्य चेद्विशेषसम्बन्धोपि कालमात्रस्य चेत्तदातिप्रसङ्ग इति तस्यापि विशेषान्तरवत्त्वेव सम्बन्ध इत्यनवस्था स्यादित्यर्थ इत्यनुभूतिस्वरूपपादाः। **मिश्रास्तु** कार्यजन्मक्षणस्य क्षणान्तरेभ्यो वैलक्षण्यमवश्यं वाच्यं तच्च न सामग्र्यसत्त्वं तस्य क्षणान्तरेपि सत्त्वात् किं तु सामग्र्युत्तरक्षणत्वमेव वाच्यं तथा च तदेव नियामकमित्याशयेन पृच्छति **तथापीति** । उत्तरम्-**कार्येति** । विनिगमकमाह—**अन्यथेति** । सामग्र्युत्तरत्वं क्वेत्यत्रापि विशे-

खण्डनदर्पणः ।

ग्र्यसत्त्वं न तत्कालव्यावर्तकं तस्य क्षणान्तरसाधारणत्वात् । तथा च सामग्र्युत्तरत्वं तथा वाच्यं क्षणान्तरव्यावृत्तत्वादिति तदेव नियामकमित्यप्रेत्य पृच्छति-**तथापीति**। यद्यपि कारणमिव कार्यमप्यसदेवेति तत्र समयविशेषप्रश्नो न युक्तः तथापि प्रतिबन्दिमुखेनैव साधनोपक्रमाद्विशेषमाह **कार्यजन्मैवेति**। विनिगमकमाह-**अन्यथेति**-सामग्र्यु-

खण्डनरत्नमालिका ।

कार्यजन्मनो नियामकं न सम्भवति तथापि इतरकाले तस्य व्यावर्तकम्भवत्येव तव तु सामग्र्यसत्त्वमभ्युपगच्छतो न किञ्चिद्व्यावर्तकं पश्याम इति शङ्कते-**तथापीति**। परिहरति-**कार्यजन्मैवेति** । कार्योत्पत्तिकालत्वमेव तस्येतरकालव्यावर्तकमिति भावः । ननु तेनैव कथं तस्य व्यावृत्तिरित्यत आह—**अन्यथेति** । त्वयापि कार्यकालस्य व्यावर्तको

यद्विशेषान्तरं तदपि विशेषान्तरवतः कालस्य स्यादित्यपर्य्यवसानमेव पर्य्यवस्येत् ।

खण्डनभावदीपिका ।

सामग्रीसत्ताव्यवहितोत्तरकालत्वमनुगतप्रत्ययहेतुः त्वन्मते तु सामग्रीसत्तानङ्गीकारा-

शाङ्करी ।

माणिकत्वात्, नच कार्यजन्मकालगता एव सर्वे विशेषा अभिमताः नच सामग्रीपरम्परायास्तथात्वमिति वाच्यम्, सामग्रीपरम्पराया अपि परम्परया कार्यजन्मकाल-

खण्डनभूषामणिः ।

षान्तरजिज्ञासायां विशेषान्तरेणोत्तरे पुनस्तत्राप्येवमित्यनवस्थेति व्याख्याय यद्यपि कार्यजन्मकाले सामग्र्युत्तरत्वं तत्र च तत्सामग्री तत्रापि तत्सामग्रीत्यपर्यवसानमेवेष्टं प्रामाणिकत्वात् । न च कार्यजन्मकालगता एव सर्वे विशेषा अपेक्षिताः न च सामग्रीपरंपरायास्तथात्वमिति वाच्यं सामग्रीपरंपराया अपि कार्यजन्मकालस्यैव विशेषत्वात् अन्यथा कार्यजन्मकालस्य कार्यजन्मैव विशेष इति त्वदुक्तमपि न निर्वहेदिति तत्रापि विशेषान्तरानुसरणस्यावश्यकत्वात् । तथापि कार्यमप्यसदेवेति हृदयमिति दूषितवन्तः तदसत् कार्यजन्मक्षणेषु कार्येणानुगतेषु सामग्र्युत्तरत्वसामग्रीत्वादीनामननुगतानामविशेषकत्वात् न्यूनवृत्तित्वात् प्रागभावेतरयावत्कादाचित्ककारणप्रागभावानाधारः कार्यप्रागभावाधारः क्षणो हि सामग्रीत्युच्यते न च स यावद्घटजन्मक्षणसम्बन्धी घटप्रागभावाधारत्वेन तदनुगमे घटध्वंसक्षणेप्यतिव्याप्तिः तत्तत् घटप्रागभावत्वं त्वननुगतम् किं च सामग्र्युत्तरत्वं घटद्वितीयक्षणविनाशक्षणादिष्वतिप्रसक्तमित्यव्यवहितोत्तरक्षणत्वं तथा वाच्यं तच्च न सामग्रीक्षणध्वंसानधिकरणक्षणत्वघटितमसम्भवापत्तेरिति तत्तत्सामग्रीव्यक्तिघटितं वाच्यं तथा चात्यन्ताननुगतैस्तैः कथं घटजन्मक्षणो विशेषणीयः नच जन्मक्षणेपि विशेषान्तरं मृग्यं जन्मन एव तथात्वात् । ननु कः कार्यजन्मकाल इति प्रश्नस्य किमुत्तरं त्वया देयं यत्र काले कार्यजन्मेति चेन्न सर्वस्य कालस्य कार्यजन्मवैशिष्ट्याभावात् कालनिष्ठं तदधिकरणतावच्छेदकमवश्यं किञ्चिदभ्युपेयं तच्च सामग्र्यव्यवहितोत्तरत्वादिकमेव ततश्चाप्यव्यवहितत्वमपि अव्यवहिताकारानुग-

खण्डनदर्पणः ।

त्तरत्वेपि विशेषान्तरमनुसरणीयमेवं तत्रापीत्यनवस्थेत्यर्थः । न च कार्यजन्मकाले सामग्र्युत्तरत्वं तत्र च तत्सामग्री तस्यामपि तत्सामग्रीत्यपर्यवसानमपीष्टं प्रामाणिकत्वादिति

खण्डनरत्नमालिका ।

जनिसम्बन्ध एव वक्तव्यः व्यावर्तकान्तरवतः कालस्य कार्यसत्तासम्बन्धकल्पने तु तदपि सविशेषस्यैव कालस्य स्यादित्यनवस्थाऽतस्तत्परिहारायागत्या विशेषान्तरमन्तरेणैव कस्यापि विशेषस्य व्यावर्तकत्वमङ्गीकरणीयमिति मया प्रथमकक्षायामेव तदङ्गीकृतमित्यर्थः । ननु त्वया व्यावृत्तकालानामनुगतं किं चिद्रूपं वक्तव्यमव्यवहितोत्तरत्वं च न

अनुगतरूपानुधावनानौचित्यम्—

तथापि तत्कालस्यानुगतं किं रूपम्, इति चेन्न, 'रूपान्तरवतोऽपि किं तद्' इत्यस्यापि पर्य्यनुयोगस्यानुवृत्तेः ।

इत्यसतः कारणत्वस्य समर्थनम्—

खण्डनभावदीपिका ।

दनुगतप्रत्ययहेतुर्न कश्चिदस्तीति शङ्कते—तथापीति । परिहरति । न रूपेति । अनुगतप्रत्ययहेतुतया निरुक्तेऽपि रूपान्तरे तदपि किंरूपवतीति पुनः पुनः प्रश्नापत्तेः ततः किमपि रूपं रूपान्तरानपेक्षमेवानुगतप्रत्ययकारणं वाच्यं तदादावेव किं नाभ्युपयते तच्च रूपं कार्य्योत्पत्तिकालत्वमेव तस्य कालान्तरेभ्यो व्यावर्तकत्वेऽपि कार्य्योत्पत्तिकालेष्वनुवृत्तिप्रत्ययहेतुत्वसम्भवादिति भावः । एवञ्च न पौनरुक्त्यमपि कार्य्योत्पत्तिकालत्वस्यैकत्वेऽपि व्यावृत्त्यनुवृत्तिप्रत्ययविषयहेतुविषयतया विशेषादित्यपि शाङ्करी ।

स्यैव विशेषत्वात्; अन्यथा कार्यजन्मकालस्य कार्य्यजन्मैव विशेषः—इति त्वदुक्तमपि न निर्वहेत, तत्रापि विशेषान्तराऽऽनुसरणौचित्यात्, तथापि कार्यमप्यसदित्यत्रैव

खण्डनभूषामणिः ।

तप्रतीत्या लक्ष्यं पदार्थान्तरमेवेत्याशयेन शङ्कते–तथापीति । तत्कालस्यानुगतं किं रूपमिति । तत्कालस्य जन्मकालस्येत्यर्थः । अनुगतमिति । अन्यथा यच्छब्देन परामर्शायोगादिति भावः । रूपान्तरवत इति । कार्यजन्मापेक्षया यद्रूपान्तरं सामग्रीरहितेतरत्वं तद्वत इत्यर्थः । तथा च अधिकरणतावच्छेदकस्याननुगमेऽपि न क्षतिः न चातिप्रसङ्गः कार्य्यजन्मदर्शनस्यैव नियामकत्वात् न च भवतोऽप्यन्या गतिरस्तीति भावः । एवमसतः कारणत्वमुपपादितं संप्रति सतः कारणत्वं खण्डयन्नन्यथानुपपत्त्याप्यसतः कारणत्वमे-

खण्डनदर्पणः ।

वाच्यं, कार्यजन्मकालावर्तमानसामग्र्या भिन्नकालीनत्वेन कार्यजन्मक्षणस्याव्यावर्त्तकत्वात् । न च कार्यजन्मकालस्य कार्यजन्मैव विशेष इत्युक्तावात्माश्रय इति वाच्यम्, भूतले घटाभावकालस्य को विशेष इत्युक्ते घटाभाव एव तत्र विशेष इतिवददोषात् । न च यदि सन्न कारणं तदा कार्यं निरवधि स्यादिति वाच्यम् व्यावहारिकावधिमादाय निरासात् । कार्यस्यासत्त्वाद्वायमसतः कारणत्वमुपपाद्य सतः कारणत्वे बाधकमाह–

खण्डनरत्नमालिका ।

तथा सामग्रीसत्त्वानङ्गीकारादिति शङ्कते तथापीति । अनुगतप्रत्ययहेतु यद्रूपम्भवता अङ्गीक्रियते तदपि किं रूपान्तरनिरपेक्षं सापेक्षं वा अन्त्येऽनवस्था आद्यं चेत्तदादावेव जनिसम्बन्धित्वमेवाभ्युपगन्तव्यमिति भावः । एवं कारणस्य असत्त्वेऽपि नातिप्रसङ्ग

अथ सतःकारणत्वस्य खण्डनम्—

किञ्च—

अन्तर्भावितसत्त्वं चेत्कारणं तदसत् ततः ।
नान्तर्भावितसत्त्वं चेत्कारणं तदसत् ततः ॥ ४ ॥

खण्डनभावदीपिका ।

द्रष्टव्यम् । एवं कारणस्यासत्त्वेपि नातिप्रसङ्ग इत्युक्तम् । इदानीं कारणस्य सत्त्वमपि दुर्निरूपमित्याह—अन्तर्भावितेति । अन्तर्भाविता सत्ता यस्मिन् तदन्तर्भावितसत्त्वं

शाङ्करी ।

हृदयम् । असतः कारणत्वमुपपाद्य सतः कारणत्वं खण्डयति—किञ्च इति । कारणे सत्ता विशेषणम् ? उपलक्षणं वा ? । यदि विशेषणं, तदा सत्तायामपि कारणत्वमित्यायातं सत्तायां च न सत्तेत्यसदेव कारणं प्राप्तम् । तत इति । सत्ताविशिष्टे कारणत्वाऽभ्युपगमादित्यर्थः । उपलक्षणत्वे त्वसदपि कारणं प्राप्तं, सत्तायाः कारणकोटिबहिर्भावात् ॥

खण्डनभूषामणिः ।

ष्टव्यं त्वयेत्याशयेनाह—किं चेति । अन्तर्भावितान्तः प्रवेशिता सत्ता यस्मिन् सत्ताविशिष्टं बीजं चेदङ्कुरकारणमित्यर्थः ततस्तस्मिन् पक्षे कारणं बीजादि असदेव स्यात् सत्ता-

खण्डनदर्पणः ।

किञ्चेति । सत्ताविशिष्टे कारणत्वं तदुपलक्षिते वा आद्ये सत्ताविशिष्टस्य कारणत्वे विशेषणस्य सत्ताया अपि कारणत्वं वाच्यं सत्तायाश्च सत्ता नास्तीत्यसदेव कारणं प्राप्तं ततः सत्ताविशिष्टे कारणत्वस्याभावात् यद्वा सत्ताविशिष्टे कारणत्वाभ्युगमादित्यर्थः। नन्वत्र सत्तापदेन सत्ताजातिग्रहणे सत्ताजातिरहितसत्तायाः कारणत्वे कथमसतः कारणत्वं न हि प्रागभावादिकं सत्ताजातिरहितमसत्प्रामाणिकत्वात्तथा सत्तापि पारमार्थिकी कारणं स्यात्कारणत्वस्य च ग्रहणे पारमार्थिकत्वे प्रामाणिकत्ववृत्तौ नात्माश्रयस्तत्र हि प्रामाणिकत्वस्य वृत्तेः, यद्वा प्रमेयत्वे प्रमेयत्ववदात्माश्रयो न दोषाय प्रामाणिकत्वादिति चेन्न पारमार्थिकत्वरूपसत्ताया अत्राभिमतत्वात् । तथा च पारमार्थिकत्वे सत्तारूपे स्ववृत्तावात्माश्रयादवृत्तावसत्कारणत्वं स्यान्न च प्रामाणिकत्वादात्माश्रयो न दोषाय स्यात् प्रामाणिकत्वस्यैवासिद्धेरिति। यद्वा न्यायमतमवलम्ब्य सत्ताजातिं गृहीत्वाखण्डनमंशत आत्माश्रयो न सत्ताविशिष्टे सत्ताया अभावात् सत्ताजातिविशिष्टस्य कारणत्वाभावे पारमार्थिकसमवायिकारणाद्यभावेऽसदेव कारणं प्राप्तमित्यर्थः । सत्ताविशिष्टस्य समवायिकारणत्वे सत्तापि समवायिकारणं स्यादित्यपि दोषो बोध्यः । द्वितीये चाह—नान्तर्भावितेति। सत्ताया उपलक्षणत्वे कारणत्वं सत्ताशून्ये वर्तत इत्यसदेव कारणं सिद्धं ततः सत्ताया

खण्डनरत्नमालिका ।

इत्युक्त्वा इदानीं कारणस्य सत्त्वमपि दुर्निरूपमित्याह—किञ्चेति । अन्तर्भावितेति । अयमर्थः सत्कारणत्ववादिना बीजमङ्कुरकारणमिति नोच्यते किन्तु सद्बीजम-

### खण्डनभावदीपिका ।

तावत्कारणं तर्हि तदसदेव सत्ताविशिष्टे सत्ताया असम्भवात् अथान्तर्भावितसत्त्वं न कारणं तर्हि त्वयैव कारणसत्तानङ्गीकारेणोक्तमेवासतः कारणत्वमित्यर्थः । अत्र सत्ताशब्देन न जातिर्विवक्ष्यते जात्यादेरपि कारणत्वात् किंतु प्रमेयत्वादिरूपः कश्चिदनु-

### शाङ्करी ।

तत इति । सत्ताया उपलक्षणत्वाऽभ्युपगमादित्यर्थः । यद्वा कारणमित्युभयत्र भाव-प्रधानो निर्देशः, तथाच सत्तायां कारणत्वं वर्त्तते ? नवा ? इति विकल्पार्थः । आद्ये असदपि कारणं, सत्तायाः सत्ताविरहेणाऽसत्त्वात् । द्वितीये सत्तया सदाकाराऽनुगतप्रत्ययोपि न जननीय इति तन्मात्रप्रमाणिकायाः सत्ताया विलोपे सर्वं कारणमसदेवेति प्राप्तम् । यद्वा कारणं—कारणत्वम्, अन्तर्भावितसत्त्वं—व्यापकीभूतसत्त्वं ? न वा ? इति विकल्पार्थः । आद्ये सत्तायां सत्तानिवृत्त्या कारणत्वमपि निवर्तते, इति अनुगत प्रत्ययजनकत्वाभावात् प्रमाणाऽभावेन सत्ताविलोपे सर्वकारणमसदेव प्राप्तम् । अन्त्ये सत्तामपहायापि कारणत्वं वर्तते इति त्वयैवासत्कारणमभ्युपेतमित्यर्थः । वार्त्तिकार्थं

### खण्डनभूषामणिः ।

विशिष्टबीजे सत्ताया अभावादित्यर्थः । नान्तर्भावितसत्त्वः—किन्तूपलक्षणीभूतसत्त्व-मिति चेदित्यर्थः । सत्ताया उपलक्षणत्वात्तया च बीजत्वावच्छिन्नस्योपलक्षणात् बीजमङ्कु-

### खण्डनदर्पणः ।

उपलक्षणत्वादित्यर्थः । ननु यत्र सत्ता तत्र कारणत्वं रूपवति रस इतिवन्न दोषः । न हि रूपेपि रसो वर्तते । नच सत्तायां सत्ता वर्तते न वाऽऽद्येऽऽत्माश्रयः अन्त्ये तस्या असत्त्वेन दण्डादिकारणमसदेव प्राप्तमिति वाच्यम्, तत्रापि पारमार्थिकत्वरूपसत्तायामपारमार्थिकत्व-रूपसत्तावृत्तावदोषादिति चेन्न—अपरापरसत्ताङ्गीकारेऽनवस्थानात् तत्र तद्वृत्तावात्माश्रयात् । नच प्रामाणिकत्वान्न दोषः स्वस्य स्ववृत्तौ विरोधात् न हि तदेवाधिकरणं तदेवाधेयं सत्ताजातिविशिष्टस्य कारणत्वपक्षे प्रागुक्तदोषो बोध्यः । एतेन सत्ताविशिष्टेपि सत्ता वर्तते न च सत्ताया विशेषणत्वेन तत्र सत्तावृत्तावात्माश्रय इति वाच्यं न हि विशेष्यगतधर्मवत्त्वं विशेषणत्वं किन्तु स्वकालनियतव्यावृत्तबोधजनकत्वं तच्च सत्तावृत्त्यभावेप्यस्तीति निरस्तं जटाभिस्तापस इत्यादौ विद्यमानजटायां विशेषणत्वप्रसङ्गात् । किञ्च सत्तायां सत्तावृत्ता-

### खण्डनरत्नमालिका ।

ङ्कुरकारणम् इत्येव तदा च सत्ताविशिष्ट कारणताभ्युपगम्यते सत्तोपलक्षिते वा नाद्यः तथा सति विशेषणीभूतसत्तायामपि कारणत्वाभ्युपगमः, अनवस्थाभिया च सत्तायां-सत्त्वाभावात् असत एव कारणत्वलाभात् न द्वितीयः तदा कारणकोटौ सत्ताऽप्रवेशात उपलक्षणतया तस्य बहिर्भावात केवलं बीजस्वरूपमसदेव कारणमिति असत्कारणत्व-स्यैव लाभात इति । अन्तर्भावितसत्त्वं-विशेषणीभूतसत्त्वं चेत् कारणं तदा असत कारणम् अन्तर्भावितसत्त्वं कारणं न चेत तदा सुतरामसत् कारणमित्यक्षरार्थः ।

कारिकाव्याख्या ।

तथा हि अन्तर्भूतसत्त्वं यदि कारणत्वं तदा स्वविशिष्टे स्ववृत्तिरंशतः

खण्डनभावदीपिका ।

गतो धर्म्मः । सत्ताविशिष्टं कारणमित्यङ्गीकारे सत्तायास्तत्र संशयं दर्शयति-तथाहीति । सत्ताविशिष्टे यदि सैव सत्ता वर्त्तेत तदा विशेषणीभूतायाः स्वाश्रयत्वमंशतः स्यादित्यर्थः । ननु विशिष्टस्य विशेषणविशेष्याभ्यामन्यत्वाद् विशेषणरूपायाः सत्ता-

शाङ्करी ।

प्रपञ्चयति—तथाहीति । ननु सत्ताविशिष्टे दण्डादौ कारणे सत्ता वर्त्तते चेत्कथमात्मा-

खण्डनभूषामणिः ।

स्कारणमिति द्वितीयपक्षस्तदा असदपि असत्त्वमनन्तर्भाव्यैव कारणमस्तु तस्मिन् पक्षेऽसदपि कारणमस्त्विति द्वितीयार्द्धार्थः । तत इत्यस्यानन्तर्भावितसत्ताकत्वादित्यर्थो वा एवं च सत्ताविशिष्टकारणत्वं चेत्तदा सत्ताया अपि कारणत्वमित्यायातं न च सत्तायां सत्तेत्यसदेव कारणं प्राप्तं तत इति सत्ताविशिष्टे कारणत्वाभ्युपगमादित्यर्थः । यद्वा कारणमित्यत्र भावप्रधानो निर्देशः तथा च सत्तायां कारणत्वं वर्त्तते न वेति प्रथमविकल्पार्थः आद्ये असदपि कारणं सत्तायाः सत्ताविरहेणासत्त्वात् द्वितीये तयाऽनुगतप्रत्ययोपि न जननीय इति तन्मात्रप्रमाणिकायाः सत्ताया विलोपे सर्वं कारणमसदेवेति प्राप्तं सत्तायाः कारणे उपलक्षणत्वे सत्तामपहायापि कारणत्वं वर्त्तेत इति त्वयैवासत्कारणमभ्युपेतमिति मिश्रव्याख्यानमुपेक्ष्यं सत्तामात्रस्य कारणताया अप्रसक्तत्वेन भावप्रधानत्वे लक्षणापत्तेः। अंशत इति । विशेषणविशेष्यसम्बन्धा एव विशिष्टमिति पक्षे

खण्डनदर्पणः ।

वात्माश्रयात् तद्वृत्तौ तस्या असत्त्वप्रसङ्गात् अन्यान्यसत्तानुसरणेऽनवस्थानादिति दिक् । किं च सत्ता यत्र केवलं सत्तारहितं धर्मि दण्डादिकमेव वाच्यं तथाच दण्डादेरसत्त्वं ध्रुवमिति श्लोकार्थं प्रपञ्चयति—तथाहीति । स्वस्मिन् स्ववृत्तिव्यतिरेकवत् स्वविशिष्टेपि स्ववृत्तिव्यतिरेकेंऽशत आत्माश्रयप्रसङ्गादित्यर्थः । ननु विशिष्टस्य विशेषणादिभिन्नत्वात्सत्तायास्तद्विशिष्टवृत्तावपि नांशत आत्माश्रय इत्यत आह—

खण्डनरत्नमालिका ।

कारिकार्थं प्रपञ्चयति—तथाहीति । सत्तोपलक्षिते दण्डादौ कारणत्वमुत सत्ताविशिष्टे आद्ये असत एव कारणत्वम् द्वितीयेऽपि किं विशिष्टं विशेषणविशेष्यतत्संबन्धरूपमतिरिक्तं वा आद्ये विशेषणीभूतसत्ताया विशिष्टानतिरेकितया विशेषणे सत्तायामपि कारणत्वं प्राप्तं तत्र च न सत्ता इति असत एव कारणत्वम् अथोच्येत सत्तायामपि सत्ता वर्त्तते तदा अंशतः-अंशे विशेषणांशे, स्ववृत्तौ आत्माश्रयः इति भावः । ननु विशिष्टं न विशेषणविशेष्यतत्संबन्धरूपं किन्तु तेभ्योऽतिरिक्तमिति नोक्तदोषावकाश इत्यत

स्वाश्रयत्वमापादयति। विशिष्टस्यार्थान्तरत्वेऽपि च स्वस्मिन्स्ववृत्तिव्य तिरेकवत्स्वविशिष्टे स्ववृत्तिव्यतिरेकनियमदर्शनात् न सैव सत्ता तस्मि-

खण्डनभावदीपिका।

यास्तत्र वृत्तौ नांशतः स्वाश्रयत्वापत्तिरित्याशङ्क्य परिहरति—विशिष्टस्येति। यथा स्वस्मिन् स्ववृत्तिव्यतिरेकः सर्वत्र तथा दर्शननियमादभ्युपेयते तथा स्वविशिष्टे स्ववृत्तिव्यतिरेकोऽप्यभ्युपेयते तथा दर्शननियमादित्यर्थः। केचित्तु व्यतिरेकशब्देन व्यतिरेकव्याप्तिरुच्यते, इति व्याचक्षते—यथा सत्ता सत्तानाश्रयो व्यतिरेकव्याप्ति-बलादवसीयते तथा व्यतिरेकव्याप्तिबलादेव सत्ताविशिष्टोऽपि विशेषणीभूतसत्तानाश्रय इति। तदपरे न क्षमन्ते। विशिष्टस्य सत्तानाश्रयत्वे साध्ये सत्ताया एव सपक्षतया केवलव्यतिरेकित्वभङ्गात् सपक्षाप्रवेशित्वादेवान्वयव्यतिरेकित्वासम्भवाच्चेति। विशेषण-

शाङ्करी।

श्रय इत्यत आह—विशिष्टस्येति। स्वस्मिन्स्वं वर्तते इति यथा विरुद्धं, तथा स्वविशिष्टे स्वं वर्तते इत्यपि विरुद्धमेव, विरोधप्रयोजकस्याऽदर्शनस्योभयत्राऽविशेषा-दित्यर्थः। ननु स्वविशिष्टे स्वं मावर्तिष्ट, स्वभिन्नया द्वितीया सत्तया प्रथमसत्ताविशि-

खण्डनभूषामणिः।

विशेष्यांशे तदभावेपि विशेषणांशे तदस्तीत्यर्थः। स्वस्मिन्निति। तथा च तत्सत्ताविशि-ष्टो न तत्सत्ताविशिष्ट इत्यसदेव कारणं स्यादिति भावः। तां द्वितीयसत्ताम्, अनिवेशय—अनन्तर्भाव्याविशेषणाकृत्य, यदि प्रथमसत्ताविशिष्टमेव कारणं स्यात्तदाऽसत्कारणं स्यात्तत्र वर्तमानाया अपि द्वितीयसत्तायाः कारणकोटिनिवेशानङ्गीकारात् नहि वह्नौ पैङ्गल्यं वर्तते इत्येतावतैव पिङ्गलो वह्निर्धूमस्य कारणमुच्यते अथ द्वितीयां सत्तामन्तर्भाव्य-तद्विशिष्टं कारणमुच्यते तत्रापि स्ववृत्तिप्रसङ्गात् द्वितीयसत्ताविशिष्टमप्यसदेव स्यात् यदि

खण्डनदर्पणः।

विशिष्टस्येति—स्वस्मिन्स्ववृत्तिव्यतिरेकवदत्रापि युक्तिस्तुल्या न हि दण्डादिवि-शिष्टे दण्डादिव्यतिरिक्तेपि दण्डो वर्तते। यदि च दण्डविशिष्टेऽतिरिक्तेपि दण्डो वर्तेत तदा तेनैव दण्डेन दण्डविशिष्टः सन् प्रथमदण्डविशिष्टाद्भिन्नः स्यादि-ति भावः। ननु विशेषणभूतसत्ताविशिष्टे मावर्तिष्ट अन्या तु सा तत्र वर्तिष्यते इति

खण्डनरत्नमालिका।

आह—विशिष्टस्येति। यथा स्वस्मिन् स्ववृत्तिव्यतिरेकः—स्ववृत्तित्वाभावोऽ-नुभवसिद्धस्तथा स्वविशिष्टेऽपि स्ववृत्तित्वाभावोऽनुभवसिद्ध इति न सत्ताविशिष्टस्य कारणत्वमिति तथाचायमनुमानप्रयोगः सत्ता न स्वविशिष्टे वर्तितुमर्हति विशेषणत्वा-दिति भावः। ननु स्वविशिष्टे स्वस्य अवृत्तित्वेऽपि अन्या सत्ता सत्ताविशिष्टे वर्तताम् तथा

त्विति अन्यस्या विशिष्टवृत्त्यभ्युपगमे तामनिवेश्य कारणत्वमभ्युपगन्तुः सर्वथैवासत्कारणं पर्यवस्यति, अपराऽपरसत्तानिवेशेन चाऽपर्यवसा-

खण्डनभावदीपिका ।

भूता प्रथमसत्ता तत्र मा वर्तिष्ट परा तु तत्र वर्तिष्यत इत्यत आह—अन्यस्या इति । प्रथमसत्तां कारणकोटौ विनिवेश्य कारणत्वमभ्युपगच्छता कारणे सत्तानङ्गीकारादसदेव कारणं स्यादित्यर्थः । ननु तथापि कथं सर्वथा सत्त्वं द्वितीयसत्त्वस्य तत्र वृत्तेरित्यत आह—अपरेति । द्वितीयसत्ताया अपि स्वविशिष्टे वृत्त्यसम्भवाद् प्रथमस-

शाङ्करी ।

ष्टानां सत्त्वं, सत्त्वाच्च कारणत्वमुपपत्स्यते ? इत्यत आह—अन्यस्या इति । प्रथमसत्तायाः अकिञ्चित्करत्वेपि तत्तुल्यतया द्वितीयसत्तामप्यनिवेश्यैव त्वया कारणत्वं वाच्यम् तथाच न प्रथमया न वा द्वितीयया सत्तया सतां कारणत्वमिति सर्वथैवासत्कारणमिति भावः । ननु स्वविशिष्टे स्ववृत्तावात्माश्रयः, अन्योन्यविशिष्टेऽन्योन्यवृत्तावन्योन्याश्रयः, इति पूर्वपूर्वसत्ताविशिष्टापरापरसत्तया सत्स्यात्कारणं च स्यादिति कथमसत्कारणमित्यत आह—अपरापरेति । उत्तरोत्तरसत्तास्वप्यन्तर्भावितसत्त्वं चेदित्यादिविक-

खण्डनभूषामणिः ।

तृतीयया सत्तया तदपि सदित्युच्यते तत्राह—अपरापरेति । अपर्यवसानम्—अवस्था । एतेन प्रथमसत्ताविशिष्टस्यैव सत्वमुपपादयितुं द्वितीयसत्तास्वाकारो न तु तामन्तर्भाव्य कारणत्वमिति नोक्तदोष इत्यपास्तम् । द्वितीयसत्ताविशिष्टस्यापि असत्वे तदुपपादक-

खण्डनदर्पणः ।

अत आह—अन्यस्या इति । अन्या-द्वितीया सत्ता तामन्तर्भाव्य विशिष्टं कारणमनन्तर्भाव्य वाऽन्त्ये तत्र वर्तमानया अपि सत्तायाः कारणत्वे निवेशानङ्गीकारात् कारणमसदेव स्याद्यथा धूमे विद्यमानापि कृष्णतानानुमानोपयोगिनी तथा सापीत्यर्थः । यदि तामन्तर्भाव्य विशिष्टं कारणं तदा प्रथमसत्ता व्यर्था स्यादिति भावः । न च सत्ताविशिष्टे कारणेऽन्यसत्ता वर्तत इत्येतावता सत्करणसिद्धिरिति वाच्यम्। तर्हि द्वितीयसत्ताविशिष्टे सत्ताया अभावे तद्विशिष्टमसदेव स्यादिति तृतीयादिसत्तास्वीकारेऽनवस्था चेति मूलोक्तो भावः । अपरापरसत्तास्वीकारेपि नानवस्था सत्तानामानन्त्येन मूलक्षयाभावा

खण्डनरत्नमालिका ।

च्च नात्माश्रयो न वाऽसतः कारणत्वप्रसङ्ग इत्यत आह—अन्यस्या इति । तामनिवेश्य-तामनन्तर्भाव्य । अयं भावः यद्यन्या सत्ताविशिष्टे वर्तते तर्हि तामन्तर्भाव्य विशिष्टं कारणमनन्तर्भाव्य वा आद्ये स्वविशिष्टे स्ववृत्तावात्माश्रयः अन्योन्यविशिष्टेऽन्योन्यवृत्तावन्योन्याश्रयः अन्त्ये असतः कारणत्वमिति । ननु तत्रापि अपरा सत्ता तत्रापि अपरा इति नात्माश्रयो न वान्योन्याश्रय इत्यत आह—अपरापरेति ।

नमेव । न च सत्ताभेदानन्त्यमस्त्येवेत्यपि पादप्रसारिका निस्ताराय ।

खण्डनभावदीपिका ।

त्तायास्तत्र वृत्तावन्योन्याश्रयत्वापातात् । सत्तायांस्तत्र वृत्त्यनभ्युपगमे च द्वितीयसत्ता-विशिष्टस्यासत्त्वप्रसङ्गात् । तत्रापि सत्तापरम्परास्वीकारे चानवस्था दोषः स्यादित्यर्थः । सन्त्वनन्ता एव सत्तास्तथापि नानवस्था दोषाय मूलक्षतेरभावादित्याह—न चेति ।

शाङ्करी ।

रूपकदर्थनया क्वापि पर्यवसानं न स्यादित्यर्थः । ननु बीजाङ्कुरपरम्परावत्सत्तापर-म्पराऽस्तु को दोषः ? इत्यत आह—न चेति । यथा तावत्यः सत्ताः सत्ता-

खण्डनभूषामणिः ।

त्वासम्भवात् द्वितीयसत्ताविशिष्टं प्रथमसत्तया सदित्युक्तावन्योन्याश्रयः अतस्तृतीयया सत्तया तत् सदिति वाच्यं एवं परपरसत्तास्वीकारेऽपि तथा तथेत्यनवस्था वस्तुतो द्वितीयादिसत्तास्वीकारे मानमेव नास्ति सदाकारलिङ्गितप्रतीत्या तस्या एकस्या एव सिद्धेः ननु सत्ता स्वभिन्नसत्तावती सद्व्यवहारविषयत्वात् घटवदित्यनुमानतस्तद्भेदोऽस्त्वित्या-शङ्क्य निराकरोति—न चेत्यादिना । प्रथमा या पक्षीकृता अनुगतबुद्धिव्यवहाराभ्यां हि, सा सिद्ध्यति न च तासां भेदे तावनुगतौ सम्भवतः । एतेन तावतीषु सत्ताव्यक्तिष्वनुगता सत्ताप्येका स्वीकार्येत्यपि न निस्ताराय तस्यां सद्व्यवहाराभावप्रसङ्गात् न सा सतीति चेत्तर्हि भिन्नभिन्नसत्ताव्यक्तीनामसत्त्वापत्तिस्तासामसत्त्वे च असत्त्वैव तदाश्रयाणामपी-त्यसदेव कारणं स्यात् अप्रयोजकं चानुमानमिति अत्र मिश्राः स्वविशिष्टे स्वं वर्तत एव विरोधाभावात् न चादर्शनं सर्वत्र तथैव दृष्टत्वात् न हि स्वाविशिष्टे स्ववृत्तिर्दृष्टा यदि च स्वविशिष्टे स्वं न वर्तेत तदा स्वविशिष्टमित्येव न स्यात् स्ववृत्त्यैव हि तत्स्ववि-शिष्टम्, अन्यथा दण्डिनि दण्डवत् कुण्डलिनि कुण्डलवत् कुण्डलिनि दण्डोऽपि स्यात् एवं तर्हि दण्डेऽपि दण्डः स्यादिति चेन्नापादकाभावात् विशिष्टवृत्तित्वमेवापादकमिति चेन्न यद्विशिष्टवृत्ति तद्विशेषणवृत्तीति नियमाभावात् दण्डे कुण्डलिविशेषणयोर्दण्डकुण्डलयो र्व्यभिचाराच्च तत्र दण्डकुण्डलयोर्न विशेषणत्वं किन्तूपलक्षणत्वमिति चेत्तर्हीहापि सत्तोपल-क्षणमस्तु यथोपलक्षणेनाऽपि दण्डेन पुरुषो दण्डी तथा सत्तयापि तादृश्या कारणं सदेवास्तु । वस्तुतस्तु विशेषणमेव न हि विशेष्यगतधर्मत्वं विशेषणत्वं किं तु स्वप्रत्याय्य व्यावृत्त्यधि-

खण्डनदर्पणः ।

दित्यत आह—न चेति-प्रथमापीति । अनन्तसत्ताभिरिवानन्तव्यक्तिभिरेव सद्रूप्य-

खण्डनरत्नमालिका ।

अपर्यवसानमेवेति । अनवस्थेत्यर्थः । ननु बीजाङ्कुरपरम्परावत्सत्तापरम्पराऽस्तु को दोष इत्याह—न चेति । अनुगतैकसत्तया सद्बुद्धिव्यवहारोपपत्तौ सत्ताभेदस्वीकरणं

सत्ताभेदे हि सद्बुद्धिव्यवहाराऽनुगमसमर्थनलङ्घिनः प्रथमापि सत्ता

खण्डनभूषामणिः ।

करणतावच्छेदकत्वे सति व्यवच्छेदकत्वं तच्च विशेष्यवृत्तिधर्मविरहेपीति न क्षतम्, यत्र संयोगलक्षणा विशेषणस्य वृत्तिर्दण्डादौ तत्र कथञ्चिद्विरोधोपसंहारेपि समवायलक्षणवृत्तौ स्वविशिष्ट एव स्ववृत्तिरभ्युपेया तत्र स्वाविशिष्टदशाया अभावात् गोत्वाविशिष्टेपि महिषादौ गोत्ववृत्तिप्रसङ्गात् तस्मादवश्यं तत्र स्वविशिष्टे स्ववृत्तिरेष्टव्या तत्र केवले वृत्तिरिति चेन्न केवलस्यापि स्वविशिष्टत्वात् सत्ता कथं कारणमिति चेन्न—न हि सत्ताजातियोग्येव कारणमित्यस्मन्मतमभावस्यापि कारणत्वादपि तूपाख्याविशिष्टमेवेति प्रलपन्ति तत्तुच्छं दण्डस्य वृत्त्या पुरुषो दण्डी न तु दण्डविशिष्टे पुंसि दण्डवृत्त्येति किं च दण्डविशिष्टे दण्डवर्तमानतावद्दण्डिनि दण्ड इति प्रतीतिस्तदा दण्डात् पूर्वं दण्डिनोऽसत्वेनाधारतानुपपत्तेः दण्डसंयोगेन हि दण्डविशिष्टो जन्यत इति मीमांसकसिद्धान्तः । यदा तु विशिष्टोऽनतिरिक्तः तदा दण्डसंयोगे दण्ड इति न कस्यापि प्रतीतिर्यदा न त्रयं विशिष्टपदार्थस्तदापि त्रिषु दण्डाभावान्नैवं प्रतीतिः । यच्चोपलक्षणेनापि दण्डेन दण्डीत्यादि तदपि न नहि दण्डिनि कुण्डलमिति तत्रापि प्रतीतिः किंतु दण्डेनोपलक्षितायां व्यक्तावित्येव तथा सत्तया उपलक्षिता व्यक्तिर्बीजं कारणमित्येव स्यात न तु सत्कारणं तच्चेष्टमेव खाण्डनिकस्यापि नह्यत्र सत्ताया उपलक्षकतावच्छेदकं बीजत्वादतिरिक्तमस्ति नापि गोत्वं गोत्वविशिष्टे वर्तते गोत्वे गोत्ववृत्तिप्रसङ्गात् विशेष्यान्वयिना यस्यावश्यमन्वयस्तस्यैव विशेषणत्वात् गौरस्तीत्यादौ तथैव प्रतीतेरन्यथा गोत्वे अस्तित्वसंशयापत्तेः गां पश्य दण्डिनमानयेत्यादौ च तथैवानुभवाच्च न च गोत्वाविशिष्टे तद्वृत्तौ महिषेपि तत्प्रसङ्गः महिषव्यावृत्तस्यैव तदधिकरणत्वात् तथापि गोत्वविशिष्टमेव तदिति चेत्सत्यं किंतु गोत्वविशिष्टत्वं नाधिकरणतावच्छेदकं तद्वदत्रापि सत्ताविशिष्टत्वं न कारणतया अधिकरणतावच्छेदकमिति खाण्डनिकाशयः । न च तथापि सदेव कारणमिति सिद्धमिति वाच्यं सत्ता जातिश्चेत्तदा सत्तायामेव व्यभिचारः प्रामाणिकत्वं चेत्तदपि न सिद्धं उपाख्यत्वं चेत्तदा नास्माकमनिष्टमिति । अपि च कारणता सत्ता चैकस्मिन्धर्मिणि सिद्धा न तु सत्येव कारणता कारणमेवं सदित्यप्यापत्तिः। ननु भट्टमते धर्मिणः सदभिन्नं तत्रैव कारणता फलोपहित एव शक्तेः स्वीकारात् फलानुपहितस्यापि सत्वाच्च किञ्च भट्टमते गोत्वाविशिष्टे गोत्वं नास्त्येव आधाराधेयभावस्याभेदेऽभावात् जातिगुणकर्मादीनां व्यक्त्या सहाभेदात् तथा च न किञ्चिदेतत् । न चैवं खण्डनमपि कथमिति वाच्यं भेदवादिमतखण्डनात् नायं दोष इति चेत् स्यादप्येवं यदि शक्तिः पदार्थान्तरं स्यात् सा च नास्तीति वक्ष्यते किंच सदात्मना कार्यकारणयोरभिन्नत्वे नात्मना तथात्वं किंतु बीजत्वाङ्कुरत्वादिना तच्च सत्तानन्तर्भावेनैव । किञ्च सदभिन्नं कारणमिति वदन्तः प्रष्टव्याः सत्सन्न वा नाद्यः नहि सत् सदिति प्रतिपादयितुं शक्यं सामानाधिकरण्य-

खण्डनभावदीपिका ।

कुत इत्याह **सत्ताभेदे हीति** । अनन्तासु सत्तासु सदित्यनुगतव्यवहारस्यानुगतैक-निमित्तकत्वसंपादनं चेत्परित्यक्तं तर्हि प्रथमसत्तापि न स्यादनुगतैरेव घटादिभिः सत्तास्वनुगतव्यवहारोपपत्तेः सत्तान्तरप्रसिद्धिमिच्छतो मूलसत्तापि न सिद्ध्येदिति महद्व्यसनमापन्नमित्यर्थः । माभूदनुगतं सत्वं स्वरूपसत्वमेव कारणत्वोपयोगीत्याशंक्याह-

शाङ्करी ।

मन्तरेणैव सत्यस्तथा दण्डादयोपि सत्तामन्तरेणैव सन्तः सन्तु किमाद्ययापि सत्तया । न च तावतीषु सत्तास्वेका काचिन्सत्ता वर्त्तते यया तासामनुगमः, तस्याः पुनरेकस्याः(१) किमनुगमकेन सत्तान्तरेणेति वाच्यम् । तर्हि सा सत्ता (२)न स्यात्, तदसत्त्वे च तासामसत्त्वात् तदाश्रयपर्यन्तमसत्त्वमित्यसदेव कारणं पर्यवसन्नमिति भावः । यद्यपि स्वविशिष्टे स्वं वर्त्तत एव विरोधाभावात् नचादर्शनं सर्वत्र तथैव दृष्टत्वात् । न हि स्वाऽविशिष्टे क्वचित्स्ववृत्तिर्दृष्टा । यदि च स्वविशिष्टे स्वं न वर्त्तेत, तदा स्वविशिष्टमेव न स्यात्स्ववृत्त्यैव हि तत्स्वविशिष्टम्, अन्यथा दण्डिनि दण्डवत्कुण्डलिनि कुण्डलवत् कुण्डलिनि दण्डोपि स्यात । एवं तर्हि दण्डेपि दण्डः स्यात्? न, आपादकाभावात् । विशिष्टवृत्तित्वमेवापादकम्? इति चेन्न, यद्विशिष्टवृत्ति तद्विशेषणवृत्तीति नियमाभावात्, व्यभिचारस्य दर्शितत्वात् । तत्र दण्डकुण्डलयोर्न विशेषणत्वं, किन्तूपलक्षणत्वम्? इति चेत्तर्हि सत्ताप्युपलक्षणमस्तु, यथा चोपलक्षणेनापि दण्डेन पुरुषो दण्डो, तथा सत्तयापि तादृश्या कारणं सदस्तु । वस्तुतो विशेषणत्वेपि न दोषः, न हि विशेष्यगतधर्मवत्वं विशेषणत्वं किन्तु स्वकाल-नियतव्यावृत्तिबोधजनकत्वं, प्रत्याय्यव्यावृत्त्यधिकरणतावच्छेदकत्वे सति व्यवच्छेदकत्वं वा, तच्च विशेष्यवृत्तिधर्मविरहेपि समानम् । यत्र संयोगलक्षणा वृत्तिर्दण्डादौ तत्र कथञ्चिद्विरोधोपसंहारेपि समवायलक्षणवृत्तौ स्वविशिष्टे एव स्ववृत्तिरभ्युपगन्तव्या, तत्र स्वाऽविशिष्टदशाया अभावात्, गोत्वाविशिष्टे महिषादौ गोत्ववृत्तिप्रसङ्गात । तथाच

खण्डनदर्पणः ।

वहारः स्यादिति तत्प्रमाणिका प्रथमापि सत्ता न सिद्ध्येदित्यर्थः । ननु तदभावेपि स्वरू-

खण्डनरत्नमालिका ।

गौरवान्मानाभावाच्चायुक्तमिति भावः । ननु सत्ता स्वव्यतिरिक्तसत्तासंसर्गिणी सद्व्यवहारविषयत्वात् घटवदित्यनुमानमेव सत्ताभेदे मानमित्यत आह—**सत्ताभेदे हीति** । अयम्भावः अनन्तसत्तासु अनुगतसद्व्यवहारसद्बुद्ध्योरुपपत्तये एका सत्ताङ्गीक्रियते तस्यां

(१) 'एकस्या'–इति सावधारणं हेतुगर्भं विशेषणम्, एकत्वादेवेत्यर्थः ।

(२) यदि सर्वसत्तास्वनुगतैकसत्तायां सत्तान्तरं न स्यात्तर्हि सा सत्यैव न स्यादिति तदसत्त्वे तदाधारभूतानां प्रथमसत्तानामप्यसत्त्वं तदसत्त्वे च तदाश्रयाणां दण्डादीनां कारणानामप्यसत्त्वमित्यर्थः । न च सर्वसत्तास्वनुगतैकसत्ता स्वात्मकसत्तयैव सती । तथा सति प्रथमास्वेव तत्स्वीकरणीयतया तत्त्यागे मानाऽभावात् ।

न स्याद् इति(सत्त्व)वृद्धिमिच्छतो ग लमपि ते नष्टमिति हा ! कष्टतरम् । न च स्वरूपसत्त्वोपगमाय स्वस्ति । भिन्नानप्यनुगतबुद्ध्याद्याधानपदेऽभि-

खण्डनभावदीपिका ।

न चेति । स्वरूपसत्ताभ्युपगमोऽपि न निर्वहतीत्यर्थः । कुत इत्यत आह-भिन्नानिति ।

शाङ्करी ।

तत्रावश्यं स्वविशिष्टे स्ववृत्तिरङ्गीकर्त्तव्या । तत्र केवले वृत्तिः ? इति चेन्न, केवलस्यापि स्वविशिष्टत्वात् । नहि तत्र स्वं न विशेषणम् । ननु सत्तायां सत्ताविरहात् कथं साऽनुगतप्रतीतिकारणम् ? इति चेन्न, सत्तेव केवलमसती कारणमिति न, किन्तर्ह्य-भावादिरप्यसन्नव कारणम् । तर्हि सत्कारणं, नत्वसदिति कोयं तव सिद्धान्तः ? इति चेत्, सोपाख्यं कारणम्, न तु निरुपाख्यमलीकमित्यवेहि । तर्हि सत्तास्थाने उपाख्याभावेन्य उपाख्याविशिष्टं निरुपाख्यमेवेति पूर्ववदावर्तनीयम् ? इति चेन्न, आवर्तने क्रियमाणे एव व्याघातात् । नह्युपाख्याविशिष्टं निरुपाख्यं वक्तुमपि शक्यते, उपाख्याविशिष्टत्वेनैवोपाख्यातत्वात्, तत्रोपाख्या हि नाम, तथाचाऽभिधानानभिधानयोर्जितं नैयायिकैरिति, तथापि दण्डादौ सत्तापि कारणकोटौ न प्रविशतीति हृदयम् । ननु च सत्ताविरहिण्यपि सत्ता स्वरूपसत्येव, दण्डादिरपि सत्ताबहिर्भावेण कारणमस्तु स्वरूपसत्तायाः स्वरूपमात्रनिबन्धनत्वात्, प्राभाकरादिभिस्तथैवाङ्गीकाराच्चेत्यत आह--न चेति । स्वरूपसत्त्वस्य प्रतिस्वं विश्रान्तत्वेनाऽननुगतत्वात् अनुगतसद्-

खण्डनभूषामणिः ।

स्य रूपभेदापेक्षताया वक्ष्यमाणत्वादन्त्ये त्विष्टसिद्धिरिति दिक् । वृद्धिमिच्छत इति । सत्ताया वृद्धिमिच्छतो मूलभूता प्रथमापि सत्ता नष्टेति महती विपदापन्नेत्यर्थं । न च नास्त्येव सत्ताजातिस्तस्या आकृतिव्यङ्ग्यत्वनियमात् किंतु स्वरूपसत्त्वैव कारणव्यवहारे निवेश्या न च स्वरूपबहिर्भावेनैव वीजादेः कारणत्वमित्याशङ्क्य निषेधति न च स्वरूपसत्त्वोपगमाय स्वस्तीति । सत्त्वजं कारणं सन्तस्तन्तवः कारणमित्यनुगतबुद्धिर्न स्यात्स्वरूपाणामत्यन्ताननुगतत्वात् प्रमाणयोग्यताया अपि तस्या अवच्छेदकविशेषघटितत्वे नाननुगतत्वात् सदाकारचाक्षुषबुद्ध्यालम्बनत्वायोगाच्च । यदि चाननुगता अपि सद्बुद्धिं जनयेयुरेकया शक्त्या तदा गवादयोप्येकया शक्त्या गोबुद्धिं जनयन्त्विति जातिमात्रमुच्छिद्येतेत्याशयेनाह-अनुगतबुद्ध्याधानपदेभिषिञ्चतेति । अनुगतबुद्ध्यादिराधीयते

खण्डनरत्नमालिका ।

तदाश्रयभूतसत्तासु च सद्व्यवहारबुद्ध्योरुपपत्तये अपरा तस्यां तदाश्रयभूतसत्तासु च अपरेत्यनवस्था अथ अनन्तसत्तासु सद्बुद्धिव्यवहारौ न सत्ताश्रयत्वमूलकौ किन्तु स्वरूपमात्रमूलकौ तदा घटादिव्यावृत्तस्वरूपाणामेव सद्बुद्धिव्यवहारोपपादकत्वसम्भवात्प्रथमापि सत्ता न स्यादिति सत्त्ववृद्धिं सत्त्वनानात्वमिच्छतस्ते मूलमपि सत्ता नष्टेति महती विपत्तिरिति । किं च स्वरूपसत्तया न सद्बुद्धिव्यवहारोपपत्तिरित्याह—न चेति । नन्वेतदर्थः ।

षिश्चता त्वया हि जातिमात्राय जलाञ्जलिर्वितीर्य्येत । "माभूदनुगतिः

खण्डनभावदीपिका ।

भिन्नानामेव घटादिस्वरूपाणामनुगतव्यवहारहेतुत्वाङ्गीकारे गवादीनामपि भिन्नानां गोर्गौरित्यनुगतव्यवहारहेतुत्वापत्तौ सकलजात्युच्छेदस्तस्मादित्यर्थः । अनुगतसत्तानङ्गीकारे दोषान्तरमाह । माभूदिति । स्वरूपाणामननुगतत्वान्नियतपूर्वक्षणसत्वं कारण-

शाङ्करी ।

व्यवहारविलोपप्रसङ्गात्, अननुगतेनैव चाऽनुगतधीजनने गोत्वादिकमपि न स्यादित्यर्थः नन्वनुगमाभावेऽपि स्वरूपसत्तया सत्कारणमिति तावदायातं, तदेव च मया साधयितुमुपक्रान्तमित्यत आह–माभूदिति । कारणताया अनुगमः त्वदभ्युपगतो न स्यात्

खण्डनभूषामणिः ।

अनेनेति अनुगतबुद्ध्याद्याधानं सामान्यम्, तत्पदे तत्स्थाने, 'पदं व्यवसितत्राणस्थानलक्ष्मांघ्रिवस्तुष्वि'त्यमरः । अभिषिंचता–निवेशयता–जातिमात्राय मनुष्यत्वजातिरपि त्वद्गता नाशिता स्यादित्यर्थः । वस्तुतस्त्वनुगते धर्मिण्यनु भूयमाने च न शक्त्यान्यथा सिद्धयितुं शक्यते तस्या अतींद्रियत्वादिति त्वया जातिं विहाय एवंविधबौद्धमतप्रवेश एव क्रियत इति भावः।तथा च स्वरूपस्य सद्रूपत्वाभावेऽन्तर्भावितसत्त्वं चेदित्यनेनैवास्यापि दोषो दत्त इत्याशयः।ननु सामान्यसत्त्वमनुगतबुद्ध्यालम्बनमस्तु स्वरूपसत्त्वं तु कारणतोपयोग्यननुगतमेवास्त्विति शङ्कते–माभूदिति । ननु नास्त्येव कारणतानुगता कार्यभेदेन

खण्डनदर्पणः ।

पसत्त्वेनैव कारणत्वस्य सत्वमत आह–न चेति । स्वरूपसत्वं प्रत्येकात्मतयाऽनुगतमिति कथं तेनानुगतव्यवहारः स्यात् तादृशेन चानुगतव्यवहारजनने गोत्वादिकमपि न सिद्ध्येदित्यर्थः । न चैतदस्वरसात् सत्ताजातिमादायैवान्तर्भावितसत्त्वं चेदित्यादिग्रन्थस्तथा च सत्ताजातौ सत्ताया अवृत्तावपि कारणत्वे प्रागभावादिवत् नासत्ता करणमिति कथं प्रामाणिकत्वरूपसत्ताकारणत्वं खण्डितं स्यादिति वाच्यमनुगतप्रामाणिकस्वरूपसत्ताखण्डनार्थत्वात् तदननुगतत्वे प्रामाणिकत्वेनानुगतव्यवहाराभावप्रसङ्गादननुगतेनाननुगतव्यवहारसमर्थने गोत्वादिजात्यभावप्रसङ्गात्सत्ताजातिग्रहणपक्षे च दोषस्योक्तत्वात्तद् ननु गमाभावेपि स्वरूपसत्तया सत्कारणमिति तावदायातमेतदेव च मया साधयितुपक्रान्तमत आह–माभूदिति । स्वरूपाणामननुगतत्वेन नियतपूर्वसत्त्वं कारणत्वमपि तु तद्घटित-

खण्डनरत्नमालिका ।

स्वरूपसत्ता उपगमाय–अनुगमाय न स्वस्ति इत्यन्वयः। स्वरूपसत्तया नानुगमसम्भव स्वरूपाणां व्यावृत्तत्वेनानुगतसद्बुद्धिव्यवहारजननायोगादिति भावः । ननु भिन्नैरपि स्वरूपैरनुगतबुद्धिर्जन्यतां को दोष इत्यत आह—भिन्नानपीति । अनुगतबुद्ध्याद्याधानपदे—अनुगतबुद्ध्यादिराधीयते जन्यतेऽनेनेति अनुगतबुद्ध्याद्याधानं तत्पदं तत्स्थाने । भिन्नानामपि स्वरूपाणामनुगतबुद्धिजनकत्वस्वीकारे भिन्नाभिरपि गोव्यक्तिभिर्गौर्गौरित्यनुगतबुद्धिसम्भवे गोत्वादिजातिरपि न सिध्येतेति भावः ।

स्वरूपसत्त्वस्य"-इति च वदन् तद्गर्भिणीं कारणतां कथमनुगमयितासी-
ति । किञ्च, स्वरूपसत्त्वं स्वरूपात् घटाद्यात्मनो नाधिकमसतोपि स्वरूपं

खण्डनभावदीपिका ।

त्वमिति तद्घटितं कारणत्वमप्यनुगतमभिन्नं कथं सिद्ध्येदित्यर्थः । स्वरूपसत्कारणमिति वदता च घटादिस्वरूपमेव कारणमित्युक्तस्य स्वरूपस्यैव सच्छब्दवाच्यत्वाङ्गीकारात् । तथा चासदपि कारणं स्यादसतोऽपि घटादिस्वरूपत्वादित्याह--किञ्चेति । असतः

शाङ्करी ।

स्वरूपसत्तायास्तदनुगमकत्वेनाभ्युपेताया अननुगतत्वात्, सत्ताजातेश्च खण्डितत्वादित्यर्थः । घटस्य च निरूप्यमाणं घटस्वरूपसत्त्वं घट एव पर्यवस्यति, तथाच घटः कारणमित्याऽऽयातम्, असन्नपि घटो घट एव,-इति मत्पक्षात् त्वत्पक्षे न कश्चिद्विशेष, इत्याह—किञ्चेति । यद्यपि च स्वरूपं सदिति पारमार्थिकमभिमतम् । अथमेत्र च त्वत्पक्षाद्विशेषः, त्वया दण्डादीनामपारमार्थिकत्वस्याङ्गीकारात्, तथापि परमा-

खण्डनभूषामणिः ।

करणताभेदात् नहि घटकारणता पटकारणता चैकेति चेत् घटकारणतापि दण्डचक्रादिनिष्ठा नैका स्यात् इष्यते च सैका अन्यथा दण्डो घटकारणं चक्रं घटकारणमित्यनुगतमतिर्न स्यात् । न च घटनिरूपितत्वेन कारणताद्वयमनुगमय्य सा प्रतीतिरिति वाच्यं घटनिरूपितत्वस्य तत्संयोगतज्ज्ञानादिसाधारणत्वात् तन्निरूपितकारणता तु दण्डचक्रस्वरूपपर्य्यवसिता नैका इति । किं च घटकारणमानयेति नियुक्तः सन्दिग्धः किं घटकारणमानेयमिति सन्देहादपि कारणता सामान्यतो घटीयाभ्युपेया। किंच कारणताया अनुगताया अस्वीकारे कार्यं सकारणकं कादाचित्कभावत्वादित्यनुमानमपि न स्यादिति दिक् । स्वरूपशब्दस्य सच्छब्दस्य चार्थभेदे स्वरूपसत्त्वहानिः अभेदे तु असतोपि कारणत्वमविरुद्धमित्याह—किं चेति । घटादेरात्मा पृथुबुध्नोदराकारत्वादि स्वरूपमुच्यते न

खण्डनदर्पणः ।

नाननुगतं स्यात्तथा च कारणत्वेनानुगतव्यवहारो न स्यान्न वा कारणस्य कार्यव्यभिचाराभाव इति भावः । स्वरूपशब्दस्य सच्छब्दस्य चार्थभेदे स्वरूपसत्त्वहानिः-अभेदेऽसतोपि कारणत्वमविरुद्धमित्याह-किञ्चेति । स्वरूपत्वाविशेषादसत्स्वरूपमपि कारणं स्या-

खण्डनरत्नमालिका ।

ननु माभूत्कारणत्वोपयोगि स्वरूपसत्त्वमनुगतं को दोषः सद्बुद्धिव्यवहारौ च सामान्यभूसतत्त्वैव भविष्यत इत्यत आह-तद्गर्भिणीमिति । तद्गर्भिणीं स्वरूपसत्ताविशिष्टां कारणतां कथमनुगमयितासीत्यन्वयः। सत्ताजातेरनङ्गीकारात् स्वरूपाणां च परस्परं व्यावृत्तत्वेनाननुगततया तैः कारणत्वस्यानुगमासम्भवादिति भावः । ननु कारणत्वस्याननुगतित्वे को दोष इति चेन्न अनुगतकारणत्वबुद्धेर्निरालम्बनत्वापातात्। घटादिरूपमेव घटस्वरूपसत्त्वं न ततोऽन्यत् तथा च घटः कारणमित्यायातम् एवं च असन्नपि घटो घट एवेति असतोऽपि घटादेः कारणत्वप्रसङ्गः इत्याह—किञ्चेति । घटाद्यात्मनः-घटादेरात्मा पृथुबुध्नोदराकार-

**स्वरूपमेव, नह्यसन् घटादिर्न घटादिः, तथा सति घटादिर्न'—इत्यपि न**

खण्डनभावदीपिका ।

कथं घटादिस्वरूपत्वमित्याशङ्क्याह—**न हीति** । तदेव कुत इत्यत आह—**तथा सतीति** । घटादेरसद्रूपत्वानङ्गीकारे घटादिरसन्निति सामानाधिकरण्यं न स्यादित्यर्थः । नचासत् घटत्वाद्यधिकरणञ्चेति व्याघातः, घटत्वाधिकरणस्य सत्वव्याप्तेरुभयवाद्यसिद्धत्वात् । **केचिदेवं** व्याचक्षते किमसद्घटादि निषेधप्रतियोगि घटत्वं वा असत्यधिकरणे, आद्ये तावदप्रमितप्रतियोगिकनिषेधासम्भवादसद्रूपघटादेरङ्गीकारप्रसङ्गः प्रतियोगित्वेन प्रमितस्तद्रूपेणैवासन्निति च व्याघातः अस्यां व्याख्यायामसतोऽघटत्वादिति ग्रन्थस्य असतो घटादेरप्रमितत्वेन प्रतियोगित्वानङ्गीकारादिति योजना, द्वितीयेऽप्यसत्यप्रमिते घटत्वादिनिषेधो न सम्भवति प्रमित एवाधि-

खण्डनभूषामणिः ।

न ततोधिकं स्वरूपसत्त्वमस्ति तच्चासतोपि । न चासतो निःस्वरूपस्य कथं रूपमिति वाच्यं—न हि निः स्वरूपत्वमेव असत्त्वं घटादेः स्वरूपस्याननुभूयमानत्वात् किं तु बाध्यत्वमेव तस्यासत्वमित्यर्थः । एतदेव स्फुटयति—**न ह्यसन्निति** । असन्घटादिरित्यनूद्य तत्र घटादिर्नेति निषेधो विधेयस्ततश्चासतो यदि घटादित्वं नास्ति तदानुवादानन्तरा निषेधधीर्न स्यादधिकरणशून्यस्याभावस्य ज्ञानासम्भवादतोऽस्त्यसदपि घटादिकं स्वरूपवदेवेति स्वरूपसद्गर्भं कारणत्वमसतोपि दुष्परिहरमित्याशयः । प्रतिषेधप्रतियोगित्वेन घटादिरेष्टव्य इत्यर्थः इति तु **विद्यासागरः** । नन्वसतो घटादेर्घटादित्वं न निषिध्यते किं तु सतो घटादित्वं निषिध्यते घटादेर्वा असत्त्वं निषिध्यत इति चेन्न—तथाप्यधिकरणत्वप्रतियोगित्वाभ्यामसतः स्वीकारापत्तेः । न च घटः सन्नित्येवं निषेधार्थस्तथापि स्वरूपसत्तया सिद्धसाधनापत्तेः । उपलक्षणत्वपक्षं दूषयति **अथेति** ।

खण्डनदर्पणः ।

दित्यर्थः । स्वरूपसत्त्वं कारणत्वमिति स्वीकारे कथमसतः कारणत्वं तस्य निःस्वरूपत्वादत आह—**स इति** बाध्यत्वमेवासत्वं न स्वरूपशून्यत्वमित्यर्थः । ननु स्वरूपसत्त्वं पारमार्थिकसत्त्वमभिप्रेतं तेन तव पक्षाद्विशेषस्त्वया दण्डादीनामपारमार्थिकत्वाङ्गीकारादिति चेन्न घटाद्यनतिरिक्तं स्वरूपसत्त्वमितिभिप्रायेणाभिधानात् । यदि घटाद्यतिरिक्तं पारमार्थिकसत्त्वं स्वरूपसत्त्वं तत्र पारमार्थिकवृत्तावनवस्थाऽऽवृत्तावस्याप्रामाणिकत्वेति तात्पर्यात् । **तथा सतीति** । यथा घटः सन्नित्यत्र घटमुद्दिश्य सत्ता विधीयते तथा तन्निषेधोप्यन्यथा(१) घटादिरसन्निति सामानाधिकरण्यं न स्यादित्यर्थः । नन्वसति घटे

खण्डनरत्नमालिका ।

त्वादि स्वरूपमुच्यते । एवं सत्ताविशिष्टं कारणमिति पक्षे असदेव कारणमित्युपपाद्य

---

(१) यथा घटः सन् इति सामानाधिकरण्याद्घटः सन्नभ्युपगम्यते तथा घटोऽसन् इति सामानाधिकरण्यादसन्नपि घटोऽभ्युपेय इत्यर्थः ।

स्यात्; असतोऽघटादित्वात् । अथ सदपि सत्तामनन्तर्भाव्य कारणं तदानीमसदपि तत्तथास्तु, सत्त्वासत्त्वयोः कारणकोट्यप्रवेशाऽविशेषात् । अथ "न सत्ता कारणकोटिनिविष्टा, किन्तु कारणत्वं सत्त्वं, नियतपूर्वसत्तां हि कारणतां मन्ये" ?—इति मन्यसे, तर्हि मत्पक्षेपि सैव कारण-

खण्डनभावदीपिका ।

करणे निषेधाङ्गीकारात । असतश्च घटत्वादिशून्यत्वेन प्रमितत्वासम्भवादिति । एवं श्लोकस्य पूर्वार्द्धं व्याख्यायोत्तरार्द्धं व्याख्यातुं पराभ्युपगममुपन्यस्यति—अथेति । सत्ताघटितं न कारणं चेदित्यर्थः । सत्त्वस्यासत्त्ववत्कारणकोटौ प्रवेशानङ्गीकारे सदेव कारणमिति कथन्नियम्यत इति दूषयति तदानीमिति । ननु सत्ताव्यतिरेकेण कारण-

शाङ्करी ।

र्थिकत्वखण्डने हृदयम् । श्लोकद्वितीयार्द्धं व्याचष्टे । अथेति । सत्ताया इवाऽसत्ताया अपि कारणकोट्यप्रवेशादसत्कारणवादित्वाद्वयमपि नोपालम्भ्याः, यतो दण्डादिः कारण-

खण्डनभूषामणिः ।

तथास्त्विति । यथा सत् सत्तामनन्तर्भाव्य कारणं तथाऽसदप्यसत्त्वमन्तर्भाव्यकारणमस्त्वित्यर्थः। कारणस्यासत्त्वं नोपपद्यते कारणत्वस्यैव सत्तात्मकत्वादित्याशङ्कते—अथेति । इदं च बौद्धमतम् । कारणत्वस्य भावत्वव्याप्तत्वात्तन्निवृत्तौ तदपि निवर्तेत इत्याशङ्कार्थं इति तु विद्यासागरः । तच्चिन्त्यं घटादेरपि भावत्वाङ्गीकारादिति । घट्टकुट्यामिति । शौल्किकभिया निशायां मार्गान्तरेण गच्छतः क्षपितनिशस्य मार्गतो भ्रष्टस्य घट्टकुट्यां शौल्किकशालायां कस्यचिद्वञ्चकस्य चतुरंमन्यस्य प्रभातं प्रातःकालस्तथा तव सत्त्वाद्याप-

खण्डनदर्पणः ।

घटपदस्य शक्तिग्रहाभावात्कथं तदुपस्थितिरिति चेदनादिवासनावशादसदितिप्रसिद्धशब्दसामानाधिकरण्याद्वा सदसत्साधारणघटे घटपदशक्तिग्रहाद्वा । श्लोकोत्तरार्द्धं व्याचष्टे-अथेति । असत्त्ववत्सत्वस्यापि कारणकोटावनिवेशात्कथं सदेव कारणमिति नियम इत्यर्थः । ननु सत्ताघटितं कारणत्वं न ब्रूमः किन्तु सत्तैव कारणत्वं तथा च कारणत्वमभ्युपगच्छता त्वयापि सत्ताङ्गीकर्तव्येति शङ्कते—अथेति । सत्त्वे सत्त्वाभाववत् असत्समं तव इत्यभिसन्धिः । परिहरति-तर्हीति । बलान्निगृहीतो योऽसद्वादी सोपहासं पराभिप्रायानभिज्ञः शङ्कते—तर्हीति । स्वाभिप्रायं प्रकटयन् परिहरति-नेति । भावा-

खण्डनरत्नमालिका ।

इदानीं सत्तोपलक्षितं कारणमित्यस्मिन्नपि तदुपपादयितुमाह—अथेति । सत्ताया इवासत्ताया अपि कारणकोट्यप्रवेशात् असत्कारणवादित्वाद्वयमपि नोपालम्भ्या इति भावः । ननु सत्ताघटितं न कारणत्वं ब्रूमः किं तर्हि सत्तैव कारणत्वमिति तथाच कारणत्वमभ्युपगच्छता त्वया सत्ताप्यङ्गीकर्तव्येति शङ्कते—अथेति । ममापि नियतपूर्वसत्त्वमेव कारणत्वमिति परिहरति तर्हीति । घट्टकुट्यां प्रभातमिति । शौल्किकभया-

**तास्तु । तर्हि कारणस्य सत्तामभ्युपगतवानसीति वट्टकुट्यां प्रभातम् ?- इति चेन्न, भावाऽनवबोधात्, सत्तामसतीमभ्युपगच्छतापि सत्ता मया**

खण्डनभावदीपिका ।

त्वमेव नास्ति तथा च न कारणकोटौ सत्वानुप्रवेशः किन्तु कारणधर्म्म एव सत्ता तेन सत्ताधिकरणं कारणमित्यस्मन्मतमिति शङ्कते—**अथ न सत्तेति** । तत्र हेतुमाह—**नियतेति** । निगूढाभिसंधिरुत्तरमाह **तर्हीति** । अस्मन्मतानुप्रवेशादिति शङ्कते-**तर्हि कारणस्येति** । सिद्धान्ती स्वाभिप्रायमाविष्करोति—**नेति** । भावमेवाह—**सत्ता-**

शाङ्करी ।

मित्यावयोः समानोऽभ्युपगमः, सच सन्नसन्वेति क्रमेण विचारणीयमित्यर्थः । ननु सत्ता-घटितं कारणत्वं न ब्रूमः, किन्तर्हि ? सत्तैव कारणत्वमिति, तथाच कारणत्वमभ्युपगच्छता त्वया सत्ताप्यङ्गीकर्त्तव्येति शङ्कते-**अथ नेति** । ममापि नियतपूर्वसत्वमेव कारणत्वमिति परिहरति-**तर्हीति** । ननु कारणत्वं कारणानां धर्मः, स चेत्सत्ता, तदा सन्त एव दण्डादयः कारणानि, नाऽसन्तः, इति पर्यवसितं विवादेनेत्यन(१) आह-**तर्हीति** ॥ भावमाविष्करोति । **सत्तामिति** । न वयमसतीमपि सत्तां नाभ्युपमः, किन्तर्हि ?

खण्डनभूषामणिः ।

त्तिभिया बौद्धभाषया वञ्चयतस्तत्र सत्त्वादि बौद्धस्येवापतितमिति भावः । बौद्धानामर्थक्रियाकारित्वमेव सत्त्वम्, अस्माकं तु कारणतारूपा सत्तापि न सती बाध्यमानत्वादिति यो भावस्तदनवबोधादित्याह—**भावानवबोधादिति** । **अन्यथा कासाव-सतीति** । असत्येव कारणतेत्यस्मन्मतं न बौद्धमतं तदन्यदिति भावः । यदि सत्ता ना-

खण्डनदर्पणः ।

**नवबोधादिति** । सत्त्वस्य कारणधर्मत्वाङ्गीकारेपि सत्त्वे सत्त्वाभाववत् तस्यासत्त्वाच्चासत्करणत्वव्याघात इति भावः । सत्ता न सतीति व्याघात इत्याशङ्क्याह—**सत्ता-मिति । यद्वा** भावानवबोधात्-अभिप्रायानवबोधात् इत्युक्तं तमभिप्रायमाह-**सत्तामिति** । सत्तां कारणतामसतीमित्यभ्युपगच्छताऽसद्वादिना पूर्वक्षणे स्वरूपसत्ताभ्युपगतैवेति यावत् । सत्तायां सत्तान्तराभावेऽपि सत्ता सतीति यथा न

खण्डनरत्नमालिका ।

न्निशि मार्गान्तरेण गच्छतः क्षपितनिशस्य मार्गभ्रमात् यथा वट्टकुट्यां शुल्कशालायां प्रभातं तथा तव सद्वादापत्तिभयाद्वापान्तरेण वञ्चयतोऽपि सद्वाद एवापन्न इत्यर्थः । भावमाविष्करोति—**सत्तामिति** । यथा सद्वादिनः सत्तायां सत्तान्तराभावेऽपि सत्ता

(१) इति पूर्वपक्षिणः शङ्कामनूद्य 'भावानवबोधात्' इत्यन्तं सिद्धान्त्याहेत्यर्थः वस्तुतस्तु अत्र 'इत्याह'—इत्येव पाठ उचितः, पूर्वपक्षस्यैव प्रथममुपस्थितत्वात्, अतो न क्लिष्टकल्पनं दोषः पाठान्तरं तु लेखकप्रमादात् ।

ऽभ्युपगतैव, अन्यथा कासावसतीति । त्वमपि किं सत्तां तत्सत्तामन्त-

खण्डनभावदीपिका ।

मिति । सत्तायाः कारणधर्मत्वाङ्गीकारेऽपि तस्याः पारमार्थिकत्वानङ्गीकारादस्मदभिमतमसतः कारणत्वं न विहन्यत इत्यर्थः। कथानुपपत्त्येत्यत आह—**अन्यथेति** । सत्ताया एवानङ्गीकारे तस्या असत्त्वस्य वक्तुमशक्यत्वात् तदसत्वाङ्गीकारे च सत्ताप्यङ्गीकृता स्यादित्यर्थः। इदानीं प्रतिवादिनाप्येतदवश्याभ्युपेतव्यमित्याह—**त्वमपीति** । यद्वा ननु यद्यपि त्वया सत्ता स्वीकृता तथापि तत्सत्ता न स्वीक्रियत इत्याशङ्क्य तवाप्येतत्तुल्यमित्याह**त्वमपीति** । नियतपूर्वक्षणसत्ता कारणत्वमित्यङ्गकुर्वताप्यन्ततो गत्वा कापि सत्ता

शाङ्करी ।

सतीम्, अन्यथा किमुद्दिश्याऽसत्त्वमपि मया विधेयमित्यर्थः त्वयापि या सत्ता कारणत्वेनाभ्युपेयते सा स्वान्तर्भावेणैव कारणत्वं वाच्यम्, स्वविशिष्टा च सा त्वन्मतेऽप्यसत्येव, यदि च स्वात्मानं तटस्थीकृत्य सा सत्ता कारणत्वं तदा तया सत्तया तटस्थया कारणता सती निर्वहेत, सत्तैव तु न सती, तस्याः सत्तान्तराभावात्, भावे वा पुनरपर्य्यवसानं स्यात, नवा स्वस्य तटस्थीकरणे कारणत्वं सत्त्वमिति निर्वहेदित्याह—**त्वमपीति** । ननु यद्यसत्कारणं तदेदं कारणमिदमकारणमिति किंकृतो नियमः ? इत्याह–

खण्डनभूषामणिः ।

भ्युपेयते तदा किमुद्दिश्यासत्त्वं विधेयमिति गर्वनिष्कर्षः । ननु यदि सत्ता स्वीक्रियते तदा यत्रैव सा तत्र न तदसत्ता विरोधादिति शशशृङ्गादावेव तदसत्तास्तु स्वरूपसत्तात्मककारणतापक्षे तु घटादिस्वरूपस्यानुभवसिद्धत्वान्निःस्वरूप एव तन्निषेधो युक्त इति चेन्न या हि सत्ता कारणता सा सत्ता जात्यात्मिका चेत्तदा स्वस्यां स्वस्या अभावात् असत्येव अथ विनापि स्ववृत्तिं सा सती तदाहुः "वस्तुत्वमपि सामान्यं व्यक्तिजात्यन्तराश्रितम्" इतिजात्यन्तरमेव तस्याश्रयः स्वं तु स्वत एव वस्तु वस्त्वभिन्नमिति चेन्न **अपरे तु मन्यन्त** इत्येवं तस्य खण्डयिष्यमाणत्वात्यदि स्वरूपात्मिका तदापि तस्या अबाध्यत्वरूपता न सिद्ध्येत्यतोऽसतीति तत्रैव सत्तानिषेधो नानुपपन्नः । स्वरूपसत्तेति निषेधो हि व्याहतः । स्वाभिप्रायं प्रकाश्य पराभिप्रायं पृच्छति–**त्वमपीति** ।

खण्डनदर्पणः ।

व्याघातः तथा सत्ता न सतीति न व्याघात इति भावः । **अन्यथेति** । सत्ताया एवानङ्गीकारे तस्या असत्वस्य वक्तुमशक्यत्वात् तदसत्वाङ्गीकारे सत्ताप्यङ्गीकृता स्यादित्यर्थः । स्वभिप्रायमुक्त्वा पराभिप्रायं पृच्छति—**त्वमपीति** । ननु यद्यसत्कारणं तदा तत्कारणमिदं न कारणमिति कुतो नियम इति सद्वादी-

खण्डनरत्नमालिका ।

सतीति न व्याघातस्तथाऽसद्वादिनोऽपि मम सत्ता न सतीति न व्याघात इत्यर्थः । ननु त्वया सत्तायाः स्वीकारेऽपि तत्सत्ता न स्वीक्रियते मया तु सत्ताया अपि सत्त्वान्तरं स्वीक्रियते इति न मम व्याघातसम्भव इत्यत आह—**त्वमपीति** । नियतप्राक्सत्त्वं कारणत्वं तस्य च सत्त्वान्तरमिच्छँस्त्वमपि तत्सत्तामन्तर्भाव्यानन्तर्भाव्य

**भाव्य कारणत्वमिच्छसि ? नत्वेवं, पूर्ववत्क्वापि सत्तात्यागो वा अनवस्थायां वा पर्य्यवसानं स्यात् ।**

असत्कारणत्ववादे कार्यकारणभावनियमानुपपत्तिशङ्का प्रतिवन्द्या तत्परिहारश्च—

**असत्त्वाविशेषात्कारणनियमः कथं स्यात् ?—इति चेन्न, सत्त्वाविशेषेपि तुल्यत्वात् ।**

खण्डनभावदीपिका ।

न स्वीक्रियत इत्याशङ्क्य तवाप्येतत्तुल्यमित्याह—**त्वमपीति** । नियतपूर्वक्षणसत्ता कारणत्वमित्यङ्गीकुर्वता त्वयापि तत्सत्तायां सत्तान्तरं नेष्यत इत्यर्थः । तथाभ्युपगमे को दोषः इत्याशङ्क्य स एवाह सिद्धान्ती **न त्वेवमिति** । सत्तायां सत्तान्तरमङ्गीकुर्वताप्यन्ततो गत्वा क्वापि सत्ता न स्वीक्रियते चेत्(द्रव्यापि) सत्ता सतो न स्यादित्यसत्कारणं नैव पर्यवस्येत् । अविच्छेदे त्वनवस्था आनन्त्येन प्रत्ययवस्थाने तु जातिमात्रोच्छेदः स्यादित्यर्थः । कुलालादीनां कुविन्दादीनां चासत्वाविशेषात् कुलालादय एव घटस्य कुविन्दादय एव पटस्य कारणमिति नियमः कथं स्यादिति शङ्कते—**असत्त्वावि-**

शङ्करी ।

**असत्त्वेति** । त्वन्मतेपि कारणाऽकारणविभागोऽनुपपन्नः, सत्त्वाऽविशेषादित्याह—**सत्त्वेति** । ननु सतः कारणत्वे दण्डजातीये सति घटः, व्यतिरेके च तस्य घटजाः

खण्डनभूषामणिः ।

पूर्वक्षणसत्ताकारणत्वमिच्छंस्त्वमपि कारणविशेषणीभूतामन्यां तत्सत्तामन्तर्भाव्येच्छसि इत्युक्ते पूर्ववाद्याह—**न त्वेवमिति** । इत्थमेव मयेष्यत इत्यर्थः । पूर्ववदित्यनु- **भूतिस्वरूपसंमतपाठः** स च नैवं तथा सतीति पूरणेनैव संयोज्यः किं वा नन्वेवमित्यस्याद्वृत्त्या सिद्धान्तग्रन्थता । ननु भो एवं सन्ति पूर्ववदित्यादिना । यद्वा ,नन्विति । सिद्धान्तवादिन एव कोमलोक्त्या परिहारोयं शेषो **विद्यासागरस्यापि** सम्मतः, तथा दाक्षिणात्यस्य गुण्डसमभट्टस्यापि । क्वचित्कस्तु नत्वेवमिति **पाठः** स तु कण्टकोद्धाररूपेण व्याख्येयः । भ्रान्तः शङ्कते—**असत्वाविशेषात्** —बाध्यत्वाविशेषाद् घट

खण्डनदर्पणः ।

वदति—**असत्त्वेति** । सत्त्वाविशेषेपि यथा कलमबीजात्कलमाङ्कुरो न यवबीजात्

खण्डनरत्नमालिका ।

वा आद्ये अनवस्था द्वितीये असतः कारणत्वप्रसङ्ग इति पूर्वोक्तं दूषणमनुद्धृतमेवावतिष्ठते इत्यर्थः । ननु यद्यसत्कारणं तदा इदङ्कारणमिदमकारणमिति नियमः किं कृत इत्याह—**असत्वेति** । यथा सत्कारणवादे कमलकन्दलयोः सत्त्वाविशेषेऽपि कमलाङ्कुरः कमलबीजादेव न कन्दलादिति इति नियमः तथाऽसत्वाविशेषेऽपि नियम इत्याह—**नेति** । यस्मिन् सत्येव यद्भवति नासति तत्तस्य कारणमिति अन्वयव्यतिरेकाभ्येव सद्वादे कार्य-

प्रतिवन्दीपरिहारशङ्का—

सत्त्वेऽस्त्यन्वयव्यतिरेकानुविधानं, तस्य, तज्जातीयस्य वा, त्वत्पक्षे त्वसत्त्वाऽविशेषाद्व्यतिरेकः परं, सोऽप्यनियतः, यदा करणाऽभावस्तदा

खण्डनभावदीपिका ।

शेषादिति । परिहरति—न सत्व इति । विशेषमाशङ्कते—सत्त्व इति । सत्वपक्षे घटपूर्वसत्वनियतसत्वादेर्विशेषस्य कुलालादौ नियमानत्वादस्ति तस्मिन् सत्येव भवतीत्यन्वयानुसन्धानं कारणनियमज्ञानहेतुः असत्वपक्षे त्वसति कारणे कार्यं न भवतीति व्यतिरेकः परं नान्वयः सोऽपि न च कार्य्याभावनियतकारणाभावेऽपि बीजाभावे कुत्र कार्याणामभावाभ्युपगमादित्यर्थः । क्षणभङ्गुरज्वालादौ तथैवान्वयव्यतिरेकग्रहो न सम्भवतीति अभिप्रेत्येत्युक्तं तज्जातीयस्य वेति । कारणे सत्येव कार्य्यं भवतीति

शाङ्करी ।

तीयस्य व्यतिरेकः,—इत्यन्वयव्यतिरेकौ कारणताग्राहकौ सम्भवतः, नासतः कारणत्वे ताविति शङ्कते—सत्त्वे इति । यथा सतोऽन्वयव्यतिरेकौ तथैवासतोपि, परन्तु निरू-

खण्डनभूषामणिः ।

एव जलाहरणसाधनं न वह्निरिति नियमः कथमित्यर्थः । स्वरूपसत्त्वेव कारणतोपयुक्ता सा च घट एवास्ति न वह्नाविति वस्तुगतिस्तां निगूह्य प्रतिवन्द्या परिहरति सत्त्वाविशेषेपीति । भवदभिमताबाध्यत्वाविशेषेपीत्यर्थः । न चवं मतानुज्ञा, स्वपक्षे दूषणस्य तर्हि ममापीत्यादिना परिहृतत्वात् तथापि चेदयमेवं वदति तथायं प्रतिवद्यैव बोधनीयः कुमतिवाङ् मनसः विपयादीत्याशयात् किंच मतानुज्ञापि किं प्रतिवादिनं परिहृत्योद्भावनीया अपहृत्यैव वा आद्ये तवापि मतानुज्ञा अस्त्येव ममापि तवाज्ञानमुद्भावनीयं बहुधोक्तमपि त्वया न बुद्धिमिति । असतः कारणतामुपपाद्य तस्याग्राहकपूर्वपक्षनियमपूर्वकं व्युत्पादयति सत्त्वे इत्यादिना कथितदोषापत्तेरित्यन्तेन । तज्जातीयस्य

खण्डनदर्पणः ।

इति नियमस्तव तथाऽसत्वाविशेषेपि नियम इति परिहरति—नेति । यस्मिन् सत्येव यद् भवति नासति तत्तस्य कारणमित्यनन्यथासिद्धान्वयव्यतिरेकाभ्यां कार्यकारणयोः कार्यकारणभावो नियम्यत इति शङ्कते—सत्त्वेऽस्तीति । एकव्यक्तित्वमादाय न सर्वत्र तथा अत आह-तज्जातीयस्येति । अस्तु तर्हि ममापि तथा तआह—त्वदिति । नियतव्यतिरेक एव तथास्त्वत आह—सोपीति । कारणाभावस्य कार्याभावेनाविनाभावानभ्युगमादिति हेतुमाह—यदेति । तदेव विवृणोति नित्यासत इति । अन्वयस्त्विव-

खण्डनरत्नमालिका ।

कारणभावनियामकौ इति शङ्कते-सत्वेऽस्तीति । क्षणिकज्वालादिसंग्रहार्थं तज्जातीयस्येत्युक्तम्। ननु असद्वादेऽपि अन्वयव्यतिरेकावेव कार्यकारणभावनियामकौ आस्तामत आह—त्वत्पक्षे इति । त्वव कारणस्यसत्त्वानभ्युपगमाद्बीजे सति अङ्कुरो भवतीत्यन्वयज्ञानं न सम्भवति नासतीति व्यतिरेकः केवलं सम्भवतीत्यर्थः । नन्वेवं व्यतिरे-

कार्य्याभावावश्यम्भावानभ्युपगमात्, नित्याऽसतः कारणस्याऽसत्त्वे एव कदाचित्कार्य्योत्पादात्, अन्वयस्तु न क्वचिदपि ?—इति चेत्,

उक्ताशङ्कापरिहरणेन प्रतिवन्दीस्थापनम्—

न तुल्यत्वात्। अन्वयो नास्तीत्यभ्युपच्छतायन्वयोपगमात्।

खण्डनभावदीपिका।

अन्वयस्तु कारणसत्वानभ्युपगमे न सम्भवतीत्याह—अन्वयस्त्विति। परिहरति-न तुल्यत्वादिति। नियतपूर्वसत्वरूपस्यान्वयस्यापि घटादिस्वरूपसत्त्वस्येवालीकस्या-ङ्गीकारात् स चास्माकमपि कारणनियमज्ञानहेतुरस्तीति। अन्वयाभ्युपगमोऽपि तुल्य

शाङ्करी।

प्यमाणौ तावप्यसन्तौ पर्य्यवस्यतः,-इत्यन्यदेतदित्याह—न तुल्यत्वादिति॥ किञ्च 'असतोऽन्वयो नास्ति'-इति वदता त्वयाप्यन्वयो निषेध्यत्वेनाभ्युपग-म्यते एवेत्याह। अन्वय इति। ननु तथापि सन्नन्वयो नास्ति, स च प्रयोजकः ?

खण्डनभूषामणिः।

चेत्यजनितफलस्यान्वयरहितस्यापि संग्रहार्थम्। व्यतिरेकःपरं केवलं नान्वय इत्यर्थः। वेदाः प्रमाणमित्यत्रेव नपुंसकलिङ्गस्योपपत्तिः अस्तु तर्हि व्यतिरेकादेव कारणतावगमो नेत्याह सोऽप्यनियत इति। तुल्यत्वात् स्वरूपसत्ताया घटस्याप्यन्वयोपगमात्। दूषणान्तरमाह-अत एव वदता त्वया निषेध्यत्वेनान्वयोपगमात् अपिशब्द उपगमा-दित्यनन्तरं योज्यश्चार्थिन चासौ व्यतिरेकः परमित्यत्रोक्तव्यावर्त्यतया स्वरूपन्वयदन्ति। अन्वयस्तु न क्वचिदपीत्युक्तमतो न युक्तं तथा च यादृशं ग्राह्यं ग्राहकमपि तादृशमिति यक्षानुरूपो बलिरित्याशयः। न चासावन्नेति वाच्यं तथा च सति प्रतियोगित्वानुपपत्तेः। एवं निरुत्तरे प्रतिवादिनि स्वमते स्वरूपसत्वमादाय प्रतियोगितोपपत्तेर्न पारमार्थिक-त्वापेक्षा यद्यपि तथापि पारमार्थिकोऽन्वयो हि प्रयोजकः स इह नास्तीति यदि कश्चिद्-

खण्डनदर्पणः।

ति। अन्वयसहचार इत्यर्थः। न तुल्यत्वादिति। नियतपूर्वभावित्वस्य व्यावहा-रिकस्य स्वीकारादन्वयोपि तुल्य इत्यर्थः। यद्वा सत्ताविशिष्टस्य तदुपलक्षितस्य च सत्त्वाभावादन्वयाद्यभावस्तवापि तुल्य इत्यर्थः। एवं साम्यमापाद्य स्वपक्षेऽधिकमाह-

खण्डनरत्नमालिका।

कादेव तर्हि कार्यकारणभावनियमोऽस्तु अत आह-सोऽपीति। कारणाभा-वस्य कार्याभावेनाविनाभावानभ्युपगमादिति भावः। अत्र हेतुमाह—यदेति। कार्यभावस्य कारणभावेनाविनाभावोऽन्वयः स न सम्भवति कार्यकारणभावा-नभ्युपगमादित्याह—अन्वयस्त्विति। परिहरति—नेति। नियतपूर्वभावि-त्वस्य व्यावहारिकस्य स्वीकारान्ममापि अन्वयस्तुल्यः इत्यर्थः।

११६ भामती। ब्रह्मसूत्रशाङ्करभाष्यव्याख्या सर्वतन्त्रस्वतन्त्रश्रीमद्वाचस्पतिमिश्रविरचिता। न्यायाचार्य पं० ढुण्ढिराजशास्त्रिणा सङ्कलितया विषमस्थलटिप्पण्या समलङ्कृता। सम्पूर्णः। ( वेदान्त वि० ११ ) रु० २—८

११७ जन्मपत्रदीपकः। सोदाहरण-सटिप्पण-हिन्दीटीकासहितः। ज्यौ० पं० श्रीविन्ध्येश्वरीप्रसादद्विवेदिना विरचितः। ( ज्यौ. वि. ५ ) रु० १—४

११८ गोभिलगृह्यसूत्रम्। सटीकम्। ( कर्मकाण्ड वि० १२ ) रु० ३—८

११९ सिद्धान्तकौमुदी। व्याकरणाचार्य नेने पं० गोपालशास्त्रि विरचित सरला टिप्पण्या सहिता। "रूपलेखनप्रकार-पङ्क्तिलेखनप्रकाराख्य परिशिष्ट सहिता च। कारकान्तो भागः। ( व्या० वि० १४ ) रु० २—०

१२० कात्यायनशुल्बसूत्रम्। कर्कभाष्य-महिधरवृत्ति सहितम्। ( कर्म० वि० १४ ) रु० ०—६

१२१ व्यक्तिविवेकः। श्रीराजानकमहिमभट्टकृतः। श्रीराजानकरुय्यककृत व्याख्यया साहित्याचार्य पं० श्रीमधुसूदनशास्त्रिविरचित मधुसूदनीविवृत्या च समुल्लासिता रु० ८—०

१२२ श्राद्धविवेकः। श्रीरुद्रधरकृतः। वेदाचार्य पं० अनन्तरामशास्त्रि कृत टिप्पणी सहितः। ( कर्म० वि० १३ ) रु० २—८

१२३ सांख्यतत्त्वकौमुदी। पण्डितराज श्रीराजेश्वरशास्त्रिद्राविड महोदयनामाज्ञया न्यायाचार्य श्रीहरिराम शुक्ल विरचितया "सुषमाख्य" कौमुदी व्याख्यया समलङ्कृता। ( सांख्य वि० २ ) रु० १—१०

१२४ वाक्यपदीयम्। श्रीभर्तृहरिमहावैयाकरण विरचितम्। न्याय-व्याकरणाचार्य पं० श्रीसूर्यनारायण शर्म शुक्लेन विरचितया भावप्रदीपाख्य व्याख्यया टिप्पणेन च सम्पादितम्। ( ब्रह्मकाण्डम् )। ( व्या० वि० १५ ) रु० २—०

१२५ प्रौढमनोरमा। भैरवी-भावप्रकाश-सरलाटीकोपेतः लघुशब्दरत्नश्च। [ अव्ययीभावान्तो भागः ] ( व्या० वि० १६ ) रु० १०—०

१२६ जैमिनीयन्यायमाला। श्रीमन्माधवाचार्यविरचिता। तद्विरचितेन विस्तरेण विभूषिता। मीमांसाचार्य पं० पट्टाभिरामशास्त्रिणा रचितया विषयवाक्यविवरण्या समलङ्कृत्य संशोधिता। [ तृतीयाध्यायान्ता ] ( मीमांसा वि० ७ ) रु० ४—०

१२७ शतपथब्राह्मणम्। (शुक्लयजुर्वेदान्तर्गतमाध्यन्दिनशाखीयं) वेदविशारद मीमांसाकेसरिणा म० म० चिन्नस्वामिशास्त्रिणा टिप्पण्यादिभिर्विभूष्य विशोधितम्। [ काण्डचतुष्टयात्मकः प्रथमो भागः ] ( वेद० वि० ७ ) रु० २—८

१२८ लघुशब्देन्दुशेखरः। म. म. श्रीनागेशभट्टविरचितः। [ नपदान्तसूत्रान्तोभागः] नागेशोक्तिप्रकाश व्याख्यया संवलितः। ( व्या० वि० १७ ) रु० २—८

१२९ कृत्यसारसमुच्चयः। म. म. श्रीअमृतनाथझा शर्मणा विरचितः। पण्डितश्रीगङ्गाधरमिश्रशर्मणा यथास्थलोपयुक्तटिप्पणीभिः प्रयजनीयविविधपरिशिष्टविषयैश्च समलङ्कृतः। ( धर्म० वि० ४ ) रु० ३—८

१३०—भावप्रकाशः। श्रीभावमिश्रप्रणीतः। वनस्पतिविशेषज्ञ-रूपनिघण्टुकार-श्रीरूपलालवैश्यवरेण विरचितेन निघण्टुभागीय-सचित्र-विवरणेन समुपबृंहितया भिषग्रत्न-श्रीब्रह्मशङ्करशास्त्रिणा विनिर्मितया विद्योतिनीनामिकया भाषाटीकया संवलितः। ( आयुर्वेदवि० ३ ) यन्त्रस्थः

१३०-(२) भावप्रकाशः। विद्योतिनी-भाषाटीका सहितः। [ ज्वराधिकारमात्रः ] रु० ३—०

१३१ गादाधरी-सामान्यनिरुक्तिः। गंगाख्यव्याख्या टिप्पणी सहितः (न्या०वि०१९) रु० ५—०

१३२ चरणव्यूहसूत्रम्। आचार्यमहिदासकृतभाष्यसहितम्। वेदाचार्य डोगरा-अनन्तरामशास्त्रिणा टिप्पण्या परिष्कृत्य संशोधितम्। ( वेद वि० ८ ) रु० ०—१०

१३३ वैयाकरणभूषणसारः। श्रीहरिवल्लभविरचित-दर्पणटीकया, म. म. श्रीभैरवमिश्रकृतया-परीक्षाटीकया, श्रीकृष्णमित्रकृत-भूषणव्याख्यया, श्रीखुद्दीझाशर्मकृत तिङर्थवादसारेण च सहितः। ( व्या० वि० १८ ) रु० ८—८

THE

# CHOWKHAMBÂ SANSKRIT SERIES

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORK

## NO. 476.

कवितार्किकसार्वभौम श्रीश्रीहर्षप्रणीतम्

# खण्डनखण्डखाद्यम्

श्रीमच्चित्सुखाचार्यप्रणीतया खण्डनभावदीपिकया श्रीशङ्करमिश्रप्रणीतया
शाङ्कर्या तार्किकशिरोमणि श्रीरघुनाथभट्टाचार्यप्रणीतया खण्डनभूषा-
मणिटीकया श्रीप्रगल्भमिश्रप्रणीतेन खण्डनदर्पणेन न्यायव्या-
करणाचार्यसूर्यनारायणशुक्लप्रणीतया खण्डनरत्न-
मालिकया च समेतम् ।

THE

# KHAṆḌANA KHAṆḌA KHĀDYA

OF

## ŚRĪ HARṢA,

*With Five Commentaries*

(1) Khaṇḍana Bhāvadīpikā, (2) S'aṅkarī, (3) Khaṇḍana bhuṣ'āmaṇi
(4) Khaṇḍana Darpaṇa and (5) Khṇḍana Ratna Mālikā

BY

Sri Chitsukhāchārya, S'aṅkara Miśra S'rī Rāghu-
nātha Bhaṭṭāchārya, S'rī Pragalbha Miśra
and S'rī Sūrya Nārāyaṇa S'ukla

EDITED BY

NYĀYA VYĀKARAṆĀCHĀRYA

PANDIT S'RĪ SŪRYA NĀRĀYANA S'UKLA

Professor, Govt. Sanskrit College, Benares.

FASCICULUS II—२

1948.

PUBLISHED BY

JAYA KRISHNA DAS HARIDAS GUPTA

*The Chowkhamba Sanskrit Series Office,*

BANARAS.

श्रीः

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तवकः ४७६

*Printed by Jaya Krishna Das Gupta*
*at the Vidya Vilas Press, Banaras.*

अन्वयस्यापि सत्तान्तर्भावने कथितदोषापत्तेः ।

असत्कारणवादे बाधकान्तरपरिहरणम्—

'एतेन "आशामोदकतृप्ता ये, ये चोपार्जितमोदकाः । रसवीर्य्यविपाकादि, तुल्यं तेषां प्रसज्यते"—इत्यस्यापि बाधकत्वमाशामोदकायते,

खण्डनभावदीपिका ।

इत्यर्थः । सत्तामन्तर्भाव्यान्वयस्य हेतुत्वे तत्रापि सत्त्वान्तरं तत्रापि तथेत्यनवस्था क्वचिद्विश्रामे तु प्रथमसत्तापि न सिद्ध्येदित्यादयो दोषाः प्रादुःष्युरित्याह–अन्वयस्येति । असत्कारणमिति पक्षे भट्टपादादिभिरुक्तं दोषान्तरं परिहरति—तेनेति । एतेन–सतः कारणत्वखण्डनेन, रसो मधुराम्लादिः, वीर्यं शक्तिविशेषः 'शीतवीर्या हि पिप्पली'त्यादिना

शाङ्करी ।

इत्यत आह—अन्वयस्यापीति । "अन्तर्भावितसत्त्वश्चेदन्वयो न स संस्ततः । नान्तर्भावितसत्त्वश्चेदन्वयो न स संस्ततः" इति दोषापत्तेरित्यर्थः । ननु यद्यसत्कारणं तदा भोजनेऽभोजने च रसवीर्य्यादितौल्यं स्यादित्यत आह-एतेनेति । आशा-प्रत्याशा, मनोरथ इति यावत् । उपार्जनं–भक्षणम् । रसः–आद्यो धातुः । वीर्य्यं–वलं, चरमधातुः । विपाकः–परिणामः लौहित्यमिति यावत् । 'रसो मधुरादि, रित्यादि

खण्डनभूषामणिः ।

ब्रूयात्तं प्रत्याह–अन्वयस्यापीति । आशया निर्मिता मोदका मनोराज्यनिर्मिता मोदका यैस्तेऽपि तृप्ताः स्युः तत्रेष्टापत्तौ बाधकमाह–रसेति । उपार्जितमोदकानां भक्षितमोदकानां रसवीर्यविपाकपुष्ट्यादयः स्युः । रसोऽम्लादिरित्यपव्याख्यानं विद्यासागरस्य तस्य भोजनाजन्यत्वात , आद्यो धातुरेव रस इति मिश्राः, रसः–शुक्रं, वीर्यं–वलं, विपाकः–पुरीष-

खण्डनदर्पणः ।

अन्वय इति । असतोऽन्वयो नास्तीति वदन्नेवान्वयमङ्गीकुरुतेऽप्राप्तनिषेधायोगादित्यर्थः । ननु तथापि सदन्वयो नास्तीति स च प्रयोजक इत्यत आह—अन्वयस्यापीति । "अन्तर्भावितसत्त्वश्चेदन्वयो न स सँस्ततः । नान्तर्भावितसत्त्वश्चेदन्वयो न स सँस्ततः" इति दोषापत्तेरित्यर्थः । एवं कारणनियममुपपाद्य बाधकान्तरमप्येवं निरस्तं भवतीत्याह—एतेनेति । आशा इच्छा तया कल्पितो मोदकस्तेन तृप्ता जाता उपार्जितमो-

खण्डनरत्नमालिका ।

अन्वयस्येति । अन्तर्भावितसत्त्वं चेत्कारणं तदसत्ततः' । नान्तर्भावितसत्त्वं चेत्कारणं तदसत्ततः ॥ इतिवत् "अन्तर्भावितसत्त्वश्चेदन्वयो न च सँस्ततः । नान्तर्भावितसत्त्वश्चेदन्वयो न च सँस्ततः ॥ "इति दोषापत्तेरित्यर्थः । कार्यकारणभावं नियमयन्नन्वयः सत्ताविशिष्टस्तदुपलक्षितो वा आद्ये तत्र सत्तान्तरवृत्तावनवस्था अवृत्तावसत्त्वम् , द्वितीये तत्राप्यन्वयासत्त्वमित्यर्थः । असतः कारणत्वे परोक्तं दूषणान्तरमपि परिहृतमित्याह—एतेनेति । उपार्जितेति । उपार्जनं–भक्षणम् । रसः–आद्यो धातुः, वीर्यं–

**सत्तान्तर्भावाऽनन्तर्भावाभ्यां प्रत्यादेशात्, 'आशामोदकादिनापि च रसवीर्यविपाकादिजननात्।**

### खण्डनभावदीपिका।

निर्दिष्टः, विपाकः परिणामः—कटुत्वादिः आदिशब्दात् पुष्ट्यादिर्गृह्यते। एतेनेति परामृश्यां खण्डनयुक्तिं स्मारयति—सत्त्वेति। कारणस्येव कार्य्यस्यापि सत्त्वं निराकर्तुं· रसवीर्यविपाकादेरप्याशामोदककार्यत्वं प्रतिजानीते-आशामोदकादिनेति। प्रागसतः

### शाङ्करी।

व्याख्यानमयुक्तं, तस्य भोजनाऽजन्यत्वात्। आदिपदादिन्द्रियपाटवादिग्रहणम्। एतेनेत्यस्याऽतिदेश्यमाह—सत्त्वेति। सतः कारणत्वमभिप्रेत्य बाधोऽयं भवताभिधीयते, तच्चान्तर्भावितसत्त्वं चेदित्यादिना पूर्वमेव निरस्तमित्यर्थः। भोजनाऽभोजनयोस्तुल्यत्वापादनमिष्टापत्त्या निरस्यति-आशामोदकेति। भोजनेऽप्यसन् रसादिरभो-

### खण्डनभूषामणिः।

लोहिताद्यात्मकः परिणामः, तस्य प्रसङ्गस्य बाधकत्वमाशामोदकवदाचरतीत्यर्थः। सत्कारणत्वे हि कार्यसत्त्वं वाच्यं तस्य च प्रागेव खण्डितत्वात्तत्र पर्यवसानाभावे तर्काभासत्वमिति भावः। स्वाप्नकल्पितादेव कार्योपगमादिष्टापत्त्या चायं तर्काभास इत्याह-अशामोदकादिनापि चेति। न च जाग्रत्यपि तत्प्रसङ्गः यथादर्शनं कार्यकरणतास्वीकारात् न हि स्वप्न इव जाग्रत्यपि तद्दर्शनमस्ति तस्मात् जाग्रति स्वरूपसत एवासतः फलमिति तथापि कारणत्वस्य कार्यनिरूप्यत्वादसतस्तु कार्यत्वाभावा-

### खण्डनदर्पणः।

दका प्रसज्येरन्नित्यर्थः। रसः—आद्यो धातुः, वीय बलं चरमधातुर्वा, विपाकः परिणामः लौहित्यमिति यावत्। आदिपदाच्छरीरेन्द्रियपाटवादि। एतेनेत्यस्यातिदेश्यमाह—सत्त्वेति। एतस्य सत्कारणपर्यवसाने तत्र सत्तान्तर्भावानान्तर्भावाभ्यां बाधः कृत एवेत्यर्थः। इष्टापत्तेश्च प्रसङ्गाभाव इत्याह-आशेति। किञ्चासतामकारणत्वे कथं गुञ्जापुञ्जे वह्न्यभिमानिनां वानराणां शीतापनोदादीत्यसत्कारणमसत्त्वाविशेषेपि केन चित्किञ्चिदेव जन्यत इत्यसत्कारणत्ववत उपपाद्यमित्यधिकं दूषणं बोध्यम्। न च तत्र वह्निज्ञानस्य तत्त्वं न गुञ्जापुञ्जस्येति वाच्यम्। शीतातुरस्य वह्निज्ञानात् शीतापनोदादर्शनात्।

### खण्डनरत्नमालिका।

बलम्, विपाकः-परिणामः। बाधकत्वमिति। असत्पक्षे इति शेषः। आशामोदकायते-आशामोदकमिवाचरति। आदिपदेन पुष्ट्यादिपरिग्रहः। एतेनेति परामृष्टं हेतुं विशदयति—सत्त्वेति। सतःकारणत्वमभ्युपेत्यायं बाधो भवताभिहितः स च अन्तर्भावितसत्त्वं चेत्यनेन निरस्तः तथाच प्रसङ्गाभासोऽयमित्यर्थः। स्वप्ने कल्पितादेव कार्यजननादिष्टापत्तेश्च प्रसङ्गाभासोऽयमित्याह—आशामोदकादिनेति।

असतः कार्यत्वम्

**तदसत्कथं कार्य्यं स्यात् ?—इति चेन्न, सत्तामन्तर्भाव्य कार्यत्वोपगमे**

खण्डनभावदीपिका ।

सत्तायोगित्वं कार्य्यत्वमिति लक्षणात् कथमसतः कार्य्यत्वमिति शङ्कते—**तदसदिति**। परिहरति-**न सत्तामिति** । सत्तामन्तर्भाव्य कार्य्यत्वोपगमे तत्र सत्ताया वृत्तौ कारणस्थलोक्तन्यायेनासतः कार्यत्वं स्वात्मवृत्तिविरोधादेरावृत्तेः, अनन्तर्भावे वा सत्ताविशिष्टस्यास्माभिरपि कार्यत्वानुपगमेन कारणस्थलोक्तस्यैवाविशेषस्यावृत्तेरसतोऽपि कार्यत्वं न शाङ्करी ।

जनेपि तथेति तौल्यमेवेत्यर्थः। **सत्तामिति** । "अन्तर्भावितसत्त्वं चेत्कार्यं स्यात्तदसत्ततः । नान्तर्भावितसत्त्वं चेत्कार्यं स्यात्तदसत्ततः" इति दोषापत्तेरित्यर्थः । दृष्टं च गुञ्जापुञ्जस्थले असता हुताशनेनाऽसतः शीतापनोदस्योत्पत्तिर्वानराणाम्, असत्यैव च मत्तकाशिन्या सम्भोगसुखमसदेव स्वप्ने सुप्तानामिति भावः । **यद्वा** ननु प्रागसतः सत्त्वं कार्यत्वम्, इति कार्यसत्तावश्यमङ्गीकार्येत्यत आह-**सत्तामिति** । यथानियतपूर्वसत्त्वं कारणत्वमित्यत्राऽसती सत्ताभ्युपगता, तथा कार्य्यसत्तामप्यसतीमङ्गीकृत्यैतन्मया समाधेयमित्यर्थः। न सत्कारणं, नाप्यसत्कारणं, किन्तु नियतपूर्ववर्त्तिकारणं, तच्च यथा सत्, तथा असदपि, इति सदेव कारणमिति त्वत्कथावत् असदेव कारणमिति मत्क-

खण्डनभूषामणिः ।

त्तन्निरूपितकारणतानुपपत्तिरित्याशयेन शङ्कते—**तदसदिति** । तत् रसवीर्यविपाकादि स्वाप्नं तथा च तुल्यतया उपार्जितमोदकादपि असत्त्वे कार्योत्पादकत्वं न स्यादिति स्वीक्रियतां सत्तेति भावः । **कथमिति** । प्रागसतः सत्तासमवायो हि कार्यत्वं तत्कथमसति स्यादिति भावः । **सत्तामन्तर्भाव्येति** । "अन्तर्भावितसत्त्वं चेत्कार्यं स्यात्तदसत्ततः । नान्तर्भावितसत्त्वं चेत्कार्यं स्यादसत्ततः ॥" इत्युक्तदोषापत्तेरित्यर्थः। अविशेषस्य सतीव सत्यपीत्यर्थः। स्वरूपसत्त्वमेव च कार्यघटकं न तु सत्तासमवायो ध्वंसस्या-

खण्डनदर्पणः ।

एवमसत्कारणत्वमापाद्येदानीमसतः कार्यत्वमापादयितुं चोद्यमुत्तारयति-**तदिति** । प्रागसतः सत्तासम्बन्धो जनिः कथमसतः स्यादित्यर्थः । **सत्तामिति** । सत्ताविशिष्टे कार्यत्वे सत्तायामपि कार्यत्वं स्यात् । किञ्च सत्ताविशिष्टे सत्तावृत्तावंशत आत्माश्रय अवृत्तौ सत्ता असती स्यात् । सत्तारहिते कार्यत्ववृत्तावसत्कार्यमागतमित्यर्थः । न

खण्डनरत्नमालिका ।

एवमसतः कारणत्वमपाद्यासतः कार्यत्वमापादयितुं चोद्यमाह—**तदिति** । **तत्**—स्वाप्नं रसवीर्यविपाकादि । ननु प्रागसतः सत्त्वं कार्यत्वं तच्च कथमसत्तः स्यादित्यत आह—**सत्तामिति** । **कारणवत्कार्येऽपि उक्तदोषस्येति** । अयं भावः यथा सद्वीजं कारणमित्यत्र सत्ताविशिष्टं सत्तोपलक्षितं वा कारणमभ्युपेयतां तथापि आद्ये सत्तायां सत्ताऽसम्भवात् द्वितीये कारणकोटौ सत्ताऽप्रवेशात्

कारणवत्कार्य्येऽपि उक्तदोषस्य, अनन्तर्भावे वाऽविशेषस्य, पूर्ववदावृत्तेः।

हेतुत्वे सत्त्वासत्त्वविचारस्यानर्थक्यम्

तस्मात्—

पूर्वसम्बन्धनियमे हेतुत्वे तुल्य एव नौ।
हेतुतत्त्वबहिर्भूतसत्त्वासत्त्वकथा वृथा ॥ ५ ॥

खण्डनभावदीपिका।

विरुध्यत इत्यर्थः। उक्तन्यायं संक्षिप्य श्लोकेनोपसंहरति-तस्मादिति। नौ-आवयोर्वादिप्रतिवादिनोः पूर्वक्षणसम्बन्धनियमलक्षणे हेतुत्वे तुल्ये सति तावतैव हेतुत्वोपपत्तौ तदनुपयुक्तसत्त्वासत्त्वचिन्ता व्यर्थैवेत्यर्थः। कारणत्वानुपपत्तिं निरस्य तत्कारणत्वप्र-

शाङ्करी।

थाप्याऽऽपाततो वृथा, विचारस्तु करिष्यते इत्युपसंहरति-तस्मादिति। ननु, असत्त्वाविशेषात्कारणनियमः कथं स्यात्,—इति मदुक्ते 'सत्त्वाविशेषेऽपि तुल्यत्वात्'-इति तु त्वया प्रतिबन्दिः कृता, प्रतिबन्दिश्च न दूषणम्, इत्यसतः कारणत्वं प्रमापकाभा-

खण्डनभूषामणिः।

कार्यतापत्तेः कारणताननुगमदोषवत्कार्यताननुगमस्यादोषत्वाच्चेति तु भावः। एवं कार्यत्वानिरूपणद्वारं कारणत्वस्यानुपपन्नत्वं परिहृत्य पूर्वोक्तमसत्कारणमुपसंहरति—तस्मादिति। नौ आवयोः तुल्ये इति सति सप्तमी। हेतुतत्त्वं-हेतुत्वम्। ननु पूर्वसम्बन्धिनियमरूपहेतुत्वं यद्ग्राह्यं तदेवासति नास्तीत्यन्वयव्यतिरेकाभ्यां किं ग्राह्यं या च प्रतिबन्दिर्दत्ता तावन्मात्रेण न पदार्थसिद्धिर्भवति मम तव चान्येन प्रतिक्षेपसंभावादित्याशये-

खण्डनदर्पणः।

सत्कारणं नासत्कारणं किन्तु नियतपूर्वसम्बन्धिकारणं तच्च यथा सत्तथाऽसदिति सदेव कारणमिति त्वत्कथावदसदेव कारणमिति मत्कथापि आपाततो वृथा विचारस्तु करिष्यते इत्युपसंहरति—तस्मादिति। नौ आवयोः सदसद्वादिनोः पूर्वकाले सम्बन्धनियमे हेतुत्वे तुल्ये सति सद्वादे कारणत्वं घटते नासद्वाद इति हेतुत्वानुपयोगिनी कथा वृथेत्यर्थः। यद्यपि मम पक्षेऽपि सैव कारणतास्थितिः पूर्वोक्तेन नियतपूर्वसत्त्वैव कारणत्वमित्युक्तं तथापि तदनभ्युपगमेऽपि न दोषः। यद्वा—पारमार्थिकसत्ता न सदन्तर्भावानन्तर्भावाभिप्रायकमिदम्। असत्त्वैकार्थवृत्तित्वात् कारणत्वस्यासत्कारणमित्युच्यत इति

खण्डनरत्नमालिका।

कारणमसदेव एवं सन् घटः कार्यमित्यत्रापि सत्ताविशिष्टं सत्त्वोपलक्षितं वा कार्यमभ्युपेयतामुभयथापि कार्यमसदेवेति। अविशेषस्य—तुल्यत्वस्य सदसत्कार्यवादिनोः पूर्वत्कारणवत्, आवृत्तेः प्रसक्तेः। तस्मात्—यस्मात्पूर्वरीत्या सत्त्वं कारणकोनिविष्टं न भवति तस्मादित्यर्थः। नौ आवयोः सदसद्वादिनोः हेतुत्वे पूर्वसंबन्धनियमे-पूर्वकालसंबान्धनियमे तुल्ये सति हेतुतत्त्वात्कारणत्वाद्बहिर्भूतयोः सत्त्वासत्त्वयोः कथा सदेव कारणमिति असदेव कारणमिति वा विचारो वृथा नावश्यक इत्यर्थः।

असतोऽपि कारणत्वे नियतपूर्वसदिति बुद्धेर्नियामकत्वम्

**आस्तां प्रतिबन्दिग्रहग्रहः, कथं पुनरसतः कारणत्वमवसेयम् प्राक्सत्त्वनियमस्य विशेषस्यानभ्युपगमात्, असत्त्वस्य चाऽविशेषात्*?-**

खण्डनभावदीपिका ।

तीत्यनुपपत्तिं निराचिकीर्षुः शङ्कामुत्थापयति । **आस्तामिति** । सत्त्वपक्षेऽपि सत्त्वस्याविशिष्टत्वात् कारणनियमः कथं स्यादिति पूर्वोदिता प्रतिबान्दी । **अवसेयं**—निश्चेतव्यं, प्राक्सत्वलक्षणविशेषाभावेन तत्प्रमितेरभावात् कारणत्वप्रमितिरपि न सम्भवति सहकार्यभावादित्यर्थः । असत्त्वग्रहणमेव सहकारि किं न स्यादित्याशङ्क्य सत्त्वस्य सर्वसाधारणत्वेन तद्ग्रहणस्येदं कारणमिति विशेषग्रहणं प्रत्यनुपयुक्तत्वादिति परिहरति पूर्ववादी—**असत्त्वस्य चेति** । वस्तुतः सत्त्वाभावेऽपि तद्बुद्धिरेव कारणग्रहणसहकारिणी भविष्य-

शाङ्करी ।

वादनुपपन्नमेवेति शङ्कते—**आस्तामिति** । यद्वा पूर्वसम्बन्धनियमे हेतुत्वे तुल्य एव नौ-इति साम्यमात्रं त्वयोक्तम्, तच्चानुपपन्नं, सत्त्वासत्त्वपक्षे (१)ग्राहकसत्त्वाऽसत्त्वाभ्यां विशेषादिति शङ्कते—**आस्तामिति** । प्राचि काले सत्त्वं कारणत्वं ग्राह्यं, तदस्मन्मतेऽस्ति, त्वन्मते तु सर्वदैवासत्त्वम्, इति प्राचि काले सत्त्वं ग्राह्यं नास्त्येव किं गृह्येतेत्यर्थः । ग्राह्यानुपपत्त्या ग्राहकाऽनुपपत्तिर्न भवत्यसत्यपि दण्डादौ घटप्राक्सत्त्वबुद्धिसम्भवात् शुक्तौ रजतत्वबुद्धिवत् सा बुद्धिर्दण्डचक्रादावेव न तु रासभादावपि, येन तत्रापि घटकारण-

खण्डनभूषामणिः ।

नाशङ्कते—**आस्तामिति** । प्रतिबन्दीग्रहे—प्रतिबन्द्युपन्यासे, ग्रह—आवेशः । ननु सतोपि प्राक्कालान्तर्भावेन नियमोऽस्त्येवेत्याशङ्क्याह—**असत्त्वस्य चाविशेषादिति** । सत्ता-

खण्डनदर्पणः ।

भावः । कारणत्वानुपपत्तिं समाधाय तद्ग्राहकानुपपत्तिं समाधातुं शङ्कते—**आस्तामिति** । सत्त्वपक्षे सत्त्वाविशेषात्कथं कारणनियमः स्यादितिधीरूपप्रतिबन्दीग्रहः द्वितीयो ग्रहोऽभिनिवेशः । तथा च मतानुज्ञार्थान्तरत्वे इति भावः । मानाभावादसतः कारणत्वमवगन्तुमशक्यमित्याह—**कथमिति** । विषयाभावात्किं ग्राह्यं तव मते व्यवहारिकं सत्त्वं नास्तीति भावः । सतः प्राक् सत्त्ववदसतः प्राक्सत्त्वं कारणत्वावगमकमिति नेत्याह—**सत्त्वस्येति** । वस्तुतः सत्त्वाभावेपि तद्बुद्धिरेव कारणत्वग्राहिका भविष्यतीति

खण्डनरत्नमालिका ।

ननु स्वपक्षे दोषमपरिहृत्य परपक्षे तं प्रसञ्जयतो मतानुज्ञानाम निग्रहस्थानं स्यादित्यत आह—**आस्तामिति** । सत्त्वाविशेषात्सतः कथं कारणत्वमित्येवं रूपप्रतिबन्दीग्रहस्य ग्रहः आग्रह इत्यर्थः । क्वचित्प्रतिबन्दिग्रहाग्रह इत्येव पाठः । सतः कारणत्वगमकमसतोऽपि स्यादत आह—**प्रागिति** । **इदमस्मादिति** । इयं बुद्धिश्च त्वया नाभ्यु-

(१) ग्राहकौ—कारणताग्राहकावन्वयव्यतिरेकौ, तत्सत्त्वासत्त्वमित्यर्थः । सत्त्वपक्षे ग्राहकयोरन्वयव्यतिरेकयोः सत्त्वं नासत्त्वपक्ष इति भावः ।

इति चेन्न "इदमस्मान्नियतप्राक्सदि" ति बुद्ध्याविशेषात् ।

भ्रान्तावतिप्रसङ्गाभावः ।

भ्रान्तैवंबुद्धिगोचरेऽतिप्रसङ्गः *१-इति चेन्न "यादृश्या हि धिया त्रिचतुरकक्षाबाधाऽनवबोधविश्रान्तया वस्तुसत्त्वनिश्चयस्ते, तादृश्यैव

खण्डनभावदीपिका।

तीति परिहरति सिद्धान्ती-नेदमिति। वस्तुनो नियतप्राक्सत्त्वाभावेऽपि यत्र तथाविधा भ्रान्तिरुपजायते तत्रापि कारणत्वप्रमितिः स्यादिति शङ्कते-भ्रान्तेति । सर्वथा बाधवैधुर्यस्य केनाप्यधिगन्तुमशक्यत्वात् त्रिचतुरकक्षाविश्रान्तया धिया वस्तुनिश्चयस्त्वयाप्यभ्युपेयः तथाविधयैव बुद्ध्या ममापि कारणत्वनिश्चयो भविष्यतीति परिहरति—न यादृश्ये-

शाङ्करी ।

त्वं व्यवह्रियेतेति परिहरति-नेति । रासभादावपि कदाचिदेवंबुद्धिसम्भवान्न हि भ्रान्तिहेतवोऽपि केनचिन्नियम्यन्ते इति तस्यापि घटकारणत्वतद्व्यवहारयोः प्रसङ्ग इत्याह-भ्रान्तैवमिति । कारणाकारणयोरेवंबुद्धिसम्भवेऽपि कारणे झटिति बाधानवतारोऽकारणे तु झटित्येव बाधावतारः, इत्यवतीर्णबाधाऽनवतीर्णबाधबुद्धिकृतो विशेष इत्याह-यादृश्येति । ननु यद्यनवतीर्णबाधया धिया प्राक्सत्त्वं विषयीकृतं, तदा तत्पारमार्थिकम-

खण्डनभूषामणिः ।

प्राक्कालनियम्याभावात् असत्ता तु सार्वदिकी नाव्यवहितप्राक्कालमात्रवृत्तिरिति भावः॥ असतोऽपि बुद्धिविशेषरूपा सत्तास्ति सा प्राक्कालनियम्यैव प्राक्कालगतत्वात्तस्या इत्याशयेन परिहरति-न इदमस्मान्नियतप्राक्सदिति भ्रान्तैवंबुद्धिगोचर इति प्रसङ्गः। रासभेऽपि कारणताप्रसङ्ग इत्यर्थः। यादृश्या धियेति । कारणताप्रमापकतया भवतोऽभि-

खण्डनदर्पणः ।

परिहरति-इदमिति । रासभादावपि कदाचिदेवंबुद्धिसंभवात्तस्यापि घटादिकारणत्वं स्यादित्याह—भ्रान्तैवमिति। तवापि मतेऽत्यन्ताबाधिता प्रतीतिर्न प्राक्सत्त्वव्यवस्थापिका सर्वदा सर्वदेशे च बाधाभावस्य ग्रहीतुमशक्यत्वात् प्रतीतिमात्रञ्चातिप्रसक्तं तथा च त्रिचतुरकक्षाबाधरहितप्रतीत्या तन्निश्चयस्तव स च ममापि समान इत्याह—यादृश्ये-

खण्डनरत्नमालिका ।

पेयते इति कथमसत्कारणत्वनिश्चयः । ननु इदमस्मान्नियतप्राक्सदिति बुद्धेः कारणताग्राहकत्वे कापिलानां प्रधाने जगन्नियतसदिति बुद्धिरस्ति न च तज्जगत्कारणत्वेन त्वयाभ्युपगम्यते इत्यतिव्यापकमिदमिति शङ्कते—भ्रान्तैवमिति । भ्रान्तस्य 'रासभः घटनियतपूर्ववृत्तिः' इत्येवंभूतबुद्धिगोचरे रासभादौ कारणत्वप्रसङ्ग इत्यर्थः । तव प्रतीतिमात्रं सत्त्वव्यवस्थापकमुताबाधितप्रतीतिः अद्ये प्रसङ्गसाम्यम् द्वितीये देशान्तरकालान्तरभाविबाधभावस्य प्राकृतदुर्ग्रहत्वादसिद्धिः त्रिचतुरकक्षाबाधितया सत्वनिश्चयश्चेत्तर्हि ममापि तथाविधयैव धिया कारणतानिश्चय इत्याह—यादृश्ये-

विषयीकृतस्य ममापि कारणतानिश्चयः केवलं ततः परास्वपि कक्षासु बाधात्पूर्वपूर्वभ्रान्तिसम्भवेन न तावता सत्त्वावधारणं वयं मन्यामहे- इति विशेषः, 'परदर्शनसिद्धान्तस्य भूरिकक्षाबाधाविनोपि ततः परकक्षा- बाध्यमानत्वेनाऽतथाभावोपगमात् अन्यथकदर्शनपरिशेषः स्यात् ।

खण्डनभावदीपिका ।

ति । कस्तर्हि तत्पश्चाद्विशेष इत्यत आह—केवलमिति । त्रिचतुरकक्षासु बाधविधुराया अपि बुद्धेस्तदुत्तरकक्षासु बाध्यत्वसम्भवेन भ्रान्तित्वसम्भवात्तदुपस्था- पितस्य भेदव्यवहारस्य वास्तवं सत्त्वं नाङ्गीकुर्वत इति विशेष इत्यर्थः । त्रिचतुर- कक्षाबाधविरहिणस्तदुत्तरकक्षासु बाधः क्वापि न दृष्टचर इत्यत आह—परदर्शनेति । सर्वं क्षणिकमित्यादिदर्शनानां तथाविधबाधो भवद्भिरप्यभ्युपेयत इत्यर्थः । विपक्षबाधो-

शाङ्करी ।

भ्युपगन्तव्यं त्वयवेत्यत आह—केवलमिति । आपाततोऽबाधविशेषमात्रमाचक्ष्महे, पर्यन्ततस्तत्रापि बाधाऽवतार एवेति न वस्तुतत्त्वस्थितिरिति भावः । यद्यपि क्रमेणापि बाधितया धियाऽबाधितया वा बाधः । आद्ये न क्षतिः, अन्त्ये तद्बाधो वस्तुतत्त्वा- धीन एव त्वया वाच्य इति सिद्धं वस्तुतत्त्वम् । न च तत्राप्यबाधितबुद्धिविषयत्व- मेव शरणं तत्राप्येतद्विकल्पाऽवतारात् । किञ्चाऽन्यथात्वबोधनं बाधः ? अन्यथात्वप्रमा- पणं वा । आद्ये बाध्यापि बुद्धिर्बाधिका स्यात्, अन्त्ये तत एव वस्तुव्यवस्थितिः, तथापि सर्वोऽयं विशेषो बुद्धिकृतो न वस्तुकृत इति भावः नन्वापाततश्चेदबाध- स्तदा तावता तत्र क्रमिकबाधाऽभावोप्युन्नेष्यते-इत्यत आह-परदर्शनेति । शब्द- नित्यत्वे मीमांसकाभिमते नैयायिकस्य त्रिचतुरकक्षाबाधाऽनवतारेपि क्रमबाध्यत्वस्वी-

खण्डनभूषामणिः ।

मता बुद्धिः सैव मम कारणतेत्यर्थः । ममापि कारणतेति वक्तव्ये कारणतानिश्चय इति निश्चयग्रहणं तस्याः पारमार्थिकत्त्वाभावज्ञापनार्थम् । यद्वा कारणतासहितो निश्चयः ता- दृशबुद्ध्या विषयीकृतस्यैव कारणतानिश्चयश्चान्वयव्यतिरेकाभ्यां बुद्धिविशेषः कारणतेति फलत उक्तम् । यद्वा कारणता च सा निश्चयेति निश्चयात्मिकेत्यर्थः । न च पूर्वनिपा- तापत्तिः विषयीकृतस्य निश्चयः कारणतेति कारणताया एव विधेयत्वेन विशेषणत्वात् । ननु द्वित्रिकक्षाबाधशून्यत्वेन हेतुना परकक्षाबाधाभावः कुतो नानुमीयते व्यभिचारादि- त्याह—परदर्शनसिद्धान्तस्येति । तस्याप्यबाध्यत्वोपगमे तदेव सर्वदर्शनसिद्धान्तः

खण्डमदर्पणः ।

ति । तर्हि किं स्वीकृतमत आह—केवलमिति । अथ त्रिचतुरकक्षायामबाध्यत्वे

खण्डनरत्नमालिका ।

ति । नन्वेवमबाधितधीविषयाणां पारमार्थिकं सत्त्वं स्यादत आह—केवल मिति । निरपेक्षो रप्रत्ययविरोधान्न सत्त्वमित्यर्थः । ननु त्रिचतुरकक्षासु यन्न बाध्यते तत्कालान्तरे न बाध्यते इति सम्भावना स्यादत आह—परदर्शनेति । नन्न स्व-

खण्डनभावदीपिका ।

पन्यासेनैतदुपपादयति—अन्यथेति । एवं तावदुत्तरकक्षासु बाधितमपि त्रिचतुरकक्षासु-बाधवैधुर्यात्सदितिव्यवहारयोग्यमित्युक्तम्, अथ यदुत्तरकक्षासु बाधितं तत्प्रथमकक्षायामपि बाधितमित्यादावेव निश्चीयेत तदा तद्बाधानुसंधाननिमित्ततत्प्रामाण्यारोपेण तद्दर्शनानामुत्पादनमेव न स्यात् । न हि (तार्थकारणं) मात्सर्यमात्रेण तत्तद्दर्शनप्रणयनं कि

शाङ्करी ।

कार इत्यर्थः, तथाच—यथा कतिपयकक्षायां बाधविरहाऽधीनोऽभ्युपगमोऽभ्युपगम्यमानो वार्थः सिद्धान्तस्तथा कारणत्वाकारणत्वव्यवस्थितिरपि तावतैव, न तु सर्वप्रकाराऽबाध्यतयेति भावः । ननु तथैव किं न स्यादित्यत आह—अन्यथेति । सर्वप्रकाराऽबाध्यत्वनिबन्धनश्चेत्सिद्धान्तस्तदैक एव सिद्धान्तो भवेत् सर्वेषां दर्शनानामिति सिद्धान्तभेदकृतो दर्शनभेदोऽपि न स्यादित्यर्थः । यद्वा त्रिचतुरकक्षाबाधवैधुर्यमात्राद्यदि पारमार्थिकत्वं मनुषे, तदा सर्वदर्शनसिद्धान्तः पारमार्थिक एवेति पारमार्थिकत्वाऽपारमार्थिकत्ववैमत्यनिबन्धनो दर्शनभेदो न भवेदित्यर्थः । ननु सर्वबाध्यत्वेऽपि दर्शनभेदोऽनुपपन्न एव, नैवम्, मद्दर्शनस्याऽबाध्यत्वात्, तथाच—वक्ष्यामः

खण्डनभूषामणिः ।

स्यादिति सिद्धान्तभेदानुपपत्तिरित्याशयेनाह—अन्यथेति । न च नानादर्शनसिद्धान्तानामेवात्यन्ताबाध्यत्वमस्त्विति शक्यं वक्तुं विरोधात् । न च विकल्पः, अनुष्ठाने हि स भवति न तु वस्तुनीत्येकदर्शनपरिशेषः स्यादिति दिक् । यत्तु "सर्वबाध्यत्वेऽपि दर्शनभेदः कुत इत्याशङ्क्य मैवमस्मद्दर्शनस्याबाध्यत्वात् तथा च वक्ष्यति तत्स्वप्रकाशपरमार्थचिदेव भूत्वेति" तत्तुच्छं तत्राशङ्का ह्यनुपपन्ना बाध्यस्यैव भेदस्यात्यन्ताबाध्यताज्ञानाभावदशायां भेदसम्भवात् उत्तरमप्ययुक्तं तथापि न्यायमीमांसासांख्यादिदर्शनभेदस्यासमाहितत्वात् किंच इदं हि वचनं सर्वशून्यतावादिनो न च तेन परमार्थिकं किंचिदपीष्यते न क्रमेणापि बाधो बाध्यया अबाध्यया वा धिया आद्ये बाधस्यासत्वं ततश्च तत्पूर्वधियामनपोदिते प्रमाण्ये ताभिर्वस्तुव्यवस्था दुर्वारा अन्त्ये बाधो वस्तुतस्त्वाधीनस्त्वया वाच्य इति सिद्धं वस्तुतत्त्वेन । न च तत्राप्यबाधितबुद्धिविषयत्वमेव शरणमिति वाच्यं तत्राप्येतद्विकल्पावतारात् किंचान्यथात्वबोधनं बाधस्तत्प्रमापणं वा आद्ये बाधिकापि बाध्या स्यादन्त्ये तत एव वस्तुव्यवस्थितिरिति तेषामेव खण्डनोद्धरणाभासोऽप्यपास्तः व्यवहारदशायामबाध्यमानां बुद्धिमादायैव सर्वनिर्वाहात् व्यवहार-

खण्डनदर्पणः ।

उत्तरकक्षाबाध्यमदृष्टचरं तत्राह—परदर्शनेति । अन्यथेति । यदि परकक्षायां बाध्यत्वेऽपि त्रिचतुरकक्षायामबाधनात्सत्त्वेन स्वीक्रियेत तदा परस्परसिद्धान्तयोरपि एकत्वविषयं तथात्वेन सत्त्वादविरोधो नियमविरुद्धं संवादिदर्शनं स्यादित्यर्थः । स्वपरपक्षयोरसत्त्वम-

खण्डनरत्नमालिका ।

परपक्षयोरसत्त्वमविशिष्टं चेत्तर्हि कथं कतिपयकक्षासु स्वपक्षोऽबाधित इष्यते अन-

अलत्त्वाविशेषेऽपि पक्षाणां विशेषावधारणम्

**एतेन 'असत्त्वाविशेषेपि कथं कस्यचित्पक्षस्य त्रिचतुरकक्षाधावित्वाऽधावित्वमास्ताम्'—इत्यपि निरस्तम् ।**

खण्डनभावदीपिका ।

तु तस्याप्यर्थस्य तथात्वाभिनिवेशादित्यर्थः। निरालम्बनभ्रमायोगादधिष्ठानमेकं तात्त्विकमवश्यमभ्युपेयमित्यभिप्रेत्योक्तमेकदर्शनपरिशेषः स्यादिति । असत्त्वं चेदविशिष्टं कस्यचिदादावेव बाधः कस्य चित्कासु चित्कक्षास्विति कथं विशेष इत्यत आह—एतेनेति । परदर्शनानामादावबाधितानामपि परकक्षासु बाध्यत्वाभ्युपगमात् । लोके च देहाहंभावतरणिमण्डलप्रादेशपरिमाणयोश्चिरकालमपि परकक्षासु बाधदर्शनमित्यर्थः । तत्तद्बुद्धिविषयत्वमेव चेद्विशेषस्तर्हि कारणस्य प्राक्सदिति बुद्ध्यनुदयदशायामकारणत्वं परसिद्धा-

शाङ्करी ।

'तत्स्वप्रकाशपरमार्थचिदेव भूत्वेती'ति भावः । ननु रासभे घटप्राक्सत्त्वज्ञानवद्दण्डेपि चेत्तद्बाध्यमेव तदा त्रिचतुरकक्षाबाधितत्वाऽबाधितत्वलक्षणोपि विशेषो न भवत्येवेत्यत आह—एतेनेति । शुक्तौ रजतत्वज्ञानस्य, शब्दे नित्यत्वज्ञानस्य च, बाध्यत्वाऽविशेषेपि त्वयाप्येतादृशस्यार्थनियमस्याऽभ्युपगमेनेत्यर्थः । यद्वा परकीयसर्वसिद्धान्तानां बाध्यत्वे बहुकक्षाधावित्वाऽधावित्वविशेषः किंनिबन्धन इत्यत आह—एतेनेति । परसिद्धान्तस्थले रजतज्ञाने च त्वयाप्येतादृशस्य विशेषस्याऽभ्युपगमेनेत्यर्थः । ननु कारणाऽकारणयोः कार्य्यप्राक्कालसत्त्वासत्त्वे यदि न वस्तुनी, किंतु बुद्धिमात्रकृते, तदा तादृशबुद्ध्यभावकाले कारणस्याऽकारणाद्वि

खण्डनभूषामणिः ।

दशायामन्यथात्वबोधनमेव बाधः, स च बाधकत्वाभिमतायां नास्तीति न किञ्चिदेतत् । एतेनेति । परसिद्धान्ते तथा दर्शनस्यापलपितुमशक्यत्वात् यद्वा बुद्धिर्नष्टा नोत्पन्ना वा

खण्डनदर्पणः ।

विशिष्टं चेत् कथं कतिपयकक्षासु स्वपक्षोऽबाधितमास्तामित्यत आह—एतेनेति—कक्षाबाधितत्वमिति अबाधितत्वमिति छेदः । स्वपक्षे त्रिचतुरकक्षासु बाधादर्शनेनेत्यर्थः ।

खण्डनरत्नमालिका ।

आह—एतेनेति । निरस्तमिति । व्यवहारविसम्वादिबुद्धिकृतोऽसतो विशेष इत्युक्तनयेनेति शेषः। यथा सत्त्वाविशेषेऽपि बुद्धिकृतं विशेषमादाय परपक्षस्य सतोऽपि निरासः स्वपक्षस्य स्वीकरणं च परैः क्रियते तद्वन्मयापीति भावः। इदमस्मान्नियतप्राक्सदिति बुद्धिविषयत्वं चेत् कारणत्वं गिरिगुहागतबीजादौ कारणत्वं न स्यात्तादृशबुद्धिविषय-

नियतप्राक्सत्त्वबुद्ध्यभावस्थले तादृशबुद्धिविषयतैव शरणम् ।

अनेवंबुद्धिविषयतादशायां को विशेषः*? इति चेत्, 'यदा कदापि तादृशबुद्धिविषयतैव । अन्यथा कथय कथम् अन्यदातनतादृशबुद्धिवि-

खण्डनभावदीपिका ।

न्तानां बाधानुदयदशायामपि तात्त्विकत्वं स्यादिति शङ्कते—अनेवमिति । कारणे कदाचित् प्राक्सदिति बुद्धेरुदयात्तदत्यन्ताभावानधिकरणत्वं निष्पादयति—अन्यथेति । स्वत्पक्षेऽपि यस्मिन् काले नियतप्राक्सदितिबुद्धिर्नोदेति तस्मिन्काले कथं तस्य तथाविधं

शाङ्करी ।

शेषो न भवेदित्याशङ्कते-अनेवमिति । इदमस्मान्नियतप्राक्सदिति बहुकक्षाधा विनियतबुद्धिविषयत्वाऽत्यन्ताभावाऽनधिकरणत्वमेवाऽकारणात्कारणस्य विशेष इति परिहरति-यदा कदापीति । यद्यपि यस्य कस्यचिद्रासभेपि तादृशबुद्धिविषयत्व-मिति सोप्येवं कारणं स्यात्, कारणेपि च कस्यचित्प्रथमबुद्ध्यैव कारणत्वव्यवहारो, नाऽनेककक्षाधाविधिया अन्यस्याऽनेककक्षाधाविबुद्धिविषयत्वसत्त्वेप्यन्यस्य तदज्ञाना-त्कारणत्वव्यवहारो न स्यादिति कारणत्वं वस्तु स्वीकर्तुमर्हति, तथापि तादृशी बुद्धिः तद्व्यवस्थापिकेति तवापि दुर्घटमिति हृदयम् । अन्यथेति । यदा कदाचित्तादृशबु-

खण्डनभूषामणिः ।

तदा घटस्य वह्नेर्जलाहरणकारणात् को विशेष इत्याशङ्कते—अनेवमिति । तदा चाकारण-त्वे कथं जलाहरणार्थी तत्र प्रवर्तेतेति । यदा कदाचिदिति । बुद्धिविशेषविषयता अ-त्यन्ताभाव एव बुद्धिविशेषयोग्यताख्या कारणता सा च प्रागभावध्वंसकालेऽप्य-

खण्डनदर्पणः ।

अनेवमिति । इदमस्मात्प्राक्सदिति बुद्ध्यभावदशायां कारणे को विशेष इत्यर्थः । यदा कदापीति । तादृशबुद्धिविषयत्वात्यन्ताभावानधिकरणत्वमेव विशेष इत्यर्थः । न च रासभे कदाचिद्बुद्धौ का गतिरिति वाच्यम् । तत्र बाधदर्शनात् । न च कारणे प्रथमदर्शने कथं कारणत्वव्यवहारोऽनेककक्षाधावित्वं विनेति वाच्यम् । अप्रामाण्यश-ङ्कारहितत्वार्थं तदभिधानात् । न तु भूरिकक्षाधावित्वधीर्व्यवहारप्रतीतिप्रयोजिकेति । अन्यथेति । यदा एवं बुद्धिर्नास्ति तदा पूर्वकालावच्छिन्नतया गृहीतसत्त्वं तवापि कथं स्यादित्यर्थः । नचेश्वरधीस्तत्रेति वाच्यम् । तत्र विप्रतिपत्तेः । न च बुद्धि

खण्डनरत्नमालिका ।

त्वाभावादिति शङ्कते—अनेवमिति । एवम्—नियतप्राक्सदितिबुद्धिविषयत्वम्, अनेवम्—तदभावकाले परिहरति–यदा कदेति । यथा द्रव्यलक्षणं गुणवत्त्वमुत्पन्नघ-टेऽव्याप्तमिति गुणवत्त्वात्यन्ताभावानधिकरणत्वरूपं स्वीक्रियते तथा एवंबुद्धिविषयत्वा-त्यन्ताभावानधिकरणत्वं विशेषः स्वीक्रियत इत्यर्थः । कालान्तरीणतादृशबुद्धिविषयत्वेन विशेषानङ्गीकारे दोषमाह—अन्यथेति । यदैवंबुद्धिर्नास्ति तदा पूर्वकालावच्छिन्नत-

षयतयाऽन्यदा सत्त्वं स्यात् । तदा(१)सत्त्वमन्यदास्थेन गृह्यते ?-इति

खण्डनभावदीपिका ।

सत्त्वं स्यात् । यत्र नियतपूर्वसत्त्वं नास्ति तेन समं नियतप्राक्सदितिबुद्धेरसत्त्वाविशेषादित्यर्थः । कालान्तरस्थेन प्राक्सदितिबुद्ध्यन्तरस्थेन तदा सत्त्वग्रहणादकारणस्य च तदाभावादयं विशेष इति शङ्कते—तदेति । कारणस्यासत्त्वाविशेषेप्येतत्तुल्यमि-

शाङ्करी ।

द्धेरतन्त्रत्वे तवापि तादृशबुद्धिविरहदशायां प्राक्सत्त्वस्य वस्तुनः कथं सिद्धिरित्यर्थः । तादृशबुद्ध्यभावदशायामपि कारणत्वमन्यदास्थेन तादृशबुद्धिविशेषेण गृह्यते इति शङ्कते—तदा सत्त्वमिति । यथाऽन्यकालीनं तादृशज्ञानमन्यकालीनमपि कारणत्वं व्यवस्थापयति तथाऽन्यकालीनमपि तादृशबुद्धिविषयत्वमन्यकालीनस्यापि कारणत्वं भवि-

खण्डनभूषामणिः ।

स्त्येवेति भावः । अन्यदा सत्त्वमिति । तादृशबुद्धिविरहदशायां नियतप्राक्सत्त्वस्य वस्तुनः कथं सिद्धिरित्यर्थः । तदा सत्त्वमिति । बुद्धिकालीनमेव कारणत्वमन्यदास्थेन यावत्कारणताकालस्थायिनापि प्रमाणेनेत्यर्थः । अन्यकालीनं—बुद्धिविरहकालीनं, बुद्धिविषयत्वमप्यन्यकालीनं यत्कारणत्वं तदुपयोगि तत् यदाकदाचिद्बुद्धेः सत्तैव बुद्धिविषयत्वाभावाभावाख्याया बुद्धियोग्यतारूपायाः कारणतायाः प्रयोजिकेत्यर्थः । अन्यः कालोस्त्यस्येत्यन्यकालिकम् । एतेन यद्यद्वस्तु केनापि न ज्ञायते तस्य कार्यंप्रति स्वरूपयोग्यता न स्यात् यथारण्यस्थदण्डादेरित्यपास्तम् । भवतापि तत्र तत्सिद्ध्यर्थं प्रमाणस्यावश्यमुपन्यसनीयत्वात् यदि कालोपधायके तद्बुद्धिरेव तत्र प्रमितिर्नियतप्राक्सज्जातीयस्यव कारणतारूपत्वात्तदा ममापि द्वैतबुद्धिः कारणता वस्तुतस्त्वज्ञातस्य सत्त्वमेव नास्ति कुतः कारणत्वम् । यत्त्वेवं सति गृहान्निर्गतस्याज्ञानकाले पुत्रस्यासत्त्वात् क्रन्दनापत्तिस्तन्न असत्त्वनिश्चयस्यैव तद्धेतुत्वात्, अन्यथा भवतोपि पुत्रमरणस्य वस्तुसतोऽनिश्चयदशायां तदापत्तेः । एतेन रूपोपलब्धिनिर्णयस्य नयनस्य प्रागसतश्चाक्षुषज्ञानमपि समाहितम् । उत्तरकालीनाया उपलब्धेः प्रागभावा-

खण्डनदर्पणः ।

विनापि स्वसमयसत्त्वं तदा—तथाबुद्ध्यभावे स्वरूपसत्त्वस्याप्यभावादिति भावः । ननु बुद्ध्यभावदशायामपि यदा कदापि कालान्तरस्थतादृशबुद्ध्या बोध्यमानत्वं कारणस्याकारणाद्विशेष इति शङ्कते—तदा सत्त्वमिति । तर्हि कालान्तरे

खण्डनरत्नमालिका ।

या गृहीतं सत्त्वं तवापि कथं स्यादिति भावः । इदमस्मान्नियतप्राक्सदासीत् इति कालान्तरस्थबुद्ध्या विषयीकृतत्वमकारणात्कारणे विशेष इत्याह—तदातनेति ।

---

( १ ) तदातनसत्त्वमिति विद्यासागरीसंमतः पाठः ।

चेत्, अन्यकालिकमेव तर्हि तत् तदातनकारणत्वोपयोगीति समानम्। तदेतत्संवृतिसत्त्वमिति गीयते।

खण्डनभावदीपिका।

ति परिहरति—अन्यकालिकमिति। समयान्तरमात्र एवंबुद्ध्यन्तरज्ञानानुदयसमयेऽपि भेदव्यवहारकारणं नान्यदित्यस्मत्पक्षेऽपि समानमित्यर्थः। एवंविधेन संव्यवहारो वादिनां सुप्रसिद्ध इत्याह—तदेतदिति। यत्त्रिचतुरकक्षास्वनुपपन्नं बाधितत्वे सति सदितिबुद्धिविषयत्वं तत्संवृत्तिसत्वं तात्विकमसत्वसंवृत्या व्यावहारिकाकारेण प्रतिभासनादित्यर्थः। संवृतिरपि सती न चेदिति विकल्पेन प्रत्यवस्थानमनुपपन्नमित्याह—

शाङ्करी।

ष्यतीति परिहरति—अन्यकालिकमेवेति। ननु तवैवेयं कल्पनेत्यत आह—तदेतदिति। संवृतिस्तावत्सती, तया स्वकीयेन सत्त्वेन स्वविषयस्याऽसत्त्वं संव्रियते इति संवृतिसत्त्वं परेपि मेनिरे, यदाहु—"पररूपं स्वरूपेण यथा संव्रियते धियेति" भावः। "इदमस्माद्भियतप्राक्सदिति बुद्ध्या विशेषात्"—इत्युक्तं, तत्राऽसती बुद्धिर्न विशेषिका, सती च नेष्टा, द्वैतापत्तेरिति वस्तुतत्त्वमेवाङ्गीक्रियतां किं संवृतिसत्त्वेनेत्यत

खण्डनभूषामणिः।

त्मिकायाः प्राक्कालीनाया ध्वंसात्मिकाया वा योग्यतायाः स इति न हि भवताप्यननुमितस्य चक्षुषः सत्त्वं विना प्रमाणं सेद्धुमर्हति का वा गतिः स्वाप्नचाक्षुषज्ञाने न हि स्वप्ने राजरथतुरगादिकं न पश्यति तत्र चक्षुषोऽभावान्मानस एव तादृशभ्रमविशेष इति चेत्तुल्य एवायं जाग्रद्भ्रमोऽपि प्रत्यक्षसिद्धो विनैव नयनं दोषविशेषात् अन्धस्य तादृशदोषो नास्ति फलाभावात् दोषोपि च ज्ञानविशेषविषयीभूतो यः कश्चित् फलोन्नेय इति न किञ्चिदेतत्। ननु बुद्धिः सत्येति न लौकिकव्यवहारतः सिद्धमिति च सिद्धमेव बौद्धानामित्याह—तदेतदिति। गीयते-बौद्धैरिति शेषः। तेपि लोका एव न

खण्डनदर्पणः।

तादृशबुद्धिविषयत्वमेव विशेष इति तुल्यमिति परिहरति—अन्येति। कारणे कदाचिदवश्यं कस्यचित्तादृशबुद्धिरस्तीति। नन्वेवं सांवृतत्वमसद्वादिभिः स्वीकृतं व्यवहारोपपादकं तर्हि कथं स्यादित्यत आह—तदेतदिति। यद्वा ननु तवैवेयं कल्पनाऽत आह—तदेतदिति। संवृत्या हि स्वकीयेन सत्त्वेन स्वविषयस्यासत्त्वं संव्रियत इति संवृतिसत्त्वं तदाहुः 'पररूपं स्वरूपेण यथा संव्रियते धिये'ति भावः। ननु संवृतिः सती न वा नचेद्विशिष्टव्यवहारप्रवर्तिका न स्यात् सती

खण्डनरत्नमालिका।

समानमिति। कालान्तरे विशिष्टबुद्धिविषयीकृतं कालान्तरे गृह्यमाणत्वं कारणस्याकारणाद्विशेष इति तुल्यमित्यर्थः। ननु सांवृतं सत्त्वमसद्व्यवहारोपपादकमिति परैरिष्यते त्वया तु तद्विरुद्धमिदमुच्यते इत्यत आह-तदेतदिति। तथा चाह—धर्मकी-

मपि भावः। वार्तिककृदुक्तं दूषणं तर्हि कथं शक्यमद्धर्तुं तथा हि "यदा संवृतिसत्येन सर्वमेतत्प्रकल्प्यते। ज्ञानमात्रेपि कस्मात्ते मृषाग्राह्योर्थकल्पने" इति बौद्धमतालम्बनेन शाबरभाष्यमाक्षिप्य तन्मतदूषणेनाक्षेप उद्धृतः "संवृतेर्न तु सत्यत्वं सत्यभेदः कुतोन्वयम्। सत्या चेत्संवृतिः केयं मृषा चेत्सत्यता कथम्॥ सत्यत्वं न च सामान्यं मृषार्थपरमार्थयोः। विरोधान्न हि वृक्षत्वं सामान्यं वृक्षसिंहयोः॥ तुल्यार्थत्वेपि तेनैषां मिथ्यासंवृतिशब्दयोः। वञ्चनार्थमुपन्यासो लालावत्कासवादिवत्॥ नास्तिक्यपरिहारार्थं संवृतिः कल्पनेति च। कल्पनापि ह्यभिन्नस्य नैव निर्वस्तुके भवेत्॥ तस्माद्यन्नास्ति नास्त्येव यद्वास्ति परमार्थतः। तत्सत्यमन्यन्मिथ्यैव न सत्यद्वयकल्पना॥ स्वप्नादिभोगवच्चापि योपभोगस्य कल्पना। तन्निवृत्त्यर्थमेवेह परमार्थं प्रयत्यते॥ न हि स्वप्नसुखाद्यर्थं धर्मे कश्चित्प्रवर्तते। यादृच्छिकत्वात् स्वप्नस्य तूष्णीमास्येत पण्डितैः॥ परमार्थफलप्राप्तिमिच्छद्भिस्तेन यत्नतः। प्रतिपत्तिर्विधातव्या युक्तिभिर्बाह्यवस्तुनी"ति श्लोकानां चायमर्थः ज्ञानमात्रपक्षेपि हि बौद्धानां संवृत्या प्रमाणादिव्यवहारोपपत्तावर्थानां पारमार्थिकत्वकल्पनाग्रहो निश्चयो वृथा। सत्यं संवृतिसत्त्वेन बौद्धैरिदमुपपाद्यते न त्वेतद्युज्यते योयं संवृतिसत्यं परमार्थसत्यमिति भेदस्तैराश्रितः स नोपपन्नः मिथ्यापर्यायत्वात् संवृतिशब्दस्य, तस्य सत्यशब्दसमभिव्याहारानुपपत्तेः। नह्ययं विभीतकादिष्वक्षशब्दवत्संवृतिपरमार्थयोः साधारणः शब्दो नानार्थ एव इति। न च सत्यत्वं सामान्यं मृषार्थपरमार्थयोः शक्यं विरोधात् समानानां भावः सामान्यं न च विरोधिद्वयं समानं न हि सम्भवति विरुद्धयोः धर्मत्वं च सामान्यं अन्यमात्रयोरपि अनुगतबुद्ध्यभावे नास्ति सामान्यं यथा वृक्षसिंहयोर्वृक्षत्वं किं पुनरतिविरुद्धयोः तेन सत्यशब्दोयं न नानार्थो न राजादिशब्दवज्जातिशब्द इति भावः। तेन लोकान् वञ्चयितुमेव मिथ्यापर्यायोपि संवृतिशब्दो बौद्धविदग्धैरनुद्वेगकरतया मिथ्यात्व एव विवक्षिते स्वनास्तिक्यपरिहारेच्छया प्रयुक्तो लालायामिव वत्कासवशब्दः संवृतिरिति उपन्यास इति योजना। कल्पनेति वाचोयुक्तिरपि नास्तिक्यपरिहारार्थमाश्रिता इत्याह—कल्पनेति। कल्पनामात्रजीवातुनैव बाह्येन लौकिकः सर्वो व्यवहार इत्यपि निर्वस्तुके जगति अभिन्नस्य चि-

**चेत्, अन्यकालिकमेव तर्हि तत् तदातनकारणत्वोपयोगीति समानम्। तदेतत्संवृतिसत्त्वमिति गीयते।**

खण्डनभावदीपिका।

ति परिहरति—**अन्यकालिकमिति**। समयान्तरमात्र एवंबुद्ध्यन्तरज्ञानानुदयसमयेऽपि भेदव्यवहारकारणं नान्यदित्यस्मत्पक्षेऽपि समानमित्यर्थः। एवंविधेन संव्यवहारो वादिनां सुप्रसिद्ध इत्याह—**तदेतदिति**। यत्त्रिचतुरकक्षास्वनुपपन्नं बाधिततत्वे सति सदितिबुद्धिविषयत्वं तत्संवृत्तिसत्वं तात्त्विकमसत्वसंवृत्या व्यावहारिकाकारेण प्रतिभासनादित्यर्थः। संवृतिरपि सती न चेदिति विकल्पेन प्रत्यवस्थानमनुपपन्नमित्याह—

शाङ्करी।

ष्यतीति परिहरति—**अन्यकालिकमेवेति**। ननु तत्रैवेयं कल्पनेत्यत आह—**तदेतदिति**। संवृतिस्तावत्सती, तया स्वकीयेन सत्त्वेन स्वविषयस्याऽसत्त्वं संत्रियते इति संवृतिसत्त्वं परेपि मेनिरे, यदाहु–"पररूपं स्वरूपेण यया संव्रियते धिये"ति भावः। "इदमस्मान्नियतप्राक्सदिति बुद्ध्या विशेषात्"—इत्युक्तं, तत्राऽसती बुद्धिर्न-विशेषिका, सती च नेष्टा, द्वैतापत्तेरिति वस्तुतत्त्वमेवाङ्गीक्रियतां किं संवृतिसत्त्वेनेत्यत

खण्डनभूषामणिः।

त्मिकायाः प्राक्कालीनाया ध्वंसात्मिकाया वा योग्यतायाः स इति न हि भवतोप्यननुमितस्य चक्षुषः सत्त्वं विना प्रमाणं सेद्धुमर्हति का वा गतिः स्वाप्नचाक्षुषज्ञाने न हि स्वप्ने राजरथतुरगादिकं न पश्यति तत्र चक्षुषोऽभावान्मानस एव तादृशभ्रमविशेष इति चेत्तुल्य एवायं जाग्रद्भ्रमोऽपि प्रत्यक्षसिद्धो विनैव नयनं दोषविशेषात् अन्धस्य तादृशदोषो नास्ति फलाभावात् दोषोपि च ज्ञानविशेषविषयीभूतो यः कश्चित् फलोन्नेय इति न किञ्चिदेतत्। ननु बुद्धिः सत्तेति न लौकिकव्यवहारतः सिद्धमिति च सिद्धमेव बौद्धानामित्याह—**तदेतदिति**। **गीयते**-बौद्धैरिति शेषः। तेपि लोका एव न

खण्डनदर्पणः।

तादृशबुद्धिविषयत्वमेव विशेष इति तुल्यमिति परहरति—**अन्येति**। कारणे कदाचिदवश्यं कस्यचित्तादृशबुद्धिरस्तीति। नन्वेवं सांवृतत्वमसद्वादिभिः स्वीकृतं व्यवहारोपपादकं तर्हि कथं स्यादित्यत आह—**तदेतदिति**। यद्वा ननु तत्रैवेयं कल्पनाऽत आह—**तदेतदिति**। संवृत्या हि स्वकीयेन सत्त्वेन स्वविषयस्यासत्त्वं संव्रियत इति संवृतिसत्त्वं तदाहुः 'पररूपं स्वरूपेण यया संव्रियते धिये'ति भावः। ननु संवृतिः सती न वा नचेद्विशिष्टव्यवहारप्रवर्तिका न स्यात् सती

खण्डनरत्नमालिका।

**समानमिति**। कालान्तरे विशिष्टबुद्धिविषयीकृतं कालान्तरे गृह्यमाणत्वं कारणस्याकारणाद्विशेष इति तुल्यमित्यर्थः। ननु सांवृतं सत्त्वमसद्व्यवहारोपपादकमिति परैरिष्यते त्वया तु तद्विरुद्धमिदमुच्यते इत्यत आह–**तदेतदिति**। तथा चाह—धर्मकी-

खण्डनभूषामणिः ।

हि पामरव्यवहाराच्छक्तिग्रहो न भवतीति शक्यते वक्तुं पिकनेमाधिकरणविरोधात् संवृतिस्तावत् स्वकीयेन रूपेण सती स्वकीयया सत्तया विषयस्यासत्त्वं संव्रियत इति संवृणोतीति वा संवृतिर्लौकिकबुद्धिः यदाहुः "पररूपं स्वरूपेण यया संव्रियते धिये"ति संव्रियते पिधीयते आच्छाद्यते विद्यमानमेवासत्त्वं असदिति व्यवहारायोग्यं क्रियत इत्यर्थः । तया संवृत्या सत्त्वं लौकिकपदार्थानां व्यवह्रियते तदाहुर्बौद्धाः "द्वे सत्ये समुपाश्रित्य बुद्धानां धर्मदेशनाः । लोके संवृतिसत्यं च सत्यं च परमार्थत" इति तदेतत् यन्मयोक्तं बुद्धेः सत्ता तयैव व्यवहार इति तदेव तैरपि कथ्यते तथा च कृतमर्थैरिति तेषामपि भावः । वार्तिककृदुक्तं दूषणं तर्हि कथं शक्यमद्धर्तुं तथा हि "यदा संवृतिसत्येन सर्वमेतत्प्रकल्प्यते । ज्ञानमात्रेपि कस्मात्ते मृषाग्राह्योर्थकल्पने" इति बौद्धमतालम्बनेन शाबरभाष्यमाक्षिप्य तन्मतदूषणेनाक्षेप उद्धृतः "संवृतेर्न तु सत्यत्वं सत्यभेदः कुतोन्वयम् । सत्या चेत्संवृतिः केयं मृषा चेत्सत्यता कथम् ॥ सत्यत्वं न च सामान्यं मृषार्थपरमार्थयोः । विरोधान्न हि वृक्षत्वं सामान्यं वृक्षसिंहयोः ॥ तुल्यार्थत्वेपि तेनैषां मिथ्यासंवृतिशब्दयोः । वञ्चनार्थमुपन्यासो लालावत्कासवादिवत् ॥ नास्तिक्यपरिहारार्थं संवृतिः कल्पनेति च । कल्पनापि ह्यभिन्नस्य नैव निर्वस्तुके भवेत् ॥ तस्माद्यन्नास्ति नास्त्येव यद्वास्ति परमार्थतः । तत्सत्यमन्यन्मिथ्यैव न सत्यद्वयकल्पना ॥ स्वप्नादिभोगवच्चापि योपभोगस्य कल्पना । तन्निवृत्यर्थमेवेह परमार्थे प्रयत्यते ॥ न हि स्वप्नसुखाद्यर्थं धर्मे कश्चित्प्रवर्तते । यादृच्छिकत्वात् स्वप्नस्य तूष्णीमास्येत पण्डितैः ॥ परमार्थफलप्राप्तिमिच्छद्भिस्तेन यत्नतः । प्रतिपत्तिर्विधातव्या युक्तिभिर्बाह्यवस्तुनी"ति श्लोकानां चायमर्थः ज्ञानमात्रपक्षेपि हि बौद्धानां संवृत्या प्रमाणादिव्यवहारोपपत्तावर्थानां पारमार्थिकत्वकल्पनाग्रहो निश्चयो वृथा । सत्यं संवृतिसत्त्वेन बौद्धैरिदमुपपाद्यते न त्वेतद्युज्यते योयं संवृतिसत्यं परमार्थसत्यमिति भेदस्तैराश्रितः स नोपपन्नः मिथ्यापर्यायत्वात् संवृतिशब्दस्य, तस्य सत्यशब्दसमभिव्याहारानुपपत्तेः । नह्ययं विभीतकादिष्वक्षशब्दवत्संवृतिपरमार्थयोः साधारणः शब्दो नानार्थ एव इति । न च सत्यत्वं सामान्यं मृषार्थपरमार्थयोः शक्यं विरोधात् समानानां भावः सामान्यं न च विरोधिद्वयं समानं न हि सम्भवति विरुद्धयोः धर्मत्वं च सामान्यं अन्यमात्रयोरपि अनुगतबुद्ध्यभावे नास्ति सामान्यं यथा वृक्षसिंहयोर्वृक्षत्वं किं पुनरातिविरुद्धयोः तेन सत्यशब्दोयं न नानार्थो न राजादिशब्दवज्जातिशब्द इति भावः । तेन लोकान् वञ्चयितुमेव मिथ्यापर्यायोपि संवृतिशब्दो बौद्धविदग्धैरनुद्वेगकरतया मिथ्यात्व एव विवक्षिते स्वनास्तिक्यपरिहारेच्छया प्रयुक्तो लालायामिव वक्त्रासवशब्दः संवृतिरिति उपन्यास इति योजना । कल्पनेति वाचोयुक्तिरपि नास्तिक्यपरिहारार्थमाश्रिता इत्याह—कल्पनेति । कल्पनामात्रजीवातुनैव बाह्येन लौकिकः सर्वो व्यवहार इत्यपि निर्वस्तुके जगति अभिन्नस्य चि-

प्राक्सत्त्वबुद्धिविषये सत्त्वासत्त्वविचारानुपयोगनिरूपणम्—

**असती सा न विशेषिका, सती सा नेष्टा,-इत्यभिसन्धानेन संवृतिरपि सती न वेति पृच्छन् प्रतिवक्तव्यः, विज्ञा(१)नं तावद्व्यवहारोपपा-**

खण्डनभावदीपिका ।

**असती सेति । न विशेषिका**— न व्यावर्त्तिका संवृतिः सतीत्यादौ विशेषणं न भवेदिति यावत् तथासत्यपसिद्धान्तापातादित्यर्थः । प्रत्युक्तिप्रकारमेवाह—**विज्ञानमिति** ।

शाङ्करी ।

आह—**असतीति** । प्रतिवचनमाह—**विज्ञानमिति** । यद्यपि विज्ञानमपि विषयाङ्कितमतस्तदभ्युपगमे एव विषयाऽभ्युपगमः, निर्विषयस्य विज्ञानस्याऽभावाद्व्यवहारानुपपा-

खण्डनभूषामणिः ।

न्मात्रस्य कल्पनया भेत्तुमशक्यत्वात् दुर्भणं कचिद्भिन्नं हि रूपान्तरं कचित् कल्पनास्पदं भवति शुक्ताविव रजतरूपं यस्मात्तु न किञ्चिद्भिन्नमस्ति तत्केन रूपेण कल्पयतामित्येतदाह—**कल्पनापीति** । ननु त्रिविधं तत्त्वमातिष्ठामहे सत्यमसत्यं सांवृताख्यमिति सांवृतिर्हि नात्यन्तमसद्भवति व्यवहाराविसंवादात् । नापि सदेव प्रमाणान्तरविरोधात् जात्यादिरिव अतो न संवृतिर्मानमेव नाप्यमानमेवेति विधान्तरमेवेतियुक्तं तदाश्रयो व्यवहार इत्यत आह **तस्मादिति** । यतः खलु संवृतिर्मिथ्याज्ञानं न वस्तुरूपक्लृप्त्यै प्रभवति तस्माद्यदि व्यवहाराङ्गतया बाह्यमस्ति तर्हि परमार्थत एवास्ति तदेव सत्यमुच्यते अन्यत्तु सांवृतं मिथ्यैव न तु सत्यद्वयकल्पना आत्मानं लभते तन्त्रेण तद्वृत्तस्योभयत्र सम्बन्धः परमार्थत इति च नास्तीति पूर्वेण सम्बद्ध्यते किं च स्वप्नावगतार्थाः कचिच्छोकहर्षादिव्यवहारहेतवो दृश्यन्ते अतस्तेपि सांवृता एव तद्वच्च बाह्यार्थाभ्युपगमे स्वप्नादिभोगतुल्य एव शुभाशुभकर्मफलोपभोगो भवेदतस्तन्निवृत्त्यर्थमेव बाह्यार्थस्य परमार्थसत्यत्वे प्रयत्न इत्याह—**स्वप्नादीनि** । स्वप्नतुल्यत्वे दोषमाह—**यादृच्छिकत्वादिति** । न हि स्वप्नसुखं मे भवत्विति विद्वांसः प्रयस्यन्ति यादृच्छिकं हि सुखमगणितसाम्परायैहिकनिमित्तं न तत्प्रयस्यतो भवतीति बुद्ध्या-

खण्डनदर्पणः ।

चेत्सर्वशून्यताहानिरित्याशङ्क्याह—**सतीति** । प्रतिवचनमाह—**विज्ञानमिति** ।

खण्डनरत्नमालिका ।

तिः—परूपं स्वरूपेण यया संव्रियते धिया । एकार्थप्रतिभासिन्या भावानाश्रित्य भेदिनः ॥ इति । तथाच न विरोध इति भावः । शङ्कते-संवृतिः सती नवेति विकल्प्य द्वितीये दोषमाह—**असती सा न विशेषिका**— न विशिष्टव्यवहारप्रवर्तिका । आद्ये दोषमाह—**सती सा नेष्टेति**—सर्वशून्यताहानेरित्यर्थः । परिहरति-**ज्ञानमिति** । घटज्ञानाद् घटव्यवहार इति सदसद्वादिनोः संमतं तत्र तस्यापि कथं सत्त्वमिति

(१) 'ज्ञानम्' इति विद्यासागरीसंमतः पाठः ।

दकतया द्वाभ्यामप्यनुमतं, तस्यापि जिज्ञासायां त्रिचतुरकक्षाविश्रान्त-गवेषणस्य यदि सत्तोपपन्ना भविष्यति तदा सता तेनेदमुपपादितं भविष्यति, अथाऽसत्ता तस्य पर्य्यवसास्यति तदाऽसतैव तेनेदमुपपाद्यते-इति

खण्डनभावदीपिका ।

विज्ञानं—कारणसत्तादिविषयं, व्यवहारो—वदनादिस्तत्योपपादकं कारणं तथापि कथं तस्य सत्त्वानिश्चयेन संवृत्तिसतो व्यवहारहेतुत्वमुच्यत इत्यत आह—तस्यापीति । विज्ञानस्य सत्त्वासत्त्वगवेषणायां यद् द्वित्रिचतुरकक्षासु विश्रान्तं गवेषणं यस्य तस्य तदा सत्ता व्यवह्रियते तस्य च ज्ञानस्य सत्ता सदिति ज्ञानान्तरम् । एवं कक्षाचतुष्टयं यत्र ज्ञानं भवति तेन ज्ञानेन स्वविषयगोचरो व्यवहारो निर्वर्त्तत इति तत्सत्ताज्ञानमेव तत्र तत्रोपयुक्तं न तु तस्य वास्तवं सत्त्वमिति भावः । पक्षान्तरमाह—तदसत्तै-

शाङ्करी ।

दकत्वाच्च, तथाच—व्यवहाराऽनुरोधश्चेत्तदा ज्ञानविषययोस्तुल्ययोगक्षेमत्वमेव, तथापि व्यवहारानुरोधोपि मया त्यक्ष्यते एवेति हृदयम् । तेनेति । विज्ञानेनेत्यर्थः ।

खण्डनभूषामणिः ।

विद्वद्भिरुदासीनैरेवास्येतेति न क्वचिदपि प्रयत्येति । तद्दूषयति-असती सेत्यादिना । न विशेषिका न स्वसत्तया परास्वत्वस्याच्छादिका असति सद्व्यवहारस्य प्रवर्तिका न भवति । सती च नेष्टेति । सर्वशून्यवादिनस्तव योगाचारनयप्रवेशापत्तेः योगाचारमतमेव वार्तिककृता दूषितमिति तेषामयमभिप्रायो न सम्भवतीत्यन्यथा व्याख्यायते संवृतिर्मिथ्याधीर्न वा यदि बाह्यस्यासतः सत्त्वं विषयीकरोति तदा मिथ्यैवेति मिथ्याविषयकत्वात् कथं ततः सावृतं सत्त्वं सिद्ध्येत् अथ सा न मिथ्या तदाऽसतः सत्त्वमविषयीकुर्वत्येव वाच्या तथा सति विशेषिका सद्व्यवहारहेतुर्न स्यात् सत्त्वाविषयत्वात ततश्चासती त्यस्य सत्त्वाविषयिकेत्यर्थः । सती चेत्यस्य सत्त्वविषयिका तथा सति मिथ्याधियः सांवृतं सत्त्वं न सिद्ध्येदिति यद्यमिथ्या तदा बाह्यसिद्ध्यापत्तिः सा च तव नेष्टा सांवृतं सत्त्वं बाह्यस्येष्टत इति चेत्तर्हि व्यवहाराविसंवादिसत्त्वेन पारमार्थिकत्वं बाह्यस्य स्यादिति तेषां हृदयं ततश्च मां प्रत्यपि दूषणं तदैव सम्भवति यदि मया तद्धियो यथार्थत्वं स्वीक्रियेत न चैवं तर्हि व्यावहारिकी सत्तापि नास्ति चेत् कथं व्यवहारसमर्थनं त्रिचतुरकक्षासु बाध्यमानया धियैव व्यवहारसिद्धिः--व्यवहारनिष्पत्तिः । सा च व्यवहर्तव्यज्ञानेनवं न तु तत्तत्प्रमयैव क्वचिदप्रसिद्धेर्भ्रमत्रिषयव्यवहारे देहात्मव्यवहारे चानादौ व्यभिचारादिति निगर्वः । सत्ताजिज्ञा-

खण्डनदर्पणः ।

न च सविषयकज्ञानाभ्युपगमे विषयोपगम इति वाच्यम् । न हि त्वया भ्रमं स्वीकृत्य-तद्विषयोऽसद्विशिष्टमपि स्वीक्रियते तद्दोषात ज्ञानस्यापि पारमार्थिकसत्त्वाङ्गीका-

खण्डनरत्नमालिका ।

जिज्ञासायामनवस्थाभिया त्रिचतुरकक्षासु सत्त्वगवेषणविश्रान्तिरङ्गीकर्तव्या तदाऽऽमूल-

स्वीकर्त्तव्यम्, भ्रमविषयेणैव भ्रमे विशिष्टताव्यवहारः। अविचार्य्यैव तावत् तस्य सदसत्त्वं विचार आरब्धव्यः। अन्यथा प्रथममेव मतिक-

खण्डनभावदीपिका।

वेति। असतो व्यवहारजनकत्वं व्यावर्तकत्वं च कुत्र दृष्टमित्यत आह—भ्रमविषयेणेति। शुक्तिकारजतादिविभ्रमे परवादिनाप्यविद्यमानस्य संसर्गस्य तादात्म्यस्य वा स्वविषयव्यवहारोपपादकत्वं स्वविषयज्ञानव्यावर्तकत्वं च स्वीकर्तव्यम्। तादात्म्यज्ञानं संसर्गज्ञानमितिज्ञानान्तराद् व्यावृत्तव्यवहाराङ्गीकारात्। विशिष्टज्ञानस्य तत्कारणत्वे विशेषणं सकारणत्वस्याप्यवश्याभ्युपेयत्वादिति भावः। अस्त्वेवं ज्ञानस्य व्यवहारोपपादकत्वं तावता प्रकृते किमायातमित्यत आह—अविचार्यैवेति। विपक्षे दोषमाह—अन्यथेति। यदि ज्ञानसदसत्त्वनिर्णयाधीनो विचारारम्भः स्यात् तर्हि तत्सदसत्त्व

शाङ्करी।

भ्रमेति। यथाऽसदेव रजतं स्वविषयं ज्ञानं विशेषयति रजतीयं ज्ञानम् इति, तथा बुद्धिरप्यसती विषयं विशेषयति—"इदमस्मान्नियतप्राक्सत्" इति बुद्धिविषयत्वमेव कारणत्वमित्यर्थः। यद्यपि भ्रमविषयोपि सन्नेव तथा च न दृष्टान्तः, तथाप्यसत्ख्यात्यभिप्रायेणैतद् द्रष्टव्यम्। तस्येति। ज्ञानस्येत्यर्थः। यद्यपि विषयाऽसत्त्वं चेत्तदा ज्ञानसत्तासन्देहस्थितावपि न विचारप्रयोजनं, तथापि ज्ञानसत्तासन्देहाऽऽवर्जितो विषयसत्तासन्देहोस्त्येवेति न विचारवैयर्थ्यमिति भावः। अन्यथेति। यदि प्रथममेव ज्ञानसदसत्त्वं विचारणीयमित्यर्थः। यद्यपि तवाऽयं मतिकर्दमः, न तु ममापि, ज्ञानविषययोर्द्वयोरपि सत्त्वेनैवाभ्युपगमात्, न वा त्वया सह कथारम्भणमुद्देश्यमपि, तथापीयमेव कथा तथा सति न स्यादिति हृदयम्। भवतु वेदानीमेव संवृतेरसत्त्व-

खण्डनभूषामणिः।

सायां सम्यक्त्वजिज्ञासायां भ्रमविषयेणैवेति। शुक्ताववर्तमानेन रजततादात्म्येन रजतमिति विशिष्टव्यवहारः सदसत्त्वं—सम्यक्त्वासम्यक्त्वे एवमुत्तरत्रापि यदि च नेदं वार्तिककृतोभिप्रायवर्णनं किन्त्वपरस्यैव कस्यचित्तदा यथाश्रुतमेव सम्यक् परन्तु पूर्वमेवासतोपि ज्ञानस्य कारणतायाः प्रतिपादितत्वात् पुनरुक्तता स्यादिति असती न

खण्डनदर्पणः।

रात्। व्यावहारिकसत्त्वाभ्युपगमेऽप्यदोषात्। तेनेति। विज्ञानेनेत्यर्थः। भ्रमेति। रजतत्वादेरन्यत्र सत्त्वेपि यथा शुक्तौ तद्वैशिष्ट्यमसदेव स्वविषयज्ञानव्यावर्त्तकमित्यर्थः।

खण्डनरत्नमालिका।

मसत्त्वापत्तेः सत्त्वावगम एव व्यवहारनिदानं न तु स्वरूपसत्तेति ततः किमत आह—तदेति। तेन-ज्ञानेन, इदं-व्यवहाराख्यं कार्यम्, भ्रमविषयेणेति। यथाऽसदेव रजतं स्वविषयं ज्ञानं विशेषयति तथा इदमस्मान्नियतप्राक्सदिति बुद्धिविषयत्वमेव कारणत्वमित्यर्थः। तथाच विज्ञानमसद् व्यवहारोपपादकत्वाच्छुक्तिरजतवदित्यनुमानं फलितम्। विपक्षे बाधकमाह—अविचार्यैवेति। अन्यथेति। सत्त्वासत्त्वनिर्णयाधीन-

ईमे कथाऽऽरम्भणमशक्यमापद्येत ।

असतो व्यवहारजनकत्वे व्यावर्त्तकत्वे च क्रमेण दृष्टान्तद्वयम्—

स्वीकृतं च भवतापि भविष्यदादिविषये विज्ञाने विशिष्टव्यवहारनिदानत्वमसतो विषयस्य कारणशक्तेश्च विशेषकमसदेव कार्य्यम् ।

खण्डनभावदीपिका ।

निर्णयोऽपि विचारारम्भा ( धीन इत्यन्योन्याश्रयापातात्प्रथमतः=प्रथमं मतिकर्दमः—मतिकालुष्यं स्यादतः सदसत्त्वमन्तरेणापि विचारणीयमित्यर्थः । )..............

शाङ्करी ।

परिच्छेदः तथापि तस्या विषयविशेषकत्वं स्यादेव, भवति हीदानीमसत्त्वेनैव परिच्छिन्नेन भाविना पुत्रेण "मम पुत्रो भविष्यति" इति ज्ञानस्येदानींतनस्य विशिष्टत्वव्यवहार इत्याह—स्वीकृतं चेति । असदन्तरस्य विशिष्टताव्यवहारहेतुत्वमुदाहरति—कारणशक्तेरिति । कारणशक्तिः—कारणत्वं तच्चासदेव कार्यं विशे-

खण्डनभूषामणिः ।

विशेषिकेत्यत्र भ्रमस्थले व्यभिचारः प्रागुक्तः, प्रमास्थलेऽप्याह—स्वीकृतं चेति । अतीतानागतयोर्विषययोरसतोरेव ज्ञानविशेषणतया विशिष्टव्यवहारनिदानत्वमिति । व्यवहारपदं ज्ञानपरं वा । नचानुमित्यात्मके तत्र न विषयो हेतुस्तथासति ज्ञानस्य कर्मशून्यतापत्तेः । नन्वतीतानागतयोरपि केनाप्यात्मना सत्त्वं स्वीक्रियत एवान्यथातीतत्वानागतत्वाश्रयो न स्यादित्यस्वरसादाह—शक्तिरिति । कस्य कुत्र शक्तिरित्या-

खण्डनदर्पणः ।

तस्य विज्ञानस्येत्यर्थः । अन्यथेति । यदि यत्र विशेषे विचारारम्भस्तस्य पूर्वसत्त्वाभ्युपगमः कथाहेतुः स्यात्तदा तत्सत्त्वनिश्चयो विचाराधीन इति अनवस्थया तथैव न स्यादित्यर्थः । न च तवैव मतिकर्दमो न ममापि मया ज्ञानविषययोर्द्वयोरपि सत्त्वेनाभ्युगमादिति वाच्यम् । तदा ममापि सत्त्वेन तथापूर्वकालेन निश्चयसत्त्वाददोषात् दर्शिते ऽसति व्यवहारजनकत्वे व्याप्तिग्रहभूम्यन्तरमाह—स्वीकृतमिति । भविष्यदाद्यर्थविशिष्टविज्ञानस्य व्यवहारजनकत्वे तद्विशेषणत्वेनासतो व्यवहारजनकत्वं ज्ञानमात्रस्य तद्धेतुत्वेऽतिप्रसङ्गात् स्वीकृतमित्यर्थः । न च तदुपलक्षितज्ञानस्य हेतुत्वं न विषयस्येति वाच्यम् । तदुपलक्षकतावच्छेदकस्य वक्तुमशक्यत्वादिति । भविष्यदादिविषयके ज्ञानेऽसतो विषयस्य विशिष्टज्ञानव्यवहारनिदानत्वमिति योजना । एवमसतो व्यवहारजनकत्वे दृष्टान्तमुक्त्वा व्यावर्तकत्वे दृष्टान्तमाह—कारणेति । दण्डोयं

खण्डनरत्नमालिका ।

श्चेद्विचारारम्भः तर्हि सोऽपि तदधीन इत्यन्योन्याश्रयापातात् प्रथमतः—प्रथमं, मतिकर्दमः मतिकालुष्यं स्यादिति तत्परिहाराय सत्त्वासत्त्वमन्तरेणापि विचारणीयमित्यर्थः । असतो व्यवहारजनकत्वे व्याप्तिग्रहणस्थलान्तरमाह—स्वीकृतमिति । असतो व्यवहारजनकत्वे दृष्टान्तमुक्त्वा व्यावर्तकत्वे दृष्टान्तमाह—कारणशक्तेश्चेति । विशेषकं—व्यावर्तकम् ।

दृष्टान्तासङ्गतिशङ्का ।

**नच कालान्तरसम्बन्धिनी सत्ता तस्यकत्र, अन्यत्र नाऽन्यदापि,- इति वैधर्म्यमेतयोरपीति वक्तव्यम् ।**

दृष्टान्तसमर्थनम्—

**विशिष्टव्यवहारप्रवृत्तिसमये द्वयोरप्यसत्त्वाऽविशेषात् । प्रयोजनाऽनुपयुक्ते काले तस्य स्वरूपतोऽवस्थानं पाटच्चरलुण्ठिते वेश्मनि यामिकजागरणवृत्तान्तमनुहरति ।**

---

शाङ्करी ।

षयति, भवति हि "घटकारणं दण्डः"—इति विशिष्टव्यवहार इत्यर्थः । ननु भविष्यदादेः कार्यस्य स्वकाले सत्त्वमस्त्येव अतस्तयोर्विशेषणत्वमुचितं, ज्ञानविषययोस्तु सार्वदिकमसत्त्वमिति नाऽन्योन्यं विशेषणविशेष्यभाव इत्याशङ्क्याह— **नचेति** । असता विशिष्टताव्यवहारस्त्वयाऽभ्युपगम्यते एव, तावतैव सिद्धं नः समीहितमित्याह—**विशिष्टेति** । **द्वयोरिति** । भविष्यदादिकार्ययोरित्यर्थः । ननु यस्या-

खण्डनभूषामणिः ।

श्रयविशेषसाकाङ्क्षायाः शक्तेरसदेव कार्यं विशेषकम् । अन्यथा विद्यमानस्य सिद्धत्वेन

खण्डनदर्पणः ।

घटकारणमिति निश्चित्य दण्डार्थिप्रवृत्तेरसन्नेव घटः कारणत्वस्य व्यावर्तक इत्यर्थः । **कारणशक्तेरिति** । कारणत्वस्येत्यर्थः=न्यायनयेऽतिरिक्तशक्त्यभावात् । ननु त्वत्पक्षे कदापि तन्नास्तीति महद्वैषम्यमित्यत आह—**नचेति** । तदाऽसतो

खण्डनरत्नमालिका ।

कस्य कस्मिन् शक्तिरिति आश्रयविशेषसापेक्षत्वात्तिलशक्तेरसदेव तैलं व्यावर्तकमिति भावः। नच भविष्यदाकारेणेदानीं कार्यमस्तीति वाच्यम् भविष्यत्कालस्येदानीमसत्त्वेन तदवच्छिन्नकार्यस्यापीदानीमसत्त्वात् । न च शक्तिरेव नास्तीति वाच्यम्, करतलानलसंयोगे मन्त्रादौ च सति स्फोटानुदयान्यथानुपपत्त्या तत्स्वीकारात् । न च प्रतिबन्धकाभावोऽपि करणं तत्र मन्त्रादिसत्त्वे मन्त्राभावरूपकारणाभावात्सामग्र्येव नास्त्यतः कार्यानुदय इति वाच्यम्, सति पुष्कलकारणे कार्योत्पत्तिविरोधिन एव प्रतिबन्धकत्वव्यवहारात् अकिंचित्कुर्वतः प्रतिबन्धकाभावस्य कारणत्वानुपपत्तेश्चेति भावः । ननु यत्र वादिप्रतिवादिनोर्बुद्धिसाम्यं स दृष्टान्तः प्रकृते च न साम्यमतीतादेः कालान्तरे सत्त्वात् त्वदभिमतज्ञानस्य च कदाचिदप्यसत्त्वादिति न दृष्टान्तदार्ष्टान्तिकभावसंभव इत्याह—**नचेति** । **तस्य**—अतीतादेः, **एकत्र**—दृष्टान्ते, **अन्यत्र**—दार्ष्टान्तिके, **अन्यदा**—कालान्तरेऽपि, **एतयोः**—दृष्टान्तदार्ष्टान्तिकयोः । नियतप्राक्सत्त्वं हि कारणत्वं न तु सत्त्वमात्रमिति विशिष्टव्यवहारप्रवृत्तिसमये द्वयोरप्यसत्त्वात् दृष्टान्तदार्ष्टान्तिकभाव इत्याह—**विशिष्टेति** । कालान्तरसत्त्वं तु न कारणत्वोपयोगि इत्याह—**प्रयोजनेति** । **यामिको**-यामरक्षकः ।

दृष्टान्तदार्ष्टान्तिकयोर्वैषम्याशङ्का—

**तथापि कालान्तरस्थित्या घटादिकं स्वरूपतो(१) विशेषणतश्च व्यवच्छिन्नं तद्विज्ञानेन स्वभावबलात् स्वविशेषणत्वेनोपादीयते, न त्वेवमत्यन्ताऽसद्भवितुमर्हति, तस्य स्वरूपतो विशेषणतश्च व्यवच्छिन्नतयाऽनङ्गीकारात्; कुत्र(२)स्वभावतो विज्ञानं सम्बन्धि निरूप्येत ।**

शाङ्करी ।

ऽऽत्यन्तिकमसत्त्वं तस्य विशेषणत्वं विशेष्यत्वं वा न स्वीकुर्मः- भविष्यत्पुत्रादेः कार्यस्य च नात्यन्तिकमसत्त्वं, स्वकाले तयोः सत्त्वादित्याह—**तथापीति** । **स्वभावबलादिति** । भविष्यदाद्याऽऽलम्बनमपि ज्ञानं शब्दलिङ्गमहिम्ना जायते इति तादृशो विशेषस्तद्विशिष्ट एवेत्यर्थः । **स्वरूपत इति** । विषयस्वरूपमपि त्वन्मतेऽत्यन्ताऽसद्विशेषणं, संवृतिरप्यत्यन्ताऽसतीत्यर्थः । उपसंहरति–**कुत्रेति** । स्वभावतोपि ज्ञानमत्यन्तासद्विषयसम्बन्धि कथं भवेत् तथा च त्वन्मतेऽत्यन्ताऽसतोर्ज्ञानविषययोर्न

खण्डनभूषामणिः ।

कार्यतानुपपत्तेरिति भावः।शक्तिः पदार्थान्तरमेव कारणताख्य उपाधिरेव वा। पाटच्चरश्चौरस्तेनापहृतसर्वस्वे वेश्मनि यामिकस्य यामरक्षकस्य यज्जागरणं केवलमिन्द्रियक्लेशाय यथा तद्वत्।घटादिकं-स्वरूपतः-पृथुबुध्नोदरत्वादिस्वभावेन,विशेषणतश्च-घटत्वादिना च व्यवच्छिन्नं

खण्डनदर्पणः ।

व्यवहारजनकत्वमविशिष्टमेवेत्यर्थः । ननु यस्यात्यन्तिकमसत्त्वं तस्य विशेषणत्वं विशेष्यतां वा न स्वीकरोमि भविष्यत्पुत्रादेः कार्यस्य च नात्यन्तिकमसत्त्वं स्वकाल एव तयोः सत्त्वादित्याह—**तथापीति** । संयोगाद्यसम्भवाज्ज्ञानशक्त्यादिव्यावर्त्तकत्वं न सम्भवतीत्याशङ्क्याह—**स्वभावेति**। स्वभावः सम्बन्धो विषयविषयिभावादिस्तद्बलादिति यावत्। असदपि तथा किं न स्यादत आह—**नत्विति** । नासम्बद्धं ज्ञानमर्थव्यवहारजनकमतिप्रसङ्गान्न सम्बद्धं संयोगाद्यसम्भवात् । न च स्वभावसम्बन्धो निःस्वभावत्वादित्याह—**कुत्रेति** । कुत इति पाठे केन स्वभावेनेत्यर्थः । उक्तम-

खण्डनरत्नमालिका ।

यथा चौरेणापहृतसर्वस्वे गृहे यामिकस्य जागरणं वृथा तथा कार्यकालात्पूर्वापरकालयोः कारणस्य स्वरूपतोऽवस्थानं वृथेति भावः । नन्वतीतादिर्घटः स्वरूपतःपृथुबुध्नोदरत्वाद्यसाधारणाकारेण, विशेषणतो घटत्वादिना, व्यावृत्ततया कालान्तरे तिष्ठति इति व्यावृत्तत्वाज्ज्ञानशक्त्यादेर्विशेषणमस्तु अत्यन्तासत्तु नैवमिति दृष्टान्तदार्ष्टान्तिकभावासंगतिरेवेत्याह—**तथापीति** । **कुत्रेति** । तथा च त्वन्मतेऽत्यन्तास-

(१) स्वरूपतः—पृथुबुध्नोदरत्वादेः, विशेषणतः—घटत्वादेः ।
(२) कुत इति पाठे केन स्वभावेनेत्यर्थः ।

उक्ताशङ्कापरिहारः—

**न, उक्तमत्राऽसतोऽपि हि तदेव स्वरूपं, तस्य नियतस्वरूपतैव नियतविशेषणस्यैवासत्त्वात्, अन्यथाऽतिप्रसङ्गात्। भ्रान्तिविषयेण दृष्टो-**

शाङ्करी।

सर्वथा विशेषणविशेष्यभाव इति भावः। उक्तमत्रेति। "न त्वसन् घटो न घटः" इत्यादिनेत्यर्थः। यथा कम्बुग्रीवादिविशिष्टो घटस्त्वया सत्त्वेनाऽभ्युपगम्यते तथैव मयाप्यसत्त्वेन तादृशानङ्गीकारे तु स्यादतिप्रसङ्ग इत्यर्थः। ननूक्तम् "अत्यन्तासतो न विशेषणत्वम्" अत आह—भ्रान्तीति। यद्यपि घटज्ञानादीनामसत्त्वं न तावदभावप्रतियोगित्वम्, इष्टत्वात् नापि केवलान्वय्यत्यन्ताभावप्रतियोगित्वं, स्वसमवायिनि स्वकाले च सत्त्वात्; नापि सत्तासामान्यरहितत्वं, सत्तावत्तयैव प्रतीयमानत्वात्; नापि विधिनिषेधव्यवहाराऽभाजनत्वं, तदुभयभाजनत्वेन त्वयाऽभ्युपगमात्; अन्यथा-व्याघातात्; नापि ब्रह्मभिन्नत्वम्, इष्टत्वात्; नाप्यभावत्वं, विधिमुखप्रत्ययवेद्यत्वात्; नापि मिथ्यात्वं, तद्ध्यप्रामाणिकत्वं, तदा प्रमाणविषयत्वव्यवस्थापनयैव निरस्यं; नापि मिथ्यापदाभिधेयत्वम्, यदि स्वतः तदा स्वसङ्केतेन ब्रह्मण्यपि गतत्वात्; यदीश्वरसङ्केतेन, तदा न घटादावपीति; बाध्यत्वमसत्त्वम्–इति चेन्न, बाध्यत्वस्य बाध्यत्वाऽबाध्यत्वाभ्यामनुपपत्तेः; बाधस्य च विपरीतप्रमात्वेन घटादिनिरूपितवैपरीत्यस्य सिद्धौ, घटादिसिद्धेः; तदसिद्धौ बाधासिद्धेः विचारासहत्वम्–इति चेन्न विचारस्य निर्विषयत्वेन दुर्विचारत्वात्; सविषयत्वेपि, विषयसिद्धेः विचारविषयः सिद्ध एव किं त्वसन्–इति चेन्न, असत्त्वस्यैव विचार्यमाणत्वात्; व्यावहारिकत्वमेवासत्त्वम्–

खण्डनभूषामणिः।

स्वभावबलात् स्वभावः स्वरूपसम्बन्धो विषयविषयिभावलक्षणः सम्बन्धस्तद्बलेनेत्यर्थः। भ्रान्तिविषयेणेति। न च संसर्गस्य तादात्म्यस्य वा तत्रैवासत्त्वमत्यन्तासत्वमिति वाच्यं तस्य तदतिरिक्तदेशसत्त्वेन भ्रमः साक्षी न वान्य इत्याशयात्। एतेन बाह्यार्थासत्त्वे

खण्डनदर्पणः।

त्रेति। न ह्यसन् घटादिर्न घटादिरित्यादिनेत्यर्थः। यथा कम्बुग्रीवादिविशेषणविशिष्टो घटस्त्वया सत्त्वेनाभ्युपगम्यते तथा मयाप्यसत्त्वेन तथाभ्युपगमादिति भावः। ननूक्तमत्यन्तासतो न विशेषणत्वमित्यत आह—भ्रान्तीति। असत्त्वं घटादीनां प्रामाणिकत्वरहितत्वं न त्वभावप्रतियोगित्वादि। न च प्रामाणिकत्वं घटादावस्त्येवेति वा-

खण्डनरत्नमालिका।

तोर्ज्ञानविषययोर्न कथमपि विशेष्यविशेषणभावसम्भव इति भावः। परिहरति–नेति-उक्तमिति। असतोऽपि स्वरूपं स्वरूपमवेत्यादाविति शेषः। तदेवेति। निषेधात्मकत्वं व्यावृत्तत्वं चेत्यर्थः। अन्यथा–असतो व्यावृत्तत्वाभावे। अतिप्रसङ्गात्—सदसतोः सांकर्यापातात्। नन्वसतो न विषयविषयिभावसंभवोऽदृष्टत्वादित्यत आह—भ्रान्ति-

त्सत्त्वाच्चेत्यलमतिप्रपञ्चेन ।

इति शून्यवादिमतमाश्रित्य प्रमाणाद्यसत्त्वेऽपि व्यवहारनिरूपणम् ।

शाङ्करी ।

इति चेत् , तद्यदि ज्ञानरूपव्यवहारविषयत्वं, तदेष्टापत्तिः, ब्रह्मणोप्येतादृशस्यासत्त्वस्य त्वयेष्यमाणत्वात् ; अथ व्यवहारोऽभिलापस्तद्विषयत्वं, तदा सुतरामिष्टं, ब्रह्मसाधारणं च; अनिर्वचनीयत्वम्—इति चेत् , अनिर्वचनीयतयैव निर्वचनीयत्वात् ; घटत्वादिना निर्वचनात् , निर्वचनीयत्वस्य केवलान्वयित्वेन तदभावासिद्धेः; सत्त्वासत्त्वाभ्यां दुर्व्यवस्थापनम्—इति चेत् , घटादेरुभाभ्यामपि व्यवस्थितत्वात् , घटादेस्सत्त्वासत्त्वयोर्द्वयोरभ्युपगमात् ; किञ्च, असत्तया चेद्व्यवहारार्थक्रिययोर्यथाऽस्मदभ्युपगतयोरुपपत्तिस्तदा सत्तैव त्वयाऽसत्तेत्यभिधीयते, तथा च नाम्नि परं विवादः; तथापि सत्त्वेनापाततो व्यवस्थापयितुमशक्यत्वमसत्त्वमिति भावः ॥

खण्डनभूषामणिः ।

धर्माधर्मयोः फलार्थं विद्वान्न प्रवर्तेत इति दूषणमप्यपास्तम् । यादृशं फलं यद्वशेन विशिष्टे भवद्भिरभ्युपगम्यते तादृशस्यैव भवदभिमतसत्त्वस्य प्रतीत्याव्यसत्तास्वीकारेण यादृच्छिकत्वाभावात् । यस्तु पारमार्थिकी तस्य सत्ता नास्तीति जानाति स न प्रवर्तेतेति चेन्न । तस्यापि सत्ताज्ञानसत्त्वादेव प्रवृत्त्युपपत्तेः । सत्ताज्ञानमपि तस्य कथं विरोधिदर्शने सति स्यादिति चेन्न—समानप्रकारकत्वेनैव विरोधात् । नचैवं नेदं रजतमिति ज्ञाने प्रवृत्त्यापत्तिः सत्त्वाभावनिश्चयात् सत्त्वसामान्याभावज्ञानस्यैव विरोधित्वस्वीकारात् । एतेन कूटस्थनित्यमोक्षवतोपि बन्धज्ञानात्प्रवृत्तिरुपपन्ना न हि बन्धाभावस्य परमार्थसतो ज्ञानं प्रवृत्तिविरोधि बन्धसत्ताज्ञानस्य प्रवर्तकत्वे तेनाविरोधात् । यस्तु बन्धसामान्याभावं जानाति स न प्रवर्तत एव असत्त्वं च प्रपञ्चस्य यो यत्र यदाकारेण प्रतीयते तस्य तत्र तेनैवाकारेणात्यन्ताभावः शशविषाणादेस्तु न प्रतीत्यधिकरणात्यन्ताभाव इति ततो वैलक्षण्यं प्रपञ्चस्येति ॥

खण्डनदर्पणः ।

च्यम् । तत्प्रामाणिकत्वस्य प्रामाणिकत्वे आत्माश्रयादपरापराश्रयणेऽनवस्थानात् । न च घटादिस्वरूपस्य प्रमाणव्यवस्थापनेन प्रामाणिकत्वं व्यवस्थातव्यं प्रमाणस्य खण्डनीयत्वात् । वेदान्तिमते यथा प्रपञ्चस्यानिर्वचनीयता तथा खण्डनकृतैव व्यवस्थापनीयम् ।

इति श्रीपरमहंसविद्यासागराचार्य श्रीवर्द्धमान श्रीशंकरमिश्रकृतखण्डनव्याख्यानसंग्रहे कृतखण्डनोद्धारखण्डने प्रमाणादिसत्ताखण्डनम् ।

खण्डनरत्नमालिका ।

विषयेणेति । सता रूप्यादिना विषयविषयिभावसम्बन्धस्य ज्ञाने सद्वादिनाप्यङ्गीकारादसतो न सम्बन्ध इति वक्तुमशक्यमिति भावः ।

## अथ विज्ञानवादिमतमाश्रित्य ज्ञानभिन्नासत्त्वसमर्थनम् ।

### विज्ञानस्य सत्त्वं स्वयं प्रकाशता च—

'अपरे(१) पुनश्चेतसोपि शून्यताङ्गीकारे मनःप्रत्ययमनासादयन्तः

शाङ्करी ।

तदेवं माध्यमिकमतमाश्रित्य विश्वासत्त्वमुपपाद्य योगाचारमतमाश्रित्य ज्ञानभिन्नस्याऽसत्त्वमुपपादयितुमाह—**अपरे पुनरिति** । **चेतस इति** । ज्ञानस्येत्यर्थः । मनःप्रत्ययः—विश्वासः । अविश्वासे तु युक्तिः,-यदि शून्यत्वं जगतो वास्तवं, तदा

खण्डनभूषामणिः ।

बाह्यवस्तुनः परमार्थतोऽसत्त्वे ज्ञानमप्यपरमार्थसत् समानन्यायत्वाद्विषयशून्यस्य ज्ञानतायां लोकव्यवहाराभावात् इन्द्रियादिद्वारकमनोवृत्तिविशेषे आत्मनो विकारविशेषे वा लौकिकाः ज्ञानशब्दं प्रयुञ्जते ज्ञेयासत्त्वे तदुपरक्तरूपस्य क्षणिकविज्ञानस्यासत्त्वं स्वयमेव प्रतिपन्नमिति नास्त्येव ज्ञानमपीति विशिष्टेन प्रकृष्टेन ज्ञानेन योगान्माध्यमिकः-सर्वशून्यवादी योगाचारं मध्यमबुद्धिमपेक्ष्य, विज्ञानेन वदनशीलो विज्ञानवादी । शून्यवादिमतमपरे न मन्यन्त इत्यादिना **अलमतिप्रसङ्गेनेत्यन्तेनोपपाद्य** योगाचारस्य बाह्यार्थशून्यक्षणिकविज्ञानस्य वस्तुसतः स्वीकर्तुं मतमुपन्यस्यति-**अपरे त्विति** । चेतसो-विज्ञानस्य, मनः प्रत्ययो-मनस्तुष्टिः, अनासादयन्तः-अलभमानाः । "मनः प्रत्ययो-विश्वासः, अविश्वासे तु युक्तिः शून्यत्वं विश्वस्य यदि वास्तवं तदा क्व शून्यत्वं शून्यत्वस्यैव धर्मस्य सत्त्वात् अथावास्तवं तदा पूर्णत्वमेव तस्याश्च स्वतः सिद्धिः परतो वा आद्ये स्वप्रकाशतया ज्ञानरूपैव शून्यता अन्त्ये शून्यतासाधकस्यैव सत्त्वात् क्व शून्यता, किं च किं तच्छून्यं यस्य धर्मः शून्यता मिथ्या वा अलीकं वा असद्वा अनिर्वचनीयं वा विचारासहं वा प्रपञ्च एव वा तच्च सर्वमनुभवात् क्रियाविरोधाच्चानुपपन्नमिति" **शंकरमिश्राः** । तदाहुर्न्यायाचार्याः —"न ग्राह्यभेदमवधूय धियोऽस्ति वृत्तिस्तद्बाधने बलिनि वेदनये जयश्रीः । नो चेदसत्यमिदमीदृशमेव विश्वं तथ्यं तथागतमतस्य तु कोऽव-

खण्डनदर्पणः ।

तदेवंविज्ञानस्याप्यसत्त्वमङ्गीकृत्य शून्यतावादिसाधारण्येनोक्तं योगाचारसाधारण्येनाखण्डानन्दाद्वयस्वप्रकाशचिदेकरसमशेषभुवनाधिष्ठानमुत्पत्तिस्थितिलयालयरूपं स्वप्रकाशरूपं ब्रह्म साधयितुं वेदान्तिमतमाह—**अपरे पुनरिति**। यद्यपि स्वमतेनैवैतत्पर्यवसास्यति तथापि योगाचारमतसाधारण्येनाभिधानादपरे त्वित्युक्तम्। **चेतसोऽनुभवस्य,**

खण्डनरत्नमालिका ।

एवं शून्यवादेऽपि कारणतादिव्यवहारः सम्भवति किं पुनर्ज्ञानमात्रस्य सत्त्वे इत्यभिप्रेत्य कैमुतिकन्यायेन विज्ञानं स्वयंप्रकाशं साधयति—**अपरेत्विति** । **चेतसः**—

(१) यद्यपि पश्चात्स्वमतेऽस्य पर्यवसानं भविष्यति तथापि योगाचारमतसाधारण्येनाभिधानात् अपर इत्युक्तम् ।

'सर्वमिदमसदेव विश्वम्'–इत्यभिधातुं सहसैवानुत्सहमानाः मन्यन्ते–विज्ञानं तावत् स्वप्रकाशं, स्वत एव सिद्धस्वरूपं, न खलु विज्ञाने सति

शाङ्करी ।

क शून्यत्वं, शून्यत्वस्यैव धर्मस्य सत्त्वात्, अथ शून्यत्वमवास्तवं, तदा पूर्णत्वमेव । शून्यतायाश्च स्वत एव सिद्धिः ?, परतो वा ? । आद्ये स्वप्रकाशतया ज्ञानस्वरूपैव शून्यतेति; अन्त्ये शून्यतासाधकस्यैव सत्त्वान्न शून्यता । किञ्च, किं तच्छून्यं यस्य धर्मः शून्यता ? मिथ्या वा ? अलीकं वा ? असद्वा ? अनिर्वचनीयं वा ? विचारासहं वा ? प्रपञ्चो वा ? बाध्यं वा ' तच्च सर्वमनुभवार्थक्रियाविरोधादनुपपन्नमेव । स्वप्रकाशमिति । स्वस्य प्रकाशः—विषयीभावो यत्र तत्स्वप्रकाशं, स्वं वा प्रकाशो यस्य तत्स्वप्रकाशं, स्वस्मात् प्रकाशो यस्येति वा तदेव विवृणोति—स्वत एवेति । स्वप्रकाशत्वे प्रमाणमाह—न खल्विति । देवदत्तस्य घटज्ञानोत्पत्तिक्षणो

खण्डनभूषामणिः ।

काश" इति । सर्वथेदमसदेव विश्वमिति । अनुभूयमानमिदं विश्वं ज्ञानज्ञेयाकारं ज्ञानेन ज्ञेयेन चोभयेन शून्यं वक्तुमनुत्सहमानाः सर्वप्राणिनामबाधितसिद्धत्वान्नीलाद्याकारप्रतिभानस्येति भावः । इदं तु परीक्ष्यं किं संविदामयमौपाधिको नीलिमा किंवा बाह्यस्य स्वाभाविकः तुच्छे तु विश्वस्मिन्निर्बीजः प्रतिभासो नावकल्पते तत्र विज्ञानमेवेदमनादिवासनोपहितनीलाद्याकारमात्मगोचरमेवं प्रकाशत इत्येव युक्तं केवलज्ञानेनैवोपपत्तौ ज्ञेयान्तरकल्पनायां गौरवात् । यदि च ज्ञानं स्वप्रकाशं न स्यात्तदा नीलाद्याकारो ऽननुभूयमानस्य नेत्यभूयमानो नीलाद्याकारो ह्यस्य घटादेरेव स्यात् स्वप्रकाशे तु ज्ञाने आत्मनैवात्मनि ज्ञायमाने नीलाद्याकारः स्वस्यैव स्वच्छस्यापि दोषवशाद्युक्त इत्याशयेनाह–ज्ञानं स्वप्रकाशं स्वत एव सिद्धस्वरूपमिति । प्रमितिस्वरूपं स्वसत्ये स्वयमेव प्रमेत्यर्थः । न तु ब्रह्मरादिनामिव स्वव्यवहारे प्रकाशानपेक्षप्रकाशमिति भावः । न तु नीलादिबाह्यवज्ज्ञानान्तराधीनसिद्धत्वरूपम् । एतेन बाह्यं चेत् पारमार्थिकं स्वीकर्तव्यं तदा तस्याप्रकाशत्वात्तत्सिद्ध्यर्थं ज्ञानमपि स्वीकार्यमिति गौरवं सूचितम् । तस्य स्वविषयत्वे मानमाह–न खल्वित्यादिना । वस्तुतस्तु तस्य स्वाविषयत्वे ज्ञेया-

खण्डनदर्पणः ।

मनः प्रत्ययं मनस्तुष्टिं, मन्यन्त इति तदाह–विज्ञानमिति । सर्वशून्यत्वे इदं बाधकं शून्यता सिद्धा न वा नचेत्पूर्णतैव आद्येपि स्वतः परतो वा—आद्ये स्वप्रकाशतया ज्ञानरूपैवेति न शून्यता अन्त्ये मानस्यैव सत्वे क शून्यता । किञ्च–जगतः शशशृङ्गवदलीकत्वे प्रत्यक्षदृश्यमानत्वाभावप्रसङ्गः । परमार्थसत्वे चाग्रे बाधो न स्यात्—बाधकस्य स्थापनी-

खण्डनरत्नमालिका ।

विज्ञानस्य । मनःप्रत्ययं—मनस्तुष्टिम् । अतत्त्वज्ञाने–संशयविपर्ययौ व्यतिरेकप्रमा-अभावप्रमा तेषामभावसमुदायः संशयाभावः विपर्ययाभावः अभावप्रमाभावश्चेत्यर्थः । पथि गच्छतस्तृणादावजिज्ञासिते विपर्ययाद्यभावो दृष्टः प्रमितत्वं च साध्यं नास्तीति

जिज्ञासोऽरपि कस्यचित् 'जानामि न वा'–इति संशयः, न जानामि'-इति वा विपर्ययः,व्यतिरेकप्रमा वा, तेन जिज्ञासितस्याऽतत्त्वज्ञानव्यति-

शाङ्करी।

घटज्ञानज्ञान(१)वान्, जिज्ञासितघटज्ञानगोचरसंशयविपर्ययव्यतिरेकप्रमाऽनाधारत्वात् घटानुव्यवसायक्षणवत् चैत्रवद्वेति मानार्थः। अयं ज्ञातघटज्ञानः, जिज्ञासुत्वे सति तद्वि-षयसंशयादिरहितत्वात्—इति व्यतिरेकी वा हेतुर्विवक्षितः। ज्ञानाभावदशायां व्यभि-चारवारणाय जिज्ञासोरपीति। अतत्त्वज्ञाने(२) च व्यतिरेकप्रमा च अतत्त्वज्ञानव्यति-रेकप्रमाः; तासामित्यर्थः। यद्यपि स्वप्रकाशे जिज्ञासैव नावतरति, जिज्ञासा हि ज्ञातु-मिच्छा, न हि सा ज्ञाते एव ज्ञाने सम्भवति, तथा च ज्ञानस्य स्वप्रकाशतां जिज्ञासा न सहते—इति न तया लिङ्गं विशेष्टुमर्हति, तथापि व्याप्तिस्तावदीदृशीति(३) हृद-

खण्डनभूषामणिः।

न्तरकल्पनापत्तिः अनुव्यवसीयमानत्वपक्षे घटज्ञानतज्ज्ञानपरम्परैव स्यादिति विषयान्त रसंचारानुपपत्तिरपि दोषः। गच्छतस्तृणादावजिज्ञासिते विपर्ययाद्यभावोऽप्रमितेऽपीति त-द्व्यावृत्तये जिज्ञासोरपीति। जिज्ञासोर्विचारकस्यापि ज्ञाने संशयादिर्न जायते किं पुन

खडनदर्पणः।

यत्वात्। तस्मादनुभवरूपब्रह्मातिरिक्तं दृश्यजातमध्यस्तमनिवर्चनीयमिति व्यवस्थाप्यं स्वप्रकाशमिति स्वयं प्रकाशो ज्ञानं यस्य स्वेन प्रकाशो वा यस्य तत् स्वप्रकाशम्। **वस्तुतस्तु**–अवेद्यत्वे सत्यपरोक्षव्यवहारविषयत्वं स्वप्रकाशत्वमेतदेव विवृणोति–**स्व-तएवेति**। स्वप्रकाशत्वं साधयति **न खल्विति**। जिज्ञासुपदं ज्ञानाभावे संशयविपर्य-यव्यतिरेकप्रमाणामभावोऽस्त्यतो व्यभिचारवारणाय। न च ज्ञाने सत्यभावप्रमाप्रसङ्ग एव नास्ति किमिदमुच्यते—व्यतिरेकप्रमा वा न जायत इति। सतोऽप्रमितस्य जिज्ञासितस्य संशयविपर्ययान्यतरगोचरत्वं जिज्ञासितस्य प्रमितस्य त्रयाणामन्यतम-विषयत्वमिति विभागेन योजनीयत्वादिति न कोपि दोषः। **तेनेति**। अतत्त्वज्ञानपदेन संशयविपर्यययोरेवोक्त्या विधानम्। प्रयोगश्च देवदत्तस्य घटज्ञानाधिकरणक्षणः देवदत्त-घटज्ञानज्ञानाधिकरणं जिज्ञासितघटज्ञानगोचरसंशयविपर्ययव्यतिरेकप्रमानाधारक्षणत्वात्

खण्डनरत्नमालिका।

व्यभिचार इति तद्वारणायाह—**जिज्ञासोरिति**। यदि विज्ञानमप्रमितं स्यात् तदा जानामि नवेति संशयः न जानामीति विपर्ययः प्रमा वा स्यात् जिज्ञासितस्य अप्रमि-तस्य संशयविपर्ययव्यतिरेकप्रमान्यतमगोचरत्वम् इति अप्रमितत्वव्यापकस्य संशया-

(१) घटज्ञानविषयकं ज्ञानं च स्वात्मकमेव ग्राह्यं न ज्ञानान्तरं स्वप्रकाशत्वस्य साध्यत्वात् एवमग्रेऽपि।

(२) अतत्त्वज्ञाने–संशयविपर्ययौ।

(३) यत्र यत्र जिज्ञासुत्वे सति संशयाद्यभावस्तत्र तत्र प्रमितत्वमिति व्याप्तिरेव जिज्ञासाघटिते-त्यत्रैव तात्पर्यं न तु लिङ्गकुक्षौ तन्निवेशोऽपीत्यर्थः।

रेकप्रमाणामभावसमुदायः स्वव्यापकं जिज्ञासितस्य प्रमितत्वमानयति । अन्यथा(१) हि जिज्ञासितप्रमितत्वव्यतिरेकव्यापकं जिज्ञासितव्यतिरे-

खण्डनभूषामणिः ।

लौकिकस्येत्यपिशब्दार्थः । विपर्ययो-भ्रमः ज्ञाने ज्ञानभेदज्ञानं, व्यतिरेकप्रमा-योग्यानुपलब्धिजन्यमभावावगाहिज्ञानं न जानाम्येवेत्याकारम् । यद्यप्यात्मविशेष्यकाण्येतानि ज्ञानानि विशेषणज्ञानाभावादेव न जायन्ते न तु ज्ञानस्य प्रमितत्वादेव तथापि ज्ञानधर्मिकसंशयाद्यनन्तरमिदं त्रयं स्यादित्यत्र तात्पर्यम् । अथ वा स्वप्रकाशज्ञानवादिनां प्राभाकराणामिव ज्ञानविशेष्यकज्ञानमेवायमाकारः स च विशेषणज्ञानस्य कारणत्वानङ्गीकारेणैवोपपाद्यः । अतत्त्वज्ञानव्यतिरेकप्रमाणामिति । अतत्त्वज्ञाने च व्यतिरेकप्रमा चेति द्वन्द्वाश्रयणाद् बहुवचनसंगतिः । आनयति-आक्षिपतीत्यर्थः । स चानुपपत्त्येति तामाह-अन्यथेति । जिज्ञासितव्यतिरेकोल्लेखिज्ञानं-संशयादित्रयं, यत्र जिज्ञासानन्तरमेव निद्रया प्रतिबन्धात् प्रमा न जायते तत्र व्यभिचारवारणाय अविघ्नितजिज्ञासस्येति । अ-

खण्डनदर्पणः ।

घटज्ञानज्ञानाधारक्षणवत् । यद्वायं ज्ञातघटज्ञानः जिज्ञासुत्वे सति तद्विषयकसंशयविपर्ययव्यतिरेकप्रमारहितत्वादितिव्यतिरेकी । यद्वा ज्ञानं स्वसत्तायां प्रमितत्वाद्यव्यतिरेकि अविघ्नितजिज्ञासाया विषयत्वे सति संशयाद्यविषयत्वात् संमतवत् । अविघ्नितपदं जिज्ञासायामपि यत्र प्रतिबन्धवशान्न प्रमितत्वं तत्र व्यभिचारवारणाय । सुखादौ साक्षिभास्यत्वान्न व्यभिचारः । न च जिज्ञासा न ज्ञानं विनेति जिज्ञासाविषयत्वस्यैव गमकत्वे व्यर्थविशेष्यतेति वाच्यम्, जिज्ञासितप्रमितत्वस्य साध्यत्वात् संशयादिना व्यभिचारवारणाय तदुपादानात् । न च स्वप्रकाशे जिज्ञासैव नावतरति जिज्ञासा हि ज्ञातुमिच्छा न हि सा ज्ञाते ज्ञाने सम्भवति तथा च ज्ञानस्य स्वप्रकाशतां जिज्ञासा न सहते इति वाच्यम् । ज्ञानात् पूर्वं विनश्यदवस्थजिज्ञासासम्भवेनादोषात् । न च ब्रह्मरूपविज्ञानस्य पूर्वत्वं प्रमितत्वं च न सम्भवति तत्कथमेतदिति वाच्यम् । पर-

खण्डनरत्नमालिका ।

दिगोचरत्वस्याभावः अप्रमितत्वाभावं प्रमितत्वं साधयतीति भावः । अयमत्र विवेकः—जिज्ञासितस्याप्रमितस्य सतः संशयविपर्ययान्यतरगोचरत्वं जिज्ञासितस्याप्रमितस्यासतः संशयव्यतिरेकप्रमागोचरत्वमिति । इदमत्रावधेयम्—यद्यपि योगाचारो ब्रह्मवादी चोभौ विज्ञानं स्वप्रकाशं मनुतस्तथापि तयोनैकरूपं विज्ञानस्वप्रकाशत्वम् किन्तु योगाचारमते ज्ञानस्य स्वयमेव प्रमातृत्वं प्रमेयत्वं चेत्येवं रूपं स्वप्रकाशत्वं ब्रह्मवादिनस्तु स्वव्यवहारहेतुप्रकाशत्वरूपं स्वप्रकाशत्वमिति । अन्यथेति । ज्ञानस्य प्रमितत्वाभावे इत्यर्थः । अयं भावः । यदि जिज्ञासितं ज्ञानं प्रमितं न स्यात् तदा जिज्ञासितस्य व्यतिरेकोऽभावस्तदुल्लेखिज्ञानं नास्तीत्येवं ज्ञानं

(१) अन्यथा—ज्ञानस्याप्रमितत्वे ।

**कोल्लेखि ज्ञानमविघ्नितजिज्ञासस्य स्यात् । अतः सर्वजनस्वात्मसंवेदनसिद्धमेवास्य बोधस्य स्वरूपम् ।**

ज्ञानस्वप्रकाशतासाधकहेतावन्यथासिद्ध्यादिशङ्कापरिहारौ—

**व्यवसायस्यानुव्यवसायनियमान्न तत्र संशयादिः—इति चेन्न, यत्र-**

शाङ्करी ।

यम्(१)। संशयाद्यभावसमूहे हेतावन्यथासिद्धिमाशङ्कते—**व्यवसायस्येति**। अनुव्यवसायेन व्यवसायस्य प्रतीतत्वान्न तत्र संशयविपर्ययव्यतिरेकप्रमा इत्यर्थः । परिहरति—**यत्रेति**। यद्यनुव्यवसायाः प्रोच्यन्ते ? ( ज्ञायन्ते ) तदाऽनवस्था, विषयान्तरसञ्चाराभावः, अनु-

खण्डनभूषामणिः ।

विघ्निता अप्रतिबद्धा जिज्ञासा यस्य ज्ञानस्य पुंसो वेत्यर्थः । **अत इति** । यतः स्वसत्ताकाल इव ज्ञानस्याप्रमितत्वव्यतिरेकः सिद्धः अत्र प्रमान्तरस्याभावात् स्वतः प्रमितत्वं सिद्धमिति भावः । यद्यपि च एवं सति जिज्ञासा नावतरति सा हि ज्ञातुमिच्छा सा हि ज्ञाते ज्ञाने स्यात् न च प्रकाशे निश्चिते सति ज्ञानेच्छा संभवति तथापि मनोऽवधानादिरूपा ज्ञानकारणसंपत्तिरेवात्र जिज्ञासाशब्देन लक्ष्यते । "अनुमानमेव स्वप्रकाशत्वेऽभिमतम् ततः ज्ञानं स्वसत्तायां प्रमितत्वाव्यतिरेकि जिज्ञासितत्वे सति संशयाद्यविषयत्वात् यद्यदा जिज्ञासितत्वे सति संशयाद्यविषयस्तत्तदा प्रमितत्वाव्यतिरेकि यथैतन्निर्णयविषयैतद्घट इति" **विद्यासागरः** । अन्यथोपपत्तिमाशङ्कते—**व्यवसायस्येति** । अनुव्यवसायो हि न स्वसत्तया ज्ञानं साधयतीत्याशयेनाह—**यत्रेति** । अस्त्यनुव्यवसाय

खण्डनदर्पणः ।

रीत्या परं प्रति प्रयुक्तत्वात् । विपक्षबाधकमाह—**अन्यथेति**। जिज्ञासितप्रमितत्वाभावोल्लेखिज्ञानपदेन संशयविपर्ययव्यतिरेकज्ञानान्यतमज्ञानम् । उक्तं निगमयति—**अत इति**। **आत्मसंवेदनसिद्धं**—स्वप्रकाशमित्यर्थः । उक्तहेतावन्यथासिद्धिं शङ्कते—**व्यवसायेति** । अनुव्यवसायेन व्यवसायस्य प्रमितत्वात् न तत्र संशयादिरित्यर्थः । परिहरति—**नेति** । अत्र ज्ञानस्य स्वप्रकाशत्वे इदमपि साधकं बोध्यम् । यदि ज्ञानं न स्वप्रकाशं तदानुमित्सया यत्रानुमितिस्तत्र कथमनुमित्यनुव्यवसायं विना इच्छा निवर्तते । न हि स्वसत्तामात्रेणेच्छाविषयेणेच्छा निवर्तते किन्तु तत्सिद्धत्वज्ञानादिति । **यत्रेति** ।

खण्डनरत्नमालिका ।

स्यात् अत्र तु अविघ्नितजिज्ञासस्य संजातजिज्ञासस्य पुंसो नैवं ज्ञानमतो ज्ञानं प्रमितमिति । ननु विज्ञानस्य स्वप्रकाशत्वाभावेऽपि अनुव्यवसायेन तज्ज्ञानान्न संशयादिरिति संशयाद्यभावहेतुना न विज्ञानस्य स्वकाशत्वसिद्धिसंभव इति शङ्कते—**व्यवसायस्येति** । अर्थनिश्चयोत्पत्त्यनन्तरं तद्गोचरनिश्चयोत्पत्तिनियमात्तत एवाद्यज्ञानप्रकाशोपपत्तिरित्यर्थः । तदनुव्यवसायज्ञानं स्वयंप्रकाशमानमर्थज्ञानं साधयति सत्तया वा नान्त्य इत्याह **नेति** । **यत्रेति** । यद्यनुव्यवसायज्ञानावश्यकता तदानवस्था विष-

(१) यत्र यत्र जिज्ञासुत्वे सति संशयाद्यभाववत्त्वं तत्र तत्र प्रमितत्वमिति व्याप्तिरेव जिज्ञासा

वानुव्यवसाये ज्ञेयता नोपेया तत्र जिज्ञासायाम् आत्मधर्म्मिकं तत्संशय-

शाङ्करी ।

भवश्च; तद्विरामे तु विषयपर्यन्तं संशयः इत्यागत्या ज्ञानं स्वप्रकाशमेषितव्यमित्यर्थः । ननु ज्ञानं ज्ञातं यदि, तदा न तत्र संशयो ज्ञातत्वात्; अथाऽज्ञातं, तदापि न तत्र संशयोऽज्ञातत्वात्; नहि धर्म्यदर्शनेपि संशयः, तथा सति तत्र धर्मिनियमो न स्यादित्यत आह—आत्मधर्मिकमिति । अनुव्यवसायानन्तरम् 'अहं तृतीयज्ञानवान्न वा' 'अहं ज्ञानविषयतृतीयज्ञानवान्न वा' 'अहं ज्ञातघटज्ञानो न वा' इत्यात्मधर्म्मिकसंशयमुपक्रम्य विषयपर्यन्तं संशयः स्यात्, नचैतादृशी संशयधारानुभूयते, तन्नूनं स्वप्रकाशमेव ज्ञानमित्यर्थः । यद्वा, 'घटज्ञानजिज्ञासावानयं चैत्रो यदि ज्ञातघटज्ञानो न स्यात्, प्रमिततद्विरहस्स्यात्'—एवं द्वितीयतृतीयादिज्ञानपरम्परापूरणेन तत्तद्विरहप्रमामापाद्याऽर्थापत्त्या स्वप्रकाशता साधनीयेत्यर्थः । यद्यप्यनुव्यवसाये सति न तत्र जिज्ञासा ज्ञानधारया विच्छेदात्, नोत्तरकालीना, विषयाभावात्, तथाप्यनुपसञ्जातविरोधि-

खण्डनभूषामणिः ।

इति नैयायिकाः । नास्तीति बौद्धाः । तत्रैवं विप्रतिपत्तौ विचारकस्य जिज्ञासायां सत्यां संशयो भवेत् । ननु संशयो ज्ञानधर्मिको न संभवति अज्ञातस्य तस्य विशेष्यत्वाभावात् ज्ञाते च निश्चितत्वादेवेत्याशङ्क्याह—आत्मधर्मिकमिति । अनुव्यवस्यामि न वेति तत्संशयं तत्कोटिकमारभ्य व्यवसायात्मको यस्तद्विषयस्तत्राप्यौचित्यावर्जितः संशयः स्यादेवेत्यर्थः । अनुव्यवसायोऽस्ति न वेति सामान्यतः प्रतिपन्नभावाभावकोटिकः

खण्डनदर्पणः ।

यद्यनुव्यवसायादिज्ञानावश्यकता तदानवस्था विषयान्तरसंचाराभावोऽननुभवश्च तन्निरासे तु विषयपर्यन्तं संशय इति अगत्या हि स्वप्रकाशं ज्ञानमेषितव्यमित्यर्थः । ननु ज्ञानं धर्मीकृत्य संशयो न युक्तः तस्य ज्ञानेन तन्निश्चयादज्ञाने तु धर्म्यज्ञानादित्यत उक्तम्—आत्मधर्मिकमिति । सामान्यतस्तत्र ज्ञानज्ञातत्वादिना ज्ञाने सति अहं तृतीयज्ञानवानिदानीं न वा मम तृतीयज्ञानं चतुर्थज्ञानविषयो न वेतिसंशयस्तमारभ्येत्यर्थः । न चानुव्यवसाये ज्ञाते न तत्र जिज्ञासा पूर्वकालीना ज्ञानधारया विच्छेदात् नोत्तरकालीना विषयाभावादिति वाच्यम् । सामान्यतो विषयज्ञानादेव जिज्ञासासम्भवात् न हि जिज्ञासाविषयस्य कारणता । ननु व्यवसायेन विषयनिश्चयात् कथं विषये संशयः स्यादित्यतआह—

खण्डनरत्नमालिका ।

यान्तरसञ्चाराभावश्च यदि तद्विरामस्तदा विषयपर्यन्तः संशय इति ज्ञानं स्वप्रकाशं मन्तव्यमिति तात्पर्यम् । तत्र—अनुव्यवसाये । जिज्ञासायाम्—अनुव्यवसायोऽन वेति जिज्ञासायाम् । आत्मधर्मिकम्—अनुव्यवसायधर्मिकम् । व्यवसायविषयपर्यन्तमिति । अनुव्यवसायसंशयाद्व्यवसायसंशयस्ततश्च विषयसंशयः इत्यर्थः ।

घटितेत्यत्रैव तात्पर्यं न तु लिङ्गकुक्षौ तन्निवेशोऽपीत्यर्थः ।

**मारभ्य व्यवसायविषयपर्यन्तं संशयाक्रान्तेर्दुष्परिहरत्वात् ; विषयिसद्भावसंशये तद्विषयेपि संशयस्य सम्भवात् । एवं त्रिचतुरसंवेदनकक्षाज्ञानध्रौव्यनियमाभ्युपगमेपीति ।**

शाङ्करी ।

तया (१)पूर्वजिज्ञासाया एव तथा सामर्थ्यमभिप्रेतम् । ननु 'ज्ञानगोचरसंशयेन तद्विषयसंशयोपि'—इति कथमेतदत आह—**विषयीति** । यद्यपि नायं नियमस्तथापि सम्भवमात्राभिप्रायेणैतदुक्तम्, अत एव **सम्भवादित्युक्तम्** । ननु व्यवसायवदनुव्यवसायोऽपि गृह्यते एव, तथाच कथं विषयपर्यन्तः संशय इत्यत आह—**एवमिति** । क्वचिद्विरामस्यावश्याभ्युपगमनीयत्वेन विषयपर्यन्तसंशयधाराध्रौव्यादित्यर्थः । ननु स्वप्रकाशनये तदेव ज्ञानं कर्म स्यात्, क्रिया च, नचैवं सम्भवति, क्रियाकर्मणोर्भेद-

खण्डनभूषामणिः ।

संशय इति भावः । **यत्रेति** । यदि चानुव्यवसाये—अनुव्यवसायविषयेपि ज्ञाननियमस्तदापि यत्र ज्ञानोपरमो वाच्यस्तदात्मधर्मिकसंशयमारभ्य संशयः स्यादेव इति स्वप्रकाशत्वमेवोचितं ज्ञानस्य । ननु स्वप्रकाशेपि ज्ञाने किंचित्प्रमाणमवश्यं वाच्यमन्यथा शशविषाणसाम्यापत्तेः स्वयमेव स्वस्मिन् प्रमाणमिति तु न शक्यं वक्तुं प्रमाणप्रमेयभावस्य क्रियाकर्मभावरूपस्य भेदगर्भत्वात् । यदि च मास्तु क्रियाकर्मभावस्तथापि विषयविषयिभावस्तु स्यात् सर्वज्ञज्ञानस्य स्वविषयताया अपि स्वीकारादित्युच्यते तदापि तस्य स्वविषयत्वे प्रमाणमनुयुक्तो यदि ज्ञानं स्वविषयकं ज्ञानत्वात् सर्वज्ञज्ञानवत् व्यतिरेके घटवदित्युच्यते तदा तस्मिन्नपि प्रमाणं वाच्यं पूर्ववदिति तदानवस्था, न

खण्डनदर्पणः ।

**विषयीति** । न च नायं नियम इति वाच्यम् । प्रतिबन्धकाद्यभावे सति नियमसत्त्वादिति भावः । यद्यपि त्रिचतुरकक्षापर्यन्तमनुव्यवसायनियमस्तथापि यदन्यज्ज्ञानं न ज्ञायते तदारभ्य विषयपर्यन्तं संशयः स्यादेवेत्याह—**एवमिति** । ननु स्वप्रकाशनये तदेव ज्ञानं कर्म स्यान्न चवं सम्भवति क्रियाकर्मणोर्भेदगर्भत्वात् कथं वात्यन्तमभिन्नतया

खण्डनरत्नमालिका ।

**सम्भवादिति** । विषयिसिद्ध्यधीनत्वाद्विषयसिद्धेरिति भावः । ननु अनुव्यवसायोऽपि परप्रकाशित एवार्थं साधयिष्यतीत्यत आह—**एवमिति** । विषयपर्यन्तं संशयाक्रान्तिरित्यर्थः । **त्रिचतुरेति** । अनवस्थाभयाद्विषयान्तरसंचाराभावभयाच्च कासु चित्कक्षासु विश्रान्तिरभ्युपेया तथा च यस्यां काक्षायां विश्रान्तिः तस्यां सन्देहे पूर्वपूर्वसन्देहाद्विषयपर्यन्तं संशयाक्रान्तिरितिभावः । ननु स्वप्र-

(१) अनुपसञ्जाता विरोधिता यस्या जिज्ञासाया ज्ञानेन सहैतादृशी या ज्ञानात्प्राचीना जिज्ञासा तस्या एव संशयादिसहकृतत्वेनाप्रमात्वसाधकत्वं व्यवसायविषयपर्यन्तसंशयसंक्रमयितृत्वं चेत्यर्थः । सामान्यतो विषयज्ञानस्यैव जिज्ञासायां कारणत्वेन विषयस्य तत्र कारणत्वाकल्पनादिति भावः ।

ज्ञानस्य स्वप्रकाशत्वे दोषाभावमुपपाद्य विपक्षेऽनवस्थोद्भावनम्—

**स्वप्रकाशे तु मानमेयभावव्यवस्थाया अभावादेव तदाश्रया दोषा**

## शाङ्करी ।

गर्भत्वात् कथं वाऽत्यन्तमभिन्नतया विषयविषयिभावः ? इत्यत आह—**स्वप्रकाशे त्विति** । यदि भिन्नयोः क्रियाकर्मभावो वा विषयविषयिभावो वा क्वचिन्मयाङ्गीक्रियेतोपपन्नो वा स्यात् तदा विरोधो भवेत्, नत्वेवं, स्वप्रकाशज्ञानातिरिक्तवस्तुनो मया योगाचारनयनगरप्रवेशादेवानभ्युपगमादित्यर्थः । यद्वा, ननु ज्ञानप्रामाण्यसंशयाधीनः संशयस्तवापि विषयपर्यन्त इत्यत आह—**स्वप्रकाशे त्विति** । यदि भेदेन विषय-

## खण्डनभूषामणिः ।

चेत्तदा संशयः स्वप्रकाशज्ञानेपि संशयापत्तिरित्याशङ्क्याह—**स्वप्रकाशे तु मानमेयव्यवस्थाया अभावादेवेति**। मानमेयस्य व्यवस्थाया अस्वीकारादेव न स्वप्रकाशत्वे मानं तन्मानमित्यनवस्था स्वप्रकाशासिद्धिर्वा दोषः । **अयमाशयः** नास्माकं मेयं किंचिदस्ति येन मानमपेक्ष्यं स्यात् कथं तर्हि ज्ञानस्य सिद्धिरिति चेत्—स्वत एवेति । न हि ज्ञाने कस्यापि विप्रतिपत्तिरस्ति न हि न जानामीति कस्याप्यनुभवः । तर्हि ज्ञानमस्त्यनुभूयमानत्वादित्यनुमानमभिप्रेतं भवत इति चेन्न असंदिग्धेनुमानाप्रवृत्तेः। तर्हि न हि जानामीत्यनेन किमुक्तम् अत्र प्रमाणस्य नावसरः संदेहाभावादित्युच्यते तर्हि कथं प्रमितता पूर्वं साधितेति चेत् सापि स्वस्यैव प्रमितिरूपता परिशेषादित्युक्तं तथापि स्वविषया यदि सा तदा तस्यास्तद्विषयत्वे किं मानमिति चेन्न विषयता हि स्वाभेद एव स च स्वस्वरूपमेवेति किं पृच्छयते न हि स्वस्मिन् विप्रतिपत्तिः कस्याप्यस्ति न हि ज्ञानभिन्नस्य ज्ञानविषयतोपपद्यते सा हि नातिरिक्ता मानाभावात् विषयतासाधकस्यातिरिक्तस्य प्रमाणान्तरगवेषणायामनवस्थापातात् । तत किं घटादयो न विषया एव तर्हि घटं जानामीत्यनुभवविरोध इति चेत् घटादयो ज्ञाना-

## खण्डनदर्पणः ।

विषयविषयिभाव इत्यत आह—**स्वप्रकाशे त्विति** । यदि भिन्नयोः क्रियाकर्मभावो विषयविषयिभावो वाद्युक्तः क्वचिन्मया गीयते तदा विशेषो भवेत् न त्वेवं स्वप्रकाशज्ञानातिरिक्तस्य मम मतेऽभावात् दृश्येन समं दृशः सम्बन्धस्याविद्यकत्वात् । **एतेन** प्रामाण्यसंशयात् विषयपर्यन्तं संशयस्तवापि तुल्य **इत्यपास्तम्** । न च स्वप्रकाशताऽसिद्धोक्तयुक्तिप्रवेशात् तदपि न सिद्ध्येदिति वाच्यम् । मम मते पारमार्थिकस्य

## खण्डनरत्नमालिका ।

काशनये तदेव ज्ञानं विषयः विषयी च स्यात्तच्च न सम्भवति विषयविषयिभावस्य भेदाधिष्ठानत्वादत आह—**स्वप्रकाशे त्विति** । स्वप्रकाशज्ञानातिरिक्तवस्तुनो मयाऽनभ्युपगमेन विषयविषयिभावस्य भेदाधिष्ठानत्वायोगात् । प्रत्युत भेदेन विषयवि-

**निरवकाशाः। अन्यथा तु बोधस्वरूपमेव न सिद्ध्येत्। यदि हि विज्ञानं परतः सिद्ध्येत् तदाऽनवस्था स्यात्।**

शाङ्करी।

विषयिभावो भवेत्तदा बोधस्वरूपमेव न सिद्ध्येदित्याह—अन्यथेति। अस्तु वा भेदेन विषयविषयिभावस्तथापि ज्ञाने तथा नाङ्गीकर्त्तव्यमित्याह—यदि हीति। ननु ज्ञानस्यापि व्यवहारं न तदैव ज्ञानाधानं ब्रूमो येनावस्था दिश्येत, किन्तु घटादिसत्ताविल-

खण्डनभूषामणिः।

कारा एव तर्हि घटमितिक्रियाकर्मभावानुपपत्तिरिति चेन्न—ज्ञानजन्यवासनाश्रयत्वात्तद्नुपपत्तिरपि न, घटस्य कारकता ज्ञानं प्रति न स्यादिति चेन्नास्त्येव नह्यसतो जनकता सम्भवतीति। स्वस्य स्वविषयत्वे तर्कमप्याह—अन्यथेति। यद्यपि ज्ञानवादिन इदं नानिष्टं तथाप्यनुभवविरोध इत्युक्तम्। यद्वा अनुव्यवसायतो ज्ञानसिद्धिरिति वदतः प्रत्यनिष्टापादनमि कथं न सिद्ध्येदित्याशङ्क्याह—यदि हि विज्ञानं परतः सिद्ध्येदिति। इदं तु ज्ञातताग्म्यतापक्षेपि दूषणम्। एतेन "स्वयंप्रकाशे तु इत्यस्य अविषयत्वेपि प्रकाशमानत्वान्न संशयाक्रान्तिः मानमेयभावाभावान्न कर्तृकर्मविरोधः इदं ब्रह्मवाद्यभिमतमेव स्वप्रकाशत्वमभिहितमिति" विद्यासागरव्याख्यानमपास्तम्। प्रागुक्तस्वप्रकाशे संशयाक्रान्त्यपरिहारापातात्। अनुभूतिस्वरूपैस्तु "किमिति मानमेयभावो नेष्यत इत्याशङ्कामपनुदति—अन्यथेति। मेयत्वे घटादिवदबोधत्वप्रसङ्ग इत्यर्थः। तर्हि घटस्यापि मेयत्वे पटादिवदघटत्वप्रसङ्गान्मेयत्वं न स्यादिति चेन्न अस्य विचार्यापर्यवसायित्वात् घटं जानामीति प्रत्यक्षविरोधात्। ननु बोधं पश्यामीत्यनुभवोऽस्ति बोधः स्वातिरिक्तवेद्यः वस्तुत्वाद् घटवदित्यनुमीयत इति चेन्न स्वतः सिद्धस्य धर्मित्वे व्याघातात् असिद्धस्य धर्मित्वे चाश्रयासिद्धेः इति अतिरिक्तवेद्यत्वस्य च सिषाधयिषितत्वादतिरिक्तवेद्यत्वस्य धर्मित्वे सन्दिग्धाश्रयासिद्धिः कथं हि स्वप्रकाशविप्रतिपन्ना बोधनीय इति चेदस्ति तावद्घटं जानामीति बोधप्रकाशः स च बोधान्तरानुपलम्भात्स्वत एवेति परेणाभ्युपेयम्। यदि पराधीनत्वं शङ्कते तदा सा शङ्का तर्केण निवारणीयेत्यभिप्रेत्याह—यदीति" व्याख्यायते तत्तु चिन्त्यम्। निरस्तमेव ज्ञानस्य ज्ञायमानस्य स्वरूपसत्त्वं दूषणान्तरा

खण्डनदर्पणः।

स्वप्रकाशत्वस्याप्यभावात्। परप्रकाश्यत्वनिराकरणे स्वप्रकाशज्ञानस्य तवापि स्वीकार्यत्वात्। यदि भेदेन विषयविषयिभावो भवेत्तदा बोधस्वरूपमेव न सिद्ध्येदित्याह—अन्यथेति। एतदेव वदति—यदीति। ननु निलीनमेव ज्ञानं चक्षुरादिवत् स्वसत्तामात्रेण

खण्डनरत्नमालिका।

षयिभावस्वीकारे बोधस्वरूपमेव न सिद्ध्येदित्याह—अन्यथेति। ननु बोधस्वरूपस्य परतः सिद्धिरस्त्वत आह—यदीति। ननु चक्षुरादिवदज्ञातमेव ज्ञानं व्यवहारसाधक-

ज्ञानस्य परप्रकाशत्वे प्रकारान्तरेणानवस्थोद्भावनम् ।

नच वाच्यमवश्यवेद्यता वित्तेर्नाभ्युपेयते; स्वार्थे व्यवहारस्तु स्वरूपसत्तया प्रसूयते इति क्वाऽनवस्था–इति । यतः तस्यां प्रमाणानुपन्यासे स्वरूपसत्तापि कुतः, यया व्यवहारोपपत्तिः, को ब्रूते(१) सती सा वित्तिः ?"; असत्येव न कुतः ।

शाङ्करी ।

क्षणा ज्ञानसत्तैव स्वविषयव्यवहारायेत्याशङ्कते–नचेति । तद्गोचरं ज्ञानमनङ्गीकृत्य ज्ञानसत्तैव त्वया दुरुपपादेत्याह—यत इति । व्यवहारमात्रात्तावद्विषयज्ञानमात्रं सिद्धमेव, घटादिप्रतिनियतविषयकज्ञानजिज्ञासा तु यदि स्यात्तदा प्रतिनियतविषयकव्यवहारेण वा, प्रतिनियतविषयस्मरणादिना वा, तदप्यनुमास्यते(२) इत्याशङ्कते—सा·

खण्डनभूषामणिः ।

भिधित्सया पुनराशङ्कते—नचेत्यारभ्य क्वानवस्थेत्यन्तेन । अनवस्था हि ज्ञप्तौ वा उत्पत्तौ वा नाद्यः ज्ञप्त्यन्तरानभ्युपगमात् नोत्पत्तौ विनापि ज्ञानमुत्पत्तेर्व्यभिचारादित्याशयेनाह–क्व इति । उत्पत्तौ ज्ञप्तौ वेत्यर्थः । प्रमाणानुपन्यास इति । यद्यपि स्वयं सत्ता प्रमाणमेवापेक्षते न तदुपन्यासं तथापि तत्सत्ता कथमिति प्रश्ने तदुपन्यासस्त्वया कार्यः स चाशक्य एवेत्यत्र तात्पर्यम् । ननु मानमेययोरन्यत्वान्न मानाभावे मेयाभाव इत्याशङ्क्याह–को ब्रूत इति । मानं विना वस्तुसिद्धौ शशशृङ्गस्यापि वस्तुत्वापत्तेरित्याशयः । ननु प्रमाणासत्त्वमसिद्धं सामान्यतो विशेषतश्च तत्र तदुभय-

खण्डनदर्पणः ।

व्यवहारकारणमतो वित्त्यन्तरावश्यम्भावानभ्युपगम इत्याह-नचेति । क्वानवस्थेति न वाच्यमिति सम्बन्धः । प्रसूयते–प्रवर्त्यत इत्यर्थः । कुतो न वाच्यमित्यत आह—यत इति। वित्तिगोचरवित्त्यभावे शशशृङ्गादेरिवासत्येव वित्तिः स्यादिति भावः । मानाभावमात्रेण न ज्ञानस्य सत्ताया अभावस्तयोरन्यत्वादित्याशङ्क्याह—क इति । देवदत्तविज्ञानं यदि प्रमाणेनानुपलभ्यमानं स्यादसत्स्यात् शुक्तिरजततादात्म्यवदित्यर्थः।

खण्डनरत्नमालिका ।

मस्तु तथाच क्वानवस्थेत्याह–न चेति । क्वेति । ज्ञप्तावुत्पत्तौ वा नाद्यः ज्ञप्त्यन्तरानवश्यंभावात् नोत्पत्तौ वेद्यत्वस्य व्यभिचारादित्यर्थः । कुत इति । यदस्ति तन्मेयमिति परेषां नियमादिति भावः । ननु मानाभावमात्रेण न ज्ञानसत्ताभावस्तयोरन्यत्वादत आह–क इति । देवदत्तनिष्ठज्ञानमसत् अनुपलभ्यमानत्वात् शशशृङ्गवदितिभावः।

---

(१) कोऽनुभवो ब्रूते अनुभावयति तथा चानुभावकाभावात्सा वित्तिरसत्येव कुतो न स्यादित्यर्थः।

(२) चैत्रो घटविषयकज्ञानवान् घटविषयकव्यवहारवत्वात् घटविषयकस्मरणवत्त्वाद्वेत्यनुमानाकारः ।

ज्ञानस्य स्वरूपासत्त्वे हेतोरसिद्धिशङ्का, तन्निरासश्च ।

**सामान्यतो वित्तेस्तथात्वसिद्धावपेक्षितसिद्ध्या यत्र विशेषरूपायां प्रमाणाऽप्रवृत्तिस्तदा तत्र सत्त्वसाधनाऽसत्त्वेपि जिज्ञासायां सत्यां पश्चाद्व्यवहारसत्त्वैव वाऽन्यद्वा प्रमाणमस्त्येव ? इति चेन्न तस्यापि कथं सत्त्व-**

शाङ्करी ।

मान्यत इति । 'जानामि'–इति सामान्याकारेणाऽपेक्षितवित्तिविशेषसिद्धावपि घटज्ञानत्वादिना जिज्ञासायां वित्तिविशेषसिद्धिरिति (१)त्रा ऽर्थः । व्यवहारसामान्यसत्त्वस्य व्यवहारविशेषसत्त्वस्य च ज्ञानज्ञापकस्य सिद्धिर्ज्ञानान्तराधीना, एवं तत्सिद्धिरपीत्यनवस्थेत्याह—**तस्यापीति** । माभूद्विज्ञानपरम्परायास्तदानीमेव सिद्धिः, किमे-

खण्डनभूषामणिः ।

सत्त्वादित्याशङ्कते—**सामान्यत इति** । ज्ञानवानहमिति ज्ञानेनव वित्तेस्तथात्वस्य ज्ञानत्वस्य सिद्धौ सत्यामपेक्षितस्य व्यवहारस्य स्वरूपसता घटज्ञानेन सिद्धेर्यत्र विशेषरूपायां घटज्ञानत्वरूपायां तदा व्यवहारकाले प्रमाणस्याप्रवृत्तिस्तत्र विशेषरूपायां पश्चात् प्रमाणमस्त्येव व्यवहारसत्ता न हि विशिष्टव्यवहारो वित्तिविशेषं विनेति कार्यमेव मानं स्मरणमेव वा इत्यर्थः । ज्ञानवानस्मीति सामान्यज्ञानं विशेषमस्पृष्टं न सम्भतीति विशेषं ? विशेषाकारेण च यस्यावगतिरुभयाकारेण तत्र प्रमाणसद्भावाच्च स्वरूपासत्त्वमिति भावः । **अपरे** पुनरेव योजयन्ति "प्रमाणानुपन्यासे सत्तासिद्धिर्माभूत् तथापि सत्यां सामग्र्यां कार्यमुत्पद्यत इति द्वाभ्यामेव मन्यते अतः प्रथमाया वित्तेः सत्त्वासत्त्वाभ्यामनिर्णीतायाः सकाशादर्थनिश्चयाधीनस्य व्यवहारस्य सिद्धौ व्यवहारात् प्राक्

खण्डनदर्पणः ।

प्रमाणानुपलभ्यमानत्वमसिद्धमिति शङ्कते—**सामान्यत इति** । वित्तेः सामान्यतस्तथात्वेन ज्ञानत्वेन वित्तौ ज्ञानवानस्मीत्याकारेणावगतावपेक्षितस्य तद्वित्तिविशेषस्य सामान्यतः सिद्धौ घटज्ञानमित्यादिविशेषरूपेण प्रमाणाप्रवृत्तौ तत्सत्त्वानिर्णयेपि पश्चात्कुतश्चिन्निमित्तात् तत्सत्त्वजिज्ञासाजन्यव्यवहारस्तज्जन्यस्मरणं वा तत्र लिङ्गं मानम् , एवमुत्तरकक्षायामपीत्यर्थः । परिहरति—**नेति** । क्वचिद्विच्छेदे तदारभ्य मूलासिद्धिरिति भा-

खण्डनरत्नमालिका ।

ननु सामान्यविशेषाभ्यां प्रमाणत एवोपलब्धिरित्यसिद्धो हेतुरत आह—**सामान्यतः इति** । अहं ज्ञानवानस्मीति प्रतीत्या ज्ञानत्वसिद्धौ सामान्यतो ज्ञानसत्ता सिद्धा विशेषतः घटादिविषयकज्ञानसत्ता तु चैत्रो घटविषयकज्ञानवान् घटविषयकव्यवहारवत्त्वात्, घटविषयकस्मरणाद्वा इत्यनुमानादिति भावः । अन्यत् स्मरणादि । **तस्यापि**—ज्ञानसत्त्वसाधकस्य व्यवहारसामान्यस्य व्यवहारविशेषस्य चेत्यर्थः । ननु मास्तु विज्ञानपरम्परासिद्धिः त्रिचतुरज्ञानसिद्ध्यैव विषयसिद्धिः स्यादत आह—

(१) उत्थानिकोक्तार्थापेक्षयायं द्वितीयोऽर्थः सामान्यत इत्यादेरिति बोध्यम् ।

मित्यनवस्था वा स्यात् शेषासिद्धया सर्वाऽसिद्धिर्वाप्रसज्येतेत्यर्थासिद्धि-पर्यन्तस्य व्यसनस्य दुरुत्तरत्वात् "सेयमप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिद्ध्यति"इति ।

शाङ्करी ।

तावता, त्रिचतुरज्ञानसिद्ध्यैव तद्विषयसिद्धेरित्यत आह— शेषेति । यद्यपि सर्वाऽसिद्धिप्रसञ्जनमनुपपन्नं, यत्पक्षीकृत्याऽसिद्धिरापाद्या तत्सिद्धौ बाधः, तदसिद्धावाश्रयासिद्धिः, शेषासिद्धेश्चापादकत्वेनाभिमताया असिद्धिः, शेषस्य चरमज्ञानस्यासिद्धौ तत्पूर्वज्ञानस्यासिद्धिः'-इति विशिष्टापादने त्वद्वचनादेव तयोस्तदैव सिद्धौ(१) सुतरामापाद्यापादकयोरसिद्धिः, तथाप्यनवस्थायामेव हृदयम् । सेयमिति । यस्य मते उपलम्भो न प्रत्यक्षः न स्वसंवेद्यः, तन्मते(२) नाऽर्थदृष्टिः ज्ञानमात्रमेव न सिद्ध्यति-इति धर्मकीर्तिनाप्युक्तमित्यर्थः । यद्यपि प्राकट्यानुमेयज्ञानं भट्टं प्रति नैयायिकानामयमुपालम्भः, तथापि स्वप्रकाशानभ्युपगमेऽप्युक्तदोषबलेनोपालम्भः सम एवेति भावः ।

खण्डनभूषामणिः ।

सत्त्वसिद्धिरिष्यत इति शेषः। सामान्यत इत्यस्य च सत्त्वासत्त्वसाधारणाया इत्यर्थः । कुतस्तर्हि सत्त्वसिद्धिरित्याशङ्क्याह—यत्रेति । यत्र विशेषरूपायां प्रथमक्षणे प्रमाणप्रवृत्तिर्नासीत्तदा तत्क्षणे सत्त्वसाधनासत्त्वेपि यदा जिज्ञासा जायते तदा प्रमाणमुपन्यस्यत इत्यर्थः । यद्यपि ज्ञानाज्ञानाभ्यां ज्ञाने जिज्ञासाऽसम्भवस्तथापि विशिष्टं सत्त्वसाधकमस्ति नवेति जिज्ञासास्तीत्यवोच इति तच्चिन्त्यम् । तस्यापि—उपन्यस्तप्रमाणस्यापीत्यर्थः । अयं दोषः धर्मकीर्तिना बौद्धविशेषेण य उक्तः स एव मयोच्यते न त्वस्माकमुत्प्रेक्षामात्रं स्वतोऽपरोक्ष उपलम्भो येन वादिना नोच्यते तस्य 'मया विदितोयं घट' इति व्यवहारो नोपपद्यत इति भावः । अत्राप्रत्यक्षपदमतीन्द्रियपरं तथाच प्राकट्यानुमेयज्ञानवादिनं भट्टं प्रत्येव नैयायिकादीनामयमुपालम्भ इत्यापाततः कारिकायामप्रत्यक्षपदस्वरसात् प्रतिभाति तथापि स्वसम्वेद्यत्वनिराकरणग्रन्थोयं नैयायिकमतेपि तेन दोष उक्त इति ध्येयम् । अन्यथा नैयायिकमतमपि पृथग्दूष्येत तच्च न कृतमिति भावः। अनवस्थां

खण्डनदर्पणः ।

वः । ननु सर्वासिद्धप्रसञ्जनमसङ्गतं यत्पक्षीकृत्यासिद्धिरापाद्यते तत्सिद्धौ बाधस्तदसिद्धावाश्रयासिद्धिः शेषासिद्धेश्चापादकत्वेनाभिमताश्रयासिद्धिरिति चेत्—नेदं ज्ञानत्वादिरूपेण ज्ञानज्ञानं यदि प्रमाणज्ञानविषययोः स्यान्न स्यात्सदसद्वैशिष्ट्यवदित्यर्थाद् । सोयमर्थो धर्मकीर्तिनाप्युक्त इत्याह अप्रत्यक्षेति । स्वतोऽपरोक्षोपलम्भो नेष्यते

खण्डनरत्नमालिका ।

शेषेति । सोऽयमर्थो धर्मकीर्तिसम्मतोऽपीत्याह—अप्रत्यक्ष इति । यस्य उपलम्भो ज्ञानं न प्रत्यक्षं किन्तु परोक्षं तस्य अर्थदृष्टिः घटो मया विदित इति व्यवहारो न सि-

---

(१) तयोः—पूर्वज्ञानचरमज्ञानयोः, तदैव—त्वद्वचनावसर एव, सिद्धौ सुतराम् आपाद्यापादकयोः तदभावयोरसिद्धिरित्यर्थः । (२) 'तन्मतेन अर्थदृष्टिः ज्ञानमात्रमेव' इति वा पदविभागः कर्तव्यः ।

उक्तयोरनवस्थासर्वासिद्धयोरुपपादनम्—

**घटसत्तां हि व्यवहरता प्रामाणिकेन तत्र प्रमाणसद्भावो वाच्यः। यदि प्रमाणमनुपन्यस्य सास्तीत्येवमङ्गीक्रियते तदा वैपरीत्यमेव किं न स्यात्। ततश्च घटसत्तायां प्रमाणसत्ता दर्शनीया, तथा च प्रमाणसत्तापि तत्प्रमाणसत्तामन्तरेण प्रामाणिकस्य नाङ्गीकारार्हा, सर्वप्रमाणसत्तानि-**

शाङ्करी।

अनवस्थां सर्वासिद्धिं वाऽऽपादितां प्रपञ्चयति—**घटसत्तामिति**। यद्यपि प्रमाणोपन्यासो न सत्ताङ्गीकारबीजं किंतु प्रमाणं, तथापि तत्र विप्रतिपन्नं प्रतीदानीमेव(१) तत्प्रमापणीयमिति भावः। **सर्वप्रमाणेति**। यद्यपि कदाचित्सर्वप्रमाणनिवृत्त्या न प्रमेयनिवृत्तिः, तथापि सार्वदिकसर्वप्रमाणनिवृत्त्यभिप्रायमेतत्। यद्यपि सर्वप्रमाणनिवृ-

खण्डनभूषामणिः।

सर्वासिद्धिं चापादितां प्रपञ्चयति-**घटसत्तां हीत्यादिना वृथाप्रमाणोपन्यासायास इत्यन्तेन**। **प्रामाणिकेनेति**। प्रमाणमनुपन्यस्य घटः सन्निति वत् प्रमाणे प्रमाणोपन्यासाभावस्तवोचित इत्यर्थः। **सर्वप्रमाणनिवृत्तेरिति**। यद्यपि कदा-

खण्डनदर्पणः।

येन वादिना तस्य मतेऽर्थज्ञानमेव न सिद्ध्येत्तथा च घटो मया विदित इति व्यवहारो न सिद्ध्यतीत्यभिप्रायः। अनवस्थां सर्वासिद्धिञ्चापादितां प्रपञ्चयति **घटसत्तामिति**। यद्वा प्रमाणसत्ता प्रमाणान्तरमूलेत्यनुमातुमन्वयव्याप्तिमाह-**घट इति**। उक्तमेव व्यतिरेकमुखेनोपपादयति—**यदीति** प्रमाणोपन्यासः सत्तास्वीकारबीजं यद्यपि न भवति किन्तु प्रमाणं तथापि तत्र विप्रतिपन्नं प्रतीदानीमेव तत् प्रमापणीयमिति भावः। प्रमाणसत्त्वं प्रमाणान्तराधीनं सत्त्वशब्दवाच्यत्वात् घटसत्तादिवदिति प्रयोगमाह—**तथाचेति**। अप्रयोजकत्वमाशङ्क्याह-**सर्वेति**। कदाचिद्यत्र प्रमाणं किमपि न तदसदेवेति भावः। यद्यपि सर्वप्रमाणनिवृत्तिरशक्यनिश्चया तथाप्यनवस्थाभयात् यदि न तत्र प्रमाणं किमपि तदभिप्रायेणेदं व्यक्तमिति। ननु पूर्वपूर्वमुत्तरोत्तरवित्त्या ग्राह्यमतोऽ

खण्डनरत्नमालिका।

द्धयतीत्यर्थः। आपादितामनवस्थां प्रपञ्चयति **घटसत्तामित्यादिना व्यक्तमनवस्था दौस्थ्यमित्यन्तेन**। **वाच्य इति**। प्रमाणसत्ता प्रमाणान्तरमूलेत्यनुमातुं सत्त्वाभ्युपगमप्रमाणमूलत्वयोरन्यन्वयव्याप्तिरनेन दर्शिता। व्यतिरेकव्याप्तिमाह-**यदीति**। **सा**—सत्ता। **वैपरीत्यमेव**-घटासत्त्वमेव। ततश्च सत्त्वाभ्युपगमः प्रमाणमूलत्वव्याप्य इति व्याप्तिरव्याहतेत्याह-**ततश्चेति**। प्रमाणसत्त्वं प्रमाणान्तराधीनं सत्त्वशब्दवाच्यत्वात् घटसत्त्ववदिति प्रयोगमाह-**तथा चेति**। विपक्षे बाधकमाह-**सर्वप्रमाणेति**। यत्र केनापि प्रमाणेनोपलभ्यते तदसदि-

(१) इदानीं-विप्रतिपत्तिसमकालमेव, तत-प्रमाणम्।

**वृत्तेर्वस्तुसत्तानिवृत्तिनियतत्वात् अन्यथा सप्तमरसादेरप्यापत्तेः—इति व्यक्तमनवस्थादौस्थ्यमस्वप्रकाशवादिनः स्यात्। यदि हि विनैव प्रमाणसत्तां प्रमाणसत्तां परोऽङ्गीकारयेत्तदा घटसत्तामपि तथैवाङ्गीकारयतामिति घटेपि वृथा प्रमाणोपन्यासायासः।**

खण्डनभावदीपिका।

......इत्युक्तमर्थं विपक्षबाधकतर्कप्रदर्शनेनोपपादयति—यदि हीति। [अनवस्थया प्रमाणसत्तोप] न्यासेन प्रदर्शितं विषयान्तरसंचारोच्छेदमुक्त्यभावप्रसङ्गलक्षणं दोषं परिहरन्ना-

शाङ्करी।

त्तिदुर्ग्रहा, तथापि प्रमाणान्तरं त्वयैवोपपादनीयमिति भावः। अन्यथेति। यदि प्रमाणनिवृत्तौ न प्रमेयनिवृत्तिरित्यर्थः। यद्यपि स्वप्रकाशत्वेपि प्रमाणापेक्षायामनस्थैव स्वप्रकाशत्वस्यास्वप्रकाशत्वात् स्वप्रकाशत्वस्य प्रमाणान्तरेण त्वयैवेदानीमुपपादनीयत्वात् एवं तदुपपादकस्यापि प्रमाणस्य वाच्यम्, अनुपपादने च कथं तत्स्वप्रकाशं वैपरीत्यमेव कथं न स्यात्—इत्याद्यवकाशः, तथापि वैतण्डिकोहमिति हृदयम्। ननु घटस्तावत्प्रमाणसिद्धस्तत्प्रमाणेपि प्रमाणाभिधानमकिञ्चित्करमित्यत आह—यदीति। ननु वित्तीनां धारावहनवत् प्रवाहं नाभ्युपैमि येन विषयान्तरसञ्चारो न स्यात्,

खण्डनभूषामणिः।

चित् सर्वप्रमाणनिवृत्तावपि न प्रमेयनिवृत्तिस्तथापि अनवस्थाभयेन सर्वदा सर्वप्रमाणनिवृत्तिरशक्येति भावः। यत् प्रमाणेन केनापि नोपलभ्यते तदसद्यथा शशविषाणमिति भावः। ननु ब्रह्मणि व्यभिचार इत्याशङ्क्याह—अन्यथेति। असन्दिग्धानधिगताविपरीता च मतिः प्रमा सा च वेदान्तवेद्ये ब्रह्मण्यस्त्येवेति न व्यभिचार इति भाव इति विद्यासागरः। ननु प्रमाणसत्तां विनापि कथारम्भवत् प्रमाणसत्तां विनापि प्रमाणसत्तास्त्वित्याशङ्क्याह—यदि हीति। अव्यवधानलग्ना धारा धारावा-

खण्डनदर्पणः।

नादित्वान्नानवस्था दोषायेति चेन्न—तत्तद्विषयकवित्तिधारयाऽनुपलम्भबाधितत्वात् सामान्यत उपलब्धावपि न विशेषोपलब्धिसत्त्वसमाधिः। तथा चानुपदमेव वक्ष्यति स्यादप्येवमिति। उक्तमेव विपक्षबाधकेनोपपादयति—यदि हीति। ननु धारावाहिकप्रत्ययन्यायेन वित्तितद्वित्तिधाराऽविच्छिन्ना यद्यभ्युपगम्येत तर्हि स्यादनवस्था किन्तु

खण्डनरत्नमालिका।

ति भावः। अन्यथा—सर्वप्रमाणनिवृत्तावपि सत्ताङ्गीकारे। ननु घटः प्रमाणसिद्धः इति तत्प्रमाणे प्रमाणोपन्यासोऽकिंचित्कर इत्यत आह—यदीति। ननु वित्तीनां धारावहनवत्प्रवाहं नाङ्गीकरोमि येनानवस्था विषयान्तरसंचारोच्छेदश्च स्यात्किंतु कदाचित्काचिद्वित्तिः तस्यां जिज्ञासायां प्रमीयते सा च सर्ववित्तिविषयिणी इति नानवस्थे-

एकयैव वित्त्या वित्तिशतविषयिण्या सर्ववित्तीनां प्रामाण्यसिद्ध्याऽनवस्थापरिहाराशङ्कनम्

अथ नाव्यवधानलग्नवित्तितद्वित्तिधाराऽभ्युपगम्यते, किंनाम कदाचित्कुतश्चित्काचिद्वित्तिः प्रमीयते, इति सर्वा वित्तिः प्रमाणसिद्धैवेत्यभ्युपेयते—इति चेत्—

ताद्दशवित्तेरस्मदादीनामनुपलब्ध्याऽनवस्थास्थापनम्—

न, स्यादप्येवं यदि घटः—इति, घटं जानामि—इत्यतोऽधिका घटवित्तितद्वित्तिधारया विषयभावेन प्रविष्टया तादृग्विषयशतभारमन्थरा वित्तिरस्मदादेरुत्पद्यमानाऽनुभूयेत।

खण्डनभावदीपिका।

शङ्कते अथेति। धारावहनन्यायेन च वित्तीनामनङ्गीकाराद्यदा कदाचिज्जिज्ञासायां प्रमीयत वित्तिरित्याङ्गीकारेण न विषयान्तरसंचारोच्छेदो न च मुक्त्यभावप्रसङ्ग इत्यर्थः। योग्यानुपलब्धिबाधितमेव तदिति परिहरति। स्यादपीति। व्यवहारानङ्गीकारेऽपि घटज्ञानपरंपरालम्बनं ज्ञानं किमपि कदापि न संभवति तथानुपलब्धेरित्यर्थः। घट इति घटं जानामीति सर्वलोकप्रसिद्धवित्तिद्वयादधिका यदि वित्तिरनुभूयेतेत्यन्वयः। तामेव विशिनष्टि—तादृग्विषयशतभारमन्थरेति। मन्थरत्वे हेतुमाह—घटवित्तितद्वित्तिधारया विषयभावेन प्रविष्टयेति। विषयभावेन वित्तिमनुप्रविष्टया गर्भेण गर्भिणीव मन्थरा-अलसेति शाङ्करी।

अपि तु सर्ववित्तीनां वेदनमात्रमङ्गीकुर्मः इत्याह—अथेति। कालान्तरेष्वनुसन्धीयमाना या वित्तिपरम्परा सा स्वस्वविषयमन्तर्भाव्यैवानुसन्धीयेत न चैतादृशंज्ञानमुत्पद्यमानमनुभूयते इत्याह—स्यादिति। विषयशतेति। यद्यपि शतमपि वित्तयो

खण्डनभूषामणिः।

हिकवित्तिवद्विच्छेदरहिता वित्तितद्वित्त्योर्धारा च सा अव्यवधानलग्ना चेति विग्रहः। सर्वा वित्तिरिति। यद्यपि कस्याश्चिद्वित्तेर्वेदनं न सर्वासां वित्तीनां भेदात्तथापि सामान्यलक्षणया प्रत्यासत्त्या नैयायिकानां जातिव्यक्त्योरभेदेन च भट्टानां तद्वित्तिप्रमायां सर्वापि भासत-इत्यभिमानः। तादृशानां विच्छिद्यजायमानानां विषयभूतानां वित्तीनां शतेनैव भारेण गौरवेण मन्थरा अलसगामिनी। ननु तद्विषयत्वेपि कथं भार इत्यत आह-घटवित्तितद्वित्तिधारयेति। घटवित्तीनां च या वित्तय उत्तरोत्तरं वर्द्धमाना

खण्डनदर्पणः।

तज्जिज्ञासायां तच्च कदाचित्प्रमीयत इति स्वीकारान्नानवस्थेति शङ्कते-अथेति। कथं तर्हि वित्तीनां सत्त्वसिद्धिरित्यत आह-कदाचिदिति। स्यादप्येवमिति। ज्ञानग्रह

खण्डनरत्नमालिका।

स्याशङ्कते-अथेति। वित्तितद्वित्त्योर्धारा वित्तितद्वित्तिधारा अव्यवधानलग्ना चासौ वित्तितद्वितिधारा चेति विग्रहः। कथंतर्हि वित्तीनां सत्त्वसिद्धिरित्यत आह-कदाचिदिति। जिज्ञासायां सत्यां व्यवहारदर्शनादिना काचिद्वित्तिः प्रमीयते सा च सर्ववित्तिविषयिणीति सर्वा वित्तिः प्रमाणसिद्धेत्यर्थः। सा च वित्तिरनुपलम्भबाधितेति परिहरति-स्यादप्येवमिति। घट इति घटमहंजानामि इति च ज्ञानमस्मदादीनां

खण्डनभावदीपिका ।

यावत्। अयोगिदशायामननुभवेऽपि योगिदशायामस्मदादेरनुभवो भविष्यतीत्यत आह—

शाङ्करी ।

वित्तित्वेन घटश्च विषयो घटत्वेन भासते इति घटं जानामि घटज्ञानवानस्मि—इत्यनेनवाकारेण क्रमेणापि वित्तिशतवेदनं सम्भाव्यते इति न विषयशतभारमन्थरत्वम् नहि तावतीषु वित्तिषु प्रकारवैचित्र्यमस्ति येन तदुल्लेखध्रौव्येणानुभवविरोधः स्यात् तथापि कालान्तरीयस्य घटज्ञानवानहमिति ज्ञानस्य कालान्तरीयचरमवित्तिरपि विषय इत्यत्र न प्रमाणमिति हृदयम् । ननु योगिदशायां पूर्वपूर्वस्यक्ताः सर्वा वित्तीरेक-

खण्डनभूषामणिः ।

स्तद्द्वारया विषयभावेन गर्भभावेनेवानुप्रविष्टयेति । **अयमाशयः** । उत्तरोत्तरं ज्ञानं सविषयमेव पूर्वं पूर्वं विषयीकरोतीति तृतीयज्ञानादौ घटस्तज्ज्ञानं पुनश्चतुर्थे घटघटज्ञानज्ञानानि एवं पञ्चमादौ चतुर्थपञ्चमादिकमादायेति । नचैवं तथैवास्त्विति वाच्यं यतो घटइति घटं जानामीत्येवमाकारेणैव ज्ञानशतवेदनं सम्भवति शतस्यैव घटज्ञानत्वाविशेषादित्ययास्तं तथापि घटज्ञानज्ञानं घटज्ञानभाने भासत इत्यत्र प्रमाणाभावः । सति घटज्ञानविषयके ज्ञानत्वे सामान्यलक्षणया तद्भानं शक्यं वक्तुं तच्च तद्विषयकस्य ज्ञानत्वं यदि विशेषेण प्रमाणान्तरेण साध्यते तदैव निर्वहतीत्येवमेव तद्वदत्रापीति स्यादेवानवस्था स च "एवं त्रिचतुरज्ञानजन्मनो नाधिका मतिरि"ति भट्टैर्निराकृता नैयायिकैरपि स्वीकार्या अन्यथा घटार्थिप्रवृत्तिजनकमपि ज्ञानं पञ्चमादौ प्रमाणाभावेनास्मद्विधैर्व्यवस्थापयितुमशक्यं निष्प्रामाणिकसत्ताभावात् अस्मदनुव्यवसायो भगवज्ज्ञानविषयतयव प्रामाणिक इति चेन्न असत्यामस्य प्रमाणान्तरेण सत्त्वव्यवस्थायां तज्ज्ञानविषयत्व एव प्रमाणाभावात् शक्यते ह्येवमपि वक्तुं नेदं तज्ज्ञानविषयोऽप्रामाणिकत्वात् तज्ज्ञानविषयत्वेन प्रामाणिकत्वं प्रामाणिकत्वाधीनं च तज्ज्ञानविषयत्वमिति परस्पराश्रयः ( यद्यपि वित्तयो वित्तित्वेन ज्ञातुं शक्यन्ते ) तावतीषु वित्तिषु प्रकारवैचित्र्यं नास्ति येन तदुल्लेखध्रौव्येणानुभवविरोधः स्यादित्यपि दूषणोद्धारः सम्भवति तज्ज्ञानज्ञानपरम्परायास्तत्तत्प्रकारकत्वाभावे पूर्वज्ञानस्य प्रमाणत्वस्य त्वया साध-

खण्डनदर्पणः ।

एव विषयग्रहनियमात् घटज्ञानज्ञानविषयकं ज्ञानं योग्यानुपलब्धिनिरस्तमित्यर्थः । ननु घटत्वेन घटस्य विषयता ज्ञानत्वेन सर्ववित्तिस्फुरणमिति नाप्रामाणिकतेति चेन्न—सामान्यलक्षणायाः खण्डनीयत्वात् । किञ्च—घटत्वप्रकारकघटविषयकज्ञानज्ञानादीनां घटत्वप्रकारकत्वादिघटविषयविषयित्वादिना ज्ञानाभावे तत्तद्वित्तीनामसिद्धौ मूलासिद्धेरिति भाव्यम् । ननु चायोगिदशायामननुभवेऽपि योगिदशायां सर्वस्य सर्ववित्य-

खण्डनरत्नमालिका ।

जायते न ततोऽधिकम् एवं च घटवित्तितद्वित्तितद्वित्तीत्येवं स्वस्वविषयमन्तर्भाव्य न काचिद्वित्तिरस्मदादेरुत्पद्यमानाऽनुभूयते यदि स्यात्तर्हि सर्वा वित्तिः प्रमाणसिद्धा स्यादिति

तादृग्वित्तिशतावगाहिनी वित्तिर्न योगिनामपि प्रत्यक्षा—

**यद्यस्मदादिविलक्षणजन्मनि सा सम्भाव्यते तदापि यस्या वित्तेस्तावद्वि-षयगर्भिता धीर्विषयः साप्यन्यथा कयाचिदुल्लेख्येत्यत्र प्रमाणाभावश्च—अनि-**

खण्डनभावदीपिका ।

**यद्यस्मदादीति ।** तावद्विषयगर्भिता—घटतज्ज्ञानपरम्परागर्भिता, अन्यथा कया-चित्—योगिदशायामेवोत्पन्नया । प्रमाणसद्भावाभ्युपगमेऽपि दोषमाह—अनिर्मोक्षेति। पूर्वोक्तन्यायेन तज्ज्ञानपरम्पराविच्छेदानभ्युपगमे सर्वविशेषगुणोच्छेदलक्षणो मोक्ष एव न स्यात् । क्वचिद्विच्छेदे चार्थपर्यन्तसंशयापत्तिश्च स्यादित्यर्थः । न च चरमविज्ञानेन

शाङ्करी ।

वारेण प्रतिसन्धास्यतीति सर्वासां प्रामाणिकत्वमित्यत आह—**यद्यस्मदादीति ।** योगिधियां स्वातिरिक्तसकलग्रहसामर्थ्येपि स्वग्रहे सामर्थ्याभावान्नैतदपीत्यर्थः । **अनिर्मोक्षेति ।** योगिनामुक्तक्रमेण ज्ञानपराम्पराऽनुच्छेदे सकलविशेषगुणोच्छेदो

खण्डनभूषामणिः ।

यितुमशक्यत्वात् । **यदीति ।** अस्मदादिभ्यः पृथग्जनेभ्यो विलक्षणं विशिष्टं जन्म यस्य तस्मिन् योगिनीत्यर्थ इति **विद्यासागरः ।** अस्मदादीनामेव विशिष्टजन्मनि योगिद-शायामित्येवार्थः ।इयमाशङ्का न भट्टानां तैः'य एव स्यादसर्वज्ञः स सर्वज्ञं न बुद्ध्यत' इत्येवं योगिनिराकरणात् किन्तु नैयायिकानामेव । यद्यपि चास्माभिरपि सर्वज्ञा निराकरिष्यते अग्रे तथापि प्रत्यक्षं नातीन्द्रियविषयकं प्रत्यक्षत्त्वात् सम्मतदित्यधुनैव तदभावः शक्यसाधनस्तथाप्यभ्युपेत्य तद् दूषयति—**तथापीति ।** **प्रमाणाभाव इति ।** तथा च तदसिद्धावर्थपर्यन्तमसिद्ध्यापत्तेः तथापि योगिन एव वित्त्यन्तरमस्तीति चेत्, न तदस्तित्वे प्रमाणमस्ति तत्सद्भावेपि तत्सिद्ध्यर्थं तद्विषयसंवित्रन्तरापेक्षायामनवस्था तदभ्यु-पगमे चानिर्मोक्षस्तस्य अशेषविशेषणगुणोच्छेद एव वा मोक्ष इत्यर्थः । अथ योगिनो वित्तिप्रवाहगोचरा वित्तिरात्मानमपि प्रवाहान्तर्भूतां गोचरयन्त्युत्तरकालं निवर्तत इति

खडनदर्पणः ।

नुभवः स्यादत आह—**यद्यस्मदादीति ।** योगिधियां स्वातिरिक्तसकल-ग्रहसामर्थ्येपि स्वग्रहे सामर्थ्याभावान्नैतदपीत्यर्थः । अनिर्मोक्षः—योगिनामुक्तक्रमेण ज्ञानपरम्परानुच्छेदे सकलविशेषगुणोछेदो मोक्षो न स्यादित्यर्थः । ननु योगिनां चरमा-

खण्डनरत्नमालिका ।

भावः।सामान्यलक्षणया तु न वित्तिशतसंवेदनं सामान्यलक्षणायां मानाभावादिति हृद-यम् । ननु योगिनां वित्तिः सर्ववित्तिग्राहिका भविष्यतीत्याशङ्कते **यदीति ।** अस्मदा-दिभ्यः पृथज्जनेभ्यो विलक्षणं जन्म यस्य तस्मिन् योगिनीत्यर्थः । परिहरति—**तदेति ।** उत्तरोत्तरं ज्ञानं पूर्वपूर्वं सविषयमेव विषयीकरोति तथा चामुक्तेः प्रवाहाविच्छेदाद् आ-त्मसर्वविशेषगुणोच्छेदरूपायाः मुक्तेरसंभवः क्वचिद्विच्छेदे प्रमाणाभावः इत्यर्थः । ननु काचिद्वित्तिः स्वमन्तर्भाव्य स्वप्रवाहं ग्रहीष्यतीति तद्विच्छेदेऽपि न प्रमाणाभाव इत्यत

मौत्तापत्तिश्च । न हि स्वमन्तर्भाव्य कयाचिद्धिया स प्रवाहो ग्राह्यः । तथा सति स्वप्रकाशतासिद्धेः ।

खण्डनभावदीपिका ।

स्वात्मना सहैव विज्ञानपरम्पराधिगमात् नोभयविधदोषप्रसक्तिरित्याशङ्क्याह—न-हीति । ननु योगिनो ज्ञानपरम्पराग्राहकं ज्ञानमनागतमेव स्वग्राहकचरमविज्ञानेन

शाङ्करी ।

मोक्षो न स्यादित्यर्थः । ननु योगिनश्चरमा वित्तिः स्वात्मानमपि विषयीकृत्य निवर्त्तते इति नानिर्मोक्ष इत्यत आह—नहीति । यद्यपि(१) योगजधर्माऽजन्य-जन्य-स्वविषयकसविकल्पकाऽजन्य-सामान्यलक्षणप्रत्यासत्त्यजन्यज्ञानस्यैव स्वप्रकाशत्वं नाभ्युपैमीति न स्वप्रकाशत्वापत्तिः, तथापि परिभाषामात्रमेतदिति हृदयम् । ननु योगिज्ञानपरम्परायामन्त्योपान्त्यज्ञानयोरन्योन्यविषयतायां न स्वप्रकाशता न वाऽन-

खण्डनभूषामणिः ।

नानवस्था चरमज्ञानस्वीकारान्न वाऽनिर्मोक्षोपीत्याशङ्क्य दूषयति—नहि स्वमिति । सामान्यविवक्षया नपुंसकत्वम् । तथा सति स्वप्रकाशतासिद्धेरिति । सर्वस्यापि ज्ञानस्याविशेषज्ञानस्य स्वग्रहेऽसामर्थ्यं त्वयव निवारितं ततश्चानन्तधीधारामपेक्ष्यप्रथमज्ञानस्यैव स्वप्रकाशत्वमस्तु । न च योग्यादिज्ञानस्यैव तथा सामर्थ्यं लाघवाज्ज्ञानत्वावच्छेदेनैव तत्कल्पनौचित्यात् । न च प्रत्यक्षस्य विषयजन्यतया तत्पूर्वं विषयीभूतज्ञानापेक्षायां

खण्डनदर्पणः ।

वित्तिः स्वात्मानं विषयीकृत्य निवर्तत इति नानिर्मोक्ष इत्यत आह—नहीति । ननु योगिज्ञानसामान्यलक्षणजन्येश्वरज्ञानानां स्वप्रकाशत्वेपि नास्मदादिज्ञाने स्वप्रकाशत्वमिति न किञ्चिद्दूषणमिति चेन्न—तत्र स्वप्रकाशत्वसिद्धौ किमपराद्धमस्मदादिज्ञानस्य स्वप्रकाशत्वेन । वस्तुतस्तु—वेदान्तिमते ऽनुभवस्यौपाधिकभेदमन्तरेण स्वभावतो भेदाननुभवाद्भेदाभावात् एकत्वे स्वप्रकाशत्वसिद्धिरिति दिक् । ननु योगिज्ञानपरम्परयाऽन्योन्यविषयतायां न स्वप्रकाशता न वानवस्था न वा कस्यापि वित्तेर-

(१) अस्यां फक्किकायां योगजधर्माऽजन्यत्वादिविशेषणचतुष्टयेन क्रमशः योगिज्ञानेश्वरज्ञानानुमितिज्ञानसामान्यलक्षणप्रत्यासत्तिजज्ञानानि स्वप्रकाशत्वेनाऽभिमतानि व्यावर्त्यानि । तथाहि—ज्ञानमात्रस्यैव स्वप्रकाशत्वाऽभावोक्तौ योगिज्ञानस्यापि स्वप्रकाशत्वं न स्यादिति तद्व्यावृत्त्यर्थं योगजधर्माजन्येत्युक्तम्, एवमपि योगजधर्माजन्यस्य भगवतो नित्यज्ञानस्यापि स्वप्रकाशत्वं न भवेदिति तद्व्युदासाय जन्येति, तावतापि योगजधर्माजन्यत्वे सति जन्याया ( यत्र यत्र द्रव्यकर्मभिन्नत्वे सति सामान्यवत्वं तत्र तत्र गुणत्वम्—इत्यादिरूपस्वविषयकसविकल्पकव्याप्त्यादिजन्यायाः ) 'ज्ञानं गुणः द्रव्यकर्मभिन्नत्वे सति सामान्यवत्वात्'—इत्यादिरूपानुमितेरपि स्वप्रकाशत्वं न सिद्ध्येदिति स्वविषयकसविकल्पकाजन्येत्युक्तम्, तथापि निरुक्तविशेषणत्रयविशिष्टस्य वित्तित्वलक्षणसामान्यलक्षणप्रत्यासत्तिजन्यज्ञानस्याशेषवित्तिगोचरत्वेन स्वगोचरतामपि गतस्य परप्रकाशत्ववारणाय ज्ञानं सामान्यलक्षणप्रत्यासत्त्यजन्यविशेषणेन विशेषितम् । क्वचित्पुस्तके एकं जन्यपदमत्राधिकमप्युपलभ्यते, तदबुद्धिपूर्वकत्वाद्धेयं विज्ञैः ।

अन्योन्यविषयतयाऽनवस्थापरिहारमाशङ्क्य परिहरणम् ।

**अत एव चाऽन्योन्यविषयता निरस्ता, सविषयकाऽन्योन्यग्रहे स्वग्रहापत्तेः ।**

---

खण्डनभावदीपिका ।

ग्रहीष्यते स्वयं च तेन इति अस्वप्रकाशतायामपि नानवस्थेत्याशङ्क्याह·अत एवेति । चरमविज्ञानं हि पूर्वविज्ञानं गृह्णन् स्वात्मानमपि तद्विषयानुप्रविष्टं गृह्णीयात् । एवं पूर्वविज्ञानं चरमविज्ञानं गृह्णन् स्वात्मना विषयेण सह तं गृह्णीयात्

शाङ्करी ।

वस्था, न वा कस्या अपि वित्तेरसंवेदनमित्यत आह—अत एवेति । अन्त्यज्ञानं स्वविषयमुपान्त्यज्ञानं विषयीकुर्वदात्मानमपि विषयीकुर्य्यादेवमुपान्त्यमन्त्यं विषयीकुर्वत् स्वात्मानमपि विषयीकुर्यादिति स्वप्रकाशतापत्तिरेवेत्यर्थः । यद्यपि ज्ञानग्रहे विषयग्रहध्रौव्यम् न तु यावद्विषयग्रहनियमः; तथा च स्वेतरविषयकज्ञानग्रहे कथं स्वप्रकाशत्वं

खण्डनभूषामणिः ।

स्वप्रकाशतानुपपत्तिरिति वाच्यं द्वितीयक्षणे तत्सम्भवात् । न च तर्हि विषयजन्यत्वेन तज्ज्ञानान्तरमेव स्यादिति वाच्यं तस्य ज्ञानान्तरत्वकल्पनायां धर्मधर्मिकल्पनापत्तेः व्यवसायस्य स्वविषयत्वकल्पनायामेव लाघवात् । न च पूर्वक्षणजातस्य द्वितीयक्षणे विषयजन्यतानुपपत्तिरिति वाच्यं जातस्यैवास्तु जन्मकल्पना तावदुचिता किं च न च प्रत्यक्षस्य विषयजन्यता नैयायिकैः शक्यस्वीकारा ईश्वरज्ञाने व्यभिचारात नापि जन्य· प्रत्यक्षस्य भूतभाविप्रत्यक्षे भ्रमे च व्यभिचारात् यत्किञ्चिद्विषयस्तत्राप्यस्तीति चेत्तर्हि ज्ञानत्वस्येहापि सत्त्वान्न विरोधः किं च घटप्रत्यक्षादौ घटादिकमन्वयव्यतिरेकाभ्यामिन्द्रियसन्निकर्षघटकतया अपेक्षितं सत्यपि घटे तदिन्द्रियसन्निकर्षविरहदशायां तदभावात् न च ज्ञाने सति तत्सन्निकर्षविरहात्तत्प्रत्यक्षविरहोस्तीति न किञ्चिदेतदिति दिक् । सविषयेति । न हि ज्ञानमात्रस्य ज्ञानान्तरविषयत्वं सम्भवति तद्विशेषणस्य

खण्डनदर्पणः ।

सम्वेदनमित्यत आह अत एवेति । प्रथमज्ञानं चरमज्ञानं सविषयं विषयीकुर्वत् विशेषणतया स्वात्मानमपि विषयीकुर्यान्निर्विषयज्ञानस्य प्रत्यक्षविषयत्वायोगादित्यंशतः स्वप्रकाशतापत्तिरेवमुत्तरज्ञानस्यापीत्यर्थः । ननु ज्ञानग्रहे विषयो गृहीत इति नियमो

खण्डनरत्नमालिका ।

आह—न हीति । स्वात्मानमपि चेत्प्रकाशयति तर्हि स्वप्रकाशत्वापत्त्या अस्वप्रकाशतावादिनस्तवानिष्टप्रसङ्ग । इत्यर्थः । ननु योगिनः प्रथमं ज्ञानं स्वविषयकं द्वितीयं तच्च प्रथमं गृह्णातीति न स्वप्रकाशत्वानवस्थे अत आह—अत एवेति । सविषयेति । प्रथमज्ञानं चरमज्ञानं सविषयमेव विषयीकरोतीति विशेषणतया स्वमपि विषयीकुर्यात् निर्विषयज्ञानविषयत्वायोगादित्यंशतः स्वप्रकाशतापत्तिरेवमुत्तरज्ञानस्यापीत्यर्थः ।

खण्डनभावदीपिका ।

इत्यंशतः स्वग्रहापत्तिरित्यर्थः । ननु सविषयकग्रहणेऽपि यावत्सविषयकज्ञानग्रहणस्यैव प्रदर्शनीयतया प्रस्तुतग्रहणाऽनियमाभावान्न स्वग्रहापत्तिरितिचेत्—मैवं ज्ञानधाराग्राहकज्ञानग्रहणस्यैव प्रदर्शनीयतया प्रस्तुतत्वात् यावद्धियं तज्ज्ञानग्रहणस्यैवावश्यं वक्तव्यत्वादुक्तदोषानतिवृत्तिरिति च द्रष्टव्यम्। ननु पुरुषान्तरबुद्धेर्ज्ञानपरम्परा-

शाङ्करी ।

भवेत् तथापि संयुक्तसमवेतविशेषणतया प्रत्यासत्त्या स्वेतरग्रहवत् स्वग्रहोपि स्यादेवेति भावः। (१) यद्वाऽन्योन्यमात्रविषयकज्ञानस्थले दोषोयम्। यद्वा अन्त्योपान्त्यज्ञानयोरन्योन्यविषयत्वमित्यपि ज्ञानान्तरग्राह्यमेवेति तदादाय पुनरनवस्थादौस्थ्यमेवेति भावः। नन्वेकस्य पुरुषस्य विश्रान्तापि वित्तिपरम्परा पुरुषान्तरेण प्रमास्यते इति न

खण्डनभूषामणिः ।

विषयस्यापि योगिज्ञाने भानसामग्रीसत्त्वात् किञ्च तथा सति चरमज्ञानं विशिष्टमसदेव स्यात् अतः प्रथमज्ञानं चरमज्ञानं स्वविषयं विषयीकुर्वदात्मानं तद्विशेषणीभूतमपि विषयीकुर्यादित्यंशतः स्वप्रकाशतापत्तिः एवं तत्र ज्ञानस्यापि स्वप्रकाशतापत्तिरित्यर्थः।विषयं हित्वा वित्तिमात्रग्रहणे वित्तेरग्रहणप्रसङ्गः न हि विषयावच्छेदमन्तरेण वित्तेर्ग्रा-

खण्डनदर्पणः ।

न तु यावद्विषयः तथा च स्वेतरविषयकज्ञानग्रहे कथं स्वप्रकाशता—अत्र वदन्ति—अन्योऽन्यविषयकत्वस्य ज्ञानान्तरग्राह्यत्वेऽनवस्थानात् तदसिद्धिप्रसङ्गेनान्योन्यग्राह्यतैव वाच्येति तेनैव हि तद्ग्रहे स्वप्रकाशत्वमेवेति भाव्यम्। ननु जन्यप्रत्यक्षविषयः स एव भवति यस्तु न जनकेन्द्रियसन्निकर्षाश्रयो भवतीति नियमात्। नचेश्वरज्ञानेन सर्वज्ञानस्य सिद्धिरिति न प्रागुक्तसर्वज्ञानासिद्धिरिति वाच्यम्। भवदभिमतेश्वरे विवादात्। किञ्च तस्य प्रकाशत्वसिद्धावस्मदभिमतसिद्धेः। किञ्च मन्मते अनुभवस्य प्रत्यक्षरूपस्य ब्रह्मरूपतया जन्यत्वाभावात्। किञ्च तव मते घटोऽयमित्यादिव्यवसायस्य नानुव्यवसायविषयकता युक्ता येन हि चक्षुर्मनःसंयोगेन तज्ज्ञानं जनितं तस्य च चाक्षुषज्ञानसामग्रीसत्त्वात् चाक्षुषज्ञानमेव च स्यान्न मानसानुव्यवसायः। भवद्वा चाक्षुषमानसात्मकः स्यान्न हि तादृशं ज्ञानं तवेष्टं जातिसङ्करप्रसङ्गात्। न च चाक्षुषज्ञानजनकमनःसंयोगासत्त्वे तदनुव्यवसाय इति हन्त तर्हि बहुक्षणानन्तरमात्मसंयोगो वाच्यः। चक्षुर्मनःसंयोगनाशकक्रियया पूर्वकालीनात्ममनःसंयोगनाशकविभागजननात् पूर्वमात्मसंयो-

खण्डनरत्नमालिका ।

चरमज्ञानस्य पुरुषान्तरज्ञानगोचरत्वान्न स्वप्रकाशत्वानिर्मोक्षत्वादिदोष इत्या-

(१) पूर्वं स्वेतरार्थग्राहिणोऽपि उपान्त्यज्ञानादेः स्वेतरार्थग्राहकत्ववदगत्या स्वग्राहकतामुपादाय स्वप्रकाशत्वमुक्तम्, इदानीं त्वन्योन्यग्राहकत्वस्थले एवायं दोषो न स्वेतरार्थग्राहकत्वस्थले इत्याह यद्वेति।

पुरुषान्तरीयज्ञानगम्यत्वेऽप्यनवस्था—

**न च पुरुषान्तरेण सा प्रमास्यते न तु तदभावः-इति प्रमा तेऽस्ति; तदर्थमपि प्रमाणान्तरसद्भावपरम्परापत्तेः ।**

---

खण्डनभावदीपिका ।

ग्राहिकाया बुद्धेर्ग्रहणान्नान्योन्यग्रहापत्तिरित्याशङ्क्याह—**नचेति** । कुतो नास्तीत्यत आह—**तदर्थमपीति**। स्वबुद्धिविषया या पुरुषान्तरस्य बुद्धिः साऽस्तीत्यत्र तव प्रमाऽस्ति नवा आद्ये तद्विषयान्यापि प्रमेष्टव्येत्यनवस्था द्वितीये तु तदसिद्धिरित्यर्थः । ननु ज्ञानस्य ज्ञानान्तरज्ञेयत्वेऽनवस्था चेद् घटसामग्रीतत्सामग्रीज्ञानेऽपि तवानवस्था स्या-

शाङ्करी ।

शेषासिद्ध्या सर्वासिद्धिरित्यत आह—**नचेति** । पुरुषान्तरेण प्रमास्यते—इति त्वयोपपादनीयमतस्तदुपपादनपरम्परा पुनरप्यापन्ना , किञ्च पुरुषान्तरेण सा वितिर्वेद्यते, न तु तदभावः, इत्यपि विशेषोपपादनप्रयासस्तवाधिक इत्यर्थः । ननु ज्ञानसिद्ध्यन्यथानुपपत्तिरेवापर्यवसन्ना ज्ञानधारामाक्षिपेत् अन्यथा घटकादाचित्कत्वाऽन्यथानुपपत्ति-

खण्डनभूषामणिः ।

वृत्तिरनुभूयते स्वरूपादपि भेदप्रसङ्गादिति तु **स्वरूपश्रीपादाः** । **पुरुषान्तरेणेति** । सा-योगिचरमबुद्धिः, पुरुषान्तरेण-योगिभिन्नेन, अन्यथाऽस्वप्रकाशत्वासार्वज्ञ्ययोरन्यतरस्यापत्तेः । **प्रमा तेऽस्तीति** । नन्वस्माकं स्वप्रकाशेन स्वयं सिद्धत्वम् अस्य अभावः हे पुरुषान्तरस्य भ्रान्ततापत्तेरस्ति सा प्रमास्यत इति प्रमेत्याशयः। पुरुषान्तरेण तत्सम्भव एव गृह्यत इत्यत्र प्रमान्तरमस्माभिर्वाच्यमित्याशङ्क्याह-**तदर्थमिति** कल्पितप्रमाण·

खडनदर्पणः ।

गनाशानुव्यवसायरूपविषयाभावात् तदुपनयाभावाद्यनुव्यवसायो न स्यादेवेति दिक् । चरमज्ञानस्य पुरुषान्तरज्ञानगोचरत्वात् न स्वयंप्रकाशकत्वानिर्मोक्षप्रसङ्गादिदोष इत्याशङ्क्याह—**नचेति**। सा च बुद्धिः पुरुषान्तरेण प्रमास्यते तस्या अभावो न प्रमास्यत इत्यत्र-प्रमाणं नास्ति तदभावादभाव एव परिशिष्यत इति तु शब्दार्थः । प्रमाणाभावोऽसिद्धस्तत्रापि प्रमाणान्तरकल्पनादित्याशङ्क्याह—**तदर्थमिति** । ननु ज्ञानस्य ज्ञानान्तरग्राह्यत्वेऽनवस्था न दोषः ज्ञानसिद्ध्यन्यथानुपपत्तिमानसिद्धत्वात् यथा घटकादाचित्कत्वा·

खण्डनरत्नमालिका ।

शङ्कते—**न चेति**। **सा** चरमबुद्धिः **पुरुषान्तरेण प्रमास्यते**, **तदभावः**—चरमबुद्धेरभावस्तु न प्रमास्यते इत्यत्र ते प्रमाणं नास्ति तथा च तदभावादभाव एव परिशिष्यते इति तुशब्दार्थः । प्रमाणाभावोऽसिद्धस्तत्रापि प्रमाणान्तरकल्पनादित्याशङ्क्याह-**तदर्थमिति** । कल्पितप्रमाणगोचरवित्तिधारापत्तेरित्यर्थः । ननु ज्ञानस्य ज्ञानान्तरस्वीकारेऽनवस्थया ज्ञानासिद्धिवत् तवापि घटसामग्र्यां सामग्र्यन्तरस्वीकारे

सामग्र्यनवस्थया घटासिद्धिशङ्कातत्परिहारौ—

**नचैवं घटसामग्रीतत्सामग्रीगवेषणेप्यनवस्था स्यात् । वैषम्यात् । यदि हि घटसामग्री तत्सामग्रीधारा कुत्रचिद्विच्छिद्येत तदा घटः सदातनः स्यात् इत्यर्थापत्त्यैव घटः सामग्रीपरम्पराविच्छेदरहित एव प्रमीयते ।**

---

खण्डनभावदीपिका ।

दित्याशङ्क्य परिहरति—न **चैवमिति** । वैषम्यमेवाह—**यदि हीति** । घटस्य कादाचित्कत्वान्यथानुपपत्त्या तत्सामग्रीपरंपराविषयमेव...ज्ञानमभ्युपेयते न तु तत्तत्सामग्रीविषयाणि...क्रमभावीन्यनन्तानि तेन नानवस्थेत्यर्थः । प्रकृते तथा किं न स्यादित्यत

शाङ्करी ।

घटसामग्रीपरम्परामपि नाक्षिपेदित्यत्राह—**नचैवमिति** । वैषम्यमेव स्फुटयति—**यदीति** । घटसामग्रीविच्छेदे हि घटकादाचित्कत्वमनुपपन्नं स्यात, तथाच स्यादेव न स्यादेव वा, नतु कदाचित्स्यादित्यापद्येत ज्ञानसिद्धिस्तु स्वस्मादपि भवन्ती न तत्परम्परामाक्षेप्तुमलमित्यन्यथासिद्ध्यनन्यथासिद्धिकृतवैषम्यमित्यर्थः । यद्वा घटसामग्रीपरम्पराङ्गीकारेऽनवस्थैव वरं, सा चान्यथानुपपत्तिप्रमाणिकेति न सापि दोषाय ज्ञान

खण्डनभूषामणिः ।

गोचरवित्तिधारापत्तेरित्यर्थः। **यदि हीति**—सामग्रीपरम्पराया विच्छेदे यस्याः सामग्र्याः सामग्री नोपेया सा स्वोत्तरकालीनां सामग्रीधारामुत्पाद्य घटं जनयेदेवेति घटो नागन्तुकः स्यादित्यागन्तुकत्वादन्यथानुपपत्तिलक्षणया अर्थापत्त्या घटः सामग्रीपरम्पराविच्छेदशून्य एव प्रमीयत इति त्वया वाच्यमित्यर्थः । मया तु तस्य सामग्रीशून्यस्यापि कादाचित्कत्वं शून्यवादे उपपादितमेवेति भावः । **सदातनः स्यात्**—प्रागभावप्रध्वंसरहितः स्यात्। ननु सर्वकालीनसामग्रीजन्यत्वं नापादकं क्वापि व्याप्त्यग्रहात् मैवं यथा एका सामग्री निःसामग्रीका तथा परा परापि स्यात् ततश्च सामग्रीणामुत्पत्तिशून्यत्वान्निः सामग्रीकभावतया घटः सदातनः स्यादित्यर्थात् तथा च सामग्री सामग्रीमत्येवेति प्रामाणिक्यनवस्था तदनादरे घटोपि स्वतः सिद्धः स्यात्तथा च घटाभावोपलम्भविरोधः।

खण्डनदर्पणः ।

न्यथानुपपत्तिमानसिद्धा तत्सामग्रीपरम्परेत्यत आह—**नचेति** । वैषम्यमाह—**यदि**-

खण्डनरत्नमालिका ।

अनवस्थया घटासिद्धिः स्यादित्याशङ्कते **नचैवमिति** । परिहरति—**वैषम्यादिति**। प्रमाणसिद्धत्वात्सामग्रीपरम्परा न दोषाय प्रमाणशून्यत्वात्तु ज्ञानपरम्परा दोषायेति वैषम्यमित्यर्थः । सामग्रीपरम्परायाः प्रामाणिकत्वमुपपादयति—**यदीति** । घटस्य कादाचित्कत्वानुपपत्त्या सामग्रीपरम्परायाः अनादित्वमन्यथा कुत्रचित्सामग्र्या विच्छेदे घटस्यानादित्वं स्यादित्यर्थः । **अयम्भावः**—कारणसामग्रीविरहिणां द्वयी गतिः आकाशादिवन्नित्यसत्त्वमेवेत्येका खपुष्पादिवन्नित्यासत्त्वमेव वेति द्वितीया घटस्यापि सा-

ज्ञानपरम्परायां तूक्तदोषानिस्तारः—

**यदि तु ज्ञानेऽप्येवं स्यात्-तदा स्वस्य प्रवेशात्स्वप्रकाशापत्तिः, अप्रवे-**

खण्डनभावदीपिका ।

आह-**यदि त्विति** । इहाप्यर्थापत्त्या यदि ज्ञानेऽप्येवं तदा स्वालम्बनत्वे स्वप्रकाशाप-

शाङ्करी ।

परम्पराङ्गीकारे त्वनिर्मोक्षापत्तिरिति महद्वैषम्यमिति भावः । वैषम्यमेव ज्ञानपक्षे विश-दयति—**यदि त्विति** । **एवं स्यादिति** । ज्ञानसिद्ध्यन्यथानुपपत्तिरेव यदि ज्ञानस्य

खण्डनभूषामणिः ।

न च ज्ञानान्यथानुपपत्तिलक्षणयार्थापत्त्या ज्ञानमपि तज्ज्ञानपरम्पराविच्छेदरहितमेवाप-त्त्या मीयत इतीयमप्यनवस्था प्रामाणिकीति वाच्यं स्वप्रकाशतयैव व्यवहारोपपत्तेरन्य-थापत्त्यभावात् । दूषणान्तरमाह-**यदि तु ज्ञानेऽप्येवं स्यादिति** । यदि हि सर्वज्ञानं ज्ञानपरम्पराविच्छेदरहितमर्थापत्त्या प्रमेयं तत्र किं सर्वान्तरभूतत्वेनात्मनोऽपि प्रमापकं किं वात स्यान्यत्प्रमापकं नास्त्येव वा तस्य प्रमापकमिति क्रमेण दूषणानि **स्वप्रकाशाप-त्तिरित्यादीनि**। यद्यपि सर्वस्य ज्ञानपरंपराविच्छेदत्वादित्यङ्गीकारे आद्यविकल्पोऽनुपपन्न-स्तथाप्यर्थापत्तिजनितं यज्ज्ञानं ज्ञानस्य सर्वस्य ज्ञानविच्छेदराहित्यं विषयीकरोति तस्य स्वप्रकाशत्वान्यवेद्यत्वपक्षयोर्दोषानन्यथानुपपत्त्या सर्वपदं स्वभिन्नविषयात्सङ्कोचनीय-मिति भावः। **शेषासिद्ध्या सर्वासिद्धिरिति** । अत्रापि सर्वासिद्धप्रसञ्जनमसंगतं यत् पक्षीकृत्यासिद्धिरापाद्या तत्सिद्धौ बाधस्तदसिद्धावाश्रयासिद्धिः शेषासिद्धेरापादकत्वे-नाभिमतायाश्चासिद्धिः शेषस्य चरमज्ञानस्यासिद्धौ तत्पूर्वज्ञानस्यासिद्धिरिति विशि-ष्टापादने त्वद्वचनादेव तयोः सिद्धौ सुतरामापाद्यापादकयोरसिद्धिरिति तथाप्यनवस्था-यामेव हृदयमित्याहुः । तदसत् मदुक्तयुक्तिपरम्परां स्वयमनुसरतस्तव मद्वचनात्त-त्सिद्धेरभावात् मम चानाप्तस्य वचनात्तत्सिद्धिरिति हास्यास्पदम् , न वा आश्रया-सिद्धिस्तस्याः स्वप्रकाशेनैव सिद्धेः न हि तवाननुमतिमात्रेण सा निवर्त्तते तदयमापा-दनार्थः प्रथमं ज्ञानं तावत्सिद्धमेवेत्यत्र द्वयोर्न विवादः परन्तु ज्ञानान्तरेण सिद्धमाकारे-णैतदुपपद्यत इति एवं चरमज्ञानमपि स्वत एव सिध्यति न तु परतश्चरमत्वहानिप्रसङ्गा-दित्यापादनायां नासम्भवः तस्मात् ज्ञानं स्वप्रकाशं परतो वेद्यत्वाभावे सति वेद्यत्वादि-

खण्डनदर्पणः ।

हीति । **यदि तु ज्ञानेऽप्येवं स्यादिति** । ज्ञानस्वरूपस्य सिद्ध्यन्यथानुपपत्तिरेव यदि ज्ञानस्य ज्ञानान्तरवेद्यत्वाक्षेपिका स्यात्तदेत्यर्थः । किं तज्ज्ञानं स्वसंवेद्यं किंपर

खण्डनरत्नमालिका ।

मथोरहितत्वे तदन्यतरा स्यादिति । ननु ज्ञानप्रवाहस्य कुत्रचिद्विच्छेदे तदारभ्यार्थपर्य-न्तमसिद्ध्या व्यवहारानुपपत्तिस्स्यादिति सैव ज्ञानपरम्पराया अनादित्वं कल्पयतीति ममाप्यनवस्था प्रामाणिकीत्याशङ्क्य परिहरति—**यदि त्विति** । ज्ञानं स्ववेद्यमुत पर-

शादनवस्था, अवेदने शेषासिद्धया सर्वासिद्धिः,—इति व्यसनं दुरुत्तरमेव । ये च मानमेयभावाश्रया दोषाः कीर्तनीयास्तेपि प्रसज्येरन् ।

खण्डनभावदीपिका ।

तिरन्येन ग्रहणेऽनवस्था अग्रहणे च शेषासिद्धया सर्वासिद्धिः । अन्येन ग्रहणपक्षे दोषा-

शाङ्करी ।

ज्ञानान्तरवेद्यत्वाऽऽक्षेपिका स्यादित्यर्थः । **अनवस्थेति** । तथाचाऽनिर्मोक्षापत्तिरिति भावः । **अवेदने इति** । चरमवित्तेरवेदने इत्यर्थः । ज्ञानस्य ज्ञानान्तरवेद्यत्वे दोषान्तरमाह-**ये चेति**। 'नाऽत्यापत्त्या प्रमामात्रात्तेतेऽर्थाः स्वीक्रियोचिताः । तद्धियस्तदुरीकारे स्वाश्रयं कश्चिकिंस्तु' इत्यादिदोषा मानमेयभावाश्रिता अग्रे कीर्तनीया इत्यर्थः । यद्वा, प्रमाणखण्डनप्रकरणे दोषा ये कीर्तनीयास्तेपि स्युरित्यर्थः । इदानीं स्वाभि-

खण्डनभूषामणिः ।

त्यनुमानमविकलमिति स्वपक्षानुरागकषाये चक्षुषी निमील्य परपक्षमपि समदृष्ट्या परिभावय। यदाहुर्भट्टपादाः 'न चात्रातीव कर्त्तव्यं दोषदृष्टिपरं मनः। दोषो ह्यविद्यमानोपि तच्चित्तानां प्रकाशते' इति । न च चक्षुर्जन्यज्ञानेनैव तज्ज्ञानस्य हेतुज्ञानस्य चाक्षुषत्वापत्तौ रूपतापत्तिश्चाक्षुषविशेषगुणत्वस्यैवरूपत्वात्तद्व्याप्यत्वाच्चेत्यपि **परास्तम्**। परेषामपि वस्तुत्वेन प्रत्यासत्त्या जातिव्यक्त्योरभेदेन वा ज्ञानस्य चाक्षुषत्वाङ्गीकारात् । अपि चास्माकं मते ज्ञानं न गुण एव तस्यैवात्मत्वात् जानामीत्याश्रयाश्रयिभावभानमपि मिथ्येति वक्ष्यत इति न किंचिदेतत् । किंच येन प्रमाणसिद्धं ज्ञानमिष्यते तेन प्रमाणलक्षणं प्रमालक्षणं प्रमेयलक्षणं वाच्यं तत्र च वक्ष्यमाणदोषाः स्युरिति स्वप्रकाशपक्ष एव ज्यायानित्याह—**ये चेति** श्रीपादाः । **विद्यासागरस्तु** ज्ञानस्य ज्ञानान्तरवेद्यत्वे ज्ञानस्य ज्ञानान्तरेण कः सम्बन्धो न संयोगः अद्रव्यत्वात् न समवायः आत्मगुणयोरन्योन्यं तदयोगात् नापि तादात्म्यं भिन्नयोरभिन्नयोर्वा तदयोगात् नापि विषयविषयिभावस्तस्य द्रव्याद्यन्तर्भावाभावाभ्या मसम्भवात् न चासम्बद्धमेव ज्ञानं ज्ञानान्तरज्ञेयमतिप्रसङ्गादित्यप्रेत्याह ये चेति **व्याचष्ट** । 'नात्यापत्त्या प्रमामात्रात्ते

खण्डनदर्पणः ।

वेद्यमुतावेद्यमिति विकल्प्याद्यं प्रत्याह-**तदेति** । द्वितीयं दूषयति-**अप्रवेशादिति** । अवेद्यत्वपक्षं दूषयति-**अवेदन इति** । स्वप्रकाशसिद्धेरनुपपत्तेरभावात् । किञ्च—ज्ञानान्तरवेद्यत्वे ज्ञानस्य ज्ञानान्तरेण कः संबधः संयोगसमवायतादात्म्याभावात् तव तदनभ्युपगमात् नापि विषयविषयिभावः भेदे तस्य निराकार्यत्वात् । किञ्च—'नात्यापत्त्या प्रमामात्रात्तेः तेऽर्थाः स्वीक्रियोचिता' इत्यादिदोषाच्च । ज्ञानान्तरं न ज्ञानान्तरसाधकमित्यभिप्रेत्य वदति—**ये चेति** । ननु तैर्दोषैर्ज्ञानमपि न स्यादित्यत आह—

खण्डनरत्नमालिका ।

वेद्यमुतावेद्यम् इति विकल्प्याद्यं दूषयति-**तदेति** । द्वितीयं दूषयति-**अप्रवेशादिति** । तृतीयं दूषयति—**अवेदन इति** । परवेद्यत्वपक्षे दोषान्तरमाह-**ये चेति** । "नात्यापत्त्या

एतावता ग्रन्थेनोपपादितस्य विज्ञानवाद्यभिमतविज्ञानस्वप्रकाशवादस्य सांप्रतं शून्यवादपर्यवसायित्वसूचनपूर्वकं स्वप्रकाशब्रह्मवादनिरूपणम्—

**नच तैर्दोषैर्नास्त्येव ज्ञानमित्यास्थेयम् । स्वतः सर्वसिद्धस्य दुरप-**

खण्डनभावदीपिका ।

न्तरमाह—ये चेति । मम तु प्रमाणतः सिद्ध्यभावेऽपि स्वतः सिद्धत्वाङ्गीकाराज्ञामी दोषा प्रसज्यन्ते स्वप्रकाशत्वादेव विषयविषयिभावखण्डनादयो दोषा नात्रावकाशं लभन्ते इति भावः। ननु सत्तागुणत्वज्ञानत्वाद्यालिङ्गितस्यैव ज्ञानस्य सिद्धेरद्वैतभङ्गः स्यादित्याशङ्कते

शाङ्करी ।

मतां स्वप्रकाशब्रह्मसिद्धिं कटाक्षयितुमाह—नचेति । मानमेयखण्डनप्रकरणोक्तदोषैर्नाऽस्त्यापत्त्येत्याद्युक्तदोषैश्च विज्ञानस्वरूपमपि न सिद्ध्येत् तथाच सर्वशून्यतावाद एव पर्यवस्येत्, न तु 'ज्ञानं तावत्स्वप्रकाशं स्वत एव सिद्धस्वरूपम्'—इति प्रतिज्ञातोऽर्थोऽपि निर्वाहितः स्यादिति भावः । स्वत इति । परतः सिद्धिमपेक्ष्य मानमेयभावखण्डनयुक्तयो नतु स्वतः

खण्डनभूषामणिः ।

तेऽर्थाः स्वीक्रियोचिताः। तद्धियस्तदुरीकारे स्वाश्रयं कश्चिकित्सतु'त्यादि दोषा इति मिश्राः। स्वतः सिद्धस्येति। निषेधज्ञानस्य तत्र विषयः सर्वजनानुभवविरोधात । ननु

खण्डनदर्पणः ।

नच तैरिति । स्वप्रकाशेति। वक्ष्यमाणभेदाश्च भेदेन मानमेयव्यवस्थामाश्रित्येति भावः । 'अत्रायं पुरुषः स्वयंज्योतिरि'ति श्रुत्या च स्वप्रकाशत्वबोधनमिति भाव्यम् । ननु परेषां ज्ञानमात्रातिरिक्तं किमपि नास्ति कथं तत स्यात्सत्तागुणत्वज्ञानत्वादीनां—तत्सि·

खण्डनरत्नमालिका ।

प्रमामात्रात्ते तेऽर्थाः स्वीक्रियोचिताः । तद्धियस्तदुरीकारे स्वाश्रयं कश्चिकित्सतु" इति कारिकयेति शेषः । अस्या अर्थः—प्रमामात्राद्धटादिसिद्ध्यङ्गीकारेऽन्यविषयकप्रमयाऽन्यस्यापि सिद्धिः स्यात तस्मात् अत्यापत्त्या अतिप्रसङ्गेन ते ते घटादयो ऽर्था न स्वीक्रियोचिताः न स्वीकर्तव्याः तद्धियः घटज्ञानात् तदुरीकारे घटसिद्ध्यङ्गीकारे तु घटादपि घटस्य सिद्धिः स्यात् ज्ञानकुक्षिनिविष्टत्वाद्धटादेस्तथा च स्वाश्रयः आत्माश्रय इति । यद्वा ये चेति । प्रमाणखण्डनप्रकरणोक्ताः "ज्ञानस्य ज्ञानान्तरवेद्यत्वे तस्य ज्ञानान्तरेण कः सम्बन्धः न संयोगोऽद्रव्यत्वात् न समवायः द्वयोर्गुणत्वात् नापि तादात्म्यम् एकान्तभिन्नयोरभिन्नयोर्वा तदयोगात् न विषयविषयिभावः तस्य सप्तपदार्थान्तर्भावानन्तर्भावाभ्यामनुपपत्तेः न चासम्बद्धमेव ज्ञानं ज्ञानान्तरज्ञेयम् अतिप्रसङ्गात्" इत्यादयो दोषा इत्यर्थः । ननु ज्ञानस्य ज्ञानान्तरज्ञेयत्वेऽनवस्था स्वज्ञेयत्वे कर्तृकर्मविरोध इति मास्तु ज्ञानं वरं शून्यवाद एवेत्याशङ्क्याह—नचेति । हेतुमाह—स्वत इति । अदृष्टानुरोधेन दृष्टं न कल्पनीयं किन्तु दृष्टानुगुण्येनादृष्टमेव कल्पनीयमन्यथा कार्यलिङ्गकं कारणानुमानं

ह्वत्वात्, स्वप्रकाशाङ्गीकारादेव चाऽनुभवस्य सर्वदोषहानेर्वक्ष्यमाणत्वात् । प्रकाशात्मतामात्रस्यैव स्वतःसिद्धिसम्भवे

खण्डनभावदीपिका ।

**स्वप्रकाशेति** । सत्वादीनां जडत्वे स्वरूपज्ञानगतत्वासिद्धेरजडत्वे च ज्ञानप्रकाशमात्रत्वान्नोक्तदोष इत्याह—**प्रकाशात्मतेति** । ननु स्वप्रकाशं ज्ञानमित्यादिवाग्व्यव-

शाङ्करी ।

सिद्धिमपेक्ष्येत्यर्थः। तदेवाह—**स्वप्रकाशेति** । वक्ष्यमाणत्वादिति । 'तत्स्वप्रकाशपरमार्थचिदेव भूत्वा' इत्यादिनेत्यर्थः। ननु सर्वशून्यतावादादपरेषां पक्षे ज्ञानमात्राभ्युपगम एव विशेषः, स च न स्यात्, यतो ज्ञानाङ्गीकारे तद्धर्माणां सत्तागुणत्वादीनां तत्सिद्धिनान्तरीयकसिद्धीनामभ्युपगमादित्यत आह—**प्रकाशात्मतेति** । मानमेयभावाश्रया दोषाः स्वतःसिद्धत्वमात्रमपनेतुमशक्ताः, पराधीनसिद्धीनां तु ज्ञानधर्माणां निरासे शक्ता एवेति

खण्डनभूषामणिः ।

स्वप्रकाशशब्देन स्वस्य विषयत्वाभिधानात्तद्दोषतादवस्थ्यमित्याशङ्क्याह—**स्वप्रकाशाङ्गीकारादेव चेति**। न विज्ञानवादिनामिवास्माकमपि स्वस्य विषयविषयिभावः स्वप्रकाशशब्दार्थः किन्तु स्वप्रकाश एव न प्रकाश्यः स्व एव च प्रकाशो नान्य इत्यर्थः । **सर्वदोषेति** । विज्ञानस्य क्षणिकत्वजन्यत्वक्रियाकर्मभावविरोधादिरूपो यो दोषस्तद्धानेर्वक्ष्यमाणत्वात् 'तत्स्वप्रकाशपरमार्थचिदेव भूत्वा निष्पीडितादहह निर्वहते विचारात्' इत्यत्र तत्रैव वक्ष्यमाणेऽर्थेऽस्युकण्ठयकां युक्तिमाह—**प्रकाशात्मतामात्रस्येति** ।

खण्डनदर्पणः ।

द्धिनान्तरीयकसिद्धत्वेन तेषां सत्त्वाभ्युपगमादित्यत आह—**स्वप्रकाशात्मतेति** । मानमेयभावाश्रया दोषाः स्वतःसिद्धप्रकाशमात्रमपनेतुमशक्ताः पराधीनसिद्धिकानां

खण्डनरत्नमालिका ।

न स्यादित्यर्थः । **स्वप्रकाशाङ्गीकारादिति** । ज्ञानस्य परतः सिद्धित्वे मानमेयभावखण्डनयुक्तयः नतु स्वतः सिद्धत्वे इत्यर्थः । **अयं भावः** विज्ञानवादिना ज्ञानस्य ज्ञानान्तरवेद्यत्वेऽनवस्थानात्स्वेनैव स्वस्फुरणमङ्गीकृत्य स्वप्रकाशविज्ञानवाद आस्थितः तस्मिंश्च कर्तृकर्मविरोध इति मास्तु ज्ञानमपीति शून्यवादपर्यवसानम् ब्रह्मवादिना तु ज्ञानस्य स्वप्रकाशत्वमङ्गीकृत्यापि तत्स्फुरणस्य स्वहेतुतया अनभ्युपगमेन न कर्मकर्तृविरोध इति ज्ञानसत्वे बाधकाभाव इति । **वक्ष्यमाणत्वादिति** । 'तत्स्वप्रकाशपरामर्थचिदेव भूत्वा' इत्यादिनेति शेषः । स्वप्रकाशत्वादनुभवस्य नानवस्था नापि क्रियाकर्मभावविरोधः तदनङ्गीकारादित्येवं सर्वदोषाभावस्य वक्ष्यमाणत्वादित्यर्थः । ननु ज्ञानस्य स्वतः सिद्धत्वे मानमेयखण्डनयुक्तीनामप्रसरे ज्ञानधर्माः सत्ता गुणत्वादयोऽपि सिद्ध्येरन् तथा च ज्ञानभिन्नानामपि तेषां सत्त्वादद्वैतभङ्गः योगाचारमते च ज्ञानमात्राभ्युपगम एव विशेषः शून्यवादमतादित्ययुक्तं च स्यादित्यत आह—**प्रकाशात्मतेति** । मानमेयाश्रया दोषाः ज्ञानस्य स्वतः सिद्धत्वं नापनेतुं क्षमाः पराधीनसिद्धीनां

जडात्मनां धर्म्माणां केषामपि तदन्तर्भावानुपपत्तिः ।

स्वप्रकाशज्ञानस्य धर्माणां स्वीकारविषये दोषाशङ्कानिरासः—

अत एव धर्मोपग्रहप्रवर्तिष्णुवाग्व्यवहाराऽविषयत्वं, कालानवच्छे-

खण्डनभावदीपिका ।

हारप्रवृत्तेस्तत्तत्प्रवृत्तिनिमित्तजातिक्रियागुणादिधर्म्माः स्वीकार्य्याः (तेषां च)स्वप्रकाशरूपत्वे तद्धर्म्मत्वानुपपत्तेर्वाग्व्यवहारोऽपि वास्तवस्तत्र नास्तीत्याह—अत एवेति । धर्म्मोपग्रहेण जात्यादिधर्म्मनिमित्ततया प्रवर्तनशीलो यो वाग्व्यवहारस्तद्विषयत्वं नास्तीति यावत्। ननु नित्यत्वसर्वगतत्वसर्वात्मत्वादयो धर्म्मास्तत्राभ्युपगम्यन्त इत्यत

शाङ्करी ।

भावः । पराधीनसिद्धिकत्वमेवामीषां कथमित्यत उक्तं—जडात्मनामिति । ननु स्वप्रकाशज्ञानस्य धर्म्मा अपि यदि न स्वीक्रियन्ते तदा 'स्वप्रकाशं ज्ञानम्'—इति वाग्व्यवहारोपि तत्र कथं स्यात्, धर्मोपग्रहेणैव तत्प्रवृत्तेरित्यत आह । अत एवेति । प्रकृतवाग्व्यवहारस्तु लक्षणया कथञ्चित्समर्थनीय इत्यर्थः । ननु यदि निर्द्धर्मकमेव तत्स्वप्रकाशं ज्ञानं, तदा "नित्यं विज्ञानमानन्दं ब्रह्म" इत्यादिबोधितं तत्र

खण्डनभूषामणिः ।

स्वतः सिद्धिः-परानपेक्ष्य सिद्धिः । जडात्मनां धर्माणामिति । यावन्तो धर्मास्ते संविदो भिन्ना इति तेषां न सिद्धिः सिद्धिर्हि ज्ञानं न च ज्ञानभिन्नं ज्ञानमिति भावः । तदन्तर्भावः-तत्सम्बन्ध इत्यर्थः । ज्ञानत्वानन्दत्वादिकं तु सर्वास्वन्तः करणस्य विलक्षणवृत्तिषु ज्ञानानन्दाकाराद्यनुस्यूतं ज्ञानानन्दात्मकं परं प्रति धर्मोपि न सम्प्रति एवं सत्तापि व्याख्येया जडात्मानो ये धर्मास्ते ज्ञाने शुक्तिरूप्यवत्कल्पितत्वान्न सन्त्येव केनापि प्रमाणेन स्वप्रकाशेन वाऽसिद्धेरिति भावः । कथं तर्हि स्वप्रकाश इति व्यवहारः सकलधर्मातीते ब्रह्मणि स्यादित्याशङ्क्याह-अत एवेति । निर्धर्मकत्वादेवेत्यर्थः । धर्म-

खण्डनदर्पणः ।

ज्ञानधर्माणां निरासे तु शक्ता एवेत्यर्थः । ज्ञानशब्दानुभवशब्दादिप्रवृत्तिनिमित्तानां सत्वेऽद्वैतव्याघातः असत्वे ज्ञानं स्वप्रकाशमित्यादिव्यवहारलोप इत्याशङ्क्याह-धर्मोपग्रहेति । धर्मस्योपग्रहः स्वीकारः स्वेन प्रवर्तितुं शीलं यस्य वाग्व्यवहारस्य तस्य विषयत्वं वाच्यत्वं तदभावस्तेन शब्दप्रवृत्तिहेतवो नापेक्षन्त इति तात्पर्यम् । अत एव-यतो वाचो

खण्डनरत्नमालिका ।

ज्ञानधर्माणां सत्तागुणत्वादीनामपनयने तु क्षमा एवेत्यर्थः । सत्तागुणत्वादीनां पराधीनसिद्धिकत्वं कथमित्यत आह—जडात्मनामिति । दोषा जडा अजडा वा द्वितीये संविन्मात्रं ते आद्ये तेषां परतः सिद्धत्वं ज्ञानस्यैव स्वतः सिद्धत्वादिति भावः । तदन्तर्भावः—ज्ञानसम्बन्धः । ननु स्वप्रकाशज्ञानस्य धर्मा यदि न स्वीक्रियन्ते तदा 'स्वप्रकाशं ज्ञानम्' इति वाग्व्यवहारः कथं स्याधर्मोपग्रहेणैव तत्प्रवृत्तेरत आह—अत एवेति । धर्मोपग्रहेण धर्मस्वीकारेण प्रवर्तितुं शीलं यस्य

दमादाय च नित्यतोपचारः; देशानवच्छेदमादाय विभुत्वव्यपदेशः, प्रका-

खण्डनभावदीपिका।

आह—कालेति। कादाचित्कसत्तारहितत्वान्नित्यत्वमुपचर्यते। आत्मादिषु नित्येषु परैरपि कादाचित्कसत्तानभ्युपगमादित्यर्थः। देशावच्छेदशून्यत्वादेव सर्वगतत्वमुपचर्यते न तु सर्वदेशसम्बन्धादित्याह—देशेति। भेदकप्रकारासंसर्गित्वाच्च सर्वात्मत्वा-

शाङ्करी।

नित्यत्वमपि न स्यादित्यत आह—कालानवच्छेदेति। कालतदवच्छेदयोः परमार्थसतोरभावात् कालविशेषोपरागनिबन्धनमनित्यत्वं ब्रह्मणो नास्ति इति तद्विरुद्धं नित्यत्वं तत्रोपचरितं; यथा तत्रैव 'नीलं तमः'—इत्यत्र नीलविरोधिरक्तत्वाद्यभावनिबन्धनो नीलत्वोपचार इत्यर्थः। ननु व्याप्नोतीति ब्रह्मेत्युच्यते, तथाच निरुक्तिबलाद्, उपनिषदि विभुत्वेन श्रवणाच्च, ब्रह्मणो वैभवमवश्यमङ्गीकर्त्तव्यमिति न तन्निर्धर्मकम्, अत एव च नाद्वैतम् ? इत्यत आह—देशेति। देशतदवच्छेदयोः परमार्थ-

खण्डनभूषामणिः।

स्योपग्रहः स्वीकारस्तेन प्रवर्तितुं शीलं यस्य वाग्व्यवहारस्य तदविषयत्वम्। न तस्य वाच्यतया वाग्व्यवहारविषयत्वं येन शब्दप्रवृत्तिनिमित्तज्ञानापेक्षा स्यादपि तु लक्ष्यतयेति भावः। ननु स्वप्रकाशत्वमन्तः करणवृत्तिरनुगतो धर्मो ब्रह्मवेति स वाच्य एव तथा ज्ञानानन्दादिशब्दावपि ब्रह्मणो वाचकाविति चेन्न तेन धर्मेणान्तःकरणवृत्तीनामेव ते वाचकाः अन्तः करणवृत्तेः साक्षिभास्यतया जडत्वेन स्वप्रकाशशब्दवाच्यत्वाभावाच्च। वस्तुतोऽन्तः करणवृत्तौ काल्पनिक एव सम्बन्ध इति अनुगतत्वप्रतीतिरपि भ्रमरूपा ब्रह्मणो नानुगतत्वे प्रमाणमिति। नित्यत्वधर्मसम्बन्धवच्छब्दप्रवृत्तिनिमित्तसम्बन्धोऽप्यस्तीत्याशङ्क्याह-कालानवच्छेदमादायेति। कालावच्छेदो हि कदाचित्कत्वमनि-

खण्डनदर्पणः।

निवर्त्तत इत्यादिकं नासंगतम्। नित्यत्वधर्मसम्बन्धवत् प्रवृत्तिनिमित्तज्ञानत्वप्रकाशत्वसंबन्धोपि स्यादित्यत आह—कालेति। कालावच्छेदो ह्यनित्यत्वं तदभावोपलक्षितस्वरूपं नित्यत्वेनोपचर्यत इत्यर्थः। ननु आपनादात्मा ब्रह्मेत्युच्यते तथा च निरुक्तिबलादुपनिषदि विभुत्वेन श्रवणाच्च ब्रह्मणो विभुत्वेन द्वैतापत्तिरित्यत आह-देशेति। देशावच्छेदाभावोपलक्षितं स्वरूपं विभुत्वेनोपचर्यते न पारमार्थिकविभुत्वादित्यर्थः। सजातीयविजातीयभेदप्रकाराभावोपलक्षितस्वरूपव्यतिरेकेण सर्वात्मत्वादयो धर्मा नाभ्युपेयन्त

खण्डनरत्नमालिका।

वाग्व्यवहारस्य तदविषयत्वम्। वाच्यत्वानङ्गीकारेण शब्दप्रवृत्तिहेतवो धर्मा नापेक्ष्यन्त इति भावः। ननु नित्यत्वविभुत्वादिधर्मसम्बन्धवच्छब्दप्रवृत्तिनिमित्तसम्बन्धोऽपि स्यादित्यत आह—कालेति। कालावच्छेदोऽनित्यत्वं देशपरिच्छेदोऽविभुत्वं तदभावोपलक्षितं च स्वरूपं नित्यं विभु चोपचर्यते न तु सर्वकालसर्वदेशसम्ब-

रावच्छेदविरहनिबन्धनश्च सर्वात्मत्वाद्वैतादिव्यवहारः; सौगतप्राभाकरादिवद्भावे,नैयायिकवच्चाभावेऽभावाऽनतिरेकस्वीकारादेव चाऽद्वैताव्याघा-

खण्डनभावदीपिका।

दिव्यपदेश इत्याह—प्रकारेति। ननु तत्तदभावानामुपचारबीजभूतानामभ्युपगमेऽप्यद्वैतभङ्ग इत्यत आह—सौगतेति। यथा सौगताः प्राभाकाराश्च भूतलादावभावं व्यवहरन्तोऽपि न तदतिरिक्तमभावमिच्छन्ति यथा वा नैयायिकाः प्रागभावप्रध्वंसा-

शाङ्करी।

स्तोरभावाद्देशविशेषोपरागनिबन्धनमूर्तत्वविरहनिबन्धनो वैभवोपचारः पूर्ववदेवेत्यर्थः। तर्हि निर्धर्मके ब्रह्मणि कथं सर्वात्मकत्वव्यवहारः? कथं चाऽद्वैतव्यवहारः? तयोर्धर्मनिबन्धनत्वादत आह—प्रकारेति। घटादौ प्रतिनियतघटत्वादिप्रकारसंसर्गाधीनोऽसर्वात्मकत्वव्यवहार इति तद्विरहाद् ब्रह्मणि सर्वात्मकत्वव्यवहार इत्यर्थः। ननु द्वैताभावोऽद्वैतं, तस्य च ब्रह्माधिकरणं, न तु तदेव ब्रह्म, अभावस्याधिकरणभिन्नत्वात्तथाच तमादाय द्वैतमेवेत्यत आह—सौगतेति। सौगतैः प्राभाकरैश्चाधिकरणस्वरूपमेवाऽभावोऽभ्युपगम्यते नैयायिकैरपि 'घटाभावे पटो नास्ति' इत्यादिप्रतीतेरधिकरणस्वरू-

खण्डनभूषामणिः।

त्यत्वापरपर्यायं तत्त्वं तदुपलक्षितं स्वरूपं नित्यमित्युपचर्यते देशभेदानवच्छिन्नं स्वरूपं विभ्विति न तु सर्वदेशसम्बन्धात् देशानामवस्तुत्वात् प्रकारः सजातीयविजातीयेभ्यो व्यावर्तको धर्मस्तद्विरहात् सर्वात्मताव्यवहारः स्वेतराद्वयावृत्तिरवच्छेदस्तद्विरहादद्वैतव्यपदेशः आदिपदादेकं ब्रह्मेति तथा न एकेनैव प्रकारेण ज्ञानत्वं नान्येन इति प्रकारावच्छेदाभावनिमित्तेन सर्वज्ञत्वोपचारः नैकस्यैव परिमितस्य कर्त्तेति सर्वकर्तृतोपचार इति बोध्यम्। न त्वेते धर्माः परमार्थिकाः सम्भवन्ति भेदस्य खण्डयमानत्वात् जडाजडयोरभेदस्यासम्भवादभेदे धर्मधर्मिभावानुपपत्तेर्मानाभावादनुपपत्तेश्चेति भावः। तर्हि ब्रह्मणि तत्तदभावस्वीकारोपि यदि प्रामाणिकस्तदा प्रमाणप्रमेयभेदखण्डनयुक्तिराक्षस्या उदरप्रवेशाज्जीर्ण एव स्यादिति चेन्न तस्यापि पृथक्तत्त्वानभ्युपगमात् तथा च श्रुतिः नेह नानास्ति किंचनेति पृथगसत्तापि व्यवहारे दृष्टान्तमाह—सौगतेत्यादिना। अत्रादि-

खण्डनदर्पणः।

इत्याह—प्रकारेति। आदिशब्देन एकं ब्रह्मेत्यादि संग्रहः। ननु तेषां धर्माणां ब्रह्मव्यतिरेके द्वैतव्याघातः अव्यतिरेके च न नित्यत्वाद्युपचारनिमित्तं तत्रेत्यत आह—सौगतेति। सौगतैः प्राभाकरैश्चाधिकरणस्वरूपमात्रत्वाभ्युपगमात् प्रकृते ब्रह्मैव द्वैताद्य-

खण्डनरत्नमालिका।

न्धादित्यर्थः। प्रकारेति। घटादौ प्रतिनियतघटत्वादिप्रकारसंसर्गाधीनोऽसर्वात्मकत्वव्यवहारः तद्विरहाच्च ब्रह्मणि सर्वात्मकत्वव्यवहारः। नन्वेषामभावानां ब्रह्मातिरेकेऽद्वैतव्याघात इत्याह—सौगतेति। सौगतप्राभाकरौ हि धर्मिस्वरूपातिरिक्तमभावं नाङ्गीकुर्वाते इति तत्त्वम्। नैयायिकेति। तैरभावाधिकरणकाभावस्यानवस्थाभियाऽधिक

तः। भ्रमविषयनिषेधवच्च प्रतियोगिनः सर्वथैवासिद्ध्यापि न काचित् क्षतिः।

खण्डनभावदीपिका ।

दीनामन्योन्याभावं व्यवहरन्तोऽपि न तदतिरिक्तमभावमिच्छन्ति तद्वदस्माकमपि सर्वमुपपन्नमित्यर्थः। ननु तथापि कालावच्छेदादेर्निषेधप्रतियोगिनः प्रमितौ कथं नाद्वैतव्याघातः अप्रमितत्वे च कथं निषेध इत्यत आह-भ्रमविषयेति। अप्रमितत्वेऽपि प्रतियोगिनः परमते भ्रमविषयस्यासतो रजतादिसंसर्गस्येव निषेधः सम्भवतीत्यर्थः। ननु वाग्व्य-

शाङ्करी।

पमात्रालम्बनत्वाभ्युपगमाच्च प्रकृते ब्रह्मैव द्वैताभावोऽङ्गीक्रियते । ननु द्वैताभावश्चेदद्वैतं तदा प्रतियोगितया द्वैतमभ्युपगन्तव्यम्, तथाच कथमद्वैतं, द्वैतेनैव द्वैतादित्यतआह—भ्रमेति। नहि निषेधे प्रमितप्रतियोगिकत्वं तन्त्रम्, किं तर्हि, प्रतीतप्रतियोगिकत्वं लाघवादिति भावः। प्रमितप्रतियोगिकत्वमेव तन्त्रं निषे-

खण्डनभूषामणिः ।

पदेन सांख्यपरिग्रहः। अभावे अभावो घटात्यन्ताभावे घटात्यन्ताभावादिकं यथा हि स व्यवहारः केवलेनाधिकारणेन तथास्माकमपि परमार्थसता अधिकरणेन भावेनैवाभावव्यवहारमात्रं न त्वभाववत्वं तत्रास्तीत्यर्थः। नन्वेवं द्वैताभावो मिथ्या स्यात् ततश्च द्वैतापत्तिरिति चेन्न यथातिरिक्तघटाभावाऽभावेपि न तत्र घटस्तद्वत्स्यात्। अथ तत्राधिकरणस्यैव घटाभाववत्वं धर्मोऽङ्गीक्रियते स चातिरिक्त इति चेन्न भावत्वाभावत्वयोर्विरोधात् अन्यथा तदेवाधिकरणं घटाधिकरणतादशायामपि घटाभाववत्वाधिकरणं स्यात्। अथ कालविशेष एव तस्य घटाभाववत्वं दर्शनबलादाश्रीयत इति चेन्न वास्तवस्य कालविशेषावच्छेद्यत्वेनौपाधिकत्वापत्तेः तस्माद्यथा तस्य कालविशेषो घटाभावव्यवहारयोग्यता तथेहापि द्वैताभावस्वव्यवहारयोग्यतैव द्वैताभावरूपता तु स्वाभाविकी पारमार्थिकी बाधाभावात् भावविरोधिस्वरूपमेव अभावत्वं नातिरिक्तं तच्च यदि घटाभावादेरतिरिक्तमधिकरणे कालभेदेन च वर्तते इत्यास्थीयते तथापि नेहाधिकरणस्य सर्वदैव द्वैतविरोधिरूपत्वात् अत एव भट्टानामभावभावयोर्भेदाभेदाभ्युपगमः। यद्यपि अनुगताभावाकारप्रतीत्या सिद्ध्यति तथापि नेह द्वैताभावस्यानुगताधिकरणात्मनैवानुगत

खडनदर्पणः ।

भावेऽङ्गीक्रियत एवेत्यर्थः। ननु द्वैतस्य प्रतियोगिनोऽप्रमितेर्न तदभावाद्वैतसिद्धिरित्यत आह—भ्रमेति। असतोऽप्रामाणिकस्य भ्रमप्राप्तस्य प्रतिषेधः परपक्षसिद्धाऽसद्रजतशुक्तितादात्म्यस्य निषेधवदित्यर्थः। ननु प्रतियोगिप्रमैव निषेधे तन्त्रं भ्रमस्थलेपि

खण्डनरत्नमालिका ।

रणस्वरूपत्वाभ्युपगमादिति भावः। ननु क्वचित्प्रसिद्धस्यैव प्रतियोगिनः क्वचिन्निषेधो भवति तथा च नाद्वैतसिद्धिः प्रतियोगिनः सत्त्वाभ्युपगमादित्यत आह-भ्रमविषयेति। असतोऽप्रामाणिकस्य च भ्रमप्राप्तया प्रतिषेधः परमते रजततादात्म्यस्येवेत्यर्थः।

वाग्व्यवहारविषयत्वेऽपि ब्रह्मणः श्रुतिप्रमाणगम्यत्वम्—

तदेतत्तु श्रुत्या प्रमाणेनोपलक्षणन्यायात् तात्पर्य्यतः प्रकाश्यते;

खण्डनभावदीपिका ।

वहाराविषयत्वं यदि ब्रह्मणस्तर्हि कथं तस्य श्रुतिप्रमाणकत्वमित्यत आह-तदेतदिति । यथा परत एव सिद्धस्य देवदत्तगृहस्य काकवद्देवदत्तस्य गृहमित्युपलक्षणविषयं वाक्यमितरव्यावृत्तिमुखेन तद्व्यवहारजनकं तथा तत्र स्वतः सिद्धस्यापि ब्रह्मणोऽन्यतो व्यावृत्त्यर्थं किंचिदुपलक्षणं प्रतिपादयन्तो वेदान्ताः प्रमाणम् । ननु तर्हि ब्रह्मणः प्रमाणप्रमेयभावः

शाङ्करी ।

षे भ्रमविषयोपि ज्ञानान्तरेण प्रमित एव—इत्यादिविस्तरः यद्यपि भेदप्रकाशे, तथापि ज्ञानान्तरमप्यप्रमेति हृदयम् । ननु यदि ब्रह्मणो वाग्व्यवहाराऽविषयत्वं तदा तत्र श्रुतिरपि न प्रमाणं भवेदित्यत आह—तदेतदिति । उपनिषदां ब्रह्मणि तात्पर्य्याधीनमेव प्रामाण्यं, नतु ब्रह्म पदार्थः, वाक्यार्थो वा, धर्मोपग्रहं—विना शक्तेर्योग्यतादेश्चाऽनिरूपणात् । "नित्यं विज्ञानमानन्दं ब्रह्म" इति नित्यविज्ञानानन्दपदैरविद्यके एवार्थे प्रत्येकं गृहीतशक्तिभिः संभूयोच्चारणबलात् तात्पर्य्यबलाच्चाऽविद्यादशायां ब्रह्म बोध्यते इति तत्र श्रुतीनां प्रामाण्यमित्यर्थः । उपलक्षणन्यायादिति ।

खण्डनभूषामणिः ।

प्रतीत्युपपत्तेरिति असिद्धया असत्त्वेनेत्यर्थः । यद्यपि भ्रमविषयरजतादितादात्म्यं तच्चान्यत्र प्रमितमिति परेषां मतं तथापि प्रमितस्य भ्रमविषयता न सम्भवति कारणत्वादिति प्रागुक्तं तथा च यथा शुक्तिरजतं तत्रैव ज्ञातं विशेषदर्शनदशायां प्रतिषिध्यते तथा प्रपञ्चोपि ब्रह्मण्येवाविद्यादशायां प्रतीतः श्रुत्या युक्त्युपष्टम्भया प्रतिषिध्यत इति भावः । ननु ज्ञानस्य स्वप्रकाशत्वे सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुतिबोध्यत्वं कथं स्यात् कथं च तद्वाक्यं तत्र प्रवर्तताभिधानाभिधेयभावविरहादित्यत आह तदेतदिति । यतो वाचो निवर्तन्ते अप्राप्य-

खण्डनदर्पणः ।

सम्यग्रजतादितादात्म्यादिकमन्यत्र दोषात् भासत इति चेन्न—लाघवात्प्रतियोगिज्ञानमेवाभावज्ञाने कारणं न तु तत्प्रमैव गौरवादिति भावः । नन्वेवं शब्दे प्रवृत्तिनिमित्तत्वाभावे उपनिषदेकगम्यत्वं व्याहतमित्यत आह—तदेतदिति । शबलेन गृहीतसम्बन्धाः शब्दाः धर्मवैशिष्ट्याभावात्यागेन सोऽयं देवदत्त इतिवत् चैतन्यं ब्रह्मोपलक्षयन्ति तेन ब्रह्मणि प्रवृत्तिनिमित्ताभावेपि शास्त्रयोनित्वं ब्रह्मणः "अत एव धर्मोपग्रह" इत्यत्रा वाच्यत्वमात्रमुक्तमिह तु लक्ष्यत्वमिति न विरोधः । यथा च—लक्ष्यतावच्छेदकं

खण्डनरत्नमालिका ।

नन्वेतादृशे ब्रह्मणि प्रमाणमस्ति न वा नाद्यः रूपाद्यभावेन प्रत्यक्षानुमानोपमानानां प्रवृत्तिनिमित्ताभावाच्छब्दस्य चासंभवात् । न द्वितीयः अद्वैतासिद्धेरित्याशङ्क्याह—तदेतत्तु इति । यथा काकवद्देवदत्तस्य गृहमित्यादौ उद्गततृणत्वादिकं काकादिपदावाच्यमपि तात्पर्यमूलिकया लक्षणयोच्यते तथा शब्दावाच्यमपि अद्वैतं ब्रह्म श्रुतिरूपेण

**तेन परमार्थतोऽभिधानाभिधेयभावविरहे तात्पर्य्यतः श्रुतिस्तस्मिन्नविद्यादशायां पराभ्युपगमरीत्या प्रमाणमित्युच्यते ।**

खण्डनभावदीपिका ।

स्यादित्यत आह—**तेनेति** । तत्र कथं प्रामाण्यमित्यत आह । **पराभ्युपगमेति,** ।

शाङ्करी ।

यथोक्तगुणत्वादिकं काकादिपदैरवाच्यमपि बोध्यते तात्पर्य्यवशात्, यथा च "गच्छ गच्छसि चेत्कान्त! पन्थानः सन्तु ते शिवाः । ममापि जन्म तत्रैव भूयाद् यत्र गतो भवान्-" इत्यादावपदार्थोऽपि गमनाभावः प्रतीयते इति भावः । ननु सर्वथैवाऽवाच्ये तात्पर्य्यमपि दुर्घटमित्यत आह—**तेन परमार्थत इति** । पारमार्थिकं वाच्यवाचकभावं न मन्यामहे, न तु काल्पनिकमपि इति भावः । ननु तात्पर्य्यमपि तत्प्रतीतिप्रयोजकत्वं वा मीमांसकानामिव, तत्प्रतिपिपादयिषा वा नैयायिकानामिव स्यात्,

खण्डनभूषामणिः ।

मनसा सहेति श्रुत्या ज्ञानस्य मनोऽग्राह्यत्ववद्वागगोचरत्वस्याप्युक्तत्वात् सत्यज्ञानादिवाक्यं लक्षणया तत्प्रतिपादयति तथा च सा श्रुतिर्वाच्यत्वाभावाभिधानपरा तं त्वौपनिषदं पुरुषं पृच्छामीति श्रुतिविरोधात् न तु लक्ष्यत्वनिषेधपरेति । **उपलक्षणन्यायादिति** । यथान्यतः सिद्धमेव देवदत्तगृहं काकवन्तो देवदत्तगृहा इति वाक्यं परतो व्यावृत्तिमुखेन प्रतिपादयति तथ स्वतः सिद्धमपि ब्रह्माविद्यातत्कार्यव्याकीर्णं ततो व्यावृत्तिसिद्ध्यर्थं किञ्चिदुपलक्षणभूतधर्मं प्रतिपादयन्ती श्रुतिः प्रमाणमिति पराभ्युपगमरीत्या कथ्यते । **एतेन** ज्ञानस्याद्वैताद्यात्मकत्वे प्रमाणमस्ति न वा अन्त्ये अद्वैतादिरूपासिद्धिः आद्ये न प्रत्यक्षादि रूपादिविरहात् नापि शब्दः प्रवृत्तिनिमित्ताभावादित्याशङ्का **परास्ता** । **यद्वा** शबले गृहीतसम्बन्धाः शब्दा भागत्यागलक्षणया सोयं देवदत्त इतिवच्चैतन्यं ब्रह्म लक्षयन्ति तेन ब्रह्मणि प्रवृत्तनिमित्ताभावेपि शास्त्रयोनित्वं ब्रह्मणो वेदान्तशास्त्रोक्तं संगच्छते । ननु ब्रह्मणि प्रमाणप्रमेयविभागाभावात् कथमुपलक्षणन्यायेनापि श्रुतेः प्रामाण्यमित्याशङ्क्य **अविद्यादशायामिति** । प्राग्विद्योत्पत्तेः सर्वमस्त्येवेति भावः । शब्दाविषयस्य ब्रह्मणः

खण्डनदर्पणः ।

विना न लक्षणा तथा प्रमाणप्रमेयविभागाभावान्नोपलक्षणन्यायेनापि श्रुतेः प्रामाण्यमेतदाशङ्क्य प्राग्विद्योत्पत्तेरविद्यादशायां सर्वमस्त्येवोत्तरकालन्तु तदभावो नानिष्ट इत्याह—**तेनेति** । शक्त्या शब्दाविषयस्य ब्रह्मणः कथं श्रुतिप्रमाणकत्वमिति

खण्डनरत्नमालिका ।

प्रमाणेन बोध्यत इत्यर्थः । अयमेव उपलक्षणन्याय इत्युच्यते । अन्यतः सिद्धस्य देवदत्तगृहस्य परतो व्यावृत्तिद्वारा काकवद्देवदत्तस्य गृहमिति यथा प्रमाणं तथा स्वतः सिद्धस्य ब्रह्मणः अविद्यातत्कार्य्यव्यतिकीर्णस्य ततो व्यावृत्तये किंचिदुपलक्षणप्रतिपादनद्वारा वेदान्तवाक्यं प्रमाणमिति भावः । ननु ब्रह्मणि प्रमाणप्रमेयभावविरहात् कथमुपलक्षणन्यायेनापि श्रुत्या तद्बोधनमित्याशङ्क्याह-**तेनेति** । विद्योत्पत्तेः—प्रागविद्यादशायां

खण्डनभावदीपिका ।

यत्परः शब्दः स शब्दार्थ इति न्यायाद्विषं भुङ्क्ष्व इति वाक्यस्य शत्रुगृहभोजननिवृत्त्यभिधायकत्वाभावेऽपि तत्र तात्पर्यतः प्रामाण्याङ्गीकाराच्चेत्यर्थः । ननु श्रुतिप्रमाण-

शाङ्करी ।

तथाच तदादाय पुनर्द्वैतापत्तिरित्यत आह—पराभ्युपगमेति । ननु त्वन्मते

खण्डनभूषामणिः ।

कथं श्रुतिप्रमाणकत्वमित्याशङ्क्याह पराभ्युपगमरीत्येति। पदार्थ एव वाच्यो न वाक्यार्थस्तस्य तात्पर्यगोचरत्वात् पदाभिहितानामेव पदार्थानां योग्यतादिबलेन वाक्यार्थप्रतिपादकत्वाभ्युपगमाच्चेति विद्यासागरस्तन्न तात्पर्यस्य वृत्तिनिर्वाच्यत्वात्। न च नैयायिकानामिव विनापि लक्षणां वाक्यार्थवृत्तिरिति वाच्यं तेषामपि पदार्थप्रतियोगिकत्वमेव संसर्गगतं स्वरूपसन्नियामकं न चाखण्डे ब्रह्मणि तदस्ति। मितभाषिण्यां त्वभिधानाभिधेयार्थकस्य भेदस्याप्यभावात् कथं श्रुतिप्रमाणकं ब्रह्मेत्याशङ्क्याह तदेतदिति यथा यत्र रजतमभात् सा शुक्तिरिति मिथ्याभूतेनापि रजतेन शुक्तिरुपलक्ष्यते लिप्यक्षरैर्वा वर्णस्वरूपं तथा व्यवहारमात्रसिद्धया श्रुत्या तात्पर्यवृत्त्या तत्प्रतिपादनमिति तदपि न तात्पर्यस्यावृत्तित्वात् अन्यथा लक्षणोच्छेदापत्तेः । मिश्रास्तु उपनिषदां ब्रह्मणि तात्पर्यमात्रेणैव प्रामाण्यं न तु ब्रह्म पदार्थो वाक्यार्थो वा धर्मोपग्रहं विना शक्तेर्योग्यतादेश्चाभावात् नित्यं ज्ञानमानन्दं ब्रह्मेति नित्यविज्ञानानन्दपदैराविद्यक एवार्थं प्रत्येकं गृहीतशक्तिभिः संभूयोच्चारणमात्रात्तात्पर्यबलाच्चाविद्यादशायां ब्रह्म बोध्यते इति तत्र श्रुतीनां प्रामाण्यमित्यर्थः। उपलक्षणन्यायादित्यस्य च यथा काकादिपदैरुत्तृणत्वादिकमनभिधेयमपि बोध्यते तात्पर्यबलात् यथा वा "गच्छ गच्छसि चेत्कान्त पन्थानः सन्तु ते शिवाः । ममापि जन्म तत्रैव भूयाद्यत्र गतो भवानि"त्यत्र गमननिषेधः पदार्थवाक्यार्थभिन्न एव प्रतीयत तद्वदित्यर्थः । ननु सर्वथैवावाच्ये तात्पर्यमपि दुर्घटमित्याशङ्क्य पारमार्थिकमेव वाच्यत्वन्न मन्यामहे न तु काल्पनिकमपीति व्याचक्षते तदसत् तात्पर्यमात्रेण प्रामाण्यासंभवात् । वस्तुतस्तूपलक्षणेन यथोत्तृणत्वं बोध्यते लक्षणया तथा सत्यादिपदैरपि ब्रह्मस्वरूपं तथा च स्वरूपलक्षणया तत्र तद्वाक्यं प्रमाणं प्रकाश्यत इत्यस्याज्ञानात्मकारणहीनं क्रियत इत्यर्थः। ननु श्रुतिरप्यविद्यमाना कथं प्रमाणमित्याशङ्क्याह अविद्यादशायामिति। व्यावहारिकी सतीत्यर्थः। ननु श्रुतिर्वेदकर्तुर्भगवतो'जन्या कथं भगवति प्रमाणं भवतु प्रमाणतः पूर्वं तस्यासत्त्वापत्तेः। पौरुषेयतया श्रुतेस्तन्मूलातीन्द्रियवाक्यार्थीभूतब्रह्मज्ञानविरहे कर्तृतया अप्रमाण्यापत्तेश्चेत्या-

खण्डनदर्पणः

तत्राह-परेति । नित्यं विज्ञानमानन्दमित्यादावखण्डस्य ब्रह्मणो वाक्यार्थत्वाद्वाक्या-

खण्डनरत्नमालिका ।

सर्वमस्ति उत्तरकाले तु तदभावः इति श्रुत्या तद्बोधनसम्भव इति भावः । ननु तीरादेस्तीरादिपदवाच्यस्यैव 'गङ्गायां घोष' इत्यादौ लक्ष्यता दृष्टा इति ब्रह्मण्यपि किंचित्पद-

वस्तुतस्तु स्वात्मसिद्धमेव चिद्रूपम् ।

खण्डनभावदीपिका ।

कत्वे ब्रह्मणः 'अन्यदेव तद्विदितात्' इति श्रुतिविरोध इत्यत आह । वस्तुतस्त्विति ।

शाङ्करी ।

परमार्थतः किमत्र प्रमाणमत आह—वस्तुतस्त्विति । यद्यपि चिद्रूपस्यात्मनः सिद्धत्वं त्वया दुरुपपादं, नहि प्रमाणमन्तरेण तदुपपादयितुं शक्यं, वैपरीत्यमेव तथासति किं न स्यात्, पारिशेष्यादिप्रमाणाभिधानं तव द्वैतापादकं, प्रमाणाभिधाने चापर्य्यवसानं समानं तथापि तदितरखण्डनयुक्त्यवष्टम्भादिदमुक्तम् । ननु स्वेन प्रकाश्यते इति स्वप्रकाशपदं कर्मव्युत्पन्नं, तच्चानुपपन्नं, क्रियाकर्मभा-

खण्डनभूषामणिः ।

शङ्कयाह पराभ्युपगमेति यदा कदाचित् प्रमाणसत्त्वमेव प्रमेयसत्त्वौपयिकं अन्यथा चक्षुरादेरपि रूपोपलब्धिपूर्वमसत्वापत्तौ चाक्षुषज्ञानाभावप्रसङ्गात् न वा वेदः पौरुषेयः परमतसिद्धस्य मीमांसकमतसिद्धस्यानुपूर्व्या भगवतो ऽस्वातन्त्र्याभ्युपगमेन स्वतन्त्रपुरुषाप्रणीतत्वलक्षणस्यापौरुषेयत्वस्य स्वीकारात् । एवं व्यावहारिकप्रमाण सिद्धत्वेन तस्यालीकत्वं निरस्य "अन्यदथो विदितादन्यदथो अविदितादि"ति श्रुतिविरोधं परिहरति वस्तुतः स्वतः सिद्धमेव चिद्रूपमिति । तथा च ज्ञानकर्मत्वमपि न तस्य वास्तवं श्रुतेरविद्यायाश्चाभावात् परं तस्य परं प्रति बोधनार्थं वोच्यते स चेदत्रापि दोषं पश्यति तदा यावद्वेति परित्यज्य मूहूर्तमात्रं तिष्ठतु तदा ममोपरतस्यापि निष्कलङ्कं चिद्रूपं स्वत एव प्रकटं भविष्यति । ननु चिद्रूपस्यात्मसिद्धत्वमपि त्वया दुरुपपादं न हि प्रमाणमन्तरेण तदुपपादयितुं शक्यमन्यथा वैपरीत्यमेव

खण्डनदर्पणः ।

र्थस्यावाच्यत्वादपूर्वत्वेन ब्रह्मणः श्रुतिप्रमाणकत्वमिति भाव्यम् । ननु शब्दान्तरवाच्यस्य तीरादेर्लक्ष्यत्वमिति नियमदर्शनात् ब्रह्मणोपि पदवाच्यत्वं विना लक्ष्यत्वं न स्यादित्याशङ्कयाह—वस्तुत इति । स्फुरितत्वे सति वाच्यत्वाद्यसत्त्वेनालक्ष्यत्वादर्शनात् उक्तव्याप्तेरप्रयोजकत्वात् ब्रह्मणोपि स्फुरितत्वेन न लक्ष्यत्वविरोध इति भावः । ननु वेदान्तिमते ज्ञानस्य न ज्ञानविषयकत्वं संस्कारः कथं स्वाविषयकज्ञानेन जन्येत तदभावे वा कथं ज्ञानविषयकस्मरणं स्यादिति चेन्न—बोधे वृत्त्या वेदान्तिमते संस्कार-

खण्डनरत्नमालिका ।

वाच्यत्वमावश्यकं लक्ष्यत्वादन्यथाऽलक्ष्यं स्यादित्यत आह—वस्तुत इति । अवाच्यस्यापि माधुर्यविशेषस्येव अमेयस्यापि सौषुप्तसुखस्येव च अवाच्यस्यापि स्वतः सिद्धस्य ब्रह्मणो लक्ष्यत्वमिति स्फुरितत्वे सति वाच्यत्वाभावस्यालक्ष्यत्वस्य च व्याप्यव्यापकभावविरह इति नावाच्यत्वेनालक्ष्यत्वानुमानसम्भव इति भावः ।

ज्ञानस्य स्वप्रकाशत्वे कर्मकर्तृविरोधशङ्का—

**ननु च स्वप्रकाशत्वं ज्ञानस्येत्यनुपपन्नमिदं, क्रियाकर्मभावस्य भेद-व्यतिरेकेणानुपपत्तेः। कार्या क्रिया हि कर्मणो भवति, कर्म च कारणं क्रियायाः, नच स्वेनैव स्वनिष्पादनं शक्यं, पूर्वापरभावविशेषस्य हेतु-**

खण्डनभावदीपिका।

आत्मसिद्धमिति,। स्वसम्वेद्यत्वमुक्तमिति मन्वानश्चोदयति **ननु चेति**। अनुपपत्तिमेवाह-**कार्य्येति**। कर्म्मणः कर्मकारकस्येति क्रिया कार्या निष्पाद्या हि यस्मादित्यर्थः। एतावता कानुपपत्तिरित्यत आह **नचेति**। कुत इत्यत आह। **पूर्वापरेति**।

शाङ्करी।

वस्य भेदघटितत्वादित्याशङ्कते—**ननु चेति**। ननु क्रियाकर्मभावस्याऽभेदे को विरोधः? इत्यत आह—**कार्य्येति**। अभेदे जन्यजनकभावो विरुद्ध इत्यर्थः। एतदेव कथमत आह—**पूर्वापरेति**। विशेषः = नियमगर्भत्वं, तथाच नियतपूर्ववर्त्तित्वं

खण्डनभूषामणिः।

तथा सति किन्न स्यात् परिशेषादिप्रमाणाभिधानं च द्वैतापादकमिति मैथिलानामस्यज्ञानतः आत्मसिद्धत्वस्य भवदभिमतप्रमाणासिद्धत्वात्। न च तावतैव द्वैतापत्तिरपारमार्थिकेनैव तत्सिद्धेः। नचापारमर्थिकेन वैपरीत्यमेव सिध्यत्विति वाच्यं कीदृशं तदपारमर्थिकं तदिति त्वयाद्याप्यनुपन्यासात् समयबन्धसिद्धपारमर्थिकत्वोदासीने पारमार्थिकेनैव व्यवहारसिद्धेः किंचात्मसिद्धत्वं धर्म एव प्रमाणाभावान्न सिद्ध्यति चिद्रूपं तु दुरपन्हवमेवेति न किञ्चिदेतत्। ननु तत्प्रकाशाजनकत्वे कथं वेदान्तानां तत्र प्रामाण्यं न हि घटमप्रकाशयतश्चक्षुषो घटे प्रामाण्यमिति चेन्न ब्रह्मणः स्वप्रकाशतया तत्प्रकाशस्याजन्यत्वेपि तदावारकाज्ञाननिवर्तकांतःकरणवृत्तिविशेषजनकतया वेदान्तानां प्रामाण्याभ्युपगमात् न केवलं वेदान्तानामेवेयं रीतिः किन्तु सर्वेषामेव शब्दानामखण्डार्थानां। ननु ज्ञानं न स्वप्रकाशं शाब्दगम्यत्वात् धर्मवत् विपक्षे त्वनुपपद्यमानक्रियाकर्मभावो बाधक इत्यभिप्रेत्य पूर्वपक्षयति-**नन्विति**-प्रकाशक्रियाप्रकाशकर्मणो र्भेदव्याप्तत्वात्तदभावेऽनुपपत्तिमाह-**कार्य्या हीति**। कार्य्या जन्या। ननु क्रियायाः कार्यत्वेपि कर्तृकार्यत्वं स्यात् कार्मकार्यं कथमित्याशङ्क्याह **कर्म च कारकमिति** कारकत्वादेव कर्म क्रियायाः कारणमित्यर्थः। ननु प्रकाशक्रियायाः कार्यकारणभावः स्वत एवान्यथा जन्यसर्वविषयज्ञानस्य सकर्मकतानुपपत्तिरित्याशङ्क्याह **स्वेनैवेति**। तथा च

खण्डनदर्पणः।

जननात्। न हि नित्यानुभवस्य संस्कारः सम्भवति वृत्तिस्तु न नित्येति दिक्।
स्वप्रकाशत्वं स्वसंवेद्यत्वमिति मन्वान आक्षिपति—**नन्विति**—प्रकाशक्रियाप्रकाश्यकर्मणोर्भेदनियतत्वाद्भेदाभावाच्च ज्ञानस्य स्वप्रकाशत्वमिति। **ग्राहकक्रियेति**—भावस्य जन्यजनकभावस्य। ननु क्रियाकर्मभावस्याभेदे को विरोध इत्यत आह—
[illegible] जन्यजनकभावो विरुद्ध इत्यर्थः। एतदेव कथमित्याह—

**हेतुमद्भावरूपत्वात्, नच तस्मादेव तदेव पूर्वमपरं च सम्भवति 'तदनवच्छिन्नकालविशेषस्य तत्पूर्वशब्दार्थत्वात्, तदा च तस्य सद्भावस्वीकारे स एव कालस्तदवच्छिन्नस्तदनवच्छिन्नश्चेति विरोधात् ।**

खण्डनभावदीपिका ।

पूर्वापरीभावविशेषो नियतपूर्वापरीभावः । अस्त्येकस्मिन्नेव पूर्वापरीभावः एकस्याप्यनेककालसम्बन्धित्वादित्यत आह—**नचेति** । कुत इत्यत आह—**तदनवच्छिन्नेति** । कार्य्येणानवच्छिन्नो हि कालः कार्य्यपूर्वकाल इत्यर्थः । एवमपि किमित्यत आह—**तदा चेति** । तस्य कार्य्यस्य स्वानच्छिन्न-

शाङ्करी ।

हेतुत्वं, तन्निरूपितनियताऽऽनन्तर्य्यं हेतुमत्त्वं, तच्चाभेदे विरुद्धमित्यर्थः । एतदेव कथमत आह । **तदनवच्छिन्नेति** । कार्य्यानवच्छिन्नो हि कालः कार्यपूर्वकालः, कार्यमेव च कारणम्, तथाच स्वानवच्छिन्ने काले स्वमित्येको विरोधः, स्वकाल एव स्वाऽकाल इत्यपरः, तदवच्छिन्न एव कालस्तत्प्रागभावावच्छिन्न इत्यर्थः । स्यादयं विरोधो यदि

खण्डनभूषामणिः ।

जन्यज्ञानस्य सर्वस्यैव नास्त्येव सकर्मकत्वं विषयत्वञ्चेति भावः । **विशेषस्य**—अनन्यथासिद्धत्वघटितस्येत्यर्थः । एकस्याप्यनेककालसम्बधो भवतीत्यत आह—**न च तस्मादेवेति** । द्रव्याद्याकारेणाभेदेपि मृद्घटयोः पूर्वापरभावोस्तीत्यत आह—**तदेवेति** । **कर्मणा इति** । (१)सकर्मिका क्रिया कर्म विना कथं स्यादिति भावः । **तदा चे-**

खण्डनदर्पणः ।

**पूर्वापरेति** । नियतपूर्ववर्तित्वं हेतुत्वं तन्निरूपितनियतानन्तर्यञ्च हेतुमत्त्वमभेदे विरुद्धमित्यर्थः । एतदेव कथमत आह—**तदनवच्छिन्नेति** । **विरोधादिति** । कार्यानवच्छि-

खण्डनरत्नमालिका ।

ननु 'स्वेन प्रकाश्यते' इति स्वप्रकाशपदं कर्मव्युत्पन्नमनुपपन्नं क्रियाकर्मभावस्य भेदघटितत्वादित्याशङ्कते—**नन्विति** । **कर्म च कारणमिति** । क्रियाजनकत्वं कारकत्वमिति सिद्धान्तादिति भावः। **स्वनिष्पादनं**—स्वस्य जननमित्यर्थः । **पूर्वापरभावविशेषस्येति** । विशेषो नैयत्यम् । तथाच तन्निरूपितान्यथासिद्धिशून्यत्वे सति तन्नियतपूर्ववर्तित्वं हेतुत्वं तन्निष्ठान्यथासिद्ध्यनिरूपकत्वे सति तन्नियतोत्तरवर्त्तित्वं कार्यत्वमित्यर्थः । ननु ततः किमित्यत आह—**नचेति** । कुतो न संभवतीत्याह—**तदनवच्छिन्नेति** । **अनवच्छिन्नः**-अनाश्रयः । कार्येणानवच्छिन्नः कालः कार्यात्पूर्वकालस्तस्मिन् कार्यसद्भावः स्वीक्रियते न वा न चेदेकस्य कार्यकारणभावासम्भवः सिद्धः स्वीक्रियते चेत्तदाह—**तदेति** । तदुक्तं कुसुमाञ्जलौ "उत्पत्तेः पूर्वं स्वयमसतः स्वो-

(१) एतद्ग्रन्थदर्शनेन मूले पाठभेदः प्रतीयते ।

ज्ञानस्य स्वप्रकाशत्वे क्रियाकर्मविरोधपरिहारः—

**नैवम्, क्रियायाः कर्मजन्यतानियमानङ्गीकारात्, सर्वथैवानागतवि-**

## खण्डनभावदीपिका ।

कालेऽपि सद्भावस्वीकारे स एव पूर्वकालस्तेनावच्छिन्नोऽनवच्छिन्नश्चेति विरोध इत्यर्थः । अनङ्गीकारपरास्तमेतदिति परिहरति—**नैवमिति** । कुतो नाङ्गीक्रियत इत्यत आह—**सर्वथेति** । यागादेरतीतस्यापूर्वादिद्वारा फलकारणत्वमभ्युपगम्यते यथा

## शाङ्करी ।

कर्म कारकं भवेत्तदेव तु नास्तीत्याह—**क्रियाया इति** । ननु नियतपूर्ववर्तित्वे सत्यपि कथमस्याऽकारणत्वमत आह । **सर्वथेति** । भाविव्यक्तिविषयकज्ञानेच्छादौ व्यभिचारान्नियतपूर्ववर्तितैवास्य नास्तीत्यर्थः । ननु यद्येवं तदा पाणिनेः कारक-

## खण्डनभूषामणिः ।

ति । कारणत्वप्रयुक्तं तत्कालावच्छिन्नत्वं कार्यत्वप्रयुक्तस्तदभाव इति भावाभावयो-र्विरोध इत्यर्थः । **नैवमिति** । यद्यपि स्वरूपासिद्धो वेदान्तिमते हेतुस्तथापि क्रियायाः कर्मभावस्य विरोधमेव परिहरति । क्रियामात्रस्य न कर्मजन्यताऽकर्मकक्रियायां व्यभि-चारात् । नापि सकर्मकक्रियाया उत्पाद्यकर्मणः क्रियाजन्यत्वात् । ननु तत्र घटस्य कपा-लात्मना विद्यमानस्यैव घटकृतिकर्मत्वमित्याशङ्क्याह—**सर्वथैवानागतविषय-ज्ञान इति** । अतीतविषयकज्ञानस्य नातीतविषयजन्यता सम्भवति ध्वस्तस्याजनकत्वा-

## खण्डनदर्पणः ।

त्पूर्वकालः कारणकालः । कार्यमेव यदि कारणं तदा स्वानवच्छिन्ने काले स्वस्थिति-विरोधादित्यर्थः । **नैवमिति** । क्रियामात्रस्य कर्मजन्यत्वाभावादकर्मकधात्वर्थे व्य-भिचारात् । नापि ज्ञाने जन्यत्वनियमः भूतभाविविषयकज्ञाने व्यभिचारात्तथा च कर्म-जन्यत्वाभावेऽप्यभेदेऽपि विषयविषयिभावः ईश्वरज्ञानमिव प्रमेयं सर्वमितिज्ञानमिव च

## खण्डनरत्नमालिका ।

त्पत्तावप्रभुत्वेन स्वस्मादितिपक्षानुपपत्तेः पौर्वापर्यनियमश्च कार्यकारणाभावो न चेकं पूर्वमपरं च तत्त्वस्य भेदाधिष्ठानत्वादिति" इति । "तत्त्वस्य—पौर्वापर्यस्येत्यर्थ" इति **प्रकाशः** ॥ स्यादेष दोषो यदि क्रियायाः कर्मजन्यत्वनियम आस्थीयेत स एव नेत्या-शयेन परिहरति—**नैवमिति** । **नियमानङ्गीकारादिति** । अकर्मकधात्वर्थेषु कर्मणोऽ-भावेन अतीतार्थज्ञाने कर्मणः कार्याव्यवहितपूर्ववर्तित्वाभावेन च व्यभिचारितया कर्म-जन्यत्वनियमस्याङ्गीकर्तुमसम्भवादितिभावः । ननु सकर्मकक्रियायां कर्मजन्यत्व-नियमः स्वीक्रियते अतीतार्थविषयकज्ञाने च अतीतस्य संस्कारात्मना स्थितस्य क्रिया-जनकत्वे बाधकाभाव इत्यत आह—**सर्वथैवेति** । अनागतत्वादेव संस्कारोऽपि नास्ती-

षयविज्ञाने तदसम्भवात्; क्वचिज्जनकतामादाय च कर्मणि कारकत्वव्यपदेशात्। करणव्यापारविषयत्वाद्वा परसमवेतक्रियाफलभागित्वाद्वा

खण्डनभावदीपिका ।

तथाऽनागतस्य व्यापाराद्वारा फलकारणत्वं नास्ति व्यापारस्यानुत्पन्नत्वादिति जन्यत्वं विज्ञानस्य न सम्भवतीत्यर्थः। कथं तर्हि पाणिनेः कर्मणि कारकत्वव्यवहार इत्यत आह—क्वचिदिति । विद्यमानस्थले जनकत्वस्य सम्भवादित्यर्थः । ननु क्वचिज्जनकतामादाय

शाङ्करी ।

मध्ये कर्मपरिगणनं किं निबन्धनमित्यत आह—क्वचिदिति । 'आत्मानं जानामि' इत्यादौ कर्मणः क्रियाजनकत्वमपि सम्भवतीति तथा परिगणनमित्यर्थः। ननु तथाप्यतीतादिसाधारणकर्मपदप्रवृत्तिनिमित्ताभावात्कथमनुगतः कर्मव्यवहारः ? इत्यत आह—करणेति । अनागतादिकर्मणि करणस्य चक्षुरादेर्लिङ्गादेर्वा प्रत्यासत्यादि—

खण्डनभूषामणिः ।

देव। यदि च संस्कारात्मना स्थितस्य स्मृतिजनकत्वं सम्भाव्येतापि नत्वनागतस्यानागतत्वादेवानागते संस्कारस्याप्यभावात्। यद्यप्यनागतस्यापि जात्यात्मना तथा भावोऽस्ति तथापि यत्रैकैव व्यक्तिर्न जात्यात्मनापि तस्याः सत्त्वं भावित्वेनैव तस्याविषयत्वादित्याशयेन आह—सर्वथैवानागतेति । क्रियाकर्मभावे सत्यपि जन्यजनकभावानभ्युपगमात्तत्प्रयुक्तो विरोधो नास्तीत्यर्थः । कथं तर्हि कर्मणः कारकत्वव्यवहार इत्याशङ्क्याह—क्वचिज्जनकतामादायेति । क्वचित्प्रत्यक्षे । तत्र हि संप्रयोगस्य विषयव्यापारत्वाद्विषयस्य कर्मणोऽस्ति कारकत्वम् । न च प्रत्यक्षं वृत्तिरूपमिति न क्वचिदपि संवेदनं जन्यमिति वाच्यं किं तर्हि क्रियाजनकयोरनुगतकर्मव्यवहारनिमित्तं, वैयाकरणानां हि शक्तिविशेषः कर्मता सा अनागते न सम्भवतीति त्वयोक्तमित्यत आह—करणेति । तथा च पराभिमतं लक्षणद्वयमेव निमित्तम् । "अनागतादिकर्मणि करणस्य चक्षु-

खण्डनदर्पणः

न विरुद्धमिति दिक् । कर्मणि कारकत्वव्यपदेशं समर्थयते—क्वचिदिति । एवञ्च वृत्तिरूपज्ञानक्रियामादाय जानातेः सकर्मकत्वव्यपदेशो न त्वनुभवस्य ब्रह्मरूपस्य कर्मजन्यत्वमादायेति रहस्यम् । क्वचित्क्रियायाः कर्मजन्यत्वमङ्गीकृत्य पर्यहार्षीत्संप्रति कर्मत्वमेव न निरूपणगोचर इत्याह—किमिति । तत्कर्मत्वञ्च किमित्यर्थः । मीमांस-

खण्डनरत्नमालिका ।

स्यर्थः । नन्वेवं ज्ञानक्रियायां कर्मजन्यत्वाभावे सकर्मकत्वव्यवहारो न स्यादत आह—क्वचिदिति । वर्तमानविषयकजन्यप्रत्यक्षे गमनादिक्रियायां चेत्यर्थः । विषयतासम्बन्धेन प्रत्यक्षं प्रति तादात्म्येन विषयस्य कारणत्वादितिभावः तच्च ज्ञानं वृत्तिरूपमिति न क्वचिदपि संवेदनं जन्यमिति रहस्यम् । पूर्वं क्रियायाः कर्मजन्यतां क्वचिदङ्गीकृत्य पर्यहार्षीत् सांप्रतं कर्मत्वमेव दुर्निरूपमित्याह—करणेति । ननु कारणव्यापारविषयत्वं—

**कर्मलक्षणाद् विनापि क्रियाजनकत्वेन कर्मव्यवहारोपपत्तेः।**

खण्डनभावदीपिका।

माभूद्विरोधः किन्तु कर्मलक्षणस्य भेदगर्भत्वेनाभेदे विरोध इत्याशङ्कां परिहर्तुं कर्म्मलक्षशाङ्करी।

लिङ्गपरामर्शादिलक्षणव्यापारविषयत्वात्तद्व्यवहार(१) इत्यर्थः। अपिच त्वया निरुच्यमानं कर्मलक्षणं कथञ्चिदपि विचारं न सहिष्यते इत्याह—**किञ्चेति**। परपदं कर्मभिन्नपरं, तथाच परसमवेतायाः क्रियाया यत्फलं तद्भागित्वमित्यर्थः। 'वृक्षात्पर्णं पतति' इत्यत्र वृक्षस्याऽपादानस्य पर्णगतपतनक्रियाया यत्फलं विभागस्तच्छा-

खण्डनभूषामणिः।

रादेर्लिङ्गादेर्वा प्रत्यासत्तिलिङ्गपरामर्शादिरूपव्यापारविषयत्वसत्त्वात् व्यवहार इत्यर्थः" इति **शङ्करमिश्राः**। यद्यपि अनागते चक्षुरादिव्यापारो लौकिको नास्ति तथाप्यलौकिकोऽस्त्येवेत्यर्थः। वस्तुतस्त्वेतल्लक्षणवज्जातीयत्वेनैव तत्र कर्मव्यवहारः जातिश्च क्वचित् सामान्यं क्वचिच्चोपाधिरिति। कर्मणि कारकत्वव्यपदेशादित्यनन्तरं "करणव्यापारविषयत्वात्कर्मलक्षणाद्विनापि क्रियाजनकत्वात् कर्मव्यवहारोपपत्तेरि"ति पाठस्तु किंचेत्यतः प्राक्तनः **शङ्करमिश्रसम्मतः**। "करणव्यापारविषयत्वात् परसमवेतक्रियाफलभागित्वाद्वा कर्मलक्षणादि"त्यादिपाठस्तु **मैथिलपुस्तकस्थो** भट्टस्यापि सम्मतः। **विद्यासागरस्त्विमं** पाठं पूर्वं च न स्पृष्टवानेव। क्रियास्वरूपपर्यालोचनया क्रियाकर्मणोरभेदे दोषं परिहृत्य कर्मस्वरूपपर्यालोचनयापि परिहरति—**किञ्चेति**। परसमवेतत्वविशेषणं विना गन्तर्य्यपि ग्रामगमनकर्मतापत्तिरत इदम्। ननु ज्ञानस्य कर्मत्वं विरुद्धं तस्य त्वया परसमवेतत्वानभ्युपगमात् ज्ञानस्य गुणत्वाभावेन तस्यैवात्मत्वादित्याशयेन शङ्कते—**परसमवेतेत्यादि**। परपदं कर्मत्वा-

खण्डनदर्पणः।

कानां कर्मलक्षणं शङ्कते-**परेति**। परपदं कर्मभिन्नपरम्। तथाच परसमवेतायाः क्रियायाः

खण्डनरत्नमालिका।

करणजन्यव्यापारवत्त्वं करणव्यापारजन्यफलशालित्वं वा नाद्यः दात्रेण लूनवानित्यादौ हस्तादिकरणजन्यव्यापारवति दात्रादावतिव्याप्तेः न द्वितीयः दण्डेन घट उत्पद्यते इत्यत्र दण्डव्यापारजन्योत्पत्तिरूपफलाश्रयत्वाद्घटेऽतिव्याप्तेरत आह-**परसमवेतेति**। परसमवेतक्रियाजन्यफलशालित्वमित्यर्थः। फलशालित्वमात्रोक्तौ पुण्यफलसुखादिभाजि अतिव्याप्तिरतः क्रियेति। तावन्मात्रोक्तौ चैत्रवृत्तिक्रियाजन्यसंयोगरूपफलस्य ग्रामे इव चैत्रेऽपि सत्त्वाच्चैत्रस्य कर्मत्वापत्तिरतः परसमवेतेति क्रियायां विशेषणम्। परत्वं च द्वितीयाप्रकृत्यर्थापेक्षया तथाच चैत्रान्यसमवेतक्रियाजन्यफलशालित्वाभावाच्चैत्रस्य न

(१) चक्षुरादेरलौकिकप्रत्यासत्त्यादिलक्षणव्यापारविषयत्वात् लिङ्गादेर्वा लिङ्गपरामर्शादिलक्षणव्यापारविषयत्वादनागतकर्मणि कर्मत्वव्यवहार इतियोजना।

कर्मलक्षणस्य विचारासहत्वादप्युक्तदोषपरिहारः—

किञ्च तत् कर्मत्वं यत्स्वं प्रति विरुध्यते ? । परसमवेतक्रियाफल-भागित्वम् ?-इति चेन्न, अपादानस्यापि व्याप्तेः । अपादानं कर्मापि ?- इति चेन्न; वृक्षात्पतति पर्णम्'-इति वत् 'वृक्षं पर्णं पतति'-इत्यपि स्यात् ।

खण्डनभावदीपिका ।

णमाक्षिपति, किञ्च कर्म्मेति । तार्किकमतमवलम्ब्य शङ्कते—परेति । परस्मिन्देवदत्तादौ या गमनादिक्रिया तज्जन्यो यो ग्रामादिना संयोगः तच्छालि कर्म्मकारकं भवतीत्यर्थः । अतिव्याप्त्या लक्षणं दूषयति—अपादान इति । क्रियाजन्यविभागफलशालिनो वृक्षस्यापि कर्म्मता प्रसज्यतेत्यर्थः । तत्रापि कर्मत्वमस्तीति तेन नाव्याप्तिरिति शङ्कते अपादानमिति । तर्हि द्वितीयाविभक्तिप्रयोगोऽपि स्याद् वृक्षमित्याह—वृक्षादिति ।

शाङ्करी ।

लिनः कर्मत्वं स्यादित्याह—अपादानस्येति । नन्वपादानस्य कर्मत्वमपि स्यात् को दोष इत्याह—अपादानमिति । अपादानस्य कर्मत्वे कर्मणि द्वितीया इत्यनुशासनबलात् 'वृक्षं पर्णं पतति' इत्यपि प्रयुज्येतेत्याह—वृक्षादिति । ननु वृक्षस्य सत्यपि कर्मत्वेऽपादानत्वमेव विवक्षितमिति पञ्चम्येव भवति न द्वितीयापी-

खण्डनभूषामणिः ।

भिमतभिन्नपरम् । पितृकृतपुण्यफलोपभोक्तरि पुत्रेऽतिव्याप्तिरिति क्रियापदम् । यद्यपि तदपि यागक्रियायाः फलं भवत्येव तथापि साक्षात्फलं विवक्षितं तत्पूर्वत्वमेव कथमिति घटो भवतीत्यत्र कपालसंयोगफलं घटस्योत्पत्तिस्तच्छालिनि घटेऽतिव्याप्तिरपि

खण्डनदर्पणः ।

यत्फलं तद्योगित्वमित्यर्थः । गमनकर्तर्यतिप्रसङ्गवारणायोक्तं—परेति । दूषयति नेति । वृक्षात्पर्णं पततीत्यत्र वृक्षस्यापादानस्य पर्णगतक्रियाफलविभागाश्रयत्वात् कर्मत्वं स्यादित्यर्थः । नन्वेवपादानस्य कर्मत्वमपि स्यात् को दोष इत्याह—अपादानमिति । अपादानस्य कर्मत्वे कर्मणि द्वितीयेत्यनुशासनात् वृक्षं पर्णं पततीत्यपि प्रयुज्येतेत्याह—वृक्षादिति । ननु वृक्षस्य कर्मत्वेपि अपादानत्वमेव विवक्ष्यत

खण्डनरत्नमालिका ।

कर्मता एवं च कर्मत्वस्य भेदगर्भत्वाद्भेदाभावेऽनुपपत्तिरित्यर्थः । अपादानस्येति । प्रयागात्काशीं गच्छतीत्यादौ संयोगानुकूलव्यापारजन्यसंयोगस्य काश्यामिव संयोगानुकूलव्यापारजन्यविभागस्य प्रयागेऽपि सत्त्वात् प्रयागस्य कर्मत्वापत्तिरिति भावः । इष्टापत्तिमाशङ्क्य परिहरति—अपादानमिति। वृक्षं पर्णं पततीति । पर्णसमवेतक्रियाजन्य विभागरूपफलाश्रयत्वस्य वृक्षे सत्त्वाद् वृक्षस्य कर्मत्वापत्तिरिति भावः । ननु परसमवेतक्रियाजन्यफलशालित्वरूपकर्मत्वस्य वृक्षे सत्वेऽपि न वृक्षं पततीति प्रयोगः तादृशफलशालित्वस्य वृक्षेऽविवक्षणात् विवक्षायाः एव कर्मसंज्ञाप्रयोजकत्वादित्याह—

**विवक्षातः कारकाणि भवन्तीति तदविवक्षया नैवम् ?-इति चेन्न, वस्तुतः सतस्ताद्रूप्यस्य यदि विवक्षा स्यात्तदा तदपि स्यात्। अपादानस्य कर्मत्वं न विवक्ष्यते इति शाब्दिकसंप्रदायोऽयम् ?-इति चेत्,**

खण्डनभावदीपिका ।

विद्यमानेऽपि कर्म्मत्वे तदा तद्विवक्षाभावादप्रयोग इति शङ्कते-**विवक्षात इति** । कारकाणि भवन्ति-कारकविभक्तयो विवक्षातः भवन्तीति यावत्। कर्म्मत्वं वस्तुतो विद्यते चेत्तर्हि विवक्षाकारणस्य भावाद्विवक्षा द्वितीयाविभक्तिप्रयोगश्चेत्युभयमपि स्यादित्याह **वस्तुत इति**। अपादानत्वविवक्षायां न कर्म्मत्वविवक्षा नापि तद्विभक्तिप्रयोग इति वैयाकरणसमय इति शङ्कते-**अपादानस्येति**। अतिप्रसङ्गाऽपादानेन दूषयति-तर्हीति। वृद्धव्यवहारं विना कर्म्मत्वाधिगतिरपि न सम्भवति किमुत तत्र लक्षणोपन्यास इत्याह—

शाङ्करी ।

त्याह—**विवक्षात इति** । वास्तवं यदि कर्मत्वं तदा विवक्षायाः (इच्छायाः) प्रयोक्तृमात्रतन्त्रत्वेन कदाचित्कर्मत्वविवक्षया प्रयोगोपि स्यादित्याह—**वस्तुत इति** । ननु भवेदेवं यदि प्रयोक्तृमात्राधीना विवक्षा स्यान्न त्वेवं, किंतु शाब्दिकसंप्रदायानुबद्धा, तथाच ग्रामगमनादिवत्(१) 'वृक्षं पर्णं पतती'त्यपि न प्रयुज्यते इत्याशङ्कते-**अपादानस्येति** । अपादानात् सकलकर्मव्यवहारविरहाद्व्यवहर्त्तव्यस्य कर्मत्वस्यापि निवृत्तिः, त्वया परं स्वलक्षणाऽनुरोधेन कर्मत्वं तत्रेष्यते तदा प्रमेयत्वमेव लक्षणं क्रियतां किं पर-

खण्डनभूषामणिः ।

क्रियापदादेव निरस्ता । **अपादानस्यापीति** । पर्णपतनक्रियायाः फलस्य विभागस्य वृक्षे सत्त्वाद्वृक्षात्पर्णं पततीत्यत्र वृक्षेऽतिव्याप्तिः स्यादित्यर्थः । **तद्विति** । पर्णमित्यर्थः । **विवक्षात इति** । यदस्ति तदुच्यत एवेति नियमो नास्ति विवक्षामूलकत्वात् पौरुषेयवाक्यानामिति भावः । ताद्रूप्यस्य-कर्मत्वस्येत्यर्थः । अविवक्षानियामकाभावाद्यदि कदाचिद्विवक्षा स्यात् तदा **तदपि स्यात्**—वृक्षं पर्णं पततीत्यपि द्वितीयान्तं

खण्डनदर्पणः ।

इति पञ्चम्येव भवति न तु द्वितीयापि इत्याह-**विवक्षात इति** । वास्तवं यदि कर्मत्वं वृक्षेऽस्ति तत्र कर्मत्वविवक्षया प्रयोगोपि स्यादित्याह—**वस्तुत इति** । ननु शाब्दिकसम्प्रदायानुबद्धा विवक्षैव तत्र तत्र मूलं तदभावाच्च न तत्र कर्मत्वमित्याह—**अपादानस्येति** । प्रमाणतर्कां उपन्यस्य सम्प्रदायमात्रात्प्रत्यवतिष्ठमानस्य काचिदपि लक्ष-

खण्डनरत्नमालिका ।

**विवक्षात इति** । **वस्तुत इति** । अयंभावः वृक्षे परसमवेतक्रियाजन्यफलशालित्वस्य सतोऽविवक्षणे तादृशप्रयोगवारणेऽपि विवक्षायां तादृशप्रयोगापत्तिर्दुर्वारेत्यर्थः । ननु निरुक्तकर्मत्वस्य तत्र सत्त्वेऽपि कदापि वृक्षस्य न कर्मत्वेन विवक्षा इत्यदोष इत्याह—**अपादानस्येति**। **निवृत्तेति** । यत्र वृक्षे कोऽपि कर्मव्यवहारो नास्ति तत्र स्व

(१) 'ग्रामाद्गमनमित्यादिवत्' इति पाठ इति राममिश्रशास्त्रिणः । 'ग्रामगमन' इति निर्विभक्तिको यथा न प्रयुज्यते तद्वदित्यर्थं इति यथाश्रुतमपि साधु इत्यन्ये ।

तर्हि तत्र निवृत्तसर्वकर्मव्यवहारेपि स्वकृतकर्म्मलक्षणानुरोधेन कर्मत्वमभ्युपगच्छता वस्तुमात्रं कर्मेत्याद्यपि लक्षणं सावकाशितं स्यात् । कथं च लोकोत्तरप्रज्ञेन निवृत्तसर्वकर्मव्यवहारेपि स्वकृतकर्मत्वमस्तीत्यधिगतम् ? । अपादानेतरदीदृशं कर्म ?-इति चेन्न, तत्रापि 'नदी वर्द्धते'—

खण्डनभावदीपिका ।

कथञ्चेति । अपादानव्यतिरिक्तत्वे सति परसमवेतक्रियाफलशालि कर्म्मेति लक्षणं विवक्षितमिति शङ्कते—अपादानेति। परिहरति—न तत्रापीति। नीरसमवेतवृद्धिक्रियाजन्यसंयोगविभागफलशालिनस्तीरस्य कर्म्मत्वं प्राप्नोति। तेन तीरं वर्द्धत इत्यपि प्रयोगाद् वृधिधातोरकर्म्मकत्वं न स्यादित्यर्थः । तादवस्थ्यादिति । वृक्षात्पर्णं पतति इत्यत्र

शाङ्करी ।

समवेतेत्यादिविशेषलक्षणधारणेत्याह—तर्हीति । यद्यपि नेदं कर्मलक्षणं, किन्तु कर्मपदप्रवृत्तिनिमित्तमात्रं, लक्षणं तु कारकाणामन्योन्यव्यावृत्तं नास्त्येव उपधेयसाङ्कर्यात्, तथापि पदार्थान्तरलक्षणप्रणयनप्रयासोपि तवानर्थक एव स्यादिति हृदयम्। ईदृशमिति । परसमवेतक्रियाफलभागीत्यर्थः । तत्रापीति । नदी वर्द्धते इत्यत्र, तीरस्य

खण्डनभूषामणिः ।

पदमपि स्यादित्यर्थः। निवृत्तेति । निवृत्तः सर्वेषां कर्मव्यवहारो यत्रेत्यर्थः । सावकाशितं स्यादिति । तथा च परसमवेतपदोपादानप्रयासो व्यर्थ इति भावः । स्यादितोऽनन्तरं "कथं च लोकोत्तरप्रज्ञेन निवृत्तसर्वकर्मव्यवहारेपि कर्मत्वमस्तीत्यधिगतमि"ति पाठो विद्यासागरेण भट्टेन च धृतः । लोकोत्तरप्रज्ञेनेत्युपहासः । लोकादुत्तरा उद्गता प्रज्ञा यस्य सः । तथाचाधिगमोयं निर्मूल एवेति भावः । तद्वृ-

खण्डनदर्पणः ।

णव्यवस्था न स्यादिति परहरति—तर्हीति । तदा प्रमेयत्वमेव लक्षणं क्रियतां किं परसमवेतेत्यादिगुरुलक्षणेन । ननु चेदं कर्मपदप्रवृत्तिनिमित्तं तत्र न व्यर्थत्वं दोषः यत्प्रकारिका हि प्रतीतिः पदजन्या तस्य प्रवृत्तिनिमित्तत्वादत एव अतिप्रसक्तत्वमपि दोषाय न तत्र तत्सत्त्वेपि तत्प्रयोगाभावाद्यथा पुरुषे? विधिप्रत्ययप्रवृत्तिनिमित्तं कार्यत्वमिति चेन्न । प्रवृत्तिनिमित्तसत्त्वे पदप्रयोगस्य वारयितुमशक्यत्वादिति भावः । ईदृशं—परसमवेतक्रियाफलशालित्वमित्यर्थः । परिहरति—नेति । अत्रापीति ।

खण्डनरत्नमालिका ।

कृतकर्मलक्षणानुरोधेन कर्मत्वमभ्युपगम्यापि अविवक्षया यदि द्वितीया वार्यते तदा वस्तुमात्रं कर्मेत्यपि लक्षणं भवन्मते साधु स्यात् घटो भवतीत्यादौ घटादिपदाद् द्वितीयावारणस्याविवक्षया कर्तुं सुकरत्वादित्यर्थः । उपहसति—कथं चेति । ईदृशं—परसमवेतक्रियाजन्यफलशालि।तथाच अपादानभिन्नत्वे सति परसमवेतक्रियाजन्यफलशालित्वं कर्मत्वमिति स्वीकारान्न वृक्षस्य कर्मत्वापत्तिरिति भावः । दूषयति—तत्रापीति ।

इत्यादौ तद्वृद्धेरप्राप्ततीरभागादिप्राभिफलायाः सकर्मकत्वापत्तेः । अपादानेतरदितिस्थाने क्रियानाशकेतिकरणेऽप्यस्य दोषस्य तादवस्थ्यात्,

खण्डनभावदीपिका ।

विभागस्य वृक्षनिष्ठक्रियानाशकत्वं नास्ति परदेशसंयोगस्यैव कर्मनाशकत्वाङ्गीकारात्

शाङ्करी ।

जलसमवेतक्रियाफलतीरसंयोगभागिनः कर्मत्वात् तथाच नदी तीरं वर्द्धते-इति प्रयोगः स्यादित्यर्थः । ननु क्रियानाशकपरसमवेतक्रियाफलभागित्वं कर्मत्वं नच वृक्षस्याऽपादानस्य यद्विभागलक्षणं पतनक्रियाफलं तत् क्रियानाशकं, किन्त्वधः संयोगस्तत्र क्रियानाशकं फलं तद्भागिभूम्यादेस्तत्र कर्मत्वमिष्यते एवेत्याशङ्क्य परिहरति—अपादानेति । अस्येति । नदी वर्द्धते-इत्यत्रातिव्याप्तिलक्षणस्येत्यर्थः । तादवस्थ्या-

खण्डनभूषामणिः ।

द्धेरिति । वृणोति वर्द्धकिर्वृक्षमिति वृक्षकर्मकवृद्धिव्यवच्छेदाय । तस्याः—नद्या वृद्धेरित्यर्थः । सकर्मकत्वापत्तेरिति । ततश्च तीरभागं वर्द्धत इति प्रयोगः स्यात् । "सत्तालज्जास्थितिजागरणवृद्धिक्षयभयजीवितमरणं । शयनक्रीडारुचिदीप्त्यर्थाः कर्मणि नैते धातव उक्ताः" इति वृद्धिक्षयभयजीवितमरणार्थका धातवोऽकर्मका इति परिगणिताकर्मकत्वावबोधश्चेत्याशयः । अत्रापीत्यपिकार आपत्तेरित्यनन्तरमनुक्तसमुच्चयार्थे योज्यः । इतरत्वस्य भेदस्य लक्षणाधीनत्वाल्लक्षणसिद्धावितरत्वस्य सिद्धिस्तत्सिद्धौ च लक्षणस्येत्यन्योन्याश्रयो युक्तः। आपादानेतरदित्यस्य स्थाने-प्रसङ्गे, नत्वपादानेतरत्वं यथा फलशालिनो विशेषणं तथा क्रियानाशकत्वमपि तस्य विशेषणम् । क्रियाफलस्यैव क्रियानाशकत्वेन विशेषणात् । विभागस्य पतनक्रियाफलस्य न पतननाशकत्वमिति न वृक्षेतिव्याप्तिरित्यभिमानिनो लक्षणं दूषयति—अस्येति ।

खण्डनदर्पणः ।

नदीसमवेतवृद्धिक्रियाफलसंयोगविभागवति तीरे कर्मत्वं स्यात्तथा च नदीतीरं वर्द्धत इत्यपि प्रयोगः स्यादिति भावः । आदिपदेनाग्निर्ज्वलतीत्यादिसंग्रहः । ननु क्रियानाशकपरसमवेतक्रियाफलभागित्वं कर्मत्वं विभागस्तु न क्रियानाशक

खण्डनरत्नमालिका ।

नदी वर्द्धत इत्यत्र जलसमवेतक्रियाजन्यतीरसंयोगाश्रयत्वस्य तीरे सत्त्वात् नदीतीरं वर्द्धते इति प्रयोगापत्त्या सकर्मकत्वापत्तिरित्यर्थः । ननु अपादानेतरदित्यत्रस्थाने फलविशेषणं क्रियानाशकेति निवेश्यते तथा च क्रियानाशकपरसमवेतक्रियाजन्यफलशालित्वं कर्मत्वमित्युच्यते तथा च क्रिया क्रियातो विभागः विभागात्पूर्वसंयोगनाशः ततः उत्तरदेशसंयोगः ततः क्रियानाश इति नियमात् वृक्षवृत्तिविभागो न क्रियानाशक इति तदाश्रयस्य न कर्मत्वम् यश्च क्रियानाशक उत्तरदेशसंयोगः तदाश्रयस्य कर्मत्वमिष्यत एवेत्याशङ्क्य परिहरति—अपादानेतरदिति । अस्य—नदी वर्द्धत इत्यत्राव्याप्तिरूपस्य । तादवस्थ्यात्—जलतीरसंयोगस्य क्रियानाशकपरसमवेतक्रियाजन्यफलत्वेने-

खण्डनभूषामणिः ।

तीरभागे कर्मत्वप्रसङ्गस्येत्यर्थः । क्रियापदवैयर्थ्यं चानावश्यकत्वात् । अपीत्येव योजितेन? बोध्यम् । अधः संयोगाख्यक्रियानाशकफलवत्त्या भूमेः कर्मत्वमिष्यत एवेति मिश्राः । 'अस्य दोषस्य सत्त्वादि'त्यनन्तरं 'विनाशलक्षणायां वृद्धौ तदसम्भवाच्चे'ति विद्यासागरधृतः पाठः । तस्य च वृक्षं वर्धते वर्धकिः इत्यत्र नाशलक्षणवृद्धेर्नाशाभावेन वृक्षमित्यत्राव्याप्तिरित्यर्थ इति तद्व्याख्यानम् । विनाशो लक्षणं चिन्हं यस्याः क्रियायाः सा छिदिक्रिया तस्यां क्रियायां कर्मणो वृक्षस्याकर्मत्वप्रसङ्ग इति भावः । केचित्तु न तीरभागेऽतिव्याप्तिः यतो वृद्धिर्न परिस्पन्दात्मिका क्रिया किन्तु महता जलावयविना स्वल्पस्य जलावयविनो विनाशः महाजलारम्भानुकूलः स्वल्पजलविनाश एव वा अतः कथं तीरभागातिव्याप्तिरित्याशङ्क्य यदि वृद्धिर्नाशरूपा तदा तया संयोगस्य नोत्पत्तिः संयोगजसंयोगभिन्नस्य क्रियाजन्यत्वनियमादतः क्रियान्तरमवश्यमभ्युपगन्तव्यम् । तथा च तत्कर्मत्वं तीरभागस्य स्यादेवेत्यतिव्याप्तितादवस्थ्यमिति फक्किकार्थ इति

खण्डनदर्पणः

इति तद्भागयपादानं न कर्मेति तत्राह—क्रियानाशकेति । अत्र—नदी वर्द्धत इत्यत्रातिव्याप्तिः । वृद्धिक्रियाफलतीरसंयोगस्य क्रियानाशकत्वात् तथा च नदी तीरं वर्द्धत इति प्रयोगः स्यादित्यर्थः । वृक्षं वर्द्धते वर्द्धकिरित्यत्र नाशलक्षणवृद्धेर्नाशान्तराभावादुक्तलक्षणे वृक्षस्याकर्मत्वप्रसङ्ग इत्यव्याप्तिमाह—विनाशेति । न च

खण्डनरत्नमालिका ।

ति शेषः । प्रकृते वृद्धिः तीरसंयोगानुकूलो व्यापार इति जलतीरसंयोगरूपं फलं क्रियानाशकं तदनन्तरं क्रियानाशादिति तदाश्रयस्य तीरस्य कर्मत्वं स्यादिति नदी तीरं वर्द्धते इति प्रयोगापत्तिरित्यर्थः । ननु वृधु वृद्धावित्यत्रावयवोपचयो वृद्धिः अवयवोपचयश्च अपूर्वावयवसंयोगः स च पूर्वावयवसंयोगनाशपूर्वक इति अवयवसंयोगनाशजन्यावयवसंयोग एव वृद्धिर्नतु पूर्वोक्ता संयोगानुकूलास्पन्दात्मिका क्रिया इति नदी वर्द्धत इत्यत्र तीरस्य कर्मत्वाप्रसङ्गः पूर्वावयवसंयोगनाशस्य क्रियानाशकत्वाभावात्तद्धात्वर्थजन्यत्वे सति तद्धात्वर्थप्रकारत्वरूपफलत्वाभावाच्चेत्यत आह—विनाशलक्षणायामिति । विनाशः लक्षणमुपलक्षणं यस्याः तस्यां विनाशोपलक्षितायां संयोगरूपफलेन नश्वरायां संयोगानुकूलव्यापाररूपायां वृद्धावित्यर्थः । अपूर्वावयवसंयोगस्तु न वृद्धिरक्रियात्वादिति भावः । इदं पूर्वान्वयि । तथा च विनाशलक्षणायां वृद्धावस्य दोषस्य तादवस्थ्यात्, तदसम्भवाच्च—फलस्य विभागस्य क्रियानाशकत्वासम्भवाच्च वृक्षंत्यजतीत्यादावकर्मकत्वप्रसङ्गादित्यन्वयः । यत्तु विनाशलक्षणायामित्यस्य विनाशरूपायामित्यर्थमभिप्रेत्य वृक्षं वर्द्धते वर्द्धकिरित्यत्र वृक्षस्य कर्मत्वाप्रसङ्गः विद्यासागरेणोक्तः स चिन्त्यः वर्धं छेदनपूरणयोरित्यस्य चुरादिपठितत्वेन वर्धयतीत्यस्यैव न्याय्यत्वात् तस्माद्वृद्धाविति रूपासिद्धेश्च वृधुच्छेदन इति भौवादिकस्येदमिति तु साहसं भ्वादावनुपलम्भात् । वृधधातोश्छेदनार्थकत्वेऽपि छेदनं द्वैधीभावानुकूलो व्यापारः द्वैधीभावश्च न नाशः

वि(१)नाशलक्षणायां वृद्धौ तदसम्भवाच्च, (२)'वृक्षं त्यजति'इत्या·

शाङ्करी ।

दिति । तत्रापि तीरनीरसंयोगस्य क्रियानाशकत्वादित्यर्थः । दोषान्तरमाह—वृक्षमि· ति । तत्रापि वृक्षपर्णविभागस्य क्रियानाशकत्वाभावादित्यर्थः । मूललक्षणोदाहरणा·

खण्डनभूषामणिः ।

प्राहुः(३) । ननु विनाशः क्रियाविशेष ( नाशानुकूलो व्यापारः ) एव सा च क्रिया· त्वादेव नाश्या तत्फलं ध्वंस एवानाश्यः न चानवस्था दृष्टत्वादेवेति नातिव्या· प्तिरित्यस्वरसादाह—वृक्षं त्यजतीति । क्रियानाशकत्वाभावादव्याप्ति रिति विवक्षिते लक्षणे कथयित्वा अविवक्षिते प्राचीने लक्षणे विवक्षिते चैव लक्षणद्वये परमदूषणमा·

खण्डनदर्पणः ।

नाशस्यापि नाशान्तरं न्यायमते नाशरूपस्य मोक्षस्य नाशे मोक्षाभावप्रसङ्गादनवस्था· नाच्चेति दिक् । वृक्षमिति । त्यागक्रियाजन्यविभागस्य क्रियानाशकत्वाभावादिति भावः । ननु धात्वर्थतावच्छेदकपरसमवेतक्रियाफलशालित्वं कर्मत्वं विवक्षितं तेन नापा· दानादावतिव्याप्तिः नवाऽव्याप्तिः। तथा हि-ग्रामं गच्छतीत्यत्रोत्तरसंयोगफलकक्रियाया गमनत्वाद् उत्तरसंयोगो गमनरूपधात्वर्थतावच्छेदकस्तादृशफलभागी-ग्रामादिः कर्म, अपादानन्तु न तथा तत्राधः संयोगफलकक्रियायाः पतनत्वेन पतनरूपधात्वर्थताव· च्छेदकाधः संयोगस्य क्रियाफलस्यापादानेऽभावात् । वृक्षं त्यजतीत्यत्र तु विभागफ· लकक्रियायास्त्यागत्वात् तद्धात्वर्थतावच्छेदकक्रियाफलविभागाश्रयत्वात् वृक्षे कर्मत्व मस्त्येवेति चेन्न—देवदत्तः पाकं करोतीत्यत्र देवदत्तः पाकाय यतते इतिवत् देवदत्तः पाकं यतत इति प्रयोगप्रसङ्गात् । उभयत्र धात्वर्थस्य यत्नरूपत्वेनाविशेषात् वृक्षं वर्द्धते वर्द्धकिरित्यादौ तादृशफलशालित्वाभावादव्यापनात् । ननु न कर्ममात्रस्य लक्ष·

खण्डनरत्नमालिका ।

किन्तु नाशजनक इति विनाशलक्षणायां वृद्धावित्यसङ्गतं च । वृक्षमिति । विभा· गानुकूलः स्पन्दो हि त्यजधात्वर्थः । न च विभागात् क्रियानाशः, क्रिया क्रियातो विभागः विभागात् पूर्वसंयोगनाशः तत उत्तरदेशसंयोगः ततः क्रियानाश इत्यभ्युपग· मेन उत्तरदेशसंयोगादेव क्रियानाशाभ्युपगमादिति वृक्षपर्णविभागस्य क्रियानाशक· त्वाभावेन तदाश्रयस्य वृक्षस्य कर्मत्वं न स्यादिति भावः । ननु विभागानन्तरं

दावकर्मत्वप्रसङ्गाच्च, 'आत्मानं जानामि' इत्यत्र परत्वाभावादव्याप्तेः। तत्राप्युपाधिभेदात्परत्वं, कर्तृत्वभोक्तृत्वाद्युपहितस्यैवात्मनो ज्ञेयत्वाभ्युपगमात् ?-इति चेन्न, यतोऽस्तु तावद्यथाकथञ्चिदेवं, तथाप्य-

शाङ्करी।

तिव्याप्ति समर्थ्याव्याप्तिमाह—आत्मानमिति। परत्वाभावादिति। आत्मनः कर्मभिन्नत्वाभावादित्यर्थः। योग्यविशेषगुणोपहितस्यात्मनः कर्मत्वं, केवलस्य च तद्भिन्नत्वात्परत्वमिति विशिष्टाऽविशिष्टभेदेन प्रकृतेपि लक्षणसत्त्वान्नाव्याप्तिरित्याह—तत्रापीति। यथाकथञ्चिदित्यस्वरसात्। कर्मभिन्नत्वमुपाधीनां, न तूपहितस्यात्मनोपि इति तदवस्थैवाव्याप्तिः=इत्यस्वरसबीजम्। अभ्युपेत्य दोषमाह—तथापीति। युञ्जानस्य(१) केवल एवात्मा ज्ञाता, ज्ञेयश्च, निरञ्जनादिश्रुतिबलादि-

खण्डनभूषामणिः।

मव्याप्तिमाह—आत्मानं जानामीत्यादाविति। अथवाऽव्यवहितलक्षण एवाव्याप्तिद्वयमिदं प्राचीनयोर्लक्षणयोर्दूषितत्वादेव दूषणान्तराभिधानानर्हत्वादप्रकृतत्वाच्चेति। उपाधिभेदादिति। शरीरेन्द्रियादिविशिष्टो ज्ञाता। आदिपदात् क्षणिकयावद्गुणपरिग्रहः। यदाहुर्न्यायाचार्याः "क्षणिकगुणोपहितो ह्यात्मा गृह्यत इत्यस्य स्वभाव" इति। अस्तु तावदेवमिति। उपाधीनां भेदेपि विशे-

खण्डनदर्पणः।

षमुच्यते किन्तु ज्ञानकर्मण इत्याशङ्क्याह—आत्मानमिति। निरुपाधिकस्यैकत्वेपि सोपाधिकस्य भेदात् ज्ञातुर्ज्ञेयादन्यत्वमेकस्मिन्नपि देहे इति शङ्कते-तच्चेति। शरीरेन्द्रियादिविशिष्टस्य ज्ञातृत्वं कर्तृत्वाद्युपहितस्य ज्ञेयत्वमित्यर्थः। विशिष्टस्य विशेषणविशेष्यसम्बन्धादन्यत्वाभावादन्योन्याभावस्य व्याप्यवृत्तित्वेन न भेद इति दूषणे सत्यपि दूषणान्तरं ददाति-यत इत्यादि। क्रियाजन्यफलस्य नात्मनि सम्भवः ज्ञाततारूपस्य फलस्य निराकरिष्यमाणत्वात् संस्काररूपफलस्याप्युपेक्षणीयज्ञानेनाजननादसार्वत्रिकत्वान्नात्मन उक्तरीत्यापि विदिकर्मत्वमित्यप्यधिकं दूषणं

खण्डनरत्नमालिका।

क्रियानाशाद्विभागोऽपि क्रियानाशक इति यदि कश्चिद् ब्रूयात् तदाप्याह--आत्मानमिति। योग्यविशेषगुणोपहितस्यात्मनो ज्ञेयत्वम् अत एव सुषुप्तौ नाहमर्थस्य भानम् गुणिभानस्य गुणभानपूर्वकत्वात् ज्ञातृत्वं तु शरीरेन्द्रियविशिष्टस्यैव स्पष्टं चेदं "द्वावात्मानौ शरीरात्मा अन्तरात्मा च तत्रान्तरात्मा तत्कर्म करोति येन शरीरात्मा सुखदुःखे अनुभवति" इति कर्मवत्कर्मणा तुल्यक्रिय इति सूत्रे महाभाष्ये ततश्च लक्षणसत्वान्नाव्याप्तिरित्याह—तत्रापीति। यथा कथंचिदिति। उपाधिभेदेऽ-

(१) युञ्जानस्येति। युक्तयुञ्जानभेदेन योगिनो द्विविधाः तत्र युक्तस्य सर्वदा भानं, युञ्जानस्य तु चिन्तासहकारेण। 'युक्तस्य सर्वदा भानं चिन्तासहकृतोपरः' इत्युक्तेः।

**कथं च तथा स्यात्, तस्य कथाप्रवेशनाऽप्रवेशनयोस्तद्बाधात्मत्वात्, कथायामेव हि निग्रहः।**

शाङ्करी।

तज्ज्ञानं, तच्च वैतण्डिकस्यापीति न तस्य कथानधिकारोऽपीति हृदयम्। "कथाया-

खण्डनभूषामणिः।

**कथाप्रवेशाप्रवेशयोरिति**। ननु तस्य कथाधिकारो नास्त्युन्मत्ततुल्यो हि स इति कथायामप्रवेशोऽपि वक्तुं शक्यम्, अत एव कथायामेव हि निग्रह इत्यपि न हि निग्रहस्थानत्वेनोद्भावनमिहाभिमतं,तथा सति अखण्डिताहङ्कारेण पराहङ्कारखण्डनस्य कथाङ्गत्वज्ञानाभावात्मनो वा निग्रहस्य कथाप्रवेशनियतत्त्वात् स्यादप्येवं न त्वेवं किंतु कथाङ्गप्रयोजनशून्यस्य नास्ति कथाधिकार इति शिष्यान् प्रत्युपदेशः स च प्रवेशाभावबोधनोपयोगी कथातः प्रागपि वर्तमानस्य चार्वाकादेर्न वा बाधः सत्यमेवं परं त्वेवमुपदेशः शिष्यान् प्रति किं कथायां प्रविष्टस्य चार्वाकादेरधिकाराभावबोधनाय अप्रविष्टस्य वा नाद्यः प्रविष्टस्य प्रवृत्तिमतोऽधिकाराभावबोधनस्याशक्यत्त्वात् न हि प्रयोजनं विना कश्चित् प्रवर्तते न च प्रयोजनसत्ताधिकारे उपयुज्यते अग्निहोत्रादावप्रवृत्त्यापत्तेः दुष्कर्मणामायुर्नाशे फलानुत्पतेः किं च तदधिकाराभावबोधनस्य प्रयोजनं कथाप्रवेशस्य जातत्वात् नापि द्वितीयः शिष्यान् प्रति तदुपदेशो न चार्वाकादेः कथाविरोधी व्यधिकरणत्वात्त यदि तु शिष्याणां कथानधिकारं तस्य जानतां तेन सह कथा नास्ति ततश्च तस्य कथायां प्रवेश एवानया प्रणाल्या निरस्यते एकाकिनः कथकत्वाभावादिति दुष्प्रत्याशापि न युक्ता कथां प्रत्युत्सुकं तमवलोक्य त्वच्छिष्याणामपि तदधिकाराभावनिर्णयाशक्तेः न चात एव प्रयोजनं बुध्वा तदभावो निर्णेय इति वाच्यं तथा सति स चेद् ब्रूयात् किमेतेनाप्रस्तुतप्रश्नेन तव यद्यस्ति कथासामर्थ्यं तदा कथयेति तदा त्वच्छिष्याः किं कुर्युः तर्हि न कथेयुरिति सिद्धं नः समीहितमिति चेन्न शिष्या अपि सभायां गताः समर्थाश्च कथं भवच्छिक्षामात्रान्निवर्तेरन् तथा सति तेषां कथासामर्थ्याभावमेव परिषदोपि निश्चिनियुरिति विनैव कथं स्वापकर्षं प्रकाशयन्तः कथं स्वगृहेष्यागच्छेयुः परं तु परिषत्स्वकथाधिकाराभावं प्रकाशयेयुः न चैतावतापि निस्तारः सभासदामपि कथमनधिकार इति जिज्ञासासम्भवात् न च तेपि त्वदुपदेशमात्रश्रवणादेव निराकाङ्क्षा इति कथानधिकारव्यवस्थार्थं कथाप्रवेश आवश्यक इति साधूक्तं **कथायामेव हि नि-**

खण्डनदर्पणः।

नस्यासत्त्वनिश्चये सति तज्ज्ञानेपि कथं प्रवृत्तिरिति वाच्यम् व्यावहारिकसत्त्वज्ञानात्प्रवृत्तेरिति न किञ्चिदेतत्। **कथायामेवेति**। ननु शिष्यादीन् प्रति तथा बोधने कथा

खण्डरत्नमालिका।

धिकारो नास्तीत्येव शिष्यादयो बोधिताः तत्रायं दोषः कथायामुतान्यत्र नाद्यः तथासति सा प्रमाणाद्यभ्युपगममन्तरेणापि वृत्तेति उपदेशानर्थक्यम् न द्वितीयः कथातो-

**दावकर्मत्वप्रसङ्गाच्च, 'आत्मानं जानामि' इत्यत्र परत्वाभावाद्व्याप्तेः । तत्राप्युपाधिभेदात्परत्वं, कर्तृत्वभोक्तृत्वाद्युपहितस्यैवात्मनो ज्ञेयत्वाभ्युपगमात् ?-इति चेन्न, यतोऽस्तु तावद्यथाकथञ्चिदेवं, तथाप्य-**

शाङ्करी ।

तिव्याप्तिं समर्थ्याव्याप्तिमाह—**आत्मानमिति । परत्वाभावादिति** । आत्मनः कर्मभिन्नत्वाभावादित्यर्थः । योग्यविशेषगुणोपहितस्यात्मनः कर्मत्वं, केवलस्य च तद्भिन्नत्वात्परत्वमिति विशिष्टाऽविशिष्टभेदेन प्रकृतेपि लक्षणसत्त्वान्नाव्याप्तिरित्याह—**तत्रापीति** । यथाकथञ्चिदित्यस्वरसात् । कर्मभिन्नत्वमुपाधीनां, न तूपहितस्यात्मनोपि इति तदवस्थैवाव्याप्तिः=इत्यस्वरसबीजम् । अभ्युपेत्य दोषमाह—**तथापीति** । युञ्जानस्य(१) केवल एवात्मा ज्ञाता, ज्ञेयश्च, निरञ्जनादिश्रुतिबलादि-

खण्डनभूषामणिः ।

मव्याप्तिमाह—**आत्मानं जानामीत्यादाविति** । अथवाऽव्यवहितलक्षण एवाव्याप्तिद्वयमिदं प्राचीनयोर्लक्षणयोर्दूषितत्वादेव दूषणान्तराभिधानानर्हत्वादप्रकृतत्वाच्चेति । **उपाधिभेदादिति** । शरीरेन्द्रियादिविशिष्टो ज्ञाता । आदिपदात् क्षणिकयावद्गुणपरिग्रहः । यदाहुर्न्यायाचार्याः "क्षणिकगुणोपहितो ह्यात्मा गृह्यत इत्यस्य स्वभाव" इति । **अस्तु तावदेवमिति** । उपाधीनां भेदेपि विशे-

खण्डनदर्पणः ।

षणमुच्यते किन्तु ज्ञानकर्मण इत्याशङ्कयाह—**आत्मानमिति** । निरुपाधिकस्यैकत्वेपि सोपाधिकस्य भेदात् ज्ञातृज्ञेयादन्यत्वमेकस्मिन्नपि देहे इति शङ्कते-**तच्चेति** । शरीरेन्द्रियादिविशिष्टस्य ज्ञातृत्वं कर्तृत्वाद्युपहितस्य ज्ञेयत्वमित्यर्थः । विशिष्टस्य विशेषणविशेष्यसम्बन्धादन्यत्वाभावादन्योन्याभावस्य व्याप्यवृत्तित्वेन न भेद इति दूषणे सत्यपि दूषणान्तरं ददाति-**यत इत्यादि** । क्रियाजन्यफलस्य नात्मनि सम्भवः ज्ञाततारूपस्य फलस्य निराकरिष्यमाणत्वात् संस्काररूपफलस्याप्युपेक्षणीयज्ञानेनाजननादसार्वत्रिकत्वान्नात्मन उक्तरीत्यापि विदिकर्मत्वमित्यप्यधिकं दूषणं

खण्डनरत्नमालिका ।

क्रियानाशाद्विभागोऽपि क्रियानाशक इति यदि कश्चिद् ब्रूयात् तदाप्याह--**आत्मानमिति** । योग्यविशेषगुणोपहितस्यात्मनो ज्ञेयत्वम् अत एव सुषुप्तौ नाहमर्थस्य भानम् गुणिभानस्य गुणभानपूर्वकत्वात् ज्ञातृत्वं तु शरीरेन्द्रियविशिष्टस्यैव स्पष्टं चेदं "द्वावात्मानौ शरीरात्मा अन्तरात्मा च तत्रान्तरात्मा तत्कर्म करोति येन शरीरात्मा सुखदुःखे अनुभवति" इति कर्मवत्कर्मणा तुल्यक्रिय इति सूत्रे महाभाष्ये ततश्च लक्षणसत्त्वान्नाव्याप्तिरित्याह—**तत्रापीति । यथा कथंचिदिति** । उपाधिभेदेऽ-

(१) युञ्जानस्येति । युक्तयुञ्जानभेदेन योगिनो द्विविधाः तत्र युक्तस्य सर्वदा भानं, युञ्जानस्य तु चिन्तासहकारेण । 'युक्तस्य सर्वदा भानं चिन्तासहकृतोपरः' इत्युक्तेः ।

ध्यात्मविदो निरुपाधिमात्मानं जानतो ज्ञानं नात्मकर्म्मकं स्यात्, पच्यते फलं स्वयमेवेत्यादौ च कर्मकर्त्तरि का गतिः स्यात्? । सर्वज्ञमीश्वरं मन्यमानेन च नित्यज्ञाने तस्मिन् (१)भगवति फलना-

शाङ्करी ।

त्यर्थः । कर्मकर्तरि परसमवेतक्रिया नास्तीति तत्राव्याप्तिरित्याह—पच्यते इति । ईश्वरज्ञानस्य हि विश्वमेव कर्म्म, नच सा ज्ञानक्रिया फलनाश्या, नित्यत्वादि-ति तत्राव्याप्तिरित्याह—सर्वज्ञमिति । फलनाशकत्वस्य इति बहुव्रीहिः। ननु कर्म्मा-

खण्डनभूषामणिः ।

व्यस्याभेदादित्यस्वरसः अस्तु तावदित्यनेन सूचितः । पर्वतो वन्हिमान्धूमादित्यत्र धूमवतो वन्हिमतो भेदे धूमस्य वन्हिव्यधिकरणस्य व्याप्यत्वाभावापत्तेरिति भावः । अध्यात्मविदः—सर्वोपाधिप्रहाणेन ब्रह्मैवाहमिति जानतो यद्विज्ञानं तदाश्रयस्य पर त्वाभावान्नात्मकर्मकं ज्ञानं स्यादित्यर्थः । क्रियानाशकत्वाभावप्रयुक्तं दूषणान्तरमाह—सर्वज्ञमिति । सर्वं जानातीति सर्वज्ञः तस्मिन्भगवति यन्नित्यज्ञानं तस्मिन्फलना-

खण्डनदर्पणः ।

बोध्यम् । निरुपाधिकमिति । सर्वोपाधिप्रहाणेन ब्रह्मैवाहमिति यद्विज्ञानं तत्र ज्ञातुः परत्वाभावादात्मनः कर्मत्वं न स्यादित्यर्थः । कर्मसामान्यलक्षणे दोषान्तरमाह—पच्यत इति। कर्मकर्तरि परसमवेतक्रिया नास्तीत्यव्याप्तिरित्यर्थः । सर्वज्ञमिति ।

खण्डनरत्नमालिका ।

व्युपधेयस्याभेद एव अन्यथा वह्निधूमाभ्यां पर्वतस्य भेदे वैयधिकरण्याद्वह्निधूमयोर्व्या प्यव्यापकभावो न स्यादित्यस्वरसः कथंचिदित्यनेन सूचितः । अध्यात्मविद इति । सर्वोपाधिप्रहाणेन ब्रह्मैवाहमिति यज्ज्ञानं तदभिज्ञातुः परत्वाभावाज्ज्ञानं नात्मकर्मकं स्यादित्यर्थः । कर्मकर्तरीति । परसमवेतक्रियाया अभावादिति शेषः । तथाच तण्डुलः पच्यते स्वयमेवेत्यत्र कर्मणि प्रत्ययो न स्यात् तण्डुलान्यसमवेताग्नि-संयोगरूपफलाश्रयत्वेन तण्डुलस्य कर्मत्वोपपादने तु द्वितीयापत्तिरिति भावः । तदेतद-भिसन्धायाह—का गतिरिति । तत्वविन्मतमनुसृत्य कर्मलक्षणं दूषयित्वा सम्प्रति तार्किकमतमनुसृत्य दूषयति—सर्वज्ञमिति । भगवति वर्तमाने नित्यज्ञाने इत्यर्थः । भगवद्वृत्तिनित्यज्ञानस्य फलनाश्यत्वाभावेन क्रियानाशकत्वस्य फलेऽभावात् तदा-श्रयस्य विश्वस्य कर्मत्वं न स्यादिति भावः । फलनाशकत्वस्येति बहुव्रीहिः फलनिष्ठनाशकत्वस्येतितदर्थः । ननु परसमवेतक्रियाजन्यधात्वर्थतावच्छेदकफलशालित्वं व्यापारानधिकरणत्वे सति धात्वर्थतावच्छेदकफलशालित्वं वा कर्मत्वमित्यस्तु चैत्रो ग्रामं गच्छतीत्यत्र चैत्रस्य कर्मत्ववारणाय सत्यन्तम् तथा च वृक्षात्पर्णं पततीत्यादौ न

(१) भगवति वर्तमाने नित्यज्ञाने इत्यर्थः नतु नित्यज्ञानाधारे भगवतीत्यर्थः । भगवति फल-नाशकत्वकथनस्यानुपयुक्तत्वात् ।

खण्डनभूषामणिः ।

शकत्वस्य फलं नाशकं यस्येति बहुव्रीहिणा फलनाश्यत्वस्य सर्वज्ञं मन्यमानेनानभ्युपगमान्नैयायिकेनेति शेषः । तं प्रति नैयायिकं प्रतीत्यर्थः । क्षणिकसर्वज्ञं प्रति नाव्याप्तिरित्यभिधातुं तमिति । असिद्धेः-सर्वस्मिन् ज्ञानकर्मणि अव्याप्तेरित्यर्थः । यस्माद्दुष्टमिदं लक्षणं तस्माद् व्याकरणकारैः शब्दव्युत्पादनार्थं कर्तुरीप्सिततमं कर्मेति सूत्रेण कर्म परिभाषितं न तु कर्मलक्षणं विवक्षितमित्यर्थः । यथा यू स्त्र्याख्यौ नदीति केषांचिच्छब्दानां नदीतिसंज्ञा वृद्धिरादैच् अदेङ्गुण इति केषाञ्चिद्वर्णानां

खण्डनदर्पणः ।

फलं नाशकं यस्य तस्य भावस्तत्त्वमीश्वरज्ञानस्य नित्यत्वेन फलानाश्यतया विश्वं तत्कर्म न स्यादित्यव्यापकत्वापत्तिरित्यर्थः । यस्माद्दुष्टमिदं लक्षणं तस्मादित्युपसंहरति-

खण्डनरत्नमालिका ।

दोषः अधः संयोगानुकूलव्यापारस्य पतधात्वर्थतया वृक्षस्य पतधात्वर्थतावच्छेदकाधः संयोगानाश्रयत्वेन कर्मत्वाप्राप्तेः । पतधात्वर्थतावच्छेदकफलाश्रयस्य भूम्यादेः कर्मत्वं त्विष्टमेव । यद्वा आश्रयानवच्छिन्नत्वं फले विशेषणं देयम् तेन न भूमिं पततीति प्रयोगः । नरकं पतित इति तु पतधातोर्भोगानुकूलपातित्यार्थकपतधातुयोगे प्रयोगः, न तु अधः संयोगानुकूलव्यापारार्थकपतधातुयोगे तत्र भोगान्वितं विषयत्वं द्वितीयार्थः दुःखविशेषश्च नरकपदार्थः इति शब्दशक्तिप्रकाशिकायां स्पष्टम् । गमधातोश्च संयोगो धात्वर्थतावच्छेदको न विभागः इति विभागाश्रयस्य प्रयागादेर्न कर्मत्वमिति प्रयागात् काशीं गच्छति चैत्रे न प्रयागं गच्छतीत्यापद्यते त्यजेश्च विभाग एव धात्वर्थतावच्छेदकः इति वृक्षं पर्णं त्यजतीतीष्यत एव आत्मानं जानामीत्यादौ च आत्मन औपधिकभेदमादाय कर्मत्वोपपत्तिरिति चेन्न काशीं गच्छन् पथि मृत इत्यादौ काश्याः फलाश्रयत्वाभावेन कर्मत्वानुपपत्तेः । न च तादृशफलाश्रयत्वप्रकारकेच्छोद्देश्यत्वं कर्मत्वमित्यस्तु तथा च काश्यास्तादृशोद्देश्यतावत्त्वात्कर्मत्वसिद्धिरिति वाच्यम् एवमपि कालत्रये काशीगमनशून्ये काशीगमनेच्छायां सत्यां काशीं गच्छतीति प्रयोगापत्तेः । न च परसमवेतक्रियाजन्यधात्वर्थतावच्छेदकफलाश्रयत्वप्रकारकेच्छोद्देश्यत्वयोग्यताविशेषशालित्वं कर्मत्वमिति विवक्षणात् काश्याः फलाश्रयत्वयोग्यतावत्त्वेऽपि तद्विशेषाभावान्न कर्मत्वम् तद्विशेषश्च व्यापारसमकालिकस्तटस्थजनगम्य इति वाच्यम् तादृशयोग्यताविशेषस्य निर्वक्तुमशक्यत्वात् । एतेन प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वप्रकारकेच्छोद्देश्यत्वयोग्यताविशेषशालित्वं कर्मत्वमित्यप्यपास्तम् । ग्रामं गच्छन् तृणं स्पृशतीत्यादौ तृणस्य ईप्सितत्वाभावेन कर्मत्वानुपपत्तेश्च । न च तदर्थं प्रकृतधात्वर्थफलाश्रयत्वं कर्मत्वमिति लक्षणान्तरमस्त्विति वाच्यम् अननुगमापत्तेः अन्यतरत्वेन तु नानुगमः मानाभावेनाखण्डस्यान्यतरत्वस्यानङ्गीकारात भेदगर्भस्य च तस्य गुरुशरीरत्वात् वैकुण्ठमधिशेते इत्यादौ फला-

शक्तत्वस्यानभ्युपगमात्तं प्रत्येतल्लक्षणाऽसिद्धेः। तस्माद्याकरणकारैः शब्दसिद्ध्यर्थं नदीवृद्ध्यादिवत्कर्म्मापि परिभाषितमित्यलं तदनुगतलक्षणवेषणया। (१)करणव्यापारविषयः कर्म्म?—इति चेन्न' हस्तेन रामेण शरेण—इत्यादावतिप्रसङ्गात्। लक्षणं विनापि, क्रियाजनकत्वे सति व्या-

शाङ्करी।

दिप्रसिद्धिः किंनिबन्धनेत्यत आह—तस्मादिति। ननु धात्वर्थतावच्छेदकपरसमवेतक्रियाफलभागित्वं कर्मत्वं, तेन गमनस्योत्तरसंयोगो धात्वर्थतावच्छेदकस्तद्भागी ग्रामादिः कर्म; पतनस्याधः संयोगः फलं, नतु विभागः, तेन तद्भागिनोऽपादानस्य न कर्मत्वं; त्यजेश्च पूर्वदेशविभाग एव धात्वर्थतावच्छेदक इति तद्भागिनो वृक्षस्य कर्मत्वात्

खण्डनभूषामणिः।

वृद्धिगुणसंज्ञा। अलं तदनुगतलक्षणगवेषणयेत्यनन्तरं "करणव्यापारविषयः कर्मेति चेन्न। हस्तेन रामेण शरेण विद्ध इत्यादावतिप्रसङ्गात्। क्रियाजनकत्वे सति व्यापारोद्देश्यं कर्मेति व्यवहारोपपत्तेरि"ति क्वाचित्कः पाठः। अस्तु तर्हि करणव्यापारविषयत्वं कर्मत्वमिति चेन्न। हस्ताख्यकरणव्यापारविषयत्वाच्छरस्यापि कर्मतापत्तेः। कर्म्मव्यवहारानुपपत्त्या कर्मपदार्थस्तल्लक्षणं च वाच्यमित्याशङ्क्योपपत्तिमाह—क्रियेति। क्रियाजनकत्वे सति व्यापारोद्देश्यं कर्मेति सङ्केतमात्राद्व्यवहारोपपत्तेरलं लक्षणगवेषणयेत्येवं विद्यासागरेण व्याख्यातः। कथं तर्हि कर्मलक्षणमनभिधाय स्वप्रकाशवादिना ज्ञानस्य सकर्मकत्वं वक्तुं शक्यम्। अथ धात्वर्थतावच्छेदकपर-

खण्डनदर्पणः।

तस्मादिति। यथा वस्तुतोऽसतोपि नदीत्वादेः पाणिनिमुनिना यू स्त्र्याख्यौ नदीत्यादिसंज्ञा कृता न सार्वत्रिकी तथा कर्मसञ्ज्ञापीत्यर्थः। तर्हि करणव्यापारविषयत्वं कर्मत्वमिति लक्षणं भवतु तत्र न दोष इत्यत आह—करणेति। न च करणव्यापारविषयत्वं कर्मलक्षणं हस्तेन रामेण शरेण विद्धो रावण इत्यत्र हस्ताख्यकरणव्यापारविषये शरेपि कर्मत्वप्रसङ्गादिति भावः। कर्मव्यवहारानुपपत्त्या कर्मलक्षणमेष्टव्यमित्याशङ्क्यान्यथानुपपत्तिमाह—क्रियेति। क्रियाजनकत्वे सति व्यापारोद्देश्यं कर्मेति संकेतमात्रात्तद्व्यवहारोपपत्तेः किं लक्षणगवेषणयेति पूर्वेण सम्बन्धः। बहुषु

खण्डनरत्नमालिका।

भावेन तावताप्यनिर्वाहाच्चेत्यलम्। अलं तदनुगतलक्षणगवेषणयेति। अत एव भगवता पाणिना "कर्तुरीप्सिततमं कर्म, तथा युक्तं चानीप्सितं, अधिशीङ्स्थासां कर्म" इत्याद्यननुगतमेव लक्षणं कृतम्। यद्यन्यतमत्वेन कर्मत्वानुगमः

(१) करणव्यापारविषय इत्यारभ्य कर्मव्यवहारोपपत्तेरित्यन्तः पाठो बहूनामसम्मतः 'इत्यलं तदनुगतलक्षणगवेषणया' इत्युपसंहारानन्तरं लक्षणान्तरोत्थापनस्यायुक्तत्वात्। सूचितं चैतत् खण्डनदर्पणखण्डनभूषामणिकाराभ्याम्।

धात्वर्थोद्देश्यत्वेन कर्मव्यवहारोपपत्तेः । शेषं चेश्वराभिसन्धौ स्वप्रकाशवादे निर्वक्ष्यामः ।

शाङ्करी ।

वृक्षं पर्णं त्यजतीति भवत्येव; वृद्धेरवयवोपचयस्य नावच्छेदकं तादृशं फलं, येन तद्भागितया तीरादेः कर्मत्वं स्यादित्यत आह-शेषं चेति । ज्ञानादिक्रियाया अपि न तादृशं फलं, ज्ञाततादेर्निराकरिष्यमाणत्वात, संस्कारस्य चाऽनावश्यकत्वादकर्मकत्वापत्तेरिति भावः ॥ ननु माभूत् स्वप्रकाशे कर्मक्रियाविरोधः विषयविषयिभावविरोधस्तु स्यादि-

खण्डनभूषामणिः ।

समवेतक्रियाफलशालित्वं कर्मत्वं गमेरुत्तरसंयोगो धात्वर्थावच्छेदकस्तेन तद्भागी ग्रामः कर्म, पतेरप्यधः संयोगः फलं धात्वर्थतावच्छेदको न विभागस्तेन नापादानेऽतिव्याप्तिः। वृद्धेरवयवोपचयस्यापि नावच्छेदकं तादृशं फलम् । त्यजेस्तु पूर्वदेशविभागोवच्छेदकोऽतो वृक्षस्य कर्मत्वमिति मिश्राः। धात्वर्थतावच्छेदकाभावाज्जानातेरकर्मकतापत्तिः। ज्ञातता संस्कारो वा तत्राप्यवच्छेदक इति चेन्न। तस्या निराकरिष्यमाणत्वात्। संस्कारस्य चोपेक्षाज्ञानाव्यापकत्वात् इति प्रश्ने आह-शेषञ्चेति। शेषमिति। ईश्वराभिसन्धिर्मदीय एव ग्रन्थस्तत्र स्वप्रकाशवादे ज्ञानकर्मत्वमेव प्रकृतोपयोगि निष्कृष्य वक्ष्याम इत्यर्थः। तच्च ज्ञानस्य विषयत्वमेव ज्ञानकर्मत्वं ज्ञानाधीनव्यवहारविषयत्वम् इदं च स्वप्रका-

खण्डनदर्पणः ।

पुस्तकेषु करणेत्यादिग्रन्था नास्ति । शेषं चेति । क्रिया नात्मनः परिस्पन्दस्तस्य मूर्तिनान्तरीयकत्वात्परिणामश्चेत्तर्हि तत्फलस्य घटादिवत् पारिणाम्याश्रिततया घटादेः प्रत्यक्षज्ञानकर्मत्वं न स्यादिति दूषणं तत्र ग्रन्थे दर्शयिष्याम इत्यर्थः। एकस्य क्रियाकर्मभावासम्भवं निरस्य विषयविषयिभावासंभवं निराकर्त्तुं परमु-

खण्डनरत्नमालिका ।

क्रियेत तदाशयाह—शेषमिति । ज्ञानक्रियायास्तादृशफलाभावेन घटं जानातीत्यादौ कर्मत्वानुपपत्तिरित्यर्थः । न च ज्ञातता संस्कारो वा फलं ज्ञाततायाः निराकरिष्यमाणत्वात् संस्कारस्य चानावश्यकत्वात् अतीतानागतयोः तदनाश्रयत्वेन कर्मत्वानुपपत्तेश्च । न च सत्कार्यवादे तदुपपत्तिः तस्यायुक्तत्वात्। एतेन आवरणभङ्गरूपफलाश्रयत्वादपि कर्मत्वोपपादनमपास्तम् । यद्वा ननु कर्मलक्षणमनभिधाय त्वयापि ज्ञानस्य सकर्मकत्वं कथं वक्तुं शक्यमत आह-शेषमिति । तत्र स्वप्रकाशवादे ज्ञानकर्मत्वमेव प्रकृतोपयोगि निष्कृष्य वक्ष्याम इत्यर्थः । तच्च ज्ञानाधीनव्यवहारविषयत्वरूपं ज्ञानविषयत्वमेव ज्ञानकर्मत्वम् एतच्चाभेदेऽप्युपपद्यते । न च विषयतानियामकस्य इन्द्रियसन्निकर्षस्य ज्ञानेऽभावेन ज्ञानविषयत्वासम्भव इति वाच्यम् ज्ञानाभेदस्यापि विषयतानियामकत्वाङ्गीकारेणादोषादिति भावः । ननु स्वप्रकाशे क्रियाकर्मविरोधास-

स्वप्रकाशे विषयविषयिभावविरोधाशङ्का—

**ननु चाऽभेदे विषयविषयिभावस्यैवासङ्गतत्वं, विषयित्वं हि विषयसम्बन्धिता, 'सम्बन्धश्च भेदमन्तरेणासम्भवद्स्थितिः, सम्बन्धमितेः सम्बन्धिस्वरूपभेदमितिव्यतिरेके(१) वैपरीत्यावधारणात् ? ।**

शाङ्करी ।

स्याह—नन्विति । विरोधमूलमाह—सम्बन्धश्चेति । तत्र हेतुमाह—सम्बन्धमितेरिति । यत्र सम्बन्धिनोः स्वरूपभेदप्रमा तत्रैव संबन्धप्रमा प्रकृते च सम्बन्धिभेदप्रमानिवृत्त्या सम्बन्धप्रमा निवर्तते तन्निवृत्तौ च प्रमेयत्वस्य निवृत्तिरिति नाभेदे विषयविषयिभावसम्बन्ध इत्यर्थः । यद्वा भिन्नसम्बन्धिप्रमा सम्बन्धप्रमाकारणमतः कारणनिवृत्त्या

खण्डनभूषामणिः ।

शवादिमते ज्ञानस्य स्वव्यवहारहेतुप्रकाशत्वादुपपद्यत इति भावः । नन्विति शङ्काभाष्यानाम् । विषयसम्बन्धिता सम्बन्धः "कृत्तद्धितसमासेभ्यस्त्वतलभ्यां सम्बन्धाभिधानमिति कात्यायनस्मरणादत आह—सम्बन्धश्चेति । द्विष्ठो हि सः। तथा च आश्रयाभावे कथं तिष्ठतु संयोग इव विना संयोगिनमिति । किं च सम्बन्धप्रमायां सम्बन्धिभेदप्रमा कारणम् । तथा च तदभावे सम्बन्धप्रमैव नास्ति । न च प्रमां विना प्रमेयं सम्भवति । यद्वा ननु स्वरूपसम्बन्धो विनापि सम्बन्धिभेदं तिष्ठतु सम्बन्धिजन्ये हि सम्बन्धे तथा नियम इत्याशङ्क्याह—सम्बन्धमितेरिति । तथा च प्रमाणाभा·

खण्डनदर्पणः ।

खेन देशयति—नन्विति । असङ्गतत्वमूलमाह—सम्बन्ध इति । सर्वत्र सम्बन्धस्य सम्बन्धिभेदव्याप्यत्वादित्यर्थः । तत्र हेतुमाह—सम्बन्धमितेरिति । सम्बन्धमितिर्हि संम्बन्धमानं सा च सम्बन्धिस्वरूपभेदनियता तदभावे सम्बन्धमितेरभावादित्यर्थः । यद्यपि न्यायमतेऽभिधेयत्वेऽभिधेयत्वमित्यत्र प्रमेयमितिज्ञाने च भेदं विनैव

खण्डनरत्नमालिका ।

म्भवेऽपि विषयविषयभावविरोधो बाधकः स्यादिति परमुखेन चोदयति—ननु चेति। विरोधबीजमुद्घाटयति—विषयित्वं हीति । भेदमन्तरेणेति । सम्बन्धो हि सम्बन्धिभ्यां भिन्नो द्विष्ठो विशिष्टबुद्धिनियामकश्चेत्यभियुक्तव्यवहारात् । तथा च सम्बन्धः सम्बन्धिभेदाधीनः सम्बन्धत्वात् संयोगवत् इत्यनुमानं फलितम् । एवं सम्बन्धभेदयोर्व्याप्यव्यापकभावे तत्प्रमयोरपि तमाह—सम्बन्धमितेरिति । वैपरीत्यावधारणादिति । व्यापिकायाः सम्बन्धिभेदप्रमाया अभावे व्याप्यायाः सम्बन्धप्रमाया अप्यभावावधारणादित्यर्थः । सम्बन्धमात्रस्य भेदाधीनत्वोक्तौ अंशतः सिद्धसाधनम् विषयविषयिभावरूपसम्बन्धस्य पक्षत्वे तस्य सम्बन्धिस्वरूपतया भेदा-

(१) सम्बन्धिनोः स्वरूपं सम्बन्धिस्वरूपं तस्य भेदमितिः=भेदप्रमा तस्या व्यतिरेके=अभावे सम्बन्धमितेर्वैपरीत्यावधारणात् अभावनिश्चयादित्यर्थः ।

स्वप्रकाशे विषयविषयिभावाद्युपपत्तिशङ्कापरिहारः—

मैवम् । विषयविषयिभावो हि सम्बन्धो न सम्बन्धिस्वरूपाद्भिन्नः तथाभूतत्वेपि चान्ततस्तत्सम्बन्धस्यापि स्वाश्रयात्मकत्वमभ्युपगम्यमनवस्थाभयात्, तथा सति च सैव यथा सम्बन्धमितिः सम्बन्धस्वरू-

शाङ्करी ।

कार्यनिवृत्तिरित्यर्थः। विषयविषयिभाव इति । त्वयापि विषयविषयिभावः सम्बन्धः सम्बन्धिभिन्नो नाऽभ्युपगम्यते, अन्यथा, तस्यापि सम्बन्धस्य सम्बन्धान्तरमभ्युपेयमेवं पर्य्यवसानं न स्यादित्यर्थः । भिन्नसम्बन्धिमितेः सम्बन्धमितिं प्रति न कारणत्वं, न वा व्यापकत्वं, व्यभिचारादित्याह–तथा सतीति । ननु सम्बन्धान्तरापेक्षया कथमिदं वैषम्यमत आह—स्वभावेति । परमते स्वरूपसम्बन्धस्य सम्ब-

खण्डनभूषामणिः ।

वात्ताहशे सम्बन्धत्वमेव नास्त्यन्यथा देवदत्तः स्वस्मिन्नपि वर्त्तेतेति भावः । मैवमिति । सम्बन्धिस्वरूपातिरिक्तसम्बन्धस्यैव द्विष्ठत्वादिकं न सम्बन्धमात्रस्येत्यर्थः तथाभूतत्वेपि–सम्बन्धस्य तथाभूतस्वरूपातिरिक्तत्वेपि । तत्सम्बन्धस्यापि–विषयताया: सम्बन्धस्यापि। ननु घटतज्ज्ञानयोर्भिन्नयोरस्तु विषयविषयिभावः संवेदने त्वेक-

खण्डनदर्पणः

सम्बन्धमितिस्तथाप्येतद्भिन्नस्थले तथा नियम इति तात्पर्यम् । विषयविषयिभाव इति। त्वयापि विषयविषयिभावः सम्बन्धः सम्बन्धिभिन्नो नाभ्युपगम्यते अन्यथा तस्यापि सम्बन्धस्य संबन्धान्तरमभ्युपेयमेवमपर्यवसानं स्यादित्यर्थः । अन्तिमसंबन्धस्य सम्बन्धिस्वरूपत्वे तव किमायातमित्यत आह-तथा सतीति । ननु सम्बन्धान्तरापेक्षया कथमिदं वैषम्यमत आह–स्वभावेति । परमते स्वरूपसम्बन्धस्य स-

खण्डनरत्नमालिका ।

धीनत्वे साध्ये बाध इत्याशयेन परिहरति—विषयविषयिभाव इति । यदि विषयविषयिभावरूपः सम्बन्धो सम्बन्धिभ्यां भिन्नोभ्युपेयते तदा तस्य सबन्धिभ्यां कश्चन सम्बन्धो वक्तव्यः तस्याप्यन्यत्वे तस्यापि कश्चनेत्यनवस्था तस्य सम्बन्धिस्वरूपत्वे तत्रैव बाध इति लाघवात् विषयविषयिभाव एव सम्बन्धिस्वरूपोऽभ्युपगन्तव्यः । तथा चाहुर्दीधितिकाराः "सामान्यतो विषयता ज्ञानमेव घटादिविषयता तु घटादिसम्बन्धितत्तद्धीस्वरूपा सम्बन्धसम्बन्धिनोश्चाभेदो न दोषाय सर्वत्र स्वरूपस्थले तथा कल्पनात्" इति । एवं च स्वरूपातिरिक्त एव सम्बन्धो भेदव्याप्य इति मन्तव्यम् । तथाभूतत्वेऽपि–सम्बन्धिस्वरूपाद्भिन्नत्वेऽपि । अयंभावः विषयविषयिभावो यदि सम्बन्धिस्वरूपाद्भिन्नस्तदा असम्बद्धस्य सम्बन्धत्वादर्शनात् सम्बन्धान्तरमपेक्षणीयम् तस्याप्यन्यत्वे सबन्धान्तरमित्यनवस्था अतः कचित् सम्बन्धस्य सम्बन्धिस्वरूपता मन्तव्येति स्वाश्रयात्मकत्वं तस्येति। तथा सति—अन्तिमसम्बन्धस्य सम्बन्धिस्वरूपत्वे । सा—अन्तिमा । स्वभावसम्बन्धस्य—स्वरूपसम्ब-

**पारसम्बन्धिनोर्भेदमनादायैव पर्यवस्यतीत्यभ्युपगन्तव्यम् स्वभावसम्ब-न्धस्येतरसम्बन्धमर्यादातिशायित्वात् तथा विनापि सम्बन्धिभेदं विषय-विषयिभावात्माऽयं सम्बन्धः पर्यवसास्यति, तदवगमोपि तथावगम-व्यतिरेकेणैव भविष्यति को विरोधः ? । नचैवं घटतज्ज्ञानयोर्यादृग्विष-**

शाङ्करी ।

न्धिद्वयात्मकत्वमुपपाद्य तद्दृष्टान्तेन स्वमते एकसम्बन्धिमात्रात्मकत्वं स्वरूपसम्बन्ध-स्योपपादयति-**तथा विनापीति** । ननु सम्बन्धान्तरापेक्षया स्वरूपसम्बन्धस्य वैष-म्यमस्तु, त्वया तु स्वरूपसम्बन्धापेक्षयापि वैषम्यमुच्यते, इत्येकस्याऽवास्तवत्वमत आह—**नचेति** । भेदे सति योयं विषयविषयिभावः स एव लोकसिद्धोपि बाध्यते, बा-

खण्डनभूषामणिः ।

स्मिन्नेव त्वया स्वीक्रियते इत्यत आह-**तथा चेति** । **मात्रया**-लेशेनापि वैलक्षण्ये उभयोर्विरुद्धयोः पारमार्थिकत्वायोगादेकत्र बाध्यता स्यात् सा च न घटतज्ज्ञानयोर्विष-

खण्डनदर्पणः ।

म्बन्धिद्वयात्मकत्वमुपपाद्य तद्दृष्टान्तेन स्वमते सम्बन्धिमात्रात्मकत्वं स्वरूपसम्बन्ध-स्योपपादयति-**तथा विनापीति** । तत्प्रतीतिः सम्बन्धिभेदप्रतीतिमन्तरेण पर्यवस्य-ति उक्तविशेषणसम्बन्धप्रतीतित्वादन्तिमसम्बन्धप्रतीतिवदित्याह-**तदवगमोपीति** । किञ्च तव मते ईश्वरज्ञाने प्रमेयमिति ज्ञाने च स्वविषयके व्यभिचारः तथा च तद्व-दिदमपि ज्ञानमभेदेपि विषयविषयिभावापन्नं भवतु दोषाभावादिति भावः । नन्वन्यत्र विषयिविषयिभावो भिन्ने दृष्टः तद्वैषम्यं स्वप्रकाशे इति एकत्र स्वप्रकाशे बाध्यता स्यात्, न च घटतद्बुद्धेर्विषयविषयिभावस्य बाध्यता न स्वप्रकाश इति वाच्यम्। तस्य सर्वलोकसि-तयाऽबाध्यत्वादित्याशङ्क्याह—**नचैवमिति** । **मात्रयापि**—कलयापि । एकतरस्य बाध्यताङ्गीकारादित्यत्र हेतुमाह—**अस्तीति** । घटश्च तज्ज्ञानं चेति समासः । कुतो

खण्डनरत्नमालिका ।

न्धस्य, **इतरसम्बन्धानां** संयोगादीनां या **मर्यादा** भेदाधीनत्वं तदतिशायित्वात् । एवं परमते स्वरूपसम्बन्धस्य सम्बन्धिद्वयस्वरूपत्वमुपपाद्य तद्दृष्टान्तेन एकसम्ब-न्धिस्वरूपत्वं स्वरूपसम्बन्धस्योपपादयति-**तथा विनापीति**। **तदवगमः**-विषय-विषयिभावावगमः । **तथावगमव्यतिरेकेण**—सम्बन्धिभेदावगमं विना । **विरो-धः**—अनुपपत्तिः । अतीतानागतज्ञाने विषयविषयिभावसम्बन्धस्य द्विष्ठत्वायोगा-ज्ज्ञानस्वरूपतैव मन्तव्येति एकसम्बन्धिस्वरूप एव विषयविषयिभाव इति भावः । ननु सम्बन्धान्तरापेक्षया स्वरूपसम्बन्धे वैषम्यं परैरभ्युपेतम् त्वया तु स्वरूपसम्बन्धा-पेक्षयापि वैषम्यमुच्यते इति एकस्यावास्तवत्वं स्याद्वस्तुनि विकल्पायोगादित्याह—**न-चैवमिति** । **एवम्**—एकसम्बन्धिरूपत्वे । **यादृग्**—भेदनियतः । **मात्रया**-लेश-तः । इष्टापत्त्या परिहरति—**अस्त्येवेति** । घटतज्ज्ञाने इति समाहारद्वन्द्वः । घटत-

यविषयिभावस्ततो मात्रयापि स्वप्रकाशे विषयविषयिभावाऽन्यत्वे बाध्य-
तैकत्र स्यात्। अस्त्येव ह्यविद्याविद्यमाने घटतज्ज्ञाने बाध्यत्वं, परमार्थस-
ति तु स्वप्रकाशे पारमार्थिकत्वमिति द्वयोरननुगमेपि न दोषः ।

---

शाङ्करी ।

धस्याभिधास्यमानत्वात्; यथा सर्वलोकसिद्धः शरीरादावात्मव्यवहारो, यथा वा तमसि नीलव्यवहार इत्यर्थः । अननुगमेपीति । लोकसिद्धविषयविषयिभावस्य भेदघटितत्वं, स्वप्रकाशविषयविषयिभावस्य चाऽभेदघटितत्वम्,—इत्यननुगमो न दोषः, भेदघटितस्य बाध्यत्वेनैकरूपतामात्रपरिशेषादननुगमस्यैवापास्तत्वात् । यद्वा स्वरूपसबन्धः क्वचित्पारमार्थिकः क्वचिदपारमार्थिक इत्यननुगमेपि न दोष इष्टत्वादित्यर्थः । ननु सिद्धत्वेन कर्मत्वम् असिद्धत्वेन च क्रियात्वं, तदुभयं चैकदा विरुद्धम्; एवं

खण्डनभूषामणिः ।

यविषयिभावस्य सर्वलोकसिद्धस्येति भावः । परिहरति—अस्त्येवेति । आविद्यकस्य-बाध्यत्वं क्लृप्तमेव शुक्तिरजतादौ। परमार्थिकत्वमिति। अविद्याकल्पितत्वाभावादिति भावः। किं च विषयविषयिभावस्य विरुद्धस्यापि बाध्यत्वरूपाननुगमेपि को दोषः। ननु

खण्डनदर्पणः ।

बाध्यत्वमत आह—अविद्येति । घटतज्ज्ञाने विषयविषयिभावो बाध्यः भेदेन विषय-विषयिभावत्वात् भ्रमस्थानीयविषयविषयिभाववत् । ननु विषयिविषयभावत्वेनात्रापि बाध्यता स्यादित्यत आह—परमार्थ इति । एतदसिद्धौ सर्वावभासाभावप्रसङ्गेनास्य पारमार्थिकत्वेनोक्तयुक्त्या स्वप्रकाशत्वसाधनाच्च बाध्यत्वसाधने बाधादिति भावः । तर्हि वैरूप्यमेकत्र भेदगर्भविषयविषयिभावरूपे बाध्यत्वं च न तथाऽन्यत्रेत्यत आह—इतीति । ऐकरूप्यासम्भवेन वैरूप्यगौरवं न दोषाय यथा गुणादीनां पारतन्त्र्ये सम-

खण्डनरत्नमालिका ।

ज्ज्ञानयोर्यो विषयविषयिभावः स बाध्यः तयोराविद्यकत्वेन तत्सम्बन्धस्य बाध्य-त्वौचित्यात् । ननु योगाचारमते घटस्य मृषात्वेऽपि ज्ञानस्य पारमार्थिकत्वाभ्युपगमात् घटतज्ज्ञानयोराविद्यकत्वाभिधानमयुक्तमिति चेन्न—ज्ञानस्य सत्यत्वेऽपि विषयोपप्लवस्य मृषात्वेन घटज्ञानस्य मृषात्वात् । "यद्यपि बाह्यार्थनिराकरणं ज्ञानमात्र-कल्पना चाद्वयवस्तु सामीप्यमुक्तं ( बौद्धेन ) इदं तु परमार्थतत्त्वमद्वैतं वेदान्ते-ष्वेव ज्ञेयमित्यर्थः" इति नवाधिकनवतितममाण्डूक्यकारिकाभाष्यात् 'ज्ञान-स्याभेदिनो भेदप्रतिभासो ह्युपप्लवः' इति "मायोपमं च विज्ञानमुक्तमादित्यब-न्धुना" इति च तैस्तैरनूदितात् बौद्धमतात् घटज्ञानस्य मृषात्वं योगाचाराणाम-भिमतमिति युक्तमुक्तम् "अविद्याविद्यमाने घटतज्ज्ञाने" इति । परमार्थ-सतीति । स्वप्रकाशे यः विषयविषयिभावः स पारमार्थिकः ज्ञानस्य पारमा-र्थिकत्वेन तद्रूपसम्बन्धस्यापि पारमार्थिकत्वादिति भावः । द्वयोः—लोकसिद्धविषयवि-

वेदान्तिमतेन स्वप्रकाशत्वनिरूपणम्—

**अथवा, स्वात्मना सह क्रियाकर्मभावो विषयविषयिभावो वा स्व-**

शाङ्करी ।

'विषयविषयिभावः सम्बन्धः संबन्धिद्वयादभिन्नः'—इति कथंचिदनवस्थादिभयेनाङ्गीकृतं 'य एव संबन्धः स एव संबन्धी स एव चापरः संम्बन्धी'—इति तु सर्वथा दुर्घटं, केनानुरोधेनाभ्युपेयम्? कथं वा स्वपरिभाषामात्रेण व्यवहारसमर्थनम्? यदि लोकसिद्धो विषयविषयिभावो नाद्वैतं सहते तदा तदपि त्यज्यतामित्याशयेनाह—अथवेति ।

खण्डनभूषामणिः ।

स्वरूपसम्बन्धमात्रस्य विशेषतश्च विषयविषयिभावात्मनस्तस्य त्वयैव खण्डयिष्यमाणत्वात् किमिदमुच्यते इत्यस्वरसादाह—अथवेति । भवतां—भाट्टानाम् । यदाहुः "वस्तुत्वमपि सामान्यं व्यक्तिजात्यन्तराश्रयमि"ति । सत्तासम्बन्धो भेदाभेदापराख्यं तादात्म्यम् । **सत्ता तु स्वयमेव**—अभेदेनैव । न हि सत्ताश्रयत्वं सत्त्वं किन्तु सदित्यनुगततद्विषयाभेदः । स च क्वचिद्भिन्नेऽपि यथा तथा सुतरामभिन्नेऽपीति भावः । एतेन सत्ता न सद्व्यवहारहेतुः किन्तु तत्समवायः स च घटादाविव सत्तायामपि तस्य सम्बन्धत्वेन द्विष्ठत्वात् । सामान्यविशेषसमवायेष्वेकार्थसमवायात्तदेकार्थसमवायोपि तत्समवाय

खण्डनदर्पणः ।

श्चेतत्वं प्रयोजकं समवायस्य तु स्वभाव इति वैरूप्यं न दोषः परेषां तद्वदित्यर्थः । एवं तावदभेदेपि क्रियाकर्मभावो विषयविषयिभावो वा स्वप्रकाशत्वमित्यपसिद्धान्ताङ्गीकारेण परकीयचोद्यं दूरीकृत्येदानीं स्वसिद्धान्तावलम्बनेनास्य चोद्यस्यावसरोऽपि नेत्याह **अथवेति** । स्वस्य स्वयमेव प्रकाश इति स्वप्रकाशत्वमुक्तरूपं विहायान्यः स्वप्रकाशवि-

खण्डनरत्नमालिका ।

षयिभावस्य स्वप्रकाशविषयविषयिभावस्य च । **अननुगमेऽपि**—बाध्यत्वाबाध्यत्वरूपत्रैलक्षण्येऽपि । अभेदेऽपि क्रियाकर्मभावं विषयविषयिभावं चाभ्युपगच्छतोर्योगाचारप्राभाकरयोर्मतेन स्वकर्मत्वरूपं स्वविषयत्वरूपं वा स्वप्रकाशत्वमुक्त्वा परकीयं चोद्यं चूर्णितम् साम्प्रतमभेदे विषयविषयिभावमनभ्युपगच्छतः सिद्धान्तिनो मतमाह—**अथवेति** । यद्यपि "विज्ञानं जडरूपेभ्यो व्यावृत्तमुपजायते । इयमेवात्मसम्वित्तिरस्य याऽजडरूपता ॥ क्रियाकारकभावेन न स्वसंवित्तिरस्य तु । एकस्यानंशरूपस्य त्रैरूप्यानुपपत्तितः ॥ तदस्य बोधरूपत्वाद्युक्तं तावत्स्ववेदनम् । [ २०००–२००२ श्लो० ] इति तत्त्वसंग्रहदर्शनाद् "नान्यानुभाव्यो बुद्ध्यास्ति तस्या नानुभवोऽपरः । ग्राह्यग्राहकवैधुर्यात् स्वयं सैव प्रकाशते" इति न्यायरत्नाकरोद्धृतबौद्धग्रन्थाच्च अवगम्यते यद्बौद्धानामपि स्वकर्मत्वरूपं स्वप्रकाशत्वं नाभिमतमिति स्वविषयत्वरूपं स्वप्रकाशत्वं तु तैरप्यभ्युपेतमेव "बोधरूपतयोत्पत्तेर्ज्ञानं वेद्यं हि युज्यते । न त्वर्थो बोध उत्पन्नस्तदसौ वेद्यते कथम् ॥ [ २००४ श्लो० ] इति तत्त्वसंग्रह-

प्रकाशार्थ इति नाभ्युपेयमेव, यथा तु भवतां सत्तासबन्धादितरत्र सद्व्यवहारव्यवस्था सत्ता तु स्वयमेव सद्रूपा, नचैतावता स्वात्माश्रयता

शाङ्करी।

**यथा तु भवतामिति** । न च सत्ता न सद्व्यवहारहेतुः किन्तु सत्तासमवायः, स च यथा घटादौ तथा सत्तायामपि, तस्य सम्बन्धत्वेन द्विष्ठत्वात्; सामान्यसमवाय विशेषेषु सत्तैकार्थसमवायात्; तदेकार्थसमवायोपि हि तत्समवाय एवेति वाच्यम्। तर्हि सत्तासमवायः स्वरूपत एव सन्निति वक्तव्यम्, तथा च यथा सत्तायां वा तत्समवाये वा स्वरूपतः सद्रूपत्वमास्थेयं तथा परसिद्धिर्ज्ञानात् ज्ञानसिद्धिस्तु स्वत

खण्डनभूषामणिः ।

एव । सत्ता स्वतः सद्रूपेति चानुपपन्नं स्वत इति पञ्चम्या सिद्धिं प्रति स्वस्य हेतुत्वमभिधीयते तच्च तज्ज्ञापकत्वं तदुपादकत्वं वा सत्ता तु न सत्तया उपपाद्यते ज्ञाप्यते वा किन्तु विधिमुखप्रत्ययवेद्यत्वात् सदन्तरगुणात् सत्ता सतीति गौणोऽयं व्यवहार

खण्डनदर्पणः ।

ब्दार्थो न लभ्यत इत्याशङ्क्याह–**यथेति** । द्रव्यादौ सत्तासम्बन्धात्सद्व्यवहारः सत्तायां च सद्व्यवहारः स्वयमेव सत्तारूपत्वाद् भवतीत्यर्थः । ननु सत्तायामपि सत्तोपलक्षितसत्तासमवायसत्वात् सद्व्यवहारो द्रव्यादाविव युक्त इति चेन्न । यथा स्वातिरिक्तसत्तां विना सद्व्यवहारहेतुः सविषयो वा तथा ज्ञानं स्वातिरिक्तज्ञानं विना तथेत्यर्थात् । अत एव ज्ञानं स्वतःसिद्धरूपमनुपपन्नं स्वत इति पञ्चम्यर्थानुपपत्तेरिति निरस्तं स्वातिरिक्तं ज्ञानं विना सिद्धरूपमित्यर्थात् । न च व्यवहर्तव्यभिन्नज्ञानस्यान्यत्र व्यवहारहेतुत्वा-

खण्डनरत्नमालिका ।

दर्शनात् त्रैरूप्यं ज्ञानग्राह्यग्राहकत्वरूपम् । **नाभ्युपेयमेवेति** । यदि च क्रियाकर्मभावस्य विषयविषयिभावस्य च भेदाधिष्ठानत्वमेवेत्याग्रहः । अत एव तार्किकैरपि विषयतातिरिक्तैवाभ्युपेता सम्बन्धान्तरापेक्षायामनवस्था तु प्रामाणिकत्वात्तार्किकस्य अनिर्वचनीयत्वाच्च वेदान्तिनो न दोषाय।लोकसिद्धो विषयविषयिभावो नाद्वैतं सहत इति ब्रूषे तर्हि सोऽपि त्यज्यतामिति भावः । ननु स्वस्य स्वयमेव प्रकाश इति स्वप्रकाशशब्दार्थं विहाय नान्यः स्वप्रकाशशब्दार्थो लक्ष्यते इत्यत आह—**यथेति** । **भवतां**—तार्किकाणाम्, **इतरत्र**—द्रव्यगुणकर्मसु समवायलक्षणात् सामान्यविशेषसमवायेषु एकार्थसमवायलक्षणात् सत्तायाः सम्बन्धात् द्रव्यं सदित्यादिव्यवहारः । **सत्ता तु स्वयमेव सद्रूपा**—सत्ताविशेष्यकसत्ताप्रकारकव्यवहारे स्वातिरिक्तसत्तानपेक्षा सती सत्ता 'सत्ता सती' इति व्यवहारप्रयोजिका । तार्किकाणां सत्ता जातिरूपा प्राभाकराणां ज्ञानविषयत्वरूपा तन्मते सर्वज्ञानानां सत्यत्वात् वेदान्तिमते ब्रह्मरूपा बौद्धानामर्थक्रियाकारित्वरूपेति बोध्यम्। **एतावता**—सद्व्यवहारप्रयोजकत्वमात्रेण । **स्वत एव**—स्वातिरिक्तसंविदनपेक्षमेव । **सिद्धस्वरूपम्**—

तस्याः तथा ज्ञानमपि स्वत एव सिद्धस्वरूपम् । अथवा, यथा(१) बहु-

शाङ्करी ।

एवेत्यर्थः । ननु, ज्ञानं स्वत एव सिद्धमित्यनुपपन्नम् स्वत इति पञ्चम्या सिद्धिं प्रति स्वस्य हेतुत्वमभिधीयते, सिद्धिश्च द्वयी ज्ञप्तिरुत्पत्तिर्वा न स्वस्माद्भवितुमर्हति, हेतुहेतुमद्भावस्य ज्ञाप्यज्ञापकभावस्य वा सम्बन्धस्य भेदघटितत्वात् । सत्ता तु सत्तया नोत्पाद्यते ज्ञाप्यते वा; किन्तु विधिमुखप्रत्ययवेद्यत्वादिना सदन्तरगुणेन सत्ता सती

खण्डनभूषामणिः ।

इति मिश्रस्यानुशयनकथनमपास्तम् । भट्टमतदूषणपरत्वादस्य ग्रन्थस्येति । **तथा ज्ञानमपि स्वत एव सिद्धस्वरूपमिति** । ज्ञानं सजातीयपरानपेक्षत्वे सति व्यवहारागोचरः परत्र व्यवहारहेतुत्वात् सत्तावदित्यर्थः । सजातीयपदानुपादाने सत्ताया अपि ज्ञानसापेक्षत्वात् दृष्टान्तस्य साध्यवैकल्यं स्यात् । परपदाभावे व्यवहारहेतुत्वात् सत्तावदित्यर्थः । सजातीयपदानुपादाने सत्ताया अपि ज्ञानसापेक्षत्वात् । तस्य स्वस्मिन्साधयिष्यमाणत्वेनासिद्ध्यापत्तिरिति । यद्यप्येवमपीच्छायां व्यभिचारस्तथापि तस्यापि विषयत्वेन सजातीयेन ज्ञानेन स्वोत्पत्तावपेक्षणीयेन जन्यत्वात् न साध्याभावः । नचैवं ज्ञान इव तस्या अपि स्वप्रकाशतापत्तिः इष्टापत्तेः । अत एव नास्त्येव ज्ञानातिरिक्ता इच्छा । बौद्धानां सुखत्वस्येव इच्छात्वस्यापि ज्ञानद्वारान्तरधर्मत्वात् । अत एव सुखमिच्छामीति सुखोपधानेन तद्बुद्धिरप्युपपद्यते स्वस्या एव सुखविशेषणकबुद्धित्वादिति दिक् । यथा सत्तानाश्रयत्वेपि सत्ता स्वसत्तयैव सती तथा ज्ञानमपि स्वतः सिद्धरूपं ज्ञानविषयत्वमन्तरेणैवापरोक्षव्यवहारयोग्यरूपम् । ननु तथापि सत्तायाः स्वव्यवहारे ज्ञानमिव ज्ञानस्यापि स्वव्यवहारे स्वज्ञानमपेक्ष्यं स्यादेवेत्याशङ्क्य जडत्वमत्रोपाधिरित्याशयेन स्वविषयकज्ञानान्वयव्यतिरेकानुविधायिन एव व्यवहारस्य तथात्वमित्याशयेन सत्ताया दृष्टान्तान्तर-

खण्डनदर्पणः ।

दत्रापि तथेति वाच्यम् । व्यवहर्त्तव्यज्ञानत्वेनैव हेतुत्वे तद्भिन्नस्य च गुरुत्वान्न तथेति ज्ञानं सजातीयपरानपेक्षत्वे सति व्यवहारगोचरः परत्र व्यवहारहेतुत्वात् सत्तावदिति

खण्डनरत्नमालिका ।

स्वातिरिक्तसंविदनपेक्षव्यवहारप्रयोजकम् । अयंभावः—सत्ताया यथा स्वतादात्म्येन व्यवहारप्रयोजकत्वमेवं ज्ञानेऽपि तादात्म्येन स्वस्यैव व्यवहारप्रयोजकत्वमुपगम्योपपत्तौ ज्ञाने स्वविषयत्वोपगमो वृथा अत एव 'न दृष्टेर्द्रष्टारं पश्येः' इति श्रुतिः सङ्गच्छते तथा च अवेद्यत्वे सति अपरोक्षव्यवहारविषयत्वयोग्यत्वात्यन्ताभावानधिकरणत्वरूपं स्वप्रकाशत्वं ज्ञानेऽभ्युपेयमिति । ननु ज्ञानस्य स्वविषयकव्यवहारसाधकत्वे स्वविषय-

(१) 'अथवा यथा' इत्यस्य स्थाने 'यथा वा' इति पाठः खण्डनभूषामणिसंमतः समीचीनश्च प्रतीयते ।

**व्रीहिसमासे तद्गुणसंविज्ञाने गुणमादायैव प्रधानस्यान्यपदार्थस्य बहुव्रीहिसिद्धपदप्रतिपाद्यता तथा विज्ञानस्याऽविषयमपि स्वात्मानमा-**

शाङ्करी।

इति गौणो व्यपदेश इति महद्वैषम्यमित्याशयेनाह—अथवेति। यथा लम्बकर्णादिपदं स्वविषये शक्त्या, लक्षणया वाऽन्यपदार्थे व्यवहारं प्रवर्तयदेव स्वाविषयेपि समस्यमानपदार्थे व्यवहारं प्रवर्तयति तथा ज्ञानं स्वविषये घटादौ व्यवहारं प्रवर्तयत्स्वाविषयेऽपि स्वस्मिन् व्यवहारं प्रवर्तयतीति, व्यवहारस्य ज्ञानसाध्यत्वात् स्वभिन्नज्ञानसाध्यत्वस्य गौरवेणापास्तत्वादित्यर्थः। ननु, स्वविषये ज्ञानं व्यवहारं प्रवर्तयत्स्वस्मिन्नपि व्यवहारं प्रवर्तयति' इति वेदान्तिनामनभिमतं, विषयाऽनभ्युपगमा-

खण्डनभूषामणिः।

माह—यथा वेति। द्विविधो बहुव्रीहिरतद्गुणसंविज्ञानो यथा दृष्टसागरमानयेति। तद्गुणसंविज्ञानश्च यथा वक्ष्यति कुटादाविति। समस्यमानपदस्यार्थो गुणतया विशेषणतया ज्ञायते यस्मिन्बहुव्रीहौ स तद्गुणसंविज्ञानः। अन्यपदार्थ एव बहुव्रीहेः 'अनेकमन्यपदार्थे' इति पाणिनिना व्युत्पादनात् बहुव्रीहिप्रतिपाद्यता। तथापि तु समासाविषयोपि कुटधातुस्तत्पदादवगम्यते यथा तथेत्यर्थः। ननु तत्र घटपदस्य प्रतिपादकस्य सत्त्वात्तत्र प्रतिपत्तिर्न त्विह ज्ञानस्योपस्थापकं किञ्चिदस्ति। सत्ताया सत्यं नास्ति पदं तथापि श्याममनुभवामीत्यनुभवोऽनुभवितारमाश्रयतया श्यामं च विषयतया व्यवहारयन् स्वात्मनोऽगोचरमपि स्वात्मानमादाय स्वतः स्फुरणेन स्वात्मनि सुषुप्तिव्यावृत्तिमापाद्य विदितः श्याम इति व्यवहारमापादयतीति पदस्येवानुभवकरणस्यापि तादृशः स्वभावः कल्प्यत इति नानुपपत्तिः। नन्वेवं सति स्वाविषयं स्वा-

खण्डनदर्पणः।

भावः। ज्ञानस्य ज्ञानाविषयत्वे तत्प्रयुक्तव्यवहारगोचरत्वं न स्यादित्याशङ्क्य समासाविषयस्याप्यवाच्यस्य गुणपदार्थस्य समाससिद्धपदप्रयुक्तव्यवहारगोचरत्ववदुपपत्तिरित्याह—अथवेति। ननु स्वात्मानं स्वाविषयमादायैव स्वविषयगोचरव्यवहारसमर्थ-

खण्डनरत्नमालिका।

कत्वमपि स्यात् घटज्ञानादौ तथा दर्शनादतः स्वविषयकव्यवहारजनकस्य स्वाविषयकत्वं दृष्टान्तेनोपपादयति—अथवेति। **तद्गुणसंविज्ञाने**—तस्य प्रधानस्य गुणः विशेषणं संविज्ञायते अन्यपदार्थान्वय्यन्वयित्वेन यत्र तादृशे। **गुणं**—विशेषणम्। **आदायैव**—न तु त्यक्त्वा। **अयं भावः** अन्यपदार्थे बहुव्रीहेर्विधानात् अतद्गुणसंविज्ञानबहुव्रीहौ चित्रगुरित्यादौ यथा चित्रादिरन्यपदार्थत्वेन न गृह्यते एवं तद्गुणसंविज्ञाने कुटादिरित्यत्र कुटत्वरूपेण कुटधातुरन्यपदार्थत्वेन न गृह्यते अथ च बहुव्रीहिसिद्धेन कुटघटितसमुदायवाचकेन कुटादिरितिपदेन तादृशसमुदायस्यैकत्रासम्भवेन तद्धरकतया प्रतिपाद्यविधेयेन डिद्वद्भावेन सम्बध्यते इति अशक्यतया बहुव्रीहिसमासाविषयस्यपि बहुव्रीहिसिद्धपदप्रतिपाद्यतेति। प्रकृते सङ्गमयति—तथेति। ननु स्वाविषयमपि

दाथैव स्वविषयव्यवहारप्रवर्तनं समर्थ्यताम्। सोयं गुरूणां सविषयकविज्ञानस्वप्रकाशतापक्षो न ब्रह्मस्वप्रकाशतापक्षः, तत्र विषयाभावात्। एतावन्मात्रेण तु स्यात, यथा स्वाऽविषयेऽपि कुटादौ बहुव्रीहिवाक्यं

शाङ्करी।

दित्यत आह—सोयमिति। गुरूणां—प्राभाकरगुरूणां, मान्यानां वा। अविषये व्यवहारप्रवर्तनं गुरूणामिव वेदान्तिनामपि तुल्यमिति तन्मात्रे तद्गुणसंविज्ञानबहुव्रीहिपदं दृष्टान्त इत्याह—एतावन्मात्रेणेति। कुटः—घटः, 'घटः कुटनिपावस्त्री' इति

खण्डनभूषामणिः।

स्मानमादाय विशिष्टव्यवहारप्रवर्तनयोग्यता स्वप्रकाशनेत्युक्तं भवति। ततश्च सुषुप्तौ मोक्षे च स्वप्रकाशता न स्यात् योग्यताया निर्वक्तुमशक्यत्वादित्याशङ्क्य निष्कर्षयति—सोयमित्यादिना। सविषयकं प्राभाकराणां ज्ञानं नास्माकं ब्रह्मवादिनां, तेषां सविषयकविज्ञानस्यैव स्वप्रकाशता ब्रह्म तु न सविषयं सुषुप्त्यादौ विषयाभावेऽपि तत्सत्त्वात्कथमन्यथा सुखमहमस्वाप्समिति स्मृतिः अनुभवं विना स्मृतेरयोगादिति चेत्तथापि वृत्तिरूपस्यैव सविषयता न ब्रह्मणः तर्हि प्राभाकराभिमतस्वप्रकाशताया ब्रह्मस्वप्रकाशतायाश्च साम्यं नास्त्येव किं बौद्धस्वप्रकाशताया इव नेत्याह एतावन्मात्रेण त्विति। कुटो घटः "घटः कुटनिपावस्त्री"ति कोषादिति मिश्राः।

खण्डनदर्पणः।

स्वप्रकाशत्वं यदि तदा वेदान्तिमते स्वप्रकाशत्वं निर्विषयतया मुक्तौ न स्यादत आह—सोऽयमिति। तत्रेति। सुषुप्तौ विषयासंस्पर्शेऽपि सुखमस्वाप्समितिपरामर्शानुपपत्त्याऽनुभवसत्तास्फुरणात् स्वरूपज्ञानस्य निर्विषयतया न विशिष्टव्यवहारप्रवर्तनसमर्थत्वं स्वप्रकाशत्वं किन्तु स्फुरणस्वरूपम्। तत्र च न विषयप्रवेशः। घटादिभाववृत्तिस्वरूपसम्बन्धेन क्वचित्कदाचिदविद्यासम्बन्धेन च स्वरूपज्ञानमात्रेणेति भावः। स्वव्यवहारहेतुः स्वप्रकाश इति ब्रह्मवादिनां गुरूणां च साम्यात् कथं स्वप्रकाशत्वे वैषम्यमत आह—एतावदिति। गाङ्कुटादिभ्य इत्यादिसूत्रस्थं कुटपदं दृष्टान्तः कुटादौ कुटादिस्थले

खण्डनरत्नमालिका।

स्वात्मानमादाय स्वविशिष्टव्यवहारसमर्थने मुक्तौ स्वप्रकाशता न स्याद्विशिष्टव्यवहाराभावादत आह—सोऽयमिति। गुरूणामिति। ज्ञानस्य आत्मस्वरूपतामनभ्युपगच्छद्भिर्गुरुभिर्ज्ञानत्वस्य सविषयकत्वव्याप्यत्वमभिमतं सुषुप्तौ च ज्ञानं नास्त्येव निर्विषयकज्ञानानभ्युपगमादिति सविषयकस्य विज्ञानस्य स्वप्रकाशत्वमभ्युपेयते ब्रह्मस्वप्रकाशतावादिना तु निर्विषयकस्य ज्ञानस्य एतन्मते विषयाभावादिविविशेषः। तत्र—ब्रह्मस्वप्रकाशपक्षे विषयाभावात् मिथ्यात्वादिति शेषः। मुक्तौ स्वरूपज्ञानस्य निर्विषयतया न विशिष्टव्यवहारप्रवर्तनसमर्थता स्वप्रकाशतेत्यर्थः। ननु स्वव्यवहारहेतुः प्रकाश इत्यस्य गुरुवेदान्तिनोरभ्युपगमात् कथं स्वप्रकाशत्वे विशेष इत्यत आह—एतावन्मात्रेणेति। अविषये व्यवहारप्रवर्तनस्योभयोस्तुल्यत्वे-

व्यवहारं प्रवर्तयति इति, तथा ज्ञानमविषयेऽप्यात्मन्यविद्यादशायामिति।

स्वप्रकाशत्वेऽन्यथानुपपत्त्या दृष्टवैधर्म्यस्वीकारस्यादोषत्वसमर्थनम्—

तदेवं यद्यदन्यत्र दृष्टवैधर्म्यं स्वप्रकाशे पर्यवसास्यति तत्सर्वमन्य-

शाङ्करी ।

कोशाव । गाङ्कुटादिभ्यः इत्यादिसूत्रस्थकुटपदं वा दृष्टान्तः । कुटादौ—कुटादिस्थले, यद्बहुव्रीहिवाक्यं तत्स्वाविषयेपि व्यवहारं प्रयोजयतीति योजना; न तु(१) सप्तम्योः सामानाधिकरण्यम् । ननु, स्वाविषये स्वस्मिन् ज्ञानं व्यवहारप्रवर्तकमित्यत्रापि तवाऽद्वैतवादिनो न दृष्टान्तोस्ति, दृष्टान्तस्य व्यवहारस्य च ब्रह्मगोचरस्याऽनभ्युपगमादित्यत आह—अविद्येति । ननु कुटादावपि तद्गुणसंविज्ञानबहुव्रीहेरनुशासनबलाल्लक्षणया, शक्त्या वा, कुटोपि विषय एव; तथाच व्यवहारानुरोधात्स्वप्रकाशेपि कर्मक्रियाभावो विषयविषयिभावो वाऽवश्यमङ्गीकर्त्तव्यः, स चाऽभेदे सर्वथानुपपन्न इति कथं स्वप्रकाशत्वम् ? । न च दृष्टान्तमात्रादिष्टसिद्धिरिति प्रमाणं किंचिदावश्यकमत आह—तदेवमिति । ज्ञानस्य ज्ञानान्तरप्रकाश्यत्वेऽनवस्था, शेषा-

खण्डनभूषामणिः ।

गाङ्कुटादिभ्य इत्यत्र यत् कुटपदं धातुपरं स एव दृष्टान्तः । अविषयेऽप्यात्मनीति । ज्ञातो घट इत्याकारो व्यवहारः स्वेन यथा घटे जन्यते तद्विषये तथा स्वाविषये आत्मन्यपीत्यर्थः। ननु ब्रह्मणो निर्धर्मकस्य व्यवहारागोचरत्वात्स्वप्रकाशतासिद्धिरेव न स्यादित्याशङ्क्याह—अविद्यादशायामिति । स्वप्रकाशत्वमपि तत्र काल्पनिकमस्वरूपत्वात् परं त्वविद्यादशायमेवं कथ्यत इति भावः । ननु विज्ञानप्रयुक्तव्यवहारगोचरस्य ज्ञानादन्यत्वं घटादौ दृष्टं तद्विरुद्धमिदं स्वावेद्यत्वे सति स्वव्यवहारहेतुप्रकाशत्वं कथं साधनीयमित्याशङ्क्याह—तदेवमिति । नानुमानतः स्वप्रकाशता सिद्ध्यति येन

खण्डनदर्पणः ।

यद्बहुव्रीहिवाक्यं तत्स्वाविषयेपि व्यवहारं प्रवर्तयतीति योजना । तर्हि ज्ञाने व्यवहारसत्तावगमाद्द्वैतव्याघात इत्याशङ्क्याह—अविद्येति । विज्ञानप्रयुक्तव्यवहारगोचरस्य ज्ञानादन्यत्वं घटादौ दृष्टं तद्विरुद्धमिदं स्वव्यवहारहेतुप्रकाशत्वं न स्वीकारमर्हति प्रमाणाभावादित्याशङ्क्योपसंहारव्याजेन प्रागुक्तमर्थापत्त्या प्रमाणयति—तदिति।

खण्डनरत्नमालिका ।

नेत्यर्थः । स्यात्—दृष्टान्तदार्ष्टान्तिकभाव इति शेषः । कुटादाविति । कुटे इत्यनुक्त्वा कुटादाविविकथनेन कुट इव पुटस्तदुत्तरधातूनां च बहुव्रीह्यशक्यत्वेन समुदायटकतयैव ग्राह्यता सूचिता । अविद्यादशायामिति । मम मते विषय इव सविषयकत्वमप्याविद्यकमिति । यदाहुरुदयनाचार्याः "परमार्थतो नानुभवस्य विषयेण सम्बन्धः संवृत्या तु गगनगन्धर्वनगरयोरिवास्त्येव" इति भावः । उपसंहरति—तदेवमिति । अन्यत्र घटादौ दृष्टवधर्म्य-दृष्टस्य भेदे

(१) पूर्ववर्णके स्वाविषये कुटादावित्यभेदेनान्वयः नास्मिन्वर्णक इत्यर्थः।

थानुपपत्तिरेव स्वप्रकाशसाधकतया प्रदर्शिता स्वीकारयिष्यति । यद्यथा अन्यो ज्ञाताऽन्यश्च ज्ञेय इत्यन्यत्र दृष्टमहमिति व्यवहारान्यथानुपपत्त्या त्याज्यं, तथाऽन्यज्ज्ञानमन्यज्ज्ञेयमिति जानामीति व्यवहारान्यथानुप-

शाङ्करी ।

सिद्ध्या सर्वासिद्धिरनिर्मोक्षापत्तिश्चेत्यन्यथानुपपत्त्या स्वप्रकाशताऽवश्यमङ्गीकर्त्तव्या, सा च यावता विना न सिद्ध्यति तावदवश्यमङ्गीकर्त्तव्यम्; अतो विषयविषयिभावं क्रियाकर्मभावं वा कथमद्वैतेऽर्थापत्तिर्न साधयिष्यतीत्यर्थः । ननु यदन्यत्रादृष्टं तदप्यन्यथानुपपत्तिः साधयतीत्यप्यदृष्टमेवेत्यत आह—यद्यथेति । ज्ञातुर्ज्ञेयत्वं, ज्ञानस्य च ज्ञेयत्वमन्यत्रादृष्टचरमप्यहमिति व्यवहारान्यथानुपपत्त्या, जानामीति व्यवहारान्यथानुपपत्त्या च, त्वयाभ्युपेयते, तथा प्रकृतेपीत्यर्थः । नन्वन्यथानुपपत्तेः कथमयं महिमा? कथं वाऽन्यथानुपपत्तिरेव दृष्टेन न बाध्यते? इत्यत

खण्डनभूषामणिः ।

दृष्टविरोधो दृष्टान्ताभावश्च दोषः स्यात् अपि त्वर्थापत्तिः प्रागुक्ता प्रमाणं सा च मायां विना नोपपद्यते तामेवाक्षिपतीति । नन्वार्थापत्तिरपि दर्शनमूला न दृष्टविरुद्धं भावयितुमर्हतीति चेन्न—व्यवहारान्यथानुपपत्त्या क्वचिद्भवद्भिरपि त्यागस्य स्वीकारादित्याह—तद्यथेति । तथा चानन्यथासिद्धदर्शनमूलिकार्थापत्तिरन्यथा सिद्धं दर्शनं बाधत इति भावः । अन्यज्ज्ञानमन्यज्ज्ञेयमिति । यद्यपि ब्रह्मवादिनां ज्ञानं ज्ञेयं न भवति तथापि स्वप्रकाशत्रयस्योपन्यासे बौद्धमतोपन्यासोयम् । तेषां हि ज्ञानभेदे विषयस्य ग्राह्यतैव न स्यादिति मतम् । यद्वा ज्ञानाभेदो विषयस्याप्यनिर्वचनीयः स्वीक्रियते "संविदाभेदो ह्यपेक्षते"ति ग्रन्थात्तथा च ज्ञेयं ज्ञानाभिन्नं न तु ज्ञानं ज्ञेयाभिन्नं ज्ञानस्य मिथ्यात्त्वापत्तेरिति । ननु ज्ञानस्यानुभाव्यत्वे शशविषाणवदननुभूतित्वं स्यात् स्वयं प्रकाशत्वसाधकप्रमाणस्य विषयत्वे वेद्यत्वमविषयत्वे तदसि-

खण्डनदर्पणः ।

ज्ञानस्य ज्ञानान्तरप्रकाश्यत्वेऽनवस्थानात् विशेषासिद्ध्या सर्वासिद्धिरित्याद्यन्यथानुपपत्त्या जिज्ञासार्थां संशयाद्यभावान्यथानुपपत्त्या च स्वप्रकाशत्वमङ्गीकार्यम् । सा च यावता विना न सिद्ध्यति तावदवश्यमङ्गीकार्यमतोऽभेदेपि विषयविषयिभावं कर्मक्रियाभावं वा स्वतः सिद्धरूपत्वं वेदान्त्यऽभिमतं वा कथमर्थापत्तिर्न साधयिष्यतीत्यर्थः । अनुभूतेरनुभाव्यत्वे जडत्वप्रसङ्गः । प्रकाशस्य स्वाविषयस्वगोचरव्यवहारहेतुत्वेऽतिप्रसङ्गः । स्वयं स्वप्रकाशत्वसाधकप्रमाणविषयश्चेद्वेद्यत्वप्रसङ्गः । अविषयत्वे

खण्डनरत्नमालिका ।

विषयविषयिभावस्य वैधर्म्यम्—अभेदे विषयविषयिभावप्रसङ्गः, स्वप्रकाशसाधकतया प्रदर्शिता अन्यथानुपपत्तिः स्वसत्ताव्यापकस्वज्ञानं विना ज्ञाने संशयाविषयत्वानुपपत्तिः स्वीकारयिष्यतीत्यर्थः । उपपाद्यं यावता विनानुपपन्नं तावत्सर्वं कल्पयतीति भावः । दृष्टविरुद्धस्यापि अन्यथानुपपत्त्या स्वीकारस्थलमाह—तद्यथेति ।

परया त्याज्यं, सर्वतो बलवती ह्यन्यथानुपपत्तिस्तथादृष्टतामात्रबलमव-

शाङ्करी ।

आह—सर्वत इति । यदि तज्ज्ञानं क्रिया स्यात् तदा कर्म न स्यात् , यदि विषयः स्यात्तदा विषयि न स्यात्, यदि स्वं न विषयी कुर्यात्तदा स्वस्मिन् व्यवहारं न प्रवर्तयेत्—इत्यादितर्कशतमप्यन्यथानुपपत्तिबाध्यमेव नतु तद्बाधकमित्यर्थः । ननु, तवैवं प्रौढि-

खण्डनभूषामणिः ।

र्ध्यापत्तिरिति तर्कविरोधान्नार्थापत्तिरुद्देतुमलमित्याशङ्क्याह—सर्वतो बलवती हीति । अर्थापत्तेस्त्रयो दोषा अन्यथोपपत्तिरन्यथैवोपपत्तिरसम्भवश्च । न चैषामन्य-तमोऽप्यत्र दृश्यते तर्कश्च न स्वतो निश्चायकः किन्तु विपर्ययपर्यवसानाल्लोकप्रमाणस्या-नुग्राहको न चेह विपर्ययपर्यवसानमस्ति संवित्तिरनुभाव्या सत्त्वाद् घटवदिति दृष्टान्त-पक्षयोः सत्त्वस्य भेदो न ह्यबाध्यत्वं पक्षनिष्ठम् । घटादौ सच्छब्दवाच्यत्वमपि तथा ब्रह्मणि तदभावात् । सत्पदप्रतिपाद्यत्वादित्वमपि न तथा । अन्यथा गौः विषाणी गोपदप्रतिपाद्यत्वादित्यपि हेतुः स्यात् । किं चानुभूतित्वं साक्षात्त्वं यदि तदा परो-क्षोर्थस्तवासन्स्यात । अनुभूतिर्ज्ञानविषयः सत्त्वा दत्यत्र सिद्धसाधनम् । प्रपञ्चविशि-ष्टस्य सत्त्वादेव शुद्धस्य ज्ञानविषयत्वम् । तदा न करणस्य सर्वस्य धर्मवद्विषयकं-स्वात् । तत्फलस्यानुपपत्तिरेवानुपपन्ना । आविद्यकवृत्तिविषयत्वं तु न सत्त्वस्य सा-धकं शुक्तिरजतादौ व्यभिचारात् । स्वप्रकाशत्वमपि तत्र नास्त्येवेति वक्ष्यत एव ।

खण्डनदर्पणः ।

तदसिद्धिरित्यादितर्कशतविरोधादर्थापत्तिरुद्देतुमलमित्याशङ्क्याह—सर्वत इति । अन्य-थोपपत्तिरर्थापत्तेर्बाधिका सा च नास्तीति भावः । ननु तवैवं प्रौढिमात्रं न तु प्रमाणि-

खण्डनरत्नमालिका ।

यथा 'घट' इति ज्ञाने ज्ञातृज्ञेययोर्भेदस्य दृष्टचरत्वेऽपि 'अहम्' इति ज्ञाने अहमिति व्यवहारान्यथानुपपत्त्या ज्ञातृज्ञेययोर्भेदस्त्यज्यते तथा जानामीति व्यवहारान्यथानु-पपत्त्या ज्ञानज्ञेययोर्भेदोऽपि त्यज्यते इत्यर्थः । सर्वत इति । वेदान्तिभिस्तत्र तत्रो-च्यमानं श्रुतेः प्रमाणान्तरापेक्षया बलवत्त्वमपि अन्यथानुपपत्तिमूलकमेव अत एव भेदबोधकश्रुतीनां व्यावहारिकभेदमादायोपपद्यमानानां व्यावहारिकं प्रातिभासिकं वाऽभेदमादायानुपपद्यमानाभिरभेदबोधकश्रुतिभिर्बाधः अत एव च यजमानः प्रस्तर इति श्रुतेरपि अन्यथानुपपद्यमानभेदग्राहिप्रत्यक्षेण बाधः । तदेवं फलितं यदन्यथानुपप-द्यमानं प्रमाणमात्रं बलवत् प्रकृते च स्वप्रकाशत्वसाधकं श्रुतिरनुमानं वाऽन्यथानुप-पद्यमानं बलवदिति भावः । तर्कशतमिति । यदि ज्ञानं क्रिया स्यात्तदा कर्म न स्यात्, यदि विषयः स्यात्तदा विषयि न स्यात्, यदि स्वं न विषयी कुर्यात् तदा स्वस्मिन् व्यवहारं न प्रवर्तयेत्, इत्यादि तर्कशतमन्यथानुपपत्तिर्बाधने न तु तेऽन्यथानुपपत्ति बाधन्त इत्यर्थः । अन्यत्राहष्टानामपि अन्यथानुपपद्यमानानां कल्पनागौरवं न दोषा-

लङ्घय प्रवृत्तं तर्कशतमपि बाधते । तदिदमाहुः—"प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपि" इति । तस्मात्—

अन्यथानुपपत्तिश्चेदस्ति वस्तुप्रसाधिका ।

शाङ्करी ।

मात्रं ननु प्रामाणिकानामिदमनुमतमत—आह—तदिदमिति । यत्रादृष्टे प्रमाणं प्रवर्तते तददृष्टमपि "नित्यं ज्ञानम् ; अशरीरी कर्त्ता ; सुखदुःखात्यन्ताभाववानात्मा; निःस्पर्शं मूर्त्तं यथा मनः, जातमप्यविनाशि, यथा ध्वंसः, अनुत्पन्नमपि विनाशि यथा प्रागभावः; स्वयमेव स्ववृत्ति यथा प्रमेयत्वं" प्रामाणिकैरभ्युपगम्यते इत्यर्थः । अर्थापत्तेरन्यथोपपत्तिमात्रं बाधकं, प्रकृते तु सा नास्त्येवोक्तयुक्तेरित्यर्थः । उक्तमर्थं श्लोकद्वयेन संगृह्णाति—तस्मादिति । नन्वर्थापत्त्या स्वप्रकाशतासिद्धावपि द्वैतं तदवस्थमेव, स्वप्रकाशज्ञानभिन्नाया अर्थापत्तेर्विचारस्य चैतादृशस्य त्वयाप्यभ्यु

खण्डनभूषामणिः ।

अर्थापत्तिस्तु प्रमाणरूपत्वात्तर्कात्सुतरां बलवतीत्याशयः । आहुरिति । भट्टाचार्या इति शेषः । "अदृष्टशतभागोपि न कल्प्यो निष्प्रमाणकः" इतिश्लोकस्योत्तरार्द्धम् । विरुद्धत्वेन सम्मतं विमतं तस्य भावस्तत्त्वं दृष्टाद्वैमत्यं दृष्टवैमत्यं पिनष्टि चूर्णयति बाधते कुतो यतः सर्वबलाधिका सर्वेभ्यो मानेभ्यो बलेनाधिकेत्यर्थः । दृष्टताग्रहः दृष्टानुसरणायाग्रहो वान्यदृष्टः । न चोभयानुग्रह एवास्तु, स्वतः सिद्धस्वपरतः सिद्धत्वयोरेकस्मिन् वस्तुनि समावेशो न यथा छायातपयोः क्रमेणैकस्मिन्देशे स समावेश इति व्यतिरेके दृष्टान्तः । ननु लक्षणमात्रस्यैव त्वया खण्डयिष्यमाणत्वात् स च सल्लक्षणयोगित्वाभावेनास्माद्विचारात् कथं स्वप्रकाशतासिद्धिरि-

खण्डनदर्पणः ।

कानामिदमनुमतमत आह—तदिदमिति । एतस्य शेषः—"अदृष्टशतभागोपि न कल्प्यो निष्प्रमाणकः" इति । तथाऽप्रमाणत्वे गौरवादिदोषो न भवति प्रामाणिकत्वात् । ततः सिद्धाऽर्थोऽन्येनापहर्त्तव्यो न भवतीति भावः । अदृष्टस्य शतभागैकभागो निष्प्रमाणको न कल्प्य इति श्लोकार्द्धार्थः । उक्तमर्थं श्लोकेन संगृह्णाति—तस्मादिति । दृष्टवैमत्यं विषयविषयिणोरन्यत्वदर्शनविरोधादिकमन्यथानुपपत्तिः पिनष्टि हस्तयति

खण्डनरत्नमालिका ।

येत्यत्र तन्त्रवार्तिककारसंमतिमाह—तदिदमिति । "अदृष्टशतभागोऽपि न कल्प्यो निष्प्रमाणकः" इति कारिकोत्तरार्द्धम् । प्रमाणवन्ति—प्रामाणिकानि अदृष्टानि—प्रत्यक्षाविषयाः । उक्तमर्थं संक्षिप्य दर्शयति—तस्मादिति । अन्यथानुपपत्तिः—कल्प्यं विना कल्पकानुपपत्तिः, चेद्—यदि वस्तुप्रसाधिका—अन्यत्रादृष्टवस्तुसद्भावबोधिका अस्ति तर्हि सैव सर्वबलाधिका—सर्वेभ्यो बलेन अन्यथानुपपत्तिलक्षणेन अधिका बलवतीति दृष्टवैमत्यं—दृष्टविरोधं पिनष्टि चूर्णयतीत्यर्थः । यथा नीलसंवेदनस्य नीला-

पिनष्टि दृष्टवैमत्यं सैव सर्वबलाधिका ॥ ६ ॥
वाच्यान्यथोपपत्तिर्वा त्याज्यो वा दृष्टताऽऽग्रहः ।
नह्येकत्र समावेशश्छायाऽऽतपवदेतयोः ॥ ७ ॥ इति ।

तदित्थं त्वदङ्गीकृतसद्विचारलक्षणोपपन्नैरेवंविधैर्विचारैः स्वप्रका-

---

शाङ्करी ।

पगमादित्यत आह—तदित्थमिति । नेयमर्थापत्तिर्न चायं विचारो मयाभ्युपेयते किन्तु त्वदभ्युपगमेन त्वं बोध्यसे इति न द्वैतापत्तिरित्यर्थः । तर्हि स्वप्रकाशशङ्का-

खण्डनभूषामणिः ।

त्यत आह—तदित्थमिति । आस्थीयत इति । आस्थाविषयः क्रियते । परेण सह विचारमन्तरेणैव स्वानुभवसिद्धा स्वप्रकाशतानिश्चितिरस्माकं दृढेत्यर्थः ।

खण्डनदर्पणः

दर्शनविरोधादि अन्यथानुपपत्तिं, किं न बाधत इत्यत आह—सैवेति । ननु नीलावभासस्य नीलात्मत्वं विना संयोगादिसम्बन्धाभावे नीलावभासता नोपपद्यत इति यथाऽन्यथोपपत्त्या त्यज्यते तथेहाप्यस्त्वत आह—वाच्येति । तत्र यथाध्याससम्बन्धान्नीलाद्यवभासोपपत्तिस्तथा किमपीह न प्रकृतेऽस्तीत्यर्थः । माभूदन्यथोपपत्तिर्विचारस्यापि खण्डनीयत्वात् कथमर्थापत्त्या स्वप्रकाशतासिद्धिरित्यत आह—तदित्थमिति—तदुक्तरीत्या त्वदङ्गीकृतदोषरहितविचारेण त्वया स्वप्रकाशता सुगमेत्यर्थः ।

खण्डनरत्नमालिका ।

त्मत्वाभावे संयोगाद्यसम्भवान्नीलावभासो नोपपद्यते इति विज्ञानवादिना उक्तार्थापत्तिः संयोगाद्यसम्भवेऽपि आध्यासिकसम्बन्धेन नीलावभासोपपत्त्याऽन्यथोपपन्नेति भेददर्शनेन बाध्यते तद्वदिह भवता अन्यथा—ज्ञाने संशयाद्यविषयत्वस्य स्वप्रकाशत्वं विना, विनैव वा उपपत्तिर्वाच्या न चेत्सा वक्तुं शक्या तर्हि अन्यथोपपत्तिरूपस्य अन्यथैवोपपत्तिरूपस्य वा अर्थापत्तिदोषस्याभावादर्थापत्तेर्बलवत्त्वात् दृष्टताऽऽग्रहः घटादौ ज्ञानं ज्ञेयं च भिन्नमिति दृष्टस्य आग्रहः ज्ञाने त्याज्यः बलीयसा दुर्बलस्य बाधादिति भावः । ननु किमिति अर्थापत्त्या दृष्टं बाध्यते ज्ञाने अर्थापत्त्या स्वतः सिद्धत्वं दर्शनाच्च परतः सिद्धत्वमस्तु उभयोः समावेशे बाधकाभावादत आह—नहीति । एतयोः—अन्यथानुपपत्तितादृशदर्शनसाध्ययोः स्वतः सिद्धत्वपरतः सिद्धत्वयोरेकत्र समावेशः वृत्तिर्नहि जडत्वाजडत्वयोर्विरोधादित्येकस्य बाध्यत्वं वक्तव्यमिति अन्यथोपपत्तिरूपदोषाभावेऽर्थापत्तेर्बलवत्त्वात्तथादर्शनं बाध्यमिति भावः । नन्वर्थापत्त्या स्वप्रकाशत्वसाधने स्वप्रकाशज्ञानभिन्नाया अर्थापत्तेरेतादृशविचारस्य च त्वयाभ्युपगमाद्द्वैतापत्तिरत आह—तदित्थमिति । सद्विचारस्य प्रमाया यानि लक्षणानि प्रयोजकानि परामर्शोपपाद्य-

शता भवता सुप्रतिपदा, अस्माभिस्तु संवेदनबलादेव स्वतः सिद्धरूपं विज्ञानमास्थीयते इति ।

इति स्वप्रकाशवादः ।

---

शाङ्करी ।

नसिद्धिरपि कथं तवेत्यत आह—अस्माभिरिति । यद्यपि तदेव ज्ञानं प्रकाशकं, प्रकाश्यम्, अभ्युपगन्तव्यम्, अभ्युपगमः, अभ्युपगन्तृ, स्वप्रकाशत्वेन परबोधनं, बोध्यश्च परः, बोधकं वचनं चेति संकलयतो महासाहसिकत्वमसंकलयतश्च द्वैतापत्तिस्तथापि प्रपञ्चबाधाया वक्तव्यतया तथैव पर्य्यवसास्यतीति हृदयम् । यद्यपि यत्स्वप्रकाशं ज्ञानं त्वयाभ्युपगतं तस्य सर्वोऽयं प्रपञ्चः, स्वं च विषय इत्यस्तु तथाच तद्विषयतया न प्रपञ्चमिथ्यात्वं, नाप्यद्वैतं प्रपञ्चस्यैव सत्त्वात्; नापि तादृशे तत्र प्रमाणान्तरापेक्षा, स्वतः सिद्धत्वात्, नाप्यस्माकमपसिद्धान्तः, ईश्वरज्ञानस्य तादृशस्यास्माभिरभ्युपगमात्; नापि ज्ञानस्य ज्ञानान्तरवेद्यतापक्षोक्तदोषः, तेनैव सर्वविषयकेण सर्वदोषनिरासात्; तथाच स्वबधाय कृत्योत्थापनमेतत्—स्वप्रकाशज्ञानसाधनम् । तस्य प्रपञ्चो विषय इत्यत्र किं प्रमाणम्—इति चेन्न, प्रपञ्चविषयतायामपि तस्यैव ज्ञानस्य प्रमाणत्वात्; त्वन्मते स्वप्रकाशतायामिव । अस्माकं तु तद्भिन्नमपि धर्मिग्राहकं प्रमाणमस्ति, न च तज्ज्ञानविषयीकृतं प्रपञ्चं खण्डनयुक्तयोऽप्यपनेतुमीशते, सुदृढप्रमाणसिद्धत्वात् । तस्मात् "त्वया निर्म्माय दत्तेऽस्मिन् स्वप्रकाशैकमन्दिरे ।

खण्डनभूषामणिः ।

विचारासत्वं स्वप्रकाशत्वं चेदतस्तव बौद्धसमता स्यादित्याशङ्क्याह-एवं स-

खण्डनदर्पणः ।

ननु तव साधकाभावान्न तत्सिद्धिरित्यत आह—अस्माभिरिति । ननु तदेव ज्ञानप्रकाश्यं प्रकाशकमभ्युपगमोपि तदेव बोध्यः परोपि तदेवेत्यादिकं कथं स्यादिति चेन्न । वस्तुतो ज्ञानातिरिक्ताभावेपि व्यावहारिकभेदमविद्याकल्पितमादाया विद्यादशायां सर्वव्यवहारसम्भवादिति दिक् । ननु स्वप्रकाशेन यथा स्वस्य सिद्धिस्तथा तद्विषयतया प्रपञ्चस्यापीति न प्रपञ्चमिथ्यात्वं नाप्यद्वैतं प्रपञ्चस्यैव सत्वात् नाप्यस्माकमपसिद्धान्तः ईश्वरज्ञानस्य स्वप्रकाशस्य तादृशस्यास्माभिरभ्युपगमात् त्वन्मतानुसारेणोक्तत्वाद्वा तस्मात्-"त्वया निर्माय दत्तेऽस्मिन् स्वप्रकाशैकमन्दिरे । न्यासीकृतः प्रपञ्चोऽयं नापह्नोतुं तवार्हति ॥ प्रकाशपाशबद्धानां प्रपञ्चानां विमोचने । प्रभवन्तु कथं बाध्याः स्वयं खण्डनयुक्तयः ।।" इति चेन्न स्वतः सिद्धप्रकाशे हि सकलप्रपञ्च-

खण्डनरत्नमालिका ।

ज्ञानादीनि तैरुपपन्नैर्विचारैः कथाभिः भवता—द्वैतिना, अस्माभिः—परसिद्धस्य मृषात्ववादिभिः । अर्थापत्तिरियं विचारो वा न स्वप्रकाशसाधकतयाऽस्माभिरभ्युपेयते येन द्वैतं स्यात् किन्तु त्वदभ्युपगमेन त्वं बोध्यसे इति भावः । यत्तु स्वप्रकाशज्ञान-

सौगतमताद्ब्रह्मवादिमते विशेषः ।

**एवं च सति सौगतब्रह्मवादिनोरयं विशेषो यदादिमः सर्वमेवानिर्वचनीयं वर्णयति तदुक्तं भगवता लङ्कावतारे "बुद्ध्या विविच्यमा-**

शाङ्करी ।

न्यासीकृतः प्रपञ्चोयं नापह्नोतुं तवार्हति । प्रकाशपाशबद्धानां प्रपञ्चानां विमोचने । प्रभवन्तु स्वयं बाध्याः कथं खण्डनयुक्तयः" तथापि प्रपञ्चखण्डनयुक्तयस्त्वया बाधितुमशक्या इति हृदयम् ।

ननु, यदि विचारोपि त्वया नाभ्युपेयते तदा माध्यमिकमतप्रवेशात्तवापि दर्शनमदर्शनमेवेत्यत आह—**एवं चेति** । आदिमः=सौगतः, भगवता=बुद्धेन, "समन्तभद्रो भगवान्मारजिल्लोकजिज्जिन" इति कोशात्; लङ्कावतारस्तदागमग्रन्थः ॥ **बुद्ध्येति ।**

खण्डनभूषामणिः ।

**तीति । भगवता बुद्धेन ।** 'समन्तभद्रो भगवान् मारज्जिल्लोकजिज्जिन" इत्यमरः । लङ्कावतारस्तत्कृतो ग्रन्थः । यत्र-"कलिकलुषकृतानि यानि लोके मयि निपतन्तु

खण्डनदर्पण ।

स्याध्यस्तत्वात न हि शुक्त्यवच्छिन्नचैतन्याध्यस्तं रजतं सत्यं तद्वदिदमप्यविद्याकृतसम्बन्धेनावभास्यमपि न सत्यं भवितुं प्रभवति । किञ्च-प्रपञ्चस्याविद्योपादानकत्वेन शुक्तिरजतवन्मिथ्यात्वात तस्मान्न्यायविदां स्वाविद्याकल्पितं द्वैतमिति **तत्त्वम् ।** श्रुतयोपि बह्व्योऽत्राद्वैते प्रमाणीकर्त्तव्याः ।

एवं तावद्विज्ञानस्य स्वप्रकाशत्वमुपपाद्याधुना बौद्धसिद्धान्तसमोयं वेदान्तसिद्धान्तः सर्वशून्यताभ्युपगमादिति, यत्परेषामुपालम्भनं तदपाकरोति—**एवञ्चेति ।** प्रपञ्चजातस्यानिर्वचनीयत्वं ब्रह्मणः परमार्थिकत्वमिति हि मम मतं तत्र न माध्यमिकसिद्धान्ताभ्युपगमः सर्वशून्यतानङ्गीकारात् नचासौ सौगतसिद्धान्तस्वीकारः ज्ञानस्य पारमार्थिकत्वाङ्गीकारादिति भावः । भगवता—बुद्धेन । लङ्कावतारस्त-

खण्डनरत्नमालिका ।

साधनमद्वैतिनां स्ववधाय कृत्योत्थापनम् स्वप्रकाशज्ञानस्यैवं सिद्धौ तद्विषयत्वेन प्रपञ्चस्य सत्यत्वसिद्धेः इति तन्न स्वप्रकाशविषयत्वस्य शुक्तिरूप्यस्थले सत्यत्वव्यभिचारित्वात् सिद्धान्ते आत्मनि स्वविषयत्वानङ्गीकारेण सत्यत्वस्वप्रकाशत्वयोः सहचारग्रहस्यैवाभावेन व्याप्तिग्रहस्यैवाभावाच्च ॥

इति खण्डनरत्नमालिकायां स्वप्रकाशवादः ।

नन्वेवं स्वप्रकाशज्ञानमात्राभ्युपगमाद्बौद्धसिद्धान्तसमोऽयं वेदान्तसिद्धान्त इति परेषामुपालम्भं दूषयन्नाह—**एवं चेति ।** यदि किञ्चित्साम्यात्सौगतमतप्रवेशापादनं तदा—भेदाभेदाभ्युपगमात्कौमरिलस्य क्षपणकसिद्धान्तप्रवेशः, परतः प्रामाण्याभ्युपमात् तार्किकस्य सौगतमतप्रवेशः, प्रत्यक्षं प्रमाणमिति सर्वैरङ्गीकारात सर्वेषां चार्वाकमत-

नानां स्वभावो नावधार्यते । अतो निरभिलप्यास्ते निःस्वभावाश्च

खण्डनभूषामणिः ।

विमुच्यतां तु लोक" इति श्लोकः । स्वस्य क्षत्रियस्य सतः पुरस्कृत्य प्रतिग्रहादीन् दोषस्वीकारात् । सर्वमेव—ज्ञानज्ञेयं चेत्यर्थः । विज्ञानस्य यत्स्वप्रकाशत्वमुक्तं तच्छिष्यबुद्धिरक्षार्थमेव न स्वरहस्यमिति भावः । ननु तेषामेव रहस्यमिति कुतो ज्ञातमिति चेत्तद्वचनेनैव—आदावन्ते च यन्नास्ति वर्तमानकालेऽपि तन्नास्ति शुक्तिरजतवत् । यद्यतो भेदेनास्ति तत्ततो भेदेनाप्युपलभ्यते । यथाऽश्वान्महिषः संवेदनं तु संवेद्यमन्तरेण नोपलभ्यते ततो न स्वतन्त्रमस्तीति यौक्तिकबुद्ध्या विविच्यमानानां ज्ञानानां ज्ञेयानां च स्वरूपं नावगम्यते ज्ञेयेन ज्ञानस्य निरूपणात् ज्ञानेन च ज्ञेयस्य निरूपणात्तन्नैकमपि पारमार्थिकमतस्तज्ज्ञानज्ञेयात्मकाः पदार्था निरभिलप्या न निर्वचनार्हाः सर्वप्र-

खण्डनदर्पणः ।

दागमग्रन्थः । यद्यतो भेदेनास्ति तत्तद्व्यतिरेकेणोपलभ्यते यथाश्वव्यतिरेकेण महिषः संवेदनं च संवेद्यव्यतिरेकेण नोपलभ्यत अतो न स्वतन्त्रमस्तीत्यादियौक्तिकबुद्ध्या

खण्डनरत्नमालिका ।

प्रवेशः, सर्वेषां सर्वमतप्रवेशो वा स्यात् यदि किंचित्साम्येऽपि सर्वसाम्याभावान्नैषामन्यमतप्रवेशस्तर्हि ब्रह्मवादिनोऽपि सर्वसाम्याभावान्न बौद्धमतप्रवेश इत्याशयेन बौद्धमतात्स्वमते विशेषमाह—अयं विशेष इति । आदिमः बौद्धः शून्यवादी न योगाचारः तेन ज्ञानस्य सत्त्वाभ्युपगमेन सर्वस्यानिर्वचनीयत्वानभ्युपगमात् तावतापि न तस्य वेदान्तिसाम्यम् तेन ज्ञाने क्षणिकत्वस्य स्वविषयत्वस्य चाभ्युपगमात् तदुक्तम् "तथाहि सन्तो ये नाम ते सर्वे क्षणभङ्गुराः । नित्यज्ञानविवर्तोऽयं क्षितितेजोजलादिकः ॥ आत्मा तदात्मकश्चेति सङ्गिरन्तेऽपरे पुनः । तेषामल्पापराधं तु दर्शनं नित्यतोक्तितः" ३२८ इति "बोधरूपतयोत्पत्तेर्ज्ञानं वेद्यं हि युज्यते" इति च तत्त्वसंग्रहे । वेदान्तिनश्च तद्विपरीतत्वात् । सर्वं—दृग्दृश्योभयम्, अनिर्वचनीयं चतुष्कोटिविनिर्मुक्तम् यदाहुः "न सन्नासन्न सदसन्न चाप्यनुभयात्मकम् । चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका जगुः ॥" इति "शिवार्कमणिदीपिकाकाराः न सन्नासन्न सदसन्न चाप्यनुभयात्मकम् । विमतं तर्कपीड्यत्वान्मरीचिषु यथोदकम् ॥" इति अद्वयवज्रसंग्रहकाराश्च । जगन्न सत् बाधितत्वात् नासत् प्रतीयमानत्वात् नोभयात्मकं विरोधात् नानुभयात्मकसम्भवात् किन्तु चतुष्कोटिविनिर्मुक्तं सर्वं शून्यमेवेति तदर्थः । ननु "अस्ति नास्त्यस्ति नास्तीति नास्ति नास्तीति वा पुनः । चलस्थिरोभयाभावैरावृणोत्येव बालिशः ॥ कोट्यश्चतस्र एतास्तु ग्रहैर्यासां सदावृतः । भगवानाभिरस्पृष्टो येन दृष्टः स एव सः ॥ इति गौडपादकारिकादर्शनेन वेदान्तिनाऽपि चतुष्कोटिविनिर्मुक्तमेव तत्त्वमभ्युपगतमिति कथं तयोर्विशेष इति चेन्न—चलस्थिरोभयाभावैरित्यनेन शून्यवादापेक्षया एतद्वादस्य वैलक्षण्यद्योतनात् तथाहि—आत्मा अस्तीत्यस्य चल इत्यनेनान्वयात् आत्मा परिणामी

शाङ्करी ।

यथा बुद्ध्यतिरिक्तः पदार्थो बुद्ध्या विविच्यमानो विचारं न सहते तथा बुद्धिरपि विविच्यमाना विचाराऽसहत्वान्निरभिलप्या—अनिर्वचनीया, निःस्वभावा—असतीत्यर्थः ।

खण्डनभूषामणिः ।

कारसत्त्वहीनाश्चेति देशिता उपदेष्टृभिरुपदिष्टा इति तु वाक्यार्थः । यद्वा ज्ञानज्ञेयात्मकं विश्वं सत्स्वभावमुतासत्स्वभावमुत सदसत्स्वभावमुतानुभयस्वभावमित्येवंरूपेण बुद्ध्या विविच्यमानानां स्वभावो न निश्चीयते यतः सत्स्वभावं चेत्कथं कदाचिदसत्स्वभावं स्यात् स्वभावस्य त्यागायोगात् सदसत्स्वभावत्वं तदुभयभिन्न-

खण्डनदर्पणः ।

विविच्यमानानां ज्ञानानां ज्ञेयानां च स्वरूपं नावधार्यते ज्ञानेन ज्ञेयस्य निरूपणात् ज्ञेयेन च ज्ञानस्य निरूपणात् नैकमपि परमार्थमतस्तेन ज्ञानज्ञेयात्मकाः पदार्थाः—निरभिलप्या अनिर्वचनीया निःस्वभावाः सर्वप्रकारसत्त्वहीनाश्च देशिताः उपदिष्टा

खण्डनरत्नमालिका ।

इत्यर्थः अर्थात् कदाचित्सुखाकारेण कदाचिद् दुःखाकारेण परिणमति इदं वैशेषिकमतम् । आत्मा नास्तीत्यस्य स्थिर इत्यनेनान्वयात् अपरिणामीत्यर्थः इदं क्षणिकविज्ञानवादिमतम्, क्षणिकविज्ञानस्य क्षणमात्रवृत्तितया न परिणामित्वमित्यभिप्रायेण । आत्मा अस्ति नास्ति इत्यस्य उभय इत्यनेनान्वयात् परिणामी अपरिणामी चेत्यर्थः ज्ञानाकारेण परिणामी आत्मत्वाकारेणापरिमाणी चेत्यर्थः । इदं जैनमतम् आत्मा नास्ति नास्ति इति वीप्सा अत्यन्ताभावबोधनार्था अस्याभाव इत्यनेनान्वयः इदं च शून्यवादिमतम् तदयं निष्कर्षः वेदान्तिमते वैशेषिकविज्ञानवादिजैनशून्यवाद्यभिमताद्विलक्षण आत्मेति शून्यवादिनां तु शून्यमपि नास्त्येव "यदा न भावो नाभावो मतेः सन्तिष्ठते पुरः। तदान्यगत्यभावेन निरालम्बा प्रशाम्यति ॥ यतस्ततो वास्तु भयं यद्यहं नाम किंचन । अहमेव नकिञ्चिच्चेद्भयं कस्य भविष्यति ॥ इति बोधिचर्यावतारदर्शनात् "यद्यशून्यं भवेत्किञ्चित्स्याच्छून्यमपि किंचन । न किंचिदस्त्यशून्यं चेत्कुतः शून्यं भविष्यति" इति माध्यमिकवृत्तिदर्शनाच्चावगम्यते । इदं हि तेषामाकूतं यद् ज्ञानं विषयनिरूप्यं तत्र विषयस्य तत्त्वान्यत्वाभ्यामनिर्वाच्यत्वे ज्ञानमपि तथाविधमेव तदाहुर्न्यायरत्नाकरकाराः "ज्ञानापह्नववादिनोऽपि प्रथममर्थमपह्नुत्य निर्विषयज्ञानानुपपत्तेर्ज्ञानमपह्नुवते" इति । बुद्ध्या विविच्यमानानां निरूप्यमाणानां विषयाणां स्वभावः स्वरूपं नावधार्यते न निश्चीयते ज्ञेयेन ज्ञानस्य निरूपणात् तत्त्वान्यत्वाभ्यामनिर्वाच्यस्य ज्ञेयस्य च ज्ञानविशेषविषयत्वस्वरूपतया ज्ञानेन निरूपणादन्योन्याश्रयादुभावप्यनिर्वाच्याविति भावः । निःस्वभावाः—सांवृतसत्त्ववन्तो न पारमार्थिकाः।

देशिताः" इति विज्ञानव्यतिरिक्तं पुनरिदं विश्वं सदसद्भ्यां विलक्षणं ब्रह्मवादिनः संगिरन्ते । तथाहि—नेदं सद्भवितुमर्हति, वक्ष्यमाणदूषण-

शाङ्करी ।

सौगतदर्शनात् स्वदर्शनं भिनत्ति—विज्ञानव्यतिरिक्तमिति । भवितुमर्हति—इत्यधिकमपि लौकिकमनुरुध्योक्तम् । मेयस्यायं स्वभावो यदस्य निर्वचनमशक्यं न तु निर्वक्तुः स च तदा स्याद्यदि कोपि शक्नुयान्निर्वक्तुं, येपि गुरव उपासनीयास्तेपि निर्वक्तुमकुशला एवेत्यर्थः त्वमपि गुरुर्भूत्वा मां शिक्षय यदि पारयसीत्याह—यस्त्विति । ननु वक्ष्यमाणदूषणग्रस्तत्वात्—इत्ययमपि हेतुर्वक्ष्यमाणदूषणग्रस्त एव, तथा च

खण्डनभूषामणिः ।

स्वभावत्वं च विरोधादेवासम्भवि अतः स्वभावशून्या उपदिष्टा इत्यर्थः । विज्ञानव्यतिरिक्तं पुनरिति । ब्रह्मवादिनः पुनरित्यन्वयः । ननु विश्वं सङ्गिरन्ते कथयन्ति अथ च न निर्वचनीयमिति व्याहतमित्याशङ्क्याह—तथा हीति । युक्त्या निश्चित्य

खण्डनदर्पणः ।

इत्यर्थः । सौगतमतदर्शनात् स्वदर्शनं भिनत्ति-विज्ञानव्यतिरिक्तमिति । उच्यते अनिर्वचनीयं चेति व्याहतमत आह—सदिति । भवितुमर्हतीत्यधिकमपि लोकोक्तिमनुरुध्योक्तम् । दूषणेति ॥लक्षणाधीना हि लक्ष्यसिद्धिर्लक्षणानि चानुपपन्नानीत्यादिदूषणग्रासादित्यर्थः । न च संवादिप्रवृत्तिव्यवहारत्वादर्थक्रियाकारित्वाद्वा सत्त्वं विश्वस्यानुमेयं सर्वथा संवादित्वं व्यवहारेऽसिद्धमापातसंवादित्वमसत्यरजतादौ व्यभिचारि अर्थक्रियाकारित्वञ्च स्वप्ने कामिनीदर्शनादौ व्यभिचारीति भावः । ननु सत्त्वाभावेऽसत्त्वस्यैव प्राप्तिरित्याशङ्क्याह—नाप्यसदेवेति । जगतोऽत्यन्तासत्त्वे नरशृङ्गवदपरोक्षप्रतिभासपुरोवर्तिव्यवहारजन्मनाशादिव्यवहाराः सर्व एव उत्सीदेयुः अतः श्रौतयुक्तिसिद्धबाधापरोक्षप्रतिभासाद्युपपत्तये सदसद्वैलक्षण्यमनिर्वचनीयमेषणीयमित्यर्थः । मेयेति । मेये स्वभाव एवेदृशो येन वक्तुमयोग्यं सत्त्वमसत्त्वं च तत्र न वक्तृदोषात् सर्वैरेव वक्तुमशक्यत्वादित्यर्थः । त्वमेव गुरुर्भूत्वा शिक्षय यदि पारयसीत्याह—यस्त्विति । भेदप्रपञ्चस्य स्वतः परतो वा सिद्ध्यसम्भवादद्वैतागमेन प्रतिपन्नोपाधौ बाधाच्चेत्यादेर्वक्तव्यत्वाच्चेत्यर्थः । वक्तव्यदोषाणां भेदलक्षणजात्युत्तरतयाऽऽभासत्वान्न तैर्निरु-

खण्डनरत्नमालिका ।

विज्ञानव्यतिरिक्तमिति । यैर्हि ज्ञानत्वं सविषयकत्वव्याप्यमित्यभ्युपेतं तेषां ज्ञानमनिर्वाच्यमस्तु अन्योन्याश्रयात मया तु स्वरूपचितेर्निर्विषयत्वस्य अभ्युपगमात् विषयनिरूपणानधीनतया कथमनिर्वाच्यत्वम् । इदं—सत्त्वेन प्रतीयमानम्, इदमलीकव्यावृत्तये तेन तस्यानिर्वाच्यत्वानभ्युपगमान्नासङ्गतिः । लौकिकाः—प्राप्तशास्त्राध्ययनाजन्यबुद्धिप्रकर्षाः, परीक्षकाः प्राप्तशास्त्राध्ययनजन्यबुद्धिप्रकर्षाः । वक्ष्यमाणदूषणेति । नेह नानेति श्रुत्या प्रतिपन्नौपाधौ बाधितत्वरूपदूषणे-

ग्रस्तत्वात् । नाप्यसदेव, तथा सति लौकिकविचारकाणां सर्वव्यवहार-व्याहत्यापत्तेः ।

अनिर्वचनीयत्ववादः—

यदपि 'निर्वक्तुमसामर्थ्ये गुरव उपास्यन्तां येभ्यो निरुक्तयः शिक्ष्यन्ते'—इत्युपालम्भवचनं तत्तदा शोभेत यदि मेयस्वभावाऽनुगामिनीयम-

शाङ्करी ।

स्वव्याघातकतया जात्युत्तरमेतत् यथा नेदं साधकं, सर्वथाऽनुपलभ्यमानोपाधिशङ्का-

खण्डनभूषामणिः ।

सदसत्त्वादिरूपेण निर्वचनायोग्यत्वमित्यनिर्वचनीयत्वार्थः। सङ्गवितुमर्हतीति। भवितुमर्हतीत्यधिकमपि लोकोक्तिमनुरुद्ध्योक्तमिति मिश्राः। वस्तुतस्तु सत्त्वं न साध्यं-निश्चितेनापि हेतुना सहासहत्त्वस्य व्याप्तेरनिश्चयात् । न च दृष्टान्ते तन्निश्चयः "सर्वत्र शङ्कया भाव्यं नियामकमपश्यतामि"ति न्यायात् अतो हेतुदर्शनात् सर्वत्र साध्यस्य सम्भावनैव भवतीति सम्भावनाबोधनायैवमेव प्रयोज्यमिति शिक्षयति । बौद्धोक्तं दूषणं परित्यज्यापरहेतुमाह—वक्ष्यमाणदूषणगणेति । "मानाधीना मेय-सिद्धिर्मानसिद्धिश्च लक्षणात् । लक्षणानि च दुष्टानि सर्वाण्येवाविशेषतः ॥ तथा द्वैत-श्रुतेश्चापि नेह नानेति च श्रुतेः । भेदखण्डनयुक्तेश्च निरर्गलतयेति च" इति वक्ष्यमाणो दोषगणस्तमेव कथयत्युत्तरेण ग्रन्थेन "ज्ञानं ब्रह्म स्वरक्षार्थं न तु बौद्धमते स्पृहा। कृता हि शून्यतात्यन्तं विश्वदृश्यं यथा तथा ॥ न ह्यसद्दृश्यमित्यस्ति शून्याधिष्ठानरञ्जिता । मतिः कस्यापि सर्वो हि सत्त्वज्ञानात् प्रवर्तते॥ अतः सद्ब्रह्म विश्वस्य दोषदृष्ट्या निरूप्यते। अधिष्ठानदोषो न कश्चने"त्याह—नाप्यसदेवेति । सदसत्पक्षस्तु अनुभवविरोधादेव नोपन्यस्तः । सर्वव्यवहार इति अपरोक्षप्रतिभासः तज्जपुरोवर्तिव्यवहारजन्मनाशा-दिव्यवहारः सर्वोऽप्युत्सीदेदित्यर्थः। अतः श्रौतबाधापरोक्षप्रतिभासोपपत्तये सदसद्विलक्ष-णमेवानिर्वचनीयत्वमेष्टव्यमित्युक्ते वक्तुरसामर्थ्यकृतमेव तदिति मन्वानो य आक्षिपति तस्य उपालम्भवचनं तदस्मत्सिद्धान्ताबोधकृतमित्याह—तत्तदेति । केनचिन्निरूप्य-

खण्डनरत्नमालिका ।

त्यर्थः । जगत् न सत्त्वेन विचारसहं बाधात् नाप्यसत्त्वेन ख्यातेः नोभयत्वेन विरोधा-त्सदसतोरेकत्वानुपपत्तेः नानुभयत्वेन एकनिषेधस्यान्यतरविधिनान्तरीयकत्वात्किं त्व-निर्वचनीयमिति यदुच्यते तन्निर्वक्तुरसामर्थ्यकृतमितिमन्वानस्य कस्यचिदाक्षेपमनुवदति—यदपीति । परिहरति—तत्तदेति । यद्धि कैश्चिन्निरूप्यमानं सत् कैश्चिन्निर्वक्तुमशक्यं तत्रानिर्वचनीयत्वं वक्तृसामर्थ्यकृतं यच्च केनाप्यनिरूप्यमानं निपुणमतिभिरपि निर्व-क्तुमशक्यं तत्रानिर्वचनीत्वं वस्तुस्वरूपकृतं यथा प्रकृते जगति यदाहुः सौगताः—"इदं वस्तुबलायातं प्रवदन्ति विपश्चितः । यथा यथार्थाश्चिन्त्यन्ते विशीर्यन्ते तथा तथा" इति । तथा च न त्वदुक्तोपहासावकाश इति भावः । मेयस्वभावानुगामिनी—मेय-

**निरुक्त्यभिमानं धत्ते स निर्वक्तुं नतु शक्यति, वक्तव्यदोषात् । नच ते दोषाः स्वकमपि घ्नन्तो जातयः कथं न स्युरिति वाच्यम्, यतो निर्वचनीयत्वं बाध्यते तैर्दोषैः स्वयमप्यनिर्वचनीयैरेव, अनिर्वच-**

शाङ्करी ।

नत्वात्—इत्यादि तद्यदि दोषाणामपि बाध्यत्वं, तदा प्रपञ्चः कथं बाध्यतां तैरित्याशङ्कते—**नचेति** । बाध्यैरेव दोषैर्जगद्बाध्यमित्यङ्गीकृत्य प्रवृत्तं मां प्रति न स्वव्याघातदोषावकाश इत्याह—**यत इति** । ननु स्वव्याघातकं दोषं प्रयुञ्जानस्त्वं

खण्डनभूषामणिः ।

आसत्तिरपि अव्यवधानेन पदद्वयप्रतिपाद्यस्य स्मृतिः । योग्यतापि पदद्वयप्रतिपाद्यानुभाव्यस्य बाधविरहः । स च लौकिके संसृष्टरूपस्य वेदे त्वखण्डरूपस्येति शाब्दबोधसामग्र्यव्यविकलेति । अथ तत्र सत्यपि तदेकत्वे अविद्यादोषान्न प्रपञ्चभानम् । तर्हि ब्रह्मणोऽप्यसङ्गस्य तद्विषयत्वं न पारमार्थिकं सम्भवतीत्याविद्यकमेव तत्ततः कुतः प्रपञ्चस्य सत्त्वम् । किं च ब्रह्मणः प्रपञ्चविषयत्वे मानम् । न हि तव तथा । प्रपञ्चाभावविषयत्व एव तन्मानमिति वदतस्तद्वैपरीत्यस्यैव सुवचत्वात् । न वा ब्रह्म मानं निष्प्रकारकत्वात् । सिद्धे हि तस्य सप्रकारकत्वे मानम् । तस्यां च सत्यां प्रमात्वमितीतरेतराश्रयोपपत्तेः । ईश्वरज्ञानस्यापि सत्यमेव विषयो न च प्रपञ्चस्य सत्यत्वं सिद्धमद्यापि खण्डनयुक्तयस्तु भवद्रीत्या खण्डनीया अबाध्याश्च । न च तर्हि तत्रात्यन्ताबाधकमुन्नावयन् मध्यस्थदृष्ट्या त्वं जयी स्या इति दिक् । अथ वक्तव्यदोषा अपि वक्तव्यदोषे दुष्टतया स्वव्याघातकत्वेनाभासा इति न तैर्निरुक्तिः शक्या वारयितुमित्याशङ्क्य परिहरति—स्वोक्तं दोषं घ्नन्तः दूषयन्तः दोषाणां स्वव्याघातकत्वं निर्वचनीयताघातित्वं यदि तदा इष्टापत्तिरित्याह—**स्वयमप्यनिर्वचनीयैरेवेति** । अनिर्व-

खण्डनदर्पणः ।

क्तिनिरोध इत्यत आह—**न चेति** । वस्तुतो बाध्यैरेव दोषैर्व्यवहारदशायामबाध्यैर्जगद्बाध्यमित्यङ्गीकृत्य प्रवृत्तं मां प्रति न व्याघातदोषावकाश इत्याह—**यत इति** ।

खण्डनरत्नमालिका ।

स्वभावकृता । **वक्तव्यदोषात्**—अद्वैतागमेन प्रतिपन्नोपाधौ बाधितत्वव्यवहारविषयत्वादिरूपदोषात् । **स्वकमपि घ्नन्त इति** । एतेन स्वव्याघातकत्वरूपस्य जातिलक्षणस्य दोषेषु सत्त्वं सूचितम् । **अयं भावः**—यथा पर्वतो वह्निमान् धूमादिति वादिनोक्ते धूमवत्त्वमस्तु वह्निमत्त्वं मास्तु इति प्रतिवादिन उत्तरं वह्न्यभावस्य धूमाभावोन्नायकतया स्वव्याघातकमेवं बाधयोग्यत्वरूपो दोषः प्रपञ्चस्यानिर्वचनीयत्वं बोधयन् प्रपञ्चान्तर्गततया स्वस्याप्यनिर्वचनीयत्वं बोधितवानिति स्वव्याघातक इत्यसदुत्तरतया जातिः स्यादिति न तेन प्रपञ्चस्यानिर्वचनीयत्वसिद्धिरिति । परिहरति—**यत इति** । स्वाभ्युपगतदूषकत्वरूपं स्वव्याघातकत्वं यदि वक्तव्यदोषाणां स्यात तदा जातित्वं युज्येत न चैतदस्ति वितण्डाकथामाश्रित्य मम प्रवृत्तेरभ्युपगमस्यैवाभावेन

नीयैरेव च तैर्व्यवह्रियते एवेति कुतोऽस्मान् प्रति व्याघातः स्यात् तज्जातित्वस्य च निरुच्य योजयितुमशक्यत्वात्। ननु "सदसत्पक्षयोर्दोष·

शाङ्करी।

जातिवादी निरनुयोज्यानुयोगेन निग्रहस्थानेन निगृहीत इति जितमस्माभिरित्यत आह— तज्जातित्वस्येति। वक्ष्यमाणदोषैर्जातिलक्षणमपि निर्वक्तुमशक्यमेवेति जातित्वमव्यवस्थाप्याहं निग्रहीतुमशक्य इत्यर्थः। यथा, शब्दे नित्यत्वानित्यत्वयोर्द्वयोरपि दोषदर्शनादुभयकोटिकः संशयस्तथा प्रपञ्चे सत्त्वासत्त्वयोर्दोषदर्शनात्संशयो

खण्डनभूषामणिः।

चनीयैः कथं व्यवहारः स्यादित्याशङ्क्याह—व्यवह्रियत एवेति। तथा त्वत्पक्षसिद्धो व्यवहारोऽशक्यापलापः। साधितं च निर्वचनानिर्वचनोदासीनैः सत्त्वासत्त्वोदासीनैरिव कथा प्रवर्तयितुं शक्येति भावः। ननु स्वव्याघातकं दोषं ब्रुवाणस्त्वं जातिवादी निरनुयोज्यानुयोगेन निगृहीत इति जितमस्माभिरित्यत आह-तज्जातित्वस्येति। जातित्वमङ्गीकृत्येदमुक्तम्। वस्तुतो जातित्वमपि वक्ष्यमाणदोषेण निर्वक्तुमशक्यमिति

खण्डनदर्पणः।

ननु स्वव्याघातं दोषं प्रयुञ्जानस्त्वं जातिवादी निरनुयोज्यानुयोगेन निग्रहस्थानेन निगृहीत इति जितमस्माभिरित्यत आह—तज्जातित्वस्येति। वक्ष्यमाणदोषैर्जातिलक्षणमपि निर्वक्तुमशक्यमेवेति जातित्वमास्थायाप्यहं निग्रहीतुमशक्य एवेत्यर्थः। ननु व्यवहारदशायां जातित्वादिकं स्वीकार्यम्, अन्यथा कथाऽपर्यवसानमेव तदव्युत्पाद्य नाहं निग्रहीतुं शक्य इत्यर्थः। वस्तुतो युक्तिभिर्व्यवहर्तव्यं ताश्च निर्वक्तुमशक्या इति स्थिते, तस्या जात्युत्तरत्वनिरासाय जातिलक्षणे स्वानुमतत्वे सतीति विशेषणं प्रक्षेप्यम्। न हि उत्तरस्य जातित्वभिया दोषस्य निर्वचनीयताभावो निवर्तते।

खण्डनरत्नमालिका।

प्रपञ्चानिर्वचनीयत्वसाधनाय मत्प्रदर्शितदोषेषु स्वाभ्युपगतव्याघातकत्वस्याभावादिति भावः। ननु दोषेषु स्वाभ्युपगतदूषकत्वस्याभावेऽपि दोषैः प्रपञ्चानिर्वचनीयत्वसाधने प्रपञ्चान्तर्गततया स्वेषामप्यनिर्वचनीयत्वं सिद्धमिति अनिर्वचनीयैस्तैः प्रपञ्चानिर्वचनीयत्वस्य साधनासम्भव इत्यत आह—अनिर्वचनीयैरिति। निर्वचनीयत्वस्य व्यवहाराननङ्गतया दोषाणामनिर्वचनीयत्वेऽपि न प्रपञ्चानिर्वचनीयत्वसाधनक्षतिरिति भावः। तज्जातीत्वस्य-दोषेषु जातित्वस्य। अयं भावः स्वव्याघातकमुत्तरं जातिरित्यत्र स्वपदेन कथकमात्रग्रहणे मदभ्युपगतदूषकस्य त्वदुक्तदूषणस्य जातित्वापत्तिः अन्यतरग्रहणे अन्यतरस्य जातिरूपे दूषणेऽव्याप्तिः न च दूषणासमर्थमुत्तरं जातिरिति स्वीकृत्य जातित्वनिर्वचनसम्भवः त्वदुक्तदूषणासमर्थस्यापि त्वदुत्तरस्य जातित्वापत्तेः स्वदूष्यत्वेनाभिमतदूषणासमर्थमुत्तरमित्येवं विवक्षणे स्वत्वघटितत्वेन स्वत्वस्याननुगतत्वाननुगतत्वाभ्यां सैव दुरवस्थेति जातित्वं निरुच्य मदुक्तदोषेषु त्वया योजयितुमशक्यमिति

दर्शनादनिर्वचनीयता" इति ब्रुवाणस्य किं सदसत्त्वसंशयः ? किं वा सदसत्त्वपक्षबहिर्भावाभ्युपगमः ? आद्ये भवितव्यं तावत्सदसत्त्वयोरन्यतरेणेत्येकपक्षदोषस्याभासत्वं, तच्च सत्त्वपक्षदोषस्यैवाऽभ्युपेयमावश्य-

शाङ्करी ।

वा कोट्यन्तराभ्युपगमो वा-इति विकल्प्य सत्त्वपक्षध्रौव्यं शङ्कते-नन्विति । आद्ये इति । परस्परविरहस्वभावकोटिकसंशयधर्मिण एककोटयात्मकत्वावश्यकत्वात् तस्यां वास्तव्यां कोटौ दोषा नूनमाभासा इत्यर्थः । तच्चेति । आभासत्वमित्यर्थः। आवश्यकत्वमेवाह—यदि तावदिति । कथमिति पारमार्थिकत्वदुष्टत्वयोरेकत्रासम्भवादित्यर्थः । असत्त्वपक्षेपि सत्त्वपक्षदोषस्याभासत्वमुपपादयति—अथेति । त-

खण्डनभूषामणिः ।

वह्नेरौष्ण्यमिव स्वाभाविकं हि तत्तस्य अन्यथा तस्य स्वभावतैव निरसनीया नान्या गतिरस्ति । न वा निग्रहभिया दोषाणां दोषा अपि निवर्तन्ते भवदभिमतप्रमया सिद्धा हि ते इति दिक् । सामान्यतो निश्चितमाभासत्वं विशेषे उपसंहरति तच्चेति । चस्त्वर्थः । आवश्यकत्वमेव विवृणोति-यदीत्यादिना । असत्त्वपक्षेपि । सत्त्वपक्षदोषस्याभासत्वं व्युत्पादयति-अथापीति । तद्दोषः-सत्त्वपक्षदोषः । तत्पक्ष-

खण्डनदर्पणः ।

न स्यादिति चेन्न-अस्मदुक्तस्पर्धया व्यवहारदशायां कथायां जातित्वस्य व्यवस्थापयितुमशक्यत्वादिति दिक् । परस्परविरुद्धसत्त्वासत्त्वयोरुभयोरपि सदोषसम्भवे किमन्यतरत्र संशयः किं वा सत्त्वासत्त्वयोः परस्परं विरोधानभ्युपगमः उभयपक्षस्य सदोषत्वे तृतीयपक्षस्वीकारो वा निर्वचनीयमिति विकल्पार्थः । आद्य इति । परस्परविरोधिकोटीयसंशयधर्मिण एककोटिसत्त्वावश्यकत्वात्तस्यां वास्तवसत्त्वकोटौ दोषाभासा एवेत्यर्थः । आवश्यकत्वमेवाह—यदि तावदिति । कथमिति । पारमार्थिकत्वदुष्टत्वयोरेकत्रासम्भवादिति भावः । तदेति । असत्त्वपक्षे दोषसत्त्वे सर्वसत्त्वासिद्धिः । अ-

खण्डनरत्नमालिका ।

भावः । दोषदर्शनादिति ।।विश्वं न सत् वक्ष्यमाणदूषणग्रासात् नासत् लौकिकविचारकाणां सर्वव्यवहारव्याघातादित्युक्तदोषदर्शनादित्यर्थः । सदसत्त्वसंशय इति । यथा शब्दे नित्यत्वानित्यत्वयोर्दोषदर्शनात् नित्यत्वसंशयस्तथा प्रपञ्चे सत्त्वासत्त्वयोर्दोषदर्शनात् संशयः स्यादिति प्रथमविकल्पार्थः । किं वेति । सत्त्वस्यासत्त्वस्य च निषेधे ताभ्यामतिरिक्ता कोटिस्तृतीयाभ्युपगन्तव्येत्यर्थः । तच्च—आभासत्वं च । आवश्यकत्वात्—असत्त्वस्य सत्त्वनिरूपणीयत्वेन सत्त्वसिद्ध्यधीनसिद्धिकतया सत्त्वस्यावश्यकत्वात् । तथाच सत्त्वपक्षदोषाणामाभासतया प्रपञ्चस्य सत्त्वमिति भावः । किं च एकस्य पारमार्थिकत्वे सत्त्वस्यासत्त्वस्य वा पारमार्थिकत्वमभ्युपेयमिति विकल्प्य दूषयति-यदीति । अथेति । सर्वासत्त्वे दोषा अप्यसन्त इति तेषामाभा-

कत्वात् । यदि तावत्सत्त्वपक्षस्तदा सत्त्वपक्षदोषः कथं सङ्गच्छेत, अथाऽसत्त्वपक्षस्तदा सर्वासत्त्वे तद्दोषः कथं सद्भाववान् भवितुं प्रभवेत् । द्वितीयस्तु व्याघातादेवाऽसम्भवी, परस्परविरोधे हि न प्रकारान्तरस्थितिः इति ? । तदेतदनाकलितपराभिसन्धेः प्रत्यवस्थानम् । यो हि सर्वमनिर्वचनीयसदसत्त्वं ब्रूते स कथमनिर्वचनीयतासत्त्वव्यवस्थितौ पर्य्यनुयुज्येत, सापि हि कृत्स्नप्रपञ्चपरसर्वशब्दाभिधेयमध्यनिविष्टैव । पर-

शाङ्करी ।

दोषः—सत्त्वपक्षदोषः । द्वितीय इति । सदसत्त्वपक्षबहिर्भाव इत्यर्थः । मदभिमतायामनिर्वचनीयतायां विकल्प्य दोषाभिधानं प्रकारान्तरेण निर्वचनीयतायाः सत्त्वव्यवस्थित्य त्वया कृतं, सोयं दोषाभिधानलक्षणः पर्य्यनुयोगो न मयि घटते, यतो ऽनिर्वचनीयताख्यस्यापि धर्मस्याऽनिर्वचनीयतैव मदभिमतेत्याह—यो हीति । ननु यद्य-

खण्डनभूषामणिः ।

दोषस्यासत्त्वे च सत्त्वपक्षेऽपि स्यादिति न सर्वासत्त्वम् । तस्मात् सत्त्वपक्षदोषस्यासत्वे तुल्यकक्षत्वाभावात् संशयपक्षो नोपपद्यत इति । अथ सत्त्वासत्त्वपक्षयोर्दोषदर्शनादपरः पक्ष एवाश्रयणीय इत्याशङ्क्याह—द्वितीयस्त्विति । न प्रकारान्तरस्थितिर्यथा नित्यत्वानित्यत्वयोर्विरोधिनित्यत्वानित्यत्वातिरिक्ता न कोपि वेति किमनया दूषणपरम्परया अनिर्वचनीयत्वस्य सत्त्वमपलप्यते उत तस्य स्वरूपमेव । नान्त्यः । अप्रमितस्य निषेधायोगात । प्रथमे त्विष्टापत्तिरित्याह—योहीति । अनिर्वचनीयतायामपि अ-

खण्डनदर्पणः ।

सत्त्वेऽसत्त्वादेवाभावत्वमित्यर्थः । द्वितीयस्त्विति । परस्परविरुद्धयोः सदसत्त्वयोर्यथाविधिसमुच्चयो विरुद्धस्तथा निषेधोपीत्यर्थः । पराभिसन्धिं स्फोरयति—यो हीति । अनिर्वचनीयतायां विकल्प्य दूषणाभिधानात प्रकारान्तरेणानिर्वचनीयतासत्त्वव्यवस्थितौ पर्यनुयोगः पूर्वोक्तो न युक्तः प्रपञ्चवदनिर्वचनीयताया अपि सत्त्वानङ्गीकारादित्यर्थः । ननु यद्यनिर्वचनीयता सती वाऽप्रामाणिकी तदा निर्वचनीयतैवागता

खण्डनरत्नमालिका ।

सत्वं सत्त्वे च सर्वासत्त्वासिद्धिरित्यर्थः । व्याघातादिति । परस्परविरुद्धयोः सदसत्त्वयोर्विधिसमुच्चय इव निषेधसमुच्चयोऽपि न सम्भवति विरोधादिति भावः । तस्माद्विश्वस्य सत्त्वमेव पर्यवस्यति नासत्त्वं नाप्यनिर्वचनीयत्वमिति शङ्कितुराशयः । परिहरति तदेतदिति । अनाकलितपराभिसन्धेः—अनाकलितः अज्ञातः परस्य वेदान्तिनोऽभिसन्धिरभिप्रायो येन तस्य । अभिसन्धिमेवोद्घाटयति—यो हीति । ननु सर्वमनिर्वचनीयसदसत्त्वमिति वदतस्तव ब्रह्मणोऽप्यनिर्वचनीयसदसत्त्ववत्त्वं स्यादिति सर्वशब्दः सङ्कुचितवृत्तिरास्थेय इति ब्रह्मण इव अनिर्वचनीयत्वस्यापि सर्वशब्देनाग्रहणात् अनिर्वचनीयता सती असतीवेति पर्यनुयोगस्य नासङ्गतिरित्यत आह—कृत्स्नप्रपञ्चपरसर्व-

स्यैव व्यवस्थयैवं पर्य्यवस्यति—निर्वचनप्रतिक्षेपादनिर्वचनीयत्वं, विधिनिषेधयोरेकतरनिरासस्येतरपर्य्यवसायितायास्तेनाभ्युपगमात् । ततः परकीयरीत्येदमुच्यते,—अनिर्वचनीयत्वं विश्वस्य पर्य्यवस्यति इति ।

परीत्या परमतनिरसनम्—

वस्तुतस्तु, वयं सर्वप्रपञ्चसत्त्वाऽसत्त्वव्यवस्थापनविनिवृत्ताः स्वत

शाङ्करी ।

निर्वचनीयता न त्वया व्यवस्थापनीया तदा कथं व्यवतिष्ठेतेत्यत आह—परस्येति । तेनेति । परेणेत्यर्थः । तत इति । अनिर्वचनीयत्वं मया न साध्यते किन्तु निर्वचनखण्डनेन पारिशेष्यादनिर्वचनीयत्वं सिद्ध्यति—इति ब्रूमः । नन्वनिर्वचनीयत्वं मा साध्यतां, परिशेषसिद्धानिर्वचनीयताभ्युपगमेनापि द्वैतापत्तिस्तदवस्थेत्यत आह—वस्तुतस्त्विति ।

खण्डनभूषामणिः ।

निर्वचनीयताया एव मयाभ्युपगमादित्यर्थः । अनिर्वचनीये निर्वचनानर्हे सदसत्त्वे यस्य सोऽनिर्वचनीयस्तस्य भावोऽनिर्वचनीयता । नन्वेवं यथा प्रपञ्चस्यासत्त्वेन निर्वक्तुमशक्यस्य न सत्यत्वसिद्धिस्तथाऽनिर्वचनीयत्वस्यापि तथात्वेऽ सिद्ध्यापत्तिरित्यत आह—परस्यैवेति । एवं शब्दार्थमाह—निर्वचनेति । अनिर्वचनीयत्वमित्यतोऽनन्तरमितीति शेषः ?। ननु सत्त्वनिर्वचनप्रतिक्षेपादनिर्वचनीयत्वमिति नैवं परस्य व्यवस्थेत्यत आह विधीति । सामान्यतः परेण स्वीकृतया व्यवस्थया विशेषव्यवस्थाप्यङ्गीकार्येत्यर्थः । अस्त्वेवमनिर्वचनीयताख्यस्य धर्मस्यानिर्वाच्यत्वं धर्मिणस्तु कथमित्यत आह—तत इति । तयेत्यर्थे सार्वविभक्तिकस्तसिः । तर्हि किमनिर्वचनीयत्वं त्वया न साधनीयं तदा च कथं तत्सिद्धिरित्यत आह—वस्तुतस्त्विति न हि मया निर्वचनीयत्वं साध्यते परं

खण्डनदर्पणः ।

प्रामाणिकी चेत् द्वैतापत्तिरिति चेन्न—अनिर्वचनीयतायां सत्त्वं वा प्रामाणिकत्वं वास्माकं नोरीकृतं येन व्याघातः स्यात्किं तर्ह्यनिर्वचनीयताप्यनिर्वचनीयेति भावः । स्वप्रकाशत्वेन श्रुतिकोटिबोधितत्वेन ब्रह्मणः सत्त्वमिति भाव्यम् । ननु यद्यनिर्वचनीयता त्वया न व्यवस्थाप्यते तदा कथं व्यवतिष्ठेत इत्यत आह—परस्येति । तेनेति । परेणेत्यर्थः । भावनिषेधेऽभावपर्यवसायितायास्तेनाभ्युपगमात् । निर्वचनप्रतिक्षेपे तद्भावोऽनिर्वचनम् । पर्यवस्यतीति । अयमेवार्थोऽनिर्वचनीयप्रपञ्च इति वाचोयुक्तिरित्यत आह—वस्तुतस्त्विति । चित्संसर्गेणाज्ञातचित्सम्बन्धात्सत्त्वं चित्स्वरूपज्ञानाद-

खण्डनरत्नमालिका ।

शब्देति । तत्सत्यमिति श्रुतिविरोधात्सर्वशब्दस्य ब्रह्मातिरिक्तपरत्वेऽपि अनिर्वचनीयताव्यतिरिक्तपरत्वे मानाभावादिति भावः । परस्य—तार्किकस्य । तेन तार्किकेण । परस्परविरोधे हि न प्रकारान्तरस्थितिरिति तैरभ्युपगमादिति भावः । परकीयरीत्या—तार्किकरीत्या । नन्वनिर्वचनीयत्वं मा साध्यतां तथापि तदभ्युगपमेन द्वैतापत्तिस्तवेत्यतः स्वमतमाह—वस्तुतस्त्विति । चेत्यपदार्थस्य चित्सङ्गात्स्वतो

सिद्धे चिदात्मनि ब्रह्मतत्त्वे केवले भरमवलम्ब्य चरितार्थाः सुख-मास्महे। ये तु स्वपरिकल्पितसाधनदूषणव्यवस्थया विचारमवतार्य तत्त्वं निर्णेतुमिच्छन्ति तान् प्रति ब्रूमः—न साध्वीयं भवतां विचारव्यवस्था,

## शाङ्करी ।

परिशेषसिद्धेऽप्यनिर्वचनीयत्वे मम नाभ्युपगमः, अपि तु त्वं तथा बोध्यसे इत्यर्थः। भरम्—अध्यवसायम्। ननु तर्हि सदसत्त्वविचारेऽपि किमर्थं ते, प्रवृत्तिरित्यत आह—येत्विति। ब्रह्मभिन्नतत्त्वद्वेषमात्रेण विचारे त्वदभ्युपगतविचारम-

## खण्डनभूषामणिः ।

तु प्रपञ्चसत्त्वासत्त्वयोः प्रमाणाभावमुपन्यस्य तस्य सत्त्वासत्त्वव्यवस्थायामुदासीनाश्रिताथाः परिशेषसिद्धानिर्वचनीयव्यवहाराः सुखं निरूपणक्लेशविधुरमास्महे। ननु तद्व्यवस्थायामौदासीन्ये शून्यवाद एव कथं न स्यादित्याशङ्क्याह-ब्रह्मतत्त्वे इति। भरं तात्पर्यं तन्निरूपणम्। भरम्—अध्यवसायमिति मिश्राः। ननु ब्रह्मण्यपि प्रमाणाभावे तदसिद्ध्यापत्तिः सद्भावे च वक्ष्यमाणदूषणग्रस्ततेत्याह—स्वतसिद्ध इति। तत्र हेतुमाह-चिदात्मनीति। चितोऽपि गुणत्वाद् ब्रह्मत्वमसिद्धमित्यत आह-केवले इति। गुणगुणिभावशून्ये, न हि नित्यायाश्चित आश्रयं विना काचिदनुपपत्तिः। स्थितिरनुपपन्नेति चेन्न—तदाश्रयस्येव विनाश्रयतयैवोपपत्तेः। ननु सदसद्भियोरसिद्धौ लोकप्रसिद्धभावाभावविभागप्रसिद्धिविरोध इति चेन्न—तस्यैव खण्ड्यमानत्वेन तस्य वस्तुतोऽभावात्। ननु तर्हि सदसत्त्वविचारे कथं ते प्रवृत्तिरित्यस्य साध्यस्याभावादित्यत आह—ये त्विति। ब्रह्मभिन्नं तत्त्वमस्तीत्यग्रे पक्षोऽस्माकं द्वेष्यः स मा प्रसर्पतित्वत्यनिष्टाभावार्थं प्रवर्त्तामह इत्याशयः। ननु दूषणोपन्यासस्यावश्यं सत्यत्व-

## खण्डनदर्पणः ।

सत्त्वमिति विश्वं सदसच्च पारमार्थिकमिति हृदयम्। सदसद्विचारेऽपि तव किमर्थं प्रवृत्तिरत आह—ये त्विति। ब्रह्मभिन्नतत्त्वे विद्वेषमात्रेण त्वदभ्युपगतविचारमर्यादया विचारे वयं प्रवर्तामहे इत्यर्थः। भवदिति। भवत्कल्पितदूषणादिव्यवस्थयव भवत्पक्षस्य व्याहतत्वादिति भावः। परपक्षनिषेधकदोषाणां प्रमितत्वे तव मतक्षतिर-

## खण्डनरत्नमालिका ।

वा सिद्ध्यसम्भवेन तत्सत्त्वासत्त्वयोरौदासीन्यालम्बने सत्यनिर्वचनीयत्वं तस्य परिशेषसिद्धमपि मम नाभ्युगमविषयः येन द्वैतापत्तिः किं तु त्वं तथा बोध्यसे इति भावः। नन्वेवं त्वन्मते कस्य चित्साधनीयस्याभावाद्व्यर्था विचारप्रवृत्तिरत आह—ये त्विति। प्रपञ्चसत्यत्वाभिनिवेशिनां भ्रान्तानां परेषां संसारकूपे पततामुद्धारायानु-

भवत्कल्पितव्यवस्थयैव व्याहतत्वात् । अत एवाऽस्मदुपन्यस्यमानदूषणस्थितिविषयाः पर्य्यनुयोगा निरवकाशाः, त्वद्व्यवस्थयैव त्वद्व्यवस्थाया व्याहत्युपन्यासात् । नचोपन्यास एव निर्बन्धकारणम्, विचारोपन्यासस्य सदसत्त्वोपगमाद्युदासीनैर्विचार्य्यमित्युपेत्यैव परं विचारप्रवर्तनायाः शक्यत्वमित्यावेदितत्वात् । यदि तु विचारस्य सत्त्वमनभ्युपेत्य न विचारयितुं शक्यम्—इत्युच्यते, तदा प्रमाणमव्यापार्य्य न तदीयसत्त्वाभ्युपगमोऽपि शक्यतेऽतिप्रसङ्गात्, इति विचारस्यापि

शाङ्करी ।

र्थादया प्रवर्त्तामहे इत्यर्थः । अत एवेति । यतः परपरिकल्पितसाधनदूषणव्यवस्थयैव प्रवर्त्तामहे नतु स्वयं साधनदूषणादिव्यवस्थामभ्युपगच्छामो येन तदाश्रिता अद्वैतव्याघातादयो दोषाः स्युरित्यर्थः । "अत" इत्यस्याभिप्रेयमाह—त्वद्व्यवस्थयेति । ननु विचारे व्याघातोपन्यासस्त्वया कर्त्तव्य इति विचारस्य, व्याघातोपन्यासस्य च, सत्त्वमभ्युपगतमिति द्वैतापत्तिरेवेत्यत आह—नचेति । 'प्रमाणादेरिव विचारव्याघातोपन्यासयोरपि सत्त्वमनभ्युपगम्यैव विचारे प्रवृत्तिः शक्या'—इत्युक्तत्वादित्यर्थः । प्रथमं मतिकर्दमेन विचारप्रवृत्तिरेव न स्यात्'-इत्युक्तं स्मारयति—यदि त्विति । ननु,

खण्डनभूषामणिः ।

मभ्युपेतव्यमस्मदीत्यात आह—न चेति । निर्बन्धकरणं—सत्त्वाभ्युपगमायानिर्वचनीयत्वनिरासप्रयासकरणमित्यर्थः । प्रमाणमव्यापार्य्य अप्रवर्त्त्यानुपन्यस्येति यावत् । कुत्रेयमनवस्था—न तावदुत्पत्तौ विचारणायाः, स्वकारणेभ्य एव तदुत्पत्तेः नापि विज्ञप्तौ अनादिविचारपरम्परयोत्तरोत्तरविचारस्य सत्त्वसिद्धेरित्याशङ्क्य परिहरति—नचेत्यादि ।

खण्डनदर्पणः ।

प्रमितत्वे च दोषाऽसिद्धिरित्याशङ्क्याह—अत एवेति । त्वदिति । त्वदभ्युपगतदूषणे तव पक्षो व्याहत इत्युच्यते न तु तस्य प्रमितत्वमप्रमितत्वं वाभ्युपगम्य मम कथायां प्रवृत्तिरिति तात्पर्यम् । ननु व्याहत्युपन्यासस्य विचारोपन्यासस्य च विचारोपन्यासनियतत्वाद्विचारोपन्याससत्त्वाभ्युपगमे पुनरद्वैतव्याघात इत्यत आह—न चेति । प्रमाणादेरिव विचारस्यापि सत्त्वमनभ्युपगम्यैव विचारः प्रवर्त्तयितुं शक्यत इति पूर्वमेवोक्तत्वात् विचारोपन्याससत्त्वानङ्गीकार एवेत्यविरोध इत्यर्थः । प्रथमं मतिकर्दमेन विचारे प्रवृत्तिरेव न स्यादित्याद्युक्तं स्मारयति—यदि त्विति । विचायात

खण्डनरत्नमालिका ।

कम्पयैव मम प्रवृत्तिरिति भावः । पर्यनुयोगा इति । यैर्दूषणैः परमतं दूष्यते तानि प्रमितानि न वा आद्ये आत्मवत्सत्त्वं द्वितीये दूषकत्वायोग इत्यादयः प्रश्नाः इत्यर्थः । निरवकाशा इति । त्वया दूषणत्वेनाभिमतान् त्वद्वचनेन प्रतीत्य व्यवहरामि न तु तेषां सत्त्वं ममाभिमतमिति भावः । निर्बन्धकारणम्—दूषणसत्यत्वै-

विचार्यग्रहणेऽनवस्थया विचारारम्भ एवाऽशक्यः स्यात्। नच पूर्वं पूर्वसिद्धत्वाद्विचारे विचारान्तरमिदानीमगवेषणीयम्। विचारस्य पूर्वसिद्धत्वे विचार्य्यरूपस्वविषयव्यवस्थितत्वात् तस्य, विचार्य्यमपि पूर्वमेव विचारितमित्यनारम्भ एव विचारस्य। अथ विचार्य्यविशेषस्य पूर्वमसिद्धत्वात् तदर्थं विचारारम्भः ? तर्हि विचारविशेषस्यापि

शाङ्करी।

विचारस्यापि विचार्यं ग्रहणे विचाराप्रवृत्तिः स्यात्, नत्वेवं, किं तर्हि पूर्वमेव विचारः सिद्धः इत्यत आह—नचेति। विचारसिद्धिर्विचार्यसिद्धिनान्तरीयकी, ज्ञानस्येव विचारस्यापि सविषयकत्वात्; तथाच किं विचारेण, विचार्य्यसिद्धेस्तत्फलस्य सम्पन्नत्वादित्याह—विचारस्येति। ननु विचारलक्षणस्य विचार्य्यस्य पूर्वसिद्धत्वेपि प्रपञ्चसत्त्वासत्त्वलक्षणस्य विचार्यविशेषस्य न पूर्वसिद्धत्वमिति तदर्थमग्रे विचारः स्यादेवेत्याह—अथेति। तर्हि स विचार्य्यविशेषो यस्य विचारस्य विषयः सोप्यसिद्ध एव, तत्सिद्धौ विचार्यविशेषस्यापि सिद्धत्वप्रसङ्गात्' एवं 'ततः पूर्वपूर्वसिद्धत्वाद्विचारे विचारान्तरमिदानीमगवेषणीयम्, इति यदुक्तं तच्छुष्कचर्वणमित्याह—तर्हीति। ननु, प्रवर्त्यतां विचारः, तत्र विचारे

खण्डनभूषामणिः।

स्वस्य-विचारस्य। विचार्य्यश्चासौ स्वविषयश्चेति विग्रहः। विचारस्य पूर्वपूर्वसिद्धत्वेन स्वविचार्य्यत्वरूपेण स्वविषयेण नित्यं सद्घटितत्त्वाद्विचार्य्यमपि पूर्वसिद्धमिति व्यर्थ एवेदानीं विचारारम्भ इत्यर्थः। इदानींतनविचारस्यारम्भं समर्थयति-अथेति। यद्यपि परेण तस्यां कथायां त्वदुपन्यस्तखण्डनयुक्त्या बाधने परस्यैव जयस्तदुपन्यस्तदोषस्य त्वया निर्वाहात्। तथापि परेण खण्डनयुक्तीर्वा बलवत्त्वमस्मदुक्तमङ्गीकृत-

खण्डनदर्पणः

ननु कुत्रेयमनवस्था न तावदुत्पत्तौ विचारणायाः स्वकारणेभ्यो निष्पत्तेः, नापि ज्ञप्तावविद्यमानादिविचारपरम्परयोत्तरविचारस्य सत्त्वज्ञप्तेरित्याशङ्क्याह—न चेति। विचारस्य निर्विषयत्वासम्भवात विचारस्वरूपमिव विचार्यस्वरूपमपि पूर्वमेव सिद्धमिति तन्निर्णयाय विचारारम्भोपि न स्यादित्यर्थः। ननु विचारलक्षणस्य विचार्यस्य पूर्वसिद्धत्वेपि प्रपञ्चसत्त्वासत्त्वलक्षणस्य विचार्यविशेषस्य पूर्वमसिद्धत्वात्तदर्थं विचारः स्यादेवेत्याह—अथेति। विचार्यविशेषस्य विचारसामान्यगोचरत्वायोगात् विचार्यविशेषगोचरत्वेन विशेषस्य विचारस्यापि प्रागसिद्धतया विचार्यतत्सत्तास्वीकारे ऽनवस्थेति परिहरति—तर्हीति। नचैवं विचारारम्भ एव किं पराहत

खण्डनरत्नमालिका।

भ्युपगमापादकम्। अवद्व्यवस्थामाश्रित्य अवद्व्यवस्थाया आभासत्वप्रदर्शनमेवाऽस्माकं निर्वाह्यं नान्यदित्युक्तमिदानीमभ्युपगम्य त्वया तस्य खण्डनेऽपि न नः क्षति-

तद्विषयकस्य पूर्वमसिद्धिरेवेति वृथा शुष्कचर्वणम् । यदि च त्वद्दर्शनरीत्याभिधीयमानमस्माभिर्बाधं बाधसे तदा स्वाभ्युपगतरीतिबाधाभिधायितैव ते स्यात् अस्माभिर्निर्वाह्यमानस्य त्वया खण्डनयुक्त्यैव बाधेऽस्माकमेव जेतृता, "खण्डनयुक्त्यो बाधिका, निर्वाह्यपक्षश्च बा

शाङ्करी ।

त्वदुक्ता दोषा मया युक्त्यन्तरेण बाधनीया इत्यपर्यवसानं स्यादित्यत आह—यदि चेति । ननु, दोषा अपि हेत्वाभासादयस्त्वया खण्डिता एव, तदेव खण्डनमादाय त्वयोद्भाव्यमाना दोषा मयापि खण्डनीया, इत्यहमेव जेष्यामीत्यत आह-अस्माभिरिति । यद्यपि तस्यां कथायां त्वदुपन्यस्तदोषाणां परेण खण्डनयुक्त्या बाधने परस्य जेतृता, न तव, उपन्यस्तदोषस्य त्वयाऽनिर्वाहात्, तथापि परेण खण्डनयुक्तीनां बलवत्त्वं तावदङ्गीकृतमित्येतावतैव मम जेतृतेति हृदयम् । कथं जेतृतेत्यत आह-खण्डनेति । ननु, ब्रह्माद्वैतं त्वया निर्वाह्यं, तन्मया खण्डनीयं, प्रपञ्चखण्डनमप्यन्ततस्त्वया

खण्डनभूषामणिः ।

मिति ममैव जेतृतेति भावः । कथं जेतृतेत्यत आह—खण्डनयुक्त्यो बाधिका इति । अत्र मिश्राः-ब्रह्माद्वैतं त्वया स्थापनीयं मया खण्डनीयमितीदृश्यामेव कथायां मया वक्तव्यं नान्यत्रेति परेणापि यद्यपि सुवचम्, न चैवं कथैव न स्यादिति वाच्यमिष्टापत्तेः। ब्रह्म स्वतः सिद्धमेवेति न तत्र साधनापेक्षेति चेत्। प्रपञ्चोपि सर्वजनसिद्ध एवेति न तत्र साधनापेक्षेति तुल्यम् सर्वजनसिद्धत्वमपि त्वयोपपादनीयमिति यदि तदा स्वतः सिद्धत्वमपि त्वयोपपादनीयमिति तुल्यम् तर्हि वितण्डाकथैव न स्यात् द्वयोरपि स्थापनाप्रसङ्गादिति चेन्न । शक्तिजिज्ञासया प्रपञ्चसत्यत्ववादिनोरप्यन्योन्यं तत्सम्भवात्तथापि खण्डनयुक्त्यो बलवत्य इत्यत्रैव हृदयमित्याहुः । तन्न नहीदृशव्यवस्थयैव

खण्डनदर्पणः ।

इति वाच्यम् सत्त्वासत्त्वौदास्येन विचारस्य स्वीकारे विचारारम्भसिद्धिरिति हृदयम् । नन्वपरोक्तां व्यवस्थामाश्रित्य तस्या एव सत्त्वासत्त्वप्रदर्शनव्यतिरेकेणाप्यस्माकं निर्वाह्यं नास्तीत्युक्तमिदानीमभ्युपगम्य तस्य त्वया खण्डनेऽपि न ततः कदाचिदनिष्टापत्तिरित्याह—यदा चेति । न च मदुक्तप्रकारस्यानैकान्तिकादेर्बाधकस्य प्रकृतविषये सत्त्वं नास्तीत्यनेन रूपेण बाधविचारे कथमुक्तदोष इति वाच्यम् । अनैकान्तिकादिबाधप्रकार एव नास्तीत्यनेन रूपेण बाधाभिधाने तथात्वमावश्यकमिति तेन रूपेणास्माकमशक्यमित्याशयात् । किञ्चास्मदुक्तखण्डनयुक्त्यैवास्मदुच्यमानदूषणबाधाभिधानेऽप्यस्मदिष्टमेव स्यान्मयेव त्वयापि तत्सत्त्वाङ्गीकारादित्याह—अस्माभिरिति । यद्यप्ये-

खण्डनरत्नमालिका ।

रित्याह—यदा चेति । नैयायिकप्रयुक्तस्य साधकबाधकहेत्वोः तद्रीत्यैव दूषणेऽभि-

ध्यः"—इत्यस्याऽस्मदुक्तपक्षस्य त्वयैव निर्वाहात् । तस्मात्त्वया निर्वाह्यमस्माभिस्तु खण्डनीयमितीदृश्यामेव परं कथायां त्वन्निर्वाह्यनिर्वाहे तत्र जयो नान्यथेति । तदेवं भेदप्रपञ्चोऽनिर्वचनीय:, ब्रह्मैव तु परमार्थसः

शाङ्करी ।

निर्वाह्यं, तत्र प्रतिखण्डनं मया कर्त्तव्यमित्यपर्य्यवसाने तदवस्थमेवेत्याशङ्क्य कथासन्दर्भमुपसंहरति—तस्मादिति । यद्यपि "त्वया ब्रह्माद्वैतं स्थापनीयं, मया खण्डनीयम् , इतीदृश्यामेव कथायां मया वक्तव्यं, नान्यत्रे"ति परेणापि वक्तुं शक्यते, नचैवं कथैव न स्यादिति वाच्यम् , इष्टापत्तेः, अनिष्टत्वे चास्योभयसमाधेयत्वात् । ब्रह्म स्वतः सिद्धमेव न तत्र साधनापेक्षा ? इति चेत् प्रपञ्चोपि सर्वजनसिद्ध एव न तत्र साधनापेक्षेति तुल्यम् । सर्वजनसिद्धत्वमपि त्वयोपपादनीयम् ? इति यदि, तदा स्वतः सिद्धत्वमपि त्वयोपपादनीयमिति तुल्यम् । तर्हि वितण्डा कथैव न स्यादुभयोरपि स्थापनाप्रसङ्गात् ? इति चेत्, शक्तिजिज्ञासया प्रपञ्चवादिनामप्य-

खण्डनभूषामणिः ।

कथेति ग्रन्थार्थः परन्त्वेतादृश्यां कथायां निर्वाह्यनिर्वाह एव तव जयः अन्यादृश्यां कथायां खण्डनयुक्तीरपि परोक्ताः खण्डनयुक्तिभिरेव बाधित्वा अस्माभिः स्वोक्तनिर्वाहः कार्य्य एव नहि खण्डनयुक्तयः पारमार्थिकं बाधितुमीशत इत्यव्यवहितमेव वक्ष्याम इत्यत्र तात्पर्यात्। अत एव तथैवोपसंहरति–तदेवमिति । प्रपञ्चोऽनिर्वचनीयः काल्पनिकः । कल्पनायाश्च निरधिष्ठानाया अनुपपत्तेराह—ब्रह्मैव परमार्थसदिति । एवकारेण शून्याधिष्ठानता निवार्यते । अधिष्ठानतौपयिकरूपमाह परमार्थसदिति ।

खण्डनदर्पणः ।

तावन्मात्रेण न तव जेतृता खण्डनयुक्तयो बाधिका निर्वाह्यपक्षस्तु बाध्य इत्यस्यैव पक्षस्य निर्वाहात् । तथापि यथा निर्वाह्यः खण्डनयुक्तिभिर्बाध्यस्तथा खण्डनयुक्तयोपि ताभिरेव बाध्या इत्येतावतैव मम जेतृतेति भावः । ननु ब्रह्माद्वैतं त्वया निर्वाह्यं तन्मया खण्डनीयं प्रपञ्चखण्डनमप्यन्ततस्त्वया खण्डनीयं निर्वाह्यं तत्र मया प्रतिखण्डनं कार्यमित्यपर्यवसानं तदवस्थमेवेत्याशङ्क्य कथासन्दर्भमुपसंहरति—तस्मादिति । ननु त्वया ब्रह्माद्वैतं निर्वाह्यं तत्र मया खण्डनं कार्यमितीदृश्यामेव कथायां वक्तव्यं नान्यथेति परेणापि वक्तुं शक्यमिति चेन्न । त्वया निर्वाह्यं मया खण्डनीयमितीदृशीं वितण्डां कथामारभ्यास्याभिधानात् । यदि मया ब्रह्माद्वैतं स्थापनीयं तत्र त्वया बाधकं वाच्यमिति समयबन्धपूर्वकमप्यभिप्रेत्य वदसि—तत्रापि

खण्डनरत्नमालिका ।

हिते प्रमिताप्रमितत्वविकल्पेन नेदं दूषणमिति यदि तार्किको ब्रूते तर्हि स्वाभ्युपगत-

दद्वितीयमिति स्थितम् ॥

अद्वैते प्रमाणप्रश्नानुपपत्तिः—

नन्वद्वैते किं प्रमाणम् । प्रश्न एव तावदद्वैतमनङ्गीकुर्वतो नोपपद्यते ।

शाङ्करी।

न्योन्यं तत्सम्भवात, तथापि खण्डनयुक्तयो बलवत्य इत्यत्रैव हृदयम् । स्वपक्षमुपसंहरति । तदेवमिति ।

ननु "ब्रह्मैव परमार्थसत्" इति त्वयोच्यते, तथाच प्रतिज्ञैवेयं तत्र प्रमाणमुपन्यस्तुमर्हसीत्याह—नन्विति । उत्तरमाह—प्रश्न एवेति । प्रश्न एव तावत् प्रमाणमिति विच्छिद्यापि योजयन्ति । प्रश्नान्यथानुपपत्तिरेवाद्वैतसाधिकेत्यर्थः। तामेवाह—

खण्डनभूषामणिः ।

ननु नित्यत्वादिधर्माणामपि सत्त्वात ब्रह्मैवेत्यनुपपन्नमत आह—अद्वितीयमिति । नित्यत्वादयोपि तस्मिन् कल्पिता एवेति भावः ।

ननु प्रपञ्चस्यावस्तुत्वान्मास्तु प्रमाणापेक्षा अद्वितीयस्य तु वस्तुत्वात् प्रमाणमपेक्ष्यम् तथा च यदि प्रमाणमङ्गीकुरुषे तदा प्रमाणप्रमेयविभागादद्वैतस्य व्याघातोऽनङ्गीकारेण साधकाभावादसिद्धिः न हि परमार्थसदिति प्रतिज्ञामात्रात् किञ्चित् सिध्यतीति दुरभिसन्धिः पृच्छति—नन्वद्वैते किं प्रमाणमिति । "उत्तरं—प्रश्न एवेति । प्रश्न एव तावत्प्रमाणमिति विछिद्य योजयन्ति तथा चाद्वैतोल्लेखी प्रश्नो द्वैतसत्यत्ववादिनो नोपपद्यते तथा च प्रश्न एवानुपपद्यमानस्तत्र प्रमाणम् ।

खण्डनदर्पणः ।

नन्वद्वैते किं प्रमाणमित्यादिना अद्वितीयं ब्रह्म स्थाप्यमित्यादेर्वाच्यत्वात प्रकृतमुपसंहरति--तदेवमिति ।

इति श्रीज्ञानानन्दभगवत्पूज्यपादशिष्य-श्रीमदनुभवानन्दभगवत्पूज्यपादशिष्यस्य श्रीप्रगल्भाचार्यस्य कृतौ खण्डनदर्पणे विद्यासागरादिकृतखण्डनोपायादिसंग्रहे परप्रकाशखण्डनस्वप्रकाशब्रह्मस्थापनपरिच्छेदः ॥

---

यद्यप्यनिर्वचनीयस्यावस्तुत्वात् न प्रामाणिकत्वं तथाप्यद्वितीयस्य वस्तुत्वात् प्रामाणं वाच्यमिति चोदयति—नन्विति । प्रमाणाङ्गीकारे प्रमाणप्रमेयविभागाद्द्वैत-

खण्डनरत्नमालिका ।

दूषकत्वेन जात्युत्तरवादी सन् जितः स्यादिति भावः ।

भेदप्रपञ्चस्यावस्तुत्वेनाप्रामाणिकत्वात् प्रमाणानपेक्षणेऽपि अद्वैतस्य वस्तुत्वेन प्रामाणिकतया तत्र प्रमाणं वाच्यमित्याशयेन पृच्छति—नन्विति प्रमाणस्याङ्गीकारे

प्रमाणं यत्राद्वैते पृच्छ्यते तस्याऽप्रतीतौ कथमेवम्भूतः प्रश्नः संगच्छते । नहि प्रमाणमात्रं भवता पृच्छ्यते, किंनाम विषयविशेषनियतम् , तच्च तदो·

शाङ्करी ।

प्रमाणमिति । अद्वैतज्ञानमन्तरेण तन्नियतविषयप्रमाणप्रश्न एवानुपपन्न इत्यर्थः ।

खण्डनभूषामाणः ।

प्रश्नान्यथानुपपत्तिरेवाद्वैतसाधिकेत्यर्थः । तामेवाह प्रमाणमिति" मिश्राः । तन्न तथा सति "श्रुतिरेवाद्वैते प्रमाणमिति ब्रूमः" इति प्रश्नाक्षेप उपसंहारश्च नोपपद्यते परन्तु प्रश्नः श्रुतिरपीत्येवावक्ष्यत् तस्मात् किं शब्दोऽयमाक्षेपो नास्त्येवाद्वैते प्रमाणमिति । अथवा प्रश्ने तत्राक्षेप्तुरतिभ्रमस्य प्रमाणोपन्यासेनापि बोधनमतिदुष्करमिति मत्वा प्रश्नखण्डनेन पराजितोयं प्रमाणं जिज्ञासमानः खण्डनं बोधनीयो भविष्यतीत्याशयेनैकमेव वाक्यमिदं प्रश्नखण्डनार्थमुक्तमित्येव योज्यम् । न चैवमाक्षेपनिरासपरत्वे तथैव वाच्यम् अयमाक्षेपो नोपपद्यत इति न तु प्रश्न इति तन्निरासश्चाविद्यासिद्धव्यवहारमुपपादयता कार्य इति स एवोपन्यासार्ह इति ग्रन्थासङ्गतितादवस्थ्यमिति यद्वाऽऽक्षिप्तमपि पृष्टं मत्वा प्रश्नं खण्डयतीति विद्यासागरव्याख्यानं तत्परिहर्तुः पराभिप्रायाज्ञानमापादयतीति हेयमेव तस्माज्जिज्ञासून् प्रति प्रमाणमग्रे विविक्षिष्यन्नेवाहं यूनां प्रश्नखण्डनेनाहङ्कारं खण्डयामीत्येव युक्तम् न चैवमहङ्कारं खण्डयतापि प्रमाणमुपन्यस्तमेवेति वाच्यं साक्षिसिद्धमादायापि प्रमाणप्रश्नः सम्भवतीति वक्ष्यमाणत्वात् तथा च एवं विकल्पनीयं किमयमाक्षेपे प्रश्ने वा आद्ये हेतुर्वाच्यः प्रतिज्ञामात्रेण साध्यासिद्धेः तथा च न्यूनाङ्गता यदि च मया प्रश्नार्थत्वे दूष्यमाणे ममाज्ञानं तेनोद्भाव्यते तदा मया न्यूनतयैव दोषेण पराजेयः अतो हेतूदाहरणयोरनुपन्यासादेव किं प्रश्नपर इति निर्णीयैव तत्रोत्तरं देयं खण्डनरीत्यैव न तु प्रमाणोपन्यस्तरीत्येति नोत्तरग्रन्थविरोधः । मिश्रास्त्वेतद्ग्रन्थस्य प्रमाणपरत्वे दूषणमुद्भाव्य श्रुतिरद्वैते प्रमाणमिति ग्रन्थमवतारयिष्यन्ति तत्र वक्ष्याम इति । अद्वैतमप्रतीतं प्रतीतं वेत्याद्यं दूषयति—प्रमाणमिति । नन्वद्वैताप्रतीतावद्वैत-

खण्डनदर्पणः ।

व्याघातोऽनङ्गीकारे साधकाभावादसिद्धिरिति भावः । किमः प्रश्नाक्षेपयोः साधारणत्वादाक्षिप्तमपि पृष्टं मत्वा प्रश्नं तावत् खण्डयति—प्रश्न इति । अविद्यासिद्धभेदाद् व्यवहारमुपपादयताऽऽक्षेपे परिहार उपरिष्टात् करिष्यते—तथा हि—अद्वैतमप्रतीत्य पृच्छमानं पृच्छसि उत तत्प्रतीत्य नाद्य इत्याह—प्रमाणमिति । अद्वैतज्ञानं

खण्डनरत्नमालिका ।

प्रमाणप्रमेयाङ्गीकारादद्वैतव्याघातः अनङ्गीकारे च साधकाभावादद्वैतासिद्धिरिति प्रष्टुराकूतम् । किमः प्रश्नाक्षेपयोः साधारण्यात्प्रश्नार्थकं मत्वा प्रश्नं दूषयति प्रश्न एवेति । आक्षेपार्थकत्वे तु आक्षेपपरिहारमुपरिष्टाद्वक्ष्यति । अनङ्गीकुर्वतः—अप्रतीतवतः । प्रश्नानुपपत्तिमुपपादयति—प्रमाणमिति । सामान्यतः प्रतीतं विशेषतोऽ·

११६ भामती । ब्रह्मसूत्रशाङ्करभाष्यव्याख्या सर्वतन्त्रस्वतन्त्रश्रीमद्वाचस्पतिमिश्रविरचिता । न्यायाचार्य पं० ढुण्ढिराजशास्त्रिणा सङ्कलितया विषमस्थलटिप्पण्या समलङ्कृता । सम्पूर्णः । ( वेदान्त वि० ११ ) रु० २—

११७ जन्मपत्रदीपकः । सोदाहरण-सटिप्पण-हिन्दीटीकासहितः । ज्यौ० पं० श्रीविन्ध्येश्वरीप्रसादद्विवेदिना विरचितः । ( ज्यौ. वि. ९ ) रु० १—

११८ गोभिलगृह्यसूत्रम् । सटीकम् । ( कर्मकाण्ड वि० १२ ) रु० ३—

११९ सिद्धान्तकौमुदी । व्याकरणाचार्य नेने पं० गोपालशास्त्रि विरचित सरला टिप्पण्या सहिता । "रूपलेखनप्रकार-पङ्क्तिलेखनप्रकाराख्य परिशिष्ट सहिता च । कारकान्तो भागः । ( व्या० वि० १४ ) रु० २—

१२० कात्यायनशुल्बसूत्रम् । कर्कभाष्य-महिधरवृत्ति सहितम् । ( कर्म० वि० १४ ) रु० ०—

१२१ व्यक्तिविवेकः । श्रीराजानकमहिमभट्टकृतः । श्रीराजानकरुय्यककृत व्याख्यया साहित्याचार्य पं० श्रीमधुसूदनशास्त्रिरचित मधुसूदनीविवृत्या च समुद्भासिता रु० ६—

१२२ श्राद्धविवेकः । श्रीरुद्रधरकृतः । वेदाचार्य पं० अनन्तरामशास्त्रि कृत टिप्पणी सहितः । ( कर्म० वि० १३ ) रु० २—

१२३ सांख्यतत्त्वकौमुदी । पण्डितराज श्रीराजेश्वरशास्त्रिद्राविड सहोदरनाम्ना न्यायाचार्य श्रीहरिराम शुक्ल विरचितया "सुषमाख्य" कौमुदी व्याख्यया समलङ्कृता । ( सांख्य वि० २ ) रु० १—१०

१२४ वाक्यपदीयम् । श्रीभर्तृहरिमहावैयाकरण विरचितम् । न्याय-व्याकरणाचार्य पं० श्रीसूर्यनारायण शर्म शुक्लेन विरचितया भावप्रदीपाख्य व्याख्यया टिप्पणेन च सम्पादितम् । ( ब्रह्मकाण्डम् ) । ( व्या० वि० १९ ) रु० २—

१२५ प्रौढमनोरमा । भैरवी-भावप्रकाश-सरलाटीकोपेता लघुशब्दरत्नञ्च । [ अव्ययीभावान्तो भागः ] ( व्या० वि० १६ ) रु० १०—

१२६ जैमिनीयन्यायमाला । श्रीमन्माधवाचार्यविरचिता । तद्विरचितेन विस्तरेण विभूषिता । मीमांसाचार्य पं० पट्टाभिरामशास्त्रिणा रचितया विषयवाक्यविवरणया समलङ्कृत्य संशोधिता । [ तृतीयाध्यायान्ता ] ( मीमांसा वि० ७ ) रु० ३—

१२७ शतपथब्राह्मणम् । (शुक्लयजुर्वेदान्तर्गतमाध्यन्दिनशाखीयं) वेदविशारद मीमांसाकेसरिणा पण्डित चिन्नस्वामिशास्त्रिणा टिप्पण्यादिभिर्विशुद्ध्यविशोधितम् । [ काण्डचतुष्टात्मकः प्रथमोभागः ] ( वेद वि० ७ ) रु० २—

१२८ लघुशब्देन्दुशेखरः । म. म. श्रीनागेशभट्टविरचितः । [नपादान्तप्रकरणान्तोभागः] नागेशोक्तिप्रकाश व्याख्यया संवलितः । ( व्या० वि० १७ ) रु० २—

१२९ कृत्यसारसमुच्चयः । म. म. श्रीअमृतनाथझा शर्मणा विरचितः । पण्डितश्रीगङ्गाधरमिश्रशर्मणा यथास्थलोपयुक्तटिप्पणीभिः प्रयोजनीयविविधपरिशिष्टविषयैश्च समलङ्कृतः । ( धर्म० वि० ४ ) रु० ३—८

१३०—भावप्रकाशः । श्रीभावमिश्रप्रणीतः । वनस्पतिविशेषज्ञ-रूपनिघण्टुकार-श्रीरूपलालवैश्यवरेण विरचितेन निघण्टुभागीय-सचित्र-विवरणेन समुपबृंहितया भिषग्रत्न-श्रीब्रह्मशङ्करशास्त्रिणा विनिर्मितया विद्योतिनीनामिकया भाषाटीकया संवलितः । ( आयुर्वेदवि० ३ ) यन्त्रस्थः

१३०—(२) भावप्रकाशः । विद्योतिनी—भाषाटीका सहितः । [ ज्वराधिकारमात्रः ] रु० २—८

१३१ गादाधरी-सामान्यनिरुक्तिः । गंगाख्यव्याख्या टिप्पणी सहितः (न्या०वि०१९) रु० ६—०

१३२ चरणव्यूहसूत्रम् । आचार्यमहिदासकृतभाष्यसहितम् । वेदाचार्य डोगरा-अनन्तरामशास्त्रिणा टिप्पण्यापरिष्कृत्य संशोधितम् । ( वेद वि० ८ ) रु० ०—१०

१३३ वैयाकरणभूषणसारः । श्रीहरिवल्लभविरचित-दर्पणटीकया, म. म. श्रीभैरवमिश्रकृतया-परीक्षाटीकया, श्रीकृष्णमित्रकृत-भूषणव्याख्यया, श्रीसुदीक्षासमकृत तिङर्थवादसारेण च सहितः । ( व्या० वि० १८ ) रु० ८—०

प्रकाशकः—चौखम्बा संस्कृत पुस्तकालय, बनारस सिटी ।

January. 1907.

THE

# CHOWKHAMBÂ SANSKRIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 109.

श्रीहर्षप्रणीतम्

## खण्डनखण्डखाद्यम् ।

आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया
व्याख्यया 'विद्यासागरी'-ति प्रसिद्धया समेतम्
चित्सुख-शङ्करमिश्र-रघुनाथकृतटीकावल-
म्बिन्या टिप्पण्या सनाथम्
उपाध्याय-श्रीगङ्गानाथ शर्मणा
शोधितम् ।

SRÎ HARSHA'S

## KHANDANAKHANDAKHÂDYA,

WITH THE COMMENTARY

'khandanaphakkikâvibhajana' (vidyâsâgarî) of ânandpûrna

WITH EXTRACTS FROM THE COMMENTARIES OF

Chitsukha, Sankara Misra and Raghunâtha,

EDITED BY

GANGÂNÂTHA JHA M. A.,

*Professor of Sanskrit Muir Central College, Allahabad.*

FASCICULUS II.

*PUBLISHED AND SOLD BY THE SECRETARY,*

CHOWKHAMBÂ SANSKRIT BOOK-DEPÔT:

BENARES:

AGENTS:—OTTO HARRASSOWITZ, LEIPZIG:

PANDIT JYESHTHÂRÂMA MUKUNDJÎ BOMBAY.

*Printed by Hari Dâs Gupta, Proprietor,*

AT THE VIDYÂ-VILÂSA PRESS,

BENARES.

*Price Rupee One.*

॥ श्रीः ॥

-*-

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दामोदमोहितम् ॥ २ ॥

स्तवकः—१०९

यतः श्रुतिस्तस्मिन्नाविद्यादशाया पराभ्युपगमरीत्या प्रमाणमित्युच्यते । वस्तुतस्त्वात्मासिद्धमेव चिद्रूपम् ।

* तदिति * । अन्यतः सिद्धस्य देवदत्तगेहस्य परतो व्यावृत्तिद्वारेण काकाधिकरणवाक्यं यथा प्रमाणं भवति तथा स्वतःसिद्धस्य ब्रह्मणो विद्यातत्कार्यव्याकीर्णस्य ततो व्यावृत्त्यर्थः किंचिदुपलक्षणधर्मप्रतिपादनेन वेदान्तवाक्यं प्रमाणमित्यर्थः । यद्वा शब्दत्वेन गृहीतसम्बन्धाः शब्दा भागत्यागलक्षणया सो ऽयं देवदत्त इति वच्चैतन्यं ब्रह्मोपलक्षयन्ति । तेन ब्रह्मणि प्रवृत्तिनिमित्ताभावे ऽपि शास्त्रयोनित्वं ब्रह्मण इति । अत एव धर्मोपग्रहेत्यत्रावाच्यत्वमात्रमुक्तमिह लक्ष्यत्वमुक्तमिति न पौनरुक्त्यम् । ब्रह्मणि प्रमाणप्रमेयविभागाभावान्नोपलक्षणन्यायेनापि श्रुतेः प्रमाण्यमित्याशंक्य प्राग्विद्योत्पत्तेः सर्वमस्त्येव, उत्तरकालं तु तदभावो नानिष्ट इत्याह * तेनेति * । शब्दाविषयस्य ब्रह्मणः कथं श्रुतिप्रमाणकत्वमिति तत्राह * परेति * । पदार्थ एव वाच्यो न वाक्यार्थस्तस्य तात्पर्यगोचरत्वात्पदाभिहितानामेव पदार्थानां योग्यताद्यनुरोधेन वाक्यार्थप्रतिपादकत्वाभ्युपगमाच्च परब्रह्मणो ऽपि वाक्यार्थत्वादवाच्यस्यापि श्रुतिप्रमाणकत्वमित्यर्थः । शब्दान्तरवाच्यस्यैव तीरादेर्लक्ष्यत्वदर्शनाद्ब्रह्मणो ऽपि लक्ष्यत्वे वाच्यत्वादिकं वाच्यमन्यथा ऽलक्ष्यत्वमित्याशंक्याह * वस्तुत इति * । स्फुरितत्वे सति वाच्यत्वाद्यसत्त्वेनालक्ष्यत्वादर्शनात् केवलव्यतिरेकभावादवाच्यस्य माधुर्यविशेषस्यामेय-

सौषुप्तसुखस्य च लक्ष्यत्वदर्शनात् स्वतःसिद्धस्य ब्रह्मणो लक्ष्यत्वसम्भव इति भावः।

ज्ञानं न स्वप्रकाशं शास्त्रगम्यत्वाद् धर्मवत्, विपक्षे ऽनुपपद्यमानक्रियाकर्मभावप्रसङ्गो बाधक इत्यभिप्रेत्य चोदयति

७५ ज्ञानस्य स्वप्रकाशत्वे कर्मकर्तृविरोधशङ्का ]

"ननु च स्वप्रकाशत्वं ज्ञानस्येत्यनुपपन्नमिदम्, क्रियाकर्मभावस्य भेदव्यतिरेकेणानुपपत्तेः। कार्या क्रिया हि कर्मणो भवति। कर्म च कारकं क्रियायाः। न च स्वेनैव स्वनिष्पादनं शक्यम्, पूर्वापरभावविशेषस्य हेतु-हेतुमद्भावरूपत्वात्। न च तस्मादेव तदेव पूर्वमपरञ्च सम्भवति, तदनवच्छिन्नकालविशेषस्य तत्पूर्वशब्दार्थत्वात्। तदा च तस्य सद्भावस्वीकारे स एव कालस्तदवच्छिन्नो ऽनवच्छिन्नश्चेति विरोधात्।"

* नन्विति *। प्रकाशक्रियाप्रकाश्यकर्मणोर्भेद-व्याप्ततया तदभावे ऽसम्भवादित्याह * क्रियेति *। क्रियाकर्मभावो जन्यजनकभाव इत्यर्थः। जडत्वं प्रका-श्यत्वे प्रयोजकमजडत्वं प्रकाशत्वेन भेदो ऽभेदो वेत्या-शंक्याह * कार्येति *। प्रकाशपुष्कलकारणादुत्पद्य-मानाऽऽत्मकर्मकैव जायतामित्याशंक्याह *क्रियेति*। कर्मणः कारकात्क्रियाभवति। 'हि' यस्मादित्यर्थः। क्रियास्वरूपपर्यालोचनया क्रियाकर्मणोरेकत्वं निरस्य

कर्मस्वरूपपर्यालोचनया च निराचष्टे *कर्मेति*। ध्वंसस्योपादानव्यतिरेकवत्प्रकाशक्रियायाः कार्यकारणभावः स्वत एव किं न स्यादित्यत आह *न चेति*। स्वसिद्धौ स्वसिद्धिरित्यात्माश्रयाद्धेत्वंतरमाह * पूर्वेति *। नियतपूर्वत्वं कारणत्वं नियतोत्तरत्वं कार्यत्वमिति यावत्। ततो वा किमित्यत आह *न चेति*। एकस्याप्यनेककालसम्बन्धितया पूर्वापरभावो ऽस्ति, अत उक्तं *तस्मादेवेति*। द्रव्याद्याकारेणाभेदे ऽपि मृद्घटयोः पूर्वापरभावो ऽस्ति, तत उक्तं *तदेवेति*। एकस्य युगपत्पूर्वापरीभावासम्भवं दर्शयितुं तत्पूर्वशब्दार्थमाह *तदिति*। तेन कार्येणानवच्छिन्नः कालः कार्यात्पूर्वकालस्तस्मिन् कार्यसद्भावः स्वीक्रियते न वा। न चेदेकस्य कार्यकारणभावासम्भवः सिद्धः। स्वीक्रियते चेत्तत्राह * तदेति *। एकस्मिन्नुपाधौ कार्यतद्भावयोरनुप्रवेशो विरोध इत्यर्थः। तदुक्तं कुसुमांजलौ[1]- 'उत्पत्तेः पूर्वं स्वयमसतः स्वोत्पत्तावप्रभुत्वेन स्वस्मादिति पश्चादनुपपत्तेः पौर्वापर्यनियमश्च कार्यकारणभावो न चैकं पूर्वमपरं च तत्त्वस्य भेदाधिष्ठानत्वादिति'। क्रियाकर्मणोः कार्यकारणभावेनासिद्धेनैवैकस्य तद्भावः कथं साध्यत इति परिहरति

१ प्रथमस्तवके पृ. ४३। उत्पत्तेरिति। स्वोत्पत्तेः पूर्वं यदि स्वम्भवेत् तदा नियतकालोत्पत्तौ हेतुः स्यात्। न चैवम्। असतो ऽपि हेतुत्वे पश्चादपि कार्यसत्त्वप्रसङ्गेन तदनुपलब्धिविरोध इत्यर्थः। कार्यकारणयोरभेदे विरोधान्तरमाह पौर्वापर्येति। पटार्थिनः पटमेव नोपाददते, किन्तु तत्पूर्वकालवर्तिनस्तन्तूनिति लोकव्यवहारसिद्धकार्यकारणभावविरोध इत्यर्थः। 'तत्त्वस्य' पौर्वापर्यस्येत्यर्थः। (प्रकाशः)

७६ उक्तविरोधपरिहारः ]

मैवम् । क्रियायाः कर्मजन्यतानियमानङ्गीकारात्, सर्वथैवानागतविज्ञाने तदसम्भवात्, क्वचिज्जनकतामादाय च कर्मणि कारकत्वव्यपदेशात्, कारणव्यापारविषयत्वाद्वा परसमवेतक्रियाफलभागित्वाद्वा कर्मलक्षणात् विनापि क्रियाजनकत्वेन कर्मव्यहारोपपत्तेः ।

*मैवमिति* । क्रियामात्रस्य न कर्मजन्यतानियमः अकर्मकधात्वर्थेषु व्यभिचारात् । नापि ज्ञानस्य तन्नियमः, अतीतार्थज्ञाने कर्मजन्यत्वासंभवादिति भावः । अतीतस्य संस्करात्मनास्थितस्य स्वसंवेदनजनकत्वं सम्भवतीत्याशंक्याह * सर्वथेति * । अनागतत्वादेव संस्कारो ऽपि नास्तीत्यर्थः । कथम् तर्हि जानातेः सकर्मत्वव्यपदेशः कर्मणि कारकत्वव्यपदेशश्चेत्याशंक्याह * क्वचिदिति * । सम्प्रयोगस्य विषयव्यापारत्वात् प्रत्यक्षे विषयस्य कारकत्वाभिप्रायेण कारकत्वादिव्यपदेशो न विरुध्यत इत्यर्थः । तच्च ज्ञानं वृत्तिरूपमिति न क्वचिदपि संवेदनजन्यमिति रहस्यम् ।

क्व चित्क्रियायाः कर्मजन्यत्वमूरीकृत्य पर्यहार्षीत् सम्प्रति कर्मत्वमेव न निरूपणगोचर इत्याह

७७ कर्मलक्षणस्य विचारासहत्वेनोक्तदोषस्य परिहारः ।

किञ्च तत्कर्मत्वम् यत् स्वं प्रति विरुध्यते ? (१) "परसमवेतक्रियाफलभागित्वमिति" चेन्न, अपादान-

स्यातिव्याप्तेः । 'अपदानङ्कर्मापीति' चेन्न, 'वृक्षात्पर्णम्पतति' इतिवत् 'वृक्षं पर्णं पतति' इत्यपि स्यात् । "विवक्षातः कारकाणि[1] भवन्तीति तदविवक्षातो नैवमिति" चेन्न, वस्तुतः सतस्ताद्रूप्यस्य यदि[2] विवक्षा स्यात् तदा तदपि स्यात् । "अपादानस्य कर्मत्वन्न विवक्ष्यत इति शाब्दिकसम्प्रदाय" इति चेत्, तर्हि निवृत्तसर्वकर्मव्यवाहारेऽपि स्वकृतकर्मलक्षणानुरोधेन कर्मत्वमभ्युपगच्छता वस्तुमात्रङ्कर्मेत्यपि लक्षणं सावकाशितं स्यात्[3] । कथञ्च[4] लोकोत्तरप्रज्ञेन निवृत्तसर्वकर्मव्यवहारेऽपि कर्मत्वमस्तीति ज्ञातम् । "अपादानेतरदादिशं[5] कर्मेति" चेन्न, तत्राऽपि 'नदी वर्द्धते' इत्यादौ तद्वृद्धेरप्राप्ततीरभागप्राप्तिफलायाः सकर्मत्वापत्तेः[6] । 'अपादानेतरत्' इत्यस्य स्थाने 'क्रिया-

१ कारकविभक्तयो भवन्तीति यावत् (चित्सुखी) ।

२ कर्मत्वं वस्तुतो विद्यते चेत् तर्हि विवक्षाकारणस्य भावात् विवक्षा द्वितीयाविभक्तिप्रयोगश्चेत्युभयमपि स्यात् (चित्सुखी) ।

३ तथा च परसमवेतपदोपादानप्रयासो व्यर्थ इति भावः (दीधिति) ।

४ वृद्धव्यवहारं विना कर्मत्वाधिगतिरपि न सम्भवति किमु तत्र लक्षणोपन्यासः (चित्सुखी) ।

५ अपादानव्यतिरिक्तत्वे सति परसमवेतक्रियाफलशालि कर्मेति लक्षणं विवक्षितमिति शङ्केत (चित्सुखी) ।

६ तदा समवेतवृद्धिक्रियाजन्यसंयोगविभागफलशालिनस्तीरस्य कर्मत्वम्प्राप्नोति । (चित्सुखी) ।

नाशक'—इतिकरणेऽप्यस्य तदवस्थत्वात्। विनाशलक्षणायां वृद्धौ तदयोगाच्च। 'वृक्षं त्यजति' इत्यादावकर्मकत्वप्रसङ्गाच्च।

'आत्मानञ्जानामि'[1] इत्यत्र च परत्वाभावादकर्मकत्वापत्तेः[2]। "तत्राप्युपाधिभेदात्परत्वम्, कर्तृत्वभोक्तृत्वाद्युपहितस्यैवात्मनो ज्ञेयत्वाभ्युपगमादिति"[3] चेन्न। यतोऽस्तु तावदेवं यथाकथञ्चित्[4],तथाऽप्यध्यात्मविदो निरुपाधिमात्मानञ्जानतो ज्ञानमकर्मकं स्यात्[5]। 'पच्यते ओदनः स्वयमेव'इत्यादौ कर्मकर्त्तरि का गतिः स्यात्[6]। सर्वज्ञमीश्वरम्मन्यमानेन[7] च नित्यज्ञाने तस्मिन् भगवति

---

१ मूललक्षणेऽपादानातिव्याप्तिं समर्थ्यातिव्याप्तिमाह *आत्मानमिति* (शां)

२ आत्मनःकर्मभिन्नत्वाभावादित्यर्थः (शां)।

३ कर्तृत्वाद्युपाधिरहितस्य स्व ज्ञातृत्वाभ्युपगमादिति शेषः।

४ अनेनास्वरसः सूचितः। कर्मभिन्नत्वमुपाधिनाम्, न तूपाहितस्यात्मनोऽपीति तथैवाव्याप्तिरित्यस्वरसबीजम् (शां)। उपाधीनाम्भेदेऽपि विशेष्यस्याभेदइत्यस्वरसः (दीधिति)।

५ यस्य ज्ञानिन आत्मा उपाधिरहितो यश्च ब्रह्मैवाहमिति सर्वञ्जानाति, तस्य शुद्ध एवात्मा ज्ञाता ज्ञेयश्च। अतोऽत्र कथम् 'आत्मानञ्जानामि' इति प्रयोगस्योपपत्तिः।

६ यतोऽत्रक्रिया परसमवेता नास्ति।

७ नैयायिकेनेत्यर्थ

फलनाशकत्वस्यानभ्युपगमात् तं प्रत्येतल्लक्षणासिद्धेः[1]। तस्माद्व्याकरणकारैः शब्दसिद्ध्यर्थं नदीवृद्ध्यादिवत्कर्मापि परिभाषितमित्यलं तदनुगतलक्षणगवेषणया।

(२) "करणव्यापारविषयः कर्म" इति चेन्न। 'हस्तेन रामेणशरेण' इत्यादावतिप्रसङ्गात्, लक्षणं विनाऽपि क्रियाजनकत्वे सति व्यापारोद्देश्यत्वेन कर्मव्यवहारोपपत्तेः।

शेषञ्[3]चेश्वराभिसन्धौ[4] स्वप्रकाशवादे निर्वक्ष्यामः।

---

१ 'फलनाश्यत्वे'—तिकलकत्तामुद्रितपुस्तके पाठः। स एव च तात्पर्यपर्यालोचनया सम्यक्तरःप्रतिभाति। शङ्करमिश्रेण रघुनाथेन विद्यासागरीकारेण च फलनाशकत्वेति पाठं स्वीकृत्यापि 'फलनाश्यत्वे'त्येव तात्पर्यत्वेन वर्णितम्। सकलटीकासम्मतत्वात् 'फलनाशकत्वे'त्येव पाठो मूले स्थापितः॥ 'फलनाशकत्वस्य' इत्यस्यार्थ उक्तः(१) 'फलस्य यत् (क्रिया-) नाशकत्वन्तस्य' इति विद्यासागर्या, (२) फलन्नाशकं यस्येति बहुब्रीहिः, ततश्च 'फलनाश्यत्वस्य' इत्यर्थ इति दीधितिशाङ्कर्याभ्याम् ॥

२ ईश्वरज्ञानस्य हि विश्वमेव कर्म। न च सा ज्ञानक्रिया फलनाश्या, नित्यत्वादिति तत्राव्याप्तिः (शां)।

३ कथन्तर्हि कर्मलक्षणमनभिधाय स्वप्रकाशवादिना ज्ञानस्य स्वकर्मकत्वं वक्तुं शक्यमित्याद्याक्षेपापेक्षायामाह * शेषमिति *।

४ ईश्वराभिसन्धिर्मदीय एव ग्रन्थः। तत्र स्वप्रकाशवादे ज्ञानकर्मत्वमेव प्रकृतोपयोगि निष्कृष्य वक्ष्याम इत्यर्थः। तच्च ज्ञानस्य विषयत्वमेव ज्ञानकर्मत्वम् ज्ञानाधीनव्यवहारविषयत्वम्। इदञ्च स्वप्रकाशवादिमते ज्ञानस्य स्वव्यवहारहेतुप्रकाशत्वादुपपद्यत इति भावः। (दीधिति)।

* किमिति * । तत् कर्मत्वम् च किमित्यर्थः ।
ांसकानां कर्मलक्षणं शंकते * परेति * । फलभा-
त्वम् कर्मत्वमित्युक्ते पुण्यफलसुखादिभाजि प्रसक्तिः
वारणायोक्तम् *क्रियेति* । गमनफलम् ग्रामदेव-
ाप्तिः, सोभयनिष्ठत्वाद्गमनकर्त्तर्यपि विद्यते, तन्नि-
ायोक्तम् *परेति*। अतो ऽस्य लक्षणस्य भेदगर्भ-
दाभावे न स्यादित्यर्थः । अकर्मण्यप्येतल्लक्षणम-
ं परिहरति * नेति * । वृक्षात्पर्णं पतति पर्णस-
ग्रपतनक्रियाजन्यविभागफलशालिनो वृक्षस्या-
त्रत्वम् स्यादित्यतिव्याप्तिरित्यर्थः । विमतं कर्म
मर्हति उक्तफलभागित्वात् सम्प्रतिपन्नवदिति
ानुमानात् न तत्रातिव्याप्तिरिति शंकते *अपा-
ते * । विमतम् द्वितीयान्तशब्दवाच्यम् कर्म-
सम्प्रतिपन्नवदित्याभाससमानयोगक्षेमत्वान्मै-
परिहरति * नेति * । न च घटः क्रियत
व्यभिचारः, तस्यापि घटं करोतीति तस्या-
यायाम् प्रयोगान्तरे तद्वाच्यत्वादिति । द्विती-
ब्दवाच्यत्वे कर्मविवक्षाविषयत्वम् प्रयोजकम्
ामतोप्रयोजक इति शंकते * विवक्षेति * ।
तदुच्यत एवेति नियमो नास्ति विवक्षामू-
पौरुषेयप्रयोगस्य, अयुगपद्विवक्षितत्वाच्च का-

---

पदङ्कर्मभिन्नपरम् ।

रप्युक्तकर्मलक्षणाक्रान्तमेवेत्यर्थः ।

त्विमस्य प्रयोजको नेत्यर्थः । 'अत' इत्यत्र षष्ठीस्थाने सार्ववि-
कु ।

रकाणामिति भावः । विमतं कर्मत्वविवक्षागोचरः वस्तुतस्तद्रूपत्वात् सम्प्रतिपन्नवदिति साधनव्याप्त्या दूषयति * नेति * । ताद्रूप्यङ्कर्मत्वन्तस्य वस्तुतः सत एव चेद्विवक्षागोचरत्वम् तदत्रापि स्यात् । तदित्यव्ययेन विवक्षोच्यते विवक्षामूलभावाद्विवक्षाप्रयोगौ स्यातामिति भावः । साधनव्यापकत्वानुमानं व्याकरणस्मृतिविरुद्धकालात्ययापदिष्टमिति शंकते * अपादानस्येति * । प्रमाणतर्कावनुपन्यस्य सम्प्रदायमात्रात्प्रत्यवतिष्ठतः काचिदपि लक्षणव्यवस्था न स्यादिति परिहरति * तर्हीति * । निवृत्तः सर्वेषां कर्मव्यवहारो यस्मिन्नपादाने तत्रापि कर्मत्वमभ्युपगच्छता वस्तुमात्रं कर्मेत्यपि लक्षणं समर्थितं स्यात् । अतिव्याप्त्यभिधाने ऽस्त्येव कर्मत्वम्, किं तु विवक्षा न कर्त्तव्येति वैयाकरणसम्प्रदाय इत्यभिधातुं शक्यत्वादित्यर्थः । पूर्वमपादाने ऽपि कर्मत्वमभ्युपगम्य द्वितीयादिप्रसङ्ग उक्तः, इदानीन्तदपि न, प्रमाणाभावादित्याह * कथमिति * । लोकादुत्तरा उद्गता प्रज्ञा यस्य स लोकोत्तरप्रज्ञः । उक्तातिव्याप्तिव्यावृत्तये ऽपादानान्यत्वेन लक्षणं विशिष्म इति शंकते * अपादानेति * । ईदृशं परसमवेतक्रियाफलशालीति यावत् । अतिव्याप्त्यन्तरेण दूषयति *तत्रापीति* । नदीसमवेता वृद्धिक्रिया, तस्या अप्राप्ततीरभागेन संयोगविभागौ फले भवतः,तद्भाजोऽपि तीरस्य कथितलक्षणत्वात्कर्मत्वं प्राप्नोति। न चैतदुक्तम्।द्वितीयाप्रयोगादिप्रसंगाद्वृद्धिधातोरकर्मत्वविरोध इति यावत् । आदिपदेनाग्निर्ज्वलतीत्यादिसंग्रहः । क्रियानाशकत्वे

सति परसमवेतक्रियाजन्यं यत्तद्भागि कर्मेति लभ्यते, न चैवमतिव्याप्तिः, पर्णसमवेतपतनक्रियाजन्यवृक्ष-निष्ठविभागस्य पतनानाशकत्वात्, द्रव्यांतरसंयोग-स्यैव क्रियानाशकत्वात्। नाप्यव्याप्तिः, गंतृसमवेत-गमनाविनाशकप्राप्तिफलशालित्वात् ग्रामादेः कर्मण इत्याशंक्याह *अपादानेतरदिति*। वृद्धिक्रियाफलस्य संयोगादेः वृद्धिक्रियानाशकत्वात्तद्भाजः तीरादेः कर्म-त्वप्रसङ्गस्तदवस्थ इत्यर्थः।'वृक्षं वर्द्धते वर्द्धकि'रित्यत्र ना-शलक्षणवृद्धेर्नाशान्तराभावादुक्तलक्षणात् वृक्षस्याक-र्मत्वप्रसङ्ग इत्यव्याप्तिमाह * विनाशेति *। वृद्धिः परि-स्पन्दक्रियैव न भवति, किं तु महता जलावयविना ऽल्पस्य जलावयविनो विनाशः। तेन न तीरादावति-व्याप्तिरित्याशंक्य नाशलक्षणत्वे वृद्धेः संयोगादिफल-त्वायोगाक्रियात्वमेष्टव्यम्। अतश्चातिव्याप्तिस्तदव-स्थेत्युच्यत इति केचित्। नाशक्रियाया अपि क्षणिक-तया नाशोऽस्ति तत्फलस्य ध्वंसस्येव नित्यत्वात्। न चानवस्था, दृष्टत्वादेव। अतो नाव्याप्तिरित्याशंक्याह *वृक्षमिति*। त्यजिक्रियाजन्यविभागफलस्य तत्क्रि-यानाशकत्वाभावात्तद्भाजो वृक्षस्य कर्मत्वं न स्यादतो वृक्षं त्यजतीति प्रयोगो न स्यादित्यर्थः। विभागः क्रियानाशकः क्रियाफलत्वात्संयोगवदिति चेन्न। पर्ण-वृक्षविभागे व्यभिचारात् तस्यापि पक्षत्वे तत्रैव बाधादिति।

ननु न कर्ममात्रस्येदं लक्षणमुच्यते किं तु ज्ञा-नकर्मण इत्याशंक्याह * आत्मानमिति *। निरूपा-

धिस्वरूपस्यैकत्वे ऽपि सोपाधिकस्य भेदात् ज्ञातुर्ज्ञेयादन्यत्वमेकस्मिन्नपि देह इति शंकते * तत्रेति * । शरीरेंद्रियविशिष्टस्य ज्ञातृत्वं कर्तृत्वाद्युपहितस्य ज्ञेयत्वमित्यर्थः। न विशिष्टं विशेषणादिभ्यस्तत्त्वांतरम्, कृशानुयुक्तो गिरिस्तद्ध्वजयुक्तत्वादित्यादौ हेतुसाध्ययोर्वैयधिकरण्यप्रसंगात्। अंगीकृत्याप्यव्याप्तिमाह *नेति*। सर्वोपाधिप्रहाणेन ब्रह्मैवाहमिति यद्विज्ञानं तदभिज्ञातुः परत्वाभावादात्मकर्मकं न स्यात्, अतश्च न ज्ञानकर्मलक्षणम्, सामान्यलक्षणांतरादर्शनाच्च कर्ममात्रलक्षणमेवेदमिति भावः। कर्मैव सद्यत्र कर्तृत्वेन विवक्ष्यते तत्र व्यतिरिक्तस्य कर्तृत्वविवक्षाभावाद्विवक्षावशेन च वैयाकरणेन कारकत्वांगीकारात्कर्मत्वं न स्यादित्याह * पच्यत इति * ।

एवं तत्त्वविन्मतमनुसृत्य लक्षणम् प्रत्यक्षेपि[1]। संप्रत्यौलुक्यमतावलंबनेनापि प्रतिक्षिपति*सर्वज्ञमिति*। नित्यज्ञानाधार ईश्वर इति तेन लक्षणांगीकारात्सर्वज्ञं मन्यमानेन नित्यज्ञाने भगवति फलस्य क्रियानाशकत्वानभ्युपगमात् तं प्रत्येतल्लक्षणासिद्धेरितिसंबंधः। नित्यत्वादेवेश्वरज्ञानस्य स्वजन्यव्यवहारादिलक्षणफलनाश्यत्वं नास्तीति विश्वस्य तत्कर्मत्वं न स्यात्। अस्ति च तत्, तस्य सर्वज्ञत्वात् । तेन त्वदुक्तलक्षणमीश्वरवादिनं प्रत्यव्यापकमित्यर्थः। यस्मादुदष्टमिदं लक्षणं * तस्मादित्युपसंहरति * । यथा वस्तुतो नदीत्ववृद्धित्वयोरसतोरपि पाणिनिना "यूस्त्र्याख्यौ न-

---

१ प्रतिपूर्वकात्क्षिप्धातोः कर्मणि लुङ्। ग्रन्थकारेणीति शषः ।

दी[1]", "वृद्धिरादैच्[2]", "अदेङ्गुणः[3]" इत्यादिसंज्ञा शब्दसिद्ध्यर्था कृता न सार्वत्रिकी तथा कर्मसंज्ञाऽपीत्यर्थः।

तर्हि करणव्यापारविषयः कर्मेति लक्षणमस्तु तत्रोक्तबाधाभावादित्याशंक्याह * करणेति * । न च करणव्यापारविषयत्वं कर्मलक्षणम्, 'हस्तेन रामेण शरेण विद्ध' इत्यत्र हस्ताख्यकरणव्यापारविषयतया शरस्यापि कर्मत्वप्रसंगादिति ।

कर्मव्यवहारानुपपत्त्या कर्मपदार्थस्तल्लक्षणं चेष्टव्यमित्याशंक्यान्यथोपपत्तिमाह * क्रियेति * । क्रियाजनकत्वे सति व्यापारोद्देश्यम् कर्मेति संकेतमात्राद्व्यवहारोपपत्तेरलं लक्षणगवेषणयेति पूर्वेण सम्बन्धः । द्वितीयाप्रयोगादिव्यवहारोपपत्तयेऽनुगतं किमपि रूपं वक्तव्यञ्चेत्, लक्षणमेव किं नोच्यत इत्यत आह * शेषं चेति * । क्रिया नात्मनः परिस्पन्दः, तस्य मूर्त्यनुविधायित्वात् । परिणामश्चेत्तर्हि तत्फलस्य घटादिवत्परिणाम्याश्रिततया पटादेरपरोक्षत्वं न स्यादिति कर्मलक्षणमव्यापकमित्यादीश्वराभिसंधिसंज्ञके प्रकरणे दर्शयिष्याम इत्यर्थः ।

एकस्य क्रियाकर्मभावासम्भवं निरस्य विषयविषयिभावासम्भवं निराचिकीर्षुः परमुखेन चोदयति

७८ अभेदे विषयविषयिभावासङ्गतत्वशङ्का ]

"ननु[4] चाभेदे विषयविषयिभावस्यैवासङ्गतत्वम् । विषयित्वं हि विषयसम्बन्धिता । सम्बन्धश्च भेदमन्तरे-

---

१. ११४।३; २. १।१।१; ३. १।१।२ ४ नन्विति शङ्का भाट्टानाम् (दीधिति) ।

णासम्भवदवस्थितिः, सम्बन्धस्वमितेः सम्बन्धिस्वरूपभेदमितिव्यतिरेके वैपरीत्यात्रधारणात् ।"

*नन्विति* आतिशयजनकत्वं विषयित्वम्, तत्त्वञ्च विषयत्वम्, अतो न भेदोऽभेदो वोपयुज्यतइ त्यत आह * विषयीति * । संबन्धोऽपि संबंधिस्वरूपाश्रयो न भेदाश्रयः, तेन तदुपयोग इत्यत आह *संबंधश्चेति* । कस्य केन संबंध इति तृतीयाषष्ठीनिर्दिष्टतया तयोरिति द्विवचननिर्दिष्टतया च भिन्नयोरेव संबंधत्वाद् व्यापकभेदाभावे व्याप्यसंबंधाभावो निश्चीयत इत्यर्थः । संबंधो भेदाधीनः प्रतीतभेदस्यैव प्रतीयमानत्वाद्, विशेषणविशेष्यभाववदिति प्रयोगमप्युक्तेऽर्थे दर्शयति*संबंधेति* । संबंधिनोः स्वरूपं संबंधिस्वरूपम्, तस्य भेदस्तस्य प्रमितिः प्रमा, तस्य व्यतिरेके ऽभावे संबंधमितेर्वैपरीत्यावधारणात् अभावनिश्चयादिति यावत् । यद्वा भेदसंबंधयोर्व्याप्यव्यापकभावमभिधाय तत्प्रमयोरपि दर्शयति, तदधीनत्वान्मेयासिद्धेरिति ।

संबंधमात्रस्य भेदाधीनत्वोक्तौ भागे सिद्धसाधनता, विषयविषयिभावसंबंधपक्षीकरणे तस्य संबंधिस्वरूपतया भेदव्याप्तत्वे साध्ये बाध इत्यभिप्रेत्य परिहरति

---

१. यत्र सम्बन्धिनोः स्वरूपभेदप्रमा तत्रैव सम्बन्धप्रमा, प्रकृते च सम्बन्धिभेदप्रमानिवृत्त्या सम्बन्धप्रमा निवर्तते, तन्निवृत्तौ च प्रमेयस्य निवृत्तिरिति नाभेदे विषयविषयिभावसम्बन्ध इत्यर्थः ॥ यद्वा भिन्नसम्बन्धिप्रमा सम्बन्धप्रमाकारणम्, अतः कारणनिवृत्त्या कार्यनिवृत्तिरित्यर्थः ॥ ( शां )

७९. तन्निरासे—उक्तसम्बन्धस्य सङ्गतत्वम् ]

मैवम् । विषयविषयिभावो हि सम्बन्धो न सम्बन्धिस्वरूपाद्भिन्नः । तथाभूतत्वेऽपि चान्ततस्तत्सम्बन्धस्यापि स्वाश्रयात्मकत्वमभ्युगपम्यम्, अनवस्थाभयात्¹ । तथा सति² च सैव यथा सम्बन्धमितिः सम्बन्धस्वरूपात्सम्बन्धिनो भेदमनादायैव पर्यवस्यतीत्यभ्युपगन्तव्यम्, स्वभावसम्बन्धस्येतरसम्बन्धमर्यादातिशायित्वात्, तथा विनाऽपि सम्बन्धिभेदं विषयविषयिभावात्माऽयं सम्बन्धः पर्यवसास्यति । तदवगमोऽपि तथावगमव्यतिरेकेणैव भविष्यति । को विरोधः ॥

*मैवमिति*। विषयविषयिभावो नसम्बन्धिभेदव्याप्तः संबंध्यभिन्नत्वात्तत्स्वरूपवदिति सत्प्रतिपक्षता चेत्याह*विषयेति*। "ननु विषयप्रतियोगिकभेदेन विषयिस्वरूपस्य विषयिप्रतियोगिकभेदेन विषयस्वरूपस्याव्याप्तत्वात्साध्यशून्यत्वं निदर्शनमिति"। मैवम् । मामहं विजानामीत्यत्रात्मनि व्यभिचारात् । किं च यद्विषयस्वरूपं तद्विषयिस्वरूपभेदेन व्याप्तमिति यद्व्याप्तिग्राहकं संवेदनं तेन स्वेन स्वयं गृह्यते न वा । न चेत्, सर्वोप-

१. त्वयाऽपि विषयविषयिभावः सम्बन्धः सम्बन्धिभिन्नो नाभ्युपगम्यते । अन्यथा तस्यापि सम्बन्धस्य सम्बन्धान्तरमभ्युपेयम् । एवञ्च पर्यवसानं स्यादित्यर्थः । ( शां )

२. भिन्नसम्बन्धिप्रमितेः सम्बन्धप्रमितिम्प्रति न कारणत्वम्, न वा व्यापकत्वम्, व्यभिचारात्—इत्याह तथा सतीति ॥ ( शां )

संहारवत्याव्याप्तेरसिद्धिः। गृह्यते चेत्, तत्रैव व्यभिचार इत्यलम्। विषयविषयिभावःसंबंधिनोर्भिन्नः, संबन्धत्वात्संयोगवदिति तार्किकमताद्युत्थानेऽपि दोषमाह *तथा भूतेति*। अयं भावः। विषयविषयिभावस्य संबंधिस्वरूपाद्भेदे तेन संबंधोऽस्ति, उत न। न चेत् 'तत्संबंध' इति न स्यात्। अस्ति चेत्, तस्यापि भेदे संबंधांतरमित्यनवस्थानात् स्वाश्रयात्मकत्वं संबंधिस्वरूपत्वमेष्टव्यम्। ततो वरं प्रथमसंबंधस्य तत्स्वीकरणम्, अन्यथा वैरूप्यप्रसंगादिति। अन्तिमसंबंधस्य संबंधिस्वरूपत्वे तव किमायातमित्याशंक्याह *तथा सतीति*।

केचित्पुनरिदं ग्रंथत्रयमेवं व्याचक्षते। संबंधस्य संबंधिस्वरूपाव्यतिरेकात् संबंधिस्वरूपवदेव न संबंधिभेदव्याप्तत्वमतः संबंधप्रमितेरपि न तद्भेदप्रमितिव्याप्तत्वमिति परिहरति *मैवमिति*। यद्वा संबंधिमितेः संबंधिभेदप्रमितिसहचारो यथा क्वचिद्दृष्टस्तथा संबंधप्रमितिः संबंधिस्वरूपात् संबंधस्याभेदप्रमितिसहचारोऽपि दृष्ट एवेति त्वन्मते तदभावात्। घटतज्ज्ञानयोर्विषयविषयिभावः संबंधिभ्यां भिन्नः किन्न स्यादिति प्रतिबन्दिन्यायेन परिहरति *मैवमिति*। तर्हि विषयविषयिभावः संबंधिभ्यां भिन्न एवेत्याशंक्याह *तथाभूतत्वेऽपीति*। ततः किं स्यादित्यत आह *तथा सतीति* साऽन्तिमसंबंधमितिः संबंधिस्वरूपाद्भेदमनादायैव पर्यवस्यतीत्यभ्युपगंतव्यम् यथा तथा प्रथमसंबंधमितिरपि स्यादिति भावः॥

कस्य केन सम्बन्ध इति भिन्नाधिकरणतया प्रतीयमानत्वं सम्बन्धधर्म इति यदुक्तं तत्राह *स्वभावेति* संबंधान्तरपूर्वकत्वस्य संयोगादिसंबन्धधर्मत्वे ऽपि समवाये तथात्वं त्यक्तम् अनवस्थाभयात्। तथा स्वभावसम्बन्धस्याप्यनवस्थाभयाद्भिन्नाधिकरणत्वं त्याज्यमिति भावः। प्रथमो विषयविषयिभावः संबंधिभेदमन्तरेण पर्यवसितुमर्हति विपक्षबाधकोपपन्नत्वे सति सम्बन्धत्वादन्तिमसंबंधवदित्याह *तथेति*। तत्प्रतीतिः सम्बन्धिभेदप्रतीतिमन्तरेण पर्यवस्यति उक्तविशेषणसंबन्धिप्रतीतित्वादन्तिमसंबन्धिप्रतीतिवदित्याह *तदिति*।

ननु घटतज्ज्ञानयोर्भिन्नयोर्विषयविषयिभावः संवेदने त्वेकस्मिन्नेवेति मात्रया [कलया] ऽपि वैलक्षण्ये विरुद्धयोरुभयोः पारमार्थिकत्वायोगादेकतरस्य बाध्यता स्यात्, सा च संवेदनस्यैव युक्ता घटतज्ज्ञानविषयविषयिभावस्य सर्वलोकसिद्धस्याबाध्यत्वादित्याशङ्क्याह

८० लौकिकविषयसम्बन्धस्य स्वप्रकाशविषयसम्बन्धाद्भेदेऽदोषः]

नचैवं घटतज्ज्ञानयोर्यादृग्विषयविषयिभावस्ततो मात्रयापि स्वप्रकाशविषयविषयिभावान्यत्वे बाध्यतैकत्र[१] स्यात्। अस्त्येव ह्यविद्याविद्यमाने घटतज्ज्ञाने बाध्यत्वम्,

---

१. भेदे सति योऽयं विषयविषयिभावः स एव लोकसिद्धोऽपि बाध्यते, बाधस्याभिधास्यमानत्वात्। यथा सर्वलोकसिद्धः शरीरादावात्मव्यवहारः, यथा वा तमसि नीलव्यवहार इत्यर्थः। (शां)

२. लोकसिद्धे घटादौ स्वप्रकाशत्वे वा॥

परमार्थसति तु स्वप्रकाशे पारमार्थिकत्वमिति द्वयोरननुगमेपि[1] न दोषः।

*न चेति*। एकतरस्य बाध्यताङ्गीकारादिति हेतुमाह *अस्तीति*। घटश्च तज्ज्ञानं च घटतज्ज्ञानमिति समासः। कुतो बाध्यत्वमित्यत आह *अविद्ययेति*। घटतज्ज्ञानयोर्विषयविषयिभावो बाध्योऽविद्याविलासविषयविषयिभावरूपत्वात् रजततज्ज्ञानयोर्विषयविषयिभाववदित्यर्थः। विषयविषयिभावस्वरूपत्वलिङ्गेन बाध्यत्वमत्रापि किन्नोन्नीयत इत्यत आह *परमार्थेति*। जडस्यैव स्वतः परतो वा सिद्ध्यसम्भवेन कल्पितत्वात् तद्विषयविषयिभावस्यैव बाध्यत्वं सकलकल्पनाधिष्ठानतया स्वप्रकाशविज्ञानस्य परमार्थत्वात्तदभिन्नो विषयविषयिभावोऽपि परमार्थ इत्यर्थः। तर्हि वैरूप्यमेकत्र भेदगर्भत्वं बाध्यत्वं च न तथाऽन्यत्रेत्यत आह *इतीति*। ऐकरूप्यासम्भवेन वैरूप्यं न गौरवाय। यथा गुणादीनां पारतंत्र्ये समवेतत्वे प्रयोजकं समवायस्य तु स्वभाव इति वैरूप्यं न दोषः परेषां तद्वदित्यर्थः।

एवं तावत्क्रियाकर्मभावो विषयविषयिभावो वा स्वप्रकाशत्वमित्यपि सिद्धांतांगीकारेण परकीयं

---

१. लोकसिद्धविषयविषयिभावस्य भेदघटितत्वम्, स्वप्रकाशविषयविषयिभावस्य चाभेदघटितत्वम्—इत्यननुगमो (वैरूप्यम्) न दोषः। भेदघटितस्य बाध्यत्वेनैकरूपतामात्रपरिशेषादननुगमस्यैवापास्तत्वात् ॥ यद्वा स्वरूपसम्बन्धः क्वचित्पारमार्थिकः क्वचिदपारमार्थिक इत्यननुगमेऽपि न दोषः, इष्टत्वादित्यर्थः ॥ (शां)

चोद्यंचूर्णितमम्, इदानीं सिद्धान्तावलंबनेनास्य चोद्यस्य नावसरोऽपीत्याह

[८१. उक्तसम्बन्धादेः स्वप्रकाशार्थेऽनभ्युपगमः]

अथवा स्वात्मना सह क्रियाकर्मभावो विषयविषयिभावो वा स्वप्रकाशार्थ इति नाभ्युपेयमेव[1]। यथा तु भवतां सत्तासम्बन्धादितरत्र सद्व्यवहारव्यवस्था, सत्ता तु स्वयमेव सद्रूपा, न चैतावता स्वात्माश्रयता तस्याः, तथा ज्ञानमपि स्वत एव सिद्धस्वरूपम्[2]।

* अथवेति *। स्वस्य स्वयमेव प्रकाश इति स्वप्रकाशत्वमुक्तरूपं विहायान्यः स्वप्रकाशशब्दार्थो न लक्षत इत्याशंक्याह *यथेति*। द्रव्यादौ सत्तासमवायात्सदिति व्यवहारः, सामान्यविशेषयोस्तु सत्तयैकार्थसमवायात्समवायस्य सत्तैकाश्रयत्वात्, सत्तायां तु सद्व्यवहारः स्वयमेव सत्तारूपत्वात्—इति व्यवस्था यद्वत्तथेत्यर्थः। सत्तायां सत्तासंसर्गोऽस्त्युत न। न चेत्, नरशृंगवत्सद्व्यवहारो न स्यात्, अस्ति चेत्,

१. "ननु सिद्धत्वेन कर्मत्वम्, असिद्धत्वेन च क्रियात्वम्। तदुभयञ्चैकदा विरुद्धम्। एवं 'विषयविषयिभावः सम्बन्धः सम्बन्धिद्वयादभिन्नः' इति कथञ्चिदनवस्थाभियेनाङ्गीकृतम् (यद्यपि तदपि तत्त्वतो विरुद्धमेव)। 'य एव सम्बन्धः स एव सम्बन्धी स एव चापरः सम्बन्धी' इति तु सर्वथा दुर्घटम् केनानुरोधेनाभ्युपेयम्? कथं वा स्वपरिभाषामात्रेण व्यवहारसमर्थनम्?" (इति पूर्वपक्षिणो हृदयम्)॥ यदि लोकासिद्धो विषयविषयिभावो नाङ्गीकर्तुं सहते तदा सोऽपि त्यज्यतामिति सिद्धान्ताभिप्रायः॥ (शां)

२. यथा सत्तायां तत्समवाये वा स्वरूपतः सद्रूपत्वमास्थेयम्, तथा परसिद्धेर्ज्ञानात्, ज्ञानसिद्धिस्तु स्वत एवेत्यर्थः। (शां)

स्ववृत्त्यापात इत्यत आह * नेति *। प्रदीपो घटादिकं स्वसंसर्गितया प्रकाशयन्नपि स्वात्मनि तमो निवृत्तिं प्रकाशरूपत्वेनैव करोति यथा तद्वदित्यर्थः। दृष्टांतोक्तमर्थन्दार्ष्टांतिके प्रदर्शयिष्यन्नाह * तथेति *। ज्ञानं सजातीयपरनिरपेक्षत्वे सति व्यवहारगोचरः(?) परत्र व्यवहारहेतुत्वात्सत्तावदित्यर्थः।

ज्ञानस्य ज्ञानाविषयत्वे तत्प्रयुक्तं व्यवहारगोचरत्वं न स्यादित्याशंक्य समासाविषयस्य गुणपदार्थस्य समाससिद्धपदप्रयुक्तव्यवहारगोचरत्ववदुपपत्तिरित्याह

८२. 'ज्ञानं स्वतः सिद्धम्' इत्यस्य समर्थनम् ]

अथ वा यथा बहुव्रीहिसमासे तद्गुणसंविज्ञाने गुणमादायैव प्रधानस्यान्यपदार्थस्य बहुव्रीहिसिद्धपदप्रतिपाद्यता तथा विज्ञानस्याविषयमपि स्वात्मानमादायैव स्वविषयव्यवहारप्रवर्त्तनं समर्थ्यताम्। सोऽयं गुरूणां सविषयकविज्ञानस्वप्रकाशतापक्षो न ब्रह्मस्वप्रकाशतापक्षः, तत्र[3]

१. 'स्ववृत्तेः' स्वतस्सिद्धतायाः भवदनभिप्रेतायाः 'आपातः' पतनम्॥

२. "ननु 'ज्ञानं स्वतएव सिद्धम्' इत्यनुपपन्नम्। 'स्वत' इति पञ्चम्या सिद्धिम्प्रति स्वस्य हेतुत्वमभिधीयते। सिद्धिश्च द्वयी-ज्ञप्तिः उत्पत्तिर्वा—न स्वस्माद्भवितुमर्हति, हेतुहेतुमद्भावस्य ज्ञाप्यज्ञापकभावस्य वा सम्बन्धस्य भेदघटितत्वात्॥ सत्ता तु सत्तया नोत्पाद्यते ज्ञाप्यते वा, किन्तु विधिमुखप्रत्ययवेद्यत्वादिना सदन्तरगुणेन 'सत्ता सती' इति गौणो व्यपदेश इति महद्वैषम्यम्"—इति पूर्वपक्षिण आशयम्मनसि कृत्वा समाधत्ते अथवेति॥ ( शां )

३. ब्रह्मस्वप्रकाशतावादे विषयस्यानभ्युपगमात्—'ज्ञानं स्वविषये व्यवहारम्प्रवर्तयति' इति तत्रानभिप्रेतम्॥

विषयाभावात्। एतावन्मात्रेण तु स्यात्, यथा स्वाऽविषये-ऽपि कुटादौ बहुव्रीहिवाक्यं व्यवहारं प्रवर्त्तयति तथा ज्ञानमविषये ऽप्यात्मन्यविद्यादशायामिति।

*अथ वेति*। अन्यपदप्रधानो बहुव्रीहिः, स च द्विधा, तद्गुणसंविज्ञानोऽतद्गुणसंविज्ञान इति। समासावयवपदार्थो गुणतया विशेषणतया ज्ञायते यस्मिन् स समासस्तद्गुणसंविज्ञानः। तद्यथा गाङ्कुटादिभ्योऽञ्णिन्ङित्। अतिदेशो ऽयं गाङिती ङादेशो गृह्यते न गाङ्ताविति धातुङकारस्यानन्यार्थत्वात् कुटादयो ऽपि कुटकौटिल्ये पुट भेदने इत्यारभ्य यावत् कुटशब्द इति। तेभ्यो गाङ्कुटादिभ्यः परे अञ्णितः प्रत्यया ङितो भवंति ङिद्वद्भवंतीत्यर्थः। कुटादीत्यत्र कुटस्य समासावयवपदार्थस्याप्रधानतया समासाविषयत्वे ऽपि तं कुटं विशेषणमादायैवान्यपदार्थप्रधानस्य कुटादिभ्य इति समाससिद्धपदप्रतिपाद्यता यथेत्यर्थः दार्ष्टांतिकं दर्शयति *तथेति*। अयं भावः। कुंभमहमनुभवामीत्यत्रानुभवोऽनुभवितारं कुंभं चाश्रयतया विषयतया च व्यवहारयन् स्वेनात्मनाऽगोचरमपि स्वात्मानमादायैव स्वतःस्फुरणेन स्वात्मनि सुषुप्तिव्यावृत्तिमापाद्य विदितः कुंभ

१. अविषयं व्यवहारप्रवर्तनङ्गुरूणामिव वेदान्तिनामपि तुल्यम्-इति तन्मात्रे तद्गुणसंविज्ञानबहुव्रीहिपदं दृष्टान्तः। ( शां )

२. 'कुटः' घटः। 'घटः कुटनिपौ' इति कोशात्। ( शां ) यद्वा गाङ्कुटादिसूत्रे कुटपदं दृष्टान्तः॥

२. पाणिनि. १।२।१

इति विशिष्टव्यवहारमापादयतीति । ननु स्वाविषयं स्वात्मानमादाय विशिष्टव्यवहारप्रवर्त्तनसमर्थता स्वप्रकाशता चेत्, मुक्त्यादौ स्वप्रकाशता न स्यादित्याशङ्क्याह * सोयमिति *। त्रिपुटीप्रत्यक्षवादिनां प्राभाकराणां पक्षो नौपनिषदानाम्, अतो नाव्याप्तिरित्यर्थः। ब्रह्मवादिनामपि स्वप्रकाशतापक्षो ऽयमेव किं न स्यादित्यत आह * तत्रेति *। सुषुप्तौ विषयासंस्पर्शे ऽपि सुखमहमस्वाप्समिति परामर्शानुपपत्त्या ऽनुभवसंभवावगमात् स्वरूपज्ञानस्य निर्विषयतया न विशिष्टव्यवहारप्रवर्तनसमर्थता स्वप्रकाशतेत्यर्थः। स्वव्यवहारहेतुः प्रकाशः स्वप्रकाश इति ब्रह्मवादिनां गुरूणां च साम्यात् कथं स्वप्रकाशत्वे वैषम्यमित्यत आह * एतावदिति *। कुटादावित्यादिशब्देन सनाद्यन्ता धातव इत्यादिसंग्रहः। तर्हि ज्ञाने व्यवहारसद्भावाभ्युपगमाद् द्वैतव्याघात इत्याशंक्याह * अविद्येति * ।

विज्ञानप्रयुक्तव्यवहारगोचरस्य ज्ञानादन्यत्वं घटादौ दृष्टं तद्विरुद्धमिदं स्वव्यवहारहेतुप्रकाशत्वं न स्वीकारमर्हति प्रमाणाभावादित्याशंक्योपसंहारव्याजेन प्रागुक्तामर्थापत्तिं प्रमाणयति

( ८६ ) स्वप्रकाशत्वेऽन्यथानुपपत्तिः प्रमाणम् ।

तदेवं यद्यदन्यत्र दृष्टवैधर्म्यं स्वप्रकाशे पर्यवसास्यति तत् सर्वमन्यथानुपपत्तिरेव स्वप्रकाशप्रसाधकतया प्रदर्शिता स्वीकारयिष्यति । तद्यथा—'अन्यो ज्ञाता अन्यश्च ज्ञेय' इत्यन्यत्र दृष्टम् 'अहम्' इति व्यवहारान्यथानुपपत्त्या

त्याज्यम, तथा अन्यज्ज्ञानमन्यज्ज्ञेयमिति जानामीति व्यवहारान्यथानुपपत्त्या त्याज्यम् । सर्वतो बलवती ह्यन्यथानुपपत्तिः तथाहष्टतामात्रबलमवलम्ब्य प्रवृत्तं तर्कशतमपि बाधते । तदिदमाहुः । "प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपि । इति(तं० वा० ३७४) ।

*तदिति* । जिज्ञासितविज्ञानस्याभावसमुदाधानुपपत्तिर्विज्ञानसिध्द्यनुपपत्तिर्वेत्यर्थः। अनुपपत्तेरपि दर्शनमूलत्वान्न दृष्टिविरोधो ऽनुपपत्त्या ऽपाकर्त्तुं शक्य इति चेन्मैवम्। व्यवहारानुपपत्त्या ऽन्यत्र दृष्टस्यैव क्वचिद्भवद्भिरपि त्याज्यत्वादित्याह * तदिति *। अहमित्यात्मव्यवहरो ऽनुपपद्यमानो ज्ञातृज्ञेयाभेदं कल्पयति यथा तथा जानामीतिव्यवहरो ऽनुपपद्यमानो ज्ञानतत्प्रकाशयोरभेदं गमयतीत्याह *तथेति*। अनुभूतेरननुभाव्यत्वे शशविषाणवदननुभूतित्वप्रसंगः सर्वत्र व्यवहारहेतोः प्रकाशस्य व्यवहार्यपदार्थादन्यत्वदर्शनात् ज्ञानव्यवहारहेतोः प्रकाशस्य ततो ऽन्यत्वं स्यात्। स्वयंप्रकाशसाधकप्रमाणविषयत्वे वेद्यत्वमविषयत्वे तदसिद्धिरित्यादि तर्कविरोधान्नार्थापत्तिरुदेतुमलमित्याशंक्याह *सर्वत इति*। अर्थापत्तेस्तावत्त्रयो दोषा अन्यथोपपत्तिरन्यथैवोपपत्तिरसंभवश्चेति। न चैषामन्यतमो ऽपि दृश्यते तर्ककलापस्य पुनर्ज्ञानस्य वेद्यत्वे मानाभावाद्विपर्ययापर्यवसायित्वात् संभावनाबुद्धिमात्रजनकत्वान्निश्चायकत्वाच्च प्रमाणस्य तेनैव तर्ककलापो बाध्यत इत्यर्थः । अन्यत्राहष्टानामप्यनुपपत्तिकानां कल्पना

गौरवदोषं न वक्ष्यतीत्यन्यैरप्यभाषीत्याह । * तदिति * । प्रमाणवंत्यदृष्टानि कल्प्यानि सुबहून्यपि । अदृष्टशतभागो ऽपि न कल्प्यो निष्प्रमाणकः इति । दोषनिरासस्यापि प्रमाणाधीनत्वात्प्रमाणवत्त्वे न गौरवं दोषः । प्रमाणानामनन्यापेक्षत्वान्न तत्सिद्धोऽर्थोऽन्येनापाकर्तव्य इत्यर्थः । " दर्शनविरोधादेवासत्त्वं वित्तेर्यथा नेष्यते तथा प्रकाशप्रकाश्ययोरन्यत्रान्यत्वदर्शनविरोधान्न स्वप्रकाशत्वमेष्टव्यम्–"इत्याशङ्कामपाकुर्वन्नुक्तमर्थं संक्षेपतो दर्शयति श्लोकद्वयेन

( ८७ ) दृष्टताग्रहस्त्याज्यः ।

तस्मात्—

अन्यथानुपपत्तिश्चेदस्ति वस्तुप्रसाधिका ।
पिनष्टि दृष्टवैमत्यं सैव सर्वबलाधिका ।
वाच्याऽन्यथोपपत्तिर्वा त्याज्यो वा दृष्टताग्रहः ।
नह्येकत्र समावेशश्छायातपवदेतयोरिति ।

* तस्मादिति * । 'दृष्टवैमत्यं' विषयविषयिणोरन्यत्वदर्शनविरोधम् अन्यथानुपपत्तिः 'पिनष्टि' चूर्णयति । दर्शनविरोध एवानुपपत्तिं किं न बाधत इत्यत आह * सैवेति * । नीलसंवेदनस्य नीलात्मत्वाभावे संयोगाद्यसंभवान्नीलावभासो नोपपद्यते इति विज्ञानवादिनोक्तार्थापत्तिभेददर्शनेन विरुध्यते यथा तद्वदियमपि किं न स्यादित्यत आह * वाच्येति * । संयोगाद्यसत्त्वे ऽप्यध्याससंबंधादपि तदवभासोपपत्तिरित्यन्यथोपपत्त्यनुगृहीतभेददर्शनं बाधकम्, न तथेहान्य-

थोपपत्तिरुपलभ्यत इत्यर्थः । मा भूदन्यथोपपत्तिः, तावता किमित्य आह * त्याज्य इति * । अर्थापत्तेर्दौर्बल्यहेतुरन्यथोपपत्तिर्न शक्यते चेदभिधातुं तदा सावकाशनिरवकाशयोः सावकाशस्य दौर्बल्याद् दृष्टताया आग्रह एव त्याज्य इत्यर्थः । एकतरस्य बाधकल्पनाऽगतिकगतिः, अतो न युक्ता कथंचिदुभयोरप्युपपत्तौ । अस्ति चोपपत्तिरर्थापत्तिदर्शनमूलतया स्वतःसिद्धत्वपरतःसिद्धत्वयोरित्याशङ्क्याह * नहीति * । युगपत् क्रमेण चैकस्य जडत्वाजडत्वे विरोधादयुक्ते इत्यर्थः ।

लक्षणमात्रस्य त्वया खण्ड्यमानतयाऽत्रापि विचारस्य सद्वचनलक्षणयोगित्वाभावादनेन विज्ञानस्य स्वप्रकाशतासिद्धिरित्याशङ्क्याह

( ८८ ) विपक्षिणापि स्वप्रकाशता स्वीकारार्हा-

तदित्थं त्वदङ्गीकृतसद्विचारलक्षणोपपन्नैरेवंविधैर्विचारैः स्वप्रकाशता भवता सुप्रतिपदा । अस्माभिस्तु स्वसंवेदनबलादेव स्वतःसिद्धरूपं विज्ञानमाश्रीयत इति ।

* तदिति * । त्वत्पक्षे विचारतल्लक्षणयोः सत्त्वादस्यापि विचारस्य सद्वचनलक्षणयोगित्वात् त्वद्रीत्याऽनेन विचारेण त्वया स्वप्रकाशता सुगमेत्यर्थः । न चास्माकं साधकाभावात्स्वप्रकाशताऽसिद्धिर्विचाराद्यन्तरेणैवागमोपदेशाभ्यासासादितस्वानुभवसिद्धत्वाभ्युपगमात्स्वप्रकाशत्वस्येत्याह * अस्माभिरिति * ।
एवं तावद्विज्ञानस्य स्वप्रकाशत्वमुपपाद्याधुना बौद्ध-

सिद्धान्तसमो ऽयं वेदान्तसिद्धान्तः सर्वशून्यताभ्युपगमादिति यत्परेषामुपालम्भनं तदपाकरोति

( ८९ ) बौद्धब्रह्मवादिनोर्भेदः।

एवञ्च सति सौगतब्रह्मवादिनोरयं विशेषो यदादिमः सर्वमेवानिर्वचनीयं वर्णयति । तदुक्तम्भगवता ऽलङ्कावतारे ।

"बुद्ध्या विविच्यमानानां स्वभावो नावधार्यते ।
अतो निरभिलप्यास्ते निस्स्वभावाश्च देशिताः" ॥

इति——विज्ञानव्यतिरिक्तम्पुनरिदं विश्वं सदसद्भ्यां विलक्षणम्ब्रह्मवादिनः सङ्गिरन्ते । तथा हि नेदं सद् भवितुमर्हति, वक्ष्यमाणदूषणग्रस्तत्वात्, नाप्यसदेव, तथा सति लौकिकविचारकाणां सर्वव्यवहारव्याहत्यापत्तेः ॥

*एवञ्चेति*। किंचित् साम्यात्सुगतसिद्धान्तप्रवेशापादने, भेदाभेदाभ्युपगमात् क्षपणकसिद्धान्तप्रवेशः कौमारिलस्य, परतः प्रामाण्याभ्युपगमात् तार्किकस्य सुगतमतप्रवेशः, प्रत्यक्षं प्रमाणमिति सर्वैरङ्गीकारात्सर्वमतसांकर्यं च स्यादित्यर्थः। न च सर्वसाम्याद्बौद्धसिद्धान्तप्रसञ्जनम्, ज्ञानस्यानिर्वचनीयत्वाङ्गीकारानङ्गीकारात्मकविशेषादित्याह*यदिति*। 'आदिमः' प्रथमो बौद्धः सर्वमेव ज्ञानं ज्ञेयं चानिर्वचनीयं वर्णयति। शिष्यबुद्धिरक्षणार्थमेव सुगतेन स्वप्रकाशत्वमुक्तम्, न स्वरहस्याभिप्रायेणेत्यर्थः। प्रपञ्चभावाभावसाधकविज्ञानस्यानिर्वचनीयत्वं तेनापि नाङ्गीकृतमित्याशङ्क्य

तदीयवचनेनोपपादयति * तदुक्तमिति * । अलङ्कारावतारो नाम सुगतभाषित आगमविशेषः । "आदावन्ते च यन्नास्ति वर्त्तमानकाले ऽपि नास्त्येव । यथा शुक्तिरजतम् । यद्यतो भेदेनास्ति तत्तद्व्यतिरेकेणाप्युपलभ्यते । यथा ऽश्वव्यतिरेकेण महिषः । संवेदनं च संवेद्यव्यतिरेकेण नोपलभ्यते, अतो न स्वतन्त्रमस्ति" इत्यादियौक्तिकबुद्ध्या विविच्यमानानां ज्ञानानां ज्ञेयानां च स्वरूपं नावगम्यते । ज्ञेयेन ज्ञानस्य निरूपणात्, ज्ञानेन च ज्ञेयस्य निरूपणात्, नैकमपि परमार्थम् । अतस्ते ज्ञानज्ञेयात्मकाः पदार्था निरभिलप्याः निर्वचनानर्हा निःस्वभावाः सर्वप्रकारसत्त्वहीनाश्च दैशिकैर्देशिता उपदिष्टा इत्यर्थः । "सर्वमनिर्वचनीयमिति वदता त्वया ऽपि ज्ञानानिर्वचनीयत्वमिष्टमेव, सर्वशब्दाभिधेयमध्यनिविष्टत्वात्तस्यापि"–इत्याशङ्क्याह * ज्ञानेति * । सर्वशब्दोऽत्र ज्ञानातिरिक्ताभिधायी । सर्वे ब्राह्मणाः भोजयितव्या इति वत्प्रकृतप्रपञ्चापेक्षत्वादित्यर्थः । उच्यते ऽनिर्वचनीयं चेति विप्रतिषिद्धमित्याशङ्क्याह * सदिति * । युक्त्या निश्चित्य सदसत्त्वप्रकारेण निर्वचनायोग्यत्वमनिर्वचनीयत्वम्, न मूकीभाव इत्यर्थः । विमतं सद् अविसंवादिव्यवहारगोचरत्वाद् अर्थक्रियाकारित्वाद् असद्विलक्षणत्वाद्वा ऽऽत्मवदित्याशङ्क्याह * तथा हीति * । लक्षणाधीना लक्ष्यसिद्धिः लक्षणानि चानुपपन्नानीत्यादिदूषणगणग्रस्तत्वादित्यर्थः । अयं भावः अविसंवादित्वमात्रस्य व्यवहारकाले विसंवादित्वस्य च रजतादौ व्यभिचारात्सर्वथा विसंवा-

दित्वस्य प्राकृतानवसेयत्वाद्धेयत्वसिद्धिः । अर्थक्रियाकारित्वस्य स्वप्नकामिनीसन्दर्शनादौ व्यभिचारादात्मनि सपक्षे प्रवेशितया ऽनध्यवसितत्वात् असद्विलक्षणत्वस्य च सत्त्वव्यतिरेकेण सद्वादिमते ऽभावात्साध्याविशिष्टत्वम् । सर्वत्र चाबाध्यत्वोपाधिः प्रपंचस्य नेह नानेति प्रतिपन्नोपाधौ बाध्यत्वान्न सत्त्वमिति। ननु सद्विलक्षणत्वेनापि नानिर्वचनीयता, अस्तीति नास्तीति वा लोके सदसतोरेव प्रसिद्धेः, सत्त्वाभावे ऽसत्त्वस्यैव प्राप्तेरित्याशङ्क्याह * नापीति * । जगतो ऽत्यन्तासत्त्वे नृशृङ्गवदपरोक्षप्रतिभासपुरोवर्तिव्यवहारजन्मनाशादिव्यवहाराः सर्व एवोत्सीदेयुः । सतश्च श्रौतबाधापरोक्षप्रतिभासोपपत्तये सदसद्वैलक्षण्यमनिर्वाच्यत्वमेष्टव्यमित्यर्थः ।

ख्यातिबाधानुपपत्त्या ऽनिर्वचनीयत्वमेष्टव्यमित्युक्तमुपश्रित्य वक्तुरसामर्थ्यकृतं तदिति मन्वानः कश्चिदाक्षिपति तदनुवदति,

(९०) अनिर्वचनीयत्वे शङ्का, तन्निरासश्च-

यदपि "निर्वक्तुमसामर्थ्ये गुरव उपास्यन्तां येभ्यो निरुक्तयः शिक्ष्यन्त"—इत्युपालम्भवचनं तत्तदा शोभेत यदि मेयस्वभावानुगामिनीयमनिर्वचनीयतेति न ब्रूयुः, वक्तृदोषादिति च वदेयुः ।

*यदपीति* । तदेतदस्मत्सिद्धान्तावोधविलसितं चोद्यमिति परिहरति *तदिति*। कैश्चिन्निरूप्यमाणत्वे सति केषांचिदनिर्वचनीयत्वं तदसामर्थ्यकृतं स्यात्, इह

तु केनापि निपुणमतिना युक्त्या निश्चित्य सदसत्त्वप्रकारेण निर्वक्तुमयोग्यत्वम्, अग्नेरिव शैत्यरूपेणेति भावः

मेयस्य युक्त्या निश्चित्य सत्त्वादिरूपेण निर्वचनानर्हत्वं स्वभावो न भवति, सदसद्वादिनोः प्रमाणत एव तद्रूपनिर्वचनाभिमानादित्यत आह ।

( ९१ ) निर्वचनञ्चैव शक्यते कर्तुम् ।

यस्तु वादी निरुक्त्यभिमानं धत्ते स निर्वक्तु, न तु शक्ष्यति, वक्तव्यदोषात् । न च—"ते दोषाः स्वोक्तिमपि घ्नन्तो जातयः कथं न स्युः"—इति वाच्यम् । यतो निर्वचनीयत्वं बाध्यते तैर्दोषैः स्वयमप्यनिर्वचनीयैरेव, अनिर्वचनीयैरपि च तैर्व्यवह्रियत एवेति कुतोऽस्मान् प्रति व्याघातः स्यात्, तज्जातित्वस्य च निरुच्य योजयितुमशक्यत्वात् ।

*यस्त्विति* । भेदप्रपञ्चस्य स्वतः परतो वा सिद्ध्यसम्भवादद्वैतागमेन प्रतिपन्नोपाधौ बाध्यत्वेत्यादि वक्तव्यदोषादित्यर्थः । वक्तव्यदोषाणां भेदलक्षणखण्डनानां स्वव्यापिनां जात्युत्तरतया ऽऽभासत्वान्न तैर्निरुक्तनिरोध इत्यत आह *न चेति* । किमिदं स्वव्याघातकत्वं परेषां सदसत्त्वे खण्डयतां स्वेषामपि तत्खण्डकत्वम्, उत स्वेषामपि तत्खण्डकतया व्यवहाराङ्गत्वखण्डनम् । न तावदाद्य इत्याह * यत इति * । नापि द्वितीयः प्रमाणाद्याकारस्यैव व्यवहाराङ्गत्वम्, न सदसत्त्वयोः, केवलव्यतिरेकाभावादित्याह * अनिर्वचनीयैरिति * । एतेन बौद्धचार्वाकवेदान्तिनां तत्रैव निर्भर इत्युदयनवचनं निराकृतम् । स्वव्याघातकत्व-

मिति स्वशब्देन कथकमात्रस्वीकारे त्वद्वचनस्यापि तत्प्रसङ्गः, अन्यतरस्वीकारे ऽन्यतराव्याप्तिरित्यादि विकल्पदूषणेषु जातित्वस्य निर्वक्तुमसामर्थ्यान्न जातितेत्याह * तदिति * ।

न्यायालङ्कारग्रन्थे ऽनिर्वचनीयदूषणं यदभाषि तदनुवदति

( ९२ ) अनिर्वचनीयतायान्दूषणारम्भः

"ननु 'सदसत्पक्षयोर्दोषदर्शनादनिर्वचनीयता'—इति ब्रुवाणस्य किं सदसत्त्वसंशयः? किं वा सदसत्त्वपक्ष-बाहिर्भावाभ्युपगमः? आद्ये भवितव्यन्तावत्सदसत्त्वयोर-न्यतरेण, इत्येकपक्षदोषस्याभासत्वम्। तच्च सत्त्वपक्षदोष-स्यैवाभ्युपेयम्, आवश्यकत्वात्। यदि तावत् सत्त्वपक्षः, तदा सत्त्वपक्षदोषः कथं सङ्गच्छेत? अथासत्त्वपक्षस्तदा सर्वा-सत्त्वे तद्दोषः कथं सद्भावमनुभवितुम्प्रभवेत्। द्वितीयस्तु व्याघातादेवासम्भवी। परस्परविरोधे हि न प्रकारान्तर-स्थिति"रिति।

*नन्विति*। समान्यग्रहणविशेषाग्रहणयोः संशय-प्रयोजकत्वादिहापि सदसत्त्वयोर्विरोधे द्वयोरपारमा-र्थिकत्वायोगादवश्यभाविन्येकतरस्य पारमार्थिकत्वे कस्येदमिति विशेषाग्रहणे संशय इति प्रथमकल्पार्थः।

---

१ यथाशब्दे नित्यत्वानित्यत्वयोर्द्वयोरनिर्दोषदर्शनादुभयकोटिकः संशयस्तथा प्रपञ्चे सत्त्वासत्त्वयोर्दोषदर्शनात्संशयः कोट्यंतराभ्युपगमो वा इति विकल्प्य सत्त्वपक्षमेवं शंकते इति शांकरी।

सदसत्त्वयोर्विरोधादन्यतरनिषेधेऽन्यतराप्राप्तेर्जनिनाशानुपपत्त्या द्वयोः प्रतिषेधाच्च तृतीयपक्षस्वीकार इति द्वितीयकल्पार्थः । कस्मिन् सति किमायातमित्यत आह * आद्य इति *। कोटिद्वयावलम्बिनः संशयस्यान्यतरकोटौ यथार्थत्वात्तत्कोटिदोषाणां पुरुषभ्रांतिप्रभेदत्वमेष्टव्यमित्यर्थः । सत्त्वपक्षेऽर्थसद्भावे प्रमाणं वाच्यं तत्सत्त्वे च प्रमाणान्तरामित्यनवस्था। तदभावादसत्त्वपक्षे तद्दोषाणामाभासत्वमित्याशंक्याह * तच्चेति * सत्त्वनिरूपणीयस्यासत्त्वस्य सत्त्वसिद्ध्यधीनसिद्धित्वात्सत्त्वस्यैवावश्यकत्वात्तद्दोषाणामेवाभासत्वमित्यर्थः । किंचैकतरस्य पारमार्थिकत्वे स किं सत्त्वपक्ष उतासत्त्वपक्ष इति विकल्प्याद्यं प्रत्याह * यदिति * । सत्त्वपक्षदोषाणा आभासत्वमंतरेण सत्त्वपक्षत्वासिद्धेस्तदोषाभासत्वमभ्युपेयमिति भावः। असत्त्वस्यैव तत्त्वपक्षत्वमिष्यत इति द्वितीयमनुवदति *अथेति*। पराकरोति*तदेति*।असत्त्वपक्षदोषस्य सत्त्वे सर्वासत्त्वसिद्धिः, असत्त्वे त्वसत्त्वादेवाभासत्वमित्यर्थः ।सदसत्त्वपक्षवहिर्भावाभ्युपगम इति द्वितीयं दूषयति *द्वितीयस्त्विति* । परस्परविरुद्धयोः सदसत्त्वयोर्विधिसमुच्चये यथा विरोधस्तथा निषेधसमुच्चयेपि विरोधस्याद्वैतभक्तिमतापि त्वया निवारयितुमशक्यत्वादित्यर्थः। कुसुमांजलौ (पृ. ४२४) उदयनोक्तव्याघातमेवोपपादयति *परस्परेति*। "नैकतापि विरुद्धानामुक्तिमात्रविरोधतः" इत्युत्तरार्द्धमिति । यथा नित्यत्वानित्यत्वयोरन्यतरानिषेधे ऽन्यतरस्यैव प्राप्तिर्न तु नित्य-

त्वानित्यत्वव्यतिरिक्तरूपांतरापत्तिस्तथा सदसत्त्वयोरपि भावाभावयोः साक्षाद्विरोधस्तदनुषंगादन्यत्रेति स्थितेः सदसत्त्वनिषेधावेकोपाधौ न सम्भवतः भावाभावनिषेधत्वान्नित्यत्वानित्यत्वनिषेधवदित्यर्थः ।

किमनया दूषणपरंपरयाऽनिर्वचनीयत्वस्य सत्त्वमपलप्यते, किं वा स्वरूपमेव। न तावत् स्वरूपम्, अप्रमितप्रतियोगित्वेनाशक्यप्रतिषेधत्वात्, प्रथमे त्विष्टापत्तिरित्याह

( ९३ ) तत्खण्डनप्रकारः ।

तदेतदनाकलितपराभिसन्धेः प्रत्यवस्थानम् । यो हि सर्वमनिर्वचनीयसदसत्त्वं ब्रूते स कथमनिर्वचनीयतासत्त्वव्यवस्थितौ पर्यनुयुज्येत । सापि हि कृत्स्नप्रपञ्चपरसर्वशब्दाभिधेयमध्यनिविष्टैव । परस्यैव तु व्यवस्थयैवं पर्यवस्यति—निर्वचनप्रतिक्षेपादनिर्वचनीयत्वम्, विधिनिषेधयोरेकतरनिरासस्येतरपर्यवसायिताया स्तेनाभ्युपेतत्वात् । ततः परकीयरीत्येदमुच्यते—'अनिर्वचनीयत्वं विश्वस्य पर्यवस्यतीति' । वस्तुतस्तु वयं प्रपञ्चसत्त्वव्यवस्थापनविनिवृत्ताः स्वतःसिद्धे चिदात्मनि ब्रह्मतत्त्वे केवले भरमवलम्ब्य चरितार्थाः सुखमास्महे ।

*तदिति*। अनाकलितः अज्ञात इत्यर्थः। अनिर्वचनीयवादिनस्तत्सत्त्वखंडनं कथमिष्टापादनमित्याशंक्याह*यो हीति*। अनिर्वचनीये निर्वचनानर्हे सदसत्त्वे

१ सर्वमनिर्वचनीयमित्यत्र सर्वशब्दस्य कृत्स्नप्रपञ्चपरत्वादित्यर्थः ।

घस्य तदनिर्वचनीयसदसत्त्वं सर्वं सर्वदा सत्यमिति वदता सत्यत्वधर्मस्यापि सत्यत्वं यथा स्वीकृतं तथा सर्वमनिर्वचनीयमिति वदता अनिर्वचनीयत्वस्यापि तथात्वस्वीकारात्तत्सत्त्वखंडनं नानिष्टमित्यर्थः। सर्वमनिर्वचनीयमित्यत्र सर्वशब्दो यथा ब्रह्मातिरिक्तविषये संकुचितवृत्तिस्तथा निर्वचनीयत्वधर्मादितरत्रैव वृत्तिसंकोचसम्भवान्नानिर्वचनीयत्वस्य तथात्वमित्यत आह *सापीति*। सर्वशब्दः स्वमहिम्ना ब्रह्मापि स्वाभिधेये निवेशयति तत्सत्यमिति श्रुतिविरोधात् ततः संकुचति। न तथेह संकोचकारणमस्तीत्यर्थः। यथा सत्त्वस्य निश्चित्य वक्तुमशक्यत्वे प्रपञ्चस्य तद्सिद्धिस्तद्वदनिर्वचनीयत्वस्याप्यनिर्वचनीयत्वसिद्धिरित्यत आह * परस्येति *। तव मम वाऽनिर्वचनीयत्वसिद्धिर्न तावन्ममानिर्वचनीयत्वस्यापि तत्त्वांशस्यानिष्टत्वाद्भवतु त्वद्रीत्यैवानिर्वचनीयत्वसिद्धिरित्यर्थः। नास्मद्रीत्या निर्वचनीयत्वसिद्धिर्यत्सत्तदभ्युपगंतव्यमिति स्थितेरित्यत आह * विधीति *। निर्वचनीयत्वप्रतिक्षेपेऽनिर्वचनीयत्वं पर्यवस्यति न वा। न चेत्परस्परविरोधे हि न प्रकारान्तरस्थितिरिति व्यवहारव्यवस्था न सिध्यति। पर्यवस्यति चेत् त्वद्रीत्या तव तत्त्वांशसिद्धिरित्यर्थः। भावनिषेधेऽभावपर्यवसायितायास्तेनाभ्युपगन्तव्यत्वान्निर्वचनप्रतिक्षेपे तदभावोऽनिर्वचनीयत्वं पर्यवस्यतीत्ययमेवार्थोऽनिर्वचनीयः प्रपञ्च इति वाचो युक्तेरित्याह * तत इति *। परकीयरीत्या परानभिधानेऽपि न स्वमते निर्वचनीयत्वसिद्धिः, साधकप्रमाणानुपन्यासादित्याशङ्क्याह *वस्तुतस्त्विति*।

चैत्यपदार्थस्य चित्संगात्सत्त्वतो वा सिद्ध्यसम्भवात्तत्स-त्त्वासत्त्वयोरौदासीन्यालम्बने सत्यनिर्वचनीयत्वं परि-शेषसिद्धमित्यर्थः । न चैवं लोकप्रसिद्धभावाभाववि-भागप्रसिद्धिविरोधः, वस्तुत इति विशेषणात् ।

ननु त्वन्मते साधनीयस्य कस्य चिदभावान्नर्थेयं विचारप्रवृत्तिरापद्यत इत्यत आह

( ९४ ) सदसत्त्वविचारे वेदान्तिनामप्रवृत्तिसङ्गतिः ।

ये तु स्वपरिकल्पितसाधनदूषणव्यवस्थया विचारम-वतार्य तत्त्वं निर्णेतुमिच्छन्ति तान् प्रति ब्रूमः—न सा-ध्वीयम्भवतां विचारव्यवस्था, भवत्कल्पितव्यवस्थयैव व्याहतत्वात् । अत एवास्मदुपन्यस्यमानदूषणस्थितिविष-याः पर्यनुयोगा निरवकाशाः, त्वद्व्यवस्थयैव त्वद्व्यवस्थाया व्याहत्युपन्यासात् । न चोपन्यास एव निर्बन्धकारणम्, विचारोपन्यासस्य सदसत्त्वोपगमोदासीनैर्विचार्यमित्यभ्यु-पेत्यैव परं विचारप्रवर्त्तनायाः शक्यत्वमित्यावेदितत्वात् ।

*ये त्विति*। सत्त्वासत्त्वौदासीन्यमात्रेण निर्वच-नार्हतासिद्धिर्यद्यपि तथा ऽपि प्रपञ्चसत्याभिनिविष्टा-नां परेषां भ्रान्तिनिवृत्तिप्रयोजना विचारप्रवृत्तिरित्य-र्थः। असिद्ध्यादयो दोषा व्याप्तिपक्षधर्मतादीनि भूषणा-नि स्वीकृत्यावतारितविचारे तत्त्वनिर्णयफले भवदभि-मतासिद्ध्यादय एव दोषा उद्भाव्यन्ते नापूर्वं साधारणं दूषणं चोपादीयत इत्याह *भवत्कल्पितेति*। यैर्दोषैः परपक्षो निषिध्यते तेषां प्रमितत्वे श्रुतिप्रमाणकात्म-

वत्सत्त्वम्,अप्रमितत्वे तेषामसिद्धिरित्याशङ्क्याह *अत इति *। परामृष्टमेव हेतुं दर्शयति * त्वदिति *। त्वया दूषणत्वेनाभिमतान् त्वद्वचनप्रतीतानाश्रित्य व्यवहरामीति तेषां प्रमितत्वेन सत्त्वं नेष्यत इत्यर्थः। दूषणादीनां त्वयोपन्यस्यमानत्वादुपन्यासात्मकविचारसत्त्वाभ्युपगमस्तवापि मद्दृष्टान्तेनोन्नीयत इत्यत आह *न चेति*। कुत इत्यत आह *विचारेति*। प्रमाणादिसत्त्वाभ्युपगमस्येव विचारसत्ताभ्युपगमस्यापि विचारप्रवृत्तिसाहित्यनियमस्य प्रागेव निराकृतत्वात्प्रसिद्ध्युपारूढेन रूपेणोपन्यासस्सत्त्वांशेन तु खण्डनमिति सत्त्वाद्युदासीनैः कथारम्भः कर्त्तुं शक्य इत्यर्थः। विचारस्य सत्त्वानभ्युपगमे न विचारनिष्पत्तिः प्रागसतः सत्तासमवायरूपत्वान्निष्पत्तेरिति शंकते

( ९५ ) विचारसत्त्वाभ्युपमगमस्यानावश्यकता।

यदि तु विचारस्य सत्त्वमनभ्युपेत्य न विचारयितुं शक्यमित्युच्यते तदा प्रमाणमव्यापार्य न तदीयसत्त्वाभ्युपगमोऽपि शक्यते, अतिप्रसङ्गात्—इति विचारस्यापि विचार्यग्रहणेऽनवस्थया विचारारम्भ एवाशक्यः स्यात्।

*यदीति *। प्रमाणमुपन्यस्य तत्सत्तास्वीकारोऽनुपन्यस्य वा। न द्वितीयः, शशशृङ्गादेरपि सत्ताभ्युपगमप्रसंगादित्याह *तदेति*। प्रमाणमव्यापार्य अप्रवर्त्यानुपन्यस्येति यावत्। प्रथमे विकल्पे तदुपन्यासः कथायामुतान्यत्र। नान्यत्र अनवस्थानात्। कथायां चेत्तत्राह,

*विचारस्येति* । विचार्यविचारस्यापि सत्तास्वीकारे तस्यापि विचारस्य विचारान्तरेण सत्तास्वीकार इत्यनवस्थानादन्योन्याश्रयाद्वा प्रथममेव मतिकर्दमे विचारारंभणमशक्यं स्यादित्यर्थः ।

ननु कुत्रेयमनवस्था । न तावदुत्पत्तौ विचाराणां स्वकारणेभ्यो निष्पत्तेः । नापि ज्ञप्तौ, अविद्यमानादिविचारपरंपरयोत्तरोत्तरविचारस्य सत्त्वज्ञप्तेरित्याशंक्याह

(९६) उक्तानवस्थायामाक्षेपस्तत्परिहारश्च ।

न च'पूर्वपूर्वसिद्धत्वाद्विचारे विचारान्तरमिदानीमगवेषणीयमिति''—वाच्यम् । विचारस्य पूर्वसिद्धत्वे विचार्यरूपस्वविषयव्यवस्थितत्वात् तस्य विचार्यमपि पूर्वमेव विचारितमित्यनारम्भ एव विचारस्य । अथ विचार्यविशेषस्य पूर्वमसिद्धत्वात्तदर्थविचारारम्भस्तर्हि विचारविशेषस्यापि तद्विषयकस्य पूर्वमसिद्धिरेवेति वृथाशुष्कचर्वणम् ।

*नचेति* निर्विषयविचारस्य बुद्धावारोपयितुमशक्यतया सविषयस्यैव सिद्धौ विचार्यविशेषगोचरविचारस्य सिद्धिरुत तत्सामान्यगोचरस्य । यद्याद्यस्तत्राह *विचारस्येति* । स्वस्य विचारस्य विषयः स्वविषयः विचार्यरूपविषयश्चेति विग्रहः । विचारस्य पूर्वसिद्धत्वे तद्विषयविचार्यस्यापि पूर्वसिद्धेस्तत्रापि विचार्यनिर्णयप्रयोजनाभावान्न विचारारम्भ इत्यर्थः ।

विचार्यसामान्यगोचरविचारस्य प्राक्सिद्धिरिति द्वितीयं शंकते * अथेति * । विचार्यविशेषस्य विचारसामान्यगोचरत्वायोगाद्विचारविशेषगोचरत्वे तद्विशेषविचारस्यापि प्रागसिद्धतायां विचार्यतत्सत्तास्वीकारे तदवस्थाऽनवस्थेति परिहरति * तर्हीति *।

भवद्व्यवस्थामाश्रित्य तस्या एवाभासत्वप्रदर्शनव्यतिरेकेणास्माकं निर्वाह्यं नास्तीत्युक्तमिदानीं अभ्युपगम्य तस्य त्वया खण्डने ऽपि न नः कदा चिदनिष्टापत्तिरित्याह ।

( ९७ ) खण्डनयुक्तीनां नैयायिकैर्बाधनर्हता ।

यदा च त्वद्दर्शनरीत्याभिधीयमानमस्माभिर्बाधं बाधसे तदा स्वाभ्युपगमरीतिबाधाविधायितैव ते स्यात् । अस्माभिर्निर्वाह्यमानस्य त्वया खण्डनयुक्त्यैव बाधे त्वस्माकमेव जेतृता । खण्डनयुक्तयो बाधिकाः निर्वाह्यपक्षश्च बाध्य इत्यस्मदुक्तस्य पक्षस्य त्वयैव निर्वाहात् । तस्मात्त्वत्या निर्वाह्यमस्माभिस्तु खण्डनीयमितीदृश्यामेव परं कथायां त्वन्निर्वाह्यनिर्वाहे तव जयो नान्यथेति ।

* यदा चेति * । नैयायिकप्रयुक्तस्य साधकबाधकहेतोस्तन्नीत्यैवासिद्ध्यादिदूषणे ऽभिहिते दूषणमेव न भवतीति चेत् ब्रूते ऽसौ तदा तस्य स्वपक्षबाधकारित्वाज्जात्युत्तरं स्यादित्यर्थः । अनिर्वचनवादी स्वोक्तदूषणं न समर्थयते चेत्प-

राजीयते । समर्थयते चेत्खण्डनयुक्त्यैव परोऽपि खण्डयतीत्याशङ्क्याह * अस्माभिरिति * । विरुद्धमवोचोऽस्मान्निर्वाह्यखण्डने चास्माकं जय इति तत्राह *खण्डनेति * । निर्वाह्यस्यास्माभिरिव त्वयापि सत्तास्वीकारात्स्वरूपमात्रस्य प्रतिषेधप्रतियोगित्वेनाशक्यप्रतिषेधत्वादिति भावः । त्वन्निर्वाह्यखण्डनेऽखण्डने च तवैव जेतृत्वे सद्वादी कथायां न प्रवर्तत इति सदसद्वादिनोः कथैव न स्यादित्याशंकामुन्मूलयन्नुपसंहरति * तस्मादिति * ।

उत्तरविचारमूलमारचयन्महाप्रमेयमुपसंहरति

९८ उपसंहारः

तदेवं भेदप्रपञ्चोऽनिर्वचनीयः ब्रह्मैव तु परं परमार्थसदद्वयमिति स्थितम् ।

* तदेवमिति * । यस्मात्साधनदूषणादि सर्वं परिकल्पितं दूषयत्येवानिर्वचनवादी ब्रह्मभूतश्च स्वयंकृतकृत्यतां मन्यते साध्यं न किं चित्पश्यति तस्मात्सुगतवैलक्षण्यं सिद्धमित्यर्थः ।

---

अथ अद्वैतप्रमाणम् ।

यद्यप्यनिर्वचनीयस्यावस्तुत्वान्न प्रामाणिकत्वं तथाप्यद्वितीयस्य वस्तुत्वात्तत्र प्रमाणं वाच्यमिति चोदयति

९९ अद्वैतविषयकप्रश्नव्याघातः ।

“ नन्वद्वैते किम्प्रमाणम् ” । प्रश्न एव तावदयमद्वैतमनङ्गीकुर्वतो नोपपद्यते । प्रमाणं यन्नामा-

द्वैते पृच्छ्यते तस्याप्रतीतौ कथमेवम्भूतः प्रश्नः सङ्गच्छते । न हि प्रमाणमात्रं भवता पृच्छ्यते, किन्नाम विषयविशेषनियतम् । तच्च तदैवोपपद्यते यदि तादृशं ते प्रतीतिमारोहेत् । प्रश्नस्य वाग्व्यवहारविशेषत्वात् व्यवहारस्य च स्वजनकज्ञानविषयनियतत्वात् । अन्यथा व्यवहाराणां विषयनियमप्रयोजकस्यान्यस्यासम्भवेन व्यवहारविषयपारिप्लवापत्तेः ।

* नन्विति * । प्रमाणाङ्गीकारे प्रमाणप्रमेयविभागाद्द्वैतव्याघातः, अनङ्गीकारे साधकाभावात्तदसिद्धिरिति भावः । किमः प्रश्नापक्षेपयोः साधारणत्वादाक्षिप्तमपि पृष्टं मत्वा प्रश्नन्तावत् खण्डयति * प्रश्न इति * । अविद्यासिद्धभेदात् व्यवहारमुपपादयताऽऽक्षेपपरिहार उपरिष्टात्करिष्यते । तथा ह्यद्वैतमप्रतीत्य प्रमाणं पृच्छस्युत प्रतीत्य । नाद्य इत्याह *प्रमाणमिति * । अद्वैताप्रतीतौ प्रश्नानुपपत्तिं तत्स्वरूपपर्यालोचनया प्रतिपादयति * नहीति * । प्रमाणमात्रस्य घटादौ सिद्धतया प्रश्नानर्हत्वादिति भावः । सामान्यतः प्रतीतं विशेषतोऽप्रतीतं वस्तु प्रश्नार्हमिति त्वदङ्गीकाराद्द्वैतप्रमाणमेवंरूपतया त्वया पृच्छ्यत इति प्रश्नमेव द्रढयति *किन्नामेति* । प्रमाणप्रतीत्या तत्प्रश्नोपपत्तौ किम् प्रश्नाविषयाद्वैतप्रतीत्येत्यत आह * तच्चेति * । तदेव कुतस्तत्राह * प्रश्नस्येति * । विमतं प्रश्नवाक्यं स्वविषयविशिष्टतयैव प्रतीयते प्रमाणत्वात् घट-

प्रमाणवत् । न च भविष्यदनुमानादौ व्यभिचारस्तस्यासिद्धिलक्षणविषयविशिष्टतयैव प्रतीतेः, अन्यथाऽयथार्थत्वेन भ्रान्तित्वप्रसंगादित्यर्थः । प्रमाणं सविषयं प्रतीयत इत्येतावता प्रश्नस्य तत्प्रतीतिपूर्वकत्वं कुत इत्यत आह * व्यवहारस्येति * । स्वस्य व्यवहारस्य जनकं ज्ञानं स्वजनकज्ञानम्, तस्य विषयस्तेन नियतत्वान्नियमेन तद्गोचरत्वात् । एतदुक्तं भवति । विमतः प्रश्नः स्वजनकज्ञानविषयनियतो व्यवहारत्वात् गामानयेत्यादिव्यवहारवत् । न च भ्रान्तव्यवहारे व्यभिचारस्तत्राप्युक्तसाध्यात् । अन्यथा मध्यमवृद्धव्यवहाराद्बालस्य सङ्गत्यधिगतिर्न स्यात् । स्वजनकज्ञानं वाऽद्वैतविशिष्टप्रमाणगोचरम् । अतश्च विशेषेणाद्वैताप्रतीतौ विशिष्टप्रमाणगोचरमेव ज्ञानं न स्यादिति । ननु माभूत्स्वजनकज्ञानविषयनियतत्वम्, व्यवहारत्वं च भविष्यति । तथा च विपक्षबाधकाभावादप्रयोजक इत्यत आह * अन्यथेति * । अस्य वाग्व्यवहारस्यायमर्थ इत्यस्य नियमस्य व्यवस्थापकमन्यन्न सम्भवति विपक्षादेरपि ज्ञानपूर्वकत्वादतश्च विषयपरिप्लवस्याव्यवस्थाया आपत्तिर्बाधिकेत्यर्थः ।

अस्तु तर्ह्यद्वैते प्रतीते तत्प्रमाणप्रश्न इति द्वितीयमनुवदति

१०० अद्वैतस्य पूर्वपक्षिणा प्रतीतत्वासम्भवः ।

यदि चाद्वैतं पश्नविषयः प्रतीतमुच्यते तदा तत्प्रतीतिस्ते प्रमा वा स्यादप्रमा वा । आद्ये यदेव तस्याः प्रमायाः करणं तदेवाद्वैते प्रमाणं तत्रापि सम्प्रतिपन्न-

मिति वृथा तस्य प्रश्नः । न च वाच्यम्—"सामान्येनाद्वैतप्रमाणसिद्धौ भूतायामपि विशेषतः प्रमाणे प्रश्नः" यतः सामान्यसिद्धावेवाद्वैतसिद्धौ विशेषविचारः काकदन्तविचारवत् स्यात् । यतः सामान्यसिद्धिरेव विशेषमाक्षिप्यानयन्ती विशेषमपि ते कथितवतीति किमन्यत्प्रश्नेन । परिगणितेषु हि प्रमाणप्रकारेषु मध्ये यत्रैव दोषं न प्रमिणोषि तत्रैव विशेषे सामान्यस्य विश्रान्तेः । यदि च परिचितचरेषु प्रमाणप्रकारेषु सर्वेष्वेव दोषं प्रमिणोषि तदा प्रकारान्तरमाक्षिप्यापि सामान्येन विश्रमणीयमेव । यदि च का प्रमाणव्यक्तिरसावतिप्रश्नार्थः परिशिष्यते तदा सर्वा व्यक्ति र्विशेषतो न निर्देष्टुं शक्यत इति तदनिर्देशेऽपि न नः किञ्चिदपचीयते ।

***यदीति*। प्रतीतिशब्दस्य प्रमाप्रमयोः साधारणत्वाद्विकल्पयति *तदेति*। यदि प्रमा तदापि प्रमाणमात्रप्रस्नः किंवाप्रमाणविशेषस्य,उत निर्दुष्टप्रमाणस्य किंवा व्यक्तिविशेषस्येति चतुर्द्धा विकल्प्याद्यं प्रत्याह *आद्य इति*। अनीश्वरप्रमायाः सकरणकत्वात्तत्करणस्यैव प्रमाणत्वात्प्रमाणमात्रमद्वैते सम्प्रतिपन्नमावयोरिति न तत्प्रश्नार्हमित्यर्थः । सामान्यतः प्रमासिद्ध्या तत्करणप्रमाणस्य सामान्येनैव सिद्धेर्विशेषतः प्रश्न इति द्वितीयोस्त्वित्यत आ-**

ह * न चेति * । प्रमाणविशेषप्रश्नस्य प्रयोजनं किमद्वैतसिद्धिरुत प्रमाणविशेषसिद्धिरेव । नाद्यः, तत्सिद्धेः प्रमाणमात्रसिद्धावेव सम्भवादित्याह * यत इति * । अद्वैतस्य सामान्यविशेषविनिर्मुक्तत्वात् प्रमाणमात्रसिद्धावेव परिपूर्णतस्तत्सिद्धेस्तत्सिद्धिर्न मानविशेषप्रश्नप्रयोजनमित्यर्थः । नापि प्रमाणविशेषसिद्धिः प्रयोजनम्, स्वरूपेणापुरुषार्थत्वादन्यतः सिद्धेश्चेत्याह * सामान्येति * । सामान्यस्य विशेषपारतन्त्र्याद्विशेषाभावे निःस्वभावत्वप्रसङ्गादनुपपत्त्या विशेषमपि साधयतीत्यर्थः । यस्य प्रमाणस्याद्वैतविषयत्वे दोषाभावस्तन्निर्दुष्टं प्रमाणं पृच्छ्यत इति यदि तृतीयस्तदापि प्रत्यक्षादिप्रकाराणामन्यतमप्रकारे क्वापि दोषाभावं पश्यस्युत सर्वत्रैव दोषम् । यद्याद्यस्तत्राह * परिगणितेषिति * । द्वितीयमाशंकते * यदीति * । प्रत्यक्षस्य सन्निकर्षापेक्षत्वादतीन्द्रिये ब्रह्मणि न प्रामाण्यम्,अनुमानस्य व्याप्तिदृष्टान्तापेक्षस्य तदभावे ऽप्रामाण्याच्छब्दस्य प्रवृत्तिनिमित्तसापेक्षस्य षष्ठीगुणादिवर्जिते प्रवृत्तेरुपमानस्य सादृश्यविषयस्य निर्द्धर्मकेऽसम्भवादर्थापत्तेरपि व्यतिरेकव्याप्तिमूलतया भेदाभावे ऽसम्भवादभावस्य च भावरूपप्रमेयेऽनाशङ्कनीयत्वादिति भावः । परिचितचरेषु परिदृष्टपूर्वेष्विति यावत् । विशेषासम्भवेन दृष्टं सामान्यं त्यक्तव्यमुत दृष्टानुसारेणादृष्टविशेषः कल्पनीयः । नाद्यः, दृष्टानुसारेणादृष्टस्य कल्पनीयत्वादन्यथा कार्यलिङ्गकं कारणानुमानं क्वापि

न स्यात्। यदि द्वितीयस्तत्राह * तदेति * । लक्षणया ऽखण्डबोधकं तत्त्वावेदनप्रमाणमन्यदाक्षिपति सामान्यमेवेत्यर्थः । एकैकप्रमाणव्यक्तीनामानंत्यादन्यतमव्यक्तिविषयः प्रश्न इति चतुर्थपक्षमाशङ्कते * यदीति * । परिहरति * तदेति * । जगत्कारणे परमाणौ किं प्रमाणमिति प्रश्नस्यानुमानमित्येवोत्तरं नत्वियमनुमानव्यक्तिरिति प्रतिपुरुषमनुमानव्यक्तीनामानंत्येन तद्विशेषस्यासर्वज्ञेन निर्देष्टुमशक्यत्वात्,तथा ममापीत्यर्थः।

अद्वैतप्रतीतेः प्रमात्वपक्षे तत्द्वारा तत्करणप्रमाणसिद्धेः प्रश्नानुपपत्तिः, भ्रान्तित्वे पुनरुक्तदोषाभावात् प्रश्न इति द्वितीयमनुवदति

१०१ अद्वैतप्रतीतेरप्रमात्वासम्भवः ।

यदि च द्वितीयः,तदानीमद्वैतप्रतीतिमप्रमाम्मन्यमानस्य तव 'अप्रमाविषये किं प्रमाणमिति' कथं न प्रश्नो व्याहन्येत । अथ 'अप्रमा सा मम मते तव तु मते प्रमैवेति तत्करणं प्रमाणं पृच्छयते'—इति ब्रूषे, नैतदप्युपपद्यते । तवाद्वैते यत् ज्ञानमुत्पद्यते तत्करणं मया प्रमाणरूपं वक्तव्यमित्यत्र ममानियमात् । यदि नाम मया अद्वैतमभ्युपेयते तावता किन्तावकीनस्य तज्ज्ञानस्य करणमवश्यं प्रमाणं स्यात् । वस्तुतो वह्निमत्यपि पर्वते यदि कश्चिद्बाष्पं धूमं प्रतीत्य ततो वह्निमनुमिनोति तावता बाष्पविषयं धूमज्ञानं तत्करणं प्रमाणमेष्टव्यमिति ।

* यदीति * । प्रथमपक्षे प्रमाणस्य सिद्धतया प्रश्नस्य वैयर्थ्यमेव, इह पुनः प्रश्नस्वरूपमेव व्याहतमित्याह * तदेति * । अप्रमाविषयस्य प्रामाणिकत्वाभावो निश्चितो न वा । न चेन्मदीया प्रतीतिरप्रमेति व्याहतम् । निश्चितं चेत्किमत्र प्रमाणमिति प्रश्न एव व्याहन्येत भावाभावयोरेकत्रासम्भवादिति भावः । अप्रमाविषये प्रमाणं किमिति न पृच्छ्यते किं तु प्रतीतिगोचरे ऽद्वैते सा प्रमारूपा अप्रमारूपा वा—अतो न व्याघात इति शङ्कते * अथेति * । तवाप्रमारूपा प्रतीतिर्योत्पन्ना तस्याः करणं वक्तव्यं किं वा मदीयप्रमारूपप्रतीतेः, न मदीयप्रतीतेस्तदभिधाने ऽपि तव प्रयोजनाभावात् श्रोतुः प्रयोजनपर्यवसायित्वाद्वाक्यस्येति परिहरति * नैतदिति * । त्वत्प्रतीतेरपि करणमात्रं वक्तव्यं प्रमाणरूपं वा । नाद्यः कार्यसिद्धैव कारणमात्रसिद्धत्वात् । नापि प्रमाणरूपमप्रमाकरणं प्रमाणमिति व्याघातात्परज्ञानकरणस्य प्रामाण्यापादने परस्य प्रयोजनाभावाच्चेत्याह * तवेति * । मत्प्रतीतिकरणस्य प्रामाण्योपपादने त्वदङ्गीकृताद्वैतसिद्धिरेव तव प्रयोजनं मत्प्रतीतिप्रमात्वमन्तरेण तद्गोचरीकृतस्य वास्तवत्वानुपपत्तेरित्यत आह * यदीति * । ज्ञानप्रामाण्यमन्तरेण ज्ञेयवास्तवत्वासिद्धिनियमो नास्ति स्मृतिगोचरे व्यभिचारादित्यर्थः । विमता प्रतीतिः प्रमा स्मृतीतरत्वे सति यथार्थप्रत्ययत्वात्संप्रतिपन्नवद्विपक्षे तदेकार्थतया त्वत्प्रतीतेरप्रमात्वप्रसङ्ग इत्याशङ्क्याह * वस्तुत इति * । दैवगत्या पर्वतस्य वह्नि-

सम्बन्धे सति कश्चिदाभासानाभासविवेकहीनो वाष्पं धूमं दृष्ट्वा वह्निमानयं गिरिरित्यनुमिमीते यदि तदा प्रमाणाद्वाष्पधूमविज्ञानात् स्मृतीतरा यथार्थप्रतीतिरुदीयते। न च सा ऽप्रमा। ततश्च तया व्यभिचारः। ननु सा प्रमा ऽसंदिग्धाविपरीतानवगतप्रतीतित्वात्संप्रतिपन्नवदिति तस्या अपि पक्षनिक्षेपात् कुतो व्यभिचार इत्यत्र केचित्समादधति। वाष्पधूमस्य वह्निव्यभिचारित्वेनालिङ्गत्वात् तज्ज्ञानस्य वह्निसम्भवस्थलेपि प्रमित्यजनकत्वाद्विषयविद्यमानतामात्रेण ज्ञानस्य प्रमात्वे घटो नित्यः प्रमेयत्वादित्यस्यापि हेतोर्घटानित्यत्वप्रमितिसाधनत्वप्रसङ्गान्न प्रमात्वमिति। अन्ये त्वत्रापरितुष्यन्तः परिहारान्तरमाहुः। परिगणितप्रमाणलक्षणानामन्यतमलक्षणयोगिकरणजन्यत्वं प्रयोजकं प्रमात्वे। तानि च सम्यगपरोक्षानुभवसाधनं प्रत्यक्षं सम्यगविनाभावेन परोक्षानुभवसाधनमनुमानमित्यादीनि। न चेह तेषामन्यतमलक्षणयोगो ऽस्ति वाष्पधूमस्य वह्निव्यभिचारित्वात्। तर्ह्युक्तरूपत्वमस्य विज्ञानस्य कथमिति चेत् स्मृतेरप्रमात्वे ऽप्यसंदिग्धाविपरीतप्रतीतित्ववदनवगतासंदिग्धाविपरीतप्रतीतत्वमिति ब्रूमः। गतं तर्हि सम्यगनुभवसाधनं प्रमाणमिति लक्षणेनेति चेन्न। संशयविपर्ययविकल्पस्मृतिदैवागतप्रत्ययानामविद्यापरिणामानां सम्यगनुभवपदाभ्यां व्यावर्त्तितत्वाभ्युपगमात्। ब्रह्मवादिनः कुत एतत्प्रसङ्गाभावादिति अद्वैतगोचरा मत्प्रतीतिरप्रमेत्यंगीकृत्य पुनः सा प्रमा

स्यादिति शङ्कानुत्थानमिति चेत्सत्यम् । "मधु पश्यसि दुर्बुद्धे प्रपातं किन्न पश्यसीति"–न्यायेन समनन्तरदोषपरिजिहीर्षया पुनरुत्थानमिति प्रमिते अप्रमिते चाद्वैते प्रमाणप्रश्नो न भवति किन्तु प्रतीतौ । प्रतीतिश्च प्रमाप्रमासाधारणी । साधारणोक्तस्य विशेषविकल्पनिरासे ऽनुमानादिसर्वव्यवहारलोप इत्याशंक्य प्रश्नमङ्गीकरोति ।

( १०२ ) अद्वैते प्रमाणम् ।

अस्तु वा प्रश्नोऽयं यथातथा । श्रुतिरेवाद्वैते प्रमाणमिति ब्रूमः । श्रूयते खलु–'एकमेवाद्वितीयम्ब्रह्म (छान्दोग्य ६।२।१ ) ' नेह नानाऽस्ति किञ्चन' ( बृहदारण्यक ६।२।१ ) इत्यादि । श्रुतिप्रामाण्यं सिद्धार्थप्रामाण्यञ्चेश्वराभिसन्धौ साधयिष्यते । सिद्धार्थानां श्रुतीनामन्यपरत्वमपि यदि स्यात् तथापि पदसमन्वयबलेन तासु प्रतीयमानमर्थमबाधितमादायैव तासामन्यपरिभवनात् । धियां स्वतःप्रामाण्यस्य बाधकैकापोद्यत्वात् ।

* अस्त्विति * । यथातथेत्ययमर्थः । अपरस्परविरोधे ऽन्यतरविधिपर्यवसायित्वात्प्रमाप्रमयोश्च विरोधादन्यतरपर्यवसायित्वस्यावश्यवक्तव्यत्वान्नित्यत्वानित्यत्ववदनुगतसाधारणरूपस्यानुपपत्तेरिति । ननु प्रश्नांगीकारे तत्प्रमाणं वाच्यम् । न च तत्सम्भवति सर्वेषामेव प्रमाणानां द्वैतविषयतया ऽद्वैते ऽसम्भवादित्यत आह * श्रुतिरिति * । प्रत्यक्षादेर्द्वैतविषयत्वे ऽप्युपनिषद्वा-

क्यस्याद्वैते प्रामाण्यमेष्टव्यम्,अन्यथा षड्विधलिङ्गावगमतात्पर्यविरोधादित्यर्थः। ननु अद्वैतपरं वाक्यमेव नोपलभ्यते इत्यत आह * श्रूयत इति *। श्रुतिरप्रमाणमाप्तवाक्येतरवाक्यत्वादुन्मत्तवाक्यवदिति शाक्यः, प्रमाणं भवदपि कार्य एवार्थे प्रमाणं प्रवृत्तिनिवृत्तिप्रयोजनत्वाद्वेदस्येति प्राभाकरः, तत्कथं श्रुतिरद्वैते सिद्धवदुपन्यस्यत इत्यत आह। * श्रुतीति *। अयमर्थः। न तावदनवबोधकत्वमप्रामाण्यं समधिगतसङ्गतिकस्य वाक्यश्रवणे तदर्थप्रतीतिदर्शनात्। नापि संशयत्वम्,एवं चानेवं चेति वाक्यार्थे वाकारानिर्देशात्सामानाधिकरण्यात्। नापि मिथ्यात्वं बाधानुपलंभात्।न चैतदेवानुमानं बाधकम् इतरेतराश्रयात्। विमतिगोचरः प्रमाणम्,अनवगताविपरीतनिश्चितिकरणत्वात्, चक्षुर्वत्, अन्यथा बुद्धागमोऽप्रमाणमुभयसंप्रतिपन्नाप्तेतरप्रणीतवाक्यत्वादुन्मत्तवाक्यवदित्यपि स्यात्। न च कार्यपरः कृत्स्नो वेदः प्रमाणत्वाच्चक्षुर्वत्,अन्यथा योग्येतरान्विते शब्दसामर्थ्योपपत्तौ कार्येति विशेषणे गौरवप्रसङ्गादिति। ननूदाहृतवाक्यं विधिशेषं भवितुमर्हति सिद्धार्थवेदवाक्यत्वात्सोरोदीदित्यादिवाक्यवदिति विधिशेषत्वे स्थिते ज्ञानविधिपरत्वमाहुरेकदेशिनस्तान् प्रत्याह *सिद्धेति *।विधिशेषत्वे स्वार्थे प्रयोजनशून्यवाक्यप्रमाणत्वप्रयोजकमद्वैतप्रतिपत्तौ पुनरशेषानर्थनिवृत्तिर्न तथात्वं तथाप्यङ्गीकृत्याह * यदिति *। अतत्प्रकरणत्वादकर्मशेषत्वे स्थिते ज्ञानविधिशेषत्वमिष्टम्, त-

अपि तासु पदसमन्वयबलेन प्रतीतमर्थमङ्गीकृत्यैव तच्छेषत्वमेष्टव्यं मानान्तरप्राप्तिविरोधयोरसतो ऽन्यपरस्य स्वार्थे ऽपि प्रामाण्यात् । एवं च तासु पदसमन्वयबलेन प्रतीतमर्थमादायैवान्यपरिभावनादुपासनातात्पर्याभासमद्वैते प्रामाण्यमिति सम्बन्धः । नन्वप्रामाण्यवत्प्रामाण्यस्यापि परतस्त्वात्कथं प्रतीतिमात्रेणार्थसिद्धिरित्यत आह * धियामिति * । प्रामाण्यस्वतस्त्वं तावदेष्टव्यं अनवस्थानादिभ्यः, परतस्त्वे मानाभावाच्च । यदप्युदयनो जगाद (कुसुमाञ्जलौ० पृ० २०८)–'प्रमा ज्ञानहेत्वतिरिक्तहेत्वधीना कार्यत्वे सति तद्विशेषत्वात् अप्रमावत् । यदि च तावन्मात्राधीना भवेदप्रमा ऽपि प्रमैव भवेत् । अस्ति च तत्र ज्ञानहेतुः, अन्यथा ज्ञानमपि सा न स्यादिति'–तदसत्,प्रमामात्रपक्षीकरणे ईश्वरप्रमाभागे बाधात्,तदर्थं विशेषणोपादाने परस्य वैयर्थ्यात्,साधनविकलत्वाच्च दृष्टान्तस्य । न हि वेदान्तपक्षे ज्ञानविशेषत्वमप्रमाया अविद्यापरिणामत्वादन्तःकरणपरिणामविशेषस्य ज्ञानत्वात् । एतेन विपक्षबाधको ऽपि निरस्तो ऽप्रमाया ज्ञानहेत्वन्तःकरणजन्यत्वाभावादिति भावः ।

---

### अद्वैतश्रुतीनामप्रत्यक्षाद्यबाध्यता ।

नैयायिकादिचोद्यमुद्भावयति ।

( १०३ ) श्रुतौ प्रत्यक्षादिबाधोपन्यासः ।

"ननु नाद्वैतश्रुतीनामुक्तार्थे प्रामाण्यं भवति प्रत्यक्षादिबाधात् । ततश्चान्यत्रैव क्वचित्तात्पर्यं कल्प्यम्" ।

***नन्विति*। अद्वैतश्रुतिः प्रतीयमानार्थे न प्रमाणमन्यपरत्वे सति प्रमाणान्तरविरुद्धार्थत्वादादित्यो यूप इति वाक्यवदित्यर्थः। ऐकात्म्यवाक्यं किंचिदर्थपरं वेदवाक्यत्वादग्निहोत्रादिवाक्यवत्। न चैतदैकात्म्यादन्यत्र सम्भवतीति परिशेषादद्वैतपरत्वमित्यत आह *ततश्चेति*। ऐकात्म्यपरो ह्यागमः परमात्मन एवैकतामाह एक एवायं परमात्मा नानेके परमात्मानस्सन्तीति। ततश्चान्नं ब्रह्मेति वाक्यवदुपासनाशेषत्वात्परिशेषासिद्धेरेकात्मपरत्वासिद्धिरित्यर्थः।**

**'तत्परत्वात्परत्वाच्च निर्दोषत्वाच्च वैदिकम्—पूर्वस्य बाधकं नायं सर्प इत्याप्तवाक्यवदिति'—न्यायेन प्रत्यक्षादेरेव बाध्यत्वान्न बाधकत्वमित्यभिप्रेत्य परिहरति।**

(१०४) बाधपरिहारः।

मैवम्। यदद्वैतश्रुतेर्बाधकं प्रत्यक्षादि मन्यसे तदात्मीये विषये घटपटादेर्भेदे नियत एवोत्पद्यते। न तु प्रत्यक्षादिकं भूतभाविवर्त्तमानसकलव्यक्तिभेदग्राहि जायमानमात्रयोः सम्प्रतिपन्नमस्ति। तादृशेन च ज्ञानेनोत्पद्यमानेन सार्वज्ञं तदा तव श्रद्दध्याम् यदि जानासि मम चेतसि किं वर्त्तत इति। यदा च प्रत्यक्षादि किञ्चिन्मात्रविषयं तदा तद्विषयादन्यत्रापि प्रवर्त्तमाना नाद्वैतश्रुतिस्तेन बाधितुं शक्यते, स्वविषयमात्रे प्रमया विपरीत-

विषयज्ञानबाधनात्, अन्यथाऽतिप्रसङ्गात्—माभूदग्नीषोमीयपश्वालम्भनविधिना सर्वभूताहिंसाश्रुतेर्नैरर्थ्यम् ।

* मैवमिति *। किं चेदमप्रामाण्यं किं मिथ्यात्वमुताबोधकत्वमुत संशयत्वम्। यद्याद्यस्तदाऽपि किमेकविषयप्रत्यक्षेण बाधः किं वा भिन्नविषयेण। न तावदेकविषयेण, प्रत्यक्षादेर्नियतविषयतया सर्वाद्वैतश्रुत्यैकविषयत्वाभावादित्याह * यदद्वैतेति * । प्रत्यक्षादि सर्वविषयेण स्वावान्तरजातीयेन केन चिदविनाभूतं प्रमाणत्वादागमवाक्यवदित्याशंक्याह * नत्विति * । अयमर्थः । तत्सर्वगोचरं प्रत्यक्षादि किमस्मदादिविलक्षणजन्मनः किं वाऽस्मदादेः। न तावदाद्यः, विमतं न सर्वग्राहि प्रत्यक्षत्वादस्मदादिप्रत्यक्षवदिति । द्वितीयोऽपि नानवद्यः, सर्वज्ञत्वप्रसङ्गादित्याह * तादृशेनेति *। अस्तु तर्हि भिन्नविषयप्रत्यक्षादिना श्रुतेर्बाध इति द्वितीयस्तत्राह * यदेति * । श्रौतप्रत्यक्षादिज्ञाने बाध्यबाधके न भवतो भिन्नविषयत्वाद्घटपटज्ञानवत्। भिन्नविषयत्वं च प्रत्यक्षादेर्नियतविषयत्वात्सर्वाद्वैतविषयत्वात् श्रुतेरित्यर्थः। भिन्नविषययोरिवाभिन्नविषययोरपि तदसम्भवाद्बाध्यबाधकभाव एव न स्यादित्यत आह *स्वेति*। एकस्मिन् धर्मिणि विरुद्धरूपग्राहिणोर्विज्ञानयोर्बाध्यबाधकभाव इत्यर्थः। स्वविषयादन्यत्रापि विपरीतज्ञानस्य प्रमया बाधने दोषमाह * अन्यथेति * । अतिप्रसङ्गमेव स्फुटयति * माभूदिति * । विरुद्धार्थग्राहितामात्रेण बाधकत्वमेकविषयत्वाभावे

**ऽपि चेद्धिंसाविषयत्वेन तदभावविषयत्वेन च विरोधात् पश्वालम्भनविधिना सर्वभूताहिंसाविधेर्नैरर्थ्यं निर्विषयत्वमप्रामाण्यं स्यात्, तन्माभूदित्यर्थः ।**

**प्रत्यक्षविषयं परिहृत्येतरसर्वाभेदबोधिकाया अद्वैतश्रुतेर्यद्यपि न प्रत्यक्षं बाधकं सर्वभूताहिंसाश्रुतेर्वैयर्थ्यपरिहारार्थमिष्यते तथाऽपि निरंकुशं सर्वाद्वैतं तव न सिद्ध्यतीत्याशङ्क्याह ।**

( १०५ ) प्रत्यक्षभेदबुद्धेर्बाधकत्वासम्भवः ।

यदा चैवं तदा बाधिकायाः प्रत्यक्षधियो बाध्यायाश्चाद्वैतबोधने श्रुतिर्निराबाधा सती तयोरैक्यं बोधयतीति तत् प्रत्यक्षादि कथं स्वात्मानमेव बाधेत । घटेन पटेन तद्भेदेन च स्वविषयेण सह तस्या एव धियः श्रुत्या सर्वस्याद्वैतं गोचरयन्त्या कथं नाभेदे प्रामाण्यमासादयितव्यम्, तत्राबाध्यमानत्वात् । नहि तस्या धियः स्वात्मा वा स्वात्मना वा सह घटपटादेर्भेदोऽपि विषयः । घटपटौ भिन्नावित्येवमाकारा हि सा जायते, न त्वहं घटात् पटाच्च भिन्ना मत्तो वा तौ भिन्नाविति ।

***यदा चेति*। घटपटौ भिन्नाविति बाधकाभिमतया प्रत्यक्षबुद्ध्या घटपटयोरेव भेदमुल्लिखन्त्या स्वात्मना सह बाध्याभिमतश्रौतबुद्धेर्भेदाग्रहणात्तयोरभेदबोधने निर्बाधा श्रुतिरैक्यं बोधयति । ततश्च प्रत्यक्षबुद्धेः श्रौतबुद्धिबाधकत्वं न सम्भवति, स्वात्मनि स्थिते नष्टे वा स्वबाधकत्वाभावादिति भावः । अद्वैतबुद्धेः प्रत्यक्षज्ञानेना-**

बाधितविषयान्तरमाह * घटेनेति *। बाध्यबाधकाभिमतश्रौतप्रत्यक्षधियोरभेदं बोधयति यथा तथा प्रत्यक्षधियः स्वविषयेण सहाभेदबोधने प्रमाणान्तरविरोधाभावात् श्रुतिरैक्यं बोधयति। घटपटौ भिन्नाविति बुद्धेः स्वविषयैश्च घटपटतद्भेदैः सह भेदस्य केन चित्प्रमाणेनासिद्धत्वात् तेषां ज्ञानत्वं बोधयति न तु धियो घटादिरूपत्वम् तथा सति साधकाभावेऽसिद्धिप्रसङ्गादिति भावः। भेदबुद्धेः स्वविषयादात्मनो भेदाग्रहणमुपपादयति *नहीति *। स्वविशिष्टभेदग्रहणेंशतः स्ववृत्त्यापातादित्यर्थः। बुद्धिप्रयुक्तभानत्वे बुद्धित्वतत्संसर्गित्वयोरन्यतरत् प्रयोजकम्, अतो बुद्धिस्तस्या घटादिभ्यो भेदश्चानया भासत इति तत्राह *घटपटाविति *। यदाकारा बुद्धिर्जायते तदाकारवानेवार्थस्तद्विषय इति नियमात् बुद्धिधर्मिकबुद्धिप्रतियोगिकभेदाकारत्वाभावान्नानया तत्सर्वं भासत इत्यर्थः।

बुद्धेः स्वप्रकाशत्वात्स्वभेदग्राहकत्वं विद्यत इति प्राभाकराद्यभिमतमाशंक्याह।

( १०६ ) भेदबुद्धेः स्वप्रकाशत्वेऽपि न बाधकता।

स्वप्रकाशतापि स्वमात्रे साक्षिणी, न तु यतो यतः प्रकाशो भिद्यते ततस्ततस्तस्य भेदेऽपि। अन्यथा तत्तादपि स्वप्रकाशकुक्षौ निक्षिपन्ती न कथमद्वैत एव पर्यवस्यति।

* स्वप्रकाशेति *। स्वप्रकाशता स्वरूपमात्रे साक्षिणी व्यवहारप्रवर्तिका ऽपि यस्माद्वस्तुनः प्रकाशो भिद्यते ततस्ततः प्रकाशस्य भेदे ऽपि

व्यवहारप्रवर्तिका न भवति । विमतो भेदः प्रतियोगिधर्मिव्यतिरिक्तज्ञानगोचरो भेदत्वात् घटपटयोः परस्परभेदवदित्यर्थः। विपर्यये बाधमभिधत्ते *अन्यथेति*। संविद्विषयत्वमन्तरेण सिद्धत्वं संविद एवेति नियमात्प्रतियोग्यादिघटितभेदस्य संविद्विषयत्वमन्तरेण सिद्धौ संवित्त्वमेवेति संविदद्वैतं स्यात् । न च संविदाश्रयात्मनि व्यभिचारः, तत्राप्युक्तहेतुनैव साध्यसंप्रतिपत्तेः सुकरत्वादिति भावः। घटपटौ भिन्नाविति बुद्धेस्तद्विषयेभ्यो भेदस्य तत्स्वरूपत्वात्संविदः स्वसंवेदनतया विषयाणां च तत्कर्मतया प्रकाशे प्रकाशत एवासावित्याशंक्याह ।

( १०७ ) ज्ञानेन स्वरूपलक्षणो भेदो न प्रकाशयितुं शक्यते ।

न च—"तया धिया स्वस्य स्वविषयस्य च स्वरूपावगाहने स्वरूपलक्षणो भेदः प्रकाशित एव स्यात्"—इति वाच्यम् । पुरोवर्त्ति रजतमिति भ्रान्तौ पुरोवर्त्यात्मनो रजतात्मनश्च स्वरूपप्रकाशे भेदग्रहापत्तेः । धर्मविशेषमन्तर्भाव्य स्वरूपस्य भेदत्वे धियोपि तथा स्यादिति सैव धीर्न तत्प्रकाशः, तस्मिन् सन्निकर्षाद्यपेक्षायां धियः प्राक्तदसम्भवात् । "आत्मवदात्मधर्मेपि सन्निकर्षानपेक्षा सा"—इति चेन्न, ग्रहणत्वस्मृतित्वप्रमात्वादावपि तथैव स्यादिति ।

*न चेति* । किं स्वरूपमात्रं भेदः किं वा साधारणधर्मविशिष्टमिति विकल्प्य प्रथमं प्रत्याह ।

* पुरोवर्तीति *। स्वरूपमात्रस्य भेदत्वे रजतेदमोर्भेदस्य तत्स्वरूपतया तत्प्रकाशे प्रकाशप्रसङ्गाद्विवेकरूपा भ्रान्तिर्न भवेदित्यर्थः। प्रतियोग्यपेक्षसाधारणधर्मविशिष्टं स्वरूपेभेद इति द्वितीयमाशंकते। * धर्मेति *। शुक्तित्वतद्देशत्वादिधर्मविशेषमन्तर्भाव्य स्वरूपं भेदो भवति, भ्रान्तिकाले तदग्रहात् नातिप्रसङ्ग इत्यर्थः। बुद्धेरप्यसाधारणधर्मविशिष्टस्वरूपस्य भेदत्वात् तस्य च स्वरूपमात्रातिरेकान्न तत्प्रकाशे ऽपि भेदप्रकाश इत्याह * योऽपीति *। प्रदीपत्वधर्मस्य प्रदीपेनेव बुद्धिसमवेतो धर्मविशेषो बुद्ध्यैव गृह्यतां प्रकाशत्वाविशेषादित्यत आह * तस्मिन्निति *। इन्द्रियतत्सन्निकर्षापेक्षया बुद्धिस्तद्धर्मं गोचरयति किं वा सन्निकर्षानपेक्षया। आद्ये सन्निकर्षस्य बुद्धिजन्मार्थत्वात् बुद्धेः प्रागेवासौ वक्तव्यः, न च तत्सम्भवति, बुद्ध्यभावे तत्समवेतधर्मसन्निकर्षासम्भवात्, अन्यथाऽन्योन्याश्रयादित्यर्थः। स्वरूपप्रकाशने यथा बुद्धेः सन्निकर्षानपेक्षिता तथा भेदव्यवहारोपयोगिस्वधर्मप्रकाशनेऽन्यानपेक्षत्वमिति द्वितीयं शंकते * आत्मवदिति *। बुद्धितद्धर्मव्यतिरिक्तत्वमेव बुद्ध्या सन्निकर्षापेक्षया ग्रहणे प्रयोजकमित्यर्थः। मनसा संयुक्तात्मनि समवेते ज्ञाने ग्रहणत्वादिसमवाय इति संयुक्तसमवेतसमवायसन्निकर्षत्वात् ग्रहणत्वादीनां ग्रहणादव्यापकमिदं प्रयोजकमिति परिहरति *नेति*। ग्रहणत्वादेरपि स्वप्रकाशत्वेनैव व्युत्पत्तौ शुक्तिरजताद्यवभासानां ग्रहणत्वस्मरणत्वयोर्विप्रतिपत्तिर्न स्यादित्यर्थः।

**यस्मात् घटपटौ भिन्नाविति बुद्धिः स्वप्रकाशत्वे ऽपि स्वविषयात् स्वस्याभेदं न बोधयति तस्मादित्युपसंहरति**

१०८. भेदबुद्धिःस्वविषयात् स्वभेदश्च बोधयति ।

तदेवं सा बुद्धिः श्रुत्या घटपटात्मतया व्यवस्थाप्यमाना कथमात्मनः स्वस्मादेव भेदे प्रमाणीभवितुं प्रभवतीति बाधिकायां बुद्धौ घटपटयोर्भेदे प्रमात्वाभावमासदयंत्यां श्रुतिस्तत्र तत्राप्रतिद्वन्द्वितया ऽसङ्कुचितस्वतःप्रामाण्यबललब्धतत्तदर्थैक्यान्यथानुपपत्तिसहायसम्पदजेया तयोरप्यभेदं बोधयन्ती न प्रतिहन्तुं शक्येति न क्वचिदपि प्रतिहतप्रसरा सती सर्वाद्वैतप्रमापिकेति ।

***तदेवमिति* श्रुतिः क्वचिदपि प्रतिहतप्रसरा न सती सर्वाद्वैतप्रमापिकेति सम्बन्धः । प्रत्यक्षबुद्ध्यैव प्रतिघातात्कथमित्यत आह *बाधिकायामिति*। घटपटयोर्भेदे घटपटौ भिन्नाविति बुद्धौ बाधकाभिमतायां प्रमात्वाभावमासादयंत्यां सत्यां घटपटयोरभेदबोधने निर्बाधा सती तयोर्घटपटयोरभेदं बोधयति, तेनैव न्यायेन सर्वाद्वैतबोधने न क्वचित्प्रतिहन्तुं शक्येति। ननु घटपटयोर्भेदबुद्धेः प्रमात्वाभाव एव कुतस्तत्राह *सा बुद्धिरिति*। घटपटौ भिन्नाविति सा बुद्धिर्घटतद्भेदरूपतया श्रुत्या व्यवस्थाप्यमाना तयोः स्वात्मनैक्यात्तद्भेदग्रहणे स्वात्मन**

एव स्वस्मादेव भेदे प्रमाणमित्युक्तं स्यात्, तत्कथं प्रमाणीभवितुं प्रभवतीति। अत्र 'इति'शब्दः सर्वो'यस्मात्'-अर्थे, पूर्वपूर्वो हेतुः उत्तरोत्तरो हेतुमान्। अनुग्राहकतर्कोपेता बलीयसी श्रुतिरेव प्रत्यक्षबुद्धिं बाधत इत्यभिप्रेत्याह * तत्रेति *। बाध्यबाधकबुद्ध्योर्बाधकबुद्धेश्च स्वविषयैरभेदबोधने अप्रतिद्वन्द्वित्वे न संकुचितं च तत् स्वतःप्रामाण्यं चेति तथोक्तम्, तस्य बलं सामर्थ्यं तेन लब्धमप्रतिद्वन्द्वित्वादसंकुचत्स्वतःप्रामाण्यबललब्धम्, तच्च तत्तदर्थस्यैक्यं चेति तथोक्तम्, तस्यान्यथानुपपत्तिः,सैव सहायस्तस्य संपत्तया अजेयाक्वचिदपि प्रतिहन्तुं न शक्येति सर्वाद्वैतप्रमापिकेत्यर्थः।

भेदः परमार्थोऽपरोक्षत्वादात्मवत्,अन्यथा तदापरोक्ष्यानुपपत्तिर्बाधिकेत्याशङ्क्याह

१०९ भेदबुद्धेरन्यथाप्युपपत्तेः।

भेदप्रमान्यथानुपपत्त्या च वैपरीत्यमशक्यम्। तथाऽद्वैतश्रुत्या सन्दिह्यमानस्य प्रमात्वस्यैवासिद्धेः, भेदधीमात्रस्य च द्विचन्द्रादिबोधवदन्यथाऽप्युपपत्तेः।

* भेदप्रमेति *। अपरोक्षप्रमानुपपत्तिर्बाधिका किं वाऽपरोक्षधीमात्रा उपपत्तिः, यद्वाद्यस्तत्राह * तत्रेति *। अद्वैतश्रुतिदर्शनेन प्रत्यक्षादेर्भेदे प्रमात्वस्य संदिह्यमानत्वादनुदयः, अर्थापत्तेरित्यर्थः। द्वितीयमपवदति * भेदेति *। वस्तुत एकत्वेऽप्यविद्यया भेदप्रतीतिरुपपद्यते द्विचन्द्रप्रतीतिवदिति भावः।

यदुक्तमैकात्म्यपरो ह्यागमः परमात्मन एवैक-

तामाह प्रत्यक्षादीनि तु घटादिभेदं गृह्णन्तीति तदयुक्तमभ्यासविरोधादित्याह

११० श्रुत्या ऐकान्तिकमद्वैतम्बोध्यते।

एकमित्युपादाय यदेवकारमप्युपादत्ते श्रुतिरेकमेवेद-मितिरूपा तदैकान्तिकमैक्यं बोधयतीति भेदाभेदेनाप्य-शक्यसमर्थनं घटपटादिभेदग्राहिप्रत्यक्षादिप्रामाण्यमिति।

*एकमिति*। एकमित्युक्त्वा पुनरेवकारमद्वितीय-मिति ब्रुवाणा सजातीयविजातीयस्वगतनानात्वा-भावोपलक्षितं स्वरूपं बोधयति, अभ्यासस्यार्थभूय-स्त्वलिङ्गत्वात्। तेनेश्वराभेदविषयत्वेन व्यवस्थितत्वा-त्प्रत्यक्षादिप्रामाण्यमित्येतदशक्यसमर्थनमित्यर्थः।

बाध्यबाधकबुद्ध्योर्बाधकबुद्धेश्च स्वविषयैरभेदबो-धनद्वारा सर्वाद्वैतबोधनं श्रुतेः किं क्रमेण किं वा युग-पत्। न तावद्युगपत्,अंशतः प्रत्यक्षविरोधात्। नापि क्रमेण, बुद्धेर्विरम्यव्यापाराभावादिति शङ्कते

१११ सर्वाद्वैतबुद्धिः युगपदेवजायते।

"बुद्धेर्विरम्यव्यापाराभावात् कथमित्थम्" इति चेन्न। श्रुतितो द्रागेव जातायाः सर्वविषयाया अद्वैतधियोऽस्म-द्बुद्ध्य एवंविधविचारसोपानपरम्परामारोहन्त्यो नाना-विषयेषु तत्प्रामाण्यविषयाः क्रमेण परिनितिष्ठन्तीत्यु-च्यमानत्वात्।

*बुद्धेरिति*। जन्मैव बुद्धेर्व्यापारोऽर्थावग्रहरूपाया इति न्यायेन जन्मातिरिक्तव्यापाराभावात्,तस्याश्चै-

कत्वात्पर्यायेण सर्वाद्वैतबोधनमनुपपन्नमित्यर्थः । परिहरति *न, श्रुतित इति *। ज्योतिष्टोमवाक्यं भावनामंशत्रयवतीमेकव्यापारेण बोधयति । तत्र च धात्वर्थादीनां करणत्वादिविषयविज्ञानानि विचारपरम्परया क्रमेण जायन्ते यथा तथा ऽद्वैतश्रुतिरपि तत्तदर्थजातस्य ज्ञानजातस्य चाद्वैतं युगपद्बोधयति । तत्र तत्र परिपन्थिप्रत्यक्षादिविरोधोत्थाने तन्निरासफलविज्ञानानि विचारपरम्परया क्रमेण जायन्ते। अस्माकमतो न विरोधगन्धो ऽपीति भावः।द्रागिति शीघ्रमित्यर्थः ।

घटपटौ भिन्नाविति बुद्धेः स्वविषयैः सह भेदो यद्यपि स्वात्मनैव न गृह्यते तथा ऽपि बुद्ध्यन्तरेण तद्ग्रहान्नाद्वैतसिद्धिरिति चोदयति

११२ अद्वैतश्रुतिप्रामाण्ये शङ्का ।

"ननु यदि नाम प्रत्यक्षावृत्त्या तया घटपटभेदोल्लेखिन्या स्वात्मना सह घटपटयोर्भेदो न गोचरीक्रियते तावता कथं तस्याः स्वविषयेण सहाद्वैते श्रुतिः प्रामाण्यमासादयितुमीष्टे, बुद्ध्यन्तरेण तया सार्द्धं घटपटयोरपि भेदमुल्लिखता तत्राद्वैतश्रुतेर्बाधादेव" ।

*नन्विति *। बुद्ध्यन्तरस्य स्वविषयप्रतियोगिकभेदः प्रमाणान्तरेण न गृह्यते किं वा गृह्यत इति विकल्प्य प्रथमं प्रत्याह

११३ तन्निरासः ।

नैवम् । तर्हि तस्या अपि विषयमापाततः परित्यज्य य-

यैवापरया बुद्ध्या घटपटभेदबुद्धेर्घटात्पटाच्च भेदो विषयीक्रियते तस्याः स्वविषयेण सहाभेदेऽद्वैतश्रुतिः प्रामाण्यमवलम्ब्य लब्धपदा घटपटतद्भेदबुद्धिभिः सह द्वितीयाया बुद्धेरभेदे पर्यवस्यन्ती सर्वेषामेव तेषामभेदे विश्राम्यति। एवञ्च सति यत्रैव गत्वा बाधबुद्धिपरम्पराविच्छेदो विषयान्तरसञ्चारोच्छेदभयादनवस्थाभयाच्चाभ्युपेयः तस्यामेव बुद्धौ पदमारोप्याद्वैतश्रुतिः सर्वं तत्तद्विषयविषयिप्रवाहमद्वैते स्थापयंती न केनापि प्रमाणेन क्वचिदपि बाधितुं शक्या। तस्मात्

सुदूरधावनश्रान्ता बाधबुद्धिपरम्परा।
निवृत्ताद्वयाम्नायैः पार्ष्णिग्राहैर्विजीयते॥

***यैवमिति*। यया ऽपरया बुद्ध्या घटपटभेदबुद्धेर्घटात्पटाद्भेदो विषयीक्रियते तस्याः स्वविषयप्रतियोगिकभेदः प्रमाणेन न गृह्यते यदि तर्हि तस्याविषयमपि घटपटभेदबुद्धेर्घटादितो भेदमापाततः परित्यज्य द्वितीयाया बुद्धेर्घटपटतद्भेदतद्बुद्धिभिः सहाभेदे प्रमाणविरोधाभावात् तत्र पर्यवस्यन्ती सर्वेषामेव तेषां घटपटतद्भेदतद्बुद्धीनां विषयाणाम् एकबुद्ध्यभेदबोधनद्वाराऽभेदे विश्राम्यतीत्यन्वयः। तत्र हेतुः *तस्याः स्वविषयेणेति*। द्वितीयाया बुद्धेः स्वविषयेण सहाद्वैतश्रुतिः प्रामाण्यमवलम्ब्य लब्धपदा लब्धप्रतिष्ठेत्यर्थः। ननु बुद्ध्यन्तरस्यापि स्वविषयप्रतियोगिकभेदो बुद्ध्यन्तरेण गृह्यत इति द्वितीयविकल्प-**

माशङ्क्याह * एवमिति *। अयमर्थः। बाधबुद्धिपरम्परा विच्छेदः क्वचिदस्ति न वा। न चेत्,अनवस्था विषयान्तरसञ्चाराभावः सुषुप्तिमुक्त्योरभावश्च। यदि क्वचिद्विच्छेदस्तदाऽन्तिमबुद्धेः स्वविषयभेदस्य स्वात्मना बुद्ध्यन्तरेण वा ग्रहणात् तस्यास्तद्विषयेण सहाद्वैतं बोधयन्ती तद्द्वारा सर्वाद्वैतं बोधयतीति। ननु भूरिकक्षाधाविनो बाधविज्ञानस्य पूर्वमसञ्जातविरोधितयोत्पन्नत्वान्नाद्वयागमैर्बाधो युक्त इत्याशङ्क्यां निराकुर्वन्नुपसंहरति। * तस्मादिति *। बाधबुद्धिपरम्परा ऽनवस्थाभयात्कस्यांचित्कक्षायां निवृत्तौ सत्यामद्वयाम्नायैः पार्ष्णिग्राहस्थानीयैर्विजीयत इति सम्बन्धः। निवृत्तौ हेतुमाह * सुदूरेति *। सुदूरधावनश्रान्ता भूरिकक्षानुसरणालसेति यावत्। इदमत्राकूतम्। 'अरिर्मित्रमरेर्मित्रं मित्रमित्रं ततः परं तथा ऽरिमित्रमित्रञ्च विजिगीषोः पुरःसराः। पार्ष्णिग्राहस्ततः पश्चादाक्रन्दस्तदनन्तरम् आसारोपनयश्चैव विजिगीषोस्तु मण्डलम्। अरेश्च विजिगीषोश्च मध्यमो भूम्यनन्तरः अनुग्रहे संहतानां व्यस्तानां च वधे प्रभुः। मण्डलाद्बहिरेतेषामुदासीनो व्यवस्थित' इति विजिगीषो राज्ञो द्वादशराजमण्डलम्। तत्र खलु यथा लोके कश्चिद्विजिगीषुर्दूरे प्रस्थितः परवाहिनीर्विजित्य निवृत्तौ पार्ष्णिग्राहैर्विजीयते तथा बुद्धिपरम्पराऽद्वैतपरम्पराजयाय दूरं प्रस्थिता ऽनवस्थाना क्वचिन्निवृत्तौ पार्ष्णिग्राहैरद्वयाम्नायाख्यैर्विजीयत इति।

नन्वेकस्य पुरुषस्य बुद्धिधारा यत्र विश्राम्यति तत्र सर्वज्ञः को ऽपि योगी भेदं ग्रहीष्यतीत्याशङ्क्याह

११४ भेदबुद्धिधाराविश्रान्तावद्वैतसिद्धिर्दुर्वारा ।

न च यत्र तस्य प्रतिपत्तुर्बुद्धिधाराविश्रान्तिस्तत्र पुरुषान्तरबुद्धिर्भेदे प्रमाणं स्यात् । तथाऽपि पुरुषान्तरेण भिन्नतया सा प्रतीयते इत्यत्र प्रमाणं त्वया वाच्यम् । नहि तदपि पुरुषान्तरेणैव । न च सम्भाव्यमानम्, श्रौतेन निश्चयेन तन्निवर्त्तनात् । तथाप्यनवस्थानादिति ।

* न चेति * । पुरुषान्तरबुद्धिपरम्पराविच्छेदे तद्विषयाद्वैतद्वारा सर्वाद्वैतम्,अविच्छेदे ऽनवस्था स्यादित्युक्तदोषैर्ग्रस्तमप्यरुच्याङ्गीकृत्याह * तथाऽपीति * । साऽन्तिमबुद्धिः स्वविषयाद्भिन्नतया पुरुषान्तरेण प्रमीयत इत्यत्र तव प्रत्यक्षं न सम्भवति, परबुद्धेरप्रत्यक्षत्वात् । नाप्यनुमानमर्थापत्तिर्वा तत्कार्यादर्शनात् । अतः प्रमाणं त्वया वक्तुमशक्यमित्यर्थः । यथाह 'इह जन्मनि केषांचिन्न तावदुपलभ्यते योग्यवस्थागतानां तु न विद्मः किं भविष्यतीति' । साऽन्तिमबुद्धिः स्वविषयाद्भिन्नतया पुरुषान्तरेण प्रतीयत इत्येतदपि पुरुषान्तरेणैव प्रतीयत इत्याशङ्क्याह * न हीति * । तत्रापि पर्यनुयोगसाम्यादित्यर्थः । पुरुषान्तरबुद्धिर्भेदे प्रमाणं भविष्यतीति त्वया सम्भावयितुमपि न शक्यं भेदप्रमाणसद्भावसम्भावनाया अद्वैतश्रुत्या निवर्त्तितत्वादित्याह * न चेति * । अभ्युपेत्यापि भङ्गं भणति * तथाऽपीति * ।

**नन्वस्त्येवानुमानं योगिबुद्धौ प्रमाणम्—विमता बुद्धिः स्वविषयेभ्यः स्वभेदग्राहकबुद्ध्यन्तरवती बुद्धित्वात्प्रथमबुद्धिवदिति मन्वानः शङ्कते।**

११५ अन्तिमबुद्धेरपि न बाधः।

अथ ब्रूषे—"यदा कियद्दूरं बुद्धिपरम्परया सा बाधिता भवत्यद्वैतश्रुतिस्तदा तन्न्याद् यापि बुद्धिः शेषं गत्वा नानुव्यवसीयते तत्रापि तद्बाधो ऽवगम्यते, यत्र सा बाध्यते तत्तुल्यन्यायत्वादन्तिमबुद्धेरपीति"। मैवम्। किञ्चित्का[सु] गीषु बुद्धिषु व्याप्यव्यापकौ क्वाप्यवलम्ब्य व्याप्तिग्र रूपयैव धिया शेषबुद्धौ बाधं व्युत्पादयसीत्थमद्वैतश्रुतेः, किं वा बुद्ध्यन्तरदृष्टव्याप्तिसनाथया पक्षधर्महेतुमुल्लिखन्त्या बुद्ध्याऽन्तिमबुद्धिविषयया।

***अथेति*। अद्वैतश्रुतिर्बुद्धिपरम्परया कियद्दूरं बाधिता भवति यदा तदा या बुद्धिः शेषं गत्वा—शेषमवशिष्टां कक्षां गत्वा—नानुव्यवसीयते ज्ञानान्तरवेद्या न भवति या तत्राप्यद्वैतश्रुतेर्बाधो गम्यत इत्यर्थः। तन्न्यायादित्येतद्विवृणोति *यत्रेति*। यत्र कतिपयबुद्धिपरंपरायां सा ऽद्वैतश्रुतिर्बाध्यते तत्समानन्यायत्वादन्तिमबुद्धेरपि भेदबुद्धित्वाविशेषादित्यर्थः। विकल्पासहत्वेनैतद्दूषयति। * मैवमिति *। या बुद्धिः सा स्वविषयेभ्यो भेदग्राहकप्रमाणाविनाभूतेति बुद्धित्वं व्याप्यं भेदे ग्राहक-**

प्रमाणं व्यापकं चावलम्ब्य प्रवृत्तव्याप्तिविज्ञानेनान्तिमबुद्धेः स्वविषयेण सह्वाद्वैतबुद्धेर्बाधं व्युत्पादयसि, किं वा व्याप्तहेतुजन्यानुमानेनेति विकल्पार्थः। कियतीषूपांत्यादिप्रथमकक्षापर्यन्तास्वित्यर्थः।

आद्यं दूषयति।

११६ अनुमानेनापि बुद्धिबाधः साधयितुं न शक्यते।

नाद्यः। व्याप्तिबुद्धिर्यदि विषयविशेषेपि स्वातन्त्र्येण बाधात्मिकोपेयते तदा सैव विशेषबुद्धिरपि स्यादिति गतमनुमानकथया। अथानुमितिमभ्युपैषि तदा सा नात्मानमपि धर्मीकृत्य प्रवर्त्तत इति तत्रैव दत्तपदा सर्वाद्वैतश्रुतिपरम्परामालम्बत इत्युक्तमावर्त्तते।

*नाद्य इति*। व्याप्तिविज्ञानमन्तिमबुद्धेःस्वविषयेभ्यो भेदं साधयति न वा। न चेत्, अद्वैतश्रुतिबाधकत्वं न सम्भवति विरुद्धार्थत्वाभावात्। यदि साधयति तदा सामान्योपाधौ प्रवृत्तं व्याप्तिज्ञानमेव पक्षनिष्ठं साध्यविशेषमपि साधयतीति सकलानुमानविलयः स्यादित्यर्थः। अस्तु तर्हि गृहीतव्याप्तिलिङ्गजन्यानुमानेनाद्वैतश्रुतिबाध इति द्वितीयं शङ्कते *अथेति*। तत्रैतदभिधानीयम्—स्वव्यतिरिक्तज्ञानानि धर्मीकृत्य तद्विषयभेदं साधयति किं वा स्वात्मानमपि पक्षे निक्षिप्य स्वविषयभेदमपि साधयतीति। तत्र प्रथमं प्रत्याह *तदेति*। अनुमानज्ञानस्य स्वविषयभेदः स्वात्मना मानान्तरेण वा न गृहीत इति तत्र लब्धावका-

शाऽद्वैतश्रुतिस्तद्भेदबोधनद्वारा सर्वाद्वैते पर्यवस्यतीत्यर्थः । शब्दं शब्दवत्सामान्योपाधौ स्वात्मानमपि पक्षीकृत्य स्वविषयभेदं साधयतीति द्वितीयं शङ्कते ।

११७ बुद्धेः स्वस्माद् भेदो दुरूहः ।

अथ सर्वा विवादाध्यासिता बुद्धयः स्वविषयेभ्यो भिन्ना बुद्धित्वात् घटपटबुद्धिवदिति सामान्याकारेणात्मानमपि धर्मीकृत्यात्मनोपि स्वविषयाद्भेदं साधयिष्यत्यनुमेति मन्यसे—मैवम् । एवमपि विषयितो विषयस्याभेदं बोधयन्ती श्रुतिरनुमानमप्यनवकाशयति । विषयिविषययोर्मिथो भेदेऽपि साध्ये अस्तु हेत्वनुयोगः ।

*अथेति* । बुद्धेः स्वविषयाद्भेदमात्रं सिसाधयिषसि किं वा बुद्धितद्विषययोः परस्परभेदमिति विकल्प्य प्रथमं पराचष्टे *मैवमिति* । बुद्धिधर्मिकविषयप्रतियोगिकभेदस्यैवानुमानगोचरत्वाद्विषयाणां बुद्ध्या सहाद्वैतबोधने निराबाधा श्रुतिस्तद्भेदं बोधयन्ती तदनुमानमपि बाधते, विषयस्य बुद्ध्यभेदे बुद्धेस्ततो भेदासम्भवादित्यर्थः । विषयाविषयिणोः परस्परं भेदः साध्य इति द्वितीयं शङ्कते *विषयीति* । परिहरति *अस्त्विति* । अयं भावः । यस्या बुद्धेर्यो विषयस्तयोरेव परस्परप्रतियोगिकभेदः साध्यः, किं वा बुद्धिजातं विपयजाताद्भिन्नं विषयजातं बुद्धिजाताद्वा भिन्नमिति । यद्याद्यस्तथा ऽपि न विषयित्वं हेतुः, विषयभागे ऽभावात् । नापि विषयत्वम्, बुद्धिभागे ऽसिद्धेः । नापि विषयविषयित्वं स्वरूपासिद्धेः,

बुद्धितद्विषययोरेकतरस्यापि विषयविषयित्वाभावादिति। भंग्यन्तरमाह

११८ परबुद्धिम्प्रति श्रुतिर्निराबाधा।

परबुद्धीस्तद्विषयांश्च प्रति निराबाधा सती श्रुतिरेकस्या बुद्धेर्विषयादपरामपरस्याश्च विषयात् परामभेदबोधाय धावन्ती सर्वाद्वैत एव पर्यवस्यतीति। न च शक्यमनुमातुं—सर्वस्या बुद्धेर्विषयात् सर्वा बुद्धिर्भिन्नेति। माभूदन्यबुद्धिविषयादात्मनोपि बुद्धिर्भिन्नेति। नचात्मव्यतिरिक्तादित्युक्तेऽपि निस्तारः स्यात्। अद्वैतवादिनः सर्वाभेदमिच्छतः क्वचिदपि तदसिद्ध्या विशेषणाप्रसिद्धेरिति।

*परेति*। अनुमानं विषयिविज्ञानस्य स्वविषयस्य च परस्परभेदं गोचरयति, न त्वन्यबुद्धेः, अन्यबुद्धिविषयात्। ततश्च परबुद्धीस्तद्विषयांश्च प्रत्यद्वैतबोधनाय धावन्ती श्रुतिः सर्वाद्वैत एव पर्यवस्यतीति सम्बन्धः। तदेव स्पष्टयति *एकस्या इति*। एकस्या बुद्धेर्विषयात् घटादपरां पटबुद्धिमपरस्याः पटबुद्धेर्विषयात्पटात् घटबुद्धिं प्रत्यभेदबोधनाय धावन्तीत्यर्थः। बुद्धिजातं विषयजाताद्भिन्नं विषयजातं च बुद्धिजाताद्भिन्नमिति साध्यार्थ इति पक्षान्तरमाशङ्क्याह *न चेति*। तत्र किं स्वव्यतिरिक्ताद्विषयाद्भिन्नमिति साध्यते विषयमात्राद्वेति विकल्प्य द्वितीयं दूषयति *मा भूदिति*। बुद्धिरपि बुद्ध्यन्तरगोचरा भवति ततश्च

स्वात्मनोऽपि स्वभेदप्रसङ्ग इत्यर्थः । प्रथमं पराकरोति *न चेति* । न तावत्परार्थानुमानम्, परस्याद्वैतिनो भेदमात्रानङ्गीकारात् स्वव्यतिरिक्तेतिविशेषणाप्रसिद्ध्या अप्रसिद्धविशेषणत्वात्पक्षस्य साध्यविकलत्वाच्च दृष्टान्तस्य । नापि स्वार्थम्, स्वपक्षे भेदस्य प्रत्यक्षतया ऽनुमानवैयर्थ्यात् कथायां तदप्रयोगाच्चेत्यर्थः ।

गृहीतसङ्गतिकस्य सर्वं भिन्नमिति वाक्यम्प्रतीतिमुत्पादयति न वा । न चेत्, अद्वयवाक्यमपि नतरामर्थं प्रमापयेत् । प्रतीतिजनकं चेत्सा प्रतीतिरप्रमा प्रमा वा । आद्ये ज्ञानमात्रहेतुजन्यत्वं यत्प्रमास्वतस्त्वं तद्धीयेत । प्रमा चेत्तत्करणमेतद्वाक्यं प्रमाणमिति सप्रतिशब्दाऽद्वयश्रुतिरप्रमाणं सत्प्रतिपक्षानुमानवदित्याशङ्क्याह

११९ सर्वम्भिन्नमिति वाक्येनापि न भेदः सिध्यति ।

एतेन "सर्वं भिन्नमिति वाक्येन—विना बाधं स्वतःप्रमाणेन—सप्रतिशब्दा सेयमद्वैतश्रुतिः" इत्यप्यनवकाशं प्रत्यवस्थानं मन्तव्यम् । यस्मात् कस्मादपि भेदे मिथ्यातः सत्यभेदोपगमेन सिद्धसाधनात् । सर्वस्मादिति स्वस्मादप्यापत्तेः । स्वव्यतिरिक्तादिति चाद्वैतवादिन्यव्यवच्छेदकम् ।

*एतेनेति* । परामृष्टमेव हेतुं स्फुटीकुर्वन्नाह *यस्मादिति* । सर्वं भिन्नमिति वाक्यस्य कोऽर्थः । यत्किञ्चिद्यतः कुतश्चिद्भिन्नमिति, किं वा वस्तुमात्रं वस्तुमात्राद्भिन्नमिति, आहोस्वित्स्वव्यतिरिक्तात्सर्वस्माद्भिन्नमिति । नाद्यः पारमार्थिकभेदविषयत्वे बोधकत्वात्तत्र सङ्-

तिग्रहाभावात्, भेदमात्रे व्यावहारिके वा साध्ये ऽधिष्ठानस्य ब्रह्मणो ऽध्यस्तप्रपञ्चान्मिथ्याभूतभेदोपगमेनेष्टापादनत्वादित्यर्थः। द्वितीयो व्याहत इत्याह *सर्व इति*। स्वस्यापि वस्तुत्वेन सर्वशब्दाभिधेयत्वात्स्वात्मनः स्वस्य भेदप्रसङ्ग इत्यर्थः। व्यर्थविशेषणत्वान्न तृतीय इत्याह *स्वेति*। अव्यवछेदकमव्यावर्तकम्, स्वातिरिक्तपदार्थमात्रानङ्गीकारादित्यर्थः।

पृथिव्यबादिभ्यो भिद्यते पृथिवीत्वादित्यादिप्रयोगान्तरे ऽप्युक्तदोषानुसन्धानार्थमुक्तमर्थं श्लोकेनाह

५२० भेदसाधनासम्भवोपसंहारः।

तदेवं

हेत्वाद्यभावसार्वज्ञे सर्वे पक्षतयाऽऽस्थिते।
किञ्चित्तु त्यजता दत्ता सैव द्वारद्वयश्रुतेः।

अत एव च

आद्यधीत्वेद्यभेदीयाऽप्यन्यथानुपपन्नता।
स्वज्ञानापेक्षणादन्ते बाधते नाद्वयश्रुतिम्।

*तदेवमिति*। तस्मादेवमुक्तेन न्यायेनाद्वैतश्रुतेर्न विरोध इत्यर्थः। सर्वं सर्वस्माद्भिन्नमिति साध्ये सर्वमेव पक्षनिक्षिप्तं, किं वा किं चिद्दृष्टान्तासिद्धये पृथक् क्रियते। प्रथमं प्रत्याह *हेत्वादीति*। सर्वं पक्षयता धर्मीकुर्वता हेत्वाद्यभावसार्वज्ञे आस्थिते स्वीकृते स्यातां, पक्षातिरिक्तसाध्यहेतुदृष्टान्तानामभावात्, तथामानसिद्धमेवानुमानाङ्गमित्यंगीकारात् सर्वस्य प्रमाणतो

ऽवगन्तृतया सर्वज्ञत्वमस्य स्यादित्यर्थः। यदि द्वितीयस्तत्राह *किं चिदिति*। यस्य पक्षानिक्षेपान्नानुमानेन भेदः साध्यते तदभेदबोधनद्वारा सर्वाद्वैतश्रुतेः पर्यवसानात्सैव द्वाः द्वारं दत्ता स्यादद्वैतबोधनाय श्रुतेरित्यर्थः।

भेदप्रमान्यथानुपपत्त्या वा वैपरीत्यमाशङ्क्यमित्याद्युक्तमर्थापत्तिविरोधाभावमुपसंगृह्णाति *अत इति* । सर्वज्ञत्वप्रसङ्गद्वारप्रदानयोरन्यतरप्रसङ्गादेवेत्यर्थः । घटात्पटो भिन्न इति घटपटभेदप्रत्यक्षमाद्यधीः, तया वेद्यो भेदः आद्यधीवेद्यभेदः, तदीया तत्संबन्धिनी अन्यथानुपपन्नताऽप्यनुमानवदद्वयश्रुतिं न बाधते। तत्र हेतुं कथयति *अन्ते स्वज्ञानापेक्षणात्*। अयमर्थः प्रतीयमानैवानुपपन्नताऽभेदं साधयति इति वाच्यम्, अनुपपद्यमानदर्शनादुपपादके बुद्धिरर्थापत्तिरिति स्वीकारात्, तथा च स्वगोचरज्ञानात्स्वात्मनो भेदं विना घटपटभेदानुपपत्त्यभावात्स्वज्ञानादात्मनो भेदं न साधयेत्। ततश्च तज्ज्ञानात्तस्या अभेदबोधनद्वारा सर्वाद्वैते पर्यवस्यतीति ।

(८) अथ अद्वैतश्रुतेः प्रमानुत्पादकत्वरूपाप्रामाण्याभावः।

एवं तावदद्वैतश्रुतेः प्रत्यक्षादिविरोधान्मिथ्यात्वमप्रामाण्यमिति प्रथमः पक्षः पराकृतः। इदानीं प्रमानुत्पादकत्वमप्रामाण्यमिति द्वितीयं दूषयति

२२१ अद्वैतज्ञाने प्रतिबन्धाभावः।

नच संस्काराारूढदृढान्वयव्यतिरेकान्वयव्यतिरेका-

न्वयप्रतिपत्त्युत्पत्तिप्रतिबन्धः शक्यशङ्कः । यतः—

'अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि ।
अबाधात्तु प्रमामत्र स्वतःप्रामाण्यनिश्चलाम्' ।
( श्लोकवार्तिक चोदनासूत्र ॥ ६ ॥

असंसर्गाग्रहस्यापि मन्ता शंसत्यबाधिते ।
अत्यन्तासदसंसर्गाग्रहं संसर्गलम्भकम् ॥

***न चेति***। अयमर्थः। अन्वयः सत्त्वं व्यतिरेको ऽसत्त्वम्—"अग्रजं वा दशग्रीवमनुजं वा विभीषणम् अन्वयव्यतिरेकाभ्यां रामः कमभिषेक्ष्यतीति" सत्त्वासत्त्वपरतया ऽन्वयव्यतिरेकशब्दयो रामायणे प्रयोगदर्शनात्—तयोः सत्त्वासत्त्वयोरन्वयः संबन्धः, तदभावो व्यतिरेकः—तदेवं सत्त्वासत्त्वसंबन्धाभावः प्रतिपादितः—तस्यान्वयो विशेषणत्वम्, तस्य या प्रतिपत्तिः संस्कारारूढतया दृढतरा बलवत्तरेति यावत्, तया ऽद्वैतप्रत्ययस्योत्पत्तिप्रतिबन्धः शक्यशङ्को न भवतीति योजना। तथा हि क्वचित्सत्त्वसंबन्धाभावो विशेषणं नास्ति, घट इति । क्वचिच्चासत्त्वसंबन्धाभावः—'न नास्ति घटः किं त्वस्त्येवेति'। तेन भेदनियतसत्त्वाभावविशेषणत्वासत्त्वाभावविशेषणत्वलक्षणविरुद्धधर्मसंसर्गप्रतिपत्त्या चिरतरवासनानिरूढतया प्रबलतया प्रतिबन्धादद्वैतप्रत्ययस्योत्पत्तिरेव न सम्भवतीति तात्पर्यार्थः। अत्र च विशिष्टान्वयप्रतिपत्त्या ऽद्वैतप्रतिपत्तेरुत्पत्तिप्रतिबन्ध इति वक्तव्ये तन्त्रेण प्रतिपत्तिशब्दः सकृदेवोच्चारित इति केचित् ।

अन्यन्मतम्। पूर्वानुभवजन्यः कार्यकल्प्यः कश्चिद्तिशयःसंस्कारः, तमारूढःसंस्कारारूढः, स एव दृढः, स एवान्वयः संबन्धः, तस्य व्यतिरेकान्वयः अभावः, तस्य व्यतिरेको ऽभाव इति यावत्। तस्मादन्वयप्रतिपत्त्युत्पत्तिर्वाक्यार्थज्ञानजन्मेति यावत्। तस्य प्रतिबन्धो ऽभाव इत्यर्थः। एतदुक्तं भवति। संबन्धग्रहणसंस्काराच्छब्ददर्शनाच्च वाक्यार्थप्रतीत्युत्पत्तेरभावः शङ्कितुं न शक्य इति।

यद्वा अन्वयो वृद्धव्यवहारः, अन्वीयते शब्दोऽर्थमनेनेति व्युत्पत्तेः, तस्य व्यतिरेको ऽभावः सर्वव्यवहारातीतत्वादद्वैतस्य, तस्माद्वृद्धव्यवहाराभावादन्वयस्य शब्दार्थसङ्गतिग्रहणस्य व्यतिरेकादभावात्, अन्वयप्रतिपत्तेरद्वैतप्रतिपत्तेरुत्पत्तिप्रतिबन्धः शक्यशङ्को न भवति। लोकावगतसामर्थ्यः शब्दो वेदेपि बोधक इति न्यायाद्वृद्धव्यवहारस्यैवाभावादद्वैतवाक्यादद्वैतप्रतिपत्तिरेव नोदेतीति न शङ्कनीयमित्यर्थः। तत्र हेतुत्वेन व्यवहारस्य विषयं दर्शयति *संस्कारेति*। संस्कारो नामानादिप्रवृत्तवृद्धव्यवहारानुभवनाशजनिता वासना,तमारूढस्तत एव दृढः। दार्ढ्यं च तुच्छविलक्षणतया निश्चितत्वम्, ततः परमार्थसत्त्वाभावे ऽपि तुच्छविलक्षणत्वाद्व्यवहारस्य सङ्गतिग्रहणादिसम्बन्धसामंजस्यमिति। यद्वा अन्वयःकारणम्, अनुगच्छतीति व्युत्पत्त्या, व्यतिरेको भेदो व्यावृत्तं कार्यम्। तदनेन कारणकार्ये उक्ते। तयोरन्वयः सम्बन्धः समवायादिरूपस्तेन व्यतिरेको भेदस्तस्मादन्वयप्रतीत्युत्पत्तिस्तत्प्रतिबन्धः

शक्यशङ्को न भवति। एतदुक्तं भवति। संस्कारारूढतया बलवत्तरो यः कार्यकारणसम्बन्धबलाल्लभ्यो भेदस्तस्मादद्वैतप्रतिपत्तिरेव नोदेति विरोधादिति न शङ्कनीयमिति। यद्वा संस्काराररूढो भूयोदर्शनजसंस्कारविषयो दृढान्वयो दृढसत्त्वः अबाधितसंविदुपस्थितः एवम्भूतो यो व्यतिरेको भेदस्तस्य—यो घटः स पटादेर्भिन्नः यो न पटादेर्भिन्नो न स घट इति—अन्वयव्यतिरेकौ ताभ्यामन्वयप्रतिपत्तिर्व्याप्तिप्रतीतिस्तयेत्यर्थः। भेदादेः पारमार्थिकत्वाभावे ऽपि प्रतिभासमात्रशरीरस्य भावादद्वैतश्रुतेः परमार्थगोचरत्वान्नास्ति विरोध इति सर्वत्र परिहारः।

नन्वद्वैतादिपदं गृहीतसङ्गतिकं स्वार्थं प्रत्यापयति, किं वा गृहीतसङ्गतिकम्। नाद्यः प्रमाणान्तरागोचरे ऽद्वैते सङ्गत्यधिगत्ययोगात्। नापि द्वितीयो ऽतिप्रसङ्गादित्याशङ्क्याह *यत इति*। शब्दो वाक्यम् अत्यन्तासत्यपि नृशृङ्गादौ विज्ञानं जनयति, अन्यथा नृशृङ्गाद्भिन्नो घट इति व्यवहाराभावप्रसङ्गात्। न च तत्र सङ्गतिग्रहणं शशविषाणस्य सकलप्रमाणविकलत्वात्। अतो ऽगृहीतसङ्गतिकाद्वैतादिपदात्तदर्थप्रतीतिर्न स्यादिति न शक्यं वक्तुमिति प्रौढवादः। वस्तुतस्तु पदार्थत्वं नेष्यते ब्रह्मणः, किं तु वाक्यार्थत्वम्। वाक्यं वाचा गृहीतसङ्गतिकमेव बोधयति। न च पदार्थानामेव वाक्यार्थत्वात् ब्रह्मादिपदार्थाप्रतीतौ वाक्यार्थाप्रतीतिरिति वाच्यम्,—योग्यतानुसारेण प्रसिद्धपदान्तरसमभिव्याहारेणाप्रसिद्धपदार्थप्रतीत्या वाक्यार्थप्रतीतेः। तदुक्तम्(श्लोकवार्तिके)—

'पदमज्ञातसन्दिग्धं प्रसिद्धैरपृथक्श्रुति, ।
निर्णीयते निरूढं तु न स्वार्थादपनीयते'—

इति हिशब्दार्थः । नन्वद्वैतज्ञानमप्रमा सामान्यविशेषनिर्मुक्तविषयत्वात् नृशृङ्गादिज्ञानवदित्याशङ्क्याह * अबाधादिति * । अत्राद्वैते शब्दः प्रमां करोतीति पूर्वेण सम्बन्धः । हेतुमाह *अबाधादिति* । अबाध्यानवगतादन्यगोचरत्वमप्रमात्वे प्रयोजकम्, न सामान्यादिनिर्मुक्तविषयत्वम्, विशेषज्ञाने व्यभिचारादित्यर्थः । ज्ञानप्रामाण्यं ज्ञानान्तरसंवादलभ्यम्, न चात्र संवादकं प्रमाणमस्ति तदगोचरत्वादित्याशङ्क्याह *स्वत इति* । प्रामाण्यस्य स्वतस्त्वमुपेयम् अन्यथाऽनवस्थानादित्यर्थः ।

व्यवह्रियमाणपदार्थासंसर्गाग्रहादेवोभयसंप्रातिपन्नात्संसृष्टव्यवहारोपपत्तौ नायथार्थप्रतीतिः कल्पनीया गौरवादनाश्वासादिभ्यः अतो न शब्दोऽसत्यर्थे ज्ञानं करोतीति प्राभाकरस्तत्राह *असंसर्गेति * । विमतो व्यवहारो व्यवह्रियमाणपदार्थसंसर्गज्ञानपूर्वकः संसृष्टव्यवहारत्वाद्गामभ्याजेत्यादिव्यवहारवत्, विपक्षे संसर्गाग्रहादेव सर्वत्र व्यवहारोपपत्तौ संसृष्टप्रत्ययमात्रं लयमियादनाश्वासोऽर्थे ज्ञायमाने तेनैव परास्तः । स्वदर्शने च तस्य तुल्यत्वा-

१ असंसर्गाग्रहस्य मन्ता मीमांसकः, तत्र—अत्यन्तमसन्नसंसर्गः सत्यस्थले (अबाधितविषये), तस्य अग्रहो यत्र, तत्र तु—संसर्गप्रमामेव मन्यते । तथा चैतन्मते ऽपि अद्वैतश्रुत्या संसर्गप्रमैव जननीया विषयाबाधादित्यर्थः, । सदसंसर्गाग्रहस्तत्र नास्त्येव, विषयबाधस्य निरस्तत्वादिति भावः । (शां) ।

दोषभावाभावाभ्यां व्यवस्थाया इतरत्रापि तुल्यत्वात्। साधारणाकारस्यालम्बनत्वे नानालम्बनताऽपि निरस्ता प्रतीतिविरोधस्य स्वपक्षदोषत्वादित्यरुचिमपिशब्देन द्योतयति । अङ्गीकृत्याप्याह—असंसर्गाग्रहस्य व्यवहारहेतुत्वं मत्वा ख्यातिवाद्यबाधिते विषये ऽत्यन्तासदसंसर्गाग्रहं संसर्गलग्नकं शंसति अभिधत्ते इत्यन्वयः । अत्यन्तासंश्चासावसंसर्गश्चेति तथोक्तस्तस्याग्रहं संसर्गलग्नकं संसर्गग्रहाविनाभूतमिति यावत्। गामानयेत्यादौ व्यवह्रियमाणपदार्थानां संसृष्टानामसंसर्गस्यासतो ग्रहं संसर्गज्ञानपूर्वकमेव वदतीत्यर्थः। तदयं प्रयोगः—एकमेवेत्यादिपदार्थासंसर्गाग्रहस्तत्संसर्गज्ञानाविनाभूतो ऽबाधितासंसर्गाग्रहत्वात् गामानयेत्यादिपदार्थासंसर्गाग्रहवदिति। नन्वद्वैतागमवाक्यं सदसद्वा तदुभयविलक्षणं वा। नाद्यः, अद्वैतभङ्गात्।न द्वितीयः, यस्य हि परमार्थेन नास्तिता तस्य कथमस्तित्वमसतश्च कथं साधनत्वं तदुक्तम्—'यो ऽधुना परमार्थेन नास्तीत्येवं प्रतीयते । कथं पूर्वमसावासीदसंश्चेत्साधनं कथम्, साधनं चेदवश्यं च परमार्थास्तितां वदेदिति'। न चानिर्वचनीयेन परमार्थसिद्धिः सम्भवति शुक्तिरजतज्ञानादिगोचरस्यापि सत्यत्वप्रसङ्गात्। आहच— 'सिद्धिर्नापरमार्थेन परमार्थस्य युज्यते, न दृष्टा शशशृङ्गादेः सम्यग्ज्ञानादिहेतुतेति'।

कल्पितागमस्य प्रामाण्यमनुचितमित्यनौचितीलक्षणतर्कविरोधात्कथमबाधितत्वमित्याशङ्क्याह

१ उक्तकल्पत्रयेषु तृतीयं सदसद्विलक्षणत्वपक्षं दूषयति नचेति।

१२२ अनौचितीतर्केणापि अद्वैतश्रुतिर्न बाध्या ।

अनौचित्या ऽपि तर्केण दुर्बाधैवाद्वयश्रुतिः ।
अनारोपितमूलत्वाद्बलाहंयुरताहशा ।
प्रवृत्तेनाप्यनौचित्यमूलं येन न लूयते ।
तत्रानौचित्यसाम्राज्यं वैपरीत्यात्तु नात्र तत् ।

*अनौचित्येति*। अद्वयश्रुतिः अनौचित्या तर्केणापि दुर्बाधैवेत्यन्वयः । अनौचितीशब्दस्य नियतस्त्रीत्वात्पुंल्लिङ्गतर्कशब्देनसामानाधिकरण्यमविरुद्धम् । कुतो दुर्बाधत्वमित्यत आह *अनारोपितमूलत्वादिति*। यथार्थवस्तुविषयत्वादहंयुर्बलवत्त्वाभिमानिनी—अहंयुः स्यादहङ्कारीत्यभिधानदर्शनात् । तादृशारोपितमूलेन तर्कस्त्वारोपितमूलो ऽपि भवति । यदीदं रजतमसदेव स्याद्परोक्षं न स्यादित्यारोपितसत्त्वमूलत्वाभ्युपगमात्तस्येति । कल्पितप्रतिबिम्बादेः सत्यबिम्बादिगमकत्वमपाकर्त्तुमशक्यमिति श्लोकार्थः । तर्हि वाक्यप्रामाण्यस्य तर्कानपनोद्यत्वाद्यागादि स्वर्गसाधनमिति निश्चयोपपत्तौ नापूर्वसाधनविचारारम्भः स्यात्तथेक्षत्याद्यधिकरणारम्भश्च न स्यादित्याशङ्क्याह *प्रवृत्तेनेति* । बाध्यत्वाभिमतेन वाक्येन स्वार्थबोधनाय प्रवृत्तेनापि येनानौचित्यमूलमापादकापाद्यनिष्ठा व्याप्तिर्न लूयते न खंड्यते । इह तु पुनरद्वैतश्रुत्यापाद्यपादकभेदखण्डनेन व्याप्तेरपि खण्डितत्वात्तत्साम्राज्यं नास्तीत्यर्थः ।

बाध्यबाधकबुद्ध्योर्भेदस्य बाधकबुद्धेः स्वविषयभे-

दस्य च केनचित्प्रमाणेनाग्रहणात्तदभेदबोधनद्वाराऽद्वैतश्रुतिः सर्वाद्वैते पर्यवस्यतीत्युक्तमर्थं प्रपञ्चयितुं सिंहावलोकनन्यायेन पुनश्चोद्यमुद्भावयति ।

१२३ अद्वैतश्रुतेः पुनर्बाधाशङ्का ।

"ननु यद्यदेवोदाह्रियते त्वया—नेत इतोऽस्य भेदो गृहीत इति ततोऽस्याद्वैताम्नायैरभेदबोधने तद्द्वारा सर्वाभेदे पर्यवसातव्यमिति—ततस्ततस्तस्य भेदस्तदैव गृह्यते मया । तस्मादुदाह्रियमाणतायामनुदाह्रियमाणतायाञ्च कस्यचिदेतत् प्रत्यवस्थानमस्थाने" इति[1] ।

*नन्विति* । इतइतो घटपटादेर्घटपटौ भिन्नाविति बुद्धेस्तथान्तिमबुद्धेः स्वविषयतश्च भेदो न गृहीत इति कृत्वा ऽस्य घटपटौ भिन्नाविति बुद्ध्यादेस्ततो घटादितो ऽभेदबोधनद्वाराऽद्वैताम्नायैः सर्वाभेदे पर्यवसातव्यमिति यद्यत्प्रथमबुद्ध्याद्युदाह्रियते ततस्ततो घटादेरन्तिमबुद्धिविषयाच्च तस्यान्तिमबुद्ध्यादेर्भेदस्तदैव गृह्यते मया ऽपुनरुक्तशब्दवाच्यत्वादित्यर्थः । प्रतिबिम्बं चन्द्रमसो बिम्बचन्द्रमसा सह द्वौ चन्द्रमसाविति भेददर्शने ऽप्येकः चन्द्रमा इति वाक्यं यथा तयोरद्वैतं बोधयति तथा ऽऽगमवाक्यमपि किं न बोधयेदित्यत आह* तस्मादिति*। कस्य चित्प्रमाणस्योदाह्रियमाणतायां तस्य तद्विषयेण सहाद्वैतबोधनद्वा-

१ कस्यचिद्वस्तुनः अनुदाह्रियमाणतायां श्रुतिव्यवस्थापनानवकाशः, उदाह्रियमाणतायां च भेदग्रहापत्तिरिति (हेतोः) प्रत्यवस्थानं खण्डनमस्थाने अयुक्तमित्यर्थः।(शां)।

राऽनुदाह्रियमाणतायां सुतरामद्वैतश्रुतिः सर्वाद्वैते पर्यवस्यतीति त्वत्प्रत्यवस्थानमेतदस्थान इति । यद्वा कस्यचित्पदार्थस्यान्तिमबुध्यादेरुदाह्रियमाणताया-मनुदाह्रियमाणतायां च श्रुतेः प्रमाणान्तरविरोधाविशेषेण त्वत्प्रत्यवस्थानमस्थान इति योजना । तात्पर्यं तु–युक्तं चन्द्रभेदज्ञानबाधनं नियतपुरुषनियतकालं चोत्पत्तेः, नेह तद्वैलक्षण्यादिति । तदुक्तम्–'सर्वेषां सर्वदा यत्र धीः स्यात्तत्र न बाधनमिति, (श्लोकवार्तिके) ।

ततो भेदो गृह्यत इति किं प्रतिज्ञामात्रेण साध्यते, किं वा प्रमाणेन । नाद्यो विपरीतप्रतिज्ञया ममापि चरितार्थत्वप्रसङ्गादिति परिहरति

१२४ बाधशङ्कापरिहारः ।

मैवम् । अन्तिमबुद्धेरद्वैतश्रुतिजबुद्ध्यादितो भेदो न त्वया प्रमित इति मयोच्यमाने यस्तदीयस्ततो भेदस्त्वया प्रमातव्यः स न तावत् प्रत्यक्षेण, तत्कालमन्तिमबुद्धेरनुपस्थितेः । यदि च केनचिद्धेतुना वा कयाचिदनुपपत्त्या वा तथा स्यात्तदाऽद्वैतवादिनं प्रति हेतोः साध्याविशिष्टतया, अनुपपत्तेश्च, येन विना सा तदविशिष्टतया, ततः कथमाभासात्प्रमोदयः स्यात् । नच वाच्यम्–"स्वयं मया स भेदो ज्ञायत इति नास्ति पाक्षिकापि मां प्रत्यसिद्ध्यादिः" इति । यतोऽस्य त्वद्वचनस्य वैयर्थ्यापत्तिः स्यात्, वचनस्य परार्थत्वात् । मौनमवलम्ब्यावतिष्ठमानश्च भवानप्रतिभातो न मुच्यते ।

न च—"स्वयं प्रमितो भेदः परं प्रति वचसा केवलं बोध्यते"—इति वाच्यम् । त्वद्वचसि परस्याप्रत्ययात् । विजिगीषुं परं प्रति विजिगीष्वन्तरवचनं हि तत्रार्थे तज्जिज्ञासोत्पादनद्वारेण स्वतस्तस्य तदर्थप्रमित्युत्पादनपर्यवसायितयोपयुक्तम् । न चाद्वैतवादिनं प्रति तथा कर्त्तुं शक्यते, तं प्रत्यन्यथासिद्धेरुक्तत्वात् । न च वाच्यम्—"मम वचनात् सन्देहेनापि श्रुत्या तत्र तत्र सन्दिग्धबाधितभावया नाभेदप्रतिपादनं ते घटते—" इति । यस्मादद्वैतं मन्यमानेन भेदासिद्ध्या सर्वत्र साध्याविशेषादिदोषप्रतिसन्धायिना संशयस्याप्यनवकाशीकरणमेव स्यात् ।

***नैवमिति*। अन्तिमबुद्धेरद्वैतश्रुतिजन्यबुद्ध्यादितो भेदस्त्वया न प्रमीयत इति मयोच्यमाने मया प्रतिज्ञायमाने ततोऽद्वैतबुद्ध्यादितोऽन्तिमबुद्धेर्यो भेदः स प्रमातव्यः न प्रतिज्ञामात्रेण साधनीय इति सम्बन्धः । यदि प्रमाणेन प्रतीयते तदा किं प्रत्यक्षेण किं वाऽनुमानेन उतार्थापत्त्या इति विकल्प्य प्रथमं निराकरोति *न तावदिति* । बाधपरम्पराविश्रमभूमिरन्तिमबुद्धिः इदानीं वर्तते न वा । न चेत्, वर्तमानग्राहिप्रत्यक्षेण तद्ग्रहणायोगात्तत्प्रतियोगिकस्य तद्धर्मिकस्य वा भेदस्याध्यक्षेणाध्यवसातुमशक्यत्वात् । वर्तते चेत्, तद्गोचरप्रत्यक्षस्येदानीमसम्भवो युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गमिति काणादवचनादित्यर्थः । ननु प्रतियोगिप्रतीति-**

रपेक्ष्यते, न तु तेनैकबुद्धिगोचरत्वम्, भेदस्य केवलव्यतिरेकाभावात्। तत्रावर्तमानामपि प्रतीत्य ततो भेदः प्रत्यक्षेणैव गृह्यत इति। मैवम्। भेदस्य प्रतियोगिविशिष्टत्वेन तदेकबुद्धिगोचरत्वनियमाद्विशेषणविशेष्ययोरेकबुद्धिगोचरत्वादन्तिमबुद्धेरननुभूततया स्मरणायोगात् प्रतीत्यन्तरस्य च कारणाभावादसम्भवाच्चेति। अस्तु तर्ह्यनुमानेनार्थापत्त्या वाऽन्तिमबुद्धेरद्वैतश्रुतिजन्यबुद्ध्यादितो भेद इति द्वितीयतृतीयौ चोदयति *यदि चेति*। अन्तिमबुद्धिः श्रुतिजन्यबुद्ध्यादितो भिन्ना भिन्नसामग्रीकत्वात् अपुनरुक्तशब्दवाच्यत्वात् जन्मनाशादिविरुद्धधर्मत्वाद्वा, यदेवं तदेवं यथा घटादि–इत्यनुमानं विवक्षितम्। अर्थापत्तिस्तु–बुद्ध्योर्भेदाभावे श्रुतिसंस्कारविरहिणामद्वैतज्ञानानुपपत्तिरूपा विवक्षितेति द्रष्टव्यम्। चशब्देनोपमानादीनामपि भेदसाधकत्वं द्योतयति, तदभावे तद्गोचरसादृश्यादेरसम्भवात्।

किमेतत्परार्थानुमानमुत स्वार्थमिति विकल्प्याद्यमन्यतरासिद्ध्यादिना दूषयति *तदेति*। भिन्नसामग्रीकत्वादेर्हेतोः साध्याविशिष्टतया भासनात् ततः कथं प्रमोदयः स्यात्, *येन* भेदेन विना *सा* अनुपपत्तिस्तस्याश्च तत्समभावात् असिद्धिः, भेदसमत्वेनासिद्धत्वेनेति यावत्। असिद्धत्वेनाभासात् कथं प्रमोदय इत्येवान्वयः। *साध्याविशिष्टतयेति* हेतोरसिद्धत्वमुच्यते, न तु साध्यसमानत्वमेव, विशेपणभेदात्। ततश्च सर्वाद्वैतिना सामग्रीभेदादेरनङ्गीकाराद्धेत्वसिद्धिः साध्याविकलं च निदर्शनम्। अन्तिमबुद्धिकारणस्यागमस्य च भेदे शा-

त्रसंस्कारविरहिणामद्वैतज्ञानासिद्धिस्तदनुपपत्त्या भेदसिद्धिरिति—इतरेतराश्रयाद्वा चक्रकाद्वा ऽनुदय एवार्थापत्तेरित्यर्थः । उपमानादावपीतरेतराश्रयादि तुल्यमिति वाऽर्थः ।

भिन्नसामग्रीत्वादि स्वार्थानुमानमिति द्वितीयमाशङ्क्याह * न चेति * । वेदान्तपक्षे प्रातीतिकभेदवत्सामग्रीकत्वादिहेतौ नास्त्यसिद्धिः, पारमार्थिकभेदवत्त्वस्य हेतुत्वे ऽसिद्ध्यादिर्यथा पाक्षिको नैवं मम दृश्यता सत्यताव्याप्तेत्यङ्गीकारादित्याह * नास्तीति * । स्वार्थानुमानस्य कथायामनुपन्यास इति दूषणं स्पष्टत्वादुपेक्ष्य दूषणान्तरमाह * यत इति * । वचनं व्यर्थं स्यादित्यर्थः । न व्यर्थं ममैव प्रत्यायकत्वादित्यत आह * वचनस्येति * । तर्हि स्वार्थानुमानावगतमपि भेदं न वच्मीत्याशङ्क्याप्रतिभानाम निग्रहस्थानं प्रसज्येतेति परिहरति * मौनमिति * । उत्तरस्याप्रतिपत्तिरप्रतिभा ।

औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्ध इति(मीमांसासूत्र१।१।५) निर्णीतत्वादर्थशेषभावस्य शब्दानां मया प्रमितो भेद इति मदीयवचनात्कर्णपथमवतीर्णात् तवाप्यर्थप्रतिपत्तेर्न वैयर्थ्यं वचनस्येत्यत आह * न चेति * । अर्थशेषभावस्यापि स्वाभाविकत्वेप्यनाप्तपुरुषसंबन्धितया दोषशङ्काकलङ्कस्याङ्गुल्यग्रादिवाक्यवन्न प्रत्यायकत्वमित्याह * त्वद्वचसीति * । ननु वादिवचनं वाद्यन्तरप्रत्यायकम्,—"अनित्यः शब्दः"

१ 'अङ्गुल्यग्रे करिशतमास्ते'—इति वाक्यं विवक्षितम् ।

इत्यादिवचनेन प्रतिपाद्यमानत्वात्तस्येत्याशङ्क्याह * विजिगीषुमिति * । विजिगीष्वन्तरवचनं परं विजिगीषुम् प्रति 'तत्र' अनित्यत्वादिलक्षणे 'अर्थे' तस्य जिज्ञासोत्पादनद्वारेण 'तस्य' सजिज्ञासस्य 'तस्मिन्' जिज्ञासितेऽर्थे प्रमित्युत्पादनपर्यवसायितयोपयुक्तं हीत्यन्वयः । विजिगीष्वन्तरवचनस्मारितप्रमाणेन परो विजिगीषुः स्वयमेव प्रमिमीते ऽन्यथा ऽतिप्रसङ्गादिति भावः । तर्हि मदीयवचनमपि भेदसाधकानुमानादिप्रमाणस्मारकतया त्वां प्रत्युपयुज्यतामित्यत आह । * न चेति * । सर्वाद्वैतं मन्यमानं प्रति न हेतूपन्यासो ऽन्यतरासिद्धिप्रसङ्गात् । नाप्यर्थापत्तिः, अन्यथेत्यंशस्य भेदसापेक्षस्य परस्पराश्रयादिप्रसङ्गेनासम्भवात्, द्वा सुपर्णेत्यागमस्य प्राप्तभेदानुवादस्य च तत्र प्रामाण्यायोगात्, उपमानस्य च सादृश्यमात्रगोचरस्य भेदाभेदयोस्ताटस्थ्यात्, अभावस्य च प्रमाणान्तरत्वानङ्गीकारात्, अङ्गीकारे वाऽनवस्थानात्, इन्द्रियातिरिक्तस्य प्रमाणस्य प्रतीयमानतया गमकत्वनियमात्, मानाभावस्य च मानत्वव्याघातादद्वैतिनं प्रति द्वैतवचनं न तत्साधकं मानस्मारकतयोपयुक्तमित्यर्थः ।

ननु मद्वचनस्य क्वचित्प्रत्यक्षं प्रमाणमित्यस्य प्रामाण्यादस्य च त्वद्दृष्ट्या प्रामाण्याव्यभिचारितया प्रमेयत्वादिवद्भेदसाधकप्रमाणसंशयजनकतया प्रतिकूलाद्वैतवाक्यस्यापि न निश्चायकत्वम् । अतश्च संशयहेतुत्वमप्रामाण्यमिति तृतीयविकल्पमाशङ्क्याह ।

* न चेति * । संशयस्यापि क्वचिन्निश्चयमन्तरेणानुपपत्तेर्भेदस्य वा तत्प्रमाणस्य वा क्वचिदप्यनिश्चयान्न त्वद्वचनं संशयजननक्षममित्याह * यस्मादिति * । यस्माद्भेदग्राहिप्रत्यक्षादिविरोधाशङ्कया ऽद्वैतश्रुतेस्त्रिविधमप्रामाण्यं नास्ति तस्मादिति ।

उक्तार्थसंग्राहकश्लोकेनापेक्षितमंशं पूरयति

१२५ संग्रहश्लोकः ।

तस्मात्

एकं ब्रह्मास्त्रमादाय नान्यं गणयतः क्वचित् ।
आस्ते न धीरवीरस्य भङ्गः सङ्गरकेलिषु ॥

* तस्मादिति * । तस्माद्ब्रह्मैवास्त्रं ब्रह्मास्त्रं स्वपरिपन्थिद्वैतनिवर्तकत्वात् । तच्चैकमद्वितीयत्वात् । तदादाय क्वचिदपि वादे जल्पे वितण्डायां वा अन्यं द्वैतिनं न गणयतस्तदुक्तप्रमाणजातस्यासिद्ध्यादिदोषात् । धीर एव वीरो धीरवीरः । धैर्यं च श्रुतधारणासामर्थ्यं वीर्य्यं च यथाकालं प्रयोगसामर्थ्यम् । सङ्गरकेलिषु युद्धक्रीडासु भङ्गो नास्ति इत्यन्वयः । रूपकालङ्कारो ऽयम् । यथा खलु लोके कस्य चिदर्जुनादेरेकं ब्रह्मास्त्रमादायान्यमश्वत्थामप्रभृतिकं न गणयतः सङ्गरकेलिषु क्व चिदपि भङ्गः पराजयो नास्ति तद्वदिति ।

एवं तावत्प्रत्यक्षादिना यत्र भेदः स्पष्टतरमवभासते तत्राप्यद्वैतश्रुतेर्विषयविषयिणोरद्वैतबोधनद्वारा सर्वाद्वैतपर्यवसाने निराबाधत्वमवादीत् ।

इदानीं प्रमाणान्तराविरुद्धमापाद्याद्वैतश्रुतेर्विषयमाह

१२६ परबुद्ध्यादिज्ञानमप्यद्वैतश्रुतेरुपोद्बलकम् ।

अपि च प्रतीयते तावदिदं सामान्यतो यन्नाम किञ्चित्परश्चेतसा चिन्तयन्नस्तीति किञ्चिद्वा विवक्षुरित्यादि,-तत्र परस्य बुद्धिविषयो विवक्षादिविषयो वा यो विशेषतो विनिगमनं विना नैव प्रतीयते, ततोऽन्तिमबुद्ध्यादिभेदो न भवता शक्यप्रमः, परेण तच्चिन्तनादेरपि सम्भवात्, स्वस्मात् स्वस्य भेदाभावात् । ततस्तत्र लब्धपदा कथमद्वैतश्रुतिर्विश्वाभेदे पर्यवस्यन्ती त्वया शक्यबाधा स्यात् ।

तस्मात्

कथं सामान्यतो ज्ञाते नैव ज्ञाते विशेषतः ।

पदरोधस्त्वया कर्त्तुं शक्यः स्याद्द्वयश्रुतेः ।

*अपि चेति*। किं तदित्यत आह *यन्नामेति* । परश्चेतसा किंचिच्चिन्तयन् विवक्षुर्वा जानन् वाऽस्तीति सामान्यतः प्रतीयते। विषयमुखत्वादिलिङ्गस्य सामान्योपाधौ गृहीतसम्बन्धत्वाद्विशेषानुमापकत्वाभावादित्यर्थः । सामान्यप्रतीतिरेव विशेषसिद्धिमपि बलादानयेदित्यत आह *तत्रेति*। न सामान्यसिद्धिर्विशेषबोधिका, ऽन्यथा क्वापि संशयविपर्यासौ न स्यातामित्यर्थः। तस्य सामान्यप्रतीतावप्यन्तिमबुद्ध्यादेर्विशेषतो निश्चयात्तत्प्रतियोगिकः तद्धर्मिको वा भेदोऽध्यक्षादिभिरध्यवसीयत इत्यत आह *तत

इति *। हेतुमाह * परेणेति *। भेदस्यायमस्मात् भिन्न इति धर्मिप्रतियोगिसापेक्षत्वादिति भावः। परचिन्तादिगोचरादन्तिमबुद्ध्यादिर्भिन्न इति धर्म्यादिग्रहणपूर्वकं भेदग्रहणं किं न स्यादित्यत आह * स्वस्मादिति *। भेदप्रतीतिमन्तरेण धर्मिप्रतियोगिभाव एव न सम्भवति स्वात्मनो पि स्वस्माद्भेदप्रसङ्गात्। न च तत्सम्भवति एकाभावप्रसङ्गादित्यर्थः। अन्तिमबुद्ध्यादेस्ततो भेदग्रहणं न घटते चेन्मा घटिष्ट, तथा ऽपि कथमद्वैतं घटिष्यत इत्यत आह * तत इति *। सङ्क्षेपविस्ताराभ्यां प्रतिपादितमर्थं बालः सुखं बुध्यते ततो विस्तरेणोक्तमुपसंहारव्याजेन श्लोकेनोपनिबध्नाति। * तस्मादिति *। सामान्यतो ज्ञाते वदनविकारादिलिङ्गेनानुमिते परचिन्तादिगोचरे विशेषतो विनिगमनहेत्वभावादज्ञाते ऽद्वयश्रुतेः पदरोधस्त्वया कथं कर्त्तुं शक्यः स्यात्, न कथंचिदित्यन्वयः।

भेदसत्तानङ्गीकारे नृशृङ्गवदपरोक्षव्यवहारस्तद्गोचर उपपन्नः स्यात्,व्यवह्रियते च भवता, अतो व्यवहारानुपपत्त्या भेदसत्त्वमवसीयत इति चोदयति

१२७ व्यवहारबलाद्व्यद्वैतश्रुतेर्न बाधः।

“ननु भेदमनङ्गीकुर्वतो भवतः कथं तत्तत्पदपदार्थवैचित्रीव्यवहारो न व्याहन्यते”। कथं व्याहन्यते, प्रतिवक्ष्यते हि तत्। किञ्च योऽयं त्वया व्याघात आपादनीयः सोपि कस्माच्चिदापादकात्। न चापाद्यापादकमभिद्यमानमापत्त्यै प्रभवेदिति।

तस्मात्

नानात्वमवलम्ब्यापि वदत्यद्वैतवादिनि ।
असिद्धभेदाद्व्याघातः पतेदापादकात् कुतः ॥

*नन्विति*। पदार्थस्य पदार्थान्तरेभ्यो भेदाप्रतिभासे पदार्थान्तरवाचकशब्दान्तरपरित्यागेन तद्वाचकासाधारणशब्दप्रयोगो नोपपद्येत । तेन भेदानङ्गीकारे भेदापेक्षपदपदार्थादिव्यवहाराङ्गीकारात् भेदाङ्गीकारतदभावरूपविरुद्धधर्मसमुच्चयलक्षणो व्याघातः स्यादित्यर्थः । व्यवहारोऽनुपपत्त्या भेदमात्रमाक्षिपति । न तत्पारमार्थिकत्वमनुपयोगात्, न च काल्पनिकभेदेन पारमार्थिकाद्वैतविघात इति परिहरति * कथमिति *। व्याघातं स्वरूपेणाभ्युपगम्य नात्र स इत्युक्तम् । इदानीं स एव दुर्निरूपो व्याघातस्यैव पराकरिष्यमाणत्वादित्याह *प्रतिवक्ष्यत इति*। भेदानङ्गीकारे भावाभावसमुच्चयात्मको व्याघातः किं चिदापादकमाश्रित्यापाद्यते किमनाश्रित्य। न अनाश्रित्य,अतिप्रसङ्गेनाशक्यत्वात्।अतः किंचिदाश्रित्यैवेति पक्षः परिशिष्यत इत्याह *किं चेति* । अस्तु तर्ह्ययमेव पक्षस्ततः किमित्यत आह * न चेति *। आपादकमापाद्यात् भिन्नमभिन्नं वा । न भिन्नम्, भेदे सिद्धे तस्यापादकत्वसिद्धिः, सिद्धे चापादकत्वे व्याघातसिद्धिः, सिद्धे च तस्मिन् भेदसिद्धिरिति चक्रकापत्तेः । नाप्यभिन्नम्, आत्माश्रयप्रसङ्गात् इत्यर्थः । उक्ततर्कज्ञानरत्नं लोभातिरेकात् श्लोकेनोपनिबध्नाति * तस्मादिति * ।

अद्वैतवादिनि नानात्वं नानात्मत्वमवलंब्य वदत्यपि व्यवहरत्यपि असिद्धभेदादापादकात् व्याघातः कुत आपतेदित्यन्वयः । आपाद्यादसिद्धो भेदो यस्य स तथोक्तः ।

---

प्रमेयेषु चतुर्विधभेदासम्भवः ।

एवं तावद्भेदप्रमाणसिद्धस्वरूपपर्यालोचनया न तद्विरोधो ऽद्वैतश्रुतेरित्युक्तम् । इदानीं प्रमेयभेदस्वरूपपर्यालोचनया ऽपि श्रुतेर्भेदग्राहिप्रत्यक्षादिविरोधं प्रतिषेद्धुमुपक्रमते

११८ भेदस्वरूपे विकल्पचतुष्टयम ।

इदमपि विचारमर्हति—यदद्वैतश्रुतीनां बाधकमुपन्यस्यते प्रत्यक्षादि घटपटप्रभृतिभेदग्राहि तदपि कीदृश्यर्थे पर्यवस्यति । तथा हि प्रत्यक्षेण यो ऽसौ भेदो गृह्यते स (१)किं स्वरूपभेदः,(२) किमन्योन्याभावः,(३) किं वैधर्म्यम्,(४)अन्यदेव वा ।

*इदमिति*। यद्वा—पूर्वं प्रत्यक्षादेर्भेदविषयत्वमभ्युपगम्य न तद्विरोध इत्यवादि। संप्रति तद्विषयत्वमेव नास्ति, प्रत्युताभेदविषयत्वमेव प्रत्यक्षादेः, नातस्तद्बाध इत्युपपादयति * इदमिति सन्दिग्धं सप्रयोजनं च विचारमर्हति। इह तथाभूतं न किंचिद् यद्विचार्यत इत्यत आह *यदिति*। बाधकमिति बाधकत्वाभिमतमिति यावत् । घटपटौ प्रभृती आदी येषां ते घटपटप्रभृतयः, तेषां भेदो घटपटप्रभृतिभेदः, तत् गृहीतुं शीलं

षस्य तत्तथोक्तम्। घटप्रमाणं कीदृशि पर्यवस्यतीति प्रश्न इव भेदप्रमाणं कीदृशीति प्रश्नो नोपपद्यते प्रमाणस्य स्वप्रमेये पर्यवसानादित्याशङ्क्य–सत्यम् भेदप्रमाणं भेदे पर्यवस्यति किं वा ऽन्यत्रेति न प्रश्नार्थः किं तु यस्मिन् भेदे प्रमाणं पर्यवस्यति स कीदृगिति पृच्छ्यत इत्याह *तथा हीति*। विरुद्धानेकप्रकारे सम्भवति सन्देहात्प्रश्नः, इह तु पुनरैक्यं भेदस्येति न प्रश्नसम्भव इत्याशङ्क्य वादिविप्रतिपत्तेः सन्देहात्प्रश्नोपपत्तिरिति विरुद्धप्रकारानीरयति *प्रत्यक्षेणेति*। स्वरूपमेव भेद इति प्राभाकरमतोपन्यासः। अन्योन्याभाव इति नैयायिकैकदेशिनां भट्टैकदेशिनां मतम्। वैधर्म्यमिति वैशेषिकस्य। अन्यदेवेति पृथक्त्वगुण इत्यर्थः।

स्वरूपभेदपक्षे प्रत्यक्षमद्वैतश्रुत्या सहैकार्थत्वान्न तद्बाधकमित्यभिप्रेत्यानुवदति

१२२. स्वरूपभेद एव भेद इति प्रथमविकल्पखण्डनम्।

(१)यदि तावत्स्वरूपं भेदः, स न। घटपटयोर्हि स्वरूपं यत्परस्परस्माद्भेदः, तत्परस्परमनन्तर्भाव्य न सम्भवति। भेदो हि भवन् कस्मादपि भवति। अन्यथा 'स्वरूपं भेद' इति पारिभाषिकं नाम स्यात्। यदा च घटाद्भेदः पटस्येत्येतावानेवार्थः पटादेः स्वरूपं प्रत्यक्षेण गृह्यते तदा घटोऽपि पटात्मन्येव प्रविष्ट इति घटपटयोरैकात्म्यमेव भेदग्राहिणा प्रत्यक्षेणावगाहितमिति विपरीतमापद्यते।

*यदीति*। भेदस्य भेदिन्यन्तर्भावः, किं वा भेदिनो भेदे। न तावद्भेदिनो भेदे, भेद्यभावेन भेदस्याप्यभावप्रसङ्गात्। यदि भेदस्य भेदिन्यन्तर्भावस्तदा धर्मिप्रतियोगिविशिष्टस्य किं वा तदुपलक्षितस्येति विकल्प्य प्रथमपाकरोति *स नेति*। धर्मिविशिष्टस्य प्रतियोगिस्वरूपत्वे प्रतियोगिविशिष्टस्य वा धर्मिस्वरूपत्वे तयोरेकत्वप्रसङ्गादिति हेतुमाह*यदिति*। यच्च तत्परस्परं चेति यत्परस्परं यत्परस्परस्माद्भेदस्तत्परस्परमनन्तर्भाव्य तद्विशिष्टो भेद एव न सम्भवति, विशेषणादिव्यतिरिक्तविशिष्टपदार्थानङ्गीकारादित्यर्थः। अस्तु तर्हि प्रतियोग्युपलक्षितस्य भेदस्य धर्मिस्वरूपत्वमित्यत आह*भेदो हीति*। यदि भेदोपलक्षणं प्रतियोगितत्प्रतीतिमन्तरेणापि भेदप्रतीतिः स्यात्काकविगम इव देवदत्तगृहप्रतीतिः, न चैतदस्तीत्यर्थः। एतेन धर्म्युपलक्षितत्वमपि निराकृतम्। एतदेव विपक्षबाधेनोपपादयति *अन्यथेति*। धर्मिप्रतियोगिविशिष्टस्यैव भेदत्वात् ततोऽन्यस्य वस्तुस्वभावत्वाभ्युपगमे स्वरूपस्यैव नामान्तरकरणमापद्यत इत्यर्थः। पारिभाषिकं सङ्केतसिद्धमिति तेन धर्मिप्रतियोगिविशिष्टभेदस्य भावस्वभावत्वमभ्युपगन्तव्यम्, तथा च भेदग्राहितया ऽभिमतं प्रत्यक्षमभेदे पर्यवस्येदिति विपरीतार्थः संपत्स्यत इत्याह*यदेति*। विशिष्टभेदस्य वस्तुस्वरूपाभेदे तदन्तर्गतस्य विशेषणभूतस्य घटस्य पटधर्मिस्वरूपत्वमापद्यते विशेषणाद्यनतिरेकाद्विशिष्टस्येत्यर्थः।

विशिष्टभेदस्य स्वभावत्वे प्रत्यक्षमभेदोल्लेखीति युक्त्याऽऽपाद्यते यथा तथा भेदोल्लेखिताया अपि युक्त्याऽऽपादयितुं शक्यत्वान्न वैपरीत्यमिति चोदयति।

१३० भेदाभावेऽसामञ्जस्यशङ्का।

"ननु यथेयं प्रतीतिरभेदोल्लेखितया व्याख्यायते तथा भेदोल्लेखित्वेपि दीयतामस्यां दृष्टिः। भेदे हि घट इत्येव पट इत्येव वा बुद्धिः स्यात्, न तु घटाद्भिन्नः पट" इति चेत्—

*नन्विति*। 'व्याख्यायते' व्युत्पाद्यते। अभेदोल्लेखस्य यौक्तिकत्वे विरुद्धभेदोल्लेखनं कथं यौक्तिकं स्यादित्यत आह *अभेद इति*। 'घट' इति 'पटात्' इति च विलक्षणाकारबुद्धिविषयतया सिद्धं भेदोल्लेखनमित्यर्थः। परमार्थतश्चन्द्रैक्ये ऽपि जलचन्द्राद्भिन्नः खस्थचन्द्र इति पटाभेदस्य पारमार्थिकत्वे ऽविद्यासिद्धभेदद्विलक्षणप्रतीतिविषयत्वमित्यभिप्रेत्य समादधाति

१३१ तत्परिहारः भेदस्याविद्याविद्यमानभावत्वम्।

स्यादप्येष पर्यनुयोगः यद्यविद्याविद्यमानभावभेदं पारमार्थिकमभेदमिच्छन्तो ऽपि प्रत्यादिशामः॥

तस्मात्

अभेदं नोल्लिखन्ती धीर्न भेदोल्लेखनक्षमा।

तथा चाद्ये प्रमा सा स्यान्नान्त्ये स्वापेक्ष्यवैशसात्।'

*स्यादिति*। अविद्यया विद्यमानो यो भावः सत्त्वं यस्य स तथोक्तस्तम्। ननु दूरस्थतरुगिर्योरभेदावभासे सत्यपि भेदः पारमार्थिको दृष्टः। तथा चात्र भेदः पा-

रमार्थिको नाभेद इति कुतो विपरीतमेव किं नेत्याशङ्क्योपसंहारव्याजेन विनिगमनाहेतुमाह । *तस्मादिति* । अभेदमुल्लिखन्ती न सती धीर्भेदोल्लेखनक्षमा न भवति । धर्मिप्रतियोगिनोरेकैकं स्वरूपं प्रतीत्यैव भेदस्य प्रत्येतव्यत्वात् । अतः स्वभेदप्रतीतिपुरस्सराभेदप्रतीतिस्ततः किमित्यत आह *तथाचेति* । तथा सति सा धीः आद्ये भेदे प्रमा स्यादभेदे प्रमा न स्यात् । हेतुमाह *स्वापेक्षवैशसात्* । स्वापेक्ष्यस्योपजीव्याभेदस्य वैशसाद्बाधप्रसङ्गात् । न च तद्युक्तम्, उपजीव्याभेदप्रतीतेरुपजीवकभेदप्रतीत्यपेक्षया प्राबल्यादित्यर्थः ।

प्रतियोग्युपलक्षिताभेदो धर्मिणः स्वरूपमिति मतं पुरस्तात् निरस्तमपि पुनरुद्भावयति दोषान्तराभिधित्सया

१३२ भेद इत्येतावन्मात्रञ्च पटस्य स्वरूपम ।

अथ 'भेद' इत्येतावन्मात्रं पटस्य स्वरूपं 'घटात्' इति च तद्घटेन प्रतियोगिनाऽन्येनैव निरूप्यते,—तदपि नोपपद्यते । निष्प्रतियोगिकस्य भेदस्य प्रमाणागोचरत्वात् । नित्यं प्रतियोगिघटिते एव तस्मिन् प्रमाणप्रसरात् । का चेयं वाचोयुक्तिः यदन्यासाकाङ्क्षं पटस्य स्वरूपमन्येन निरूप्यमाणं ततो भेदो भवतीति । न हि यत् स्वरूपेणैव नीलं तत्पीतेन निरूप्यमाणं सत् नीलं भवति ।

* अथेति * । भेदस्य प्रतियोगिविशिष्टत्वाभावे

तत्प्रतीतिपुरस्सरप्रतीतिनियमो न स्यादित्याशङ्क्याह *घटादिति*। उपलक्षणस्यापि प्रतीयमानतयैव व्यावर्तकत्वनियमात्—यथा राजहंसस्य प्रतीयमानस्य राजमन्दिरव्यावर्तकतया—तथा प्रतियोगिन उपलक्षणत्वेऽपि प्रतीयमान एव प्रतियोगिव्यावर्तक इत्यर्थः। उपलक्षणकाकाप्रतीतावपि तदुपलक्ष्यं देवदत्तगेहं यथा प्रतीयते तथा भेदस्यापि कदाचित्प्रतियोगिप्रतीतिमन्तरेणापि प्रतीतिः स्यात्, न च तदस्ति। नातः प्रतियोग्युपलक्षणमिति परिहरति * तदिति *। प्रतियोगिप्रतीत्यभावे इति व्यतिरेकमभ्यधात्, संप्रत्यन्वयमाह *नित्यमिति*। तदयं प्रयोगः। भेदः प्रतियोगिविशिष्टो भवितुमर्हति नित्यं तदनुरक्ततया प्रतीयमानत्वात्, यदेवं तदेवं यथौष्ण्यानुरक्तप्रतीयमानो वह्निस्तद्विशिष्ट इति। न चात्र कश्चिद्व्यभिचारशङ्का उक्तसाध्याभावे प्रतीतिनियतत्वाभावादिति द्रष्टव्यम्। यद्वा भेदः प्रतियोगिप्रतीतिमन्तरेणापि प्रतीयते तदुपलक्षितत्वात् गेहादिवदिति सामान्यतोदृष्टानुमानं प्रत्यक्षविरुद्धतया दूषयति *नित्यमिति*। यद् येन निरूप्यते तत्ततो भेदो न भवति यथा देवदत्तगेहमेव काकेन निरूप्यमाणं ततो भेदो न भवति तद्वत्। घटस्वरूपस्य पटेन निरूप्यमाणस्य ततो भेदत्वमनुपपन्नमित्याह * का चेति * । 'अन्यासाकाङ्क्षम्' अन्यनिरपेक्षमित्यर्थः । भेदस्य स्वभावत्वे प्रतियोग्यपेक्षया तथात्वप्रतीतिरनुपपन्ना स्वस्वभावतो-नीलस्यानीलत्वप्रतीतौ प्रतियोगिपीताद्यपे-

क्षाभाववदित्याह *न हीति*।

अभावस्य प्रतियोगिविशिष्टत्वाभावे ऽपि प्रतियोगिनिरूप्यवच्छेदस्यापि किन्न स्यादित्याशङ्क्योररीकृत्यापि दूषणान्तरमाह

१३३ पटम्प्रतिप्रतियोगित्वन्न घटस्य स्वरूपम्।

यदपि चोक्तं प्रतियोगिना घटेन निरूप्यमाणं पटस्य स्वरूपं भेद इति,—तत्रापि पटं प्रति प्रतियोगित्वं घटस्य किं स्वरूपम्, किं वा धर्मः कश्चित्। यदि प्रथमस्तदा पटं प्रति प्रतियोगित्वमित्येतावानेवार्थो घटस्य स्वरूपं भवदात्मन्येव पटमपि प्रक्षिपतीति कथं नाद्वैतमेव पर्यवस्यति। तत्रापि यदि प्रतियोगित्वमात्रं घटस्यात्मा, 'पटं प्रति' इति च पटापेक्षित्वमन्यदेव,—तदप्यनुपपन्नम्। अकिञ्चिदपेक्षस्य प्रतियोगित्वस्य प्रमाणाविषयत्वात्। 'पटं प्रति' इत्यत्रापि च स्वरूपतदन्यविकल्पे दोष एव।

* यदपीति *। प्रतियोगित्वमपि प्रतियोगिनः स्वरूपं किं वा धर्म इति भेदवद्विकल्पयति * तत्रेति *। स्वरूपपक्षमनुवदति * यदीति *। तदा पटाख्यधर्म्यंशाविशिष्टप्रतियोगित्वं घटस्वरूपं किं वा तदुपलक्षितं प्रतियोगित्वमात्रमिति विकल्प्य प्रथमेऽद्वैतपर्यवसायितया दूषयति * तदेति *। तदा पटविशेषितप्रतियोगित्वस्य घटस्वरूपत्वे पटस्यापि घटात्मनि अनुप्रविष्टत्वादद्वैतं पर्यवस्यद्वि-

शेषणादिव्यतिरिक्तानङ्गीकाराद्विशिष्टस्य प्राभाकरवैशेषिकैरित्यर्थः । पटोपलक्षितप्रतियोगित्वमात्रस्य घटस्वरूपत्वमिति द्वितीयो ऽस्तु गैदितावद्याप्राप्तेरिति शङ्कते *तत्रेति*। तत्रापि पटं प्रति प्रतियोगित्वमिति रूपे ऽपि प्रतियोगित्वमात्रं घटस्वरूपम्, पटं प्रतीति तु पटापेक्षत्वं पटापेक्षया प्रतीयमानत्वमुपलक्षणतया वहिर्भूतमित्यर्थः । तत्रापीत्यपिशब्दो यथा पटोपलक्षितभेदमात्रं घटस्वरूपं तद्वदिति समुच्चयार्थः । प्रतियोगित्वस्य धर्म्यंशसापेक्षतयैव प्रतीतेर्न प्रतियोगित्वमात्रं स्वरूपं लभते तेनायुक्तं तदुपलक्षितं प्रतियोगित्वमात्रं घटस्वरूपमितीति परिहरति *तदपीति*। 'अकिञ्चिदपेक्षस्येति' स्वतन्त्राननुभवादित्यर्थः। भवतु वा प्रतियोगित्वं धर्म्यंशोपलक्षितं तथा ऽपि पटं प्रति प्रतियोगित्वमित्यत्र पटं प्रतीत्ययमंशो घटस्य स्वरूपमुत धर्मः । स्वरूपं चेदद्वैतपर्यवसानम् । धर्मश्चेत् धर्मधर्मिणोः स्वभावसम्बन्धस्य वक्ष्यमाणत्वादद्वैतपर्यवसानमिति प्रागुक्तविकल्पदोषावतिदिशति *पटं प्रतीति* ।

पटं प्रति प्रतियोगित्वं घटस्य धर्म इति द्वितीयं दूषयति

१३४ पटम्प्रतिप्रतियोगित्वन्न घटस्य धर्मः ।

नापि द्वितीयः । योसौ धर्मः पटं प्रति प्रतियोगित्वं तस्यात्मनि पटोपि प्रविशतीति तेन सह पटस्याद्वैतं स्यात् ।

---

१ 'गदितस्य' प्रागुक्तस्य 'अद्वयस्य' दोषस्य 'अप्राप्तेः अस्मिन् पक्षे ऽप्राप्तत्वात् ।

यदा च पटो घटस्य धर्मतामापन्नस्तदा घटोऽपि पटधर्मतामनेनैव न्यायेन गच्छेत् । न हि पटप्रतियोगित्वस्य घटेन प्रतियोगिना निरूप्यमाणत्वे घटस्यान्या गतिरस्तीति परस्परमाश्रितत्वमाश्रयत्वञ्च स्यात् । न च कस्यचित्प्रमाणस्य विषयो घटारूढः पटस्तत्पटारूढश्च स एव घट इति । किञ्च धर्मस्य तस्य धर्मिणा सममसम्बन्धेऽतिप्रसङ्गः, सम्बन्धानन्त्येऽनवस्था, प्रथमतोऽन्ततो गत्वा वा स्वभावसम्बन्धाभ्युपगमे सम्बन्ध्यन्तरस्यापि तत्स्वभावप्रवेशादभेदे एव पर्यवसानं स्यादिति ।

*नेति* । निष्प्रतियोगिकप्रतियोगित्वस्य प्रमाणाविषयत्वात्पटं प्रतीत्यस्य घटधर्म्मप्रतियोगित्वविशेषणत्वेन पटो ऽपि तत्रानुप्रविष्ट इति प्रतियोगित्वेन सह पटस्यैक्यं स्यादित्यर्थः । प्रतियोगित्वधर्म्मेण पटस्यैक्ये ऽपि धर्म्मिणा घटेनाभेदो नास्ति, तत्कथमद्वैतपर्यवसानमित्यत आह *यदेति* । *अनेन न्यायेनेति* । निष्प्रतियोगिकप्रतियोगित्वस्य प्रमाणाविषयत्वादित्यादिनोक्तेनेत्यर्थः । शौक्ल्यस्य पटधर्म्मत्वे ऽपि पटस्य शौक्ल्यधर्म्मत्वाभाववत्पटस्य घटधर्म्मत्वे ऽपि न घटः पटधर्म्मः स्यादित्यत आह * न हीति* । वाच्यत्वमेयत्वयोरिव घटपटयोरपि परस्परधर्मधर्मिभावः किं न स्यादित्यत आह *इतीति* । अन्योन्यधर्मत्वप्रयुक्त्याश्रयत्वमन्योन्यधर्म्मित्वयुक्त्याश्रयत्वं वाऽस्त्विति चेन्नैवम्, प्रमाणाभावात्प्रमाणविरोधाच्चे-

त्याह * न चेति * पूर्वं धर्मधर्मिभावमभ्युपगम्योक्तमिमिदानीं स एव न सम्भवतीत्याह * किं चेति * । धर्मस्य धर्मिणा सह सम्बन्धोऽस्ति न वा । न चेत्, सर्वं सर्वस्य धर्मः स्यात् असम्बन्धाविशेषादित्यर्थः। अस्ति चेत्, तस्यापि सम्बन्धस्य सम्बन्धान्तरमिति सम्बन्धानन्त्यम्, उत कश्चित्सम्बन्धः सम्बन्धान्तरनिरपेक्षः। आद्ये ऽनवस्थेत्याह *सम्बन्धेति* । द्वितीयं प्रत्याह *प्रथमत इति*। अनवस्थापरिहाराय कस्यचित्सम्बन्धस्य सम्बन्धिस्वभावत्वे सम्बन्ध्यन्तरस्यासम्बन्धविशेषणत्वेन सम्बन्ध्यन्तरस्वभावानुप्रवेशादद्वैतं स्यादित्यर्थः।

एवं तर्हि घटशौक्ल्ययोर्धर्मधर्मिभावे का गतिरित्याशङ्क्य तस्यापि वास्तवत्वायोगात्काल्पनिक एव स इत्युक्तन्यायमतिदिशति

एवमन्यस्मिन्नपि धर्मविकल्प इति। तस्मात्स्वरूपभेदे प्रमाणीभवत् प्रत्यक्षमद्वैत एव प्रमाणं भवति।

* एवमिति * । स्वरूपभेदवादे प्रत्यक्षस्याद्वैतश्रुत्यैकार्थत्वमुपपादितमुपसंहरति । * तस्मादिति * । स्वहेतुसमासादितभावस्वभावभेदस्यान्यापेक्षोत्पत्तिर्यद्यपि न सम्भवति तथापि प्रतीतौ परापेक्षेति शङ्कते

१२५. घटस्य स्वरूपनिरूपणे न पटप्रतीत्यपेक्षा।

"ननु घटादिकमेव यदाऽन्यानपेक्षं वीक्ष्यते तदा घटादिकमित्येव प्रतीयते। यदा पुनः पटादिना निरूप्यते

तदा ततो भेद इति प्रतीयते" । मैवम् । घटादिकमित्येवम्भूतप्रतीतेस्तावद्भेदप्रतीतिर्विलक्षणा । सा च न घटादिमात्रेण विषयेणान्यथाकारा भवितुमर्हति । न च पटादिकमधिकं तदा प्रकाशत इति विशेषः स्यात्, घटपटविषयप्रतीतितोऽपि वैलक्षण्यात् । न हि 'घटः पटश्चेति'-'घटात्पटो भिन्न' इति प्रतीत्योरेकार्थत्वं कश्चित्प्रत्येति । तत् कस्य हेतोः । पञ्चम्या च वैकल्पिकं निर्देशमसहमानयैव प्रतीतिकलहनिरासात् । न हि 'घटः पटश्चेति' प्रत्येतव्ये कश्चिद्'घटात्पट' इति प्रत्येति । तस्माद् घटस्य न स्वरूपनिरूपणे पटप्रतीत्यपेक्षा ।

* नन्विति * । घट इति प्रतीत्या भेदप्रतीतिरेकाकारा किं वा विलक्षणाकारा, न तावदेकाकारा । तथा सति 'घट'–'भेदप्रतीति–'शब्दयोः पर्यायत्वप्रसङ्गादिति प्रथमं दूषयति *मैवमिति* । प्रतीतिवैलक्षण्येऽपि अर्थवैलक्षण्याभावात् विलक्षणाकारेति द्वितीयः कल्पोऽस्त्वित्यत आह *सेति* । घटभेदप्रतीती भिन्नविषये विलक्षणाकारप्रतीतित्वात् घटपटविषयप्रतीतिवत्, विपक्षे प्रतीतिवैलक्षण्यमेव न स्यादित्यर्थः । घटव्यतिरेकेण पटादेरपि तदा प्रतीतेर्वैलक्षण्यप्रतीत्योरन्यथासिद्धमित्याशङ्क्याह * न चेति * । घटपटविषयप्रतीतितोऽपि भेदप्रतीतेर्वैलक्षण्यादिति हेतुमाह * घटेति * । भेदप्रतीतेर्घटादिप्रतीतौ वैलक्षण्यमनुभवेनोपपादयति * न ही-

ति *। विप्रतिपन्नो नानुभवेनैव बोधयितुं शक्यः, 'ममैवमनुभवाद्विपरीतानुभवाद्वेति' प्रत्युत्तरयितुं तस्यापि शक्यत्वादिति पृच्छति* तदिति*। घटादिप्रतीत्या सह भेदप्रतीतेरेकार्थत्वं न कश्चित् प्रत्येतीत्येतत् कस्य हेतोः कस्मात्प्रमाणादित्यर्थः। अभिवदनव्यवहारस्याभिज्ञाव्यवहारपुरस्सरत्वनियमादभिज्ञाव्यवहारवैलक्षण्यमन्तरेणाभिवदनव्यवहारवैलक्षण्यानुपपत्तेस्तद्वैलक्षण्यमेव प्रतीतिवैलक्षण्यं साधयतीत्याह* पञ्चम्येति*। पञ्चम्याः प्रतियोगिविषयतया प्रथमया च धर्मिविषयतया प्रतीतिकलहस्य घटादिप्रतीतितो भेदप्रतीतेर्वैलक्षण्यानुभवविप्रतिपत्तेर्निराससामर्थ्यं दर्शयति * वैकल्पिकामिति *। विकल्पसम्बन्धि वैकल्पिकम्, विकल्पश्चात्रऽव्यवस्थितः—प्रतियोगित्वविवक्षायां पचम्येव प्रयोक्तव्या न प्रथमा, धर्मित्वविवक्षायां प्रथमा नेतरेति। घट इति प्रतीत्या घटात्पटो भिन्न इति प्रतीतिरैकरूप्यं यदि स्यात् तदा वैकल्पिकनिर्देशो न स्यात्। घटविषयप्रतीतिद्वयस्यैकरूप्ये घट इति प्रयोगवैरूप्याभाववदित्यर्थः। व्यवहारवैलक्षण्यं च वृद्धव्यवहारे प्रयोक्तृप्रतिपत्त्रोर्नियतप्रयोगप्रत्ययदर्शनान्नोपलक्षयितुं शक्यम्, अतिप्रसङ्गादित्याह * नेति *। यथा घटस्वरूपस्य प्रतियोगिनैरपेक्ष्यं स्वप्रतीतावेतावन्मात्रस्य भेदस्यापि प्रतियोगिनिरपेक्षैव प्रतीतिरेष्टव्येत्युपसंहरति * तस्मादिति *।

अर्थगतवैलक्षण्यमन्तरेणापि वैकल्पिकनिर्देशो घटेकारणप्रतीतिविषयत्वस्य पञ्चमीवाच्यत्वे प्रयोजक-

त्वात्कार्यप्रतीतिविषयत्वस्य प्रथमानिर्देश्यत्वे प्रयोजक-
त्वादित्यत आह

१३६. अर्थगतवैलक्षण्यं विनापि वैकल्पिकनिर्देशसम्भवः ।

न च यत्प्रतीतिर्यत्प्रतीतेः कारणं स्यात् तत्र तस्याः कारणभूतायाः प्रतीतेर्योऽर्थस्तस्मात् 'अयमिति' कृत्वा कार्यभूतायाः प्रतीतेरर्थः प्रतीयते। माभून्निर्विकल्पकार्थादेवं सविकल्पकार्थस्य प्रतीतिः, मा च सादृश्यादेरेवं स्मर्यमाणादेः स्यात् । तस्मात् 'पटो घटाद्भिन्न—'इत्याद्याकारेण पटादेर्भेद एव भेदावधिभूतघटादिसङ्घटितः स्फुटं सर्वलोकसाक्षिकः प्रतीयमानो नैकप्रतीतेरन्यप्रतीत्यपेक्षामात्रेण समर्थयितुं शक्यः अतिप्रसङ्गादिति ।

* न चेति *। यस्य प्रतीतिर्यत्प्रतीतेः कारणं स्यात्तत्र तयोः प्रतीत्योर्मध्ये तस्याः कारणभूतायाः प्रतीतेर्योऽर्थस्तस्मादयमिति कार्यभूतप्रतीतेरर्थो न प्रतीयत इत्यन्वयः । अन्यथाऽतिप्रसङ्गादित्याह *माभूदिति *। निर्विकल्पकप्रतीतेः सविकल्पकप्रतीतिकारणत्वान्निर्विककल्पकप्रतीतिगोचारात्सविकल्पप्रतीतिगोचरस्य 'तस्मादयमिति' प्रसङ्गः स्यात्, स माभूदित्यर्थः । सविकल्पककारणभूतप्रतीतिगोचरत्वं 'तस्मादिति'वाच्यत्वेप्रयोजकम्, नातो निर्विकल्पकार्थस्य 'तस्मादिति' वाच्यत्वप्रसङ्ग इत्याशङ्क्याह * माचेति *। सदृशसन्दर्शनसमुद्बुद्धसंस्काराढुपपद्यते संवेदनं स्मरणरूपम्, तत्र च सादृश्यसंवेदनस्य स्मरणकारणत्वात्कारणप्रतीति-

गोचरात्सादृश्यात्'स' इति– स्मर्यमाणार्थस्य प्रतीतिः स्यात्। आदिशब्देन पूर्वानुभवस्य संस्कारद्वारा प्रत्यभिज्ञानकारणत्वात् प्रत्यभिज्ञायमानस्य पूर्वानुभवगोचरात् 'अयमिति'–प्रतीतिः स्यादित्यर्थः।

केचिदिमं गन्थमन्यथा पठन्ति–"सा च सादृश्यादेरिति" तेषामित्थं योजना। कथं तर्हि तत्प्रतीतिरित्यत आह * सा चेति *। निर्विकल्पकेन यदा गवयसादृश्यं कर्णखुरत्वादि गवि गृह्यते तदा तदपेक्षया गोसादृश्ये गवय इति सविकल्पकप्रत्ययो भवति, न च 'तस्मादिति' पंचम्या निर्दिश्यते। तथा विशेषणविशेष्यसम्बन्धानां स्वरूपग्रहणं विशिष्टप्रतीतेः कारणम्, तथा ऽपि तत्र दण्डात् दण्डी शौक्ल्यात् घट इति वा विशिष्टप्रतीतिः॥

तेषां पक्षे "एवमिति" च भिन्नग्रन्थः। तच्चोदाहरणान्तरपरम्। अयमर्थः। अनुभवात् स्मृतिर्भवति, नैतावता ऽनुभवविषयप्रतियोगिका स्मर्यमाणप्रतीतिः। आदिशब्देन प्रत्यभिज्ञानादिस्थलं गृह्यत इति। भेदो न परसापेक्षव्यवहृतिः परनिरपेक्षोत्पत्तित्वात्, परनिरपेक्षज्ञप्तित्वाद्वा, घटस्वरूपवदिति व्यवहृतावपि प्रतियोग्यपेक्षां भेदस्य पराकुर्वन्नुपसंहरति * तस्मादिति *। भेदो न घटस्वरूपम् पटसम्बन्धित्वात्, शौक्ल्यवत्, तत्सम्बन्धित्वं चासति बाधके षष्ठ्या निर्दिश्यमानत्वाच्छौक्ल्यवदित्यभिप्रेत्याह *पटादेरिति *। भेदो न पटादिस्वरूपं नियमेन प्रतियोगिघटितत्वात् प्रतियोगित्ववदित्याह * भेदेति *। भेदस्यावधिभूतः

स च घटादिश्चेति भेदावधिभूतघटादिः, तेन संघटितः। नियमेन प्रतियोगिविशिष्टत्वस्यासिद्धिं परिहरति *सर्वेति *। एकप्रतीतेरन्यप्रतीत्यपेक्षामात्रेण समर्थयितुमशक्यो ऽतिप्रसङ्गादिति सविकल्पकप्रत्ययस्य निर्विकल्पकप्रत्ययापेक्षामात्रेण तस्य 'तस्मादिति' प्रसङ्गादित्यर्थः।

एवं तावत्स्वरूपभेदमवगाहमानं प्रत्यक्षमद्वैतश्रुतिबाधकमिति मतं निरस्य सम्प्रत्यन्योन्याभावभेदमवगाहमानं श्रुतिबाधकमिति द्वितीयं दूषयति।

१३७ अन्योन्याभावभेदावगाहिप्रत्यक्षस्य श्रुत्यबाधकता।

अत एवान्योन्याभावभेदमवगाहमानं प्रत्यक्षमद्वैतश्रुतिबाधकमित्यपि निरस्तम्। अन्योन्याभावोऽपि हि यस्माद्भेद एष्टव्यस्तमात्मन्येवान्तर्भावयेदुक्तयुक्तिभिः।

*अत इति *अन्योन्याभावस्य धर्मिस्वरूपातिरिक्तस्यैव भेदत्वाभ्युपगमान्न स्वरूपभेदपक्षोक्तदोषातिदेशो युक्तो न्यायसाम्याभावादित्याशङ्क्य न्यायसाम्यं दर्शयति *अन्योन्येति*। प्रतियोग्युपलक्षितोऽन्योन्याभावो धर्म्मः किं वा विशिष्टः। न तावदुपलक्षितः, प्रतियोग्यनपेक्षस्य तस्य प्रमाणाविषयत्वात्। विशिष्टस्य धर्म्मत्वे जगत्प्रतियोगिकस्य पटधर्म्मत्वेन जगतोऽपि पटधर्म्मत्वं स्यात्। ततश्च धर्म्मधर्म्मिणोः स्वभावसम्बन्धस्याभ्युपेयतया ऽद्वैतं पर्यवस्येदित्यर्थः।

अन्योन्याभावस्य किं तादात्म्यं प्रतियोगि, उत धर्म्यादिस्वरूपम्, आहोस्विद् घटत्वादिसामान्यमिति

**विकल्पस्य प्रथमकल्पे भिन्नयोरभिन्नयोर्वा तादात्म्या-निरूपणादन्योन्याभावो पि दुर्निरूप इत्याह**

१३८ अन्योन्याभावस्य दुर्निरूपता।

किञ्च घटपटयोस्तद्वदन्ययोश्च तादात्म्यमन्योन्याभावस्य प्रतियोगि मन्तव्यम्। तद्यदि सर्वथा नेष्यये तदा तद्विशिष्टस्तदुपलक्षितो वाऽन्योन्यभावोऽपि न प्रमाणेन प्रत्येतुं शक्यः। न हि शशविषाणविशिष्टस्तदुपलक्षितो वा कश्चित्प्रामाणिको भवितुमर्हति। तत्कस्य हेतोः। तस्मिंस्तद्विशिष्टरूपेऽर्थे तादृशि चोपलक्षणव्यवच्छिद्यमानात्मनि प्रमाणं निविशमानं विशेषणमपि तदीयं तदुपलक्षणमपि वा नानुल्लिखद्भवितुम्प्रभवति। तस्मिंश्चात्यन्तमसत्येवालम्बने न तत्प्रामाण्यं शक्यसमर्थनम्।

न च वाच्यम्—"पटप्रतियोगिको घटमाश्रितोऽसावभावोऽभ्युपगम्यमान एको घटप्रतियोगिकः पटमाश्रितश्चापरः नात्यन्तासत्प्रतियोगितादोषमावक्ष्यतीति"। तथा सति संसर्गाभावादन्योन्याभावस्य को विशेषः स्यात्। नहि यथा घटाभावः पटसंसर्गीति घटसंसर्गाभावं पटे समर्थयसे तथा घटाभावः पटात्मक इति तत्तादात्म्याभावम्पटस्य स्वीकरिष्यसि। तस्मात्तादात्म्यं संसर्गञ्च प्रतियोगिकोटावन्तर्भाव्यान्योन्याभावसंसर्गाभावयोर्वैलक्षण्यमभ्युपेयम्। तथा सति चात्यन्तासत्प्रतियोगिता दुर्वारा।

* किं चेति * । ययोरन्योन्याभाव इष्यते तयोस्ता-दात्म्यमस्ति, न वा। अस्ति चेत्, अनिषेध्यत्वमित्यभिप्रे-त्य नास्तित्वपक्षमनुवदति *तदिति*। तादात्म्यमन्यो-न्याभावस्य विशेषणमुतोपलक्षणम् । उभयथाऽपि त-स्याप्रामाणिकत्वेऽन्योन्याभावस्यापि अप्रामाणिकत्व-मिति दूषयति * तदेति*। विशेषणादेर्विशेष्यादितोऽन्य-त्वात्तस्याप्रामाणिकत्वे विशेष्यादेरप्रामाणिकत्वं कथ-मतिप्रसाङ्गादित्याशङ्क्याह * न हीति *। यद्वा शशवि-षाणं गोविषाणं न भवति, गोविषाणं वा न शशविषा-णमित्यत्र शशविषाणस्याप्रामाणिकत्वेऽपि तदन्यो-न्याभावः प्रतीयत इत्याशङ्क्याह * न हीति *। अन्यो-न्याभावस्याप्रामाणिकस्य तस्याप्यनङ्गीकारात्साध्य-समो दृष्टान्त इत्यर्थः। उक्तमेवार्थं विशदयितुं परमुखेन पृच्छति *तदिति*। येन प्रमाणेन विशिष्टमुपलक्षितं वा गृह्यते तेन प्रमाणेन विशेषणाद्यपि न गृह्यते गृह्यते चेति विकल्प्य प्रथमं प्रत्याह * तस्मिन्निति * । ना-गृहीतविशेषणा विशेष्ये बुद्धिरिति न्यायाद्विशेषणा-नवगाहि प्रमाणं न विशिष्टमवगाहितुमीष्टे। उपल-क्षणं च न सत्तामात्रेण व्यावर्त्तकमतिप्रसङ्गात्, अपि तु व्यावर्त्यं सम्बन्धितया प्रतीयमानम्, अत उपलक्ष णमगृह्णन्नोपलक्षितमपि गृह्णातीत्यर्थः। विशिष्टादिप्रमाणं विशेषणादिकमपि गृह्णातीति द्वितीयं पराचष्टे * त-स्मिन्निति * । प्रमीयतेऽर्थोऽनेनेति हि प्रमाणमसत्यर्थे किं प्रमापयत् प्रमाणं स्यादित्यर्थः। घटपटयोस्तादात्म्यं अन्योन्याभावप्रतियोगि न भवति, किं तु पटादिस्वरूपम्,

१ अस्यां चौखम्बा-संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तबको मुद्रयित्वा प्रकाश्यते।

२ एकस्मिन् स्तबके एक एव ग्रन्थो मुद्र्यते।

३ प्राचीना दुर्लभाश्चाऽमुद्रिता मीमांसावेदान्तादिदर्शन, व्याकरण, धर्मशास्त्र, साहित्य, पुराणादिग्रन्था एवात्र सुपरिष्कृत्य मुद्र्यन्ते।

४ काशिकराजकीयप्रधानसंस्कृतपाठालयाऽध्यापकाः पण्डिता अन्येच शास्त्रदृष्टयो विद्वांसः एतत्परिशोधनादिकार्यकारिणो भवन्ति।

५ भारतवर्षीयै, ब्रह्मदेशीयैः, सिंहलद्वीपवासिभिश्च एतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम् मुद्राः ७ आणकाः ८

६ अन्यैर्देयं प्रतिस्तबकं " " १ " ०

७ प्रापणव्ययः पृथग् नास्ति।

८ साम्प्रतं मुद्र्यमाणा ग्रन्थाः- मुद्रिताः स्तबकाः

(१) संस्काररत्नमाला। गोपीनाथभट्टकृता ( संस्कारः ) २

(२) शब्दकौस्तुभः। भट्टोजिदीक्षितकृतः ( व्याकरणम् ) १०

(३) श्लोकवार्तिकम्। भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृत-न्यायरत्नाकराख्यया व्याख्यया सहितम् सम्पूर्णम्। ( मीमांसा ) ११

(४) भाष्योपबृंहितं तत्त्वत्रयम् विशिष्टाद्वैतदर्शनप्रकरणम् श्रीमल्लोकाचार्य्यप्रणीतम्। श्रीनारायणतीर्थे विरचित भाट्टभाषा प्रकाश सहितम्। स० ( वेदान्तः ) २

(५) करणप्रकाशः। श्रीब्रह्मदेवविरचितः सम्पूर्णः ( ज्योतिषः ) १

(६) भाट्टचिन्तामणिः महामहोपाध्याय-श्रीगागाभट्ट विरचितः। तर्कपादः ( मीमांसा ) २

(७) न्यायरत्नमाला-श्रीपार्थसारथिमिश्र वि० स० ( मीमांसा ) २

(८) ब्रह्मसूत्र भाष्यम्-बादरायण प्रणीत वेदान्त सूत्रस्य यतीन्द्र श्रीमद्विज्ञानभिक्षु कृत व्याख्यानम्। सम्पूर्णः। ( वेदान्तः ) ६

(९) स्याद्वादमञ्जरी-मल्लिषेणनिर्मिता सम्पूर्णा। ( जैनदर्शनम् ) २

(१०) सिद्धित्रयम्-विशिष्टाद्वैत-ब्रह्मनिरूपणापरम्-श्रीभाष्यकृतां परमगुरुभिः श्री ६ यामुनमुनिभिर्विरचितम्। सम्पूर्णम् ( वेदान्तः ) १

(११) न्यायमकरन्दः। श्रीमदानन्दबोधभट्टारकाचार्यसंगृहीतः आचार्यचित्सुखमुनिविरचितव्याख्योपेतः ( वेदान्तः ) ३

(१२) विभक्त्यर्थनिर्णयः न्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूपः म० म० ( न्यायः ) ५

(१३) विधिरसायनम् श्रीअप्पयदीक्षितकृतम् स० (मीमांसा) २

(१४) न्यायसुधा ( तन्त्रवार्तिकटीका ) भट्टसोमेश्वरविरचिता । ( मीमांसा ) १४

(१५) शिवस्तोत्रावली । उत्पलदेवविरचिता । श्रीक्षेमराजविरचितवृत्तिसमेता । ( वेदान्तः ) २

(१६) मीमांसाबालप्रकाशः ( जैमिनीयद्वादशाध्यायार्थसंग्रहः ) श्रीभट्टनाराणात्मजभट्टशङ्करविरचितः । ( मीमांसा ) २

(१७) प्रकरणपञ्चिका ( प्रभाकरमतानुसारि मीमांसादर्शनम ) महामहोपाध्यायश्रीशालिकनाथमिश्रविरचितम । श्रीशङ्करभट्टकृता मीमांसासारसंग्रहश्च । सम्पूर्णः ( मीमांसा ) ३

(१८) अद्वैतसिद्धिसिद्धान्तसारः । पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृतश्च । ( वेदान्त ) ३

(१९) कात्यायनश्रौतसूत्रम महामहोपाध्यायश्रीकर्काचार्यविरचितभाष्यसहितम् । १२

(२०) ब्रह्मसूत्रभाष्यम् श्रीभास्कराचार्यविरचितम ( वेदान्तः ) १

(२१) श्रीहर्षप्रणीतम् खण्डनखण्डखाद्यम् आनन्द पूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया ( विद्यासागरी ) ति प्रसिद्धया समेतम् । (वेदान्तः) २

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता । १

(२३) श्रीलक्ष्मीसहस्रम्–बालबोधिनीव्याख्यया ऽवतरणिकया च सहितम् । ८

(२४) ब्रह्मसूत्रवृत्तिः मरीचिका श्रीव्रजनाथभट्टकृता । ( वेदान्त)२

(२५) क्रोडपत्रसंग्रहः अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्याः प्रत्यक्षानुमानगादाधर्याः प्रत्यक्षानुमानमाथुर्या व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकायाः कुसुमाञ्जलेश्च क्रोडपत्राणि । ( न्यायः ) १

(२६) ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम्।श्रीसुन्दरभट्टरचितसिद्धान्तसेतुकाभिधटीकासहितश्रीदेवाचार्यप्रणीतसिद्धान्तजान्हव्याख्यव्याख्यायु०२

(२७) षड्दर्शनसमुच्चयः। बौद्ध नैयायिक कापिल्य जैन वैशेषिक जैमिनीयदर्शन संक्षेपः । मणिभद्रकृतटीकया सहितः । हरिभद्रसूरिकृतः । १

(२८) शुद्धाद्वैतमार्तण्डः प्रकाशव्याख्यासहितः । प्रमेयरत्नार्णवश्च । १

(२९) अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृतदीधित्याः जागदीशी टीका । २ २

(३०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः । २ २

(३१) स्मृतिसारोद्धारः । विद्वद्वरविश्वम्भरत्रिपाठिसंकलितः । २ २

पत्रादिप्रेषणस्थानम् । } हरिदासगुप्तः, बनारस सिटी

June. 1908.

THE

# CHOWKHAMBÂ SANSKṚIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

## NO. 126.

श्रीहर्षप्रणीतम्

खण्डनखण्डखाद्यम् ।

आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया

व्याख्यया 'विद्यासागरी'-ति प्रसिद्धया समेतम्

चित्सुख-शङ्करमिश्र-रघुनाथकृतटीकावल-

म्बिन्या टिप्पण्या सनाथम्

द्राविड——श्रीलक्ष्मण शास्त्रिणा परिशोधितः ।

ŚRÎ HARSHA'S

# KHANḌANAKHANḌAKHÂDYA,

WTH THE COMMENTARY

'khandanaphakkikâvibhajana'(vidyâsâgarî)of Ânandpûrna

WITH EXTRACTS FROM THE COMMENTARIES OF

Chitsukha, Śankara Miśra and Raghunâtha,

EDITED BY

PANDIT LAKSHMANA ŚÂSTRÎ DRÂVIDA,

*The Gaurishankar Professor of Vedânta,*

*Central Hindu College, Benares.*

FASCICULUS III.

*PUBLISHED AND SOLD BY THE SECRETARY,*

CHOWKHAMBÂ SANSKṚIT BOOK-DEPÔT:

BENARES:

AGENTS:—OTTO HARRASSOWITZ, LEIPZIG:

PANḌITA JYESHṬHARÂMA MUKUNDAJÎ BOMBAY.

*Printed by Harî Dâs, Gupta, Proprietor*

AT THE VIDYÂ-VILÂSA PRESS,

BENARES.

*Price Rupee One.*

॥ श्रीः ॥

-*-

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितभव्याभशतपत्त्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दामोदमोहितम् ॥ २ ॥

स्तबकः—१२६

अतो नोक्त दोष इति द्वितीयं कल्पं दूषयति । * न चेति * । 'आवक्ष्यति' आवहति । संसर्गाभावाद्न्योन्याभावस्य भेदाभावप्रसङ्गादित्याह * तथेति * । अभावस्य स्वारसिकविशेषानधिकरणत्वात्प्रतियोगिधर्मिद्वारा विशेषो वाच्य इत्यर्थः । अन्योन्याभावस्य संसर्गाभावस्य च यद्यपि घट एवैकः प्रतियोगी तथाऽपि पटधर्मः संसर्गाभावस्तदात्मको ऽन्योन्याभाव इति विशेष इत्याशंक्याह *न हीति* । भावान्तरमभाव इति नैयायिकैरनङ्गीकारादपसिद्धान्तापातादित्यर्थः । एवं पटादिस्वरूपमन्योन्याभावप्रतियोगीति द्वितीयं निरस्य तादात्म्यमेव प्रतियोगीति प्रथमं पक्षं परिशेषयति * तस्मादिति * । तादात्म्यस्य प्रमितत्वे द्वैतापत्तिरप्रमितत्वे ऽसत्प्रतियोगितादोषस्तदवस्थ इत्याह * तथेति * ।

अन्योन्याभावस्य न तादात्म्यादि प्रतियोगि किं तु पटत्वादिसामान्यमिति तृतीयकल्पमाशङ्क्य निराकरोति

१३९ अन्योन्यस्मिन्निषेध्यधर्माभावान्नान्योन्याभावः सम्भवी ।

न च वाच्यम्—"घटे पटत्वं नास्ति पटे च घटत्वं नास्तीत्येतावन्मात्रपर्यवसितैवान्योन्याभावस्य व्यवस्था मन्तव्या—" इति । यतस्तथा सति घटत्वे पटत्वे च न कश्चित्तादृशो धर्मो ऽभ्युपगम्यते यो ऽन्योन्यस्मिन्निषेद्धुं योग्य इति तयोस्तादात्म्यापत्तौ सत्यां घटे पटत्वम् पटे च घटत्वं निषेधत्प्रमाणं घटत्वपटत्वशून्यं द्वयमप्यावेदयतीति वैधर्म्यस्य

स्वरूपभेदस्य चासम्भवेन किं प्रतियोगिनं किं वाऽऽलम्बनं विधाय घटपटान्योन्याभावोऽपि प्रमाणपथमवतरेदिति।

*न चेति*। घटत्वादौ घटत्वादिरिष्यते न वा। इष्यते चेदात्माश्रयादि। न चेत्तत्राह *यत इति*। घटत्वपटत्वयोः प्रतियोग्यभावेनान्योन्याभावेनैक्यापत्तिरित्यर्थः। तयोरैक्यापत्तावपि घटपटयोर्व्यावर्त्त्ययोर्भावान्नाद्वैतापत्तिरित्याशङ्क्याह * घट इति *। घटे पटत्वं नास्तीति निषेधे निषिध्यमानपटत्वानतिरेकाद् घटत्वमपि निषिध्येत। एवं चेद् घटपटद्वयमपि घटत्वपटत्वशून्यमापादयतीत्यर्थः। घटपटद्वयस्य धर्मद्वयशून्यत्वेऽपि धर्मिणोरन्योन्याभावोऽस्त्येवेत्यत आह * इतीति *। वैधर्म्यमात्रेण भेदव्यवहारप्रत्ययोपपत्तौ तदतिरिक्तभेदाभ्युपगमो गौरवादनुपपन्नः। तद्वैधर्म्यभेदमवगाहमानं प्रत्यक्षमद्वैतश्रुतिबाधकमिति तृतीयं विकल्पमतिदेशेन दूषयति

१४० वैधर्म्यस्याप्यसम्भवः।

अत एव न वैधर्म्यमपि भेदमावेदयत्प्रत्यक्षमद्वैतश्रुतिबाधकमुपपद्यते। वैधर्म्येऽपि घटत्वपटत्वादौ वैधर्म्यमन्यदस्तीत्यभ्युपगमे वैधर्म्ये वैधर्म्यविश्रान्त्यनवस्थयोरेकमननुभवश्च कथं प्रत्युत्तरणीयः। वैधर्म्ये च वैधर्म्यास्वीकारे वैधर्म्ययोरैक्यापत्त्या कथमात्माश्रयभेदत्वेन[1] तयोः पर्य्यवसानं स्यात्।

---

१ आत्मनोराश्रययो घटपटयोः भेदत्वेन।

*अत इति*। वैधर्म्ये वैधर्म्यान्तरमस्ति न वा। अस्ति चेत्तत्राह * वैधर्म्य इति *। दूरं गत्वाऽपि किं चिद्वैधर्म्यं वैधर्म्यान्तरापेक्षमिष्यते, सर्वमेव वा तत्सापेक्षम्। आद्ये यत्रैव वैधर्म्याभावस्तस्याभेदद्वारा सर्वाभेदः। द्वितीये वैधर्म्यमाला पतेदित्यभिसन्धायाह * वैधर्म्येति *। वैधर्म्यविश्रान्त्यनवस्थयोरेकं कथं प्रत्युतरणीयमिति सम्बन्धः। बीजांकुरवदनाद्यनन्तत्वाद्वैधर्म्यपरंपरामूलाक्षयाददोष इति चेन्मैवम्, अन्धपरंपरात्वादित्याह * अननुभव इति *। गदितावद्यापवादाय वैधर्म्ये वैधर्म्यान्तरं नेति द्वितीयकल्पमाशङ्क्य निराचष्टे * वैधर्म्येति *। घटत्वं पटत्वादभिन्नं ततो वैधर्म्यहीनत्वात्तत्स्वरूपवदिति घटत्वपटत्ववैधर्म्ययोरेकत्वापत्त्या तयोर्घटत्वपटत्वयोरात्माश्रयभेदत्वेनात्मनोराश्रयौ घटपटौ तयोर्भेदत्वेन कथं पर्यवसानम्। न कथं चित्। एकधर्म्याश्रयत्वेन तयोरप्यैक्यापत्तेरित्यर्थः।

एवं तावद्भेदप्रमाणपर्यालोचनया प्रत्यक्षविरोधो नाद्वैतश्रुतेरित्युक्तं अधुना भेदधर्मिस्वरूपपर्यालोचनया ऽपि तं पराकर्तुमुपक्रमते

१४१ वैधर्म्ये कथम्भेदः।

किञ्च ये ते वैधर्म्ये भेदौ ते किं घटादितो भिन्ने धर्म्मिणि निविशेते किमभिन्ने? परस्परविरुद्धयोरनयोः पृथग्भूतस्य प्रकारस्यासम्भवात्।

* किं चेति *। घटादितो भिन्न इति घटाद् भिन्ने पटे

धर्मिणि पटाच्च प्रतियोगिनो भिन्ने घटे धर्मिणीत्यर्थः। भिन्ने भेदान्तरस्वीकारस्य वैयर्थ्यादभिन्ने भेदस्थितिरिति पक्षान्तरमाह * किमिति *। भेदाभेदोदासीने धर्मिमात्रे भेदस्थितिरिति वा, भिन्नाभिन्ने वा धर्मिणि भेदस्थितिः किं न स्यादित्यत * आह परस्परेति * । भेदाभेदयोः परस्परविरुद्धत्वेनान्यतरनिषेधे ऽन्यतरविधानस्यावश्यकत्वेन प्रकारान्तरस्यासम्भवात्—परस्परविरोधे हि न प्रकारान्तरस्थितिरितिन्यायादित्यर्थः। नन्वभेदो ऽपि किमभिन्ने विशति किं वा भिन्ने इत्यादिविकल्पदोषस्य यः समाधिः स प्रकृते ऽपि साधारण इति मैवम्। परस्परविरुद्धयोरन्यतरनिषेधस्यान्यतरविधायित्वानङ्गीकारादस्माभिरुदासीने धर्मिमात्रे तत्स्थितिरिति प्रत्युत्तरयितुं शक्यत्वादिति ।

प्रागभिन्ने धर्मिणि भेदसंसर्गस्य गीर्वाणैरपि दुर्भणत्वाद्भिन्ने भेदो निविशत इति प्रथममनुवदति

१४२ घटादिभिन्ने न तद्भेदनिवेशसम्भवः ।

आद्ये—येन भेदेन भिन्नत्वं वैधर्म्याश्रययोर्मन्तव्यं तत्रापि पर्य्यनुयोग इत्यनवस्थायां पर्य्यवसानं स्यात्। "सन्त्वनन्ता एव भेदा" इति चेन्न । क्रमेण तेषामाश्रयसम्बन्धे सावधिसत्त्वे वस्तुनि तदन्वयासङ्गतिरेव । अथ जायमानं वस्तु युगपदेव ते भेदाः परिरभन्ते, तदा किम्भेदविशेषिते किम्भेदव्यवस्थितिरिति विनिगमकविशेषाभावादन्यो

---

१ द्वितीयः कल्पः(१४७)इत्यत्र ।

न्यकलहन्तेषां कः समाधातुमीष्टे। [1]चरमचरमस्वीकार्य्येण च भेदेन प्रथमप्रथमस्वीकृतभेदोपयोगासिद्धेरग्रे धावन् पश्चाल्लुप्यमानो विस्मरणशीलश्रुतवत्स भेदप्रवाहः किमालम्बेत।

*आद्य इति*। येन भेदेन वैधर्म्याश्रयघटपटयोर्भिन्नत्वं सोऽपि भेदत्वाद् द्वितीयभेदवद्भिन्ने निविशेत। तथा च स्वेन भिन्ने स्वास्थितिरुत द्वितीयभेदवद्भिन्ने किं वा भेदान्तरेणैव भिन्ने। प्रथमद्वितीयावात्माश्रयान्योन्याश्रयाभ्यामनुपपन्नाविति स्पष्टत्वादुपेक्ष्य तृतीयविकल्पे ऽनवस्था ऽभ्यधायीत्यर्थः। भेदानामानन्त्येन भेदान्तरभिन्ने भेदस्थितिरिति स्वीकारे नानवस्था दोषाय, मूलक्षयाभावादिति शङ्कते *संत्विति*। एकस्यापि भेदस्याप्रमाणागोचरतयाऽन्धपरंपरात्वेन मूलक्षयस्य स्पष्टत्वाद्बहिरेव द्रष्टुं शक्य इति मत्वा तेषां क्रमेण भेदसम्बन्धः, आहोस्विद्युगपदिति विकल्प्य प्रथममपाकरोति *नेति*। अवधिः कालमर्यादा, तेन सह वर्तते इति सावधि, तथाभूतं सत्त्वं यस्य तस्मिन् सावधिसत्त्वे कार्यवस्तुनि तेषां भेदानामन्वयस्य सम्बन्धस्यासङ्गतिरेवासङ्गत्ययोग्यतयैव कार्यपदार्थस्योत्पत्तेः प्राग् भेदसम्बन्धहीनतया तदुत्तरकालमपि न भेदसम्बन्धः पूर्वभेदसम्बन्धापेक्षत्वादुत्तरोत्तरभेदस्य

---

१ यद्यपि युगपद्वृत्त्यभ्युपगमे 'चरमचरमस्वीकार्येण' इत्यनुपपन्नम, तथापि 'भिन्ने वर्तते' इत्याश्रयणे प्रथमविशिष्टे द्वितीयवृत्तिर्वाच्या, तत्र यौगपद्येऽपि प्रथमचरमभावसम्भव एवेति भावः।

तथा नाशादूर्द्ध्वमुत्पत्तेः प्राग् धर्मिण एवासत्त्वात् भेदसंयोगायोगादनन्तभेदानामल्पीयःकालक्रमेण सम्बन्धो न घटत इत्यर्थः। यथा कार्यं द्रव्यं जायमानमाकाशादीनि सर्वगतद्रव्याणि युगपत्परिगृह्णते तथाऽनन्तभेदा युगपदेव जायमानं सम्बध्नन्तीति द्वितीयं शङ्कते * अथेति *। अनन्तभेदस्वीकारोऽपि किमुत्तरोत्तरभेदनिर्वाहार्थम्, उत तद्व्यवहारप्रत्ययसिद्ध्यर्थम्। न तावद् द्वितीयः, एकेनापि तदुपपत्तेः। नापि प्रथमः, एककालीनतया परस्परनिर्वाह्यनिर्वाहकभावायोगादिति मन्वानः परिहरति *तदेति*। सावधिसत्त्वे निविशमानानां भेदानामनेकत्वाद्यावद्वस्तु तेमाषामवस्थानादेकेनाप्रविष्टभागे परस्य निवेशाभावादनेन च भेदेनावच्छिन्नेऽस्य भेदस्य निवेश इत्यत्र नियामकाभावान्निवेशं प्रति तेषां परस्परं कलहादन्योन्यविरोधान्नेकस्यापि स्थितिरित्यर्थः। अनंतभेदानां युगपन्निवेशानुपपत्त्या क्रमेण तेषां सम्बन्धो ऽस्त्विति प्रसङ्गात्क्रमपक्षं स्मृत्वा दूषणान्तरमाह * चरमेति *। प्रथमभेदास्वीकारप्रयोजनस्य भेदव्यवहारादेर्द्वितीयभेदादेव सिद्धेः प्रथमभेदो व्यर्थः स्यादेवं, द्वितीयभेदादिप्रयोजनस्य तृतीयभेदादिनैव सिद्धेः सो ऽपि व्यर्थः स्यादित्यर्थः।

भिन्नाभिन्ने भिन्नत्वास्थितिः, सति सत्तास्थितिः, संसृष्टे संसर्गास्थितिरित्यादावपि तुल्यो ऽयं दोष इत्याह

१४३ घटादिभिन्नधर्मिणस्तद्भेदाश्रयत्वे त्रिदोषता।

एवमेवंविधे विषयेऽन्यत्रापि

प्राग्लोपाविनिगम्यत्वप्रमाणापगमैर्भवेत् ।
अनवस्थितिमास्थातुरचिकित्स्या त्रिदोषता ॥ १९ ॥

*एवमिति*। उक्तं दूषणत्रयं सर्वानवस्थासाधारणत्वात्सर्वत्रानुसन्धेयमिति प्रकटयन् श्लोकेनोपबध्नाति *प्रागिति*। प्राचां लोपः प्राग्लोपः, अविनिगम्यत्वं च प्रमाणापगमश्च प्राग्लोपाविनिगम्यत्वप्रमाणापगमाः, तैरनवस्थितिमास्थातुरचिकित्स्या त्रिदोषता भवेदित्यन्वयः। त्रयाणां दोषाणां समाहारस्त्रिदोषता। यद्वा त्रयो दोषा यस्य स त्रिदोषस्तद्भावस्तत्ता। यथा खलु लोकेऽनवस्थितिमास्थातुरनवस्थिताशनस्य त्रिदोषता वातपित्तश्लेष्मणां सन्निपातश्चिकित्सानर्हो भवति, प्राग्लोपं धातुत्रयस्वास्थ्यविलोपे तदशननिमित्तमेतदभूदिति निश्चयाभावादन्वयव्यतिरेकरूपप्रमाणाभावैस्तद्वदित्यर्थः। ननु प्राग्लोपादय एव दोषास्तैस्त्रिदोषता स्यादिति किमिदमुच्यते। नैष दोषः। एकैकस्य दोषत्रयमेलने त्रिदोषत्वं प्रति कारणत्वोपपत्तेरिति।

भेदस्य धर्मत्वे भिन्ने धर्मिणि निवेश उताभिन्न इत्यादिविकल्पदोषपरम्परा स्यात्, अस्माभिस्तु स्वरूपभेदाङ्गीकारान्नैको ऽपि दोष इति शङ्कते

१४४ न च स्वरूपमेव भेदः।

यदि च क्वचिद्दृत्वा स्वरूपमेवान्योन्यं व्यावर्त्तमानं भेद इष्यते तदा ययोः स्वरूपं तथैष्टव्यं तयोर्निःस्वरूप-

तापत्तिः । अथ—"न स्वरूपमात्रं मिथो व्यावर्त्तते किन्नाम स्वरूपविशेष" इत्युच्यते, तर्हि स्वरूपविशेषमात्रव्यावृत्त्या स्वरूपमात्रं तयोः स्यादित्येकत्वापत्तिः ।

*यदीति*। यद्यऽनवधिकप्रवाहश्चेदङ्गीक्रियेत तदोक्तदोषः स्यात् क्वचित्प्रवाहविच्छित्त्यङ्गीकारेऽपि तयोरैक्यापत्त्या मूलैक्यापत्तिर्न प्रसज्यते, धर्मभेदानङ्गीकारेऽपि स्वरूपभेदाङ्गीकारादिति शङ्कते * यदीति * । किं स्वरूपमात्रं व्यावर्त्यमानं भेदः, किं वा स्वरूपविशेष इति विकल्प्य प्रथमं दूषयति * तदेति * । यथा स्तम्भकुड्याभ्यां घटत्वे व्यावर्त्यमाने तयोर्निर्घटत्वम् एवं धर्मिप्रतियोगिभ्यां स्वरूपमात्रव्यावृत्त्या तयोर्निःस्वरूपत्वापत्तिः । विमतं निःस्वरूपं स्वरूपमात्रव्यावृत्तिप्रतियोगित्वात् खरशृंगवदिति प्रयोगादित्यर्थः । स्वरूपविशेषो व्यावर्त्यमानो भेद इति द्वितीयमाशङ्कते * अथेति * । तथा ऽप्यद्वैते पर्यवसानं तदवस्थमिति परिहरति *तर्हीति* । तदेतद्देशकालविशिष्टस्वरूपविशेषे व्यावर्तमाने ऽपि प्रत्यभिज्ञागोचरस्य देवदत्तस्य स्वरूपमात्रानुवृत्त्यैक्यवत्स्वरूपमात्रेणानुवृत्तेर्न तयोर्भिन्नत्वेनाभिमतयोरैक्यं स्यादित्यर्थः ।

स्वरूपमात्रानुवृत्त्यैक्यं चेत्स्वरूपविशेषव्यावृत्त्या विदारणं किं न स्यादित्यत आह

१४५ स्वरूपमात्रान्नान्यो विशेषार्थः ।

अथ वा वक्तव्योऽसौ स्वरूपमात्रादन्यो विशेषार्थः ।

अथ—" न स्वरूपं नाम किञ्चिदनुगतमिष्यते मया, विशेषरूपासु व्यक्तिष्वेव स्वरूपशब्दो नानार्थः सन्निविशते"—इत्यभिधत्से तर्हि गतमनेनैव न्यायेन गोत्वादिसिद्धिप्रत्याशया । न च प्रतिव्यक्ति स्वरूपपदसमयग्रहोपपत्तिः ।

*अथ वेति* । स्वरूपमेव विशेषः स्वरूपविशेषश्चेद्विशेषलयः स्वरूपस्य विशेष इयुक्ते ऽपि स्वरूपाकारेण सम्बध्यमानः शून्यवन्निःस्वरूपो न सम्बध्यते लब्धस्वरूपस्य स्वरूपसम्बन्धे परस्पराश्रयात् । स्वरूपमात्रादन्यो विशेषार्थो न वक्तुं शक्य इत्यर्थः । विशेषस्य स्वरूपमात्रान्तर्भावे विशेषलयः स्यात् । स्वरूपमात्रस्य विशेषमात्रत्वाङ्गीकारान्नोक्तदोष इति शङ्कते *अथेति* । एकस्य स्वरूपशब्दस्यानन्तविशेषेषु साधारणं रूपमङ्गीकृत्य प्रवृत्त्यनुपपत्त्या स्वरूपमात्रं सकलविशेषसाधारणमेष्टव्यमित्यत आह * विशेषेति * । अतिप्रसङ्गेनैतदपाकरोति * तर्हीति * । गोत्वजातिमन्तरेण गोशब्दस्य तद्व्यक्तिष्वनेकार्थतया निवेशनेन गोत्वजातिरपह्नूयेतेत्यर्थः । स्वरूपशब्दो गृहीतसङ्गतिको ऽर्थबोधयत्युतागृहीतसङ्गतिः । नागृहीतसंगतिकस्य बोधकत्वं पदधर्मे व्यतिक्रमात् । नापि प्रथम इत्याह * न चेति * । अस्यार्थस्येयं संज्ञेति संबन्धकरणं समयः साङ्केतिकत्वाच्छब्दार्थसंबन्धस्य प्रतिव्यक्ति ग्रहणं न घटते, व्यक्तीनामानन्त्येन पुरुषायुषेणापि ग्रहणायोगात् । विभीतकत्वादीनां परिमितत्वादन्यतमास्मिन् गृ-

हीतसङ्गतिकस्याक्षशब्दस्यानेकार्थबोधकत्वोपपत्तेर्वैध-र्म्यमित्यर्थः ।

क्वचिदनवस्थापरिहाराय स्वरूपभेदाङ्गीकारे दूषणाभावेन च सर्वत्रापि स्वरूपभेद इति पक्षे दूषणमाह

१४६ स्वरूपस्य भेदत्वे दोषः ।

यदि च स्वरूपं भेदः स्यात्तदा धर्मिणि दृष्टे स्वरूपं दृष्टमिति क्वचिन्न सन्देहः स्यादिति ।

* यदीति * । विशेषाग्रहस्य संदेहबीजत्वात्स्वरूपभेद इति पक्षे स्वरूपे दृष्टे विशेषो दृष्ट इति संदेहो न स्यादित्यर्थः ।

एवं प्रतियोगिनो भिन्ने धर्मिणि भेदो निविशत इत्याद्यः पक्षः प्रत्यक्षेऽपि, संप्रति द्वितीयमनूद्य दूषयति

१४७ अभिन्ने भेदनिवेशासम्भवः ।

यदि चाभिन्ने भेदो निविशेत तदा याप्येका व्यक्तिः प्रमीयते घटादिः सापि तेनैव भेदेनानेका स्यादित्येकाभावे नानेकमपि व्यवतिष्ठते ।

* यदीति * । अभिन्नमेव धर्मिणं संसृज्य भेदः प्रतियोगिनो भिनत्ति चेत्, एकामपि घटव्यक्तिं संसृज्य भिन्द्यादित्यर्थः । भेदवादिनामेकाभावो न दोष इत्यत आह * इतीति * । एकमेकं समुच्चित्यानेकं भवति, एकाभावे तत्समाहाररूपमनेकमपि न स्यादिति शून्यतैव स्यादित्यर्थः ।

तदा भेदाभेदोदासीने धर्मिणि भेदस्थितिरिति पक्षान्तरमतिदेशेन निराकरोति

१४८ भेदाभेदोदासीनेऽपि न भेदनिवेशः।

एतेन—"न भेदावच्छिन्ने नाप्यभेदावच्छिन्ने भेदो निविशते किन्तूदासीने"—इत्यपि निरस्तम्।

*एतेनेति*। एकाभावप्रसङ्गस्य तुल्यत्वादित्यर्थः। न चात्र पौनरुक्त्यं शङ्कनीयम्। पूर्वं परस्परविरोधे प्रकारान्तरासंभवस्योक्तत्वादिदानीमभ्युपगम्यापि दोषाभिधानात्।

पृथक्त्वाख्यो गुणो भेद इति तुरीयकक्षागामुक्तन्यायातिदेशं करोति

१४९ भेदो न पृथक्त्वमेव।

अत एव च भेदो नाम स्वरूपान्योन्याभाववैधर्म्यानात्मको धर्मान्तरं पृथक्त्वापरनामकमित्यपि परास्तम्। सोऽपि हि स्वाश्रयं भिन्ने निविशेताभिन्ने वेत्यादि यथोक्तदोषलङ्घनाऽजङ्घाल एव स्यात्।

*अत एवेति*। सत्यामभ्यधिकाशंकायां न्यायसाम्ये च सत्यतिदेशः प्रवर्तते इति न्यायसाम्यं दर्शयति *सोपीति*। अजंघालो मन्दगामी, जंघालोऽतिजवस्तुल्यावित्यभिधानदर्शनात्।

किं च भेदो भेदिनः सकाशाद्भिन्न एव निविशत उताभिन्नः। यद्यभिन्नस्तदा तद्धर्मत्वमेव। ततो भेदहीनत्वात् तत्स्वरूपवन्न स्यात्। अतो भिन्न एव निविशत इति वक्तव्यमित्याह

१५० भेदस्यभेदिनो भेदाभेदासम्भवः।

स्वाश्रयेण च सह स्वस्मिन्नभेदभयाद्यदि स एव

भेदो निविशते तदाऽऽत्माश्रयः । अन्यश्चेत्तस्मिन्नेवं तस्मिन्नप्यन्य इत्यनवस्था । क्वचिदपि गत्वा भेदभेदाश्रययोर्भेदास्वीकारे च तदैक्यद्वारिका मूलपर्य्यन्तमेकता धावेत् ।

* स्वेति * । यदि स्वस्माद्भिन्ने भेदिनि भेदो निविशते तदा किं स्वेनैव भिन्ने भेदान्तरेण वा । नाद्यः, आत्माश्रयादित्याह * यदीति * । भेदान्तरेण भिन्ने भेदः प्रविशतीति द्वितीयमनवस्थया दूषयति * अन्य इति * । त्रिचतुरकक्षातः परस्ताद्भेदानङ्गीकाराान्नानवस्थेत्याशङ्क्याह * क्वचिदिति * । भेदभेदिनोः क्वचिद्भेदानभ्युपगमे तयोर्भेदहीनत्वेनाभेदो भवेत् । अतश्च तदभेदद्वारा मूलपर्यन्तम्—आद्यभेदभेदिपर्यन्तम्—अभिन्नत्वमागच्छेदित्यर्थः ।

अनिरूपितगोचरतया भेदग्राहिप्रत्यक्षस्याभासत्वादद्वैतश्रुतेर्न प्रत्यक्षाविरोध इत्युपपादितमर्थं श्लोकेन संगृह्णाति

१५१ प्रत्यक्षानुमानार्थापत्त्यादिभिरद्वैतश्रुतेरबाध्यता ।

तदद्वैतश्रुतेस्तावद् बाधः प्रत्यक्षतः क्षतः ।
नानुमानादि तं कर्त्तुं तत्रापि क्षमते मते ॥ २० ॥
अद्वैतागमनासीरे साधु सा धुन्वती परान् ।
सेवामेवार्जयत्यर्थापत्तिपत्तिपरम्परा ॥ २१ ॥

* तदिति * । अद्वैतश्रुतेः प्रत्यक्षतो बाधः क्षतः क्षुण्ण-

स्तावन्निश्चितमित्यर्थः। सकलप्रमाणज्येष्ठप्रत्यक्षस्यैतादृशी गतिर्यदा तदा तदुपजीविनो ऽनुमानादेर्वराकस्य कैव कथेति दर्शयति * नेति *। द्वैतसत्यवादिनस्तवापि मते ऽनुमानादि श्रुतिबाधं कर्त्तुं न क्षमते तत्परश्रुत्यपेक्षया दुर्बलत्वात्तस्य। अन्यथा सुरा पेयेत्यादेरपि सद्धेतुत्वप्रसङ्गादित्यर्थः। क्षतः क्षत इति मते मते इति पदावृत्तिरूपं पादांत्ययमकत्वं कविना दर्शितं सार्वज्ञ्यप्रकटनाय—'अव्यपेतव्यपेतात्मा याऽऽवृत्तिर्वर्णसंहतेः यमकं तच्च पादानामादिमध्यान्तगोचरम्' इति तल्लक्षणत्वात्।

अद्वैतागमप्रमाणस्यैक्याद्भेदप्रमाणानां बहुत्वाद्बहूनामनुग्रहस्य न्याय्यत्वात्तत्परा ऽपि श्रुतिर्बाध्यत इत्याशङ्कार्थापत्तिरपि श्रुत्यनुग्राहकतया ऽद्वैतं साधयतीत्याह *अद्वतेति*। अद्वैतागमस्य विजिगीषुस्थानीयस्याग्रे सेनायाः, सङ्गरे वा, नासीरशब्दस्योभयवाचकत्वादुभयोरप्यन्वितत्वात्। अर्थापत्तिरेव पत्तिः पदातिरर्थापत्तिपत्तिस्तस्याः परम्परा सा परान् परिपंथिनो द्वैतप्रमाणनीति यावत्, साधु सम्यक् धुन्वती कम्पयन्ती सेवामेवार्जयति, न तु परिपन्थिनीत्यर्थः। रूपकालङ्कारो ऽयम्। यथा लोके कस्य चिद्विजिगीषोर्विषयापहारे पदातिपरम्परा परान् सम्यक्धुन्वती सेवामेवार्जयतीति प्रमाणान्तराविरुद्धविषये स्वतःप्रामाण्यबललब्धतत्त्वैक्यानुपपत्तयोऽर्थापत्तयः।

१ यद्यपि विरुद्धेति पुस्तकद्वयस्थः पाठः तथापि अर्थानुरोधात् 'व' इत्येव पाठः स्थापितः।

२ प्रमाणान्तराणि धुन्वन्त्योऽद्वैतश्रुतेः सेवामर्जयन्तीति शेषः।

१० स्वकारणीभूतभेदबुद्धिभिरपि नाद्वैतश्रुतीनाम्बाधः।

ननु प्रतिष्ठितप्रामाण्यप्राचीननिरवकाशप्रत्यक्षादिप्रमाणैरुपजीव्यैर्विरोधादद्वैतश्रुतेर्बाध्यत्वमिति चोदयति

१५२ स्वकारणीभूतभेदबुद्धिभिरद्वैतश्रुतेर्बाधाशङ्का।

नन्वद्वैतश्रुतयो वर्णपदविभक्तितदर्थादिभेदानुपजीव्यार्थं प्रतिपादयन्त्यः स्वोपजीव्याभिर्भेदबुद्धिभिर्न कथं बाध्यन्ताम्, उपजीवकस्योपजीव्याद् दुर्बलत्वात्।

* नन्विति *। उपजीवकस्य सापेक्षतया दुर्बलत्वादुपजीव्यस्य निरपेक्षतया प्राबल्यात्प्रबलेन दुर्बलस्य बाधादिति हेतुमाह * उपजीवकस्येति *।

उपजीव्यभेदस्य मिथ्यात्वान्न तद्बाध इत्याह

१५३ तन्निरासः।

मैवम्। न वयं भेदस्य सर्वथैवासत्त्वमभ्युपगच्छामः; किं नाम न पारमार्थिकंसत्त्वम्। अविद्याविद्यमानत्वन्तु तदीयमिष्यत एव। तदेव च कार्य्यकारणभावोपयोगि।

*मैवमिति*। द्वौ चन्द्रमसाविति भ्रान्तिसिद्धभेदमुपजीव्य प्रवृत्तस्यैकश्चन्द्र इति वाक्यस्य नोपजीव्यविरोधः, प्रातीतिकभेदस्यानपह्नवाद्यथा तथा भेदमात्रमुपजीव्य तद्वास्तवखण्डने न कश्चिद्विरोध इत्याशयः। तर्हि भेदसत्तास्वीकारादद्वैतहानिरित्याशङ्क्य सर्वथा बाधाभावोपलक्षिततदीयसत्तानङ्गीकारान्मैवमित्याह * किं नामेति *। अविद्यया विद्यमानं सत्त्वं तदीयं भेदसम्बन्धीच्छाम एवेत्यर्थः। सत एवार्थक्रिया-

कारित्वादपरमार्थभेदस्य न श्रौतज्ञानोत्पादकत्वेनोपजीव्यत्वमित्यत आह *तदिति*। अन्तर्भावितसत्त्वं चेदित्यारभ्य सतः कारणत्वनिषेधादविद्यमानत्वमेव हेतुभावोपयोगीत्यर्थः।

ब्रह्मण्येवकारव्यावर्त्त्यमस्ति चेदद्वैतहानिः। न चेदेकमित्युक्ता एवेति विशेषणं व्यर्थम्—सम्भवे व्यभिचारे च विशेषणमर्थवदिति न्यायात्। अद्वितीयमिति च द्वितीयेन निषेध्येन विना नोपपद्यते। न नानेत्येतदपि नानाभूतेन विना ऽनुपपन्नम्, किंचनेत्येतच्च बहुना विना। अतः श्रौतविशेषणोपजीव्येन द्वैतेन व्याघातो ऽद्वैतस्येत्यत आह

१५४ अद्वैतश्रुतिषु व्याघाताभावः।

एतेन—"एकमेवेत्येवकारव्यवच्छेद्येनाद्वितीयमिति द्वितीयेन, नेह नानेति नानात्वेन, किञ्चनेत्यनेन बहुना, विना नोपपद्यमानेन व्याघातः"—इत्यपि प्रत्याद्दिष्टम्। श्रुतिभिश्चाद्वैतार्थाभिः पारमार्थिकमद्वैतं प्रतिपाद्यते, न च पारमार्थिकमतिरपारमार्थिकधिया शक्यबाधा, मा भूच्छुक्तिरजतधिया परमार्थशुक्तिमतिबाधः। यत्र त्वग्निरनुष्ण इति बुद्धेरुष्णज्ञानोपजीवनादुष्णबोधेनानुष्णबुद्धिबाधः तत्र द्वयोरप्यविद्याविद्यमानत्वाद् बाधो युक्तः।

*एतेनेति*। व्यवच्छेद्यप्रतीतिरिष्यते न पुनः सत्त्वमित्यर्थः। पूर्वमुपजीव्यभेदस्याविद्यासिद्धत्वान्न तेनाद्वैतश्रुतीनां बाध इत्युदितम्, इदानीं परमार्थवि-

षयत्वेनाद्वैतश्रुतीनां वस्तुबलसद्भावान्न बाध इत्याह *श्रुतिभिरिति*। उक्तमेवार्थं विशदयति *न चेति*। कुत इत्यत आह *माभूदिति*। अपरमार्थमत्या परमार्थमतिबाधे रजतधिया शुक्तिधियो बाधः स्यात्, स मा भूदित्यर्थः। अद्वैतवाक्यमप्रमाणमुपजीव्यप्रमाणविरुद्धार्थप्रत्यायकत्वात् अग्निरनुष्ण इत्यनुमानवत्— अन्यथा तस्यापि प्रामाण्यप्रसङ्गो बाधक इत्यत आह * यत्रेति *। द्वयोरप्युष्णतयोर्मिथ्यात्वात्प्रतियोगिभूतोष्णज्ञानोपजीवकत्वादनुष्णबुद्धेरुपजीवकत्वं दौर्बल्यप्रयोजकमस्तु, सत्यार्थस्य पुनर्नेदं रजतमिति ज्ञानस्य प्रसक्तप्रतिषेधतया प्रसञ्जकपूर्वकप्रत्ययोपजीवकत्वेऽपि न तेन बाधो लोके दृष्टः, अत उपजीव्येन बाध उत्सर्ग इति समानार्थगोचरत्वाभावेनापोद्यत इत्यर्थः।

अनुष्णत्वानुमानं परमार्थविषयमुपजीवकत्वाद्द्वैतवाक्यवत् इति प्रागुक्तन्यायानुगतिं चोदयति

१५५ पारमार्थिकस्यैव बाधाभावः।

ननु तत्रापि तर्ह्यनुष्णतापि पारमार्थिक्येव साध्यतामबाधनाय।नैवम्। अनुष्णताया जलादिदृष्टान्तसजातीयायाः शीताद्यव्यावृत्तस्वरूपायाः प्रसाधनेनाविद्याविद्यमानत्व एव विश्रामात्, तदीयैवंविधरूपतानङ्गीकारे चाद्वैतस्यैव नामान्तरकरणापत्तेः, ततस्तस्यां ज्ञेयज्ञानादिभेदावश्याभ्युपेयतया जगद्बाधयुक्तिकवलाप्रवेशासम्भवात्। अद्वैते च द्वैताश्रयस्य बाधस्य वास्तवस्यानवकाशादपारमा-

र्थिकत्वसम्भावनापि दूरत एवापसरतीति ।

* नन्विति * । अनुष्णत्वं यज्जलादौ दृष्टं तत्सजातीयं साध्यमन्यद्वेति विकल्प्य आद्यं दूषयति *मैवमिति*। अनुष्णत्वं नाम स्पर्शविशेषः। तथा च जलादिस्पर्शस्य शीतादिरूपत्वादव्यावृत्तमभिन्नं तत्स्वरूपं यस्यास्तज्जातीयायाः साधनेऽविद्याविद्यमानत्वं पर्यवस्येत्, तस्य तथात्वादित्यर्थः। ततो विलक्षणमनुष्णत्वं साध्यमिति द्वितीयं दूषयति *तदीयेति *। तदीया चासावेवंरूपता चेति तथोक्ता। तस्या अनङ्गीकारेऽनुष्णत्वस्य जलादिदृष्टसजातीयतानङ्गीकारे दृश्या सा स्वीक्रियते अदृश्या वा। दृश्यत्वे मिथ्यैव। अदृश्यत्वेऽद्वैतमेवेति संज्ञाभेदः स्यादित्यर्थः। साध्यवैकल्यं तु स्पष्टमेव। यदि ब्रह्मणोऽन्यत्वासिद्धये दृश्यत्वमिष्यते तत्राह * तत इति *। दृग्दृश्यसम्बन्धखण्डनं जगद्बाधयुक्तिस्तत्कवले ग्रासेऽप्रवेशासम्भवादविद्याविद्यमानत्वमेव पर्यवस्येदित्यर्थः। अद्वैते वाक्यप्रामाण्यस्वीकारादपरमार्थत्वप्रसङ्गः समान इत्यत आह * अद्वैते चेति *। वस्तुतो मानमेयभावानभ्युपगमात्स्वयंप्रभत्वाच्च न मिथ्यात्वप्रसङ्ग इत्यर्थः।

पूर्वमुपजीव्यबाधाभावादद्वैतश्रुतेर्विपर्यासलक्षणमप्रामाण्यं परिहृतम्, इदानीमनुत्पत्तिलक्षणमप्रामाण्यं चोदयति

१५६ अद्वैतश्रुतीनाम्प्रमाजनकत्वाभावशङ्का।

"ननु किमद्वैतपरमार्थताभ्युपगमेन समाहितम्भवति—

यत उपजीव्यबाधादद्वैते प्रमां श्रुतिर्जनयितुं न शक्नोतीति ब्रूमः" ।

*नन्विति* । अद्वैतज्ञानजनिकाले प्रमात्रादिद्वैतमस्ति न वा । न चेदाश्रयाभावादनुत्पत्तिः । अस्ति चेदुपजीव्यप्रमाणविरोधादयोग्यार्थसंसर्गगोचरतयांगुल्यग्रादिवाक्यवत्प्रमां नोत्पादयेत् श्रुतिरित्यर्थः । अद्वैतपरमार्थतोपगमे ऽपि श्रुतेरप्रामाण्यस्य तादवस्थ्यादिति हेतुमाह * यत इति * ।

अद्वैतबुद्धेः परमार्थभेदधिया विरोध उच्यते भेदमात्रधिया वेति विकल्प्याद्यमङ्गीकारेण परिहरति

१५७ पारमार्थिकमपारमार्थिकेन न बाध्यते ।

मैवम् । अद्वैतं हि पारमार्थिकम्, इदं पारमार्थिकेन भेदेन विरुध्येत, न त्वविद्याविद्यमानेन । तस्मादविद्याव्यवस्थितं भेदं तद्बोधञ्चोपजीवन्त्या न परमार्थाद्वैतबुद्धेरुपजीव्यबाधः । यदि श्रुतिजन्या भवन्त्यप्यद्वैतबुद्धिरविद्याविद्यमाना तथाऽपि तद्विषयस्तावत्परमार्थसदेवाद्वैतम् । विषयविरोधेन च तस्या बाध्यता । स च नास्तीति ।

*मैवमिति* । विषयद्वारा धियोरेव विरोध उच्यते । नापि द्वितीयः । कल्पितभेदधियो ऽसमबलत्वेन तत्प्रतिपक्षत्वायोगादित्याह *न त्विति* । प्रमात्रादिभेदस्य कल्पितत्वे धूमाभासवत्परमार्थप्रमापकता न स्यादतः परमार्थभेदस्यैवोपजीव्यतया तद्विरोधो दु-

ष्परिहर इत्यत आह * तस्मादिति * । पारमार्थिकत्वस्य केवलव्यतिरेकाभावाद्भेदमात्रमुपजीव्यम्, न पारमार्थिकभेदः । कल्पिताच्च प्रतिबिंबादेः परमार्थबिंबादिप्रमितिर्दृष्टेत्यर्थः । अद्वैतबुद्धेरविद्याकार्यत्वाद्रजतादिप्रत्ययवद्भेदधिया बाधः किं न स्यादित्यत आह * यदीति * । स्वरूपबाध उच्यते विषयबाधो वा । आद्यो ऽङ्गीक्रियत एव । द्वितीयस्त्वनुपपन्नः 'तत्सत्यम्' इति श्रुतिविरोधादित्याह *तथाऽपीति* । ज्ञानं प्रमाणं विषयस्याबाधादिति व्यधिकरणासिद्धो हेतुरित्यत आह * विषयेति * । अबाध्यविषयत्वेनैव ज्ञानप्रामाण्यं न स्वरूपसत्यतया, व्यभिचारादित्यर्थः । अद्वैतं बाध्यमन्तःकरणपरिणामगोचरत्वाद् घटवदित्याशङ्क्याह * स चेति * । जडत्वमुपाधिः, सत्यं ज्ञानमित्यादिश्रुतिबाधितं चेत्यर्थः ।

उक्तमर्थं श्लोकेन संक्षिप्य दर्शयति

१५८ अद्वैते भयाभावः ।

तस्मात्

पारमार्थिकमद्वैतं प्रविश्य शरणं श्रुतिः ।
बाधनादुपजीव्येन बिभेति न मनागपि ।२३।

श्रुतिरप्याह । द्वितीयाद्वै भयं भवतीति । (बृह० १।४।२)

* तस्मादिति * । यस्माद्भेदप्रतीतिरुपजीव्यते परमार्थाद्वैतगोचरया श्रुत्या तस्माच्छ्रुतिः पारमार्थिकमद्वैतं शरणं प्रविश्योपजीव्येन बाधनान्न मनागपि ईषदपि बिभेतीत्यन्वयः । बाध्यबाधकभावस्य द्विष्ठत्वाद्-

द्वैते तदभावान्न बाध इत्यत्र श्रुतिं प्रमाणीकरोति * श्रुतिरिति * ।

एकं ब्रह्मास्त्रमित्यादौ ब्रह्मणः सत्यत्वं प्रतिज्ञायाद्वैतसत्यत्वं प्रतिपादयतः पूर्वापरविरोध इति चेन्मैवम्, तयोरेकत्वादित्याह

१५९ विज्ञानाद्वैतात्मकमेवाद्वैतम् ।

तच्चाद्वैतम्—'ब्रह्मैवेदं सर्वम्' इति—श्रुत्यर्थेन सहैक्यमापन्नं ब्रह्मैव स्यात्, 'विज्ञानमानन्दं ब्रह्म' इति श्रुत्या च ज्ञानात्मकतया व्यवतिष्ठते । तेन यदिदमद्वैतज्ञानं श्रुत्या जनितं तद्विज्ञानाद्वैतात्मन्येव निविशते ।

* तच्चेति * । यो ऽयं स्थाणुः पुमानेष इति यथा बाधायां सामानाधिकरण्यमुपेत्य सर्वस्य ब्रह्ममात्रता 'ब्रह्मैवेदं सर्वमिति' श्रुत्या प्रतिपाद्यते तेनाद्वैतमपि ब्रह्मैव संपद्यत इत्यर्थः । अद्वैतावाप्तिर्न पुरुषार्थः ज्ञानानन्दयोरभावात्, मुक्तौ च ज्ञानसुखादेरुच्छेदादित्यत आह * विज्ञानमिति * । विज्ञानात्मकतयेत्यानन्दात्मकताया अप्युपलक्षणम् । यद्वा ऽपुरुषार्थत्वपरिहाराय स्वीकृताभ्यां ज्ञानानन्दाभ्यां सद्वितीयतापत्तिरित्याशङ्क्याह * विज्ञानमिति * । ननु नाद्वैतस्य विज्ञानात्मकता श्रुतिजन्यज्ञानविषयत्वाद्धर्मवदित्याशङ्क्याह *तेनेति*। वृत्तिज्ञानानात्मकत्वानुमाने सिद्धसाधनम्, तत्प्रतिबिंबितस्फुरणानात्मत्वानुमाने प्रज्ञानघनश्रुतिव्याकोप इत्यर्थः ।

ब्रह्मतज्ज्ञाने नाभिन्ने विरुद्धधर्मत्वाद् द्रवकठि-

नवत् । विरुद्धधर्मत्वं च जनिमत्वाजनिमत्वेन । विपक्षे ब्रह्मवज्ज्ञानस्यापि नित्यत्वप्रसङ्ग इति पराभिप्राया- नाभिज्ञश्चोदयति

१६० अद्वैतस्य श्रुतिजन्यता ऽपारमार्थिकी ।

"ननु कथं तस्य श्रुत्या जन्यत्वमुपपद्यते" । सत्यमेवं स्यात् यदि तस्य पारमार्थिकी श्रुत्यान्यतापि स्यात् । अविद्याऽव्यवस्थिता तु तज्जन्यता न पारमार्थिकेन तदजन्यत्वेन विरुध्यते ।

*नन्विति* । पारमार्थिकं विरुद्धत्वं हेतुः किं वा प्रातीतिकम् । नाद्यः असिद्धत्वादित्याह *सत्यमिति* । वृत्त्युपाध्यविवेकेन तद्भेदजन्यत्वादि स्फुरणे परिकल्प्यते, न स्वतो जन्यादिरित्यर्थः । यदि प्रातीतिकं विरुद्धत्वं हेतुस्तदा ऽपि कल्पितभेदसाधने सिद्धसाध्यता, परमार्थभेदसाधने चाकाशे व्यभिचार इत्यभिप्रेत्याह * अविद्येति * । घटाकाशस्य घटावच्छिन्नतया जन्यस्यापि परमार्थतो जनिहीनतया महाकाशत्ववदत्रापीत्यर्थः । ज्ञानज्ञेयभेदानुमानम् एकमिति श्रुत्या बाध्यत इत्युक्तम् ।

नन्वद्वैतमेकमित्यादिशब्देन भेदाभावादीनामन्यतमधर्मस्य प्रतिपादनीयत्वात्तस्य तद्वत्त्वं च व्याधातद्वैतं- कथमद्वैतं पारमार्थिकं स्यादित्याशङ्क्याह

१३१ एकत्वनिर्वचनाशक्यत्वे ऽप्यद्वैते न हानिः ।

अत एव श्रुत्येदमेकं साध्यते । यत्तु—"तत्र यद्येकता भेदाभावो, यदि चैकत्वसंख्या, यदि वा ज्ञानात्मकत्वम्, यदि वा अन्य एवैकत्वनामा कश्चिदभेदापरपर्यायो धर्म-

स्तद्वत्त्वं बोध्यते, तच्चाद्वैतव्याघातकत्वान्न सोढुं शक्नोति"-तदपि निष्पीडनमसहमानं ज्ञानश्रुतिजन्यत्वेन[2] सहैव नि-वर्त्तताम् । यत्तु तादृशस्याद्वैतस्य धर्मस्य धर्मितया प्रमितं तन्मात्रमबाधादधिगतम् परमार्थतो व्यवतिष्ठताम्। न हि परमार्थशुक्ती रजततया प्रतीयते यदा तदा बाधात्तत्र रजतत्वे व्यावर्त्तमाने शुक्तिव्यक्तिरपि[3] तदपराधान्निवर्त्तते।

*अत एवेति* । अत्रेतिशब्दाध्याहारेण यत्तूच्यत इति सम्बन्धः । श्रुत्या यदिदमेकत्वं साध्यते तत्र य-द्येकत्वं भेदाभावस्तर्हि भेदाभावस्य प्रामाणिकत्वाद-द्वैतहानिः । यदि चैकत्वं संख्या तदा गुणगुणिभावाद-द्वैतक्षतिः । यदि वा विश्वस्य संवेद्यस्य संवेदनैक्यं तर्हि विज्ञानवादवद् ग्राह्यस्य ग्राहकभेदादद्वैतव्याघात एव । यदि घटादीनां परस्परमभेदो धर्मस्तद्वत्त्वं बो-ध्यते श्रुत्या तदपि धर्मवत्त्वं सोढुं न शक्नोत्यद्वैतव्या-घातादेवेत्यर्थः । भेदाभावादिधर्मसिद्धिरुच्यते किं वा तद्धर्मिणोऽद्वैतस्येति विकल्प्य प्रथममङ्गीकरोति * त-दपीति * । अद्वैतज्ञानस्य श्रुतिजन्यत्वं न्यायासहिष्णु-त्वान्निवर्त्तते यथा तथा भेदाभावाद्यपि निष्पीडनं न्यायाघातमसहमानं निवर्तताभित्यर्थः । न्यायश्च-तस्य

---

१ अत्र 'तदा' इति पाठोऽधिकः पुस्तकान्तरे ।

२ अत्र 'तज्ज्ञानं श्रुति' इत्यादिपाठः पुस्तकान्तरे न सम्यक् । अत्र भेदाभावादेर्निवर्तनमेवाङ्गीक्रियते-ज्ञानस्य श्रुतिजन्यताया निवर्तनं य-था तथैव ॥

३ धर्मिव्यक्तिरिति पाठान्तरम् ।

दृश्यत्वे सम्बन्धासम्भवान्न वस्तुतो दृश्यत्वम्, अदृश्यत्वे शशशृङ्गवदसत्त्वम्, दृश्यादृश्यत्वे ब्रह्ममात्रत्वम्-इत्यादिरूपो द्रष्टव्यः। अद्वैतधर्मिण एव बाध इति द्वितीयं प्रत्याह *यत्त्विति*। उपयन्नपयन् धर्मो विकरोति हि धर्मिणमिति न्यायात् धर्मबाधे धर्मिणः कथमबाधितत्वमित्यत आह *न हीति*। 'तदपराधात्' आरोपितधर्मबाधरूपापराधादित्यर्थः।

एवं सम्भावितसकलविरोधपरिहारेणाद्वैतबुद्धिमुद्दिश्य नात्र कुतर्कमात्रेण प्रत्यवस्थातव्यं, स्वार्थहानिप्रसंगादिति करुणया शिक्षयति

१६२ अद्वैतबुद्धेः तर्केणाबाध्यता।

सेयमद्वैतबुद्धिर्न तर्कमवतार्य प्राज्ञैरपनेया। यदाह श्रुतिः—'नैषा तर्केण मतिरापनेया' इति। (कठ० २।९)

तस्मात्—

धीधना बाधनायास्यास्तदा प्रज्ञां प्रयच्छथ।
क्षेप्तुं चिन्तामणिं पाणिलब्धमब्धौ यदीच्छथ।२४।

*सेयमिति*। अद्वैतबुद्धेरद्वैतेनासम्बन्धे न तद्बुद्धित्वम्, सम्बन्धे च तस्य वास्तवत्वे ऽसङ्गत्वहानिः, अवास्तवत्वे कल्पितसम्बन्धत्वाद्रजतबुद्धिवदमानत्वमद्वैतबुद्धेरित्यादि तर्कमवतार्य न निराकरणीया, क्लृप्तकरणाजन्यत्वस्यैवामानत्वप्रयोजकत्वेन कल्पितसम्बन्धस्याप्रयोजकत्वात्, तर्कागोचरत्वाच्चाद्वैतस्येत्यर्थः। अद्वैतबुद्धिस्तर्कगोचरा बुद्धित्वाद् द्वैतबुद्धिवदित्याशङ्क्य श्रुतिविरोधमाह *यदिति *। एषा मतिरद्वैतबुद्धिस्तर्केण नापनेया ऽनि-

शाकार्येत्यर्थः । यद्वा कथिततर्ककलापादेवाद्वैतबुद्धिसिद्धेरागमवैयर्थ्यमित्याशङ्क्याह * सेयमिति * । अत्र प्रमाणमाह * यदिति * । आपनेया प्रापणीयेति यावत् । सकलशास्त्रकृतां प्रवृत्तेर्निःश्रेयसार्थत्वान्नान्यः पंथा इत्यादिशास्त्रादद्वैतमतिव्यतिरेकेण तदसिद्धेस्तर्केण तन्निराकरणाय मतिर्न करणीयेत्यभिधत्ते * तस्मादिति * । धीरेव धनं येषां ते 'धीधनाः' पण्डिताः । अस्या अद्वैतबुद्धेर्बाधनाय स्वप्रज्ञां तदा प्रयच्छथ दत्त यदा पाणिलब्धं हस्तप्राप्तं चिन्तामणिं समुद्रे क्षेप्तुमिच्छथ, यदैतादृशं दौर्भाग्यं स्यादिति श्लोकार्थः । अद्वैतमतेः केवलादृष्टसाधनत्वाद् दृष्टादृष्टसाधनधर्मजिज्ञासां विना न तत्र नियमेन प्रवृत्तिरित्यत आह

१५३ अद्वैतबुद्धेर्दृष्टार्थतापि ।

सेयमद्वैतदृष्टिर्दृष्टार्थापि। यदाह—'स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात्' (भ.गी. २।४०) । तस्मात्

ईश्वरानुग्रहादेषा पुंसामद्वैतवासना ।
महाभयकृतत्राणा द्वित्राणां यदि जायते ॥ २५ ॥

* सेयमिति * । निरस्तसमस्तदुःखं निरातिशयानन्दं विदेहकैवल्यफलं यद्यपि शास्त्रदृष्टं तथाऽपि ब्रह्मास्मीति निश्चिन्वतः संसारभयनिवृत्तिः प्रत्यक्षफलमित्यर्थः । अत्र प्रमाणमाह * यदिति * । अस्येश्वरार्पितनित्यनैमित्तिकधर्मस्य स्वल्पं लेशोऽपि महतो भयात्संसारापरपर्यायाद् अन्तःकरणशुद्धिद्वारा ब्रह्मज्ञानोत्पादनेन तन्निदानाज्ञाननिवर्तकतया त्रायते पालयतीत्य-

र्थः । सकृच्छ्रवणाद्यनुष्ठानेनाद्वैतमतिर्नोदेति यदि तदा किं ततो निवर्तितव्यमुत प्रवर्तितव्यमेवेति जिज्ञासायां महारम्भस्याव्यग्रमनसोऽत्राधिकारात्प्रवर्तितव्यमेव तेन 'आवृत्तिरसकृदुपदेशा'दिति भगवता ज्ञानमूर्तिना कथितत्वादित्याह * तस्मादिति * । यस्माद्दृष्टादृष्टफला ऽद्वैतबुद्धिर्बहुविघ्ना च तस्मादेषाऽद्वैतवासनासंस्कारः पुंसां यदि जायते तर्हीश्वरानुग्रहादेव, विद्योत्पत्तिपरिपन्थिकलुषनिवृत्त्यर्थमीश्वराराधने यतितव्यं मुमुक्षुभिरित्यभिप्रायः । तत्र हेतुः[2] महाभयकृतत्राणा महतः संसारभयात्कृतं त्राणं यया सा तथोक्ता । वैराग्यादिसाधनदौर्लभ्याद्विशिष्टाधिकारिदौर्लभ्यं विवक्षन्नाह * द्वित्राणामिति * । 'मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये । यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वत' इति स्मृतेरित्यर्थः ।

तर्ह्युक्तप्रकारेण केनापि विरोधाभावात्प्राकृतदृष्ट्या द्वैताकारेण प्रकाशमानं[3] विश्वं श्रौतदृष्ट्या ज्ञानात्मकं ब्रह्मैव चेत्तर्हि श्रौतज्ञानेनाद्वैतविरोध इत्याशङ्कामपाकुर्वन्महाप्रमेयमुपसंहरति

१६४ श्रौतज्ञानेनाद्वैतविरोधनिवृत्तिपूर्वकमहाप्रमेयोपसंहारः ।

तस्मात्—

आपाततो यदिदमद्वयवादिनीना—

मद्वैतमाकलितमर्थतया श्रुतीनाम् ।

१ ऽद्वैतदृष्टिरिति पु० पा० । २ हेतुमाहेति पु० पा० ।
३ प्रकाश्यमानमिति । पु० पा० ।

तत् स्वप्रकाशपरमार्थचिदेव भूत्वा
निष्पीडितादह ह निर्वहते विचारात् ॥ २९ ॥

*तस्मादिति* अद्वयवादिनीनां श्रुतीनामापाततो निष्पीडितविचारमन्तरेणार्थतया यदिदमद्वैतमाकलितमवगतं तन्निष्पीडिताच्छोधिताद्विचारात्परमार्थचिदेव भूत्वा निर्वहते स्वयमेवेत्यन्वयः। स्वानुभूतमतिकौतुकं परेषामाविष्कुर्वन्नाह *अहहेति* अविद्यादशायामेव श्रुतिप्रामाण्यात्तज्जन्यं ज्ञानं प्रमात्रादि विलापयत्कतकचूर्णवत्स्वयमपि विलीयते स्वरूपसिद्धिस्तु स्फुरणाभेदेन स्वतः स्फुरणादित्यर्थः।

तदित्थं स्वदङ्गीकृतसद्विचारलक्षणोपपन्नैरेवंविधैर्विचारैरित्यारभ्य प्रतिपादितमर्थमुपसंहरति

१६५ श्रद्धयाऽऽत्मतत्त्वावगतिः।

तदिदमेताभिरात्ममतसिद्धसद्युक्तिलक्षणोपपन्नाभिर्युक्तिभिरुपनीयमानमद्वैतमविद्याविलासलालसोऽपि श्रद्दधातु [1]भवान् तदनु चानयैवोपानिषदर्थश्रद्धयाऽध्यात्मं जिज्ञासमानः परमात्मतत्त्वं क्रमादवृत्तिव्यावृत्तचेताः स्वप्रकाशसाक्षिकं माक्षिकरसातिशायि स्वात्मनैव साक्षात्करिष्यते। यथा च परिहृतचापलमात्मतत्त्वामृतसरसि निमज्य रज्यति निरायासमेव मानसं तथाऽहमकथयं नैषधचरितस्य परमपुरुषस्तुतौ सर्ग इत्येषा दिक्।

*तदिदमिति* परार्थानुमानस्थानीया एता युक्त-

१ नावद्भवानिति का० मु० पु० पा० तथा मूल पु० पा०।
२ स्वानुभूति इति पु० पा०।

यः तथा च परेषां सद्युक्तिलक्षणोपेतत्वेनास्मद्युक्तीनां सिद्धत्वादेताभ्यो निश्चयः संभवतीत्यर्थः । बहुशः प्रतिपादितमप्यद्वैतं मच्चेतसि न चकास्ति भेदप्रतीतिविरोधादेवेत्यत आह *अविद्येति* अविद्याविलासः अविद्याकार्यो भेदस्तल्लालसस्तदेकरुचिरित्यर्थः । आत्मज्ञानान्निःश्रेयसाधिगम इति सर्वेषामविवादपदं तत्किमनयाऽद्वैतश्रद्धया मुमुक्षूणामित्यत आह *तदिति* तदनु परमात्मतत्वं भवताऽऽत्मनैव साचात्करिष्यते इत्यनुषज्यान्वयः । आत्मनेतीत्थंभावे तृतीया । एवकारश्च भेदाभेदव्यावृत्त्यर्थः । वस्तुसिद्धेः प्रमाणाधीनत्वात् श्रद्धाकरणमात्रेण तत्साक्षात्कारः कथमित्यत आह *अध्यात्ममिति* जिज्ञासमान इति ज्ञानेच्छयोरन्तर्णीतं विचारं लक्षयति अध्यात्ममिति तत्त्वम्पदार्थं । 'श्रद्धावान् लभते ज्ञान'मित्यादिस्मृतेरुपनिषदर्थश्रद्धया गुरुपादोपसर्पणपूर्वकं तत्सन्निधौ वेदान्तानां शक्तितात्पर्यावधारणरूपश्रवणं कुर्वन्नित्यर्थः । 'सकृच्छ्रवणमात्रेण पिशाचकवदाप्नुयात् । श्रुतवाक्यस्मृतेश्चान्यः स्मार्यते च वचोऽपर' इत्यादिन्यायेनाधिकारिणां बहुविधत्वात् बहुविधानि साधनानि दर्शयति *क्रमादिति* वृत्तिभ्यः स्वाभाविकीभ्यः शब्दादिगोचराभ्यो व्यावृत्तं चेतो यस्य स तथा । अनेन विजातीयप्रत्ययानन्तरितसजातीयप्रत्ययसन्ततिकरणं निदिध्यासनं दर्शितं । क्रमादिति मननं दर्शितम् । मनननिदिध्यासनाभ्यां विषयकर्तृदोषापनयने श्रवणेन च करणदोषेऽपनीते फलोपकार्यङ्गाभ्यां सह कृताच्छ्रवणात्साक्षात्करिष्यते इत्यर्थः । श्रौतनिश्चयेन साक्षात्कि-

यमाणस्य बलादापतितं जडत्वमित्यत आह *स्वप्रकाशेति* वृत्त्यभिव्यक्ततया स्वत एव सिद्धेर्न जडत्वमित्यर्थः। स्वसमवेतसुखसाक्षात्कारस्य पुरुषार्थत्वादद्वैते तदभावान्न तत्र श्रद्धेत्यत आह *माक्षिकेति* मक्षिकाभिरुपचितो रसो माक्षिको मधु तदतिशेतुं शीलं यस्य तत्तादृगनेनानन्दरूपतोक्ता। सुखसाक्षात्कारस्य पुरुषार्थत्वे सम्भवति स्वसमवेतेति विशेषणमकिञ्चित्करमित्यर्थः। 'तस्याहं निग्रहं मन्ये वायोरिव सुदुष्कर'मिति स्मृतेः मनोनिग्रहस्याशक्यत्वात् तत्सहकृतश्रवणस्य कथमपरोक्षसाधनत्वमित्यत आह * यथेति * नैषधाख्ये काव्ये मया विरचिते परमपुरुषस्तुतिपरे सर्गेऽभ्यासवैराग्यादिसाधनमकथयमवोचमित्यर्थः। सत्यज्ञानादिपदानां पर्यायत्वे पदान्तरवैयर्थ्यं अपर्यायत्वे ऽखण्डार्थनिष्ठत्वासिद्धिरित्याशङ्क्याह * इत्येषा दिक्* अद्वैतसाधन इति शेषः। अकार्यकारणद्रव्यमात्रनिष्ठसमानाधिकरणवाक्यस्य सोऽयं देवदत्त इति वाक्यवत्प्रवृत्तिनिमित्तभेदे सत्यपि लक्षणयाऽखण्डनिष्ठत्वामित्यर्थः।

खण्डनानां परपक्षप्रतिक्षेपमात्रफलत्वाद्विजिगीषूणामधिकारो न मुमुक्षूणां तत्वनिर्णयफलत्वाभावादित्याशङ्क्याह

१६६ खण्डनयुक्तीनां तत्त्वनिर्णयफलकत्वम्।

अभीष्टसिद्धावपि खण्डनानाम-

खण्डि राज्ञामिव नैवमाज्ञा।

तत्तानि कस्मान्न यथाभिलाषं

सैद्धान्तिकेऽप्यध्वनि योजयध्वम् ॥ २७ ॥

* अभीष्टेति * खण्डनानां एवमुक्तन्यायेनाद्वैताद्यभीष्टसिद्धावाज्ञा सामर्थ्यं नाखण्डि न खण्डितं । उदाहरति * राज्ञामिवेति * यथा राज्ञामाज्ञा परपक्षप्रतिक्षेपे स्वपक्षपरिपालने च नाखण्डि तद्वत् । नन्वद्वैतं श्रुतिप्रमाणकं त्वया न्यरूपि, निरूपयिष्यसि च प्रमाणादिलक्षणासम्भवं ततः कथं सिद्धान्तसिद्धिरित्याशङ्क्याह * तत्त्वानीति * प्रमाणप्रमेयविभागस्य तत्त्वांशखण्डने ऽपि ज्ञानोत्पत्तेरर्वाग्व्यावहारिकं सत्त्वमबाधितं यस्मात्तस्माद्वक्ष्यमाणानि खण्डनवचनानि सैद्धान्तिके ऽध्वन्यपि कस्मान्न यथेच्छं योजयध्वं योजयध्वमेवेत्यर्थः । तदुक्तं ब्राह्मणेन 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यती'ति ।

परपक्षप्रतिक्षेपाद्वैतसाधनयोः सामर्थ्यं युक्त्यन्तराणामप्यस्ति सर्वदर्शनसिद्धान्तमवलम्ब्याप्रतिहतप्रचारत्वमासां खण्डनयुक्तीनामपि नास्ति तेन विजिगीषूणां न नियमेनात्र प्रवृत्तिरित्यत आह

१६७ सर्वत्र खण्डनयुक्तीनाम्प्रागल्भ्यम् ।

तदेतादृशीषु सर्व्वास्वपि दर्शनास्थितिषु काममास्माकीनाः खण्डनयुक्तयः प्रगल्भन्ते यासामीश्वरपरवशां विश्वव्यवस्थामनास्थाय निरसनमशक्यं तासामेवावतरणार्थमयं प्रावादुकप्रवादोपन्यासः ।

तथा–हि यदि दर्शनेषु शून्यवादानिर्व्वचनीयपक्षयो-

१ दर्शनेष्विति पु० न्तरे नास्ति ।

राश्रयणं तदा तावदमूषां निराबाधैव सार्व्वपथीनता । यदि तु प्रमाणादिसत्त्वाभ्युपगन्तृमतावलम्बनं तदापि लक्षणखण्डनयुक्तीनां लक्षणविशेषखण्डने लक्ष्यखण्डनयुक्तीनाञ्च तद्विषयप्रमाणविशेषखण्डने प्रत्येकं तात्पर्य्यम् ।

*तदिति* यस्माद्द्वैतवादिसिद्धान्ते ऽपि प्रमाणप्रमेयादिसत्तांशनिरसनेऽपि खण्डनयुक्तयो न निवार्यन्ते तस्मादेतादृशीषु प्रमाणादिसत्ताभ्युपगमाश्रयासु सर्वासु द्वैतदर्शनस्थितिषु खण्डनयुक्तयः प्रवर्तन्त एवेत्यर्थः। अस्ति चेत्सर्वत्र खण्डनयुक्तीनां प्रागल्भ्यं तर्हि कं पक्षविशेषमाश्रित्य खण्डनयुक्तयो निरङ्कुशं प्रयोक्तव्याः कं च समाश्रित्य प्रमेयविशेषखण्डने प्रयोक्तव्याः किं वा सर्वत्रैव निरङ्कुशाः प्रयोक्तव्या इति वीक्षायामाह *यासामिति* ईश्वरविरचितेयं प्रमाणादिव्यवस्था ऽतोऽस्या निरसने तावदीश्वरद्रोहः स्यादित्यभिशापमन्तरेण यासां खण्डनयुक्तीनां निराकरणमशक्यं तासामवतारणार्थं वादिमतोपन्यासः क्रियत इत्यर्थः । शब्दानित्यत्वादिसाधकयुक्तिविशेषस्य सार्वपथिकत्वाभाववन्नैतासां युक्तीनामपि सार्वपथिकत्वं युक्तित्वाविशेषादित्याशङ्क्य खण्डनयुक्तीनामेवायंस्वभाव इत्याह । *तथाहीति* शून्यब्रह्मवादिनोः साधनीयाभावात्सार्वपथीनत्वं निर्बाधत्वमित्यर्थः। साधनीयाभावप्रयुक्त्या

२ निर्बाधमित्यर्थः इति सो० पु० पा० ।

सार्वपथीनत्वं तयोश्चेत्र वैशेषिकादिपक्षविशेषे खण्डनानां निर्बाधत्वं लक्षणप्रमाणादीनां साधनीयत्वादित्यत आह * यदित्विति * तुशब्दो विशेषार्थः । तमेव दर्शयति * प्रमाणेति * या लक्षणखण्डनयुक्तय उपन्यस्तास्ताः सामान्येन लक्षणमात्रं[1] न संभवत्येतत्परा न भवन्ति किं तु लक्षणविशेषासम्भवपराः तद्यथा—स्वाश्रयावच्छेदोचितावान्तरसामान्यवत्वं विशेषगुणलक्षणमुदयनोक्तमतिव्याप्त्या निराकृत्य गुणत्वावान्तरसामान्यवत्तया नियतैकद्रव्यावच्छेदकत्वं वैशेषिकैर्लक्षणमुक्तं, लक्ष्यखण्डनयुक्तयश्च तत्प्रमाणमात्रनिराकरणपरा न भवन्ति किं तु प्रमाणविशेषनिरसनपरा यथा—कार्याकार्यसंयोगस्य कारणाकारणसंयोगपुरःसरत्वे तूदयनोक्तं पार्थिवद्व्यणुकमाप्येन परमाणुना संयुज्यते तदकार्यत्वे सति तत्संयोगिकार्यद्रव्यत्वाद्यथा पटस्तुर्येत्यनुमानं दृष्टान्ते साध्यशून्यतया निराकृत्योक्तविधपरमाणुद्व्यणुकसंयोगः कारणाकारणसंयोगा[2]रभ्यः अकर्मजत्वे[3] सति संयोगत्वात्संप्रतिपन्नवदित्यनुमानान्तरमुक्तं तद्वदित्यर्थः ।

सूत्रभाष्यकाराभ्यां प्रतिपादितप्रमाणादिखण्डने सूत्रादिविरोधात्तन्मतावलम्बिनोऽपसिद्धान्त इत्यत आह

१६८ अपसिद्धान्तापत्तिनिवारणम् ।

नच सौत्रादिलक्षणप्रमाणै[4]र्खण्डनेऽपसिद्धान्तापत्तिः,

---

१ लक्षणमात्रेण सम्भवत्येत इति पु० पा० ।

२ कारणसंयोगारभ्य इति सो० पु० पा० ।

३ अकर्मकत्वे इति पु० पा० ।

४ प्रमाणेत्यधिकं क्वचित्पुस्तके नास्ति ।

तादृश्याः सूत्रादिव्याख्यायाः खण्ड्यमानत्वात् ।

न च वाच्यं—'लक्षणविशेषवस्तुव्यवस्थापकप्रमाणविशेषसूत्रादिव्याख्याविशेषखण्डनपरत्वेन लक्षणान्तरं प्रमाणान्तरं व्याख्यान्तरञ्च वाच्यं प्रसज्येत भवतोऽपीति'। वितण्डाकथामालम्ब्य खण्डनानां वक्तव्यत्वात् । तत्र च व्यावृत्य स्वपक्षनिर्व्वाहं प्रति पर्य्यनुयोगानवकाशात् ।

***न चेति* यदि सूत्रादेरर्थमात्रं खण्ड्यते तदा तद्दर्शनावलम्बिनामपसिद्धान्तः स्यात् यदा तु सूत्रादिव्याख्यातॄणां व्याख्याविशेषः खण्ड्यते तदा नापसिद्धान्तः सूत्रादेरदुष्टतया स्वीकारादित्यर्थः । लक्षणादिविशेषखण्डनपरत्वेऽन्यल्लक्षणादि वक्तव्यमतश्च खण्डनानां तत्राप्यावृत्त्या स्वव्याघातकतया जातितेत्यत आह *न चेति* कुतो न प्रसज्यत इत्यत आह *वितण्डेति* कथाविशेषस्वरूपनिर्देशमात्रेण कथं प्रमाणादीनामवक्तव्यतासिद्धिरित्यत आह *तत्रेति* स्वपक्षस्थापनाहीनत्वाद्वितण्डायाः स्वपक्षस्थापनाङ्गानां प्रमाणादीनामवक्तव्यत्वमित्यर्थः ।**

एकदर्शनावलम्बिनामप्यन्योन्यखण्डनप्रयोग एवं सति सिद्ध इत्याह ।

**१६९ एकदर्शनावलम्बेऽपि खण्डनयुक्तीनां सावकाशत्वम् ।**

एवञ्च सति वादिदर्शनमाश्रित्यापि खण्डनप्रयोगो निर्बाध एव एकदेशिव्यवस्थातुं शक्यत्वात् वैयाक-

रणानामिव च शब्दसिद्धिप्रश्नस्य परकीयतत्त्वज्ञाननिरूपणार्थं [1]समानपक्षस्थित्याऽपि पर्यनुयोगसांव्यवहारिकतायाः सम्भवात् ।

*एवमिति* सदृष्टान्तं हेतुमाह *एकदेशिवदिति* एकशास्त्रैकदेशिनामेकसिद्धान्तावलम्बित्वे[2]ऽप्येकदेश्यन्तरवत् प्रत्यवस्थानमित्यर्थः। एकदेशिनोः संप्रतिपन्नांशे नास्ति परस्परं प्रत्यवस्थानमसंप्रतिपन्नांशे भिन्नदर्शनावलम्बिनो नास्ति विशेष इत्यत आह * वैयाकरणेति* यथा पाणिनिशाकल्यप्रभृतीनां गौरिति शब्दः साधुरिति संप्रतिपत्तावपि कथमयं शब्दः साधुरिति परकीयतत्त्वज्ञानपरीक्षार्थं तत्साधनप्रकारनिराकरणार्थं च प्रश्नो दृष्टस्तथा साध्यार्थसम्प्रतिपत्तावपि साधनप्रकारविशेषनिराकरणाय परकीयतत्त्वदार्ढ्यनिरूपणार्थं च पर्यनुयोगसांव्यवहारिकतायाः चोद्यस्य [3]संव्यवहारसम्बन्धितायाः सम्भवादित्यर्थः ।

तत्त्वनिर्णयप्रधानवादकथायां न खण्डनयुक्तीनां प्रवेशस्तत्र स्वपक्षसाधनं प्रति परावृत्त्य पर्यनुयोगावकाशात्तत्कथमासां सार्वपथीनतेत्याशङ्क्याह

१७० वादेऽपि खण्डनयुक्तीनां प्रवेशः ।

वस्तुस्थितिं कुर्वाणेन च विचारकेणावश्यमेता युक्तय उद्धरणीयाः अन्यथा वस्तुव्यवस्थितेरशक्यत्वा-

१ समानो पक्षस्थित्येति खं० मु० पु० पा० ।

२ त्वेनाप्ये इति पु० द्वयपाठः ।

३ सम्बन्धितायाः संव्यवहारादिति पु० पा० ।

दिति वादेऽपि प्रयोगः सम्भवत्येव खण्डनयुक्तीनाम्[1] ।

*वस्त्विति* वस्तुबाधकत्वेन प्रयुक्तखण्डनानुद्धारे तदसिद्धेः खण्डनैरेव खण्डनान्युद्धरणीयानीति वादेऽपि खण्डनप्रवेश इत्यर्थः ।

जल्पस्य तर्हि कथाद्वयविलक्षणत्वादुक्तयुक्तेरसम्भवान्न तत्र खण्डनानां प्रवेश इत्यत आह ।

१७१ जल्पस्य पृथक्कथात्वाभावः ।

जल्पस्त्वेका कथा न सम्भवत्येवाऽसामयिकी वितण्डाद्वयशरीरत्वात् अन्यथा जल्पद्वयेनापि किमित्येका कथा न कल्प्यते, अत्राचार्मै[2] च जल्पविचारप्रस्तावे विस्तरेणैतदिति ।

*जल्पस्त्विति*जल्पकथाया एवाभावात्त्रानवकाशो न दोष इत्यर्थः।'यथोक्तोपपन्नः छलजातिनिग्रहस्थानसाधनोपालम्भो जल्प' इति गौतमीयाः सङ्गिरन्त इत्यत आह *असामयिकीति* सङ्केतं विना न्यायतो[3] विचार्यमाण इत्यर्थः। तत्र हेतुमाह *वितण्डेति*यदा प्रतिवादी छलजात्यादिभिर्वादिपक्षं दूषयति तदाऽस्य स्वपक्षसाधनावसराभावात् दूषयित्वैव निवर्त्तत इत्येका वितण्डा, दूषितश्च वादी प्रत्यावृत्य यदा प्रतिवादिपक्षं दूषयति तदा तत्पक्षस्य साधनानर्हत्वात्सोऽपि प्रतिपक्षं दूषयित्वैव निवर्तत इत्यपरा वितण्डा, ततश्च

१ खण्डनानामिति खं० मू० पु० पा० ।
२ अत्रोचार्मैर्वात खं० मू० पु० पा० ।
३ मुख्यत इति सो० पु० पा० ।

वितण्डाद्वयातिरेकेण परस्परस्खलितमात्रफलस्य जल्पस्य नास्त्येव स्वरूपमित्यर्थः । स्वमतसाधनपुरःसरं परमतनिरसनं जल्पे, वितण्डायां तु परमतनिरसनमेवेत्यस्ति जल्पवितण्डयोः पार्थक्यमित्यत आह *अन्यथेति* स्वपक्षसाधनपुरःसरं परपक्षमुपालभ्य पुनः परपक्षोपालम्भनपुरःसरं स्वपक्षसमर्थनमेका चतुर्थी जल्पसंज्ञा किं न कल्प्यते । पिष्टपेषणवदानर्थक्यं द्वितीयस्वमतसाधनादेरिति चेन्न । स्थूणानिखननन्यायेन दार्ढ्यप्रयोजनत्वात् । जल्पतः पृथक् फलाभावादिति चेन्न। वितण्डातः पृथक् फलाभावस्य जल्पेऽपि तुल्यत्वादित्यर्थः । एवं तर्हि वितण्डैका कथा स्याद्वादस्यापि वितण्डाद्वयशरीरत्वनाभावप्रसङ्गादित्याशङ्क्याह * अवोचामेति * वादस्य फलभेदेन वितण्डातो भेदोपपत्तिर्न जल्पस्य, तदभावात्प्रसङ्गस्य च प्रशिथिलमूलत्वं विपर्ययावसानादिदोषाच्च न जल्पो नाम कथान्तरमस्तीतीश्वराभिसन्धौ विस्तरेणोक्तमित्यर्थः ।

परमतसिद्धं जल्पमङ्गीकृत्य खण्डनानां सार्वपथीनत्वं किं न दर्शयितुं शक्यमित्याशङ्क्योपायविशेषाच्छक्यते इत्याह ।

१७२ जल्पस्य पृथक्त्वेऽपि खण्डनयुक्तीनां प्रवेशः ।

जल्पकथयापि चाभिधाने स्वपक्षे व्यावृत्त्यै सदोषस्यापि प्रमाणतयाऽभिधानं कृत्वा तद्दोषोद्भावनकारी

---

१ प्रसङ्गस्यास्येति सो० पु० पा० ।
२ व्यावर्त्यैति० का० मु० पु० पा० ।

कामपि खण्डनयुक्तिमत्रतार्य्य बाधनीय इति जल्पेपि नात्यन्तमनवकाशाः खण्डनयुक्तयः ।

*जल्पेति* परपक्षं प्रतिक्षिप्य स्वपक्षसाधनाय दैवगत्याऽसिद्ध्यादिदोषवदेव प्रमाणतयाऽभिधानं कृत्वा तद्दोषं प्रतिवाद्युद्भावयेत् तदाऽसौ दोषोद्भावनकारी कया चिल्लक्षणादिखण्डनयुक्त्या बाधनीय इति सम्भवत्येव जल्पेऽप्यवकाश इत्यर्थः ।

इति खण्डनयुक्तीनामवतरणम् ।

---

खण्डनानामनुपममहिमानमुपश्रुत्य सञ्जातकौतुको बुभुत्सुः पृच्छति ।

१७३ लक्षणसामान्यखण्डनयुक्तिः ।

कीदृश्यः पुनस्ताः ।

उच्यन्ते । तथा हि—लक्षणाधीना तावल्लक्ष्यव्यवस्थितिः लक्षणानि चानुपपन्नानि ज्ञानाधिकरणादिलक्षणनिरूपणद्वारेण चक्रकाद्यापत्तेः ।

*कीदृश्य इति* खण्डनयुक्तय इत्यनुषङ्गः । खण्डनयुक्तीनामानन्त्येन साकल्याभिधानस्याशक्यत्वात्कियत्यो ऽभिधीयन्ते इत्याह *उच्यन्त इति* खण्ड्यमानलक्षणेभ्यो नामरूपप्रपञ्चस्य लक्ष्यस्यान्यत्वाल्लक्षणानामनुपपन्नत्वे ऽपि न तस्यानुपपन्नतेत्याशङ्क्याह *तथा हीति* प्रत्यक्षादिप्रमाणैर्धर्मविशेषं निश्चित्य काणादादिभिः संमुग्धधर्मिविशेषनिष्ठतया लक्षणाभिधाना-

१ वत एवेति सो० पु० पा० । २ ज्ञाता इति का० मु० पु० पा० ।

त्कथमनुपपन्नेत्यत आह *लक्षणेति* लक्षणानुपपन्नतां दर्शयितुं सर्वलक्षणानुगतं दूषणं तावदाह *ज्ञानेति* ज्ञानस्याधिकरणमाश्रयो ज्ञानाधिकरणं स आत्मा आदिर्यस्य स ज्ञानाधिकरणादिस्तस्य लक्षणनिरूपणद्वारा चक्रकाद्यापत्तेरित्यन्वयः। इदमाकूतं ज्ञातृज्ञानज्ञेयात्मकं तावज्जगत्तत्र को ज्ञातेति पृष्टे ज्ञानाधार इति लक्षणं वाच्यं, ज्ञानाधार इति विशेषणस्य रूपाद्याधारज्ञेयव्यावृत्त्यर्थत्वात् ज्ञेयमपि ज्ञातव्यं भवति तदज्ञाने तदपोहस्य ज्ञातुमशक्यत्वात्, किं च तज्ज्ञेयमिति पृष्टे ज्ञानविषय इति वाच्यं, किं वा तज्ज्ञानमिति प्रश्नस्य प्रकाशात्मको ज्ञातृविशेषगुण इति वक्तव्यं अत एकस्याप्यन्यतोऽसिद्धेश्चक्रकापत्तिः, लक्षणस्यापि सत्तामात्रेण गमकत्वेऽतिप्रसङ्गात् ज्ञातं लक्षणं वाच्यं, एवं च लक्षणस्यापि लक्षणान्तराधीनसिद्धित्वेऽनवस्था क्वचिद्विच्छेदे तदसिद्धिद्वाराऽऽमूलमसिद्ध्यापातः लक्षणान्तराधीनसिद्धित्वाभावे लक्षणस्य लक्ष्यस्यापि तथैव सिद्ध्युपपत्तेर्लक्षणवैयर्थ्यापत्तिरित्यादिशब्दार्थः। ज्ञानाधिकरणादिसामान्यलक्षणानिरुक्तौ तदनालिङ्गिततद्विशेषलक्षणमप्यशक्याभिधानं तदुक्तं-भट्टमिश्रैः 'सामान्यलक्षणं मुक्त्वा विशेषस्यैव लक्षणम्। न शक्यं केवलं कर्तुमतोऽप्यस्य न वाच्यते'ति। ननु न सर्वं लक्षणाधीनं येनेयमनवस्था किं तु सन्दिग्धं लक्षणेन बोध्यते न च सर्वत्र सन्देहस्तथाऽदर्शनादिति, नैतत्सारम्। कस्य सन्दिग्धं न तावल्लक्षणप्रणेतुस्तथा सति तदप्रणयनप्रसङ्गान्नापि बोध्यस्य, लक्ष्यसन्देहासिद्ध्यर्थमेव पूर्वं तन्निश्चयस्य

स्वीकर्तव्यत्वादन्यथाऽनिश्चिते स्थाण्वादौ स्थाणुर्वा पुरुषोवेति सन्देहाभाववत्, लक्ष्यस्य सर्वथा ऽनिश्चितत्वे सन्देहानुपपत्तेः, पूर्वं निश्चितत्वे यतः स निश्चयस्तत एव पुनरपि निश्चयान्तरोपपत्तेर्लक्षणप्रणयनानर्थक्यमिति । यद्वा लक्षणं लक्ष्यविशेषनिष्ठतया प्रतीयमानं सद्व्यावर्तयत्युत स्वरूपेण प्रतीयमानं, न तावद्द्वितीयः, अतिप्रसङ्गात्, आद्ये तल्लक्षणभेदज्ञाने सति लक्षणाधिकरणत्वं लक्ष्यस्य सिध्येत् ततश्च तन्निष्ठलक्षणसिद्धिः सिद्धाच्च लक्षणाद्भेदज्ञानमिति चक्रकापत्तिः लक्षणसिद्धौ भेदज्ञानं सिध्येत्सिद्धे च तस्मिल्लक्षणमिति परस्पराश्रयस्तथा व्यवच्छेद्यप्रतीतौ व्यवच्छिन्नलक्ष्यनिष्ठलक्षणसिद्धि, र्व्यवच्छेद्यसिद्धिश्च लक्षणान्तरात्तत्राप्येवमित्यनवस्थेति। अस्मिन् पक्षे ज्ञार्यतेऽनेनेति ज्ञानं लक्षणं तदधिकरणं लक्ष्यं तदादिर्यस्य व्यवच्छेद्यस्य तज्ज्ञानाधिकरणादीति तद्गुणसंविज्ञानो बहुव्रीहिस्तस्य लक्षणनिरूपणद्वारा चक्रकाद्यापत्तेरित्यन्वयः। यद्वा सकलभेदज्ञानं लक्षणाधीनं लक्षणं च लक्ष्याधिकरणं[1] वक्तव्यं तदधिकरणमधिकरणत्वविशिष्टतया निपतनप्रति[2]बन्धकत्वादेरननुगमात् लीला[3]वतीकारमतानुसारेण ज्ञानविशेषः ज्ञानं च लक्षणाधीनमिति चक्रकापत्तिरत्रैव ज्ञानं ज्ञाननिरूपणाधीनमित्यात्माश्रयता, तथा ज्ञानं लक्षणाधीनं लक्षणं च ज्ञानाधीनमित्यन्योन्याश्रय इति, अस्मिन्प-

१ चेति पु० पा० ।

२ नियतं न प्रति० इति० पु० पा० ।

३ अयं चेति अधिकं सो० पुस्तके ।

क्षे ज्ञानं चाधिकरणं च ज्ञानाधिकरणे ते आदी यस्याधिकरणत्वस्य तज्ज्ञानाधिकरणादि ज्ञानाधिकरणादि च लक्षणं च ज्ञानाधिकरणादिलक्षणे तयोर्निरूपणद्वारेति योजना ।

सकलमपि द्वैतं प्रमेयं प्रमासिद्ध्यधीनसिद्धिकं ततः प्रमाखण्डने खण्डितं भविष्यतीत्यभिप्रेत्यप्रमाखण्डनमुपक्रमते ।

१७४ प्रमालक्षणखण्डनम् ।

तेषु तावत्तत्त्वानुभूतिः प्रमेत्यप्ययुक्तं तत्त्वशब्दार्थस्य निर्व्वक्तुमशक्यत्वात् । तस्य भावो हि तत्त्वमुच्यते प्रकृतं च तच्छब्दार्थः न चात्र प्रकृतं किञ्चिदस्ति यत्तच्छब्देन परामृश्यते ।

*तेषु तावदिति* तेषु वक्ष्यमाणलक्षणेषु मध्य इत्यर्थः। अनुभूतिः प्रमेत्युक्ते भ्रान्त्यादावतिप्रसक्तिस्तन्निवारणाय तत्त्वेत्युक्तम् । तत्त्वं प्रमेत्युक्ते प्रमेयस्वरूपेऽत्यर्थापत्तिस्तन्निवारणायानुभूतिरिति विशेषणम् । स्मृतिव्यावृत्त्यर्थमप्यनुभूतिविशेषणं अपि शब्दः साधारणदूषणस्य च वक्ष्यमाणविशेषदूषणेन समुच्चयार्थः । कुतोऽयुक्तमित्यत आह *तत्त्वेति* विशेषणांशस्य दुर्निरूपत्वादित्यर्थः । तत्त्वमिति पदं तत्त्वपदं तदर्थस्येत्यर्थः । किं तत्त्वशब्दोऽवयवशक्त्या कञ्चिदर्थमाचष्टे किं वाऽखण्डशक्त्या कस्मिंश्चिद्रूढ इति विकल्प्य, प्रथमे पि प्रकृतं तदर्थः किं वा बुद्धिस्थमात्रमिति विकल्प्य प्रथममुपादत्ते *तस्येति*

४ ऽति व्याप्ति रितिसो० पु० पा० ।

अस्त्वेतावता किं स्यादित्यत आह *प्रकृतमिति* तत्त्वपदार्थस्वरूपमभिधाय तदसम्भवेन लक्षणासम्भवं भणति *नेति*

सर्वनाम स्वमहिम्ना प्रसिद्धमात्रमाचष्टे 'यदाऽऽग्नेयोऽष्टाकपाल' इत्यादावप्रकृताष्टाकपालसमानाधिकरणतया सर्वनाम्नो यच्छब्दस्य प्रयोगदर्शनादिहापि बुद्धिस्थमेव तत्त्वपदार्थ इति द्वितीयमाशङ्कते ।

१७५ तत्त्वशब्दस्य यौगिकार्थानिरुक्तिः ।

अथानुभूत्या स्वसम्बन्धिविषय आक्षेपाद्बुद्धिस्थः कार्यते स तच्छब्देन परामृश्यते, वक्तृश्रोतृबुद्धिस्थतायामेव प्रकरणपदार्थविश्रामात्, तेन यस्यार्थस्य यो भावस्तस्य तत्त्वमुच्यते—इति, न, अरजतादेरपि रजताद्यात्मना अनुभूतिविषयतासम्भवादसत्यानुभूत्यव्यवच्छेदात् भवितुरतत्त्वशब्दार्थत्वप्रसङ्गेन च धर्म्यंशे विशिष्टे च प्रमाया अप्रमात्वापातात् ।

*अथेति* सामर्थ्यं विषयमन्तरेणानुभूतेरनुपपत्तिलक्षणमाक्षेप उच्यते। अनुभूतिरनुभाव्यमाक्षिपतु नाम तावता तत्त्वपदार्थस्य किमायातमित्यत आह *स इति* बुद्धिस्थं तच्छब्दार्थः प्रकृतं वेति नानार्थत्वमापन्नं तत्त्वपदस्येत्यत आह *वक्त्रिति* आरभ्याधीतविषयं प्रकरणमुच्यते तच्च न बुद्धिस्थत्वादन्यन्निरूपयितुं शक्यत इत्यर्थः। एवं तच्छब्दार्थं निरूप्य तत्त्वपदार्थं निर्दिश-

१ तायां पर्येति ख० मू० पु० पा० ।

ति *तेनेति* किं प्रमाणबुद्धिस्थं तत्पदार्थः, किं वा भ्रान्तिबुद्धिस्थ,मुत बुद्धिमात्रविषयः, नाद्यः आत्माश्रयान्नापि द्वितीयो व्याघातादिति, कल्पद्वयं बहिरेव दूषयित्वा तृतीयमतिव्याप्त्या दूषयति *नेति* अरजतादेरपि शुक्त्यादेरजताद्यात्मना भ्रान्तिविषयत्वसम्भवात्तद्भावस्तत्त्वं रजतत्वं तद्गोचराऽनुभूतिः प्रमेत्यसत्यानुभूतेर्मिथ्याज्ञानात्प्रमाया अव्यवच्छेदादव्यावृत्तेरित्यर्थः। किं च भावगोचरानुभूतिः प्रमा,किंवा भवितृगोचरा,किं वा भावविशिष्टभवितृगोचरा, न तावद्वितीयतृतीयौ,परस्परमव्यापनात्,नापि प्रथमः तत्राप्यव्याप्तेरपरिहार्यत्वादित्याह *भवितुरिति* तत्त्वशब्दो यदि भाववाचकस्तदा भावाश्रयस्य भवितुर्घटादेर्भावविशिष्टधर्मिणश्च घटत्वादिविशिष्टस्य तत्त्वपदार्थत्वाभावेन तद्गोचरानुभूतिरप्रमा स्यादिति तत्राव्याप्तं लक्षणमित्यर्थः।

तत्त्वशब्दो योगवृत्त्या कञ्चिदर्थमाचष्ट इति प्रथमकल्पं निराकृत्येदानीमखण्डशक्त्या कस्मिंश्चिदर्थे रूढ इति द्वितीयं कल्पमनुभाषते।

७६ तत्त्वशब्दस्य रूढार्थानिरुक्तिः।

अथोच्यते अवयवार्थचिन्तया दूषणाभिधानमिदं त्यज्यतां, यतोऽयं तत्त्वशब्दः स्वरूपमात्रवचन इति, एतदप्ययुक्तम्। स्वरूपत्वस्य जातेरुपाधेर्वा स्वात्मनि वृत्त्यवृत्तिभ्यामनुपपत्तेः स्वरूपशब्दार्थस्यैकस्यासम्भवेन प्रतिविषयव्यावृत्त्या लक्षणस्याव्यापकत्वापातात्।

१ वि इति सो० पु० अधिकम्।

*अथेति* तत्त्वशब्दस्य रूढत्वेऽप्यर्थविशेषवचनत्वेऽर्थान्तराननुभूतावव्याप्तिः(सामान्यवचनत्वे विशेषाननुभूतावव्याप्तिरिति) कथितदोषतादवस्थ्यमित्यत आह *यत इति* अविवक्षितविशेषं स्वरूपं तत्त्वशब्दोऽन्वाचष्टे तत्त्वार्थविदामित्यादौ तत्त्वशब्दस्य तन्मात्रपरतया व्याख्यातत्वादतो नोक्तदोषोऽतत्त्वज्ञानविषयस्यासंत्वात् स्वरूपाभावात्तद्व्यवच्छेदश्चेत्यर्थः। दूषयति *एतदिति* किमेकं स्वरूपमुतानन्तानि, नाद्यो ऽद्वैतापातात्, द्वितीये चानेकस्वरूपेष्वेकः स्वरूपशब्दोऽनुगतं किञ्चिन्निमित्तमुररीकृत्य गोशब्दवत्प्रवर्त्तते, किं वा तदनपेक्षया, आद्येऽपि निमित्तं जातिरुपाधिर्वा, नतावज्जातिरित्याह *स्वरूपत्वस्येति* स्वरूपशब्दनिमित्तं स्वरूपत्वं यदि जातिस्तदा भाववाचकजातिवचनस्य जातावपि प्रवृत्तेः सा जातिः स्वात्मनि वर्तते न वा, वर्तते चेदात्माश्रयान्योन्याश्रयादि[2]र्न वर्त्तते चेत्स्वरूपत्वस्य स्वरूपशब्दार्थत्वाभावेन निःस्वरूपतया तद्योगिनोऽपि निःस्वरूपतापत्तिरिति। स्वात्मनि वृत्त्यवृत्तिभ्यामनुपपत्तेरित्युक्तं उपाधिरित्यत्राप्येवं दूषणमुन्नेयम्। अनुमतनिमित्तमन्तरेण स्व[3]रूपशब्दस्य स्वरूपवचनत्वमिति द्वितीयं दूषयति *स्वरूपेति* घटादिस्वरूपविशेषस्य तत्त्वपदार्थत्वे पटादिप्रमाया अप्रमात्वापातः सकलस्वरूपविशेषाणां सम्भूय तत्त्वपदार्थत्वे एकैकत्राव्याप्ति-

१ ()एतच्चिन्हान्तर्गतो ग्रन्थः सो० पु० नास्ति।

२ अयोऽन्याचदन्योन्येति क्वचित्पुस्तके पा०।

३ स्वरूपशब्दस्येति सो० पु० नास्ति।

रिति भावः ।

अनुभूतिः प्रमेत्युक्ते विपर्यासादावतिव्याप्तिस्त-न्निरासार्थं तत्त्वमिति विशेषणमिति वक्तव्यं न च तद्यु-क्तमेवंविशेषणेऽप्यतिव्याप्तिस्तादवस्थ्यादित्याह ।

७७ तत्त्वशब्दस्यस्वरूपत्वाच्चित्त्वेऽपि विपर्य्यासादेरनिरासः ।

कथञ्च तत्त्वेति विपर्य्यासादे र्निरासः तथा हि शुक्तौ यो रजतमिति प्रत्ययः सोऽपि स्वरूपबुद्धिर्भवत्येव, न हि धर्मी वा रजतत्वं वा न स्वरूपं नापि तयोः प्रतिभासमानः सम्बन्धो न स्वरूपमिति युक्तं, समवायो हि तयोः स-म्बन्धः प्रतिभाति सच स्वरूपमेव ।

*कथञ्चेति* मिथ्याध्यवसायो विपर्ययो,ऽनिर्द्धारणा-त्मकं ज्ञानं संशय इति लक्षणपर्यालोचनया तत्त्वपद-व्यावर्त्यत्वं प्रतीयत इत्याशङ्क्याह *तथा हीति* निःस्व-रूपत्वे शून्यवदपरोक्षत्वानुपपत्तिरित्येवकारार्थः । रज-तमिति प्रत्ययस्य किमिदमंशो विषयः, किं वा रज-तमुताहो तयोः संबन्धो,न विषयान्तरं संभवतीदं रज-मित्यत्र त्रयाणामेव प्रतिभासाद्यदीदमंशो विषय-स्तत्राह *नहीति* द्वितीयं प्रत्याह *रजतत्वमिति* इद-मंशरजतत्वयोः सत्त्वोपगमादन्यस्य स्वरूपशब्दार्थस्य च निरूपयितुमशक्यत्वादित्यर्थः । यदि तयोः सम्ब-न्धस्तदाऽसौ प्रतिभासमानो विषयः किं वाऽप्रति-भासमानो, नाप्रतिभासमानोऽतिप्रसङ्गाद्यद्यपस्त-

१ रजतत्त्वप्रत्यय इति० का० मु० ख० पु० पा० ।

यः केन सम्बन्धः किं समवायस्वरूपेण किं वा तस्य ताभ्यां सम्बन्धान्तरेण, नाद्य उक्तदोषानुषङ्गात्, द्वितीये सम्बन्धान्तरनिषेधेऽपि न समवायस्य का चित्क्षतिरिति परिहरति *नैवमिति* उक्तमर्थं दृष्टान्तेन स्पष्टयति *नहीति* देवदत्तस्य गेहसंसर्गनिषेधेऽपि न देवदत्तस्य स्वरूपहानिस्तद्वत्समवायस्य शुक्तिसंसर्गनिषेधेऽपि न स्वरूपव्यावृत्तिरित्यर्थः।

यदुपाधौ यत्प्रतिपन्नं तस्मिन्नेव तस्य सत्त्वं स्वरूपं तदेव तत्त्वशब्दार्थो न च तदस्ति भ्रान्तिगोचरस्येति तृतीयं कल्पमाशङ्कते।

७९ देशकालसम्बन्धिस्वरूपस्य तत्त्वशब्दार्थत्वनिरासः।

न स्वरूपमात्रं तत्त्वमुच्यते किन्तु यद्देशकालसम्बन्धि यत्स्वरूपं प्रतीतं तस्य तद्देशकालसम्बन्धि[2] स्वरूपं तत्त्वमुच्यत इति चेत्[3]। मैवम्। देशकालसम्बन्धांशे प्रमाया अप्रमात्वापातात्।

*नस्वरूपमात्रमिति* देशकालसम्बन्धेषु देशादिसम्बन्धोऽस्ति न वा, ऽस्ति चेत्स एव चेद्देशादिरात्माश्रयोऽन्यश्चेदन्योन्याश्रयादिरिति प्रथमं दूषयति *मैवमिति* यदि देशादौ देशान्तरादिसम्बन्धो नास्ति तदा तद्गोचरप्रमायां लक्षणाव्याप्तिरित्याह *देशेति* अयं घट इत्यत्र पुरोदेशवर्तमानकालसम्बन्धो घटे

१ यत्प्रतीयते तस्य तदुपाधौ सत्त्वं इति सो० पु० पा०।

२ सम्बद्धं इति सो० मू० पु० पा०।

३ का० मु० सं० पु० चेत् नास्ति।

आह *नापीति* अवभासमानोऽपि भ्रान्तिविषयत्वादसन्नित्याशङ्क्य तस्य स्वरूपं दर्शयितुं पच्चविशेषमाश्रित्य सम्बन्धविशेषमाह *समवाय इति* इदमिति सामान्यं रजतमिति विशेषस्तद्वैपरीत्येन वा तयोः सम्बन्धः समवाय इति तार्किकाः, तादात्म्यमिति भाट्टा, स्तत्र तत्त्वानुभूतिरिति लक्षणस्य तार्किकसमयत्वात्तन्मतमनुसृत्योक्तं समवाय इति । अस्त्वेतावता किमित्याशङ्क्याह *स चेति* किमिदं स्वरूपं नाम किं सत्त्वमात्रं, किं वा यद्विशेषणविशिष्टतया यत्प्रतिपन्नं तस्य तद्विशिष्टतयैव सत्त्व,मुत यदुपाधौ यत्प्रतिपन्नं तस्मिन्नेव तस्य सत्त्व,माहो स्विद्यद्रूपं यत्प्रातिपन्नं तस्य ताद्रूप्येण परमार्थतोऽवस्थितत्वं, यद्याद्यस्तर्हि भ्रान्तिगोचरः समवायोऽपि स्वरूपमेवान्यथा समवायविलोपेन पदार्थन्यूनतापातादित्यर्थः ।

न सत्त्वमात्रं स्वरूपं किन्तु विशिष्टं सत्वं न चात्र शुक्तिरजतत्वाभ्यां विशिष्टं सत्वमस्तीति द्वितीयं शङ्कते ।

७८ विशिष्टसत्त्वस्य स्वरूपत्वनिरासः ।

सत्यं समवायः स्वरूपं स एव तु[2] शुक्तिव्यक्तौ रजतत्वस्य नास्तीति चेत् । मैवम् । तत्र नास्तित्वेऽपि स्वरूपताया अव्यावृत्तेः न हि गृहे देवदत्तो नास्तीति स्वरूपं न स्यात् ।

*सत्यमिति* शुक्तौ रजतत्वस्य समवायो नेति न

१ नैय्यायिकमतमाश्रित्येत्यर्थः ।
२ स एव च इति सो० पु० पा० ।

स्तः केन सम्बन्धः किं समवायस्वरूपेण किं वा तस्य ताभ्यां सम्बन्धान्तरेण, नाद्य उक्तदोषानुषङ्गात्, द्वितीये सम्बन्धान्तरनिषेधेऽपि न समवायस्य का चित्क्षतिरिति परिहरति *नैवमिति* उक्तमर्थं दृष्टान्तेन स्पष्टयति *नहीति* देवदत्तस्य गेहसंसर्गनिषेधेऽपि न देवदत्तस्य स्वरूपहानिस्तद्वत्समवायस्य शुक्तिसंसर्गनिषेधेऽपि न स्वरूपव्यावृत्तिरित्यर्थः ।

यदुपाधौ यत्प्रतिपन्नं[1] तस्मिन्नेव तस्य सत्त्वं स्वरूपं तदेव तत्त्वशब्दार्थो न च तदस्ति भ्रान्तिगोचरस्येति तृतीयं कल्पमाशङ्कते ।

७९ देशकालसम्बन्धिस्वरूपस्य तत्त्वशब्दार्थत्वनिरासः ।

न स्वरूपमात्रं तत्त्वमुच्यते किन्तु यद्देशकालसम्बन्धि यत्स्वरूपं प्रतीतं तस्य तद्देशकालसम्बन्धि[2] स्वरूपं तत्त्वमुच्यत इति चेत्[3] । नैवम् । देशकालसम्बन्धांशे प्रमाया अप्रमात्वापातात् ।

*न स्वरूपमात्रमिति* देशकालसम्बन्धेषु देशादिसम्बन्धो स्ति न वा, ऽस्ति चेत्स एव चेद्देशादिरात्माश्रयो ऽन्यश्चेदन्योन्याश्रयादिरिति प्रथमं दूषयति *नैवमिति* यदि देशादौ देशान्तरादिसम्बन्धो नास्ति तदा तद्गोचरप्रमायां लक्षणाव्याप्तिरित्याह *देशेति* अयं घट इत्यत्र पुरोदेशवर्तमानकालसम्बन्धो घटे

१ यत्प्रतीयते तस्य तदुपाधौ सत्त्वं इति सो पु० पा० ।
२ सम्बद्धं इति सो० मु० पु० पा० ।
३ का० मु० खं० पु० चेत् नास्ति ।

स्फुरति, तत्र प्रतिपन्नोपाधिदेशादिमतो घटाकारस्य तत्त्वपदार्थतया तद्गोचरानुभूतिः प्रमा स्यादेव देशादीनां पुनर्देशान्तराद्युपाधिप्रतिपन्नसत्त्वतत्त्वपदार्थत्वाभावेन तद्गोचरानुभूतिरप्रमा स्यादित्यर्थः ।

देशस्वरूपं कालस्वरूपं तत्सम्बन्धस्तत्सम्बन्धी चेति चत्वारस्तत्त्वपदार्थास्तेषामन्यतमगोचरानुभूतिः प्रमेति लक्षणस्य नाव्याप्तिरिति शङ्कते ।

८० चतुर्णां तत्त्वशब्दवाच्यत्वनिरासः ।

*तयोः स्वरूपमेव तत्त्वशब्दार्थ इति चेन्न। तत्त्वपदस्यानेकार्थत्वे लक्षणाव्यापकत्वापत्तेः ।

*तयोरिति* देशकालसम्बन्धानां बहुत्वेऽपि तयोरिति देशकालयोरेवोपादानं सम्बन्धस्य सम्बन्ध्यधीनत्वाभिप्रायम् । देशकालतत्सम्बन्धानां तत्सम्बन्धस्य च तत्त्वपदार्थत्वे सम्भूय प्रत्येकं वाऽननुगमादव्याप्तिरिति दूषयति *नेति* ।

यद्यद्रूपं प्रतिपन्नं तस्य ताद्रूप्येण व्यवस्थितत्वं तत्त्वपदार्थ इति चरमपक्षमाशङ्कते ।

८१ तद्रूपेण प्रतीतस्य तथा भावस्तत्त्वमिति चरमपक्षनिरासः ।

अथैवं ब्रूषे यद्यथाभूतं प्रतीयते तत्तथा परमार्थतो व्यवस्थितं तत्त्वमुच्यते । नैतदपि युक्तं, यद्यथाभूतं प्रतीयते तद्यदि प्रतीतिसमयमपहाय कालान्तरे तथाभूतं स्यात्तदाप्येवं तत्त्वं स्यादेवेति भाविपाकजरागः कुम्भः

---

१ रागजराग इति सो० मू० पु० पा० ।

* तदेति क्वचिदधिकम् ।

श्यामदशायामपि रक्तपित्तिना रक्ततयोपलभ्यमान स्त. त्त्वं स्यादिति तद्बुद्धेः प्रमात्वापातः । यदा तदेति वि-शेषणप्रक्षेपणे च कालविशिष्टताप्रतीतेरप्रमात्वापातोन हि कालवैशिष्ट्येपि कालान्तरसम्बन्धः सम्भवी ।

*अथेति* प्रमाणबलात्ताद्रूप्यनिश्चयः प्रमाणं च प्रमाकरणं ततश्च प्रमासिद्धौ तत्करणप्रमाणसिद्धिस्त-त्सिद्धौ च ताद्रूप्यसिद्धिस्ततश्च तद्गोचरानुभूतिप्रमा-सिद्धिरेति चक्रकापत्त्या दूषयति *नैतदिति* किं च यद्यथा प्रतीयते तस्य तथा व्यवस्थानं प्रतीतिसमये ऽपेक्ष्यते, किं वा कालान्तरे, उताविवक्षितविशेषे का-लमात्र इति, त्रिधा विकल्प्य न तावत्प्रतीतिसमये ऽतिव्याप्तेः न हि यदैवेदं रजतमिति प्रतीयते तदैव बा-ध्यते भ्रान्तस्याप्रवृत्त्यापातादिति प्रथमं बहिरेव दू-षयित्वा द्वितीयमनुवदति *यद्यथेति* अतिव्याप्त्या दूषयति *तदेति* तदाऽप्येवं भ्रान्तिगोचरोऽपि तत्त्वं स्यादिति लक्षणस्यातिव्याप्तिरिति शेषः । भ्रान्तिप्र-तिपन्नं प्रतीतिकालमपहाय कालान्तरे ताद्रूप्येण स्थि-तं रजतादि न दृश्यते नातोऽतिव्याप्तिरित्यत आह-*भावीति* पाकजश्चासौ रागश्चेति पाकजरागः स च भावी चेति भाविपाकजरागः स यस्य स तथोक्तः स चासौ कुम्भश्चेति तादृगुद्रिक्तपित्तस्य नायना रश्म-

१ श्यामता इति का० मु० खं० पु पा० ।
२ क्षेपणे च इति का० मु० खं० पु० पा० ।

योघटग्रहणाय प्रवृत्ता दुष्टाः सन्तो वस्त्वन्तरवर्तिनं रक्तिमानं घटसमानाधिकरणतया गृण्हन्ति दैवगत्या परस्ताद्भविष्यतीति तदपि तत्त्वं स्यात्। भवतु को दोषस्तत्राह *इतीति* भाविपाकजरागश्यामतादशायां दुष्टेन्द्रियेण यद्यपि रक्ततयोपलभ्यते रक्तपित्तिना पुरुषेण तथा ग्रहणा, त्तथाऽपि तदा रक्तो न भवति यत्तु यदा प्रतीयते तत्तदा दैवगत्याऽप्यबाध्यतया व्यवस्थितं तत्त्वमुच्यते नारोपितं तत्त्वमित्युक्तत्वात्तत्राह *यदा तदेति* यद्यथा भूतं यदा प्रतीयते तत्तदा परमार्थतो व्यवस्थितमिति लक्षणकरणे कालस्य कालान्तराभावात्कालांशे कालवैशिष्ट्यांशे च यदा तदेति विशेषणायोगादव्याप्तिरित्यर्थः। एतेन तृतीयकल्पोऽप्यपहस्तितो मन्तव्यः। कालविशिष्टेऽपि वस्तुत्वात्कालसम्बन्धानुमानान्नाव्याप्तिरित्याशङ्क्याह * न हीति * यत्कालविशिष्टो घटस्तस्मिन्कालविशिष्टे नान्यः कालो वर्ततेऽनवस्थादेरपरिहार्यत्वात्सोऽपि तस्मिन्न निरूपाधिके वर्तेताऽऽत्माश्रयप्रसङ्गादित्यर्थः।

कालस्यैकत्वेऽप्युपाध्यन्तरविशिष्टेन कालेन सम्बन्धो भविष्यतीति शङ्कते।

८२ कालस्य कालान्तरेण सम्बन्धाभावः।

अन्योपाध्यवच्छिन्नः सोऽन्योपाध्यवच्छिन्नेन सम्भन्त्स्यत इति[1] चेत् तर्हि दण्ड्यपि देवदत्तः कुण्डलिनं स्वमारोक्ष्यत्येव। उपाधिभेदेऽप्युपधेयस्यैकत्वानिवृत्तेर्नैवमि-

---

१ सम्भन्त्स्यतीति का० मु० सं० पु० पा०।

ति चेत् तुल्यम् ।

*अन्येति* सम्भन्त्स्यते सम्बद्धो भविष्यतीत्यर्थः। कालस्यैकत्वेऽपि तदवच्छेदकसवितृगत्याद्युपाधिभेदादेकोपाध्यवच्छिन्नस्यापरोपाध्यवच्छिन्नत्वं सम्भवति यथा संवत्सरावच्छिन्नस्य पक्षावच्छेदस्तदवच्छिन्नस्य दिवसाद्यवच्छेदस्ततश्च किञ्चिदुपाधिविशिष्टकालस्योपाध्यन्तरविशिष्टकालान्तरेण सम्बन्धसम्भवान्नान्याप्तिरित्यर्थः।उपाधिविशिष्टःकालो नोपाध्यन्तरविशिष्टस्वात्मना सम्भन्त्स्यते वस्तुत्वाद्देवदत्तवदन्यथा दण्डी देवदत्तः कुण्डलिनं स्वात्मानं यज्ञदत्तमिवारोहेदिति विपक्षे बाधमाह *तर्हीति* स्वप्रतियोगिकभेदाभावाधिकरणत्वं तत्रोपाधिरिति शङ्कते *उपाधीति* कालस्वरूपस्योपहितस्य स्वप्रतियोगिकभेदाभावाधिकरणत्वमस्तीति साधनव्यापक उपाधिरित्याह *तुल्यमिति*

नायं तत्त्वशब्दः स्वरूपवचनः किन्तु कारणत्ववचनस्तदुक्तदोषपरम्परा नास्तीत्याशङ्क्याह ।

८३ कारणस्य तत्त्वशब्दवाच्यत्वनिरासः ।

एतेन कारणं तत्त्वमित्यपि निरस्तम् । सर्वस्य[1] तथात्वे प्रमित्यभावेनात्माश्रयेण च प्रतिक्षणविशिष्टत्रि[2]-श्चावश्यकारणत्वोपगमे[3]दुरपवादार्थक्रियाकारित्वस्वरूपस-

१ सर्वेतथात्त्व इति सो० पु० पा० ।

२ विशिष्टस्येति सो० पु० पा० ।

३ पगमे दुरपवादेति का० मु० पु० पा० ।

स्वलक्षणाङ्गीकारिजैनचरणशरणप्रवेशविडम्बनापादिदोष-ग्रासेन चेति ।

*एतेनेति* नियतप्राक्सत्त्वरूपत्वात्कारणत्वस्य कालस्य च कालान्तराभावेन नियतप्राक्कालसत्त्वकारणत्वासम्भवात्कालांशे विशिष्टांशे च ज्ञानमप्रमा स्यादित्यर्थः । कालातिरिक्तपदार्थानां कारणत्वं नियतप्राक्कालसत्त्वं कालस्य पुनर्नियतपूर्वत्वं तेन कालस्याऽपि कारणत्वान्नाव्याप्तिरित्यत आह * सर्वेति * सर्वस्य तथात्वे–कारणत्वे प्रमित्यभावेन–प्रमाणाभावेन च निरस्तमिति पूर्वेणान्वयः, न हि सर्वं कारणमिति प्रमातुं शक्यमन्त्यकार्यस्याकारणत्वात्। तदपि स्वविषयस्य योगिप्रत्यक्षस्य कारणमिति चेन्न।शुक्तिरूप्यप्रत्यक्षस्य स्वविषयाजन्यत्वात् । प्रमाभेदस्य प्रत्यक्षस्य स्वविषयजन्यत्वं नियतमिति चेन्न । चक्रकापत्तेः प्रमासिद्धौ हि तद्भेदप्रत्यक्षसिद्धिस्तत्सिद्धौ चान्त्यकार्यस्य तज्ज्ञानजनकत्वेन कारणत्वसिद्धिस्तत्सिद्धौ च तत्त्वानुभूतिप्रमासिद्धिरिति ।आत्माश्रयेण च निरस्तमिति सम्बन्धः। कारणं चेत्त्वं तदा कारणानुभूतिः प्रमेत्युक्तं स्यात्कारणं च कारणत्वाधिकरणं तथा च कारणत्वे कारणत्वमस्ति न वा, न चेत्कारणत्वज्ञानमप्रमा स्यादस्ति चेत्कारण[२]त्वान्तरं तदेव वा, कारणत्वान्तरं चेदनवस्था, तदेव चेदात्माश्रय इत्यर्थः। किं च पूर्वक्षणवर्तिघटस्योत्तरक्षणवर्तिघटम्प्रति कारणत्वमस्ति न वा, न चेद्घटोऽ

१ कारणत्व इति का० मु० पु० पा० ।
२ त्कारणत्वान्तरं चेदनवस्थेति सो० पु० पा० ।

थमिति धारावाहिकविज्ञानस्यातत्त्वानुभूतित्वेनाप्रमात्वापातोऽस्ति चेदर्थक्रियाकारित्वं सत्वमिति माहायानिकपक्षानुप्रवेशः प्रतिक्षणविशिष्टकारणतोपगमादित्याह * प्रतीति * प्रतिक्षणविशिष्टस्य विश्वस्यावश्यकारणता तस्या उपगमस्तेन दुरपवादं दुःखेन निरसनं यस्य तच्चार्थक्रियाकारित्वमिति तथोक्तं तच्च स्वरुपसत्त्वस्य लक्षणमिति प्रतिक्षणविशिष्टविश्वावश्यकारणतोपगमदुरपवादार्थक्रियाकारित्वस्वरूपसत्त्वलक्षणं, यदेवार्थक्रियाकारि तदेव परमार्थसदिति बौद्धैर्लक्षणाभिधानात्तदङ्गीकरोतीति स्वरूपसत्वलक्षणाङ्गीकारी स च जैनश्चेति तथोक्तः जिनो भदन्तस्तत्समयानुसारी जैनस्तस्य चरणौ जैनचरणौ तयोः शरणं प्रवेशः स एव विडम्बना विलासस्तामापादयितुं शीलं यस्य दोषस्य स जैनचरणशरणप्रवेशविडम्बनापादिदोषस्तद्ग्रासेन निरस्तमित्येवं सम्बन्धः । एतदुक्तम्भवति नियतप्राक्सत्त्वरूपत्वात्कारणत्वस्य पूर्वपूर्वक्षणावच्छिन्नघटस्योत्तरोत्तरक्षणावच्छिन्नघटं प्रति कारणत्वमवश्यमेष्टव्यं अन्यथा धारावाहिकविज्ञानानामप्रमात्वापातात्ततश्च कालपरमांशावच्छिन्नसत्त्वरूपं क्षणिकत्वमिष्टं स्यात्तथाऽर्थक्रियाकारित्वं सत्त्वमपीष्टं स्यात्तद्वयं स्थिरवादिनामनिष्टमतश्चेष्टहानिरनिष्टापत्तिरिति दूषणद्वयमापन्नमिति। इतिशब्दो लक्षणविशेषणांशदूषणसमाप्तौ ॥

इति तत्त्वशब्दनिर्वचनखण्डनम् ।

---

१ अर्थक्रियाकारित्त्वमिति० सो० पु० पा० । २ बौद्धपक्षः ।
३ कारणान्तरोपगमादिति पु० पा० ।

एवं तावत्तत्त्वेति लक्षणविशेषणांशं निराकृत्यानुभूतिरिति विशेष्यांशं खण्डयितुमुपक्रमते।

८४ अनुभूतित्वविकल्पाः।

किंचेदमनुभूतित्वं नाम? ज्ञानत्वावान्तरजातिभेदो वा?—१ स्मृतिव्यतिरिक्तज्ञानत्वं वा?—२ स्मृतिलक्षणरहितज्ञानत्वं वा?—३ तदविदूरप्राक्कालोत्पत्तिनियतासाधारणकारणकबुद्धित्वं वा?—४।

*किं चेति* इदमनुभूतित्वं किमिति विकल्पाभिप्रायेणोक्तं तानेव विकल्पान्विशदयति *ज्ञानत्वेति* ज्ञानत्वं नाम परसामान्यं तदवान्तरसामान्यविशेषो ऽनुभूतित्वमिति प्रथमकल्पार्थः। अनुभूतित्वं नजातिः किन्त्वौपाधिको धर्म इति पक्षे ऽप्युपाधिं विकल्पयति *स्मृतीति* ज्ञानत्वे सति स्मृत्यन्योन्याभाववत्वमुपाधिस्तन्निबन्धनो धर्मो ऽनुभूतित्वमित्यर्थः। स्मृतिव्यतिरिक्तत्वेन प्रसिद्धस्य विपर्यासादेः स्मृतिलक्षणं योजयति प्राभाकरस्तदभिप्रायेणाह *स्मृतिलक्षणरहितेति* ज्ञानत्वे सति केवलसंस्कारजत्वात्यन्ताभावाधिकरणत्वमुपाधिस्तन्निबन्धनो धर्मो ऽनुभूतित्वमित्यर्थः। न्यूनतापरिहाराय सम्भावितं पक्षान्तरमाह *तदिति* तस्या जायमानबुद्धेरविदूरश्च स प्राक्कालश्चेति तदविदूरप्राक्कालस्तस्मिन्नुत्पत्तिस्तया नियतमसाधारणं कारणं यस्या बुद्धेः सा तदविदूरप्राक्कालोत्पत्तिनियतासाधारणकारणबुद्धिस्तद्भावस्तत्त्वं तदनेन स्मृतिर्व्यावर्त्यते तस्या हि संस्कारोऽ

साधारणकारणं स च विदूरोत्पन्न एव, साधारणकारणानामात्मान्तःकरणसंयोगादीनामचिरोत्पन्नत्वादसाधारणेति विशेषणमिन्द्रियसंयोगलिङ्गपरामर्शादिजन्यबुद्धित्वमुपाधिरित्युक्तम्भवति ।

व्यक्तिविशेषाणां जातिव्यञ्जकत्वस्वाभाव्यादनुभूतित्वं जातिरिति प्रथमकल्पो ऽस्त्वित्याशङ्क्याह ।

८५ अनुभूतित्वस्यानुभवामीतिप्रत्ययमूलत्वानिरुक्तिः ।

न तावदाद्यः। तथाहि अनुभूतित्वं नाम जातिरेकाऽभ्युपगम्येति कुतः?, अनुभवामीति प्रत्ययानुगमवशादिति चेन्नामाघमासीयनिशावसाने सितासितसारित्सम्भेदस्नायिनः सत्यपि शब्दबलादुभाविस्वकीयस्वर्गसुखसम्प्रत्यये सुखमनुभवामीति प्रतीत्यनुदयात् प्रत्युत शीतसम्भूतवेदनासम्वेदनादेव,परस्त्रियञ्च सम्भुञ्जानस्याऽऽस्तिककामुकस्य शब्दाधीने सत्यपि भाविनरकगमनानुभवनीययातनाधिगमे दुःखमनुभवामीति मतेरनुत्पत्तेः प्रत्युतामन्दमानन्दं सम्विदन् साम्प्रतमस्मीति प्रत्ययात्। यदि तु शब्दोपदर्शितव्याप्तिजमनुमानमनुभव एव स्यात् तर्हि सुखं दुःखं वाऽनुभवामीति तयोः प्रत्ययः स्यात्।

*न तावदिति* जातित्वाभावं प्रमाणाभावेनोपपा-

१ कुत एतदिति सो० पु० पा० ।
२ शीतसम्भेदसम्भूतेति सो० मू० पु० पा० ।
३ रनुपपत्तेरिति० सो० मू० पु० पा० ।
४ साम्प्रतमहमस्मीति सो० पु० पा० ।

दयति*तथाहीति*जातिबाधकागोचरत्वे सत्यनुगतप्रत्ययगोचरत्वं सामान्यव्यवस्थापकं तदिहाऽप्यस्तीति तद्बलादनुभूतित्वजातिकल्पनेति शङ्कते*अनुभवामीति* गौर्गौरित्यनुगतप्रत्ययवत्स्तम्भमनुभवामि कुम्भमनुभवामीति प्रत्ययसामर्थ्यादित्यर्थः। यद्वाऽनुभवत्वकल्पनायामनुभवामीति प्रत्ययो मूलं, किं वा साक्षात्कारित्व,मुत स्मृतिव्यावृत्तरूप,मिति त्रिधा विकल्पय प्रथमविकल्पानुवादः। अनुगतप्रत्ययविषयत्वं किं लक्षणमुच्यते, किं वाऽनुभवामीति प्रत्ययोऽनुभवत्वसामान्ये प्रमाण,मुभयथाऽप्यनुपपत्तिरित्यभिप्रेत्य दूषयति *नेति * माघमाससम्बन्धिनी निशा माघमासीयनिशा तस्या अवसानं किञ्चिदभ्युदयकालस्तस्मिन्। उक्तं हि-

"माघमासे रटन्त्यापः किं चिदभ्युदिते रवौ।
महापातकिनं वा ऽपि कं पतन्तं पुनीमह" इति

"सितासिते सरिते यत्र सङ्गते तत्राप्लुतासो दिवमुत्पतन्ती"ति शब्दबलात्सत्यपि तत्रानुभवामीति प्रतीत्यनुदयादिति सम्बन्धः॥ एतदुक्तम्भवति न तावदनुभवामीति प्रत्ययविषयत्वमनुभवस्य लक्षणं शब्दजन्यविज्ञानादावनुभवत्वे सत्यपि तदव्यापनात्। नचानुभवत्वस्यैकत्वात् क्व चित्सत्तामात्रेणान्यत्र तदभावेऽपि नाव्याप्तिरिति वाच्यम्। तथा सत्येतद्बलादेव घटादावपि तत्स्वीकारप्रसङ्गात्। नापि प्रमाणं, शाब्दविज्ञानादौ कदा चिदप्येतदनुदयात्प्रमाणमन्तरेण प्रमेयस्वीकारस्यातिप्रसङ्गित्वेन तदसिद्धेरिति। शाब्दविज्ञानस्याज्ञातसुखगोचर-

१ ब्रह्मघ्नं वा सुरापं वा इति कुत्रचित्पाठ उपलभ्यते।

तथाऽनुभवामीति प्रत्ययविषयत्वं किमिति न कल्प्यत इत्याशङ्क्य तद्विरुद्धदुःखानुभवसामर्थ्यादित्याह * प्रत्युतेति *शीतात्सम्भूता या वेदना तस्याः सम्वेदनमनुभवस्तस्मादित्यर्थः। न केवलं साधकप्रत्ययाभावः किन्त्वत्र बाधको विपरीतप्रत्यय एवेति भावः। उक्तार्थद्रढिम्ने उदाहरणान्तरमाह *परेति* शास्त्रार्थनिश्चयवत्वे सति कामुक आस्तिककामुकस्तत्र कामुक इत्यनेन निषिद्धप्रवृत्तौ रागो मूलमिति दर्शयति, परस्त्रियं नगच्छेदित्यादि शास्त्रबलाद्भाविनरकगमनानुभवनीययातनाधिगमे सत्यपि दुःखमनुभवामीति प्रतीतेरनुत्पत्तेरिति सम्बन्धः । नरकगमनेनानुभवनीययातना दुःखं तस्या अधिगमः सचभावी चेति तथोक्तः। परानुभवस्याप्रत्यक्षत्वात्कथं तदभावो ज्ञायत इत्याशङ्क्य तद्विरुद्धसुखानुभवस्य मुखप्रसादादिलिङ्गेनानुमानादित्याह * प्रत्युतेति * अमन्दमनल्पमित्येतत्साम्विदन्ननुभवन्निति यावत् । एवं सति शब्दज्ञानस्यानुभवत्वेऽनुभवामीति प्रत्ययेन भवितव्यं अननुभवत्वेऽप्रमात्वापातादिति फलितमाह * यदीति * यद्वा भाविसुखदुःखज्ञानं शब्दानुभवो न भवति शब्दस्य सामान्यविषयत्वेन देवदत्तादिगतसुखदुःखसाधनत्वप्रतिपादकत्वाभावादित्याशङ्क्य तथापि शब्दोपदर्शितसुखदुःखसाधनत्वव्याप्त्युपजीवनेनाऽऽनुमानिकोऽनुपपत्तिजन्य औपादानिकोऽनुभव एवायमभ्युपगन्तव्यः तथा च तत्राप्यनुभवामीति प्रत्ययः प्रसज्येतेत्याह * यदीति * शब्देनोपदर्शिता व्याप्तिः प्रयागस्नानं स्वर्गसाधनमिति

व्याप्तिस्ततो जन्म यस्यानुमानस्य तत्तथोक्तं अहं स्वर्गगामी प्रयागस्नायित्वात्सम्प्रतिपन्नपुरुषवदित्यादिरूपं द्रष्टव्यम् ।

अनुभवामीति प्रत्ययव्यवहारौ यद्यप्यनुभूतित्वसामान्यगोचरौ तथापि प्रत्यक्षज्ञाने साक्षात्त्वस्यैव तदर्थतया गृहीतत्वाद्व्याप्तिसुखादिज्ञाने च साक्षात्त्वाभावादनुभवामीति प्रत्ययाद्यभावो नानुभूतित्वाभावादिति शङ्कते ।

८६ अनुभवत्वकल्पने साक्षात्त्वस्य मूलत्वनिरासः ।

अथ मन्यसे साक्षात्कारमनुभवार्थमनुरुध्य[1] तयो नैवमधिगमव्यवहारौ शब्दज्ञानुमानापेक्षौ तु विमर्शकस्य स्यातामेव ताविति, तर्हि साक्षात्कारिणि ज्ञानेऽनुभवप्रत्ययव्यवहारौ साक्षात्त्वनिबन्धनाविति तत्रानुभवत्वजातिकल्पनायां न प्रयोजनप्रमाणे इत्यनुभूत्यर्थभेदाल्लक्षणाऽननुगमो दोषः।

*अथेति* तर्ह्यत्रानुभवत्वं न स्यात्प्रमाणाभावादित्यत आह *शब्देति* विचारकस्य प्राग्दर्शितानुमानापेक्षयाऽनुभवामीति प्रतीतिव्यवहारौ स्यातामेवेत्यर्थः । अनन्यथासिद्धानुगतप्रत्ययव्यवहारौ जातिकल्पनायां प्रमाणमिह च प्राप्ताप्राप्तविवेकाभ्यां साक्षात्त्वेनैव तयोरुपपत्तेर्न प्रत्यक्षज्ञानेऽनुभूतित्वासिद्धिरित्येकं सन्धित्सतोऽपरन्ते प्रच्युतमिति दूषयति *तर्हीति* साक्षात्कारिणि विज्ञाने साक्षात्त्वनिबन्धनत्वं तयोरस्तु तावता तव

---

१ साक्षात्कारत्वमनुभवार्थमिति सो० मू० पु० पा० ।

को लाभ इत्यत आह *इतीति* व्यवहारसिद्धिः प्रयोजनं प्रत्ययश्च प्रमाणं न भवत्यन्यथाऽप्युपपत्तेरिति यावत्, एवञ्च सत्यनुभूतिशब्दार्थभेदात्तत्वानुभूतिः प्रमेत्युदयनोक्तलक्षणं प्रत्येकस्य मिलितस्य वा ऽननुगमादुन्मत्तप्रलपितं स्यादित्याह * इतीति * इति शब्दो यस्मादर्थे ।

अनुगतव्यवहारादिकार्यलिङ्गेन किञ्चित्कारणमनुमीयते न तत्साक्षात्कारित्वमननुगमादतश्च साक्षात्कार्यसाक्षात्कारिसाधारणमनुगतव्यवहारकारणं कल्पनीयं साऽनुभूतित्वजातिरिति परिशेषात्तत्सिद्धिमाशङ्कते ।

८७ स्मृतिव्यावृत्तत्वस्य अनुभवत्वकल्पकत्वनिरासः ।

अथ स्मृतिव्यावृत्तेन रूपेण यः प्रत्यक्षादिष्वनुभव इत्यनुगतावगमः स साक्षात्कारित्वादनुपपन्नः ततश्च साक्षात्कार्य्यसाक्षात्कारि [1]विशेषसाधारणमनुभूतित्वमन्यै[2]देष्टव्यमित्युच्यते तदपि न युक्तं, पदार्थान्तरव्यावृत्तेन रूपेण यस्तदितरेष्वनुगतप्रत्यय स्तद्व्यवहारो वा तत्र तदेव रूपं निमित्तं न तु जातिः काचित्तदनुरोधात्कल्प्यते, तथा सत्यनक्षपदार्थेभ्यो घटा[3]दिभ्यो व्यावृत्तेन रूपेण विभीतकादिषु साम्यावगमादक्षत्वादिजातिः कल्प्या प्रसज्येत ।

---

१ साक्षात्कारिविशेषेषु साधारणमिति० का० मु० पु० पा० ।
२ न्यदेवैष्टव्यमिति का० मु० पु० पा० ।
३ घटपटादिभ्य इति मो० पु० पा० ।

*अथेति* अनुभवामीति प्रत्ययव्यवहारौ न स्मृतिव्यावृत्तिव्यतिरिक्तनिमित्तवन्तौ तद्व्यावृत्तिगोचरप्रत्ययादित्वादनक्षपदार्थव्यावृत्ताविभीतकादिगोचरतद्व्यावृत्तिव्यतिरिक्तनिमित्तहीनाक्षमितिव्यवहारादिवदिति सामान्यतोदृष्टप्रयोगविरोधान्नैवमिति परिहरति *तद्पीति*विपक्षबाधकाभावाद्धेतोरप्रयोजकत्वशङ्कां वारयति *तथेति*

अनुभूतित्वं जातिः जातिबाधकाविषयत्वे सत्यनुगतप्रत्ययवेद्यत्वाद् गोत्ववदित्यत्र विशेषणासिद्धो हेतुः सङ्करविषयत्वादित्यभिप्रेत्याह ।

८८ साङ्कर्यम्प्रदर्शयितुं प्रत्यभिज्ञाविकल्पाः ।

इतोऽपि नानुभूतित्वं नाम स्मृतिव्यावृत्ता जातिः तथा हि-घटः स एवायमिति तावत्प्रत्यभिज्ञा जायते सा किं स्मृत्यनुभवरूपं ज्ञानद्वयम्?-१ एकमेव वा विज्ञानमंशे स्मृतिरंशे चानुभवः?—२ उत स्मृतिरेव?—३ आहोस्वित् अनुभव एव ? ४ ।

* इतोपीति* परस्परव्यभिचारिणोरेकत्र स्थितिः साङ्कर्यं न चेह तदस्ति, स्मृतित्वस्य केवलसंस्कारजे ज्ञानेऽवस्थानादनुभूतित्वस्य चाक्षसन्निकर्षजेऽवस्थानादित्याशङ्क्य, प्रत्यभिज्ञायां नास्ति साङ्कर्यं तथाऽपि प्रत्यभिज्ञायां तद्दर्शयितुं तदुपन्यस्यति *तथा हीति* एकस्य कालद्वयसम्बन्धग्राहि ज्ञानं प्रत्यभिज्ञेति केचित्, कालद्वयसम्बन्धोपलक्षितस्वरूपैक्यग्राहि ज्ञानं प्रत्यभिज्ञेति-

तत्त्वविदः । प्रत्यभिज्ञानं स्मृतित्वानुभूतित्वाधिकरणं न भवति प्रत्ययत्वादभिज्ञाप्रत्ययवदित्याशङ्क्य तदुपपादयितुं विकल्पयति *सेति* संस्कारेन्द्रियसम्प्रयोगाख्यसामग्रीद्वैविध्यात्प्रत्यभिज्ञानमपि स्मृत्यनुभवरूपं ज्ञानद्वयमिति । दधिमधुनोः पृथक्कार्यहेत्वोरपि संमिलितयोः पुष्ट्यैककार्यहेतुत्ववत्संस्कारसम्प्रयोगयोरपि मेलनोपाधावेकसामग्रीकत्वादेकमेव ज्ञानमिति कल्पान्तरमाह *एकमिति* ज्ञानैक्ये कथं तदेतदुल्लेख इत्यत आह * अंश इति * स इत्यंशो संस्कारजत्वात्स्मृतिरयमित्यंशे सम्प्रयोगजत्वादनुभव इत्यर्थः । ज्ञानस्य स्मृत्यनुभवांशत्वादर्शनादनुभवव्यतिरिक्तत्वे सति ज्ञानत्वात्स्मृतिरेवेति पक्षान्तरमाह *उतेति* अक्षसम्प्रयोगजत्वादनुभव इति पक्षमाह * आहो स्विदिति *

स इत्यंशस्यानुभवेऽयमित्यंशस्य च स्मृतावदर्शनाज्ज्ञानद्वयमेव प्रत्यभिज्ञेति प्रथमपक्षं प्रापय्य पराकरोति ।

८९ अभेदस्य स्मृतावनुभवे चानन्तर्भावादाद्यकल्पानुपपत्तिः ।

आद्ये य एष प्रत्यभिज्ञायां प्रागवस्थाविशिष्टादिदन्ताविशिष्टस्याभेदः प्रकाशते स स्मृतावन्तर्भावयितुमशक्यः[1] अननुभूतचरत्वेन संस्कारानुपनेयत्वात् । अत एव न तृतीयोऽपि[2] । नाप्यनुभवेऽन्तर्भावयितुमसौ शक्यः प्रत्यभिज्ञानकालेऽनुभवेन प्रागवस्थाया असम्बे-

1 सतस्मृतावन्तर्भावयितुं शक्य इति का० मु० पु० पा० ।
2 तृतीयः इति का० मु० पु० पा० ।

दनात्, सम्वेदने वाऽनुभव एवेति शेषपक्षेऽन्तर्भावः स्यात् स चाग्रे दूषयिष्यते[१]। अत एव न द्वितीयः। प्रागवस्थाविशिष्टाभिन्नत्वांशेऽनुभवस्वीकारश्चेत्प्रागवस्थावैशिष्ट्यमप्यनुभवविषय एव निविष्टमिति चरमपक्षप्रवेशः।

*आद्य इति* प्रागवस्था—प्राक्कालसम्बन्ध, इदन्ता-वर्तमानकालसम्बन्धः, तद्देशकालविशिष्टस्यैतद्देशकाल-विशिष्टेनाभेदः प्रत्यभिज्ञायां प्रतिभातीति स्थिरवा-दिनां सिद्धान्तः तथा च सोऽभेदप्रकाशः स्मृतावन्तर्भ-वति किं वाऽनुभव इति विकल्प्य न तावत्स्मृतावित्याह *य एष इति* विमतोऽभेदो न स्मार्त अज्ञातत्वात्प्रमा-णगोचरवदित्याह *अननुभूतेति* अभेदप्रकाशस्य स्मृ-तित्वनिराकरणप्रसङ्गेन प्रत्यभिज्ञानमेकं ज्ञानं स्मृति-रिति तार्तीयस्यं[१] पक्षस्य बुद्धिस्थत्वात्फल्गुत्वाच्च तन्नैत-द्दूषणमिति दिशति *अत इति* अस्तु तर्ह्यभेदप्रका-शस्यानुभवेऽन्तर्भाव इति द्वितीयो नेत्याह * नापीति * प्रागवस्थाविशिष्टस्य विप्रकृष्टतयाऽननुभवात्तत्प्रति-योगिकोऽभेदोऽपि नानुभवितुं शक्य इत्याह * प्र-त्यभिज्ञेति * अप्रमार्थवत्प्रत्यभिज्ञायामसम्प्रयुक्त एवा-र्थ इन्द्रियेण गृह्यत इत्याशङ्क्याह * सम्वेदन इति * प्रागवस्थाविशिष्टेदन्ताविशिष्टाभेदानामनुभूयमान-त्वात्प्रत्यभिज्ञानमनुभव एवेत्यन्तिमपक्षेऽन्तर्भावः स्या-दित्यर्थः। अस्तु को दोष इति चेत्तत्राह *स चेति* प्रत्य-

२ दूष्यते इति० का० मु० पु० पा०।
१ तार्तीयस्य बाधो इति पु० २ पा०।

भिज्ञानं स्मृत्यनुभवगर्भमेकं ज्ञानमिति द्वितीयपक्षे-प्रथमपक्षदोषमतिदिशति *अत इति* प्रागवस्थाविशिष्टस्य संस्कारेणेदन्ताविशिष्टस्येन्द्रियेण प्रतिभासेऽपि तदेतदभेदस्य संस्कारेणेन्द्रियेण वा प्रकाशयितुमयोग्यत्वादित्यर्थः। संस्कारसहकृतेन्द्रियेण संयुक्तविशेषणतया प्रागवस्थाविशिष्टोऽपि गृह्यत इत्यत आह *प्रागिति* प्रागवस्थाविशिष्टस्य तत्प्रातियोगिकाभेदस्य चानुभवविषयत्वे सर्वमेवानुभूयत इति स्मृत्यनुभवांशं प्रत्यभिज्ञानमिति पक्षो न सिद्ध्येदित्यर्थः।

प्रतियोगिघटिताभेदस्य स्मर्यमाणानुभूयमानानेकांशत्वात्तद्गोचरप्रत्यभिज्ञानस्याऽपि स्मृत्यनुभवांशत्वमिति शङ्कते।

९० तदभिन्न इत्यत्रांशे क्रस्मृति त्वानुभूतित्वयोर्निरासः।

अथ प्रागवस्थाविशिष्टादभिन्न इत्ययमर्थोऽप्यनेकांशस्तत्र प्रागवस्थाविशिष्ट इत्यत्रांशे स्मृतित्वमभिन्न इत्यत्रांशे चानुभवत्वमित्युच्यते। एवं तर्हि प्रागवस्थाविशिष्टः स इदन्ताविशिष्टोऽभिन्नश्चायमिति स्मृत्यनुभूतिभ्यामावेदितम्भवति, प्रागवस्थाविशिष्टाश्रयतया त्वभेदः केनापि न प्रकाशित इति य एव प्रागवस्थाविशिष्टः स एवायमिति प्रत्यभिज्ञायाः शरीरं न स्यात्।

*अथेति* प्रतियोग्यंशस्य स्मर्यमाणत्वेऽभेदांशस्याऽपि स्मर्यमाणत्वं स्यात्प्रतियोगिज्ञानस्याभेदज्ञानकारणत्वादित्याशङ्क्याह *तत्रेति* स्मृतिरनुभवकारणं

न भवतीति नास्ति नियमो व्याप्तिस्मृतेरनुमानज्ञानकारणत्वात्पदार्थस्मृतेश्च वाक्यार्थज्ञानकारणत्वादिति भावः । पदार्थस्मृत्या वाक्यार्थानुभववत्प्रतियोगिस्मृत्या प्रतियोगिसम्बद्धाभेदग्राह्यनुभवो जायते, किम्वा इदन्ताविशिष्टनिष्ठाभेदग्राह्यनुभवो जायते, यद्याद्यस्तदा चरमपक्षप्रवेशो, द्वितीये च स्मृत्या प्रतियोगिसिद्धिरनुभवेनेदन्ताविशिष्टनिष्ठाभेदासिद्धिरिदन्ताविशिष्टनिष्ठाभेदस्य प्रतियोगिसम्बन्धः केनापि न सिद्ध्येदिति परिहरति *एवं तर्हीति* स इति प्रागवस्थाविशिष्टोऽयमितीदन्ताविशिष्टोऽभिन्नश्चेति स्मृत्यनुभवाभ्यां विज्ञापितं भवतीत्यन्वयः । तथापि सिद्धं स्मृत्यनुभवरूपत्वं प्रत्यभिज्ञानस्येत्यत आह *प्रागिति* एकस्य धर्मिणः कालद्वयसम्बन्धस्य ज्ञानं प्रत्यभिज्ञेति स्वसिद्धान्तोपि ध्वंस्येत इत्यर्थः ।

इदन्ताविशिष्टधर्म्याश्रयतयानुभूयमानस्याभेदस्य तत्ताविशिष्टप्रतियोगिनिष्ठता पारिशेष्येण सिध्यतीति शङ्कते ।

९१ पारिशेष्यादभेदस्य तत्ताप्रतियोगिकत्वसिद्धिशङ्का ।

अथानुभवेन योऽसावनुभूयमानधर्म्याश्रयतयाऽभेदो बोधितः स कोट्यन्तरमनालम्ब्य न पर्य्यवस्यतीति केन चित् खलु कस्य चिदभेदो भवति ततः[3] स्मृत्यंशोप-

१ पदार्थस्मृतिव्यतिरेकेणेति २ पु० पा० ।

२ शस्यत इति पु० २ पा० ।

३ सच इति कलिकातामु० पु० पा० ।

४ स्मृत्युपनीतमिति सो० पु० पा० ।

नीतमेव सन्निधानात्कोट्यन्तरं प्रागवस्थाविशिष्टरूपमालम्बत इत्यभेदस्य प्रागवस्थाविशिष्टाश्रयतासिद्धिरिति ।

*अथेति* इदन्ताविशिष्टनिष्ठाभेदस्य च कोट्यन्तरानालम्बनत्वेऽनुपपत्त्यभावान्न तत्ताविशिष्टनिष्ठतासिद्धिरित्यत आह *केनेति* भेदवदभेदस्यापि कस्य केनेति धर्मिप्रतियोगिसापेक्षत्वान्न कोट्यन्तरमनालम्ब्य पर्यवसानमित्यर्थः। तथाऽपि तत्ताविशिष्टमेव कोट्यन्तरमालम्बते न यत्किञ्चिदिति कस्मादित्यत आह *तत इति* सन्निहितस्य झटिति तत्ताविशिष्टस्य प्रतियोगितया बुद्धिस्थत्वात्तद्बाधमन्तरेण कोट्यन्तरानाश्रय इति तत्तेदन्ताविशिष्टाभेदविषयत्वं प्रत्यभिज्ञानस्य सिद्धमिति फलितं निगमयति *इतीति*

अनुभूताभेदस्य कोट्यन्तरानालम्बनत्वेऽपि नानुपपत्तिरनुभूतत्वान्नाप्यननुभूतस्याननुभूतत्वादेवेति दूषयति ।

९२ आलम्बनशब्दार्थनिरुक्त्या समाधानम् ।

तदेतत्तुच्छतरम् । कोट्यन्तरमालम्बत इति किं कोट्यन्तराश्रितो भवति, उतकोट्यन्तराश्रिततया ज्ञायत इति, नाद्यः अभेदस्येदानीं प्रागवस्थाविशिष्टधर्म्याश्रयेणोत्पत्तौ पूर्वं प्रागवस्थाविशिष्टेदन्ताविशिष्टयोर्भेदः स्यात् । द्वितीये तु यदेव कोट्यन्तराश्रिततया इदन्तावच्छिन्नध-

१ श्रयतया इति का० मु० पु० पा० ।
२ त्वेनाऽनुप इति सो० पु० पा० ।

र्म्यभेदस्य ज्ञानं तत्स्मृतौ नान्तर्भावयितुं शक्यं नाऽप्यनुभवांश इत्युक्त एव दोषः ।

*तदिति। अनुपपत्त्या कोट्यन्तरालम्बनत्वं विकल्पेनाऽपि दूषयति* कोटीति* आलम्बनशब्देन कोट्यन्तरमाश्रित्य भवनमुच्यते, किंवा तन्निष्ठतया ज्ञानमिति विकल्पद्वयार्थः । भवनमालम्बनार्थ इति क्रमप्राप्तत्वादाद्यं दूषयति *नेति* भेदाभेदयो रन्यतराभावस्याऽन्यतर[1]भावानियतत्वादभेदस्योत्पत्तेः [illegible]भावादिदन्तातत्ताविशिष्टयोर्भेदः स्यादतश्च कदाचिद्भिन्नयोः कालान्तरेऽभिन्नत्वं गीर्वाणैरपि दुःशकत्वादित्यर्थः । ज्ञानेनालम्ब्यते कुम्भ इत्यादावालम्बनशब्दस्य ज्ञप्त्यर्थत्वादिहापि ज्ञानमेवालम्बनार्थ इति द्वितीयं दूषयति *द्वितीय इति* इदन्ताविशिष्टनिष्ठाभेदस्य तत्ताविशिष्टनिष्ठताज्ञानं [2]न स्मृतिरनुभूतागोचरत्वात्, नानुभवोऽसम्प्रयुक्तविषयत्वादित्युक्तमावर्तत इति यावत् ।

स्मृत्यनुभवगर्भमेकं ज्ञानं प्रत्यभिज्ञानमिति पक्षो न साधुरित्युक्तमधुना तथाऽभ्युपगमेऽपि नानुभूतित्वजातिसिद्धिः स्मृतित्वेन परापरभावानिरूपणेन तत्र सङ्करप्रसङ्गादित्याह ।

९३ धर्मिणमादाय स्मृत्यनुभूत्योः सङ्करः ।

किञ्च यदा प्रत्यभिज्ञानं स इत्यंशे स्मृतिरयमित्यंशे चानुभव इत्येकं ज्ञानमभ्युपेयते तदाधर्मिणमादायापि-

१ अन्यतराभावेति सो० पु० पा० ।
२ ज्ञानं स्मृतिरनुभूतगोचरत्वादिति सो० पु० पा० ।

स्मृत्यनुभवसङ्करो दुर्वारः। तथाहि—संस्कारेण तत्तामात्रं-चोपनीयेत तत्ताविशिष्टो वा धर्मी ?। आद्ये स इति प्रत्यभिज्ञायाः शरीरं न स्यात् तत्तायाः केवलायाः संस्कारेणोपनीतत्वात्। नापि द्वितीयः तथा—सत्ययमित्यनुभवांशेऽपि धर्मिप्रकाशो वक्तव्य एव अन्यथा इदन्तामात्रप्रकाशेऽयमिति तच्छरीरं न स्यात्, एवञ्च संस्कारस्य चेन्द्रियस्य च धर्मिप्रतीतिहेतोरुभयस्योपनिपाते- किं विशेष्यांशे भिन्नाभ्यां ज्ञानाभ्यामुत्पत्तव्यम्, उत कारणद्वयसम्भेदादभेदभाजा ज्ञानेन। प्रथमे प्रत्यभिज्ञानस्यैकज्ञानव्यक्तिताभ्युपगमव्याघातः भेदपक्षोक्तदूषणापातश्च। द्वितीये धर्म्यंशे प्रत्यभिज्ञायाः स्मृतित्वमप्यनुभवत्वमपीत्यनुभूतिस्मरणसङ्कर इति विषयव्यवस्थयाऽपि नियमो भग्नः।

*किंचेति* तत्तावैशिष्ट्यगोचरत्वात्स्मृत्यंशस्येदन्तावैशिष्ट्यविषयत्वादनुभवस्य कथं तयोःसङ्कर इत्यत आह *धर्मिणामिति* अपिशब्दः शङ्काद्योतकः। धर्मभेदेऽपि धर्मिण ऐक्यात्तन्निष्ठतया च तयो स्ताभ्यां प्रकाशनाद्धर्म्यंशज्ञाने भवति सङ्कर इत्यर्थः। धर्मिज्ञाने स्मृतित्वानुभूतित्वयोःसङ्करं दर्शयितुं विकल्पयति* तथेति*तत्ता-प्राक्कालादिसम्बन्ध स्तद्विषयज्ञानमेव संस्कारेण जन्यते, किंवा तत्ताविशिष्टधर्मिविषयज्ञानमपि सं-

१ चोपनीयते इति क० मु० पु० पा०।

स्कारेण जन्यत, इति विकल्पद्वयार्थः। तत्तामात्रगोचरज्ञानस्यैव संस्कारजत्वान्न धर्मिज्ञाने स्मृतित्वानुभूतित्वसङ्कर इत्याद्यं कल्पं दूषयति * आद्य इति * स इति प्रत्यभिज्ञायां तत्ताविशिष्टं स्फुरति न च तत्स्फुरणं संस्कारात्, तत्तामात्रज्ञानस्य तथात्वा,न्नाऽप्यक्षजं तत्स्फुरणं तत्ताविशिष्टस्यासम्प्रयोगादिति, स इति तत्ताविशिष्टज्ञानं प्रत्यभिज्ञायाः शरीरं न भवेदित्यर्थः । तत्ताविशिष्टधर्मिणः प्रागनुभूतत्वात्संस्कारस्तत्ताविशिष्टधर्मिणं ज्ञापयतीति द्वितीयः कल्पोऽस्त्वित्यत आह *नापीति * अक्षसम्प्रयोगोऽपीदन्तामात्रं प्रकाशयति, किंवा तद्विशिष्टधर्मिणमिति विमर्शे विशिष्टधर्मिण एव प्रकाशो युक्त इत्याह * तथेति * यथा स इत्यंशे तद्विशिष्टो धर्मी स्फुरति तथाऽयमिति सम्प्रयोगजज्ञानेऽपीदन्ताविशिष्ट एव स्फुरतीति वक्तव्य मित्यर्थः। सम्प्रयोगजज्ञानविषयत्वाभावेऽनुपपत्त्यभावान्नानुभवांश इदन्ताविशिष्टधर्मिस्फुरणमित्यत आह * अन्यथेति * एकस्मिन्नेव प्रत्यक्षादिप्रमाणसम्भवे[1]ऽपि न प्रत्यक्षत्वादिजातिसङ्कर स्तथा संस्कारसम्प्रयोगजनितज्ञानविषयत्वेऽपि नानुभवत्वादिसङ्कर इत्यत आह *एवमिति * तत्रेन्द्रियलिङ्गादिना[2] भिन्नज्ञानोत्पत्ते र्न सङ्कर इत्यर्थः। संस्कारस्य निरपेक्षस्मरणसामग्रीत्वादिन्द्रियस्यानुभवसामग्रीत्वात निरपेक्षसामग्री भेदस्य कार्यभेदनियतत्वाद्धि

---

१ सम्प्लवेऽपि इति सो० पु० पा० ।
२ लिङ्गादीनामिति पु० पा० ।

न्नमेव ज्ञानं धर्मिगोचरमनुभवस्मरणरूपमिति प्रथमविकल्पार्थः। ज्ञानभेदपक्षे स्मरणाभिज्ञाव्यतिरिक्तं प्रत्यभिज्ञानमिति प्रसिद्धिर्न स्यादतोऽन्यत्र निरपेक्षसामग्रीद्वयस्याऽत्र मेलनोपाधावेकसामग्रीत्वादेकं ज्ञानमिति द्वितीयकल्पार्थः। प्रथमकल्पमपसिद्धान्तप्रसङ्गेन दूषयति * प्रथम इति * प्रामाणिकस्यैव सिद्धान्तत्वात् ज्ञानभेदस्य प्रामाणिकत्वे नापसिद्धान्त इत्याशङ्क्याह * भेदेति * प्रागवस्थाविशिष्टादिदन्ताविशिष्टाभेदप्रकाशस्य, न स्मृतौ, नाप्यनुभवेऽन्तर्भाव, इति प्रागुक्तदोषानुषङ्ग इत्यर्थः। व्याप्तिग्रहणसंस्कारलिङ्गाभ्यामेकज्ञानजन्मवदक्षसंस्काराभ्यामेकमेव प्रत्यभिज्ञानं जायत इति द्वितीयमाशङ्क्य दूषयति *द्वितीय इति* एवं सति स्मृत्यनुभूतिव्यक्तिभेदादनुभूतित्वं स्मृतित्वं च न सम्भवति तथा तत्तेदन्ताविशिष्टविषयभेदेनाऽपि व्यवस्था न सिध्यति धर्म्यंशस्य प्रत्यभिज्ञानगोचरस्यैक्यादिति फलितमाह *इतीति*

प्रत्यभिज्ञानस्यैकत्वाद्विषयस्य चैक्यात्तन्निबन्धनं स्मृतित्वानुभूतित्वव्यवस्थानं यद्यपि न सम्भवति तथाऽप्युपाध्यन्तरवशाद्व्यवस्थोपपद्यत इति शङ्कते।

९४ उपाध्यन्तरेण स्मृतित्वानुभूतित्वयोर्व्यवस्थानिरासः।

अथोच्यते मा भूद्विषयोपाधिभेदाद्व्यवस्थानमुपाध्यन्तरात्तु भविष्यति तद्यथा संस्कारजत्वमादाय स्मृतित्वव्यवस्थितिरिन्द्रियसन्निकर्षजत्वमादाय चानुभवत्वव्यवस्थानमिति विरोधपरिहारोऽस्तु। न, प्रमात्वसामान्यानङ्गी-

कारे * प्रमारूपताया विषयव्यवस्थित्यैवोपगमेनोपाध्य-न्तरोपन्यासेऽपि स्मृतित्वानुभूतित्वयोरेकस्मिन्नेव ध-र्म्मिण्यर्थे निवेशात्प्रमात्वाप्रमात्वयोरेकविषयतैव।

* अथेति * कोऽसावुपाधि यद्बलाद्व्यवस्थेत्या-शङ्क्य कारणभेद एवोपाधिरित्याह *तदिति* स्मृत्यनु-भवसङ्करोदुर्वार इति यदुक्तं तत्परिहृतमिति फलितमा-ह * इतीति * विरोधपरिहारो जातिबाधकसङ्करपरि-हार इत्यर्थः। एकरूपे हि वस्तुनि विरुद्धजातिसमा-वेशो दोषाय स्याज्जातिभेदव्यञ्जकरूपभेदसम्भवाच्च विरोधबुद्धिस्तद्भेदश्च कारणभेदोपाधिकांशभेदादि-ति सङ्करपरिहारशङ्काकर्तुरभिप्रायः। संस्कारजत्वस-न्निकर्षजत्वोपाधिभेदेन स्मृतित्वानुभूतित्वव्यवस्थां प्रत्यभिज्ञानेऽभ्युपगम्य प्रथमं विरोधान्तरप्रसञ्जनेन प-रिहरति *नेति* प्रमात्वं किं औपाधिको धर्मः किम्वा जातिः, न तावज्जातिः परोक्षत्वेन परापरभावानिरू-पणात् तथा हि–हेत्वाभासजनिते परोक्षभ्रमे प्रमात्वा-भावान्न तावत्प्रमात्वं परं, नाऽपि परोक्षत्वं परं तद-भावेऽपि प्रत्यक्षज्ञाने प्रमात्वाङ्गीकारादौपाधिको धर्म इति स्वीकर्तव्यं, यदि स्वीक्रियते तत्रा ह * प्रमेति * ज्ञानस्या[1]परोक्षत्वस्य व्यवस्थापकं ज्ञातकारणा[2]ऽजं-

१ ज्ञानस्यपरोक्षस्येति पु० पा०।

२ ज्ञानकरणजन्यज्ञानत्त्वमिति पु० पा०।

* साक्षात्त्वादिना परापरभावानुपपत्त्या प्रमात्त्वाप्रमात्त्वे न जाती किं तर्हि? विषयतथात्त्वातथात्त्वनिबन्धनावुपाधी, तद्यदि स्मृतित्वा-ऽनुभूतित्वयोर्विषयावच्छेदभेदेन वृत्तिर्न स्यात्तदा तयोः प्रमात्त्वाप्रमा-

न्यत्वं यथा, तथा प्रमात्वव्यवस्थापकं किमित्यत आह *प्रमारूपेति* परोक्तमुपाधिमनुवदति * उपाधीति * संस्कारजत्वसम्प्रयोगजत्वाख्योपाध्योरुपन्यासेऽपि स्मृतित्वानुभूतित्वयोरेकस्मिन्नर्थे निवेशः स्यात् तथा च स्मृतित्वानुभूतित्वाभ्यामविनाभूतयोः प्रमात्वाप्रमात्वयो रेकाश्रयता प्रसज्येत प्रत्यभिज्ञानस्यैक्याद्विषयद्वारा तयोर्व्यवस्थापयितुमशक्यत्वादित्याह *प्रमात्वेति * सामान्यानङ्गीकारो विषयभेदेन प्रमात्वाप्रमात्वव्यवस्थोपगमहेतुः सन् प्रमात्वाप्रमात्त्वयोरेकाश्रयत्वहेतुः। केचिदन्यथा व्याचक्षते उपाध्यन्तरोपन्यासेऽपि प्रमात्वसामान्यानङ्गीकारनिमित्तं प्रमारूपताया विषयव्यवस्थित्याऽसन्दिग्धाविपरीतानवगतार्थव्यवस्थाया उपगमेन च हेतुना स्मृतित्वानुभूतित्वयोस्तत्तेदन्ताविशिष्टे धर्मिण्यर्थ एकस्मिन्नेव निवेशात्प्रमात्वाप्रमात्वयोरेकाश्रयतेति, तत्पक्षे सामान्यानङ्गीकार इति निमित्तसप्तमी द्रष्टव्या।

औपाधिकांशभेदकल्पनया ज्ञाने विरुद्धधर्मप्रसङ्गपरिहारमभ्युपगम्य विषये विरुद्धधर्मप्रसङ्ग उक्त, इदानीं प्रत्यभिज्ञाने स्मृतित्वानुभूतित्वसङ्करविरोधः स्यादेव संस्कारजत्वाद्युपाधिपरामर्शमन्तरेणैव स्मृतित्वादेरवगमेन तदुपाधित्वाभावादित्याह।

---

त्वयोरपि तथा न स्यादित्येकस्मिन्नेव विषये तज्ज्ञानं प्रमा चाऽप्रमा च स्यात् नहि स्मृतिश्चनाऽप्रमा, यथार्थानुभवश्च न प्रमेत्यर्थ इति (शाङ्करी)।

९५ स्वतः प्रतिभासेन स्मृतित्वानुभूतित्वयोः सङ्करः ।

किञ्च ज्ञानविकल्पानामध्यात्मं भावाभावसम्वेदनात् स्मृतित्वानुभूतित्वयोर्द्वयोरपि प्रत्यभिज्ञायां स्वतः प्रतिभानेन विषयनिरूपणव्यवस्थित्यनङ्गीकारे स्मृतित्वादेरिदन्तायामपि स्मृत्यवगमप्रसङ्गात् । यदि च संस्कारजत्वमेव स्मृतित्वं तदा तस्यैव विरोधेऽभिधीयमाने स एव विरोधसामञ्जस्यायोपाधिरुपन्यस्यत इति नान्यस्य चेतसि निविशते । अथान्यत्स्मृतित्वन्नाम, तदाऽप्यनुपपत्तिः तथा हि-संस्कारजत्वं संस्कारादनन्तरं नियमेन भावो नियतत्वञ्च नानाव्यक्तिगतमेकं रूपं सङ्ग्राहकमक्रोडीकृत्यासम्भवतीति स्मृतित्वेनैव संस्कारजत्वं वक्तव्यं तथा च संस्कारजत्वव्यवस्थितौ स्मृतित्वमुपाधिः स्मृतित्वव्यवस्थितौ च संस्कारजत्वमित्यन्योन्याश्रयः तस्मात् स्मृत्यनुभवसङ्करो दुर्वार एव ।

* किञ्चेति * स्मृतित्वादि ज्ञानधर्मः किं स्वतः प्रतिभाति, किं, वा मानसज्ञानेनो, तानुमानेनेति, विवेचनीयं,न तावदनुमानेन व्याप्तलिङ्गाभावान्नाऽपि प्रत्यक्षेण ज्ञानान्तरोत्पत्तौ पूर्वज्ञानस्य निवृत्ततया तदाऽसतः कर्मकारकत्वायोगा, दतः परिशेषात्स्वतः प्रतिभातत्वं वाच्यमित्याह *ज्ञानेति* विकल्पा–भेदास्तेषां ये भावाभावाः–सदसत्त्वानि तेषामध्यात्मं–आत्मन्यधिकरणे सम्वेदना–त्प्रकाशमानत्वात्प्रत्यभिज्ञायां स्मृतित्वानुभूतित्वयोरपि ज्ञानधर्मयोः स्वतः प्रतिभा-

१ प्रतिभासेनेति का० मु० पु० पा० ।

नत्वेन—संस्कारजत्वाद्युपाधिपरामर्शं विना स्वप्रकाशज्ञानबलात्प्रकाशितत्वेन, स्मृतित्वादेर्विषयभेदनिरूपणेन व्यवस्थानङ्गीकार इदन्तायामिदन्ताविशिष्टधर्म्यंशे स्मृतित्वप्रकाशप्रसङ्गादपिशब्दात्ततांशेऽनुभूत्यवगमप्रसङ्गाच्चेत्यर्थः। स्मृतित्वाद्यवभाससमये संस्कारजत्वादेरप्रतिभासमानस्य व्यवस्थापकत्वायोगादर्थभेदेन व्यवस्थायास्त्वया वक्तुमशक्यत्वादिदन्तायां स्मृत्यवगमः तत्तायामनुभूत्यवगमः प्रसज्ज्येतेति प्रसङ्गबीजं द्रष्टव्यम् । संस्कारजत्वमेव स्मृतित्वं किं वा ऽन्यदिति विकल्प्याद्यमनुवदति * यदीति * आत्माश्रयत्वप्रसङ्गेन निराचष्टे * तदेति * अनुभूतित्वासङ्कीर्णं स्मृतित्वं नास्ति प्रत्यभिज्ञायां सहस्थित्या[1] परापरभावानिरूपणादिति जातिबाधकोपन्यासे तत्परिहारार्थं तदेवोपाधिरूपन्यस्यते तच्च व्यवस्थितसंस्कारजत्वसिद्धौ तदात्मकं स्मृतित्वं सिद्ध्येदित्यात्माश्रयान्न परेतसि चमत्काराविष्काकरणमित्यर्थः । संस्कारजत्वस्मृतित्वयोरन्यत्वे आत्माश्रयाभावाद्द्वितीयः कल्पोऽस्त्वित्याशङ्क्ते * अथेति * धर्मद्वयकल्पनायां प्रमाणाभावाद्गौरवाच्च द्वितीयः कल्पो नोपपद्यते, अङ्गीकृत्यापि दूषयति *तदापीति * अनुभूतचर एव स्मृतिनियमः संस्कारजत्वं स्मृतीनां सम्प्रतिपन्नं तेन विप्रतिपन्नस्मृतित्वव्यवस्थायाः काऽनुपपत्तिरित्यत आह * तथा हीति * अनन्तरं भाव इत्यनेनान्वय उक्तो, नियमेनेति व्यतिरेकः,

---

१ सहस्थिततया इति सो० पु० पा० ।

अन्वयव्यतिरेकाभ्यां कार्यकारणभावोऽवसेयो नान्वयमात्रादन्यथा धूमकार्ष्ण्यस्याऽप्यनुमापकत्वप्रसङ्गादिति भावः। अन्वयव्यतिरेकौ च किमेकव्यक्तिगतौ, किं नानाव्यक्तिगतौ, नाद्यः अननुगमप्रसङ्गादतो नानाव्यक्तिगतावेव, तथात्वेन ग्रहणं चाऽनुगतरूपान्तरमन्तरेण नोपपद्यत इति तदपि वक्तव्यमित्याह * नियतत्वं चेति * नियतत्वमन्वयव्यतिरेकवत्त्वमित्यर्थः। अङ्गीकृत्यापरिगृह्येत्यर्थः। अस्तु तर्हि रूपान्तरमिति चेत्तत्किं स्मृत्यन्यनिष्ठं, किं वा स्मृत्येकदेशनिष्ठमुत स्मृतिमात्रनिष्ठं नाद्यावतिव्याप्त्यव्याप्तिभ्यां, तृतीयन्तु स्मृतित्वान्नान्यदित्याह * इति स्मृतित्वेनेति * ज्ञेयं वक्तव्यमित्यध्याहारः। यद्येवं किमतः, एतत्ततो भवतीत्याह * तथा चेति * तस्माद्विषयनिरूपणव्यवस्थाऽनङ्गीकारे न संस्कारजत्वादि स्मृतित्वादिव्यवस्थापकमिति धर्म्यंशप्रत्यभिज्ञाने स्यादेव सङ्कर इत्युपसंहरति * तस्मादिति *

प्रत्यभिज्ञास्वरूपपर्य्यालोचनयापि तं साधयति।

९६ उभयकारणजत्वे सङ्करस्य दुष्परिहरत्वम्।

अपि च स्मृत्यनुभवयो र्ये कारणसामग्र्यौ ते प्रत्यभिज्ञायां मन्तव्ये न वा, नचेत् कथमंशतोऽपि स्मृतित्वमनुभवत्वञ्च प्रत्यभिज्ञानस्य,[१] एवमेव तथात्वेऽतिप्रसङ्गात् स्मृत्यनुभूत्योः स एव सङ्करः। प्रथमे तु पृथगेव कार्य्योत्पत्तिप्रसङ्गः प्रत्येकं स्वस्वकार्ये समर्थत्वात्

१ धूमकार्ष्ण्यस्येति सो० पु० पा०।

सामग्रीभेदस्य कार्य्यभेदहेतुत्वेनावधारितत्वात् ।

*अपि चेति* कारणसामग्र्यौ संस्कारसम्प्रयोगाख्ये तत्तेदन्तोल्लेखयोः कार्ययोर्भावान्मन्तव्ये इति भाति, प्रत्यभिज्ञानमेकं[1] प्रमाणज्ञानमिति स्वीकारान्नेति भात्यतो विकल्पः । अन्त्यविकल्पं बुद्धिस्थत्वादादौ दूषयति * न चेदिति * किं संस्कारो न कारणं, किं वा सम्प्रयोगः, आद्ये प्रत्यभिज्ञानस्य स इत्यंशे स्मृतित्वं न स्यादसंस्कारजत्वात् । द्वितीयेऽयमित्यंशेऽनुभवत्त्वं न स्यात्संस्कारातिरिक्तकारणरहितज्ञानत्वादिति भावः । मा भूत्संस्कारजत्वादि, स्मृतित्वादि च भवतु, ततश्च बाधकाभावात् उक्तं हेतुद्वयमप्रयोजकमित्यत आह * एवमेव तथात्व इति * संस्कारजत्वं विना स्मृतित्वे, सम्प्रयोगजत्वं विनाऽनुभवत्वेऽतिप्रसङ्गात् स्मृतावनुभूतित्वस्यानुभूतौ स्मृतित्वस्य प्रसङ्गात्तत्सङ्करः स्यादित्यर्थः । स्मृत्यनुभवसामग्र्यौ प्रत्यभिज्ञायां कारणतया निविष्टे इति प्रथमकल्पं दूषयति * प्रथम * इति पृथक्कार्योत्पादहेतुमुपपादयति * प्रत्येकमिति * प्रत्येकं स्वकार्यजननसमर्थे न वा, न चेदन्यत्राऽपि संस्कारादेः स्मृत्यादि न स्यादसमर्थस्य सहकारिसहस्रसमवहितस्याऽप्यकिञ्चित्करत्वात्, आद्येऽत्रापि कार्यद्वयप्रसक्तिरित्यर्थः । उक्ततर्कस्य विपर्ययापर्यवसायित्वपरिहाराय परकीयव्याप्त्युपजीवनेन प्रयोगमाह * सामग्रीति * विमतः संस्कारः सम्प्रयोगनिरपेक्षस्मरणोत्पादक उद्बुद्धपूर्वानुभवसंस्कारत्वात्स्मृत्यन्तरो-

---

१ एकं ज्ञानमिति पु० पा० ।

हकारिभावविरहेणाप्रयोजकत्वात् ततश्चाविशेषात् पृथगेव कार्य्यं प्रसज्येत । अथ परस्परसहकारित्वं तयोरिष्यते तदाऽनुभवांशेऽपि संस्कारस्य व्यापारः स्मरणांशेऽप्यक्षस्येति नियामकत्त्वाभिमतयोस्तयोरुभयांशे साधारण्यात् स्मृत्यंशेप्यनुभूतिरनुभूत्यंशेऽपि स्मरणमिति वज्रलेपायितं प्रत्यभिज्ञायामनुभूतिस्मृतिसङ्करेणेति[१] ।

*नेति* उद्बुद्धतद्विषयसंस्कारे सति जातसम्प्रयोगस्य पृथक्कार्यकरणत्वं न दृश्यत इत्याशङ्क्य मिलितयोः सामग्र्योर्जनकत्वं दूषयितुं विकल्पयति * यत्रेति * एकदेशकालावस्थानं मेलनं । कस्मिन् सति किं स्यादित्यत आह * न चेदिति * सति मेलने कार्यजन्मदर्शनात्कथमनुपयोगित्व मित्यत आह * कार्येति * मेलनस्यानुपयोगितामात्रेण तव को लाभस्तत्राह * ततश्चेति * मेलनामेलनयोः संस्कारादेः स्वकार्यजनने सामर्थ्याविशेषादित्यर्थः । उक्तदोषं परिहर्तुं प्रथमकल्पं शङ्कते * अथेति * संस्कारसहकारितया सम्प्रयोगस्य तत्त्तांशज्ञानकारणत्त्वं संस्कारस्य च सम्प्रयोगसहकारितयाऽनुभवकारणत्वं प्रसज्ज्यत इति दूषयति * तदेति * एवं च सति तत्त्तांशज्ञाने संस्कारसम्प्रयोगजन्यतया स्मृतित्वमनुभूतित्वमयमित्यंशे च स्मृतित्वमनुभूतित्वश्चेति स्मृत्यनुभवसङ्करो दृढीकृतः स्यादित्याह * इति वज्रेति *

अनुभव एवैकं ज्ञानं प्रत्यभिज्ञेति पक्षे सङ्कराभावा-

१ मनुभूतित्त्वस्मृतित्त्वेति का० मु० पु० पा० ।

त्परिशेषात्स एवाऽऽस्ता मित्यत आह ।

९९ चतुर्थपक्षनिरासः ।

नाऽप्यनुभव एवेति पक्षः, तथा सति तत्तावच्छिन्नस्या-भेदाश्रयतायां न संस्कारो नेन्द्रियसन्निकर्षश्चेति तदविषयत्वापातः[1] ।

*नापीति* कुत इत्यत आह *तथा सतीति* स एकोऽनुभवस्तत्तावच्छिन्नं गोचरयतीदन्तावच्छिन्नं वा तयोरभेदं वा, न प्रथमद्वितीयौ, एकस्य धर्मिणः कालद्वयसम्बन्धग्राहि ज्ञानं प्रत्यभिज्ञेत्यभ्युपगमात् । नापि तृतीयः संस्कारेणाभेदस्य तत्तांशावच्छिन्नाश्रयत्वं नोपस्थापनीयं प्रागननुभूतत्वान्नापीन्द्रियेण संनिकर्षाभावादित्यर्थः ।

नन्विन्द्रियमेवाभेदस्य तत्तावच्छिन्नाश्रयत्वं साधयति चक्षुरर्थेन सम्बद्धं मनसा संयुज्यते तदाऽऽत्मना तस्मिन् समवेतः संस्कार स्तस्य च विशेषणं तत्तावच्छिन्न इति संस्कारद्वारा येयं प्रत्यासत्तिः सम्बद्धविशेषणता नाम, तयेत्याशङ्क्याह ।

९९ संस्कारद्वारकप्रत्यासत्त्येन्द्रियेणतद्ग्रहशङ्कानिरासः ।

नच संस्कारद्वारा प्रत्यासत्त्या सम्बद्धविशेषणतया-तद्ग्रहः क्वचित् सोऽयं न वेति तर्हि संशयो न स्यात् । दोषवशात्तत्र तत्प्रकाशो न सम्बद्धविशेषणत्वादिति-चेन्न । विनाऽपि संस्कारं दोषवशात्तदापत्तेः । वस्तुप्रकाशि-

---

१ नैय्यायिकमतनिरासः ।

नि च दोषत्ववाचोयुक्त्यनिरुक्तेः। क्वापि तस्यावस्तुप्रकाशित्वाद्दोषश्चेत् कथमक्षादेरपि तन्न स्यात्। विशिष्टत्वेन तथात्वस्य प्रकृतेप्यपरिहारात् न हि विनैव कुतोऽपि विशेषादस्यावस्तुप्रकाशिता । सत्यप्यर्थदोषादवस्तुनएव प्रकाशे संशयात्प्रेक्षावत्प्रवृत्त्यादेरसम्भवापत्तेः।

* नचेति * अतिप्रसङ्गादिति हेतुमाह * क्वचिदिति * उक्तसंयुक्तसमवेतविशेषणता सम्बन्धः संस्कारद्वारा तत्तेदन्ताऽभेदप्रकाशसामग्री चेत्तर्हि पुष्कलकारणे सत्यभेदनिर्णयस्योत्पत्त्या प्रत्यभिज्ञारूपः संशयस्तत्पत्ते न स्यादस्ति चासौ पूर्वानुभूतस्य देवदत्तस्य चिरकालव्यवधाने पुनर्दर्शन इत्यर्थः। अन्वयव्यतिरेकाभ्यां संशयस्य दोषजन्यत्वमवसीयते चक्षुःसम्प्रसारणमधिष्ठानग्रहणोपयोगितयाऽन्यथासिद्धमत एकस्य संनिकर्षविशेषस्य सम्यक्ज्ञानहेतुत्वमसम्यक्ज्ञानहेतुत्वं चेति विरोधप्रसङ्गो नेति शङ्कते *दोषेति* केवलाद्वसान्निकर्षस्य सामान्याग्रहणकारणत्वाद्दोषस्य सन्देहकारणत्वादुक्तविधसम्बन्धस्य क्वाऽप्यनुपयोगात्तदभावेऽपि सन्देहः स्यान्न तथा दृश्यत इति परिहरति *नेति* तर्ह्येवं व्यवस्थाऽस्तु दोषसहकृत उक्तसन्निकर्षः सन्देहसामग्री, अदुष्टः प्रत्यभिज्ञानस्येत्यत आह * वस्त्विति * दोषविशिष्टस्य वस्तुप्रकाशकत्वे विशेषणतया तस्यापि वस्तुग्रहणहेतुत्वमुक्तं स्यात् न च तद्युक्तं वस्तुप्रकाशकस्य चक्षुरादिवद् गुणत्वस्यैव प्राप्तेरित्यर्थः। क्वचिदसत्येवाभेदेऽवयवसादृश्यात्सोऽयं न वे-

१ परिहारः इति का० मु० पु० पा०।

ति सन्देहो जायते तत्रासदभेदप्रकाशकत्वादस्य दोषत्वमित्याशङ्क्याह *क्वापीति* शुक्तिरजतसंसर्गस्यासत एव प्रकाशनात्तत्प्रकाशकस्य चक्षुषोऽपि दोषत्वं स्यादित्यर्थः। आदिपदेन लिङ्गादिग्रहः। चक्षुरादिर्दोषो भवितुमर्हति क्वचिदविद्यमानप्रकाशकत्वात् सम्प्रतिपन्नवदित्युक्तम्। स्वरूपेणावस्तुप्रकाशकत्वं तथात्वे प्रयोजकं नच तच्चक्षुरादेरस्ति गुणदोषाभ्यां विशेषादित्याशङ्क्याह *विशिष्टत्वेनेति* तथात्वस्य–दोषत्वाभावस्य प्रकृते दोषत्वाभिमतेऽप्यपरिहारादिति। दोषस्य पुनर्दोषाभावात्तद्भावाभावाभ्यां चक्षुरादेरिव न विशेषो वक्तुं शक्य इत्यत आह * नहीति * विक्रियमाणे दोषे वस्तुप्रकाशः किंवाऽविक्रियमाणे, नाविक्रियमाणे सर्वदा तत्प्रसङ्गात् कुर्वत एव कारकत्वाच्च, विक्रियमाणे चेत्स एव विकारो विशेष इत्यर्थः। क्वचिदवस्तुप्रकाशकस्य दोषत्वमतिप्रसङ्गादनुपपन्नं चेत्तर्हि सर्वत्राविद्यमानप्रकाशकत्वमेव दोषस्यास्तु क्वचित्सोऽयं न वेति सन्देहस्याविद्यमानाभेदाविषयत्वेन विद्यमानेऽपि ततोऽन्याभेदविषयत्वानुमानादित्याशङ्क्याह * सतीति *तर्हि विद्यमाने घटे प्रकाशमाने दोषादविद्यमानः प्रकाशते, किं वा विद्यमान इति सन्देहात्प्रेक्षावतां प्रवृत्तिर्न स्यात्तथा यत्र सन्देहादपि दृष्टफले प्रतिग्रहादौ प्रवृत्तिः सा न स्यात्पाक्षिकत्वेनापि सन्देहस्य वस्तुविषयत्वाभावादित्यर्थः।

विद्यमानेऽर्थे ज्ञानं वस्तुविषयमेव, वस्तुविषयत्वेऽपि संशयत्वं दोषबलाद्भवतीति शङ्कते।

ज्ञानधर्मत्वे साक्षात्कारित्वादिवद्विषयानन्वयापत्तिरेवेति ।

*जातेरिति* न च संस्कारेऽव्यापकत्वमुपाधेरिति वाच्यम् । स्मृतेरपि प्रामाण्यस्य वक्ष्यमाणत्वात् । संशयत्वस्य नाप्रमात्त्वावान्तरजातित्वं तथासति ज्ञानगतत्वे पाक्षिकद्वयकोटिप्रत्यायकवाशब्दस्यार्थसामानाधिकरण्याभावप्रसङ्गादिति परिहरति *नेति* अर्थनिर्देशोऽर्थवाचकशब्दस्तेन समन्वयः—सामानाधिकरण्यम् । गुणत्वस्य ज्ञानगतत्वे ज्ञानं गुण इति गुणत्ववाचकशब्दस्य ज्ञानसामानाधिकरण्यवत्संशयत्वस्याऽपि ज्ञानगतत्वे वाशब्दस्य प्रत्येमि न वेति ज्ञाननिर्देशसमन्वयः स्यादित्याह * प्रतीत्येति * केचित्त्वर्थगता वा ज्ञानगता वा जाति,र्यद्यर्थगता तन्न, संशयत्वस्य ज्ञान-

---

त्वाविलक्षणं कारणमवश्यमप्रमायामवगन्तव्यं तच्च नेन्द्रियादि उभयसाधारणत्वादित्यसाधारणं पित्तादिरेव तथा वाच्यं तस्य चाऽननुगतस्याऽपि तत्तदप्रमाप्रयोजकत्वं गहीत्वा दोषवाचोयुक्तिः प्रमाप्रतिबन्धकत्वेनाऽप्रमात्वावच्छिन्नकार्यताप्रतियोगिककारणतावच्छेदकरूपवत्त्वेन वा दोषपदशक्तिग्रहात् स्वप्रमां प्रति कारणत्वेऽपि पित्तादेर्विषयत्वातिरिक्तेन रूपेणाप्रमां प्रत्यसाधारण्यस्य विवक्षितत्वात्. एवं स्थाणुत्वेन पुरुषत्वेन वा न निश्चिनोमि धर्मिणं, किन्तु सन्दिहानोऽस्मीति निश्चयविलक्षणस्य सर्वलोकसिद्धस्य संशयस्य निश्चयत्वमापाद्योपप्लावयितुमशक्यत्वं कारणस्याऽपि समानधर्मदर्शनासाधारणधर्मदर्शनविप्रतिपत्तीनामन्यतमस्य प्रतिस्वं निश्चयकारणविलक्षणस्याऽनुभवात्कार्येऽपि संशये विधिकोटिप्राधान्यं निषेधकोटिप्राधान्यं वाऽनुभूयमानमवश्यं वाच्यं वाकारार्थश्च विरोध एव, भवति हि स्थाणुर्वा पुरुषो वेति शब्दश्रवणानन्तरं स्थाणुपुरुषविरोधज्ञानं विरोधप्रतिसन्धायिन एवैतादृशः शब्दप्रयोगइति, तथाऽपि प्रपञ्चखण्डनयुक्तिरत्राऽपि गृहीतेति भाव इति शाङ्करी ।

त्वावान्तरजातित्वेन ज्ञानगतत्वाद्यदि ज्ञानगता तदा वाशब्दप्रतीतिव्यवहारयोरिदं तद्वा न वेत्यर्थवाचकशब्दप्रतीतिव्यवहारसामानाधिकरण्यं न स्यादिति प्रथमग्रन्थार्थं वर्णयन्ति। जातेः प्रतीतिगतत्वे कथं प्रतीतिव्यवहारौ स्यातामित्याशङ्क्य प्रत्येमि न वेत्येवं स्यादित्याह * प्रतीत्येति * इति द्वितीयग्रन्थार्थः। संशयःज्ञानमिति संशयत्वस्य ज्ञानधर्मता प्रसिद्धा सा कथमपन्हूयते इत्यत आह * वाकारेति * यथा निश्चयत्वस्य ज्ञानधर्मत्वेऽर्थनिर्देशसमन्वयो नास्ति तथा संशयत्वस्य ज्ञानधर्मत्वे स्थाणुर्वा पुरुषो वेत्यर्थगतपाक्षिकव्यवहारो न स्यादिति भावः। संशयत्वं विषया[1]नन्वितं ज्ञानधर्मत्वात्साक्षात्कारित्ववदित्युपसंहरति * तस्मादिति * तेनार्थगतमेव संशयत्वं न ज्ञानगतं ततो विनिश्चयात्संशयस्य विशेषो[2]ऽर्थद्वारको न जातिद्वारक इति तात्पर्यार्थः।

सोऽयं न वेति सन्देहस्थले यद्यपि संस्कारद्वारा सम्बद्धविशेषणताप्रत्यासत्तिरस्ति तथाऽपि तस्या दोषवशात्प्रतिबद्धतयाऽकारणत्वादिदन्तातत्तावच्छिन्नयोरभेदग्रहणमैन्द्रियकं नास्ति अपितु दोषादेव तत्प्रकाश इत्याशङ्क्याह।

२०२ दोषेण प्रत्यासत्तेस्तिरस्कारात्सन्देह इति पक्षनिरासः।

न च प्रत्यासत्तौ सत्यामपि प्रत्या*सत्त्यपुरस्कारान्म-

१ विषयत्वानान्वितमिति सो. पु.पा.।

२ विरोधोऽर्थेति पु. पा.।

* दोषवशात्प्रत्यासत्त्यपुरस्कारान्मनसा न ग्रहणमिति योजना।

नसा न ग्रहणं तत्र दोषवशादित्यस्तु । दोषे सत्यपि वस्तुनः संस्कारेण, संस्कारस्य चाऽऽत्मना, तस्य च बाह्येन्द्रियेण, प्रत्यासत्त्यपेक्षण एव तदर्थप्रकाशादिनियमोपपत्तेः कः पुनः प्रत्या†सत्त्यपुरस्कारस्त्वन्मते स्यात् । यदि तु संस्कारप्रत्यासत्तिमनपेक्ष्य तथा सन्दिह्यते तदा ऽऽननुभूय प्रस्मृत्य वा तथा सन्दिह्येत ।

*न चेति* अपुरस्कारात् अहेतुत्वादिति यावत् । सति दोषे संशयो नासतीत्यन्वयव्यतिरेकाभ्यां दोषस्य कारणता किं न कल्प्यते इत्याशङ्क्याह *दोष इति* दोषान्वयव्यतिरेकयोर्विशेषाग्रहणोपयोगितया तावन्यथासिद्धावि[1]ति भावः । किं च प्रत्यासत्तेर्दोषेण स्वरूपप्रतिबन्धः, किं वा शक्तिस्वरूपप्रतिबन्धः, स्वरूपातिरिक्तशक्त्यनङ्गीकारान्न तत्प्रतिबन्धः सम्भवति, नापि स्वरूपप्रतिबन्धः, सत्यपि दोषे प्रत्यासत्तेरपरिलूनत्वादन्यथा निवृत्ते तस्मिन् सोऽयमेवेति निश्चयानुपपत्तिप्रसङ्गादित्याह *क इति* संस्कारस्य सन्देहबीजत्वे न प्रमाणं पश्याम इत्याशङ्क्यान्वयव्यतिरेकौ प्रमाणमित्याह *यदीति* तु शब्दोऽन्वयद्योतकः । अननुभूयेति संस्कारानुत्पत्तिर्दर्शिता। अननुभूते दोषादपि सन्देहोत्पत्तेर्नायं प्रसङ्ग इत्याशङ्क्याह *प्रेति* कालव्यवधा-

---

† यद्यपीदं रजतमित्यारोपे शुक्तित्वेन सह सतोऽपि संयुक्तसमवायस्य दोषेण तिरस्कारो दृष्टस्तथाऽपि तस्याऽपि खण्ड्यत्वादिति (शाङ्करी)

१ अन्यथासिद्धत्वादिति यावदिति सो० पु० पा० ।

नादिना संस्कारे नष्टे इत्यर्थः । न चैवं संशयो दृश्यते तेन संस्कारद्वारकप्रत्यासत्तिविशेषादेव सन्देह एष्टव्य इत्यर्थः ।

पूर्वं संस्कारद्वारा प्रत्यासत्त्या तत्तावैशिष्ट्यग्रहणमभ्युपगम्य सन्देहानुत्पत्तिरुक्ता सम्प्रति तदेव न सम्भवतीत्याह ।

२०३ सम्बद्धविशेषणताप्रत्यासत्त्याऽभेदग्रहणानुपपत्तिः ।

वस्तुतस्तु मनसा संस्काराग्राहिणा, चक्षुरादिना चात्माऽग्राहिणा, तादृशप्रत्यासत्त्या ग्रहणानुपपत्तेः, नि*यमेन तदिन्द्रियाग्राह्याश्रयकप्रतियोगिकेतरस्य ग्रहणे स्वग्राह्यसम्बद्धविशेषणतायाः प्रत्यासत्तित्वनियमात् । अन्यथाऽऽप्यपरमाण्वादौ पृथिवीत्वादेरन्यत्र ग्राह्यतया निरस्तस्वरूपायोग्यत्वस्याभावो दृगादिभिर्गृह्येत । नहीन्द्रियविहारदेशेषु निष्परमाणुकत्वनियमो युक्ताभ्युपगमः । शब्दा-

---

शङ्करमिश्रास्तु नियमेनेति पूर्वान्वयि ईदृशप्रत्यासत्त्या ग्रहणानुपपत्तिनियमादित्यर्थः तत्र हेतुः तदिन्द्रियेत्यादि विशेषणताप्रत्यासत्तेः स्वग्राह्यसम्बद्धविशेषणतारूपत्वनियमादिति तदर्थः गन्धरसाद्यभावानां तदिन्द्रियाग्राह्याश्रयनिष्ठत्वेन ग्रहणाद्व्याप्तिभङ्गनिवारणाय तदिन्द्रियाग्राह्याश्रयकप्रतियोगिकेतरस्य ग्रहण एवा व्याप्तिरित्युक्ता यद्वानियमेनेत्यग्रेयोजनीयं नियतं तदिन्द्रियाग्राह्यत्वं विवक्षितं नतु कादाचित्कं तथा सति चक्षुषा कदाचिद्भूतलादि न गृह्यते यत्र तत्र विशेषणतया गृह्यमाणस्यापि घटाभावस्योक्तविशेषणानाक्रान्तत्वात्सहचारदर्शनस्थलाभावेन व्याप्तिनिश्चय एव न स्यादिति तदिन्द्रियाग्राह्यत्वं तदिन्द्रियस्वरूपायोग्यत्वं तच्च नियमपदान्तभावेन निर्वहतीति व्याचख्युः ।

भावप्रत्यक्षत्ववादिनये श्रोत्रेन्द्रियविशेषणता सप्तमः सन्निकर्षो न तु तत्र सम्बद्धविशेषणते त्यतोऽपि न व्यभिचारः ।

*वस्तुत इति* तादृशप्रत्यासत्त्या तत्तावैशिष्ट्यं मनसा गृह्यते, चक्षुरादिना वा, नतावन्मनसा, तस्याऽऽत्मग्राहकत्वेपि संस्काराग्राहकतया तद्विशेषणतत्तावैशिष्ट्यग्रहणायोगान्नापि चक्षुरादिना, तस्याऽऽत्मग्राहकत्वाभावेन तत्समवेतसंस्कारादिग्राहकत्वस्य सुतरामसम्भवादित्यर्थः । चक्षुःसम्प्रयोगोऽतीन्द्रिय एव यथाऽर्थप्रमापकस्तथा संबद्धविशेषणताऽपि प्रत्यासत्तिरप्रतीयमाना तत्तावैशिष्ट्यग्राहिका किं न स्यादित्यत आह *नियमेनेति* यद्वा कथं तर्ह्यभावादौ सम्बद्धविशेषणत्वस्य प्रत्यासत्तितेत्याशङ्क्याह *नियमेनेति* स्वेनेन्द्रियेण ग्राह्यश्चासौ सम्बद्धश्चेति स्वग्राह्यसम्बद्धस्तस्य विशेषणं तस्य भावस्तत्ता तस्याः संनिकर्षत्वानियमात् तद्यथा चक्षुषा ग्राह्यं भूतलं सम्बद्धं तस्य विशेषणं कुम्भाभावः तद्ग्राह्यविशेषणत्वप्रत्यासत्त्या कुम्भाभावोऽनुभूयते, मनःसम्बद्ध आत्मा तस्य विशेषणं ज्ञानाभावादिस्तत्रापि स्वग्राह्यविशेषणतया प्रत्यासत्त्या ज्ञानाभावादिर्मनसा गृह्यते एवं सर्वत्राप्युन्नेयम् ।

ननु नायं नियमोऽस्ति श्रोत्राग्राह्येऽप्याकाशे शब्दाभावस्य स्वाग्राह्य[2]सम्बद्धविशेषणताप्रत्यासत्त्या ग्रहणा-

---

।१। इदमवतरणं यद्वेति च नियमेनेत्यादिसमस्तपङ्क्तेर्नतु नियमेनेत्यंशस्य तस्याग्रेऽवतारयिष्यमाणत्वादिति बोध्यम् ।

(२) स्वग्राह्यसम्बद्धेति सो. पु. पा. ।

दित्याशङ्क्याह *तदिति* शब्दाभावादिग्राहकं श्रोत्रादि तदित्युच्यते तेनेन्द्रियेणाग्राह्यआकाशादिराश्रयो यस्य शब्दादेः स तदिन्द्रियाग्राह्याश्रयः स प्रतियोगी यस्य शब्दाभावादेः स तथोक्तस्तस्मादितरः तस्य ग्रहण इति यावत् । प्रत्यासत्तिमात्रस्य प्रयोजकत्वे सम्भवति स्वग्राह्यसम्बद्धेत्यादिविशेषणं नोपादेयं गौरवादित्याशङ्क्यान्वयव्यतिरेकप्रमाणसिद्धत्वान्न गौरवमित्याह * नियमेनेति[1] * यद्वानियमेनेति विशेषणाप्रक्षेपे रूपाश्रयस्य-कचिच्चक्षुर्ग्राह्यत्वात्परमाणुनिष्ठश्यामत्वाभावादिस्तदिन्द्रियाग्राह्याश्रयकप्रतियोगिकाभावे(तरो भवति परमाणोश्चक्षुर्ग्राह्यत्वाभावेऽपि रूपाश्रयत्वोपाधौ[2] तद्ग्राह्यत्वात् तेन तदिन्द्रियाग्राह्याश्रयप्रतियोगिकाभावे)तरत्वात्परमाणुगतश्यामत्वाभावस्य तत्रापि स्वग्राह्यसम्बद्धविशेषणतायाः प्रत्यासत्तित्वं प्रसज्येत तद्व्यावृत्त्यर्थं नियमेनेति विशेषणं द्रष्टव्यम् । तद्ग्रहणयोग्यत्वेपि व्यवहितस्थले विशेषणं प्रत्यक्षं न भवतीति सम्बद्धग्रहणम् । विपर्यये भङ्गं भणति * अन्यथेति * आप्यपरमाणवस्तावच्चक्षुः सम्बद्धास्तद्विशेषणं पृथिवीत्वाभाव इति विशेषणत्वप्रत्यासत्त्याऽऽप्यपरमाणुषु पृथिवीत्वाभावश्चक्षुषा गृह्येतेत्यर्थः । पार्थिवपरमाण्वादावप्त्वादिजात्यभा-

(१) अस्मिन्पक्षे नियमेनेत्यस्यान्वयव्यतिरेकप्रमाणसिद्धत्वेनेत्यर्थः नियमादित्यस्य च अन्वयव्यतिरेकसिद्धकारणभावायाः स्वग्राह्यसम्बद्धविशेषणतायाः प्रत्यासत्तित्वव्याप्तेरित्यर्थः ।

(२) रूपाश्रयत्वावच्छेदेनेत्यर्थः

( )एतन्मध्यगतो ग्रन्थः पु. नास्ति ।

घो दृगादिना गृह्येतेत्यादिशब्दार्थः । प्रतियोगिनश्चाक्षुषत्वाभावादभावस्य न चाक्षुषत्वं न पुनराश्रयाग्रहणादित्यतआह *अन्यत्रेति* घटादौ पृथिवीत्वस्य चाक्षुषत्वादयोग्यत्वं नास्तीत्यर्थः। परमाण्वादेरिन्द्रियग्राह्यत्वाभाववदिन्द्रियसम्बद्धताऽपि नास्ति कथं तद्विशेषणतया पृथिवीत्वादेरभावश्चक्षुरादिना ग्राह्यः प्रसज्येतेत्याशङ्क्याह * नहीति * परमाणूनां सर्वत्राविरलतयाऽवस्थानमेष्टव्यं अन्यथा जायमानकार्यस्य देशविशेषे परमाणुकार्यत्वाभावप्रसङ्गादित्यर्थः। पूर्वं शब्दाभावस्य सम्बद्धविशेषणतया श्रोत्रग्राह्यत्वमुपेत्य तत्र व्यभिचारनिवारणाय तदिन्द्रियाग्राह्याश्रयप्रतियोगिकाभावेतरेति विशेषणमुदीरितं इदानीं शब्दाभावस्य ग्राहकेन्द्रियसम्बद्धविशेषणत्वमपि नास्तीत्याह * शब्देति * संयोगः संयुक्तसमवायः संयुक्तसमवेतसमवायः समवायः समवेतसमवाय इति पञ्चविधः सम्बन्धः विशेषणविशेष्यभावश्चेति षोढा संनिकर्षः श्रोत्राकाशयोरेकत्वात्सर्वगतमिन्द्रियमाकाशमिति लक्षणादाकाशविशेषणं शब्दाभावः श्रोत्रस्यापि विशेषणमिति स्वविशेषणता सप्तमः सन्निकर्षस्तेन तदिन्द्रियग्राह्यसम्बद्धविशेषणत्वप्रयोजकस्य न क्वापि व्यभिचारइत्यर्थः। शब्दाभावः षष्ठप्रमाणक इति भाट्टदृष्टिः ततो विशेषणं प्रत्यक्षतावादिनय इति।

संस्कारद्वारकप्रत्यासत्त्या प्रत्यभिज्ञायां तत्तावच्छिन्नाभेदग्रहणं न घटते चेन्माघटिष्ट आत्मसंयुक्तमनःप्रति पूर्वानुभूतस्यार्थस्य प्रत्यासत्तिरेव संस्कारोऽस्तु घ-

रादेश्चक्षुःसन्निकर्षस्यातीन्द्रियस्योपगमात्संस्काराख्यसन्निकर्षस्यातीन्द्रियत्वं न दोषायेत्याशङ्क्याह।

२०४ संस्कारस्यैव मनःप्रत्यासत्तित्वनिरासः।

न चात्मसंयुक्तमनः प्रति पूर्व्वानुभूतार्थाऽऽत्मप्रत्यासत्तिरेव संस्कारइति तदतीन्द्रियत्त्वं न दोषाय, प्रत्यासत्तेरतीन्द्रियाया इन्द्रियार्थसन्निकर्षस्योपगमादिति स्वीकृते निस्तारः। तथा सति स इत्यंशे चक्षुरादेः प्रत्यासत्त्यभावात्प्रत्यभिज्ञाया अचाक्षुषत्त्वापातात्। अयमित्यंशो दृगादिना, तदंशस्तु मनसा गृह्यतां, तदेतदभेदस्तु केनेत्युक्तमप्यावर्तत इति।

* नचेति * पूर्वानुभूतावर्थात्मानौ तयोरात्मसंयुक्तमनः प्रति प्रत्यासत्तिरेव संस्कारः सोऽहमिति प्रत्यभिज्ञायामात्मसंयुक्तमनः प्रति पूर्वानुभूताऽऽत्मप्रत्यासत्तिः संस्कारः सोऽयं घट इत्यत्र पूर्वानुभूतोऽर्थः प्रत्यासत्तिरिति विभागः। सोऽहमिति प्रत्यभिज्ञासम्भवेपि सोऽयं घट इति प्रत्यभिज्ञा न स्यात् चक्षुःसन्निकर्षाभावात्तत्ताविशिष्टस्येति हेतुमाह * तथेति * स इति भागो मानसोऽयमिति भागश्चाक्षुषस्तेन चक्षुर्मनोभ्यां सोऽयमिति प्रत्यभिज्ञा घटिष्यत इत्यत आह * अयमिति *

प्रत्यभिज्ञायां तत्तावैशिष्यमसन्निकृष्टं चक्षुषा गृह्यत इति मतान्तरमपि निरस्तमित्यतिदिशति।

२०५ असन्निकृष्टस्यैव चक्षुषा ग्रहणमिति मतनिरासः ।

एतेन संस्कारः सहकारिमात्रमिन्द्रियस्यातिप्रसङ्गनिवारकः, प्रत्यभिज्ञायां तदर्थ इन्द्रियेणासन्निकृष्ट एवोल्लिख्यते विभ्रमार्थवत्, सन्निकृष्टग्राहिता चेन्द्रियस्य सन्निकर्षसहकार्य्यवश्यम्भावमात्रं तच्चेदमंशसन्निकर्षादेव स्यात् नतु सर्वग्राह्यसन्निकर्षसहकारितेत्यपि निरस्तम्। सोऽयं न वेति संशयाभावापातेनैवेति ।

तदद्राक्षमित्यादिस्मृतिरपि चैवमनुभव एव स्यात् । मनस आत्मसंयोगसहकृतादात्मार्थसन्निकर्षात् संस्काराज्जायमानाया स्तस्या इन्द्रियार्थसन्निकर्षजत्वादेव, मनसाऽऽत्मसंयोगै[1]रात्मसमवायेन प्रत्यक्षीक्रियमाणैर्ज्ञानादिभिः स्मर्य्यमाणस्यार्थस्याऽविशेषादिति ।

* एतेनेति * अन्वयव्यतिरेकाभ्यां तत्तावैशिष्ट्यज्ञानस्य संस्कारकरणत्वेऽवसीयमाने कथं करणान्तरमित्याशङ्क्य सहकारितयाऽन्यथासिद्धौ तदन्वयव्यतिरेकावित्याह * संस्कार इति * केन द्वारेण सह करोतीत्यपेक्षायामतिप्रसङ्गनिवारणद्वारेत्याह * अतीति * अस्मदादीन्द्रियस्य देशकालादिसहकार्यपेक्षया स्थूलार्थग्राहकत्वनियमादसन्निकृष्टग्राहकत्वं कथमङ्गीक्रियत इत्यत आह * भ्रमेति * भ्रमार्थो रजतादिरसन्निकृष्टो दोषसहकृतेन्द्रियेण गृह्यते यथा, तथा सं-

१ संयोगात्मसमेति सो० पु० पा० ।

स्कारसहकृतेन्द्रियेण तत्तावैशिष्ट्यमसन्निकृष्टमपि गृह्यत इत्यर्थः। चक्षुरादिकं सन्निकृष्टग्राहि बहिरिन्द्रियत्वात् त्वगादिवदित्याशङ्क्य सन्निकर्षमात्रोपगमात्सिद्धसाधनमित्याह *सन्निकृष्टेति* प्रमार्थस्य ग्रहणं विप्रकृष्टस्यावश्योपेयं तेन प्राप्यकारित्वमिन्द्रियस्य सम्प्रयोगसहकारित्वमात्रापेक्षमुपेयमिति भावः। प्रागवस्थावैशिष्ट्यस्याऽसम्प्रयुक्तत्वेऽपीदन्ताविशिष्टस्य सम्प्रयुक्तत्वात्सन्निकर्षमात्रसहकारित्वमुपपन्नमित्याह *तादिति* अनेकन्यायस्य प्रकृतत्वात्परामृष्टन्यायः क इत्यपेक्षायां तं विशदयति *सोऽयमिति* संस्कारसहकृतेन्द्रियस्य प्रत्यभिज्ञाकरणत्वान्न ततः संशयः स्यादित्यर्थः। संस्कारसम्बद्धविशेषणताप्रत्यासत्त्या संस्काररूपप्रत्यासत्त्या वा तत्तावैशिष्ट्यस्यैन्द्रियकत्वेन प्रत्यभिज्ञाया अनुभवत्वे स्मृतेरप्येवमनुभवत्वं स्यादिति पक्षद्वयेपि साधारणं दूषणान्तरमाह *तादिति* स्मृतिरनुभव उक्तसन्निकर्षजत्वात्प्रत्यभिज्ञानवदित्यपिशब्देनोक्तं तत्र हेतुं समर्थयते *मनस इति* मनःसंयुक्त आत्मा तस्मिन् समवेतः संस्कारस्तस्य च विशेषणं पूर्वानुभूतार्थ इतीन्द्रियसन्निकर्षजत्वमत्राऽप्यस्तीत्यर्थः। सोऽहमिति प्रत्यभिज्ञानवदिदं द्रष्टव्यम्। अनुभवत्त्वमिति साक्षात्कारित्त्वं विवक्ष्यते चेत्प्रयोगे तत्र च बाह्येन्द्रियजत्वमुपाधिस्तदभावान्न स्मृतेः प्रत्यक्षत्वमित्याशङ्क्याऽऽत्मतत्समवेतसुखादिप्रत्यक्षे साध्याव्याप्त्योपाधिं दूषयति *मनसेति* आत्ममनःसंयोगादात्मप्रत्यक्षं संयुक्तसमवायात्सुखादिप्रत्यक्ष-

मङ्गीक्रियते तेनाव्याप्तिस्तत्रेत्यर्थः। इतिशब्दो विपक्षे बाधकं अन्यथा सुखादीनामपि प्रत्यक्षता न स्यादविशेषादिति सूचयति। स्मृतेरनुभववैलक्षण्यानुपपत्त्या संस्कारस्तद्द्वारकं सम्बद्धविशेषणत्वं वा प्रत्यासत्तिर्नेति भावः।

तत्तावच्छिन्नप्रतियोगिकान्योन्याभावाभावोऽभेदः स चेदन्तावच्छिन्नस्य स्वरूपमेव, यद्वा स्वरूपमेव[1] वाऽभेदो नान्यः कश्चिद्धर्म उभयथाऽपीन्द्रियसन्निकर्षादेव गृह्यते इति मतमतिदेशेन निराचष्टे।

२०६ भेदाभावः स्वरूपाभेदो वा भासत इतिपक्षनिरासः।

एतेन तत्तावच्छिन्नप्रतियोगिकान्योन्याभावविरहः स्वरूपाभेदो वाऽयं भातीत्यपि निरस्तम्। अन्योन्याभावव्यतिरेकोऽन्योन्यमेव तत्तेदन्तोपाध्यवच्छिन्नयोः स्यात् न च तन्मिलितमेकेन सुग्रहम्। एवं स्वरूपाभेदेऽपि तयोर्धर्म्मैक्यं तदनवगाहिना दुरवगममेव।

* एतेनेति * अन्योन्याभावविरहोऽभेद इति वदन् प्रष्टव्यः किमसावन्योन्यमुतान्य इति, नान्यः भावाभावयोरेकतरनिषेधस्यान्यतरविधिध्रौव्याभ्युपगमव्याघातात्, यद्यन्योन्यमेव तदाऽपि तन्मिलितं किं संस्कारेण गृह्यते किमिन्द्रियेण, नोभयथाप्येकैकेन मिलितग्रहणायोगादित्यभिप्रेत्याह * अन्योन्येति * अन्योन्याभावविरहपक्षोक्तदोषं स्वरूपपक्षेऽप्यतिदिशति * एवमिति *

---

१ यद्वा स्वरूपाऽभेदोऽन्यः कश्चिद्धर्म इति पु० पा०।

एवं तावत्तत्तावैशिष्ट्यस्य विप्रकृष्टस्य नेन्द्रियग्रहणमित्युक्तं इदानीं तर्ककलापस्य विपर्ययापर्यवसायित्वपरिहाराय विमतः स इति भागो नानुभूतिः संस्कारजत्वात्स्मृतिवद्विपक्षे स्मृतेरपि तत्त्वप्रसङ्गो बाध इति प्रयोगं रचयति।

२०७ स्मृतेः संस्कारजत्वेऽप्यनुभवत्वापत्तिः।

संस्कारोपनीते च विषये यदि ज्ञानमनुभवः स्यात् स्मृतिरपि कुतो नानुभूतिः। अथ न संस्काराधीनत्वमात्रेण स्मृतित्वं किन्त्वनुभवकारणासम्पृक्तसंस्कारजत्वेन ततश्चाधिकार्थाक्षसन्निकर्षापेक्षं प्रत्यभिज्ञानमनुभव एव भवति न तु स्मृतिरिति चेन्न। संस्कारासम्पृक्तानुभवकारणजत्वेनानुभवत्वम्भवति, प्रत्यभिज्ञानन्तु संस्कारसहितानुभवकारणजं स्मृतिरेवेति वैपरीत्यं किन्न स्यात्। अन्यत्र न स्मृतिरनुभवकारणसम्पृक्तसंस्कारजन्मेति तु नान्यत्रानुभवोऽपि संस्कारसम्पृक्तार्थेन्द्रियसंयोगजन्मेति साम्यादेवाबाधकम्।

*संस्कारेति* संस्कारजत्वं न स्मृतित्वप्रयोजकं किन्तु केवलसंस्कारजत्वमतोऽप्रयोजकोहेतुरिति शङ्कते *अथेति* प्रत्यभिज्ञानस्य पुनः संस्कारसम्प्रयोगजन्यतया न साधनव्यापकतोपाधेरित्याह *तत इति* अधिकश्चासावर्थाक्षसन्निकर्षश्चेति तदपेक्षमितियावत्। संस्कारस्यान्यत्र स्मृतिहेतोः सम्प्रयोगसचिवस्याऽपि

नानुभवहेतुत्वमित्याशङ्क्य दध्नः केवलस्य ज्वरहेतुत्वेऽपि गुडमिश्रितस्य पुष्टिहेतुत्ववदविरोधइत्याह *नेति* तु-शब्दः शङ्काव्यावृत्त्यर्थः। निर्विशेषणसंस्कारजत्वहेतौ केवलेति विशेषणेन नोपाधित्वं गौरवादन्यथा शरीरिजन्यत्वस्येश्वरानुमानोपाधिता स्यादित्यभिप्रेत्य परिहरति *नेति* किं च यत्र स्मृतित्वसम्प्रतिपत्तिस्तत्र केवलसंस्कारजत्वदर्शनात्संस्कारजत्वमप्रयोजकं कल्प्यते चेदयं कुम्भ इत्यादौ सम्प्रयोगस्यैव दर्शनादस्य चानुभवत्वप्रयोजकस्य प्रत्यभिज्ञानेऽभावात्स्मृतित्वमिति विपरीतं किं न स्यादित्याह * संस्कारेति * सा मे मातेत्यादौ स्मरणस्य संस्कारातिरिक्तकारणाजन्यत्वादर्शनात्तदुपाधौ प्रत्यभिज्ञानस्य स्मृतित्वेऽनुपलब्धिविरोध इत्याशङ्क्याह *अन्यत्रेति* स्मृतिरन्यत्रानुभवकारणसम्पृक्तसंस्कारजन्मा नेतीत्यबाधकमन्यत्रानुभवोऽपि संस्कारसम्पृक्तार्थेन्द्रियजन्मा न भवतीति साम्यादेवेत्यन्वयः।

प्रत्यभिज्ञानस्यैकानुभूतित्वपक्षं निराकृतं निगमयति

२०८ प्रत्यभिज्ञानस्यैकानुभवत्वपक्षनिरासोपसंहारः।

तदेवं विनिगमनायां प्रमाणाभावात् स्वयं कल्पितव्यवस्थानवैपरीत्येनाऽपि कल्पनासम्भवात्प्रत्यभिज्ञानमुभयकारणसम्प्लवात् स्मृतिश्चानुभवश्चेति मन्तव्यं तथाच स्मृतिव्यावृत्तमनुभवत्वं जातिरस्तीति दुष्प्रत्याशा निरवकाशा। नच विषयांशे स्मृतित्वाऽनुभवत्वयोर्व्यव-

स्था कर्त्तुं शक्यते तन्निरासस्य निवेदितत्वात् । ततश्च तदेव ज्ञानं तस्मिन्नेवांशे स्मृतिश्चानुभूतिश्चेत्यापतितेऽपि यदि न विरोधबुद्धिर्भवतस्तदा तदधीने तत्रैवार्थे प्रमात्वाप्रमात्वापाते साऽस्तु ।

*तदिति* संस्कारजत्वात्प्रत्यभिज्ञा स्मृतिरुत स-

१ यद्यपि प्रत्यभिज्ञानमेकं ज्ञानं साक्षात्कार्यनुभवरूपतयाऽनुव्यवसायासिद्धं तस्य च विषयस्तत्तेदन्तावच्छिन्नान्योन्याभावात्यन्ताभावः सच स्वरूपमेव तयोस्तदुगतासाधारणधर्मो वा कश्चिदित्यन्यदेव तदनुभवस्य दुरपह्नवत्त्वात् तच्च संस्कारेन्द्रियाभ्यां जन्यते अन्वयव्यतिरेकाभ्यां द्वयोरपि कारणत्वावधारणात् अन्यथा कार्यस्याऽऽकस्मिकत्वेनाहेतुकत्वेन परप्रतिपादनार्थं तवाऽपि वाग्व्यवहारोन स्यात् प्रतिनियतविषययोरपि संस्कारेन्द्रिययोः सम्भूयकारित्वं प्रत्यभिज्ञाऽन्यथानुपपत्त्यैव, तत्रमोपपद्यतां प्रत्यभिज्ञानं माच तत्तेदन्ताविशिष्टाभेदस्तद्विषयोऽस्त्विवति त्वयाऽपि वक्तुमशक्यमनुभवविरोधात्क्षणभङ्गापत्तेश्च । योऽहमद्राक्षं सोऽहंस्मरामीत्यभेदप्रतिसन्धानस्य सर्वतैर्थिकसिद्धत्त्वात् तत्ताऽभेदश्चेन्द्रियसम्बद्धविशेषणतयैव भासते घटादेश्च प्रत्यभिज्ञायमानस्य ग्राह्यत्वेन स्वग्राह्यसम्बद्धविशेषणताया एव सत्त्वात् । तत्तांशमात्रे संस्कारेणाऽपि तदवच्छिन्नाभेदांशोऽपि विशेषणतया कथं भासेतेति चेन्न । संस्कारानुपनीतस्यापि विशेषणताभ्युपगमात् । भूतले घटाभावस्येव विशेषणतयैव तत्ताभाने किं संस्कारेणेति चेन्न । अननुभूते प्रत्यभिज्ञाया अदर्शनात् अनुभवस्याऽपि तत्कारणत्वसिद्धौ तस्य च चिरध्वस्तस्य व्यापारापेक्षायां संस्कारकारणत्वकल्पनात् । अतीताऽपि तत्ता विशेषणमेव द्वे द्रव्य-इत्यत्र द्वित्वमिव तत्ता च पूर्वानुभववैशिष्ट्यं तदसत्त्वकाले तज्ज्ञानं नभ्रमः । कथमितिचेन्न । सोऽयमिति "तदभिन्नोऽय"मिति प्रतीयते नतु तदवच्छिन्न इदानीमिति प्रत्यभिज्ञाविषयो येन भ्रमः स्यात् संस्कारजन्यत्वेन च न स्मृतित्वमिन्द्रियाजन्यत्वस्योपाधित्वात् । नचेन्द्रियजत्वेन चानुभवत्वे साध्ये संस्काराजन्यत्वमुपाधिः । अनुभवत्वस्य प्र-

म्प्रयोगजत्वादनुभव इति निश्चायकाभावात्प्रत्यभिज्ञा स्मृतिरनुभवश्चेति मन्तव्यमिति सम्बन्धः। केवलसंस्कारजन्यत्वं स्मृतित्वप्रयोजकमतिरिक्तकारणजत्वमनुभवत्व इति वादिकल्पनं नियामकमित्याशङ्क्य प्रतिकल्पनत्वान्मैवमित्याह * स्वेति * उभयात्मत्वविनिगमनायां प्रमाणाभावसाम्यात्तदपि नेष्टव्यमित्यत आह * उभयेति * एवं सतीतोऽपि नानुभूतित्वं जातिरिति यत्प्रत्यज्ञायि तत्सिद्धं प्रत्यभिज्ञायां स्मृतित्वानुभूतित्वसङ्करादिति फलितमाह * तथा चेति * तत्तावच्छिन्ने स्मृतित्वस्येदन्तावच्छिन्ने ऽनुभूतित्वस्य व्यवस्थितत्वान्न सङ्कर इत्याशङ्क्य धर्मिणमादायापीत्यत्र दत्तोत्तरत्वान्मैव मित्याह * न चेति * ।

" प्रमाणवत्त्वादायातः प्रवाहः केन बाध्यत "

इति न्यायादुभयाऽऽत्मत्वं प्रामाणिकं चेदस्तु का नाम वस्तुक्षतिः सर्वविरोधपरिहारस्य प्रमाणमूलत्वादित्यत आह * ततश्चेति * विषयद्वारा कारणद्वारा वा न व्यवस्थितिर्यतस्तत इत्यर्थः । स्मृतित्वानुभूतित्वयोरप्रमात्वप्रमात्वाविनाभावात्तयोरत्राऽवस्थानं स्यात्तत्र साऽविरोधबुद्धिर्भविष्यतीति यावत् ।

पूर्वमनुभवामीति प्रत्ययो नानुभवत्वव्यवस्था-

---

त्यक्षसिद्धत्वेनोपाधिव्यतिरेकेण तद्व्यतिरेकस्य साधयितुमशक्यत्वेनोपाधेर्बाधितविपर्ययत्वेनाऽऽभासत्वात् । अस्तु वा प्रत्यभिज्ञानं स्मृतिजन्यं तथापि संस्कारजन्यत्वेन स्मृतित्वापादनमिन्द्रियजन्यत्वेन चाऽनुभवत्वसाधने संस्काराजन्यत्वमुपाधिश्चाऽनवकाशः स्मृत्युपनीतैव तत्ता भासते भ्रम इव रजतत्वमिति प्रत्यभिज्ञानखण्डनमनवकाशं तथाऽपि हस्तसमावरणमात्रमेतत्सर्वमिति हृदयामितिशाङ्करी ।

**चको भाविसुखादिज्ञानेऽनुभवत्वे सत्येवानुभवामीतिप्रत्ययाभावादित्युक्तं इदानीं स्मृतिव्यतिरेकादेवानुगतव्यवहारोपपत्तौ साक्षात्कार्यसाक्षात्कारिसाधारणमनुभवत्त्वं नेष्टव्यं अङ्गीकारे प्रमात्वाप्रमात्वयोरेकत्रावस्थानप्रसङ्गादिति प्रसङ्गमतिदिशति ।**

२०९ सङ्करादनुभवत्वस्य न जातित्वमिति निरूपणम् ।

एतेन विरोधापत्त्याऽनुभवत्वस्वीकारे बाधकेन स्मृतिव्यतिरिक्तमनुभवत्त्वं नामानुगतं साक्षात्कारिज्ञानानुमित्यादिसाधारणमनुभवबलादेव व्यवस्थापनीयमिति प्रतीतिकलहोऽपि निरस्तः ।

*** एतेनेति * एतेन—बाधकेन स्मृतित्वानुभूतित्वसङ्कररूपेण प्रमात्वाप्रमात्वयोरेकाश्रयत्वाविरोधापत्त्येति यावत् ।**

**विमतं ज्ञानं नानुभूतिरिति पूर्वोक्तानुमानेऽनुभवविरोधं शङ्कते ।**

२१० अनुभवविरोधोद्भावनं तत्समाधानञ्च ।

ननु चानुभव एव शरणमिह, प्रत्यभिज्ञाने ह्यनुभवत्वमेवानुभूयते न तु स्मृतित्वं, तेन संस्कारजत्वेऽपीन्द्रियार्थसन्निकर्षाधिकापेक्षयाऽनुभवत्वमेवेति विनिगमनायामपीदमेव प्रमाणमन्यथा प्रत्यभिज्ञानेऽनुभवप्रत्ययो न स्यादिति प्रतीतिकलहेन प्रत्यवस्थेयमिति ।

न, इदन्तातत्तावभासयोरनुभवस्मरणभागयोः स-

। १ । बाधंबलेनेतिक्वचित्पाठः ।

स्वेनानुभवस्यैकपक्षेऽसाधारणीकृत्य प्रमाणयितुमिहाशक्यत्वात् ।

*ननु चेति* प्रत्यभिज्ञानेऽनुभवत्वमेव नानुभूयते कुतस्तद्विरोध इत्यत आह *इह प्रत्यभिज्ञानेहीति* अपरोक्षत्वादिदमाकारप्रतीतित्वाच्चानुभवत्वमनुभूयत इत्यर्थः । स इति स्मृतित्वानुभवात्स्मृतित्वमपीति, नेत्याह *न त्विति* स्मृतित्वेनानुभवे स इत्येतावन्मात्रपर्यवसानं स्यात् । न चानुभवेऽयमित्येव पर्यवसानमिति वाच्यम् । स्वोपजीव्याक्षजत्वविरोधे स्मृतित्वस्यैवायुक्तत्वादित्यर्थः । संस्कारजत्वात्स्मृतिजत्वं सम्प्रयोगजत्वादनुभवत्वं चेति विनिगमने कारणं नास्तीति यदुक्तं तदेवं सत्यसिद्धमनुभवस्यैव विनिगमकत्वादित्याह * तेनेति * विपक्षबाधकोपन्यासेनोक्तमर्थं द्रढयन्नुपसंहरति * अन्यथेति * अनुभवैकरूपत्वनिषेधे प्रत्यभिज्ञायां नानुभवविरोधः स्मृतित्वस्याऽप्यनुभूयमानत्वादिति परिहरति * नेति * अयमित्यनुभवत्वस्यानुभवादनुभूतित्वमेव प्रत्यभिज्ञानस्य, किं वाऽनुभवत्वमपीति, नाद्यः स इति स्मृतित्वानुभवेन वैपरीत्यप्रसङ्गात् । द्वितीये न सङ्करः परिहृतः स्यादित्याशयः । असाधारणीकृत्येति पदच्छेदः ।

प्रकृतं प्रमालक्षणं परित्यज्य कस्मादकस्मात्प्रत्यभिज्ञानं खण्ड्यत इत्याशङ्क्य प्रमालक्षणखण्डनोपयोगित्वं दर्शयति ।

२११ प्रत्यभिज्ञाखण्डनस्योपयोगः।

एतेन स्मृत्यनुभवसङ्करप्रसङ्गेनानुभूतिपदव्यवच्छेद्यं परिप्लुतं मन्तव्यम्।

*एतेनेति* अनुभूतिपदेन स्मरणं व्यावर्त्यं न तच्छक्यमनुभवत्वे सत्येव प्रत्यभिज्ञाने स्मृतित्वस्य दर्शितत्वादतोऽनुभूतिपदं व्यर्थमित्यर्थः।

प्रत्यभिज्ञाव्यतिरिक्तस्मृतिव्यवच्छेदार्थत्वादनुभूतिपदं न व्यर्थमित्याशङ्क्याऽऽह

२१२ अनुभवपदस्य स्मृतिव्यावर्तकत्वनिरासः।

नच†वाच्यं प्रत्यभिज्ञानं व्यवच्छेद्यं माभूत्, स्मृत्यन्तरन्तु भविष्यतीति। तस्याऽप्यनुभूतित्वेन भवताऽवश्यं स्वीकर्त्तव्यत्वात्। तथा * हि-घटस्तत्रासीदित्यादिस्मृतौ पूर्वकालविशिष्टो घटः स्फुरति, न चासौ पूर्वमनुभूता भूततया संस्कारेणोपनीयेत प्रत्युत पूर्वं वर्त्तमानताया एवानुभूत्या ग्रहणं तस्मादिदानींपूर्व्वता¹धीसामग्रीसम्भेदात्

१ पूर्वता सामग्रीति का० मु० पा०।

† यद्यपि प्रत्यभिज्ञानमनुभूतिपदव्यवच्छेद्यत्वेन नोपक्रान्तं न वा तद्व्यवच्छेदः सिद्धान्त्यभिमतः शङ्क्यो वा तथाऽपि स्मृतीनामनुभवत्वापादनाय प्रस्तावनामात्रपरमेतत्।

* यद्यपि पूर्वानुभवकालीना विद्यमानतैव तत्ता, पूर्वकालवैशिष्ट्यं वा, पूर्वानुभववैशिष्ट्यं वा, पूर्वदेशसम्बन्धो वा, यत्किञ्चित्कालीनसम्बन्धो वा, सर्वत्र पूर्वानुभवविषयतायाः सत्त्वात् पूर्वानुभवविषयत्वस्य तत्तात्वे य एवानुभवेन पूर्वं गृहीतस्तद्विषय एव स्मरणाभ्युपगमात् न तत्तांशेनानुभवप्रसङ्गः तथाऽपि स्मरणस्य मानसानुभवत्वे किं बाधकमिति हृदयम्।

(१३) विधिरसायनम् श्रीअप्पय्यदीक्षितकृतम् स० (मीमांसा) १

(१४) न्यायसुधा ( तन्त्रवार्तिकटीका ) भट्टसोमेश्वरविरचिता । ( मीमांसा ) १'

(१५) शिवस्तोत्रावली । उत्पलदेवाचार्यरचिता । श्रीक्षेमराजविरचितवृत्तिसमेता । ( वेदान्तः ) २

(१६) मीमांसाबालप्रकाशः ( जैमिनीयद्वादशाध्यायार्थसंग्रहः ) श्रीमद्... भट्टशङ्करविरचितः । ( मीमांसा ) २

(१७) प्रकरणपञ्चिका ( ... कुमारिल मीमांसादर्शनम् ) महामहोपाध्याय... विरचितम् । श्रीशङ्करभट्टकृता मीमांसा... सम्पूर्णा: ( मीमांसा ) २

(१८) अद्वैतसिद्धिसिद्धान्तसारः । पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृत... ( वेदान्त ) ३

(१९) कात्यायनश्रौतसूत्रम् महामहोपाध्यायश्रीकर्काचार्यविरचितभाष्यसहितम् । १५

(२० ) ब्रह्मसूत्रभाष्यम् श्रीभास्कराचार्यविरचितम् ( वेदान्तः ) १

(२१) श्रीहर्षप्रणीतम् खण्डनखण्डखाद्यम् आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया ( विद्यासागरी ) ति प्रसिद्धया समेतम् । (वेदान्तः) ३

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता । १

(२३) श्रीलक्ष्मीसहस्रम्—बालबोधिनीव्याख्यया ऽवतरणिकया च सहितम् । ८

२४) ब्रह्मसूत्रवृत्तिः मरीचिका श्रीव्रजनाथभट्टकृता । ( वेदान्त)२

(२५) क्रोडपत्रसंग्रहः अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्याः प्रत्यक्षानुमानगादाधर्याः प्रत्यक्षानुमानमाथुर्या व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकायाः कुसुमाञ्जलेश्च क्रोडपत्राणि । ( न्यायः ) १

(२६) ब्रह्मसूत्रम्,द्वैताद्वैतदर्शनम्।श्रीसुन्दरभट्टरचितसिद्धान्तसेतुकाभिधटीकासहितश्रीदेवाचार्यप्रणीतसिद्धान्तजाह्नवीव्याख्याव्याख्यायुत २

(२७) षड्दर्शनसमुच्चयः। बौद्ध नैयायिक कापिलय जैन वैशेषिक जैमिनीयदर्शन संक्षेपः। मणिभद्रकृतटीकया सहितः। हरिभद्रसूरिकृतः। १

(२८) शुद्धाद्वैतमार्तण्डः प्रकाशव्याख्यासहितः। प्रमेयरत्नार्णवश्च। १

(२९) अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृतदीधित्याः जागदीशी टीका। १२

(३०) वीरमित्रोदयः। महामहोपाध्यायश्रीमित्रमिश्रविरचितः। ४

(३१) स्मृतिसारोद्धारः।विद्वद्वरविश्वम्भरत्रिपाठिसंकलितः। २

(३२) वेदान्तरत्नमञ्जुषा । श्रीभगवत्पुरुषोत्तमाचार्यै कृता। २

पत्रादिप्रेषणस्थानम् } हरिदासगुप्तः,

August. 1908.

THE

# CHOWKHAMBA SANSKRIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 128.

श्रीहर्षप्रणीतम्

खण्डनखण्डखाद्यम् ।

आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया
व्याख्यया 'विद्यासागरी'-ति प्रसिद्धया समेतम्
चित्सुख-शङ्करमिश्र-रघुनाथकृतटीकावल-
म्बिन्या टिप्पण्या सनाथम्

द्राविड——श्रीलक्ष्मण शास्त्रिणा परिशोधितः ।

ŜRÎ HARSHA'S

# KHANDANAKHANDAKHÂDYA,

WITH THE COMMENTARY

'khandanaphakkikâvibhajana'(vidyâsâgarî)of Ânandapûrna

WITH EXTRACTS FROM THE COMMENTARIES OF

Chitsukha, Ŝankara Miŝra and Raghunâtha,

EDITED BY

PANDIT LAKSHMANA ŜÂSTRÎ DRÂVIDA,

*Professor of Vedânta, The Gaurishankar*
*Central Hindu College, Benares.*

FASCICULUS IV.

*PUBLISHED AND SOLD BY THE SECRETARY,*

CHOWKHAMBÂ SANSKRIT BOOK-DEPÔT:

BENARES:

AGENTS:—OTTO HARRASSOWITZ, LEIPZIG:
PANDITA JYESHTHÂRÂMA MUKUNDAJI, BOMBAY.

*Printed by Hari Dâs Gupta, Proprietor,*

AT THE VIDYÂ-VILÂSA PRESS.
BENARES.

*Price Rupee One.*

॥ श्रीः ॥

-*-

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितभव्याभशतपत्त्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दामोदमोहितम् ॥ २ ॥

स्तबकः—१२८

ज्ञायमानप्रत्यभिज्ञानवत् घटस्तत्रासीदित्यादिस्मृतेरपि स्मृत्यनुभवसङ्करत्वमेष्टव्यं एवं चानुभूत्यसङ्कीर्णस्मृतेरभावादव्यावर्तकतयाऽनुभूतिपदं व्यर्थम् । ननु यथा पूर्वमननुभूता भूतता तथा वर्तमानतापि नानुभूतैव वर्तमानकालस्य तदानीमसत्वादिति । मैवं कुम्भोऽयमिति प्रत्ययस्य पूर्वानुभवत्वेनाभीष्टत्वादयमिति प्रत्ययस्य वर्तमानकालाद्युपाधित्वेन तस्य दुरपन्हवत्वादिति ॥

यदवादि पूर्वं प्रत्यभिज्ञानस्य सम्प्रयोगसहितसंस्कारजत्वादनुभवत्वमिति तत्पुरस्तान्निरस्तमपि दूषणसाम्याद्बुद्धिस्थतयाऽतिदेशेन निराकरोति ।

२१३ प्रत्यभिज्ञानस्यानुभवत्वखण्डनातिदेशः ।

एतेनानुभवसामग्रीसहितः संस्कारोऽनुभवकारणमिति पक्षे पूर्वं शङ्कित इदमपि दूषणं द्रष्टव्यम् । तथा सति स्मृत्युच्छेदापत्तेः । नच तदस्ति स्मरणं यत्र सा न प्रकाशते ततश्च व्यवच्छेद्यानुपपत्तिः ।

*एतेनेति* परामृष्टमेव हेतुं स्पष्टयति *तथा सतीति* पूर्वकालसम्बन्धज्ञानस्य कारणं यत्प्रमाणं तत्सहकृतसंस्कारजत्वात्सकलस्मृतीनामनुभवत्वमेव स्यादित्यर्थः । यत्र भूतताविशिष्टः पदार्थः स्मर्यते तद्व्यवच्छेदायानुभूतिपदं माभूद्यत्र पुनः केवलं पदार्थः स्मर्यते तद्व्यवच्छेदे सामर्थ्यमनुभूतिपदस्येत्याशङ्क्याह * नचेति * ननु नेह भूतले घट इत्यत्र प्रतियोगी भूतताविधुर एव स्मर्यते, यद्वा पदात्पदार्थस्मृतिरपि तत्तांशवि-

धुरैव । नच प्रतियोग्यादिप्रतीतिरस्मृतिरिति वाच्यम् । यतआह—

"गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनं ।
मानसं नास्तिताज्ञानं जायतेऽक्षानपेक्षया ।

पदमभ्यधिकाभावात्स्मारकान्न विशिष्यत" इति च, तत् किमिदमवोचः नच तदस्ति स्मरणं यत्र सा न प्रकाशत इति। अत्र ब्रूमः स्मृतिरनुभूतविषयाऽननुभूतविषया वा, प्रथमेऽनुभूतताऽननुभूतैव प्रतिभासते इत्यंशतोऽनुभूतित्वमनुभूतता भूतैवेति न भूतत्वव्यभिचारः स्मृतेः नापि द्वितीयः अनुभूतस्यैव स्मरणादनङ्गीकारादनिष्टापाताच्च । किञ्च पदार्थज्ञानं न स्मृतिः पदान्वयव्यतिरेकित्वात् । पददर्शनसमुद्बुद्धसंस्कारस्य पदार्थस्मारकत्वात्पदान्वयव्यतिरेकौ संस्कारोद्बोधहेतुतयाऽन्यथासिद्धाविति चेन्मैवं । पदार्थज्ञानस्याशाब्दत्वप्रसङ्गात् । शब्ददर्शनसमुद्बुद्धसंस्कारजत्वाच्छाब्दत्वमिति चेन्न । शुक्तिसन्दर्शनसमुद्बुद्धसंस्कारजरजतस्मरणस्य प्रत्यक्षत्वापातादक्षावबुद्धलिङ्गजन्यानुमानज्ञानस्यापि तत्त्वापत्तेः । अथोच्येत तादृक्संस्कारसहकृतपदजन्यतया शाब्दत्वमिति हन्त तर्हि कारणद्वयजन्यतया स्मृत्यनुभवरूपत्वमेवं यद्यत्स्मरणं भूतताहीनमुदाह्रियेत तत्र यथासम्भवं दूषणमूहनीयमित्यलमतिप्रसङ्गेन । फलितमाह * ततश्चेति *

प्रमाणकारणादक्षादेर्विपरीतप्रत्ययानुपपत्तेर्दोषस्य विवेकाग्रहणमात्रहेतुत्वात् उक्तं हि—

"दोषोऽप्यग्रहणे हेतुरिन्द्रियाणामुदाहृत"

**इति, तद्दोषवशात्प्रमुषिततत्तांशं रजतादिस्मरणं तद्व्यवच्छेदायानुभूतिपदमित्यख्यातिमतमुपन्यस्यति ।**

**२१४ प्रमुष्टतत्ताकस्मरणखण्डनम् ।**

यदपि कैश्चिदुच्यते दोषवशात्प्रमुष्टतत्तांशस्मरणम्भवतीति, तदपि नोपपन्नं तदीयस्मरणत्वे प्रमाणाभावात् । नचानुभवसामग्र्यभावात्पारिशेष्येण स्मृतित्वं, इन्द्रियार्थसान्निकर्षव्यावृत्त्या ऽनुभवसामग्र्यभावात्पारिशेष्येणानुमित्यादेरपि स्मृतित्वापत्तेः । सर्वानुभवसामग्र्यसम्भवादिति चेत् । कथं पुनस्तत्तांशशून्यरजतादिज्ञानहेतुसामग्री नानुभवहेतुसामग्रीत्यवधारितं मायुष्मता[1] । पञ्चप्रमाणीकारणसामग्र्यसम्भवादिति चेन्न । चतुष्प्रमाणीजनकसामग्र्यसम्भवात्पञ्चमी प्रमा किन्न पारिशेष्यात् स्मरणं त्वया व्यवास्थापि । कुत्र च प्रतिपन्नं पञ्चप्रमाणीकारणसामग्र्यभावे जायमानं ज्ञानं स्मृति र्भवतीति, घटस्तत्रासीदित्यादिज्ञानानामनुभवत्त्वोपन्यासस्य कृतत्वात् ।

*** यदपीति * स्मृतित्वे स्मृत्यन्तरवद्भ्रान्तित्वमेव न स्यादिति दूषयति * तदिति * अभ्युपगम्य स्मृतित्वं दूषणमभाणि, इदानीं तदपि न सेत्स्यति प्रमाणाभावादित्याह * तदीयेति * रजतादिज्ञानं स्मृतिः संस्कारमात्रजत्वात्सम्प्रतिपन्नवत् तथात्वं चानुभवकारणा-**

१ आयुष्मतेति सो० पु० नास्ति ।

नामक्षादीनामसम्भवादतः सिद्धं स्मृतित्वमित्यत आह * नचेति * अनुमित्यादिः स्मृतिः प्रत्यक्षानुभवसामग्र्यतिरिक्तकारणजन्यज्ञानत्वात्सम्प्रतिपन्नवदित्याभाससमानयोगक्षेमत्वान्न विपश्चिच्चित्तमनुरञ्जयतीत्याह * इन्द्रियेति * अनुभवसामग्रीत्वात्यन्ताभावाधिकरणजन्यज्ञानत्वं स्मृतित्वे प्रयोजकं न यत्किञ्चिदनुभवसामग्र्यतिरिक्तकारणजत्वमनुमित्यादेः पुनर्लिङ्गादेरनुभवसामग्र्या जायमानस्य नैतादृशत्वमिति साम्यं परिहरन् शङ्कते *सर्वेति* तर्हि विशेषणासिद्धो हेतुरनुभवसामग्रीमात्रस्य ज्ञानमात्रशब्देन व्यावर्तयितुमशक्यत्वादिति परिहरति * कथमिति * रजतज्ञानमनुभवसामग्रीजन्यमपरोक्षव्यवहारनिदानत्वात् घटोऽयमिति ज्ञानवदित्यर्थः । रजतादिज्ञानं संस्कारमात्रजं पञ्चप्रमाणीकारणातिरिक्तजन्यज्ञानत्वात् सम्प्रतिपन्नवादिति हेत्वसिद्धिं परः परिहरति *पञ्चेति* पञ्चानां प्रमाणानां समाहारः पञ्चप्रमाणी सप्तपदार्थीवत् । अर्थापत्तिज्ञानं स्मरणं चतुःप्रमाणीकारणातिरिक्तजन्यज्ञानत्वात्सम्प्रतिपन्नवदित्याभाससमानयोगक्षेमत्वादेव मैवमित्याह * न चतुरिति * व्यवास्थापि किं न व्यवस्थापितमित्यर्थः । नच संस्कारमात्र जत्वमुपाधिरिति वचनीयं साधनव्यापकत्वादसिद्धेश्चेति द्रष्टव्यम् । एवं तावदनुमानस्यातिप्रसङ्गरूपप्रतिकूलतर्कप्रतिहतत्वमुक्तं इदानीं पञ्चप्रमाणीसामग्र्यजन्यज्ञानत्वस्य स्मृतित्वेनाव्याप्त्या साध्यविकलो दृष्टान्त इत्याह * कुत्रेति * उक्तविधज्ञानस्य स्मृति-

त्वं घटस्तत्राऽऽसीदित्यादिज्ञाने दृष्टमित्यत आह * घ-ट इति * ।

रजतप्रत्ययस्य परिगणितानुभवकारणजन्यत्वमुताऽपूर्वानुभवकारणजन्यत्वमिति वाच्यं, न तावदाद्यः इन्द्रियसम्प्रयोगाद्यभावादिति शङ्कते ।

२१५ परिशेषात्संस्कारमात्रस्य कारणत्वशङ्का ।

अथ मन्यसे प्रत्यक्षादिकारणसामग्र्यनुपपत्त्या रजतमात्रस्य च पूर्वमनुभूतत्वेन तद्विषयसंस्कारसम्भवात्संस्कारस्यैव हेतुताऽङ्गीक्रियते न त्वन्यत्कारणत्वेन कल्प्यते, इन्द्रियार्थसन्निकर्षाद्यसम्भवे जायमानस्य त्वनुमानादेरननुभूतविषयत्वेन तस्मान्नोत्पत्तिसम्भव इति तत्कारणं लिङ्गादिकमङ्गीक्रियते ततः प्रमाणान्तरासहकृतसंस्कारजत्वं तद्व्यङ्ग्यो वा जातिविशेष एव स्मृतित्वमिति ।

* अथेति * शुक्तिसंसृष्टरजतस्य पूर्वमननुभूतत्वादनुपपत्तिः संस्कारेऽपि समेत्यत आह * रजतेति * अदृष्टरजतस्य कलधौतविभ्रमानुपलम्भात्तत्संस्कारस्तावद्वक्तव्यः यद्यपि संसृष्टं न दृष्टचरं तथाऽपि रजतमात्रं दृष्टचरमिति[1] संस्काराद्रजतस्मृतिरुपपद्यते संसर्गख्यातेरिहाऽप्यभावादिति भावः । परिगणितानुभवसामग्रीतः सामग्र्यन्तरं रजतप्रत्ययस्य कल्पयाम इति कल्पान्तरमाशङ्क्य निषेधति * नत्विति * कारणान्तरकल्पनायां गौरवात्सम्प्रतिपन्नसंस्कारस्य कार-

१ तत्संस्कारेति सो० पु० पा० ।

णत्वकल्पने लाघवान्न कारणान्तरकल्पनेत्यर्थः । यच्चा- वाच्यनुभवसामग्र्यसम्भवेन कलधौतबोधस्य सं- स्कारजन्यत्वञ्चेत् प्रत्यक्षानुभवसामग्र्यसम्भेवनानु- मित्यादेस्तथात्वं स्यादिति तद्वैषम्यप्रदर्शनेन प्रतिक्षि- पति * इन्द्रियेति * तत्र लिङ्गादेः क्लृप्तत्वादननुभूत- तया संस्कारस्यासम्भवाच्च नोक्तप्रसङ्गावकाश इत्या- शयः । अतोऽनुभवकारणासम्पृक्तः संस्कारः स्मृतिका- रणमिति यत्प्रागीरितं नत्सिद्धमिति निगमयति * अ- त इति * संस्कारजत्वमेव स्मृतित्वमित्यौपाधिकप- क्षोऽनुभूतित्ववत्स्मृतित्वं जातिरिति पक्षद्वयमपि प्रा- भाकराणामेव मतभेदेनोपन्यस्तं द्रष्टव्यम् ।

परिगणितप्रमाणसामग्रीजन्यत्वेन परिशेषासिद्धेः न संस्कारजन्यत्वं रजतप्रतीतेरिति परिहरति ।

२१६ परिशेषासिद्धिः ।

मैवम् । तत्त कारणत्वं किमिति नाक्षस्यैव, येन सं- स्कारजत्वं व्यवस्थाप्यते । तेनार्थेन सह तदाऽक्षस्य सन्नि- कर्षाभावादसन्निकृष्टस्य च तस्य ज्ञानजनकत्वेऽतिप्रसङ्गा- त् नेन्द्रियजत्वं तस्येति चेन्न । संस्कारस्यापि केवलस्य तज्जननेऽतिप्रसङ्गतादवस्थ्यात् । सहचरितधर्मदर्शना- दिना सहकारिणा युक्तस्य संस्कारस्य तज्जनने नास्त्य- तिप्रसङ्ग इति चेन्न । तेनैव सहकारिणा सहितस्येन्द्रिय- स्यापि तज्जननेऽतिप्रसङ्गाभावात् । अननुभूतेऽपि त-

१ तज्ज्ञानजननेति० का० मु० पु० पा० ।

र्हि प्रसङ्ग इति चेन्न । तत्रापि तद्धर्मतानधिगततद्धर्मव-त्यधिगते तस्य संस्कारवतः स्मृत्यापत्त्या समाधिसाम्यात् । लुप्ततत्साहचर्य्यदर्शनजसंकारस्याऽपि तथासति सहचारितरजताद्यक्षजप्रतीतिप्रसङ्ग इति चेन्न । तत्रापि मते तादृशस्य रजतादिसंस्कारवतो रजतादिस्मृतिप्रसङ्गसाम्यात् ।

*** मैवमिति * रजतज्ञानस्यैन्द्रियकत्ववादी वक्तव्यः किं तन्मानसमुत बहिरक्षजं, नाद्यः मनसो बहिर्थेऽस्वातन्त्र्यादेतच्च तत्वविवेके सर्वज्ञदूषणप्रस्तावे मण्डनमिश्रैरभिहितम्—**

**"हेत्वभावे फलाभावात्प्रमाणे सति न प्रमा ।**
**चक्षुराद्युक्तविषये परतन्त्रं बहिर्मनः" इति ।**

**द्वितीयेऽपि सन्निकृष्टं गृह्यते ऽसन्निकृष्टं वा, नाद्यः तदभावादित्यख्याति बाधाह * तेनेति * द्वितीयमतिप्रसङ्गेनापवदति *असन्निति* त्वन्मतेऽपि केवलसंस्कारस्य तज्जनकत्वमुत सहकार्यन्तरसहितस्येति विकल्प्याद्यं प्रतिबन्द्याऽपवदति * नेति * असन्निकृष्टाक्षस्य तज्जनकत्वे सर्वदा सर्वविषयज्ञानजनकत्ववत्केवलसंस्कारस्य तज्जनकत्वेऽपि सर्वदा तज्जनकत्वं सर्वविषयसंस्कारस्य सर्वस्मृतिजनकत्वं चेत्यतिप्रसङ्गस्तत्रापि तुल्य इत्यर्थः । साधारणधर्मदर्शनादिसहकृतस्य संस्कारस्य जनकत्वं न केवलस्य तेन नातिप्रसङ्ग इति द्वितीयमाशङ्कते * सहेति * अदृष्टचिन्ताद्य आदि-**

शब्देन गृह्यन्ते। तेन रजतेन सह साहचर्यं सादृश्यं विद्यते यस्य तत्सहचरितम्। समः समाधिरित्याह * न तेनेति * असन्निकृष्टत्वाविशेषेऽपि न सर्वमेवेन्द्रियं गृह्णाति सादृश्यदर्शनादिसहकारिकारणेन नियमोपपत्तेः संस्कारवदिति भावः। इन्द्रियस्य विप्रकृष्टग्रहणे किं संस्कारापेक्षाऽस्ति किं वा सादृश्यदर्शनाद्यपेक्षैव, आद्ये प्राप्ताप्राप्तविवेकेन लाघवाच्च स्मृतित्वमेवेति, द्वितीये संस्कारद्वारोपयुक्तपूर्वानुभवापेक्षाभावादननुभूतरजतस्यापि तद्भ्रमप्रसङ्ग इति शङ्कते * अनन्वितेति * त्वन्मतेऽपि रजतानुभवसंस्कारादेव स्मृतिरुत सदृशदर्शनसंस्कारादपि, द्वितीये स्मृतेरजतसादृश्योभयगोचरत्वं स्यात्, आद्ये सादृश्यविशिष्टतया रजताननुभवेऽपि स्मृतित्वं स्यादिति परिहरति * नेति * तस्य शुक्तिशकलादेर्धर्मस्सादृश्यं भूयोऽवयवसाम्यं तद्यस्य रजतस्य तत्तद्धर्म तस्य भावस्तत्ता तयाऽनधिगतं तच्च तद्धर्मवच्च तथोक्तं तस्मिन्ननधिगते शुक्त्यादिसादृश्यं विहाय स्वरूपेण रजतादावनुभूत इति यावत्। तत्रापि रजतानुभवसंस्कारात्तत्स्मृतिः स्यादिति प्रसङ्गस्तवापि ततश्च साधारणधर्मवत्तया पूर्वानुभूते रजते तद्वत्तया शुक्तिशकले चानुभूयमाने रजतसंस्कारात्तत्स्मृतिः स्यादिति त्वया परिहरणीयमेवमस्मन्मतेऽपि तद्धर्मवत्तयाऽनुभूतरजतस्यैव तद्धर्मवत्तया पुरोवर्तिनि च गृह्यमाणे तद्भ्रमः स्यादिति रजतज्ञानस्यासंस्कारजत्वेऽपि पूर्वानुभवापेक्षा सादृश्यसंस्कारजत्वाभावेऽपि तदनुभववदिति भावः। इन्द्रियस्य संस्कारनिरपेक्षस्य

साहश्यादिदोषोपेतस्य रजतज्ञानजनकत्वे साहश्य-संस्कारविलोपेऽपि रजतभ्रमप्रसङ्ग इति शङ्कते * लुप्तेति * लुप्तः कालव्यवधानादिना तत्साहचर्यदर्शनसंस्कारो यस्येति विग्रहः। त्वन्मतेपि साहश्यसन्दर्शनसमुद्बुद्धसंस्कारकारणं स्मरणमुपजायते तद्गोचरमित्युररीक्रियते तेन साहश्यानुभवसंस्कारस्यानुपयोगित्वात्तद्विलोपेऽपि रूप्यसंस्कारवतः सदृशसन्दर्शने सति तत्स्मरणप्रसङ्ग इति प्रतिबन्धा दूषयति * नेति *

संस्कारस्याकारकत्वे कथं तदन्वयव्यतिरेकौ रजतप्रत्ययस्येत्याशङ्क्य तद्विनाशकहेत्वभावस्य हेतुत्वविषयतयाऽन्यथासिद्धावित्याह ।

२१७ संस्कारनाशकस्यैवेन्द्रियसहकारित्त्वम् ।

तस्माद्यतस्ते कालव्यवधानादितः संस्कारलोपः तदनुपनिपातस्यापि हेतुत्वोपगमेऽनतिप्रसङ्गात् ।

तदेवं—

तत्सदृक्प्रत्यभिज्ञानं यच्चे संस्कारबोधकम् ।
सहकारि तदेवास्तामक्षस्यातिप्रसाक्तिनुत् ॥ २८ ॥

तत्सदृशप्रत्यभिज्ञानन्तु स्मर्त्तव्यस्मरणपूर्वकमित्येतदपि सममेव ।

*तस्मादिति* यतः कालव्यवधानादितः संस्कारविलोपो विपरीतसंस्कारादिशब्दार्थः । तदनुपनिपातस्य

---

१ तथा कालादिव्यवधानाद्यभावसदृशदर्शनसहकृतस्य चक्षुषो युक्तम् इत्यधिकः पाठः कलिकातामुद्रितपुस्तके वर्तते ।

तदभावस्येति यावत् । हेतुत्वस्वीकारे नातिप्रसङ्गादलुक्समासोऽतिप्रसङ्गाभावात्कालादिव्यवधानाभावसदृशसन्दर्शनाभ्यां सहकृतस्य चक्षुषस्तथाभूतरजतप्रतीतिहेतुत्वं युक्तमित्यर्थः । उक्तमर्थमुपसंहारव्याजेन श्लोकेनोपनिबध्नाति * तदिति * केवलसंस्कारस्य स्मरणकारणत्वेऽतिप्रसङ्गात्तेनानुभूतरजतेन सदृगिदमिति तत्सजातीयसादृश्यज्ञानं समुद्बोधकं स्वीक्रियते तत्र च सादृश्यज्ञानमक्षस्य सहकार्यास्तामित्यन्वयः।आधारग्रहणपुरःसरत्वात्तद्बुद्धेः सादृश्यज्ञानमपि रजतस्मरणमन्तरेण नोपपद्यते तेन तस्यैव भ्रमत्वोपपत्तौ नानुभवान्तरं रजतगोचरं कल्पनीयं गौरवादित्यत आह *तदिति* सदृशदर्शनं संस्कारोद्बोधकतया त्वया स्वीक्रियते तत्र या गतिः साऽत्रापिभविष्यतीत्यर्थः ।

विमतं नासन्निकृष्टज्ञानजनकं बहिरिन्द्रियत्वाच्छ्रोत्रवत्, यद्वा विमतं नैन्द्रियकं विप्रकृष्टत्वाद्देशान्तरवर्तिवस्त्वन्तरवदिति शङ्कते ।

२१८ भ्रमस्थलेऽसन्निकृष्टस्यैवैन्द्रियकत्वोपपादनम् ।

तथाऽप्यन्यत्रार्थसन्निकर्षमन्तरेणेन्द्रियस्य ज्ञानकरणत्वं नोपलब्धचरमिति चेन्न । विशिष्टरूपेण भ्रमविषये मया तदुपगमात् सहकारिभूतदोषशक्तेर्वा प्रत्यासत्तित्वेनेष्टत्वात् । किञ्च संस्कारस्याऽपि प्रमाणान्तरासहकृतस्य नान्यत्र ज्ञानजनकत्वं दृष्टमिति तदपि कथं कल्प्यते । प्रत्यभिज्ञान एव संस्कारस्य सदृशदर्शनादिसहकारि-

त्वं कल्पितं नत्विन्द्रियस्येति चेन्न। प्रत्यभिज्ञाने संस्कारेन्द्रिययोर्द्वयोरपि कारणत्वात् सदृशदर्शनादिसहकृतत्वदर्शनाविशेषात्।

* तथेति * किं सर्वात्मनाऽसन्निकृष्टत्वं हेतुरुत केनचिदंशेन, आद्ये प्रत्यभिज्ञागोचरे व्यभिचारस्तत्ताया विप्रकर्षात्। द्वितीये त्वसिद्धिरिदमंशेन सम्प्रयोगादिति परिहरति *नेति* सर्वात्मनाऽसम्प्रयुक्तत्वमप्यसिद्धं प्रत्यभिज्ञाने संस्कारवद्भ्रमगोचरेणेन्द्रियस्य सन्निकर्षतया दोषस्वीकारादित्याह * सहेति * विप्रकृष्टे ज्ञानजनकत्वमन्यत्र न दृष्टमितीन्द्रियस्य त्यज्यते चेत्संस्कारस्यापि केवलस्य ज्ञानजनकत्वमनुपलब्धमिति तदपि त्यक्तव्यमिति दूषणान्तरं समुच्चिनोति *किं चेति* अन्यत्र--प्रत्यभिज्ञान इति यावत्। प्रत्यभिज्ञायां संस्कारस्य तदंशसदृशदर्शनादिसहकृतत्वान्निरपेक्षत्वयेदमंशग्राहकस्येन्द्रियस्य न तत्सहकृतत्वं तेन दृष्टानुसारिकल्पनायां सम्भवन्त्यां तद्विपरीतकल्पनाऽनुचितेति शङ्कते * प्रत्यभिज्ञानेति * तथाऽपि सदृशदर्शनादि संस्कारसहकारी,न्द्रियस्य वेति, सन्दिग्धत्वात्तद्दर्शनसहकृतः संस्कारो रजतस्मरणजनकस्तत्सहकृतमिन्द्रियं तदनुभवजनकं नेति न निर्णय इति परिहरन्ति * नेति *

विमतं संस्कारजं सदृशदर्शनजत्वात् प्रत्यभिज्ञावत्, यद्वा सदृशदर्शनस्य सहकारित्वं यत्र दृष्टं तत्र संस्कारस्यापि सहकारित्वमस्तीति व्याप्तिबलाद्भ्रमस्थ-

लेऽपि तत्प्रसज्यत इति निर्णायकमाशङ्कते ।

२१९ सादृश्यज्ञानवत्संस्कारस्य सहकारित्वे तत्तोल्लेखापत्तिः।

अत्र सदृशदर्शनसहकारित्वे संस्कारसहकारित्वस्यापि प्रसङ्गः प्रत्यभिज्ञानवदिति चेन्न । तथा सति तद्वदेव तत्तोल्लेखापत्तेः । सदृशदर्शनादिसहकृतत्वेन च तत्तांशप्रसञ्जने संस्कारजत्वस्योपाधित्वम् । नच सदृशदर्शनसहकारितैव तत्ताप्रयोजिकाऽत्र त्यज्यतां न संस्कार इति युक्तम् । सदृशदर्शनं परित्यज्य संस्कारे सत्यप्यतथाबोधात् ।

*अत्रेति* प्रत्यभिज्ञावदेव तत्वोल्लेखापत्तेः संस्कारस्य सहकारित्वं कल्पयितुं न शक्यते इति परिहरति *नेति* भ्रमज्ञानं तत्तोल्लेखि सदृशदर्शनादिसहकारिजनितत्वात्स्मरणवदिति समानप्रसङ्ग इत्याशङ्क्याह * सदृशेति * अत्र संस्कारजत्वमुपाधिरित्यर्थः । नचेतरेतरोपाधिचोदनमयुक्तं अतिप्रसङ्गादिति वक्तव्यं, तल्लक्षणे सति तथात्वानङ्गीकारे तल्लक्षणस्य पूतिकूष्माण्डायमानतापातादिति । सदृशदर्शनसहकारितासंस्कारयोरन्यतमस्यावश्यत्त्याज्यत्वे न्यायतत्वे संस्कारोद्बोधकत्वेनान्यथासिद्धत्वादप्रयोजकं सदृशदर्शनाद्येवात्र रजतज्ञाने कारणतया त्यज्यतां न संस्कार इत्याशङ्क्य निषेधति * न चेति * न सदृशदर्शनजत्वं तत्तोल्लेखप्रयोजकं तदभावे तद्दर्शनादित्याह * सदृशेति * अतथाऽबोधादित्यत्राबोधादिति पदच्छेदः । तदयमर्थः चिन्तादृष्टादिसमुद्बुद्धसंस्कारो यत्र सा मे मातेत्यादि-

स्मृतिमुत्पादयति तत्र सदृशदर्शनाभावेऽप्यतथात्वोल्लेखाभावस्यादर्शनात्। यदि तदेव प्रयोजकं तर्हि तदभावे तत्तोल्लेखनमपि न स्यादिति। यद्वा सत्यपि संस्कारे सदृशदर्शनं विना रजतबोधादर्शनाद्व्यतिरेकबलादवश्यं सदृशदर्शनादिसहकृतता भ्रान्तौ वाच्येत्यर्थः।

यदुक्तं विमतं नैन्द्रियकमसम्प्रयुक्तत्वाद्वस्त्वन्तरवदित्यत्र प्रत्यभिज्ञायां तत्तांशे व्यभिचार इति तत्परिहर्तुं विद्यमानत्वे सतीति हेतुं विशिंष्म इत्याह।

२२० इन्द्रियस्य प्राप्यकारित्वे प्रतिबन्द्युद्भावनम्।

तथापि सदर्थे प्राप्यकारित्वमिन्द्रियस्य दृष्टं न हातुं शक्यमिति चेन्न। उक्तमत्र यथेन्द्रियस्य प्राप्तिसहकृतस्य ज्ञापकत्वं दृष्टं तथैव संस्कारस्यापि प्रमाणान्तरसहकृतस्य ज्ञापकत्वमुपलब्धमिति तदपि हातुं न युक्तमिति, संस्कारस्यापि चेन्द्रियप्रत्यासत्तित्वस्वीकारेण तद्विरहासिद्धेः।

*तथापीति* सदृशदर्शनसध्रीचीनेन्द्रियस्यान्वयव्यतिरेकित्वेऽप्यन्यत्र संयोगदर्शनादिहापि तदपेक्षायां संस्कारस्यापि केवलस्य स्मारकत्वं न स्यात्प्रमाणसहकृतस्यैव प्रत्यभिज्ञाने तद्दर्शनादिति परिहरति *नेति* प्रत्यासत्त्यभावमभ्युपगम्य दूषणमभाणि, सम्प्रति सोऽप्यसिद्ध इत्याह * संस्कारेति *

एवं तावद्रजतज्ञानस्य संस्कारजत्वेऽक्षजत्वेन[1] स-

---

१ अक्षजत्व च समान इत्यापाद्येति सो० पु० पा०।

**मानः सर्व्व इत्यापाद्याऽधुना स्वसिद्धान्तसिद्धये संस्कारजत्वेऽधिकं दूषणं दर्शयति ।**

२२१ तत्तांशमोषनिरासः ।

तत्तांशमोषकल्पनञ्च स्वतन्त्रसंस्कारजत्वपक्ष एव यावदधिकम। कुतश्चायं तत्तांशमोष इति विचारमधिकरोति, पूर्व्वं वर्त्तमानादिकालविशेषविशिष्टस्य रजतादेरेकस्मिन्ननुभवे प्रकाशिततया तज्जन्येन[२] संस्कारेणापि तथैवोपनेतुमुचितत्वात प्रत्यभिज्ञायां तथैव फलदर्शनात। दोषवशात्तत्तांशमोष इतिचेन्न। विषयसम्बन्धस्य स्वभावत्वेन संस्कारे तदलोपात्। दोषात्स्मृतौ तथेति चेत् कः पुनरसौ दोषः। यस्माद्भ्रान्त्युत्पत्तिः परेषामिति चेत्तर्हि तद्रजताविशिष्टमिदं रजतमित्यत्र, सैव रजतव्यक्तिरियमित्यत्र वा, पुनस्तदेव रजतमुपस्थितमितीह वा, सामान्यत एव रजतस्य तदाऽपि परामृष्टस्य भ्रान्तौ तत्तांशमोषः स्यात् दोषस्य विद्यमानत्वात्। अन्यथा इदं रजतमित्यंशेऽपि तस्मिन् ज्ञाने तत्तांशमोषो न स्यादित्यास्तामियं प्रसक्तानुप्रसक्तिः।

*** तत्रेति * सदृशदर्शनसहकारित्वस्य पक्षद्वयेऽपि साम्यादन्यत्रादृष्टं तत्तांशमोषकल्पनं स्मरणस्य त्वया स्वीकार्य्यमित्यर्थः। स्वतन्त्रसंस्कारजत्वपक्ष एव**

२ तज्जनितेनेति सं० मु० पु० पा०।

तत्त्वांशमोषकल्पनं यावत्तावदधिकमित्यन्वयः। पूर्वं तत्त्वांशमोषमुररीकृत्य गौरवमभाणि, सम्प्रति सोऽपि न सेत्स्यति विकल्पासहत्वादित्याह * कुतश्चेति * तत्त्वांशप्रकाशे कारणाभावात्तदभाव, उताहो दोषवशादिति विकल्प्य न तावत्कारणाभावात्पूर्वकालवैशिष्ट्यस्य रजतस्य चैकानुभवगोचरतया तज्जनितसंस्कारस्याऽप्युभयस्मरणजनकत्वस्यौचित्यादित्याह * पूर्वमिति * विशिष्टगोचरसंस्कारस्यैकांशोद्बोधादेकांशस्मृतिः किं न स्यादित्यत आह * प्रत्यभिज्ञायामिति * दोषप्रतिबन्धात्सत्यपि संस्कारे तत्त्वांशाप्रकाश इति द्वितीयं शङ्कते * दोषेति * दोषः किं संस्कारस्य विषयसम्बन्धं प्रतिबध्नाति, किंवा संस्कारसामर्थ्य, मुत सति दोषे तदभावरूपकारणाभावात्कार्याभाव, इति त्रिधा विकल्प्य प्रथममपाकरोति *नेति* यथा ज्ञानस्य ज्ञेयसम्बन्धः स्वभावः एवं तज्जनितसंस्कारस्यापि तत्सम्बन्धः स्वभाव इति तस्मिंस्तत्प्रतिबन्धो न सम्भवतीत्यर्थः। द्वितीयतृतीयावपर्यायेणानुवदति * दोषादिति * सदर्थज्ञापकस्य न दोषत्वं चक्षुरादिव, नापि तस्याग्रहणहेतुत्वं तस्यानादित्वा,न्न च प्रागग्रहणनिरोधकत्वं निरोधस्य प्रागभावत्वेनानादित्वादेव, नच प्रध्वंसहेतुत्वमुत्पत्त्युत्तरकालीनत्वात्तस्य, तेन दोष एव निर्वक्तुमशक्य इति दूषयति * क इति * दोषनिर्वचनं त्वया करणीयं भ्रान्तिहेतुत्वाभ्युपगमात्स एव ममापि तत्त्वांशमोषहेतुरिति शङ्कते * यस्मादिति *

दोषस्य न तत्तांशमोषहेतुत्वं सत्यपि तस्मिंस्तत्तांशप्रकाशदर्शनादिति परिहरति * नहीति * शुक्तावेव तद्रजतसदृशमिदं रूप्यमिति भ्रान्त्युत्पत्तौ तत्ताप्रकाशो न स्याद्दोषस्य विद्यमानत्वात्, एवं भ्रान्तिरेव नास्ति संसर्गख्यातेरेवं सति प्रसङ्गात्तस्याश्चानङ्गीकारादित्यत आह * सैवेति * उदाहरणान्तरमाह * पुनरिति * तदाऽपि परामृष्टस्येति * तच्छब्देन परामृष्टस्यापीत्यर्थः । कालसम्बन्धभेदेन पूर्वानुभूतरजतव्यक्त्यभेदग्राहिप्रत्यभिज्ञाभ्रम इत्यर्थः । उदाहरणभूयस्त्वमुक्तद्रढिम्ने व्यभिचारभूयस्त्वप्रकटनायेति द्रष्टव्यम् । बहुप्रकारा भ्रान्तयः प्रत्यभिज्ञारूपा अभिज्ञारूपाश्च, तत्र प्रत्यभिज्ञाभ्रान्तौ सत्यपि दोषे तत्तांशप्रकाश इत्याशङ्क्याह *अन्यथेति* कार्यभेदेऽपि क्वचिद्दोषस्य तत्तांशमोषाहेतुत्वे ऽभिज्ञाभ्रमेऽपि तदहेतुत्वमन्यथाऽभिज्ञाभ्रमेऽपि विषयभेदेन सम्प्रतिपन्नकारणस्याप्यकारणत्वप्रसङ्गादिति भावः । प्रमालक्षणखण्डने तत्तांशमोषखण्डनस्य का सङ्गतिरित्याशङ्क्य प्रासङ्गिकी सङ्गतिरिति दर्शयन्नुपसंहरति * इत्यास्तामिति * प्रकृतं प्रमालक्षणखण्डनं तत्प्रसङ्गेन प्रसक्तं प्रत्यभिज्ञाखण्डनं तदनुप्रसक्तं तत्तांशमोषखण्डनमिति प्रसक्तानुप्रसक्ति राह हि—

"प्रसक्तानुप्रसक्तिस्तु प्रस्तुतादुपजायत" इति ।

प्रत्यभिज्ञानं न स्मृत्यनुभवगर्भमेकं ज्ञानं, नापि स्मृत्यनुभवरूपं ज्ञानद्वयं, नच स्मृतिरेव, वाऽनुभव एव वा, येन स्मृतित्वानुभूतित्वयोः सङ्करः स्यात्किन्तु प-

कारान्तरमित्याशङ्क्याह ।

२२२ चित्ररूपवत्प्रत्यभिज्ञाया विलक्षणत्वनिरासः ।

नच प्रत्यभिज्ञा नाम स्मरणानुभवाभ्यामन्य एव प्रकार इति वाच्यम् । अननुभवत्वेनाप्रमात्वापातात् । नचैवमस्त्वित्यपि वाच्यम् । अक्षणिकत्ववादिना स्थिरसिद्धौ प्रमाणत्वेनोपन्यस्तत्वात् । ईदृशप्रसिद्धलक्ष्यत्यागेन च लक्षणोपपादनेऽनियमः प्रसज्येतेति ।

* नचेति * कुत इत्यत आह * अननुभवत्वेनेति * स्वकृतप्रमालक्षणरक्षणाय प्रत्यभिज्ञानस्याप्रमात्वमप्यस्त्वित्यत आह * न चेति * स्थिरवादिभिः प्रत्यभिज्ञानस्य प्रमाणत्वेनेष्टत्वात्तदनङ्गीकारेऽपसिद्धान्तनिग्रहापत्तिरित्याह*अक्षणिकेति*अभिज्ञाप्रमालक्षणमेतत्तेन प्रत्यभिज्ञायां तदभावे न दोष इत्यत आह * ईदृशेति * प्रमामात्रलक्षणमभिधाय तस्याव्याप्तावभिहितायां तत्परिहाराय प्रत्यभिज्ञा प्रमा प्रसिद्धाऽपि त्यज्यते चेत्तर्हि कथानियमो न स्यात् दुष्टसाधनं परित्यज्य साधनान्तरोपादानसम्भवादित्यर्थः ।

प्रथमविकल्पं निराकृतं निगमयति

२२३ उपसंहारः ।

तस्माज्जातिवाचिनोऽनुभवपदस्य स्मृतितो व्यवच्छेदार्थमुपादानमिति सर्व्वथानुपपन्नमिति ।

* तस्मादिति *

अनुभवत्वस्य जातिविशेषत्वं न घटते चेन्मा घ-

टिष्ट, स्मृत्यन्यज्ञानत्वं स्मृतिलक्षणरहितज्ञानत्वं वाऽनुभवत्वमिति द्वितीयतृतीयकल्पौ घटिष्येते इत्यत आह ।

२२४ द्वितीयतृतीयकल्पानुपपत्तिः ।

नापि स्मृत्यन्यत्वमनुभवार्थः, नापि स्मृतिलक्षणरहितत्वम्, उक्तक्रमेण स्मृत्यनुभूतिसङ्करस्य दर्शितत्वेन व्यवच्छेदकत्वानुपपत्तेः ।

* नापीति *

द्वितीयतृतीयविकल्पयोः साधारणं दूषणमभिधायाऽधुना द्वितीयविकल्पाऽसाधारणं दूषणं दर्शयति।

२२५ स्मृत्यन्यत्वविकल्पोपन्यासः ।

इतोऽपि न स्मृत्यन्यत्वमनुभवार्थः तथाहि—स्मृत्यन्यत्वं यत्किञ्चित्स्मरणान्यत्वं वा ?—१ सर्वस्मृतिव्यक्त्यन्यता वा ?—२ स्मृतित्वरहितत्वं वा ?—३ अभिप्रेतम् ।

* इतोऽपीति * स्मृत्यन्यज्ञानमनुभव इत्युक्तेऽव्याप्त्यतिव्याप्त्योरभावात्कथमयुक्तत्वमित्याशङ्क्य विकल्पेनैतदुपपादयति * तथा हीति * स्मृतित्वात्यन्ताभावाधिकरणत्वमिति तृतीयविकल्पार्थः ।

स्मृत्यन्यत्वमात्रमनुभवलक्षणं लाघवान्न सर्वस्मृत्यन्यत्वं गौरवादित्याशङ्क्याह

२२६ प्रथमविकल्पनिरासः ।

प्रथमे तु स्मृत्यन्तरव्यतिरेकात् स्मृत्यन्तरमप्यनुभूतिः

स्यात्। न हि यतो व्यतिरिक्ता स्मरणव्यक्त्यन्तरादेका स्मृतिव्यक्तिस्तत् स्मरणमेव न भवति येन तदन्यत्वं न स्मृत्यन्यत्वं स्यात्।

*प्रथम इति* स्मृतेरपि स्मृत्यन्यत्वमस्ति स्मृतिः स्मृतिर्भवतीति वक्ष्यमाणन्यायेन ज्ञातुमशक्यत्वादिति तुशब्दार्थः। पटप्रतियोगिनोऽपटत्ववत् स्मृतिप्रतियोगिनः स्मृतित्वमेव नास्तीति न स्मृतेः स्मृत्यन्यत्वमित्यत आह * नहीति * एकस्याः स्मृतेः स्मृत्यन्तरव्यतिरेको नचेदेका स्मृतिः स्यादनेन न्यायेन सतः सदन्तरप्रतियोगिकभेदासम्भवेन सदद्वैतं स्यादित्यर्थः। स्मृतेः स्वयमपि स्मृतित्वेन सकलस्मृत्यन्यत्वाभावात्प्रथमविकल्पोक्तदोषाभावात्सर्वस्मृत्यन्यत्वमिति द्वितीयोऽस्त्वित्यत आह।

२२७ द्वितीयविकल्पनिरासः।

नापि द्वितीयः मदीयादिस्मृतिव्यक्तिभ्यो हि भवता कथङ्कारं व्यतिरिक्तत्वमवधारणीयं प्रमायाः, तासां सर्व्वासां भवता प्रत्येतुमशक्यत्वात्। तथा हि—न तावत्परकीयज्ञाने परस्यास्मादृशोऽध्यक्षसम्भवः, नाप्यनुमानार्थापत्ती, लिङ्गानुपपद्यमानयोः सर्व्वत्रार्व्वाग्दृशा प्रत्येतुमशक्यत्वात्। नापि शब्दः सर्व्वत्र तस्यासम्भवात्, उपमानाद्यसम्भवोऽपि स्फुट एव। ततः कथं सर्व्वाभ्यः स्मृतिव्यक्तिभ्यो व्यतिरेको निरूप्यः प्रमाया इत्यनवबोधादसिद्धिर्लक्षण-

स्य । नच वाच्यं स्मृतित्वेन सर्वाः स्मृतिव्यक्तयः सर्व्व-कालसर्वपुरुषसम्बन्धिन्यः स्वात्मीयां स्मृतिव्यक्तिं प्रत्यक्षयता प्रत्यक्षादेवावगम्यन्ते सामान्यलक्षणयेन्द्रियप्रत्यासत्त्या व्याप्तिग्रहणकाल इव व्याप्यव्यापकव्यक्तय इति, दृष्टान्तदार्ष्टान्तिकयोर्दोषग्रस्तत्वात् । तथा सति ह्येकं प्रमेयं प्रत्यक्षयतः प्रमेयत्वसामान्यप्रत्यासत्त्या विश्वमेव प्रत्यक्षं स्यात् । एव*मभ्युपगच्छतश्च श्रद्धीम-

* प्रमेयत्वेन यदि विश्वमेव प्रत्यक्षं तदा सर्वस्य हृदि स्थितं परेण ज्ञायेत । नच तदपि प्रमेयत्वेन ज्ञायत एवेति वाच्यम् । घटत्वादिनाऽपि ज्ञानप्रसङ्गात् । घटघटत्वतद्वैशिष्ट्यानां प्रमेयत्वलक्षणप्रत्यासत्त्या सन्निकृष्टत्वात् । सामान्यलक्षणायाः प्रत्यासत्तेरयं महिमा यदेव सामान्यं प्रत्यासत्तिस्तत्प्रकारकमेव ज्ञानं तया जन्यते इति प्रमेयत्वेन परहृदयगतज्ञानं नतु घटत्वेनेतिचेत्तर्हि यदि घटत्वमिन्द्रियसन्निकृष्टं परस्याऽपि हृदि घट एव तदा घटं जानामीत्युत्तरापत्तेः । परमनोगतस्याऽपि घटस्य तत्र घटत्वेन ज्ञानमस्त्येव तन्मनोगतत्वेन तु तत्र ज्ञानं नास्ति तन्मनोगतत्वस्य सामान्यस्याप्रत्यासत्तित्वादिति चेन्न । नियामकाभावात् । नहि भासमानत्वे सत्यपि प्रकारं प्रति विशेषः कश्चिदस्ति । नचानागतपाकप्रवृत्तेर्ज्ञानसाध्यतया तत्र च प्रमाणान्तरस्य तदानीमभावादगत्या सामान्यलक्षणाप्रत्यासत्तिरिति वाच्यम् । ज्ञानेच्छाप्रयत्नानां समानविषयतामन्तरेणाऽपि समानप्रकारकतयैवोपपत्तेः । नच व्यभिचारशङ्कार्थं सामान्यलक्षणा नह्यनुपस्थितधूमे वन्हिवैय्यधिकरण्यं शङ्कितुं शक्यमित्यनागतधूमज्ञाने सति व्यभिचारशङ्कायाः सम्भवादिति वाच्यम् । अयं धूमो वन्हिजन्यो नवेति वन्हिजन्यत्वसन्देहस्यैव व्यभिचारशङ्कात्वात् तस्य चोपस्थितधूमे एव सम्भवात् नहि सामानाधिकरण्यमात्रं कार्यकारणभाव इतिभावः ( इति शां. )

हि ते सार्वज्ञमिदं यदि जानासि किमस्मच्चेतसि विपरिवर्तत इति।

* नापीति * सकलस्मृत्याकलनव्यतिरेकेण तद्व्यतिरेकोऽपि दुरधिगम इति लक्षणस्यासम्भवमाह * मदीयादीति * कथंशब्दसूचितामनुपपत्तिमाह * तासामिति * तदेवोपपादयति * तथाहीति * किं प्रत्यक्षेण तदधिगमः, किं वाऽनुमानादिनेति विकल्प्य प्रथमं दूषयति * नेति * अस्मादृशा इति योगिप्रत्यक्षं व्यवच्छिनत्ति। अस्तु तर्ह्यनुमानार्थापत्तिभ्यां सर्वस्मृतिव्यतिरेकाधिगमः प्रमाया इत्यत आह * नेति * तत्प्रतिपादकवाक्यव्यतिरिक्तशब्दादर्शनान्न शाब्दोऽपि तव बोध इत्याह * नेति * उपमानस्य सादृश्यगोचरस्याऽनुपलब्धेश्च प्रमेयाभावगोचरायास्तदुभयविलक्षणे स्मृतिव्यतिरेके विरहोऽतिरोहित इत्याह * उपमेति * प्रमाणाभावोपपादनेन सिद्धं प्रमेयाभावं निगमयति * तत इति * एवं विशेषणासिद्ध्या विशिष्टलक्षणासिद्धिं फलत्वेन दर्शयति * इतीति * सकलस्मृतिव्यतिरेकः प्रमाया अध्यक्षेणैवाध्यवसीयते तथाहि—सर्वेषां स्वकीया स्मृतिस्तावत्संयुक्तसमवायलक्षणप्रत्यासत्त्या प्रत्यक्षा तत्र च समवेतं स्मृतित्वं तद्विशेषणानि च स्मृतिव्यक्तय इति संयुक्तसमवेतसमवेतविशेषणलक्षणप्रत्यासत्त्या सकलस्मृतिव्यक्तयः सर्वेषां प्रत्येकं प्रत्यक्षा इति तद्व्यतिरेकोऽपि सुज्ञान इत्याशङ्क्याऽऽह * नचेति * उदीरितमर्थं दृष्टान्तेन स्पष्टयति * व्या-

ति * अयमभिसन्धिः किं व्याप्यसामान्यस्य व्यापक-
मान्येन व्याप्तिर्गृह्यते, उत तद्विशेषस्य तद्विशेषे-
किंवा तद्विशेषैस्तद्विशेषाणां, नाद्यः अग्निमानित्यु-
तद्विशेषसम्बन्धे पर्वते साध्यमाने व्याप्त्यग्रहणा
ध्यविकलता दृष्टान्तस्या,ग्नित्वसामान्यसम्बन्धे सि-
ाधयिषिते बाधस्तस्याग्निसमवेतत्वात्। नापि द्वितीयः
नुगमादेव, ततः संयुक्तसमवेतविशेषणसन्निकर्षेण
ान्योपाधौ व्याप्यविशेषाणां व्यापकविशेषैः स-
ो बोध्यत इति वक्तव्यमिति। सर्वत्र बुद्धिसामा-
ि दृष्टान्त उपादीयत इह पुनर्दृष्टान्तस्यैव साध्य-
वात् न तदवष्टम्भेनाभीष्टसिद्धिरिति हेतुं निगद-
: दृष्टान्तेति * आह च—

"नहि साध्यसमो हेतुः साध्यासिद्धा प्रयुज्यत"
ति। अत्र हि हेतुशब्देन दृष्टान्तोऽभिधीयते

सत्वे रूपाभावः संयुक्तसमवेतसमवेतविशेषण-
यभावसम्बन्धेनाध्यवसीयते तथाऽत्रापि सक-
नेव्याप्यादिव्याप्तिग्रहः किं न स्यादित्यत
* तथेति * प्रमेयत्वे सम्बन्धविशेषणत्वद्वारा
ताऽस्तु का नाम वस्तुक्षतिरित्याशङ्क्य निष्प्रामा-
सार्वज्ञं प्रसज्येतेत्याह * एवमिति *
स्तु तर्हि स्मृतित्वात्यन्ताभावाधिकरणत्वं य-
ाने साऽनुभूतिरिति तार्तीयः पन्थास्तत्रोक्ता-
त्वादित्यत आह।

---

त्य।दिव्याप्तिग्रह इति क्वचित्पुस्तके पाठः।

२२८ तृतीयविकल्पे विकल्पोपन्यासः ।

नापि तृतीयः, स्मृतित्वराहित्यत्वं हि स्मृतित्वाभावत्वं वा स्यात् ?—१ स्मृतित्वप्रतियोगिकमाश्रयस्य स्वरूपं वा ?—२ तज्ज्ञानं वा ?—३ ।

* नेति * घटरहितं भूतलमित्यादौ राहित्यशब्दस्याभावपर्यायत्वात्तत्र च वादिनां धर्मत्वेन स्वरूपत्वेन च विप्रतिपत्तेर्विकल्पयति * स्मृतीति * आश्रयो धर्मस्तत्स्वरूपमभाव इत्युक्ते सकुम्भेऽपि भूतले तदभावव्यवहारः स्यात्तद्व्यावृत्त्यर्थं स्मृतित्वप्रतियोगिकमित्युक्तम् । दृश्ये प्रतियोगिनि धर्मिमात्रमभाव इति प्राभाकरैरङ्गीकाराद्धर्मिमात्रमित्यत्र मात्रचोऽनतिरेकार्थत्वे सघटेऽपि भूतले तदभावव्यवहारोऽतिरिक्तार्थत्वे नास्ति विप्रतिपत्तिरित्याशङ्क्य पक्षान्तरे तैरेवोपात्तं तदुपन्यस्यति * तदिति *

भावमात्रत्वेऽभावस्य भावाभावशब्दयोः पर्यायत्वप्रसङ्गात्तदभाववत्त्वमिति प्रथममाशङ्क्य निषेधति ।

२२९ तृतीये प्रथमविकल्पनिरासः

न तावदाद्यः तथा हि—स्मृतित्वान्योन्याभावोऽपि स्मृतित्वाभावो भवत्येव तद्वत्त्वञ्च स्मृतिष्वप्यस्ति । ( न हि स्मृतित्वमेव स्मृतिः ) ततश्च स्मृतेरपि प्रमात्वापातः । तद्व्यवच्छेदाद्विशेषणवैयर्थ्यञ्च विना विशेष्यमिच्छादावतिप्रसङ्गात् ।

---

( ) एतदन्तर्गतोग्रन्थः का. मु.पु.नास्ति ।

*नेति* स्मृतित्वसंसर्गाभाववत्त्वं वा स्यात्तत्प्रतियोगिकाभावमात्रं वेति विकल्प्यान्त्यमत्यापत्त्याऽपवदति *तथाहीति* अन्योन्याभावस्याऽभावत्वं भावत्वं वाऽजिज्ञासितमकस्मात्कस्मादुच्यत इत्यत आह *तदिति* स्मृतौ स्मृतित्वाभावमुपपादयति *नहीति* स्मृतित्वाभाववत्त्वं स्मृतित्वमप्यस्तीति तत्राऽपि व्याप्तिरुक्ता सम्प्रति व्यर्थविशेष्यत्वामिति दूषणान्तरमाह *तदिति* स्मृतिव्यवच्छेदार्थमनुभूतिपदोपादानं तच्च न व्यवच्छेत्तुं शक्यं उक्तप्रकारेण स्मृतित्वाभावस्य स्मृतावपि भावादिति भावः। तर्ह्यनुभूतिपदं परित्यज्य तत्त्वविषया प्रमेति लक्षणमुच्यते इत्यत आह *विनेति* परमानन्दश्रद्धादीनामपि तत्वगोचरता विद्यते नच प्रमात्वमस्ति तेन तत्र प्रमालक्षणमतिव्याप्तं स्यादित्यर्थः।

स्मृतित्वाभावमात्रवज्ज्ञानमनुभूतिरिति नब्रूमः किन्तु तत्संसर्गाभावो यस्मिन् ज्ञाने साऽनुभूतिरिति लक्षणमुच्यत इति शङ्कते।

२३० स्मृतित्वसंसर्गाभावविचारः।

स्मृतित्वस्य संसर्गाभावस्तत्र विवक्षित इति चेन्न। तथा हि स्मृतित्वस्य संसर्गाभाव इति किमुच्यते किं स्मृतित्वविशिष्टस्य संसर्गस्याऽभावः, उत संसर्गविशिष्टस्य स्मृतित्वस्य, अथान्यदेव वा किञ्चिदनया वाचोयु-

१ स्मृतित्वस्य संसर्गाभाव इति का० मु० पु० पा०।
२ वाग्भङ्ग्येति का० मु० पु० पा०।

क्त्या विवक्षितम्। आद्ये स्मृतित्वसंसर्गान्योन्याभावः स्मृतावस्तीति स एव प्रसङ्गः न हि स्मृतित्वसंसर्गः स्मृतिः। अतएव न द्वितीयोऽपि, न हि संसर्गविशिष्टं यत्स्मृतित्वं तदेव स्मृतिव्यक्तिः, ततश्च संसर्गविशिष्टस्मृतित्वेन सह स्मृतिव्यक्तेरन्योन्याभावमादायोक्तदोषानिवृत्तिः। एवं तत्र तत्रापि संसर्गविशेषणप्रक्षेपे दोषानिवृत्तिरेव। अनवस्थायां वा पर्य्यवसानं विशेषणप्रक्षेपपरम्परायाः।

* स्मृतीति * स्मृतित्वस्य स्मृतौ समवायात्तत्र तत्संसर्गभावान्नातिव्याप्तिरित्यर्थः। अतिव्याप्त्यैव दूषयति * नेति * अतिव्याप्तिमेव विकल्पपूर्वकमुपपादयति * तथाहीति * स्मृतित्वविशिष्टसंसर्गाभाव इति प्रथमविकल्पार्थः। स्मृतित्वोपलक्षितसंसर्गस्याभाव इति तृतीयविकल्पार्थः। वाग्भङ्ग्या-वाक्प्रकारेण। स्मृतित्वसंसर्गाभावमात्रं किं वा तस्याऽपि संसर्गाभावो विवक्षित इति विकल्प्य प्रथमेऽतिव्याप्तिस्तदवस्थेत्याह *आद्य इति* स्मृतौ स्मृतित्वविशिष्टसंसर्गाभावात्कथं तदभाव इत्याशङ्क्य भूतले घटतदन्योन्याभाववत्स्मृतावपि संसर्गतदन्योन्याभावावुपपादयति- *नहीति* उक्तामतिव्याप्तिं द्वितीयेऽप्यतिदिशति *अत इति *स्मृतौ संसर्गविशिष्टस्मृतित्वान्योन्याभावमुपपादयति * नेति * स्मृतित्वसंसर्गाभावो यत्र साऽनुभूतिरित्युक्ते तदन्योन्याभावमादायस्मृतावतिव्याप्तिस्त-

दवस्थेति फलितमाह * ततश्चेति * संसर्गाभावमात्रं नविवक्ष्यते किन्तु स्मृतित्वसंसर्गाभावो यत्र ज्ञाने सानुभूतिरिति लक्षणवाक्यार्थ इति प्रथमविकल्पमाशङ्क्याह * एवमिति * तस्य संसर्गस्यान्योन्याभावमादाय स्मृतावतिव्याप्तिर्वज्रलेपायत इत्यर्थः । तत्र तत्र सर्वत्र संसर्गाभावस्यैव विवक्षितत्वादन्योन्याभावमादाय कुतोऽतिव्याप्तिः स्मृतावित्याशङ्क्याह * अनवस्थेति *

स्मृतित्वसंसर्गस्य स्वव्यतिरिक्तसंसर्गमङ्गीकृत्य तदभावविवक्षायां संसर्गानवस्था स्यात् नतु तदस्ति संसर्गस्य स्वभावसंसर्गस्य स्वीकारात् तत्प्रतियोगिकाभावविवक्षायां कुतोऽनवस्थेत्यत आह ।

२३१ संसर्गस्य स्वरूपमेव संसर्ग इति शङ्कानिरासः ।

नच वाच्यं स्मृतित्वसंसर्गस्य न संसर्गान्तरेण सम्बन्धित्वं किन्तु स्वभावत एव तत् कुतः परम्परागवेषणं कार्य्यमिति । स्मृतित्वसंसर्गस्यान्योन्याभावमादाय कृतस्य प्रसङ्गस्य परिहर्त्तुं तदानीं सुतरामशक्यत्वात् संसर्गान्तरविशेषणवचनस्याधिकार्थापर्य्यवसायित्वात् ।

* नचेति * जातिव्यक्त्योः समवायः संसर्गः सच स्वपरनिर्वाहक इति पूर्वपक्षाभिप्रायः । स्मृतित्वसंसर्गस्य स्वभावसम्बन्धत्वमभ्युपगम्यानवस्थापरिहारे सत्यतिव्याप्तेस्तादवस्थ्यादित्याह * स्मृतीति * संसर्गस्य संसर्गान्तराभ्युपगमेऽनव-

स्था परं स्यादिह पुनः संसर्गान्योन्याभावयोर्भेदोऽपि न स्यात् स्वरूपप्रतियोगित्वादुभयोरपीति तदर्थः। संसर्गेतरेतराभावयोर्भेदासिद्धिः कुत, एकस्य संसर्गप्रतियोगित्वादपरस्य स्वरूपप्रतियोगित्वादित्यत आह * संसर्गेति * स्मृतित्वसंसर्गातिरिक्तसंसर्गाभावे संसर्गवचनस्य प्रथमसंसर्गानतिरिक्तार्थत्वात्संसर्गाभावएवोक्तः स्या त्ततश्च स्मृतित्वसंसर्गान्योन्याभावः स्मृतावप्यस्तीति स एव प्रसङ्ग इत्यर्थः।

एवं स्मृतित्वसंसर्गसंसर्गाभावमनुभूतावभ्युपगम्यातिव्याप्तिरवादि सम्प्रति सोऽपि नानुभूतौ सिध्यतीति लक्षणस्यासम्भवदोषमाह।

२३२ लक्षणस्याऽसम्भवग्रस्तत्वम् ।

किञ्च तदुभयस्वरूपातिरेकं तत्संसर्गस्यामन्यमानेन स्मृतित्वसंसर्गः स्मृतित्वधर्मिस्वरूपं चेत्येतयोः संसर्गात्मत्वे व्यवस्थाप्यमानेऽनुभूतौ कथं तादृशस्य संसर्गस्य निषेधः किमनुभूतेः स्वरूपं नास्ति, उत स्मृतित्वसंसर्गस्य, ततः कस्य निषेधः। अर्थान्तरभूतस्य च संसर्गस्य निषेधे स्मृतावपि प्रसङ्गस्तदवस्थः स्मृतौ तस्यार्थान्तरभूतस्य भवताऽनभ्युपगमात् स्वरूपमेव तयोः सम्बन्ध इति तत्र भवतोऽभ्युपगमः।

*किञ्चेति* स्मृतित्वसंसर्गस्मृतिव्यक्त्योः संसर्गस्य तदुभयस्वरूपातिरेकममन्यमानेन त्वया स्मृतित्वसंसर्गस्मृतिव्यक्तिस्वरूपयोः संसर्गात्मत्वे व्यवस्थाप्यमाने स्मृ-

तित्वसंसर्गानुभूतिस्वरूपानतिरिक्तसंसर्गानिषेधोऽनुभूतावपि न सिध्यतीति लक्षणस्यासम्भव इत्यर्थः । कथंशब्दसूचितामनुपपत्तिमेव स्फोरयति *किमिति*स्मृतित्वसंसर्गस्य यः संसर्गोऽनुभूतौ निषिध्यते किमसावनुभूतिस्वरूप,मुत तत्स्मृतित्वसंसर्गस्य,ताभ्यामर्थान्तरेमव वा, न तावत्प्रथमद्वितीयौ तयोः स्वरूपेण सत्वात्ततः कस्य निषेधो न कस्यापीत्यर्थः । तदुभयस्वरूपानतिरिक्तः संसर्गोऽनुभूतौ निषिध्यत इति तृतीयं विकल्पमाशङ्क्याह * अर्थेति * स्मृतित्वसंसर्गातिरिक्तसंसर्गनिषेधः स्मृतावप्यस्तीति तत्रातिव्याप्तिरित्यर्थः । स्मृतिव्यक्तिस्मृतित्वसंसर्गयोः स्वव्यतिरिक्तसंसर्गो नाङ्गीक्रियते समवायस्यैकत्वात्संयोगादेरसम्भवादित्याह *स्मृताविति* स्मृतित्वसंसर्गस्य स्मृत्या संसर्गोनास्ति चे त्स्मृतित्वसमवायवती स्मृतिरिति कथं व्यवहारइत्याशङ्क्य समवायस्य संसर्गान्तराभावेऽपि स्वानिर्वाहकत्वात्तदुपपत्तिरित्याह * स्वेति * तत्रभवतः—पूज्यस्येति विपरीतलक्षणा ।

स्मृतिस्मृतित्वसंसर्गयोः स्वरूपमात्रसम्बन्धं न ब्रूमो येनायमुपालम्भोऽपि किं तु परस्परसंसृष्टबुद्धिजनकं स्वरूपं नच तादृक् स्वरूपमनुभूतिस्मृतित्वसंसर्गयोरस्ति तेन न स्मृतावतिव्याप्तिर्नाप्यसम्भवोऽनुभूतिलक्षणस्येति शङ्कते ।

२३३ स्वरूपविशेषस्य सम्बन्धत्वशङ्कानिरासः ।

अथोच्यते अनुभूतिस्मृतित्वसंसर्गयोः स्वरूपसम्भ-

वेऽपि न परस्परसम्बद्धबुद्धिजनकत्वं तयो, स्तादृक्त्वञ्च यत्र तयोस्तत्र सम्बन्धात्मकत्वं स्वरूपयोरुच्यत इति। मैवम्। विशेषोपसङ्ग्राहकासिद्धौ तस्याऽप्यनुपपत्तेः, उपसङ्ग्राहकान्तरोक्तौ तत्सम्बन्धेऽपि प्रसङ्गेनापरापरोपसङ्ग्राहकगवेषणायामनवस्थापातात्।

*अथेति* सम्बद्धबुद्धिजनकत्वाभावो लोकप्रसिद्धि सिद्ध इति यावत्। माभूत्तयोर्मिथः सम्बद्धत्वबुद्धिजनकत्वं ततः को लाभस्तत्राह *तादृगिति* स्मृतिव्यक्तीनामेव तादृशबुद्धिजनकत्वं नान्येषामित्ययं विशेषः किं सकलस्मृत्यनुगतप्रयोजकान्तरेण सिद्ध्य,त्युत तदन्तरेणेति,विकल्प्य द्वितीयं दूषयति *मैवमिति* बुद्धिजनकत्वं ला न कारणत्वं तच्च सकलस्मृत्यनुगतरूपमन्तरेण न सिध्यति सम्बन्धाभावस्योभयत्राविशिष्टत्वादित्यर्थः। विशेषेति व्यक्तिरुच्यते। उपसङ्ग्राहकेति अनुगततया साकल्येन तद्ग्रहणहेतुरूपमुच्यते। अस्तु तर्ह्युपसङ्ग्राहकेण तादृग्बुद्धिजनकत्वासिद्धिरिति प्रथमविकल्पमाशङ्क्याऽऽह *उपेति* तदुपसङ्ग्राहकं स्मृतित्व,मुतान्यत्, न तावत्स्मृतित्वं तस्याऽद्याप्यनिरूपणान्नान्यत्स्मृत्यसाधारणं रूपं सम्भवति, सम्भवेऽपि तत्सम्बन्धः स्मृतीनामेव नान्यत्रेत्यत्रापि नियामकान्तरं वक्तव्यं ततश्च तत्राऽपि तत्राऽपीत्युपसङ्ग्राहकरूपानवस्थेत्यर्थः।

सम्बद्धत्वबुद्धिजनकत्वमेव स्मृतिस्मृतित्वसंसर्गयोर्न सिध्यति नियामकाभावादित्युक्तं इदानीं तदभ्युप-

गत्वेऽप्यनुभूतिलक्षणस्यासिद्धिरित्याह ।

२३४ संसर्गस्य संसृष्टबुद्धिजनकत्वेऽप्यसिद्धिः ।

तावताऽपि चानुभूतिस्वरूपे कस्य निषेधो वर्णितः स्यात्। स्मृतित्वसंसर्गानुभृती सम्बद्धे इत्येवंरूपबुद्धिजनकत्वस्येति चेन्न । भ्रान्त्यात्मिकाया ईदृशबुद्धेर्जनकत्वस्य वारयितुमशक्यत्वात् । यथार्थाया इति चेत् ईदृशबुद्धेर्यथार्थाया यदि सत्त्वमभ्युपैषि तदाऽनुभूतौ स्मृतित्वप्रसङ्गः, अथ नाभ्युपैषि किं[2] प्रति तस्या जनकत्वाभावो निरूप्यः । अथात्यन्तासतीमेव तादृशबुद्धिं प्रति जनकत्वाभावावधारणमनुभूतेरभ्युपैषि तदा स्मृतावपि प्रसङ्गः, यावत्यस्तद्बुद्धयस्तत्र जायन्ते तदधिकां तादृशबुद्धिमत्यन्तासतीं प्रत्यजनकत्वस्य स्मृतावपि सम्भवात् । सर्वामेव तादृशबुद्धिं प्रत्यजनकत्वमनुभूतेर्न त्वेवं स्मृतेरिति चेन्न । सर्वतद्व्यक्तिप्रामित्यसम्भवात् । किञ्च सर्वामिति कोऽर्थः? किमसतीं सर्वाम्, उत सतीम्, अथ सतीमसतीञ्चेत्युभयीमपि प्रत्यजनकत्वम् । आद्ये द्वितीये च स्मृतावपि तदजनकत्वमस्त्येव, न हि स्मृतित्वसंसर्गस्मृती सम्बद्धे—इति यावत्यः स्मृतिव्यक्तिषु बुद्धयो भवन्ति ताः

१ एतावतापि का० मु० पु० पा० ।

२ कं प्रत्यस्य इति सो० पु० पा० ।

३ बुद्धयस्तत्र जायन्ते इति का० मु० पु० पा० ।

प्रति प्रत्येकं स्मृतिव्यक्तिषु जनकत्वमिति[1]। काञ्चित्[2] सत्यां सतीं प्रति च तदजनकत्वं प्रागेव दूषितम्। तृतीये नानुभूतावपि तदजनकत्वं सत्यासत्यतादृशबुद्धेर्भावेनाभावेन वा सतीमसतीं प्रत्यजनकत्वस्यासम्भवादिति॥

* तावतेति * अनुभूतिस्मृतित्वसंसर्गयोः स्वरूपं न निषेध्यं सत्वा, नापि तत्संसर्गोऽनङ्गीकारादेव निषेधानर्हत्वादित्यर्थः। यद्यपि संसर्गान्तरस्यासतोऽप्राप्तत्वादेव न निषेध्यत्त्वं अथापि तयोः सम्बन्धत्वबुद्धिजनकत्वं स्मृतौ दृष्टमत्रारोप्य निषिध्यत इति शङ्कते * स्मृतीति * तत्रैतदभिधानीयं किं भ्रान्तैवंरूपबुद्धिजनकत्वस्य निषेध, उत यथार्थैवंरूपबुद्धिजनकत्वस्येति, न तावदाद्य इत्याह * नेति * अनुभूतावपि यथा ऽख्यातिवादिनो रजतप्रत्यये स्मृतिरियमिति भ्रान्तिस्तथा स्मृतिभ्रान्तिसम्भवान्न तज्जनकत्वनिषेधसम्भव इत्यर्थः। यथार्थैवंरूपबुद्धिजनकत्वनिषेध इति द्वितीयमाशङ्कते * अथेति * स्मृतित्वसंसर्गानुभूती परस्परं सम्बद्ध—इति बुद्धेः सत्वमुतासत्वमिति विकल्प्याद्यं दूषयति * ईदृशीति * स्मृतावपीदृशबुद्धेः सत्वे स्मृतित्वतत्संसर्गवदनुभूतावपि तत्संसर्गः स्यात् अतश्चानुभूतौ तन्निषेधासिद्धेर्लक्षणासिद्धिरित्यर्थः। द्वितीयमनुभाषते *अथेति* अन्यथाख्यातिवादिभिः क्वचित्प्रामाणिकस्यान्यत्रारोप्य निषेधा-

---

१ जनकत्वमस्तीति का० मु० पु० पा०।

२ काञ्चित्सतीं प्रतीति का० मु० पु० पा०।

भ्युपगमात्स्मृतित्वसंसर्गानुभूतीसम्बद्धे इति बुद्धेरत्यन्तासत्त्वे प्राप्त्ययोगात्तज्जनकत्वनिषेधोऽपि न सम्भवति प्रतियोग्यनिरूपणादिति परिहरति *किमिति* यत्र यन्निषिध्यते तत्र तस्य सत्त्वं निषेधायोगादप्रमितप्रतियोगिको निषेधः स्वीक्रियत इति शङ्कते * अथेति * एवमसिद्धिं परिहरता लक्षणस्यातिव्याप्तिरापादिता स्यादित्याह सिद्धान्ती * तदेति * स्मृतेरेवम्भूतबुद्धिजनकत्वे सति तादृशजनकत्वाभावः कथं, भावाभावयोर्युगपदेकधर्मिसंसर्गविरोधादित्याशङ्क्याह *यावत्य इति * तज्जन्यतयाऽभ्युपेतशतसहस्रादिबुद्धिव्यतिरिक्ततादृशबुद्धेः कदाचिदपि तज्जन्यत्वाभावात्तज्जनकत्वाभावः स्मृतावप्यस्तीत्यर्थः। स्मृतित्वसंसर्गैतज्ज्ञानस्वरूपे परस्परं संसृष्टे इत्येवंरूपासद्बुद्धिजनकत्वाभावो यत्र ज्ञाने साऽनुभूतिरित्युक्ते स्मृतावुक्तातिव्याप्तिं परिहर्तुमनुभूतिलक्षणं विशिनष्टि * सर्वामिति* तादृशबुद्धिजनकत्वात्यन्ताभावाधिकरणत्वमनुभूतेर्लक्षणं न त्वेतत् स्मृतावस्ति कतिपयतादृशबुद्धिजनकत्वात्तस्या इत्यर्थः। सकलतादृशबुद्धिज्ञानव्यतिरेकेण तदजनकत्त्वबुद्धिरनुपपन्ना प्रतियोगिप्रमितिं विनाऽभावप्रमित्यसम्भवात्सर्वासां सम्बन्धत्वबुद्धिव्यक्तीनामसर्वज्ञस्य प्रमित्यसम्भवादसिद्धिर्लक्षणस्येत्याह * नेति * सर्वां प्रत्यजनकत्त्वमिति पक्षे लक्षणासिद्धिरुक्ता सम्भवत्यातिव्याप्तिं समुच्चिनोति *किञ्चेति* शिष्टं स्पष्टम्। प्रथमद्वितीययोः स्मृतेरप्यनुभूतित्वप्रसङ्ग इत्याह * आद्य इति * असत्यास्तादृशबुद्धेरजनकत्वं यद्यपि स्मृ-

तावस्ति तथापि सतीं तादृशीं बुद्धिं प्रत्यजनकत्वं नास्ति तेन द्वितीये न स्मृतावतिव्याप्तिरित्याशङ्क्याह * न हीति * भूतभविष्यद्वर्तमानतादृशबुद्धिं सर्वां प्रति जनकत्वमेकैकस्मृतिव्यक्तेर्नास्ति तेन सर्वस्मृतिष्वतिव्याप्तिरित्यर्थः । एकैकतादृशबुद्ध्यजनकत्वे सति सर्वां तां प्रत्यजनकत्वमनुभूतेर्लक्षणं नैतत्स्मृतावस्ति सर्वाजनकत्वेप्येकैकजनकत्वादित्याशङ्क्याह * काञ्चिदिति * सत्यां–यथार्थां, सतीं–विद्यमानामित्यर्थः । यथार्थतादृशबुद्धेरनुभूतौ सत्वासत्वयोर्दोषमवादिष्मेत्यर्थः । उभयीम्प्रत्यजनकत्वमिति तृतीयपक्षं दूषयति * तृतीय * इति * कुत इत्यत आह *सत्या इति* सत्या–विद्यमानायाः सत्यतादृशबुद्धेः स्मृतित्वानुभूती सम्बद्ध इति यथार्थाया भावेनाभावेन वा जनकत्वासम्भवादसत्यास्तु प्रतियोग्यनिरूपणादेवाजनकत्वासम्भवात्सतीमसतीं प्रत्यजनकत्वं न सम्भवतीत्यर्थः ।

स्मृतित्वाभावो यत्र साऽनुभूतिरिति लक्षणाभिधाने स्मृतित्वान्योन्याभावः स्मृतावप्यस्तीति लक्षणस्यातिव्यापकत्वमुक्तं तदयुक्तमेव सामान्यविशेष-

---

* यद्यपि स्मृतित्वसंसर्गानुभूती न सम्बद्धे इत्येवंप्रतीयमानाभावप्रतियोगिनः सम्बन्धस्य निषेधोऽनुभूतौ नतु स्मृतावपीत्यनुभवसिद्धमेतत् सच सम्बन्धः स्वरूपं वा सम्बन्धान्तरं वेत्यन्यदेतत् किंच स्मृतित्वं स्मृतौ, स्मृतित्वसमवायः स्मृतौ, स्मृतित्वसंसर्गः स्मृतावित्यादिप्रतीतिविषयीक्रियमाणः स्मृतित्वसंसर्गोऽनुभूतौ निषिध्यते, यद्वा स्मृतिस्मृतित्वसंसर्गस्वरूपं नानुभव इति निषेधः सम्भवत्येव तथाऽपि विचार्यमाणमिदमपि हस्तसमावरणमेवेति भावइति शाङ्करी ।

योः समवायसंसर्गवादिभिस्तस्य परिहर्तुमशक्यत्वेऽपि तादात्म्यवादिभिः साऽतिव्याप्तिः परिहर्तुं शक्यत इति भाट्टश्चोदयति ।

२३५ भाट्टशङ्कानिरासः ।

स्यादेतत्स्मृतित्वस्यान्योन्याभावमादाय याऽतिप्रसक्तिर्दर्शिता सा नोपपद्यते भेदाभेदवादिमते स्मृतित्वभेदाभेदस्य स्मृत्या सहाभ्युपगमात्, ययोर्भेदाभेदस्तयोस्तत्राऽन्योन्याभावानभ्युपगमात् । मैवम्[2] । कथं ह्यवधार्य्यं स्मृतित्वस्य भेदाभेदः स्मृत्या, नानुभूत्येति । अनुभूत्या सह तद्विशिष्टप्रमाया अभावादिति चेन्न । किं सत्याः किमसत्या इत्याद्युक्तविकल्पदोषात् । प्रागभावप्रतियोगिन्या इति चेन्न । अनुभृतौ तादृश्याः स्वीकारेणानुभूतेस्तथात्वापातात् । स्मृतिस्मृतित्वयोरन्योन्याभावाभावश्चान्योन्यात्माऽनुभूतावपि तुल्यः न हिस्मृतित्वान्योन्याभावोऽनुभूतिरित्युक्तमावर्त्तते ।

---

* स्यादिति * अन्योन्याभावो नाम तादात्म्याभाव स्तादात्म्यं च भेदे सत्यभेदः स्मृतिस्मृतित्वयोस्तस्मिन्विद्यमाने कथमन्योन्याभाव इत्यर्थः । आह च-

क्षीरे दध्यादि यन्नास्ति प्रागभावः स उच्यते ।

---

१ तयोस्तैरन्योन्येति सो० पु० पा० ।

२ नेति का० मु० पु० पा० ।

नास्तिता पयसो दध्नि प्रध्वंसाभावलक्षणम् ॥
गवि योऽश्वाद्यभावस्तु सोऽन्योन्याभाव उच्यते ।
शिरसोऽवयवा निम्ना वृद्धिकाठिन्यवर्जिताः ॥
शशशृङ्गाद्यभावेन सोऽत्यन्ताभाव उच्यते इति ॥

स्मृतिः स्मृतित्वान्योन्याभाववती ततो भिन्नत्वादनुभूतिवदित्याशङ्क्याऽत्यन्तभिन्नत्वमुपाधिरित्याह * ययोरिति * स्मृतित्वस्य स्मृत्या सह तादात्म्यं नानुभूत्येति विशेषसिद्धौ लक्षणातिव्याप्तिः परिह्रियेत स एव तु नाद्यापि सिद्धो नियामकाभावादिति परिहरति * नेति * स्मृतित्वस्य स्मृत्या सह तादात्म्यं सामानाधिकरण्यसिद्धमनुभूत्या तदभावो योग्याऽनुपलब्धिसिद्ध इति शङ्कते *अनुभूत्येति* स्मृतित्वविशिष्टप्रमाया असत्वादित्यर्थः।स्मृतित्वानुभूत्योः सम्बन्धग्राहिका प्रमा सती नास्तीत्युच्यत, उतासती, किं वा प्रागसती ति.विकल्प्य कल्पद्वयं प्राशुक्तदोषानुषङ्गेन दूषयति * नेति * प्रागसत्याः प्रमाया भावादिति तृतीयमाशङ्कते * प्रागिति * प्रागसतः कदाचिदुत्पत्तिनियमादनुभूतित्वस्मृतित्वसंसर्गप्रमायाः प्रागसत्वे कदाचिद्भावानुमानादनुभूतेः स्मृतित्वं पारमार्थिकं स्यादिति दूषयति * नेति * यदुक्तं स्मृतित्वान्योन्याभावः स्मृतौ नास्ति अनुभूतौ विद्यत इति तत्राह *स्मृतीति* अभावस्याभावान्तराङ्गीकारे ऽनवस्थाप्रसङ्गादन्योन्याभावस्याभावोऽन्योन्याभावस्वभावोऽभ्युपगन्तव्यः स चानुभूतावपि तुल्य इति अनुभूतेरपि स्मृतित्वं स्यादेवेत्यर्थः। यद्यपि स्मृतिस्मृ-

तित्वान्योन्याभावस्वभावत्वमनुभूतेर्नास्ति तथापि स्मृतित्वानुभूत्योः स्वरूपभेदादन्योन्यभावो नास्तीत्याशङ्क्याह * न हीति * स्वरूपभेदस्य स्मृतावपि तुल्यत्वादन्योन्यभावस्तत्रापि न भवेदित्युक्त मावर्तते-अनुभूतेस्तथात्वापातादित्युक्तं स्मृतित्वं प्रसज्यत इत्यर्थः ।

---

स्मृतित्वसंसर्गान्योन्याभावमादाय स्मृतावनुभूतित्वप्रसञ्जनमयुक्तमेवान्योन्याभावविलक्षणसंसर्गाभावस्य विवक्षितत्वात् । नच तयोर्भेदो नास्ति तस्यानुभवसिद्धत्वादिति द्वितीयमाशङ्कते ।

२३६ अन्योन्याभावसंसर्गाभावयोः प्रातीतिकवैलक्षण्यनिरासः ।

अथ माभूद्भेदाभेदमादाय परिहारः तथापीदं तन्न भवति इह तन्नास्तीति प्रतीतिसाक्षिक एवान्योन्याभावसंसर्गाभावयोर्भेद इति चेन्न । प्रतियोगिरूपोपाध्यवैचित्र्यादभावे जात्यादिभेदानभ्युपगमाच्च तयोर्भेदबुद्धिरेव प्रामाण्यमनश्नुवाना कूटसाक्षिणीति तदनादरणात् ।

*अथेति* अभावयोर्भेदः किं प्रतियोग्युपाधिभेदात्, उत जात्यादिनिमित्त इति विकल्प्य न तावदाद्यः प्रतियोगिभेदाभावादित्याह * नेति * अभावत्वजातेस्तदपरप्रागभावत्वादिजातेश्चानङ्गीकारात् गुणसम्बन्धस्य चानिष्टेर्गवाश्ववत्कृष्णगौरवच्च जात्यादिनिबन्धनोऽपि भेदो न सिध्यतीत्याह * अभावेति * भिदा भेदः । कूटसाक्षिणी-मिथ्याबुद्धिरित्यर्थः ।

यद्यपि जात्यादिनिबन्धनो भेदो न सिध्यति तथापि भिन्नलक्षणयोगित्वात्तयोर्भेद इत्याशङ्क्याऽऽह ।

२३७ लक्षणतोऽप्यन्योन्याभावसंसर्गाभावयोर्भेदनिरासः।

न च स्वप्रतियोगिसमानकालसमानाधिकरणोऽभावो-

१ प्रागभावप्रध्वंसाभावाभ्यामतिव्याप्तिवारणायाऽऽह । समानकालेति ।, अत्यन्ताभावेऽतिव्याप्तिवारणायोक्तं समानाधिकरणेति । आकाशाद्यन्योन्याभावोपग्रहश्च यथाकथञ्चित्तदधिकरणविवक्षया । बदरसंयोगस्य स्वप्रतियोगिना बदरेण कुण्डे सामानाधिकरण्यमत उक्तमभावेति । प्रतियोगिपदस्य निरूपकपरत्वात् । स्वाभावविरहात्मतायास्त्वभावपदमतिरिच्यते । यत्किञ्चित्प्रतियोगिसमानकालसमानदेशत्वमत्यन्ताभावस्याऽपीत्यत उक्तं स्वेति । तदन्योन्याभाववानिति । नाङ्क्ष्य इत्यर्थः । यथा सम्भ रमिति । अभावत्वं हि भावभिन्नत्वं तच्च भावान्योन्याभाववत्त्वमित्यन्योन्याभावेनैवान्योन्याभावनिरूपणादात्माश्रयः । अथाभावत्वं भावत्वात्यन्ताभाववत्त्वं तदाऽत्यन्ताभावस्य संसर्गाभावत्वात् तस्य चान्योन्याभावाभाववत्त्वेन त्वयाऽभिधानादन्योन्याभावनिरूप्यः संसर्गाभावः तन्निरूप्यश्च पुनरन्योन्याभाव इत्यन्योन्याश्रयः । अथाभावत्वं भावभिन्नत्वं तच्च भाववैधर्म्यं तच्च तदन्यवृत्तिधर्मात्यन्ताभाववत्त्वं तदन्यत्वं च तदन्योन्याभाववत्त्वमिति स्वापेक्षाऽपेक्षित्वेन चक्रकम् । अथाभावत्वं भावविरोधित्वं विरोधित्वं च धर्मो धर्मिभिन्नः स च येन भेदेन भिन्नः सोऽन्योन्याभावो वाच्यः स यदि स्ववृत्तिस्तदाऽऽत्माश्रयोऽन्योन्यवृत्तिस्तदाऽन्योन्याश्रयो ऽपरापराभ्युपगमे चानवस्था, यद्वा अन्योन्याभावस्यान्योन्याभावोऽस्ति न वा आद्ये स यदि स्वरूपमेव तदा स्वनिरूप्यत्वादात्माश्रयः, अथापरस्तदा तस्याऽप्यन्योन्याभावो यदि पूर्व एव तदाऽन्योन्यनिरूप्यत्वेऽन्योन्याश्रयः । अथ प्रथमान्योन्याभावादन्य एव द्वितीयान्योन्याभाव स्तदा तस्याऽपि यदि प्रथम एव तदा चक्रकं यदि प्रथमादन्य स्तदा पञ्चषष्ठा-

२ समानकाल इति सो० पु० नास्ति ।

ऽन्योन्याभाव,स्तदन्योन्याभावश्च तदभावः संसर्गाभावः, यथासम्भवमात्माश्रयाद्यननुभव—स्वभेदाऽननुगम—तत्तदवगमानभ्युपगमानामनुत्तरणीयत्वप्रसङ्गात् ।

नचेति । स्वप्रतियोगिसमानाधिकरणोऽभाव इत्यन्योन्याभावस्य लक्षणं स्वप्रतियोगिना सह समानमधिकरणमाश्रयो यस्य स तथोक्तः, स्तम्भः कुम्भो न भवतीत्यत्र हि तादात्म्यं प्रतियोगि तदुभयाधिकरणं तदभावोऽप्युभयाधिकरण इति। अभाव इत्युक्ते संसर्गाभावेऽतिव्याप्तिस्तद्वारणाय प्रतियोगीति विशेषणम्। तथाऽप्यन्यप्रतियोगिसमानाधिकरणे संसर्गाभावेऽतिव्याप्तिस्तन्निवृत्त्यर्थं स्वेति विशेषणम्।स्वप्रतियोगिसमानाधिकरण इत्युक्ते गुणप्रतियोगिद्रव्यनिष्ठपृथक्त्वनिवारणायाभाव इति विशेषणम् । सम्प्रति संसर्गाभाव-

द्यभ्युपगमे यदि परावृत्तिस्तदा चक्रकं अपरावृत्तौ चाऽनवस्था तदुत्तरान्योन्याभावाननुभवश्च स्वप्रतियोगीत्यत्र स्वपदेन विशिष्य तत्तदन्योन्याभावाऽभिधानेऽननुगमः तस्य तस्याऽन्योन्याभावस्याऽसर्वज्ञेनाऽवगमो नाभ्युपगम्यते इत्यर्थः । यद्वा स्वशब्देनान्योन्याभावाभिधानं तदा तेनैव तन्निरूपणे आत्माश्रयः प्रतियोगिपदेन च यद्यन्योन्याभावविरोध्यभिधीयते तदात्माश्रय इत्याद्यूह्यम् । यद्यपि प्रतीतिवैलक्षण्यं प्रत्येकव्यवैलक्षण्याविनाभूतं तदेव चाभिहितं विशिष्य वैलक्षण्यानभिधानेऽपि न किञ्चिदनिष्टं न हीक्षुक्षीरगुडादिमाधुर्याणां विशिष्यानभिधानमात्रेण निवृत्तिः किञ्च प्रतीतिविशेष एव लक्षणमुभयोः सम्भवति सम्भवति च तादात्म्यावच्छिन्नप्रतियोगिकत्वं संसर्गावच्छिन्नत्वमुभयोः प्रत्येकं वैचित्र्ये प्रतीतिवैचित्र्यादिति तथाऽपि हस्तसमावरणमेतत् संविदेव हि भगवती वस्तूपगमे नः शरणमित्यस्याऽपि मर्यादमुल्लावनीयत्वात् तथाच वक्ष्यते नात्यापत्त्या प्रमामात्रात्ततोऽर्थाः स्वीक्रियोचिता इत्यादीति भावः । ३।० ।

लक्षणमाह * तदिति * तस्य प्रतियोगिनोऽभाव इत्युक्ते ऽन्योन्याभावेऽतिव्याप्तिस्तन्निरासाय तदन्योन्याभाववानिति विशेषणं तेन प्रतियोगिना सहान्योन्याभाववान् नचान्योन्याभावे अन्योन्याभावोऽस्त्यनवस्थानादित्यर्थः। प्रतियोग्यन्योन्याभाववानित्युक्ते धर्मिण्यतिव्याप्तिस्तदर्थमभावग्रहणम्। नच घटसंसर्गाभावस्यापि स्वप्रतियोगिसमानाधिकरणत्वं, घटस्य स्वावयवनिष्ठत्वादभावस्य भूतलनिष्ठत्वादिति द्रष्टव्यम्। स्वप्रतियोगिसमानाधिकरणोऽभाव इत्यत्र स्वशब्देन किमभावमात्रमुच्यते, किंवा ऽन्योन्याभाव, उत वस्तुमात्र, मन्योन्याभावपक्षे स एवान्योन्याभावोऽभावान्तरं वा स एव चेत्स्वासिद्धौ स्वासिद्धिरित्यात्माश्रयता अन्यश्चेत्तस्याप्येवंरूपत्वादन्योन्याश्रयता तत्राप्यन्योन्याभावान्तरं चेदनवस्थेत्याह *आत्माश्रयादीति* स्वप्रतियोगिसमानाधिकरणत्वं च प्रतियोगिनि विद्यमाने, कालान्तरेवा, कालान्तरे चेदात्मनि ज्ञानभावाभावयोः कालभेदेन समानाधिकरणत्वात्संसर्गाभावेऽतिव्याप्तिस्तदैव चेदनुभवविरोधो नहि ययोस्तादात्म्यं तयोस्तदैव तदभाव इत्याह * अननुभव इति * स्वशब्देन स्वविशेषाः कथ्यन्ते, स्वत्वमात्रं वा, आद्ये विशेषस्य विशेषान्तरेऽभावादव्याप्तिरित्याह * स्वभेदाननुगमेति * यदि स्वत्वमात्रमुच्यतेऽनुगमासिद्ध्यर्थं तर्हि तस्यापि स्वशब्दवाच्यत्वाय स्वत्वान्तरमेष्टव्यं पुनश्च तत्रापि स्वत्वाङ्गीकारेऽनवस्थापरिहाराय तत्तदवगना वक्तव्यास्ते नाङ्गीक्रियन्ते इत्याह * तत्तदिति * यद्यभावमात्रं वस्तुना-

त्रं वोच्यते तदा घटप्रतियोगिसमानाधिकरणसंसर्गाभावेऽतिव्याप्तिरिति यस्मिन्विकल्पे यो दोषः सम्भवति स तत्र द्रष्टव्य इत्याह * यथासम्भवमिति * अन्योन्याभावलक्षणखण्डनेन संसर्गाभावलक्षणमपि खण्डितं भवति तद्व्यवच्छेदासिद्धेरिति द्रष्टव्यम् ।

सम्प्रति संसर्गेतरेतराभावयोर्लक्षणान्तरद्वारा भेदं चोदयति ।

२३८ लक्षणान्तरद्वारा भेदनिरासः ।

ननु संसर्गप्रतियोगिको निषेधः संसर्गाभावः तादात्म्यप्रतियोगिकश्च तादात्म्याभाव इत्युक्त एव न मिश्रता तयो र्यो हि संसर्गतादात्म्यस्य निषेधः स संसर्गनिषेध एव न भवति तादात्म्यप्रतियोगिकत्वादिति । मैवम् । द्रव्यगुणकर्मणां समवायिकारणेषु हि तेषां प्रध्वंसा नैवं संसर्गाभावाः स्युः । संसर्गप्रतियोगित्वे तु संसर्गस्य समवायरूपतया समवायानित्यत्वप्रसङ्गात् । किञ्च तर्हि संसर्गान्योन्याभावौ द्वावपि न घटादिप्रतियोगिकाविति घटादेः कालादिवन्निरवधित्वापातः । संसर्गतादात्म्ययोश्चाविशेषितयोर्निषेधे सामान्यत एव तयोरुच्छेदः स्यात् । एवं यद्यदेव प्रतियोगि वाच्यं तत्तत्स्वरूपत एव न स्या-

१ यद्यपि समवायनित्यत्वेऽपि रूपादिनिरूपितत्वावच्छिन्नस्य समवायस्यानित्यत्वमेव विशिष्टस्याऽन्यत्वात् तथाच रूपसमवायो ध्वंसत एव अतएव वायौ स्पर्शसमवाये सत्यपि रूपसमवायो नास्तीति तथाऽपि नित्यमपि विशेषणान्तरावच्छिन्नं ध्वंसते इत्यनुपपन्नमेवेति भावः ।

त् तस्यापि संसर्गं प्रति धावने च तदक्षतं, संसर्गानव-
स्था, शेषोच्छेदात्पूर्व्वपूर्वोच्छेदो वा स्यात् ।

* नन्विति * निषेध इत्युक्तेऽन्योन्याभावेऽतिप्रसक्तिस्तन्निरासाय संसर्गेति विशेषणम् । संसर्गप्रतियोगीत्युक्ते पृथक्त्वगुणेऽतिव्याप्तिस्तन्निरासाय निषेध इत्युक्तम् । इदानीमन्योन्याभावलक्षणमाह *तादात्म्येति* व्यावर्त्यमेवमत्राप्यूहनीयम् । इति कथिते सत्येव तयोर्मिश्रता—सङ्कीर्णता नास्तीत्यर्थः। तादात्म्यप्रतियोगिनिषेधत्वमन्योन्याभावलक्षणं न भवति संसर्गतादात्म्याभावस्य संसर्गप्रतियोगिकतयाऽव्यापकत्वं संसर्गनिषेधत्वं च संसर्गाभावलक्षणं तत्रैवातिव्याप्तमिति लक्षणद्वारा न भेदसिद्धिरित्यत आह * यो हीति * अव्याप्त्या संसर्गाभावलक्षणं दूषयति *मैवमिति* कार्यद्रव्यानित्यगुणकर्मणां स्वोपादानकारणे ये प्रध्वंसाभावाः संसर्गाभावरूपतयेष्टास्तेषामेवंलक्षणमाचक्षाणानां संसर्गाभावता न भवेत्संसर्गप्रतियोगिकत्वाभावादित्यर्थः। नच प्रध्वंसाभावाः संसर्गाभावा न भवन्त्येवेति वाच्यम् । इह भूतले घटो नास्तीति प्रतीतौ मृदवयवे घटो नास्तीति प्रतीतेरवैलक्षण्यात् । ननु तेषां तादात्म्याऽप्रतियोगिकत्वे सत्यभावत्वात्संसर्गप्रतियोगिताऽनुमीयत इत्यत आह * संसर्गेति * किञ्च घटादिरनादिरनन्तश्च प्रागभावप्रध्वंसाप्रतियोगिकत्वात्कालादिवत्, नच हेत्वासिद्धिः प्रागसत्त्वप्रध्वंसयोः संसर्गाभावतया संसर्गप्रतियोगिकत्वादित्याह * किञ्चे-

ति* संसर्गतादात्म्ययोरविशेषितयोर्निषेध,उत केनचि-द्विशिष्टयोरिति विकल्प्य प्रथममतिप्रसङ्गेन निराकरोति *संसर्गेति *यदि विशिष्टयो,स्तयोरपि स्वरूपेणैव नि-षेधप्रतियोगित्वमुत संसर्गतादात्म्ययोरिति विकल्प्य प्रथमकल्पं प्रागुक्तदोषेण दूषयति *एवमिति* संसर्गः संसर्गी च विशिष्टन्तस्य तथैव निषेधे द्वयमपि न स्यादि-त्यर्थः। यदि विशिष्टयोस्तादात्म्यसंसर्गयोस्तादात्म्या-न्तरं संसर्गान्तरं च निषेधप्रतियोगि तदा प्रथमयोरक्षति-र्निषेधाप्रतियोगित्वादित्याह *तस्येति* विशिष्टोपाधा-वेकीकृत्य तस्येत्येकवचनप्रयोगः *संसर्गमिति* तयोः सम्बन्धत्वादिति द्रष्टव्यम्। तादात्म्यसंसर्गयो यौं तादा-त्म्यसंसर्गौ निषिध्येते तयोरपि स्वरूपेण निषेध्यत्वे उक्तो दोषः संसर्गान्तरेण चेत्तस्यापि तस्यापीति निर्मूला त-न्मालाऽऽपतेदित्याह *संसर्गेति* कासु चित्कक्षासु सं-सर्गविश्रान्त्याश्रयणान्नानवस्थेत्यत आह *शेषेति* य-स्य स्वरूपेण निषेद्ध्यतयाऽत्यन्तासत्त्वं ततः पूर्वस्यापि स्वरूपेण निषेध्यतया तथात्वं स्यादेवमामूलं संसर्गा-ऽसत्त्वं स्यादित्यर्थः।

यद्यत्प्रतियोगि तत्तत् स्वरूपेणैव न स्यादित्य-स्य परिहारं शङ्कते।

२३९ सहानवस्थानरूपविरोधे स्वीकृतेऽप्यनिस्तारः।

न प्रतियोग्यनुयोगिनोस्तथात्वं विरोधः किन्तु स-हभावाभावोऽतस्तन्मात्रं न स्यात् नतु तन्मात्रमेव न स्यादिति चेन्न। अनुयोगिनि प्रतियोग्यापत्तेः। तथा

प्रमाभावात् कथं तदास्तामिति चेन्न । तथाप्रमाभावमूलकस्य विरोधस्य सहानवस्थानस्य नियमनभङ्गात् प्रतियोग्यनुयोगिभावादन्यः कस्तयोर्विरोधः स्यात् । तथा न प्रमीयमाणत्वमत्र स इति चेन्न अतिप्रसङ्गात्। नियमेनेति चेन्न । व्यक्त्योरविरोधापत्तेः ।

* न प्रतीति * निषेधप्रतियोगिनो विरोधस्तथात्वं—निषेध्यस्वरूपत्वं निषेधस्वरूपत्वं न भवतीत्यर्थः । तर्हि भावाभावयोः साक्षाद्विरोधस्तदनुषङ्गादन्यत्रेति न्यायविरोध इत्याशङ्क्याह * किन्त्विति * सहभावः सहसत्त्वमेकदेशकालस्थितत्वं तदभावो विरोध इत्यर्थः । तथापि विरोधापरिहारादेकतरभावेऽन्यतराभावस्तदवस्थ इत्यत आह * तत इति * तन्मात्रं—सहभावाभावमात्रं स्यात् । मात्रचो व्यावर्त्यमाह * न त्विति * तन्मात्रमेव—प्रतियोगिमात्रमेव नस्यादिति न किंत्वन्यत्र सता रूपेण प्रतियोगित्वमन्यत्र चाऽसता रूपेणाभावज्ञानविषयत्वमिति, न प्रतियोगित्वमात्रेण स्वरूपाभावप्रसङ्गो यदि हि प्रतियोगिनो निषेध्यत्वं स्वभावतः स्यात्तर्हि यद्यत्प्रतियोगि तत्तत्स्वरूपेणासत्त्वे प्रतियोगि तत्तत्स्वरूपेणैव स्यात् न तथाऽतोऽप्रयोजकं स्वरूपेण सत्त्वे प्रतियोगित्वमित्याशयः । अतिप्रसङ्गेनैतन्निराकरोति *नेति* सहावस्थानाभावः किमेकदेशे उभयोरप्यभावे, उतैकस्मिन् काले, किम्वा एकस्मिन् देशे काले च द्वयो रसंसर्गः, प्रथमद्वितीयौ नाऽनवद्यौ देशकालभेदेन तदुपगमात् तृतीये प्रतियो-

गिनि प्रतियोगी न वर्त्तते स्ववृत्तिविरोधादनुयोगिनि चानुयोगी न वर्त्तते ततश्च प्रतियोगिन्यनुयोगिनोऽनुयोगिनि च प्रतियोगिनोऽवृत्त्यापत्तिरेकदेशकालत्वाभावसम्भवादेकतराभावेऽन्यतरभावनियमाच्चातो घटाभावारूढो घटो घटारूढश्च तदभाव इति विरुद्धमापद्येतेत्यर्थः ।

किमयं परपक्षेऽनिष्टप्रसङ्गरूपस्तर्क, उत स्वपक्षानुमानं, नाद्यो व्याप्तिहीनतया प्रशिथिलमूलत्वान्न द्वितीयोऽनुपलब्धिविरुद्धकालात्ययापदिष्टत्वादिति शङ्कते ।

२४० स्वरूपायोग्यतैव विरोध इति निरासः ।

तथा न प्रमातुमनौपाधिकी योग्यतेति चेत् सैव मेयगता योग्यताऽनुयोगिप्रतियोगित्वादन्या का समर्थिता स्यात् । स्वरूपमेवेति चेन्न । मिथः सम्भेदाभ्युपगन्तृताऽपि तयोः स्वरूपापगमात् । तथाभूतं स्वरूपमिति चेन्न । तस्यैव निर्वाच्यतापत्तेः ।

* तथेति * स्वाभावारूढतया घटप्रमाप्राप्तौ तदभावे किं सहानवस्थानविरोधो मूलमुत प्रतियोग्यनुयोगिभावः, नाद्य इत्याह * नेति * प्रमाभावादिदं विरुद्धमिति वदन्प्रष्टव्यः प्रमातदभावयोरयमेव विरोध आहोस्विदन्यो वाऽन्यश्चेत् किं क्षुण्णं मेयतदभावयोराद्ये मानाभावे मानप्रवृत्तिः स्यात् पुरोदितरीत्याऽतश्च मानाभावेपि तदभावान्नविरोधः । नापि प्रशिथिलमूलता भूतलादौ तदभावे तद्भावदर्शनादित्यर्थः । भावाभावयोः सहानस्थानविरोधे नातिसम्बन्धश्च स्वाभावारूढत्वं घटस्यैष्टव्यमित्युक्तम् । ननु सहानव-

स्थानं न तयोर्विरोधस्तावता न प्रतियोग्यनुयोगिभावः स इति प्रसज्यते ताभ्यामन्यादृशस्य विरोधस्य सहानवस्थानमानाभावरूपस्य सम्भवादिति शङ्कते * तथा नेति * न तथा प्रमीयमाणत्वं— अप्रमीयमाणत्वमिति यावत् । सहाप्रतीयमानत्वं विरोधः, किंवा नियमेनेति विकल्प्य प्रथममपाकरोति * नेति * वायौ रूपस्पर्शयोरसहावस्थानदर्शनादन्यत्रापि तयोः सहावस्थानं न स्यादित्यर्थः । द्वितीयमाशङ्कते * नियमेनेति * रूपस्पर्शयोर्वायावसहभावेऽपि पृथिव्यादौ सह भावान्न तथा प्रसङ्ग इत्यर्थः । नियमस्यानुगतरूपनिष्ठत्वाद्व्यक्त्योर्व्यावृत्तत्वान्नियमेन तथात्वन्नास्तीति विरोधो न स्यादित्याह *नेति* सहस्थितत्वेन प्रमाणाभावो न विरोधः किन्तु सहाप्रमातुं योग्यतैव स इति शङ्कते *तथेति* स्वरूपव्यतिरिक्ता स्वरूपं वा, यदि प्रथमस्तत्राह *नेति* स्वरूपातिरिक्तयोग्यतानङ्गीकारादित्यर्थः । अस्तु तर्हि स्वरूपमेव सेति द्वितीयमाशङ्कते *स्वेति* स्वरूपमात्रं स्वरूपविशेषो वेति, विकल्प्य प्रथममपाकरोति *नेति* भावाभावयोः परस्परारूढत्वमङ्गीकुर्वता सदसद्वादिना च स्वरूपाभ्युपगमान्न तद्विरोधोऽतिव्यापकत्वादित्यर्थः । यद्वा परस्परसम्भेदेऽपि स्वरूपमात्रविरोधस्य निर्वाहाद्धटस्य स्वाभावारूढत्वं स्यादिति सहावस्थानाभावविशिष्टं सहाप्रमातुं योग्यतानियतं वा स्वरूपमिति द्वितीयमाशङ्कते *तथेति* सहानवस्थानस्य सहाप्रमातुं योग्यत्वस्य च पराकृतत्वात्तद्विशिष्टं स्वरूपं न निर्वक्तुं शक्यमिति परिहरति * नेति *

सहानवस्थानं सहाप्रतीयमानत्वं तद्योग्यत्वं वा विरोध इति पक्षत्रयम्प्रत्येकन्दूषयित्वाऽधुना साधारणं दूषणं दर्शयति ।

२४१ पक्षत्रयसाधारणदूषणोद्भावनम् ।

कश्च गोत्वाश्वत्वाभ्यां भावाभावयोस्त्रिविधविरोधे विशेषः स्यात्, सत्याञ्च तयोः साहित्यप्रमायां प्रकारभेदेन व्यवस्थापना किमिति कार्या प्रमयैवाप्रमानुपगमादिति ।

*कश्चेति*गोत्वङ्गव्येव नियतमश्वत्वञ्चाश्वे नियतमिति तथाविरोधत्रयवतोरन्योन्यभावाभावत्वाभावादनयोरपि तथात्वं न भवेदिति भावः।एवमुक्तविरोधस्यातिव्याप्तिमभिधायाधुनाऽव्याप्तिमाह *सत्यामिति* नभसि रथसंयोगभावाभावयोः प्रतीयमानयोर्विरोधपरिहाराय दिग्विभागावच्छिन्नतया व्यवस्थापनं तार्किकाः कल्पयाञ्चक्रुः सा न कार्येत्यर्थः। कुतो न,कार्येत्यत आह*प्रमेति*प्रमादर्शनात्सहाऽप्रतीयमानत्वं, सहावस्थानाभावो वा, सहाप्रमातुं योग्यता वा, नास्तीति विरोधप्राप्तेरभावान्नव्यवस्था कार्या सति विरोधे तत्परिहाराय तस्याः कर्त्तव्यत्वादित्यर्थः ।

प्रागभावप्रध्वंसेतरेतराभावानां संसर्गतादात्म्यमात्रप्रतियोगितया घटाद्यप्रतियोगिकत्वादनाद्यनन्तत्वं विश्वात्मत्वञ्च घटादेः स्यादिति यदुक्तं तदयुक्तं संसर्गादिविशेषणतया घटादेरपि निषेधप्रतियोगित्वादिति शङ्कते ।

२४२ पूर्वोक्तापत्तिशङ्कातन्निरासौ ।

अथ घटादिविशेषितयोस्तयोर्निषेधौ तौ, सविशेषणौ च विधिनिषेधौ न कथञ्चिद्विशेषणमनुपसङ्क्रम्य स्याता-मिति ब्रूष, तदपि न, तर्हि विशिष्टस्य निषेधो विशेषण-स्यापि भवतीति संसर्गान्योन्यनिषेधोऽपि संसर्गनिषेधः स्यादेवेति पुनः स प्रसङ्गो वज्रलेपायते । अन्योन्याप्रति-योगिकः संसर्गप्रतिषेधस्तथा विवक्षितः एवमन्योन्य-निषेधोऽपि संसर्गाप्रतियोगित्वेन निर्वाच्य इति चेन्न । एवं ह्यन्योन्यसंसर्गाभावः संसर्गान्योभावश्चापरा कोटिः स्या-त् । किञ्चैवंसति संसर्गाभावोऽन्योन्याभावो यो न भवति स संसर्गाभावतया विवक्षित इत्युक्तं स्यात् तथा च सं-सर्गविशेषणं व्यर्थमिति संसर्गाभावमर्थमाधिकमाकाङ्क्ष-ता त्वयाऽन्वर्थः संसर्गाभावशब्दोऽपि हारितः स्यात् । ( य तोऽन्योन्याभावो यो न भवत्यभावः स संसर्गाभाव इत्युक्तम् ।) किंचाऽनयाऽपि वाचाऽन्योन्याभावनिषेधोऽभिधीयमानोऽ-न्योन्याभावेऽपि प्रसज्यते, न ह्यन्योन्याभावोऽन्योन्याभावो भवतीति शक्यं प्रमातुं सामानाधिकरण्यं हि प्रकारभेदे सति भवति यथा नीलमुत्पलमित्यादि ततस्तदभावादेव न तथेत्य-

( ) विशेषितयोः संसर्गतादात्म्ययोरिति मो-पु-पा०

( २ ) संसर्गाभावो यो न भवति संसर्गाप्रतियोगिकः स संस-र्गाभाव इति सो-पु-पा० ।

( ) एतदन्तर्गतोग्रन्थः सो-पु-नास्ति ।

तिप्रसङ्गः । अन्यश्चान्योन्याभावेष्वेव तिष्ठन्नेव कः प्रमेयो यद्वति तथा कथ्येत अभावमात्रे त्वति प्रसङ्गात् व्यक्तिविशेषे च शेषेष्वन्योन्याभावेषु संसर्गाभावत्वापत्तेः ।

* अथेति * निषेध्यविशेषणत्वमात्रेण कथं निषेधप्रतियोगित्वमित्यत आह * सेति * नागृहीतविशेषणा विशेष्ये बुद्धिरिति न्यायेन विशेषणं घटादिकमगोचरीकृत्य तद्विशिष्टनिषेधगोचरत्वं तद्बुद्धेरनुपपन्नमित्यर्थः । एवन्तर्हि स्मृतित्वसंसर्गान्योन्याभावमादाय स्मृतावनुभूतित्वप्रसङ्गः सुदृढीकृतः स्यादिति परिहरन्ति * तदिति * निषेध्यविशेषणत्वानुपपत्त्या घटादेर्निषेधविषयत्वं यदि तर्हि विशिष्टस्य निषेधः सर्वत्र शुङ्कः पटो न भवतीत्यादौ कथितन्यायेन विशेषणशौक्ल्यादेरपि भवतीति कृत्वा स्मृतित्वसंसर्गः स्मृतिर्न भवतीति स्मृतित्वसंसर्गान्योन्यनिषेधोऽपि तत्संसर्गनिषेधो भवतीति तमादाय यः स्मृतावनुभूतित्वप्रसङ्गो दर्शितः स तदवस्थ एवेत्यर्थः । स्मृतित्वसंसर्गान्योन्याभावमादाय स्मृतावनुभूतिप्रसञ्जनमनुपपन्नन्तद्विलक्षणस्यैवाभावस्यानुभूतिलक्षणत्वेन विवक्षितत्वादिति शङ्कते * अन्योन्येति * नच पुनरुक्तिः पूर्वत्रानुभवस्य शङ्कामूलत्वात् इह तु लक्षणान्तरभेदस्य तन्मूलत्वादिति द्रष्टव्यम् । प्रतिषेध इत्युक्तेऽन्योन्याभावेऽतिव्याप्तिस्तन्निरासाय संसर्गेति विशेषणम् । संसर्गान्योन्याभावव्युदासार्थमन्योन्याप्रतियोगिक इति विशेषणम् * तथा विवक्षितइति * संसर्गाभावत्वेन विवक्षित इत्यर्थः ।

संसर्गान्योन्याभावलक्षणद्वयमप्यव्याप्त्या दूषयति * नेति * तादात्म्यमिह नास्तीति निषेधस्य तादात्म्यसंसर्गाभावत्वात्तस्य च प्रतिषेध्यविशेषणतया तादात्म्यप्रतियोगिकत्वमस्तीति संसर्गाभावादपरा कोटिः स्यात्तथा संसर्गो घटो न भवतीति संसर्गान्योन्याभावस्य निषेधे तादात्म्यविशेषणतया संसर्गप्रतियोगकत्वमस्तीत्यन्योन्याभावात्सोऽप्यपरा कोटिः स्यात् एवं लक्षणद्वयमप्यव्यापकमित्यर्थः॥ननु साक्षात्संसर्गप्रतियोगिकः संसर्गाभाव एवमन्योन्याभावोपि निर्वक्तव्य इतिचेन्न। तादात्म्यं नाम स्वरूपं अतश्च संसर्गतादात्म्यनिषेधः साक्षात्संसर्गनिषेध एवमितरत्राप्यूह्यमेवं संसर्गेतरेतराभावलक्षणयोरव्याप्तिमभिधायाधुना व्यर्थविशेषणत्वं दूषणान्तरं समुच्चिनोति *किंचेति* स्मृतित्वसंसर्गान्योन्याभावः स्मृतावप्यस्तीत्यतिव्याप्तावभिहितायां तन्निराचिकीर्षया यः संसर्गाभावोऽन्योन्याभावो न भवति स संसर्गाभावतया विवक्षित इत्युक्तं स्यात् एवंच सति योऽन्योन्याभावो न भवत्यभावः स संसर्गाभाव इत्युच्यमाने नास्त्यतिव्याप्तिरतः संसर्गेति विशेषणं व्यर्थमित्यर्थः। एवं तर्हि संसर्गपदं विहाय संसर्गाभावलक्षणमाचक्ष्महे इत्यत आह *इतीति* लोकेपि संसर्गाभाव इत्युक्ते संसर्गान्योन्याभावप्रतीतिः स्यात्तद्व्युदासार्थमन्योन्याभावो न भवतीति विशेषणं वक्तव्यमेवं च सति संसर्गेतिपदस्य प्रयोगः क्वापि न भवेत्। नच तदप्यस्त्विति वाच्यम्। संसर्गाभावशब्दस्य तत्र यौगिकार्थस्य परित्यागप्रसङ्गादि-

न्ति भावः। पूर्वमन्योन्याभावो न भवति योऽभावः स संसर्गाभाव इति लक्षणे संसर्गेतिविशेषणं व्यर्थमित्युक्तं इदानीमन्योन्याभावे ऽतिव्यापकं च संसर्गाभावलक्षणमित्याह *किंचेति* अनया वाचेत्यन्योन्याप्रतियोगिकइति विशेषणगिरेत्यर्थः। कथमन्योन्याभावनिषेधोऽन्योन्याभावेऽपि प्रसज्यत इत्याकाङ्क्षायामेतत्स्फुटयति *नहीति* अन्योन्याभावस्या-न्योन्याभावत्वस्य प्रमातुमशक्यत्वात्तन्निषेधत्वं तस्यार्थात्सिध्यति भावाभावयोरेकतरासम्भवेऽन्यतरप्रसक्तेरित्यर्थः। अन्योन्याभावोऽन्योन्याभावो भवतीति प्रमातुमशक्यत्वं कुत इत्यत आह *सामानेति* भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यं तदिह प्रथमान्योन्याभावशब्दप्रवृत्तिनिमित्ताद्भिन्नस्य प्रवृत्तिनिमित्तस्य द्वितीयतच्छब्दे ऽसम्भवात्तेन तस्य सामानाधिकरण्यं न घटत इत्यर्थः। प्रकृष्टप्रकाशः सवितेत्यादावेकस्मिन्नेवार्थे प्रकृष्टादिपदानां सामानाधिकरण्यं दृष्टं तद्वदिहापि किं न स्यादित्यत आह *यथेति* तत्राऽपि लक्ष्यैक्येऽपि व्यावर्त्यभेदोऽस्त्येवेत्यदृष्टान्त इत्यर्थः। फलितमाह *तत इति* ततो-रूपभेदाभावात् तदभावा-दन्योन्याभावशब्दद्वयस्य सामानाधिकरण्याभावादेव न तथा-ऽन्योन्याभावो न भवतीति संसर्गाभावलक्षणं तत्रातिप्रसक्तमित्यर्थः। ननु तर्हि-प्रथमान्योन्याभावशब्देन रूपान्तरविशिष्टमुद्दिश्य द्वितीयतच्छब्देन केवलमन्योन्याभावत्वं विधीयतामतः समञ्जसं सामानाधिकरण्यमित्यत आह *अन्य इति* अन्योन्याभावत्वादन्य इत्यर्थः। प्रथमाव-

धारणमन्ययोगव्यवच्छेदार्थं द्वितीयमयोगव्यवच्छेदार्थम्। तथा कथ्येतान्योन्याभावत्वं विधीयेतेत्यर्थः । तथाहि-तद्रूपं किमन्योन्याभावत्वमेव किंवान्यत्, न तावदाद्यः स्वविशिष्टे स्ववृत्तिव्यतिरेकनियमदर्शनात् अन्यथाऽन्योन्याभावत्वविशिष्टे तस्मिन्विधीयमाने तस्मिन्नेव तदित्यंशतः स्ववृत्त्यापात इति तात्पर्यार्थः।यदि द्वितीयस्तदा तद्रूपान्तरमभावमात्रवृत्ति, किंवा तद्विशेषवृत्ति, नाद्यः संसर्गाभावस्यापि तादात्म्याभावत्वप्रसङ्गादित्याह * अभावेति * यदि व्यक्तिविशेषवृत्ति तदा तद्विशिष्टस्य तथात्वे विधीयमाने परिशिष्टान्योन्याभावव्यक्तीनां संसर्गाभावत्वं प्रसज्येतेत्याह * व्यक्तीति *

संसर्गाभावो न भवति योऽभाव इत्यन्योन्याभालक्षणेऽपि ससंसर्गाभावेऽतिव्याप्तिर्द्रष्टव्येत्याह।

३४३ दूषणस्य सार्वत्रिकत्वम् ।

एतच्च सर्वत्र तदन्यत्वेन व्यवच्छिद्यमाने द्रष्टव्यम् ।

तथा हि—

नातत्तन्मन्यसे तावन्न तत्तदपि मंस्यसे ।
समानाधिकरण्यं हि रूपभेदमपेक्षते ॥
रूपान्तरेण निर्दिश्य तच्चेत्तदभिधीयते ।
ताद्रूप्येण तथाऽपि स्यात् सैव सव्यभिचारिता ॥

*एतच्चेति* उक्तानुक्तस्थलेषु सर्वत्रोक्तन्यायानुसन्धानार्थमुक्तन्यायं सङ्क्षिप्य श्लोकेन दर्शयति सङ्क्षेपविस्तराभ्यामुच्यमानस्य मन्दबुद्ध्यारोहक्षमत्वात् * त-

थाहीति *अतत्- अन्योन्याभावत्वानाक्रान्तं संसर्गाभावत्वाक्रान्तं च, तत्-अन्योन्याभावत्वाक्रान्तं न मन्यसे तावदिति निश्चयार्थः तथा तदपि अन्योन्याभावत्वाक्रान्तं, तदिति तदाक्रान्तं न मन्यसे तत्र हेतुमाह *सामानेति* यद्वा भिन्नार्थनिष्ठयोः सामानाधिकरण्यमुतैकार्थनिष्ठयोरिति विकल्प्यातिप्रसङ्गसामानाधिकरण्यलक्षणाभ्यां क्रमेण पराकरोतीति श्लोकार्थः। अतदस्तत्त्वं तदोऽपि तत्त्वं न मंस्यामहे किंतर्हि तदेव वस्तु देशाद्यवच्छिन्नरूपान्तरेण निर्दिश्य तभ्दवतीत्यभिधीयते ततो निमित्तभेदादर्थैक्याच्च सामानाधिकरण्यमित्यत आह *रूपेति*तत्-अन्योन्याभावत्वाक्रान्तं रूपान्तरेण-धर्मान्तरेण विशिष्टं प्रथमान्योन्याभावशब्देन निर्दिश्या-ऽनूद्य द्वितीयतच्छब्देन तदन्योन्याभावरूपमभिधीयते चेदिति शङ्कानुवादः। किं तद्रूपान्तरमभावमात्रवृत्ति, किं वा तद्विशिष्टवृत्ति किंवा वस्तुमात्रवृत्ति प्रथमे संसर्गाभावस्य तादात्म्याभावप्रसङ्गो द्वितीयेऽन्योऽन्याभावविशेषस्य संसर्गाभावत्वप्रसङ्गः अन्तिमे घटादावन्योन्याभावत्वप्रसङ्ग इत्यभिप्रेत्याह *ताद्रूप्येणेति*

अन्योन्याप्रतियोगिकः संसर्गनिषेधः संसर्गाभाव इति लक्षणस्यानिव्याप्तिमभिधायाधुनाऽव्याप्तिमभिधत्ते।

२४४ अव्याप्त्युद्भावनम्।

अपि च अन्योन्याभावस्य संसर्गाभावोऽप्येवं व्यच्छिन्नः स्यात् तस्याऽप्यन्योन्यप्रतियोगिकत्वात्। अथान्योन्याभाव-

स्य संसर्गाभावो नामाधिको नोपेयत एव यमादाय तथा स्यादिति चेन्न । एवं तर्ह्यन्योन्याभावस्यान्योन्याभावोऽपि नाधिकोऽभ्युपगन्तव्यः स्यादित्यन्योन्याप्रतियोगित्वेन व्यवच्छेदोऽपि संसर्गाभावस्य त्वदभिमतस्य कथं स्यात्, व्यवच्छेदस्य निषेधार्थत्वात् । अथ माभूदधिकोऽसौ, स्वरूपमेव तु तथेष्यत इति तदादायैव व्यवहार एष निर्दोष इति चेत् । तर्ह्यन्योन्याभावसंसर्गव्यतिरेकेऽपि तुल्यमेतत् ।

*अपि चेति* एवंलक्षणाङ्गीकारे वस्तुन्येकस्मिन्नन्योन्याभावो नास्तीत्येवं संसर्गाभावोऽपि त्वदुक्तलक्षणाविशेषणेन व्यवच्छिन्नः स्यादन्योन्यविशिष्टस्याभावस्य प्रतियोगित्वेनान्योन्यप्रतियोगिकत्वादित्यर्थः। अभावस्याभावान्तरानङ्गीकारान्नायं प्रसङ्ग इतिशङ्कते *अथेति* अन्योन्याभावस्य संसर्गाभावसदसत्वचिन्तायाः कः प्रसङ्ग इत्याह *यमिति* यथाऽन्योन्याभावस्य संसर्गाभावः स्वातिरिक्तो नास्ति तथाऽन्योन्याभावोऽपि तदतिरिक्तस्य न स्यादभावत्वाविशेषादेवं चान्योन्याप्रतियोगिक इति विशेषणेनान्योन्याभावाद्व्यवच्छेदोऽपि संसर्गाभावस्य न स्यादिति परिहरति *नेति* अन्योन्याभावव्यवच्छेदयोरन्यत्वात्कथमन्योन्याभावाभावेऽव्यवच्छेद इत्याशङ्क्याह *व्यवच्छेदेति* अन्योन्याभावव्यवच्छेदयोरेकत्वादन्यत्वेऽपि तयोरविनाभावादेकतराभावेऽन्यतराभाव इति भावः । यद्वस्तु तत्स्वव्यवहारे स्वाशक्य...रजातीयं नापेक्षत इति नियमादन्योन्याभावः स्वव्य-

वहारे ऽन्योन्याभावान्तरं नापेक्षत इति शङ्कते * अथेति * तर्हि घटादेरपि स्वातिरिक्तेतरेतराभावाभावेऽपि तद्व्यवहारः किं न स्यादित्यत आह *स्वरूपमिति* घटादेः प्रदीपापेक्षव्यवहारत्वेऽपि न प्रदीपस्य तथात्वमेवमभावातिरिक्तस्य तदपेक्षव्यवहारत्वेऽपि न तस्य तथात्वमिति भावः । फलितमाह * इतीति * एष व्यवहार इतरेतराभावेतरः संसर्गाभाव इति व्यवहार इत्यर्थः। अन्योन्याभावस्य यथा स्वरूपेणैवान्योन्याभावव्यवहारहेतुत्वमेवं संसर्गाभावव्यवहारहेतुत्वमिति तस्मिन्नेव संसर्गाभावव्यवहारहेतुस्वरूपेऽव्याप्तितादवस्थ्यमिति परिहरति * तर्हीति *

अन्योन्याप्रतियोगिकः संसर्गनिषेधः संसर्गाभावतया विवक्षित इति पूर्वोक्तलक्षणेऽव्याप्तिमभिधायेदानीमतिव्याप्तिमाह ।

२४५ अतिव्याप्त्युद्भावनम् ।

अपि च अन्योन्यप्रतियोगिको न भवत्यभावो यः संसर्गाभाव इति वदता त्वयाऽन्योन्यप्रतियोगिकेऽभावे निषिध्यमानेऽन्योन्यात्मकोऽसावभावोऽभ्युपगतः स्यात् द्वयोर्निषेधयोः सुन्दोपसुन्दतया ऽन्योन्यस्यैव स्थैर्यापत्तेः, तथा च सत्यन्योन्यस्मिन्निर्विशेषणे जगदेव प्रविष्टमिति संसर्गाभावत्वेन विवक्षितस्य जगदात्मतायां सिद्धान्त्यामन्योन्याभावात्मताऽपि स्यादिति व्यर्थो विशेष-

१ अन्योन्यस्यैवापत्तेरिति सो० पु० पा० ।

णप्रयासो हासायेति सविशेषणेऽप्यविशेषणत्वप्रसङ्ग इति महत् कौतुकम् ।

* अपि चेति * अन्योन्याप्रतियोगिकाभावत्वनिषेधमात्रेण कथमन्योन्यत्वं संसर्गाभावस्येत्यत आह * द्वयोरिति * सुन्दोपसुन्दतया परस्परविरोधितयाऽन्योन्यत्वमेव स्थिरीकृतं स्यात् । सुन्दोपसुन्दौ द्वावादिदैत्यराजौ नर्मदातीरे तपश्चेरतुस्तदुपघातार्थं जगत्स्रष्ट्रा काचिद्वराङ्गना प्रस्थापिता तां दृष्ट्वा कामसन्तप्तौ ममेयं ममेयमिति परस्परञ्जघ्नतुस्तद्व दित्यर्थः । द्वौ नञौ प्रकृतमर्थं गमयत इति न्यायेन संसर्गाभावस्यान्योन्यताऽस्तु प्रकृते किं स्यादित्यत आह * तथा च सतीति * अन्योन्याविशेषप्रतियोगिकाभावत्वं निषिध्यते, किं वाऽन्योन्यमात्रप्रतियोगिकाभावत्वं, आद्ये यस्यान्योन्यस्य प्रतियोगिकत्वमिष्टन्ततोऽन्योन्यान्तरप्रतियोगिकाभावत्वस्यानिषेधादतिव्याप्तिर्लक्षणस्य, द्वितीये जगन्मात्रमन्योन्यत्वेनोक्तं स्यात् अतश्च जगदात्मतायां सिध्यन्त्यामन्योन्याभावस्याऽपि जगन्मध्यप्रवेशात्तदात्मताऽपि सिध्येदित्यर्थः । अन्योन्याप्रतियोगिक इति विशेषणं न हातुं शक्यमन्योन्यापत्तेः नचो पादातुमव्यावर्तकत्वादिति कष्टां बत दशामाविष्ट इत्युपहसति * इति व्यर्थेति *

अन्योन्याभावो न भवति यो ऽभावः स संसर्गाभाव इति लक्षणे भावाभावयो रन्यतरनिषेधस्यान्यतरविधिपर्यवसायितया ऽन्योन्यत्वं संसर्गा-

भावस्य स्यादित्यर्थान्तरपत्तिरित्युक्तमयुक्तं स्वपक्षसाधनानुमानत्वे ऽपसिद्धान्तात्परपक्षेऽनिष्टप्रसङ्गरूपतर्कत्व आपाद्यापादकयो र्व्याप्त्यभावात्प्रशिथिलमूलत्वादिति चोदयति ।

२४६ अर्थान्तरापत्तिनिराकरणाशङ्का ।

ननु घटाभावो न भवति स्तम्भ इत्युक्ते किं स्तम्भो घटात्मा विहितो भवति, तत् कस्य हेतोः तदा हि तथा स्यात् यदि घटस्तदभावश्चेत्येव जगत्स्यात्, यदा तु स्तम्भादिरप्यपरा कोटिरस्ति तदा कथं तथा स्यादित्युक्तप्रसङ्गानवकाश इति ।

* नन्विति * स्तम्भस्य घटाभावत्वे निषिद्धेऽपि न घटात्मत्वं यथा, तथाऽन्योन्याभावत्वे निषिध्यमाने संसर्गाभावस्यान्योन्यत्त्वं न स्यादित्यर्थः। घटो घटाभावो न भवतीति घटस्य स्वाभावत्त्वनिषेधे घटात्मत्वमिव स्तम्भस्याऽपि घटाभावात्मत्वनिषेधे घटत्वमेव तत्राऽपि मन्तुमुचितमिति पृच्छति * तदिति * घटस्य तदभावत्वनिषेधेन घटात्मत्वबोधने मानान्तराविरोधादुपपन्नन्तत्र तथात्वं, इह पुनर्घटाभावत्वनिषेधेन तदात्मत्त्वविधौ प्रत्यक्षादिविरोधान्न घटात्मत्वं स्तम्भस्येति परिहरति पूर्ववादी * तदा हीति * प्रत्यक्षादिविरोध एव कस्मादित्याशङ्क्य घटतदभावव्यतिरेकेण स्तम्भादिकोट्यन्तरस्य प्रत्यक्षसिद्धत्वादित्याह * यदेति * सा च भेदप्रतीतिरबाधितानुभवत्वेन प्रमे-

वेत्यर्थः । * कथं तथा स्यादिति * स्तम्भो घटात्मा विहितः कथं स्यात् न कथं चिदित्यर्थः ।

असम्भवत्प्रकारान्तरयोः परस्परविरुद्धयो रन्यतरनिषेधस्यान्यतरविधिपर्यवसायित्वे व्याप्तेरसम्पन्नत्वान्न संसर्गाभावस्यान्योन्यत्वापादनतर्कस्य प्रशिथिलमूलत्वमिति परिहरति ।

२४७ तर्कस्य न प्रशिथिलमूलत्वमिति समाधानम् ।

मैवम् । यथा घटतदभावाभ्यामन्या वस्त्रादिकमप्यस्ति कोटिस्तथाऽन्योन्यतदभावाभ्यां नान्या कोटिः सम्भवति निर्विशेषणान्योन्यमध्ये जगत एव प्रवेशात् तदात्मनोऽपि निषिध्यमानत्वे तन्निषेधात्मके तदात्मनि जगत्प्रवेशात्, न हि घटः पटात्मेत्यनेन घटस्वरूपादन्यस्तदात्मा विहितः स्यात्, यदि तु तादात्म्यं नामाभेदाख्यो धर्मः कश्चिदिष्यते स घटपटाद्यधिकरणतया निषिध्यते तदा संसर्गाभाव एव स स्यात् । तस्मान्निर्विशेषणतादात्म्यान्तर्भूतं जगदिति कोट्यन्तराभाव इति ।

* मैवमिति * घटादिविशेषितान्योन्यप्रतियोगिकाभावव्यतिरिक्तोऽभावः संसर्गाभाव इत्युक्ते पटाद्यन्योन्याभावप्रसङ्गवारणायान्योन्यमात्रप्रतियोगिकाभावनिषेधो वाच्यः एवं च निर्विशेषणान्योन्यस्मिन् जगत्प्रवेशाज्जगत्तदभावव्यतिरेकेण कोट्यन्तरभूतानात्मपदार्थो न सम्भवतीति हेतुमाह * नि-

विशेषणेति * अन्योन्याभावान्योन्याभ्याभन्या कोटिर्न सम्भवतीत्युपपाद्य सम्प्रति संसर्गाभावस्यान्योन्याभावत्वनिषेधेऽन्योन्यत्वमेव परिशिष्यत इत्याह * तदिति * तज्जगदात्मा स्वरूपं यस्यान्योन्यस्य तत्तदात्मा तस्यापि निषिध्यमानत्वेऽन्योन्याभावपदेनान्योन्याभावे बोध्यमाने पुनरन्योन्याभावो न भवतीत्यत्र तस्यान्योन्यनिषेधस्यापि निषेध आत्मा स्वरूपं यस्यान्योन्यस्य तत्तन्निषेधात्मकं तस्मिंस्तन्निषेधात्मके तदात्मन्यन्योन्यस्वरूपे जगत्प्रवेशाज्जगदात्मत्वं संसर्गाभावस्य स्यादित्यर्थः । यद्वा तदात्मनोऽप्यन्योन्यात्मनो जगतो निषिध्यमानत्वे तन्निषेधात्मके तस्यान्योन्यात्मकजगतो निषेधरूपान्योन्याभावनिषेधात्मके तदात्मनि संसर्गाभावस्वरूपे जगत्प्रवेशात्संसर्गाभावस्य जगदात्मत्वमित्यर्थः । अन्योन्यस्य न जगत्स्वरूपत्वमपि तु तद्धर्मत्वं तेन संसर्गाभावस्यान्योन्याभावत्वे निषिध्यमानेऽपि जगद्धर्मतैव स्यान्न जगदात्मतेत्याशङ्क्याह * न हीति * घटः पृथिव्यात्मक इत्यत्र घटस्वरूपादन्यन्न तादात्म्यमवबोध्यत आत्मशब्दस्य स्वरूपवाचकत्वादेवं जगत्तादात्म्यमपि जगत्स्वरूपमिति तन्निषेधनिषेधात्मनः संसर्गाभावस्य जगद्रूपत्वमित्यर्थः । नेह भूतले घट इति घटस्य भूतलाधिकरणत्वनिषेधवदनयो र्घटपटयो स्तादात्म्यं नास्तीति घटाद्यधिकरणतयाऽभेदापरपर्यायस्तादात्म्यधर्मो निषिध्यते ततस्तन्निषेधनिषेधात्मनः संसर्गनिषेधस्य तादात्म्यस्वरूपत्वे सिद्ध्यत्यपि न विश्वात्मतेति शङ्कते * यदि त्विति *

तादात्म्यं यदि स्वरूपमेव स्यात्तदा घटपटयो स्तादात्म्यमिति षष्ठीनिर्देशो न स्यादिति तु शब्दार्थः । संसर्गप्रतियोगिकनिषेधत्वसंसर्गाभावलक्षणवत्तया संसर्गाभावत्वमेव स्यान्नान्योन्याभावत्त्वमिति दूषयति-* तदेति * अन्योन्याप्रतियोगिकनिषेधत्वादित्यर्थः । अन्योन्यान्योन्याभावाभ्यामन्या कोटिर्न सम्भवतीति यदुक्तं तदुपपादितमुपसंहरति * तस्मादिति *

घटाभावः स्तम्भो न भवतीत्युक्ते स्तम्भस्य न घटात्मत्त्वं कोट्यन्तरभावादित्युक्तमङ्गीकृत्यान्योन्याभावनिषेधे वैलक्षण्यमभाणि, सम्प्रति नेह घट इति घटनिषेधे तदभावत्वमिह घटो नास्तीति तन्निषेधनिषेधे घटभावश्चाऽभ्युपगच्छता स्तम्भस्य कुम्भाभावत्वनिषेधे कुम्भात्मत्वमभ्युपेयमिति प्रतिपादयन्नाह ।

२४८ वाद्युक्तदूषणस्य तत्पक्ष एव प्रसङ्गः ।

अपि च एवं तर्हि घटे निषिध्यमाने घटाभावो विधीयेत, घटाभावे च निषिध्यमाने घट इत्यपि न स्यात् तृतीयस्य विद्यमानत्वात् भवन्वा घटाभावः स्तम्भो न भवतीत्यत्रापि घटाभावत्वाविशेषाद्विशेषान्तरानिर्वचनाच्च घटः स्तम्भात्मत्येवोक्तं स्यादिति त्वत्प्रसङ्ग स्त्वयि निपतेत् । संसर्गान्योन्याभाववैचित्र्यमादाय हि स परिहार्य्यः स एव च नाद्यापि व्यवतिष्ठते ।

*अपि चेति* घटे निषिध्यमाने घटाभावो विधीयते घटाभावे निषिध्यमाने घटो विधीयत इत्यपि न स्या-

स्कोऽप्यन्तरभावादेवेति विपक्षेऽनिष्टप्रसङ्ग इति द्रष्टव्यम् । भूतले घटतदभावयोरन्यतरनिषेधेऽन्यतरस्याध्यक्षसिद्धत्वात् घटादिनिषेधे घटाभावादि किं न सिध्येदित्यत आह * भवन्वेति * घटादिनिषेधः घटाभावादिर्भवन्वा घटाभावःस्तंभो न भवतीत्यत्रापि घटाभावनिषेधे घट एव भवेदिति योजना। हेतुमाह * घटाभावेति * विमतो घटो भवितुमर्हति घटाभावनिषेधत्वात्सम्प्रतिपन्नवदितिप्रयोगः स्तम्भस्य घटाभावत्वनिषेधेन घटत्वविधि भूतले घटाभावनिषेधे घटविधिरिति व्यवस्थादर्शनात्तद्धेतुविशेष उन्नीयत इत्याशङ्क्याऽऽह * विशेषे इति * तद्विशेषान्तरमन्यगतं न व्यवस्थापकमसत्वादेव भावरूपं चेति भावाधिकरणत्वेन भावत्वमभावयो र्भवेदिति न्यायानलविप्लावितत्वादभावत्वातिरिक्तं विशेषान्तरं निर्वक्तुमशक्यमित्यर्थः। फलितमाह *घट इति* अन्योन्याभावनिषेधेऽन्योन्यात्मविधौ स्तम्भस्य घटाभावत्वनिषेधे घटात्मत्वं स्यादिति नस्त्वयाऽऽपादितः प्रसङ्गस्तवैवानर्थाय स्यादित्यर्थः। भूतले घटाभावो नास्तीति घटाभावस्य संसर्गो निषिध्यते तेन तत्र घटविधिः स्यात्स्तम्भः कुम्भाभावो न भवतीति स्तम्भस्य कुम्भाभावतादात्म्यनिषेधोऽतो न तत्र कुम्भात्मत्वविधिरित्याशङ्क्याह * संसर्गेति * स प्रसङ्गः परिहरणीय इति यावत् । भवतु को दोष इत्यत आह * स इति * अयमेव हि तयो र्भेदपरीक्षाकालस्तेन कथमसिद्धमसिद्धेन साध्यत इत्यर्थः ।

संसर्गान्योन्याभावौ विधर्माणौ विलक्षणप्रतीति-

गोचरत्वाद्घटपटवदित्यनुमानात्पूर्वनिरस्ताविशेषाद्वि-
शेषान्तरमनयोराश्रयणीयमित्याशङ्कयाऽऽह।

२४९ प्रतीतिबलाद्वैधर्म्यशङ्का निरासः।

अतएव प्रतीतिबलादन्यदेव वैधर्म्यमनयोरुपेयमित्यपि निरस्तम्। प्रतिषेधप्रतिषेध्यविरोधे हि प्रकारविशेषव्यवस्थानिरुक्त्यशक्तेरविशेषेणैकनिषेधेऽन्याविधिध्रौव्यं भवदन्योन्याभावनिषेधेऽप्यन्योन्यविधये स्यात्।

* अत इति * भेदासिद्धेरेव विलक्षणप्रतीतिविषयत्वासिद्धेरित्यर्थः। "परस्परविरोधे हि न प्रकारान्तरस्थिति" रिति न्यायेन संसर्गाभावस्यान्योन्याभावत्वनिषेधे ऽन्योन्यत्वमेव स्यादिति निगमयति * प्रतिषेधेति * प्रतिषेधोऽभावः प्रतिषेध्यं प्रतियोगि तयोर्विरोधे प्रकारान्तरस्य निर्वक्तुमशक्यत्वादविशेषेणान्योन्याभावनिषेधे एकतरनिषेधेऽन्यतराविधिध्रौव्यं ध्रुवभावो नियतत्वं भवदन्योन्याविधये स्यादित्यर्थः।

नाऽयमयं नेहाऽयमितिसंसर्गान्योन्याभावप्रतीतिव्यवहारौ विलक्षणौ प्रत्यक्षौ तयो गतिस्त्वयापि वक्तव्या तत्राऽप्युदीरितदोषपरम्परापत्तिरित्याशङ्कयाऽऽह।

२५० सिद्धान्ते दोषोद्धारः।

मम चानिर्वचनीयतैव प्रतीतिव्यवहारव्यवस्थापर्य्यनुयोगबाणवारणाय वज्रवारबाणायमाना विजयते। मम त्वेवं दर्शनं प्रतीतिसिद्धत्वादत्यन्तासद्विलक्षणम्भवदपि जगत्तथा सत्तोपगमेऽपि बाध्यमानत्वादनिर्वचनीयमिति।

*ममेति* देहात्मव्यवहारवदाबोधमविचारितरम-णीयमाः प्रतीतिव्यवहारयोरुपपत्तिरिति न स्वव्याघातकत्वाशङ्केति तात्पर्यम्।प्रतीतिव्यवहारव्यवस्था कथमिति चोद्यं-प्रतीतिव्यवहारव्यवस्थापर्यनुयोगः स एव बाणस्तद्वारणाय वज्रोपममभेद्यं वारबाणं कवचस्तद्दाचरतीति वारबाणायमाना ऽनिर्वचनीयतैव विजयत इति योजना। किमिदमनिर्वचनीयत्वं न तावन्निर्वचनानर्हत्वं मूकीभावप्रसङ्गात्, नाऽपि सद्वैलक्षण्यं असतोऽपि तथात्वापातात्, नचासद्वैलक्षण्यं सतोऽ निर्वचनीयत्वापातात्, नापि सदसद्वैलक्षण्यं सदसतोः प्रत्येकमनिर्वचनीयत्वापातात्, नच सद्विलक्षणत्वे सत्यसद्विलक्षणत्वं तस्य तथाभूतस्य क्वाप्यदर्शनात्प्रमाणाभावाचेत्याशङ्क्याह *मम हीति* ख्यातिविशेषविषयत्वे सति बाध्यत्वानुपपत्तिस्तथात्वसाधिका तथाहि खपुष्पसमत्वेऽपरोक्षत्वानुपपत्तिरात्मसमत्वे बाधानुपपत्तिः न चान्यत्र दृष्टमेवान्यत्राऽऽश्रयणीयं दर्शनाऽनवस्थापातादिति । उक्तं च—

"सत्त्वे न भ्रान्तिबाधौ स्तां नासत्त्वे ख्यातिबाधकौ ।
सदसद्भ्यामनिर्वाच्याऽविद्या वेद्यैः सहभ्रमा"इति।

प्रपञ्चानिर्वचनवादिना तन्मध्यपातिसंसर्गेतरेतराभावयोर्वैलक्षण्यं प्रतीताकारस्वीकृत्य तत्त्वांशखण्डने नाऽनुभवविरोधोऽपीत्याह ।

२५१ अनिर्वचनीयमतेऽनुभवविरोधाभावः ।

अतएव प्रतीयमानत्वाद्वैचित्र्यमनयोर्घुष्यमाणमतिदू-

रनिरस्तम्। उक्तप्रतियोग्यादिवैचित्र्यानुपपत्तितः प्रतीयमानस्यैव बाध्यताया एवं कथनात्।

तस्मात्—

अन्योन्याभावसंसर्गाभावभेदव्यवस्थितौ।
सत्यां स्यात्तद्व्यवस्थेति स्वाश्रयं कश्चिकित्सतु॥ ३१॥

* अत इति * अनयोरभावयोः प्रतीयमानत्वा-द्वैचित्र्यं घुष्यमाणं दूरनिरस्तमुक्तमित्यन्वयः। तत्र हेतुमाह * प्रतियोगीति * आदिपदेन लक्षणादिवैचित्र्यसङ्ग्रहः * प्रतीयमानस्यैवेति * उपाधिविशेषे प्रतिपत्तिमात्रं निषेधे प्रयोजकं न प्रमितिरित्युक्तम्। बाध्यताया एवेति प्रातीतिकरूपाङ्गीकारेण विरोधपरिहार ईरितः। यस्मात्संसर्गेतरेतराभावयोरसङ्कीर्णलक्षणासिद्धिः तस्मादित्युपसंहरति * तस्मादिति * संसर्गेतरेतराभाववैलक्षण्यं प्रतियोगिवैलक्षण्याद्वा संसर्गाभावान्योन्याभावरूपवैलक्षण्याद्वेति विकल्प्य क्रमेण दूषयति। अन्योन्याभावश्च संसर्गाभावश्चान्योन्याभावसंसर्गाभावौ तयोर्भेदस्तस्य व्यवस्थितिः सिद्धिस्तस्यां सत्यां तद्व्यवस्था स्यात्तयोः संसर्गान्योन्यरूपप्रतियोगिनोर्भेदः स्यात् अन्योन्याभावरूपत्वाद्भेदस्य अतश्चान्योन्याभावसंसर्गाभावयोर्भेदसिद्धावन्योन्याभावरूपभेदः प्रतियोगिनोः सिध्येत् सिद्धे च प्रतियोगिभेदे संसर्गान्योन्याभावभेदसिद्धि-

१ उक्तमिति सो० पु० पा०।
२ एवं कथनादिति सो० पु० पा०।

रिति परस्पराश्रयः, आत्माश्रयत्वं तु प्रतियोगिभेदस्यान्योन्याभावरूपत्वात्स्वासिद्धौ स्वसिद्धिरिति दर्शितम् । द्वितीयविकल्पपरिहारतयाऽयमेव श्लोको योज्यः तथाहि अन्योन्याभावसंसर्गाभावयोर्भेदव्यवस्थितौ सिद्धायामन्योन्याभावो यो न भवति निषेधः संसर्गाभाव इति भेदव्यवस्था सिध्यतीत्यात्माश्रयत्वं कः प्रतिविदधात्वित्यर्थः । यथासम्भवमात्माश्रयादीतिपुरेरितदोषविशेषपरतयाऽप्ययं ग्रन्थो योजनीयः। इदानीं प्रकारान्तरेणोक्तदोषपरिहारं शङ्कते ।

२५२ एवकारार्थानिरुक्तिः ।

[1]अभाव एव यत्रेति सावधारणं वक्तव्यमिति चेन्न । एवकारेण किमधिकमभिधीयते । भावो निषिध्यत इति चेन्न । तस्याभावपदेनैव लब्धत्वात्, भावनिषेधोऽभाव इत्यनर्थान्तरमिदम् । भावसामानाधिकरण्यनिषेध एवकारार्थ इति चेन्न । उक्तेनैव गतार्थत्वात् । अन्योन्याभावस्य च तस्य स्मृतावपि सम्भवात् न हि भावसामानाधिकरण्यं स्मृतिः स्मृतौ च भावमभावं चैकत्र मन्यमानेन तस्याप्येष्टव्यत्वात् तयोः परस्परप्रातिक्षेपरूपत्वात् न हि रूपरसयोरकत्राभावेन तत्सामानाधिकरण्याभावः स्यात् ।

* अभाव इति* स्मृतित्वाभावो यस्मिन् ज्ञाने

१ ननु स्मृतित्वस्याभाव इति पु० पा० ।

साऽनुभूतिरित्युक्ते स्मृतित्वान्योन्याभावमादाय स्मृतावतिव्याप्तिरुच्यते स्मृतित्वात्यन्ताभावाधिकरणं ज्ञानमनुभूतिरिति तु लक्षणेन स्मृतावतिव्याप्तिस्तस्यास्मृतित्वसमवायित्वेन तदत्यन्ताभावानधिकरणत्वादिति शङ्कार्थः। अत्यर्थवाचकैवकारार्थानिरूपणान्मैवमिति परिहरति * नेति *। भावनिषेधोऽभिधीयते स्वाभावस्य स्वभावेन सहासामानाधिकरण्यमुतार्थान्तरमिति विकल्पाभिप्रायः। भावनिषेध एवकारार्थ इति प्रथमकल्पमवलम्बते * भाव इति * भावनिषेधवाचकैवकारः किमभावशब्दानतिरिक्तार्थः किम्वाऽतिरिक्तार्थः, आद्ये सहप्रयोगानुपपत्तिरेवकारार्थस्याभावपदेनोक्तत्वाद्धस्तशब्देनैव विवक्षितार्थलाभे करशब्दाप्रयोगवदिति मन्वानः परिहरति * नेति * एवकाराप्रयोगे स्मृतित्वसंसर्गाभावमात्रं स्मृतावप्यस्तीति पूर्वोक्तप्रसङ्गः सुस्थ इति भावः। अस्तु तर्ह्यनयोः शब्दयोरतिरिक्तार्थत्वमित्यत आह * अभावेति * अनर्थान्तरमर्थान्तरं न भवति भूतले घटो नेति घटनिषेधस्य तत्र घटाभाव इतिशब्दस्य च लोके पर्यायत्वावगमादेकार्थत्वानुभवाच्च नातिरिक्तार्थत्वं तेनैवकारो व्यर्थ इत्यर्थः। स्मृतित्वस्याभाव एवेत्यस्यायमर्थः स्मृतित्वेनासमानाश्रयस्तदभावो यत्र ज्ञाने साऽनुभूतिरिति। नच स्मृतावतिव्याप्तिः स्मृतित्वान्योन्याभावस्य स्मृतित्वेन समानाधिकृतत्वात्तत्रेति द्वितीयं कल्पं शङ्कते * भावेति * स्मृतित्वाभावस्य स्मृतित्वभावेन सामानाधिकरण्यनिषेध एवकारार्थ इत्यर्थः।

व्यतिरिक्ते स्मृतित्वे स्मृतित्वतदभावयोः सामानाधिकरण्यादर्शनादनुभूतावपि न तत्सामानाधिकरण्यमित्याशङ्क्य वायौ रूपरसयोः सामानाधिकरण्याभावेऽपि पृथिव्यां तदभाववदन्यत्र भावाभावसामानाधिकरण्याभावेऽप्यनुभूतौ भवेदतश्च लक्षणासिद्धिरित्याह * न हीति *

भावाभावयोः परस्परप्रतिक्षेपरूपत्वात्तावेकत्राऽभ्युपगच्छता सामानाधिकरण्याभावोऽभ्युपगन्तव्य इत्युक्तमयुक्तमन्योन्याभावतत्प्रतियोगिनोरेकधर्मिनिष्ठतया रूपरसवदपरस्परप्रतिक्षेपरूपत्वादिति शङ्कते।

२५३ अस्परपरप्रतिक्षेपरूपत्वशङ्कानिरासः।

समाविष्टयोर्भावाभावयोः परस्परप्रतिक्षेपात्मकतैव न सिद्धेति चेत्तर्हि तथाविधयोर्भावतदभावपदसङ्केतनं न रूपरसयोरिति रुचिस्ते प्रमाणम् । रूपरसयोः परस्परप्रतिक्षेपानात्मकत्वात्तदभावे तयोः सामानाधिकरण्याभाव आस्ताम्, अत्र तु नैवमिति चेन्न । तथात्वस्याऽसामानाधिकरण्यप्रयोजकत्वे तद्व्यतिरेकः सामानाधिकरण्यप्रयोजकः स्यादिति रूपरसादीनामसामानाधिकरण्यापत्तिः भावाभावयोरसामानाधिकरण्यानुपपत्तिश्च ।

*समेति* यद्वा न परस्परप्रतिक्षेपरूपत्वे भावाभावत्वं प्रयोजकं किं तु संसर्गाभावतत्प्रतियोगित्वं इत्थंभावस्यान्योन्याभावतत्प्रतियोगिनोरेकधर्मिसमावेशासिद्धमतः परस्परप्रतिक्षेपरूपत्वादिति प्रा-

शुक्तो हेतुरसिद्ध इति शङ्कते *समेति* विमतौ न भावाभावशब्दवाच्यौ परस्परप्रतिक्षेपानात्मकत्वाद्रूपरसवदतो भावाभावशब्दवाच्यत्वमिच्छताऽन्योन्याभावतत्प्रतियोगिनोरन्योन्यप्रतिक्षेपात्मकत्वमेष्टव्यमिति परिहरति *तर्हीति* तथाविधयोरन्योन्याभावतत्प्रतियोगिनोरन्योन्यप्रतिक्षेपानात्मनोर्भावाभावपदसङ्केतनं रूपरसयोस्तथाविधयोस्तन्नास्तीत्यत्र ते रुचिःस्वपक्षराग एव प्रमाणं नान्यदस्तीत्यर्थः ।

भावाभावपदवाच्यत्वात्स्मृतित्वतदन्योन्याभावयोरन्योन्यप्रतिक्षेपात्मकत्वमेष्टव्यं चेत्तर्हि तयोरसामानाधिकरण्यं न स्यादन्योन्यप्रतिक्षेपानात्मकत्वलक्षणासामानाधिकरण्यप्रयोजकाभावादिति शङ्कते *रूपरसयोरिति* तदभावे–रूपरसयोरेकत्र वाय्वादावभावे तयोः सामानाधिकरण्याभावो भवतु परस्परप्रतिक्षेपानात्मकत्वस्यासामानाधिकरण्यप्रयोजकस्य सत्वादित्यर्थः। व्यापकाभावाद्व्याप्यासामानाधिकरण्याभावः प्रकृते निश्चीयत इत्याह *अत्रेति* अत्र–स्मृतौ स्मृतित्वतदन्योन्याभावयोरसामानाधिकरण्यं न सम्भवति परस्परप्रतिक्षेपात्मकत्वेनासामानाधिकरण्यप्रयोजकस्याभावादिति नानुभूतित्वसम्भव इति प्रसङ्गस्स्यात् स्मृतित्वतदन्योन्याभावयोरनुभूतावसामानाधिकरण्यमास्तामन्योन्यप्रतिक्षेपानात्मकत्वात्स्मृतौ तु स्मृतित्वतदन्योन्याभावयोः परस्परप्रतिक्षेपानात्मकत्वं नास्ति तेन परस्परप्रतिक्षेपानात्मकत्वेन सामानाधिकरण्यमत्र भविष्यतीति भावः । अङ्कुर-

कत्वस्य नित्यत्वप्रयोजकत्ववत्परस्परप्रतिक्षेपानात्मकत्वस्यासामानाधिकरण्यप्रयोजकत्वे परस्परप्रतिक्षेपात्मकत्वं सामानाधिकरण्यप्रयोजकं स्यादिति तद्विरहिणां रूपादीनां घटादावैकाधिकरण्यं न स्यादिति परिहरति * नेति * तथात्वस्य—परस्परप्रतिक्षेपानात्मकत्वस्येत्यर्थः । तद्व्यतिरेकस्तदभावः—परस्परप्रतिक्षेपात्मकत्वमित्यर्थः । परस्परप्रतिक्षेपात्मकत्वलक्षणसामानाधिकरण्यप्रयोजकस्य रूपादावव्याप्तिमभिधायेदानीमतिव्याप्तिमाह * भावाभावयोरिति *

न भावनिषेध एवकारार्थो, नाप्यसामानाधिकरण्यमपि तु सामानाधिकरण्यासहकृतं तदभाव इति शङ्कते ।

२५४ सामानाधिकरण्यनिषेधस्यैवकारार्थत्वाभावः ।

असामानाधिकरण्यमत्र यत्रेति विवक्षितमिति चेन्न। एवकारार्थदौस्थ्यतादवस्थ्यात् । एतेन विलक्षण एवायमभावो भावसहासनानुपवेशी य एवकारसमभिव्याहारेणोच्यत इति निरस्तम् । तस्यापि वैलक्षण्यं प्रतियोग्याश्रयनिषेधतासाम्येऽपि सामानाधिकरण्यविरहादुन्नेयं तच्च तुल्यमभावान्तरेण । सामानाधिकरण्याभावप्रत्ययेनेति चेन्न । प्रत्ययविशेषकस्यार्थस्य स्मृतावपि भावात् । अन्योन्याभावव्यतिरिक्तः स्मृतित्वाभाव इत्युक्तौ च स्मृतिव्यतिरिक्तपक्षोक्त एव दोषः तदाऽऽस्तां विस्तरः ।

* असामानाधिकरण्यमिति * उदीरितरीत्या स्मृतौ सामानाधिकरण्याभावे सामानाधिकरण्यमप्यस्ति अनुभूतौ पुनरसामानाधिकरण्यमेवेति ना*-व्याप्त्यसम्भवावित्यर्थः । अत्राप्येवकारेण किमुच्यते सामानाधिकरण्यनिषेधश्चेत्तस्यासामानाधिकरण्यपदेनैव लब्धत्वादेवकारो व्यर्थः अन्यश्चार्थो निरूपयितुमशक्य इति परिहरति * नेति * उक्तन्यायमन्यत्रातिदिशति *एतेनेति* विलक्षण एवान्योन्याभावव्यतिरिक्त एवायमभावो भावसद्दासनानुपवेशी–भावसामानाधिकरण्याविरोधी य एवकारसमभिव्याहारेण समाम्नायते–कथ्यत इतीदमपि मतं निरस्तमित्यर्थः । तथा हि-तस्याभावस्यान्योन्याभावाद्वैलक्षण्यं धर्मिवैलक्षण्या,दुत प्रतियोगिवैलक्षण्या,दाहो स्वित्स्वरूपवैलक्षण्या,दुत सामानाधिकरण्याभावा,दुत तत्प्रत्यया,दिति विकल्प्य विकल्पत्रयं पराकरोति * तस्यापीति * प्रतियोगी चाश्रयो धर्मी च निषेधश्च प्रतियोग्याश्रयधर्मिनिषेधाः तद्भावस्तत्ता तस्या अभावस्यान्योन्याभावेन समत्वेऽपि तस्य ततो वैलक्षण्यं सामानाधिकरण्यविरहाद्वुभेयमिति चतुर्थः कल्पः परिशिष्यत इत्यर्थः । अस्तु तर्हि को दोष इत्यत आह * तच्चेति * अन्योन्याभावेऽपि परस्परप्रतिक्षेपात्मकतया सामानाधिकरण्याभावो दर्शित इत्यभावान्तरस्यान्योन्याभावेन सह तुल्यं तदित्यर्थः । सामानाधिकरण्याभावप्रत्ययादभावान्तरस्यान्योन्या-

* नास्त्यतिव्याप्त्यसमिति सां० पु० पा० ।

भावाद्वैलक्षण्यमुन्नेयमिति चरमपक्षमुत्थापयति * स-मेति * सामानाधिकरण्याभावस्य कर्मतया प्र-त्ययव्यावर्त्तकस्यान्योन्याभावेऽपि भावात्तत्प्रत्ययस्य तत्रापि प्रसङ्गेन न तेनापि वैलक्षण्यं सम्भवतीति परि-हरति * नेति * अन्योन्याभावव्यतिरिक्तस्मृतित्वा-भावो यत्र ज्ञाने साऽनुभूतिरिति लक्ष्यतेऽतो नाति-व्याप्त्यादयो दोषा इत्याशङ्क्याह * अन्योन्येति * य-त्किञ्चिदन्योन्याभावव्यतिरिक्ताभाववत्त्वं, किंवा स-र्वान्योन्याभावव्यतिरिक्ताभाववत्वं, आद्ये अन्यो-न्याभावविशेषवत्यां स्मृतावतिव्याप्तिः अन्त्ये ल-क्षणासिद्धिः असर्वज्ञस्य सकलस्मृतित्वान्योन्याभाव-ज्ञानासम्भवेन तद्व्यतिरेकासिद्धेरिति स्मृतिव्यतिरेकप-क्षोक्तदोष इत्यर्थः । उपसंहरति * तदिति *

स्मृतित्वव्यतिरेको हि स्मृतित्वाभाववत्त्वं वा, स्मृतित्वप्रतियोगिकमाश्रयस्य स्वरूपं, तज्ज्ञानं वेति, त्रिधा विकल्प्य प्रथमकल्पमपाकृत्य द्वितीयतृतीया-वपि प्राभाकराभीष्टौ पराकरोति ।

२५५ द्वितीय तृतीयविकल्पनिरासः ।

नापि स्मतित्वप्रतियोगिकमाश्रयस्य स्वरूपं तद्धीर्वे-ति पक्षः, अन्योन्याभावेऽपि भवतामभावव्यवस्थायास्ता-दृशत्वेनोक्तप्रसङ्गस्य समानत्वात् ।

* नापीति * हेत्वाकाङ्क्षायामाह *अन्योन्येति * दृश्ये प्रतियोगिनि धर्मिमात्रमभाव इति प्राभाकरै-

१ प्रसङ्गसमानेति सो० पु० पा० ।

रङ्गीकृत्य संसर्गाभावव्यवहारहेतुत्वं धर्मिस्वरूपस्य यथेष्यते तथा तादात्म्यप्रतियोगिकाभावव्यवहारहेतुत्वमपि धर्मिस्वरूपस्यैष्टव्यमभावत्वाविशेषादतश्चान्योन्याभावमादाय स्मृतेरनुभूतित्वप्रसङ्गतादवस्थ्यमित्यर्थः।

यद्यपि संसर्गेतरेतराभावयोर्धर्मिस्वरूपानतिरेकान्न स्वाभाविकवैचित्र्यं तथाऽपि प्रतियोगिनोः संसर्गित्वतदात्मत्वयोर्वैचित्र्यात्तद्द्वारकं वैचित्र्यमनयोरपि तेन संसर्गाभावविवक्षायां नान्योन्याभावमादाय स्मृतावतिव्याप्तिरिति प्रकारान्तरेण प्रत्यवतिष्ठते।

२५६ प्रकारान्तरेणसंसर्गाभावनिर्वचननिरासः।

अथान्यदेव किञ्चित्संसर्गाभावनिर्वचनं क्रियते तथा हि—स्मृतित्वस्य यत्र संसर्गितया निषेधस्तत्र तदभावस्य संसर्गाभावत्वं, यत्र तु तदात्मत्वेन तत्र तदभावस्य न संसर्गाभावता, किन्त्वन्योन्याभावत्वमेव, स च इह न विवक्षितः पूर्वकएव तु संसर्गाभावो विवक्षित इति। नैतद्विचारसहम्। संसर्गितया निषेध इति येयं तृतीया सा लक्षणे वा? सहयोगे वा? कारकभेदे वा करणादौ?। नाद्यः संसर्गितया लक्षितस्यैवान्योन्याभावमादाय प्रसङ्गात्। नापि द्वितीयः। तत्सहितस्यैवान्योन्यनिषेधस्य प्रत्याख्यातुमशक्यत्वात्। तृतीयस्तु न सम्भवति अत्यन्तनिषेधस्यानुत्पत्तिधर्मकत्वात्। तस्य च प्रकृतोदाहरणत्वात्।

*अथेति* अनाश्रयत्वे सति व्यावर्तकः प्रतियोगी हेतुस्मृतित्वेनाभावयोर्निरूपणात् प्रतियोगिवैचित्र्यमेव कुत इत्यत आह *तथाहीति* स्मृतित्वस्य यत्र निषेधस्तत्रतदभावस्य संसर्गाभावत्वमित्युक्तेऽन्योन्याभावेऽतिव्याप्तिस्तन्निरासाय संसर्गितयेत्याह । अन्योन्याभावमविज्ञाय संसर्गाभावस्य ततो व्यावृत्तिरेव दुर्घटेत्यतस्तल्लक्षणमाह *यत्रेति* यत्र—यस्मिन् धर्मिणि स्मृतित्वस्य तादात्म्यतया धर्मिस्वरूपत्वेन निषेध इत्यनुषङ्गः । अन्योन्याभावस्य संसर्गाभावत्वनिषेधेन सुन्दोपसुन्दतया संसृष्टमेव किं विधित्सितमित्यत आह *किं त्विति* संसर्गेतरेतराभावयोः प्रतियोगिद्वारकवैचित्र्यमस्तु प्रस्तुते किं स्यादित्यत आह *स इति* कस्तर्हि अभावोऽनुभूतितया विवक्षित इति तत्राह *पूर्वेति* क्तप्रत्ययो ऽनन्यार्थः । स्मृतित्वस्य संसर्गितया निषेधपूर्वकः संसर्गाभाव एव नान्योन्याभावः स इह—लक्षणवाक्येऽभिधित्सितोऽनुभूतिः स्मृतित्वसंसर्गवती ज्ञानत्वात्सम्प्रतिपन्नवादित्याशङ्क्य गृहीतग्रहणत्वमुपाधिरिति तु शब्दार्थः । गृहीतग्रहणत्वं धारावाहिकविज्ञानेऽतिव्यापकमिति परिहरति *नेति* विचारासहत्वं विकल्पपुरःसरमप्युपपादयति *संसर्गेति* लक्षण इति इत्थंभावलक्षणे । छात्रेणोपाध्यायं पश्यतीति वत् । सहयोग इति सहोपलम्भनियमे नीलतद्धियोरितिवत् *कारणभेदे करणादाविति* कारणविशेषयोः कर्तृकरणयोरिति यावत् । देवदत्तेन पत्न्यां नगरं गतामिति वत्तृतीयाया लक्षणार्थत्वं

दूषयति * नेति * संसर्गितया लक्षणेन लक्षितं स्मृतित्वं स्मृतिर्न भवतीति योऽन्योन्याभावस्तमादाय स्मृतावतिव्याप्तितावदवस्थ्यादित्यर्थः। सहयोगार्थेयं तृतीयेति द्वितीयं दूषयति *नापीति* संसर्गित्वसहितं स्मृतित्वं स्मृतेर्व्यतिरिक्तमित्यभ्युपगच्छताऽन्योन्याभावस्य स्मृतौ प्रत्याख्यातुमशक्यतया सैवातिव्याप्तिरित्यर्थः। स्मृतित्वस्य यत्र ज्ञाने संसर्गितया निषेधः सा ऽनुभूतिरिति लक्षणे तृतीयाया लक्षणार्थत्वे सहयोगार्थत्वे च स्मृतावतिव्याप्तिमभिधाय करणाद्यर्थत्वे लक्षणस्यासम्भवमाह * तृतीय इति * संसर्गितयेति तृतीयायाः करणार्थत्वे कर्त्रर्थत्वे वा निषेधस्य तत्कार्यत्वं वक्तव्यं तत्र स्मृतित्वप्रागभावः, प्रध्वंसो, ऽत्यन्ताभावो वा, निषेधशब्दार्थ इति वक्तव्यं न तावत्प्रागभावात्यन्ताभावयोः संसर्गितया जन्यत्वं तयोरनादित्वादित्याह * अत्यन्तेति * ध्वंसस्य कार्यत्वात्स्मृतित्वप्रतियोगिकः संसर्गितया यत्र ज्ञाने जन्यते साऽनुभूतिरिति लक्षणमस्तु तर्हीत्यत आह * तस्येति * स्थितस्य प्रध्वंसादनुभूतौ कदा चित्स्मृतित्वसंसर्गप्रसङ्गादत्यन्ताभावः प्रकृतोदाहरणं अतश्च लक्षणासम्भव इत्यर्थः। उदाह्रियते इत्युदाहरणं लक्षणमनुभूतिरिति यावत्।

शिष्यं पुत्रेण पश्यतीतिवत्संसर्गितयेति तृतीयेत्थम्भूतलक्षणा तेन स्मृतित्वस्य संसर्गितया प्रकारेण यत्र निषेधः साऽनुभूतिरिति प्रकारान्तरेण लक्षणमाशङ्कते।

२५७ तृतीयाया इत्थम्भावार्थकत्वेऽपि दोषः ।

प्रकारवाचिनीयं तृतीयेति चेन्न । प्रकारशब्दार्थस्याधिकस्य निर्वक्तव्यत्वापातात् । प्रकारः प्रकार एवेति चेन्न । अविदितलक्षयस्य लक्षणमनभिधायेतरव्यवच्छेदेन तस्य दर्शयितुमशक्यत्वात् अन्यथा सर्वत्र प्रष्टारं प्रति लक्षणानभिधानापातात् । को घट इत्यादिपृष्टे घट एव घट इत्यद्यैवोत्तरं सङ्गच्छेत । प्रकार एवेति पक्षो नोपपन्नः सदोषत्वादिति वक्ता को दोष इत्यनुयुक्तो दोष एव दोष इत्यभिधायैव च निर्वृत्तो भवेदिति ।

* प्रकारेति * संसर्गितयेति प्रातिपदिकोपरि येयं तृतीया तस्याः प्रातिपदिकार्थानतिरिक्तार्थत्वे पौनरुक्त्यमतिरिक्तार्थत्वेऽर्थः स इति निदर्शनीयः स्यादिति परिहरति * नेति * द्विविधं त्रिविधमित्यादिलोकव्यवहारे प्रकारपदार्थः प्रसिद्ध एव तेन प्रकारपदस्य प्रकार एवेति निर्वचनं स्यादिति शङ्कते * प्रकार इति * सन्दिग्धः पदार्थो लक्षणतः सिध्यतीत्यभ्युपगमात्सन्दिग्धप्रकारपदार्थमविदितप्रकारपदार्थं च प्रति तत्तल्लक्षणमभिधानीयं अन्यथा सजातीयविजातीयपदार्थव्यावृत्ततया नासौ दर्शयितुं शक्य इति परिहरति

१ यद्यपि प्रकारवाचिनीयं तृतीयेति न युक्तं सदोषत्वादित्युक्ते को दोष इति पृच्छतो दोषविशेषस्वरूपाभिधानमावश्यकं नह्यत्रापि लक्षणप्रश्नो येन प्रकारलक्षणप्रश्नसमानन्यायता स्यात् यद्यत्र विशिष्य दोषविशेषाभिधानं न भवेत्तदा सदोषत्वादिति हेतुरेव नोपपादितः स्यात् तथाऽपि दोषलक्षणप्रष्टारं प्रतीदमुक्तमिति भावः ।

* नेति * अविदितं लक्ष्यं येन सोऽविदितलक्ष्यस्तस्येति यावत् । लक्ष्यपदेनैव लक्ष्यज्ञानसिद्धौ लक्षणाभिधानं व्यर्थमित्याशङ्क्याह * अन्यथेति * सर्वत्र लक्षणाभिधानमापादयितुमुन्नीतरीतिमन्यत्र प्रसारयति * क- इति * को घट इति प्रश्नस्य घट एवोत्तरं अन्यथाऽऽम्रान्पृष्टः कोविदारानाचष्ट इतिवत् प्रश्नाननुगुणप्रसङ्गादित्याशङ्क्याह *प्रकार इति * निर्वृत्ती भवेदिति पाठान्तरम् । निर्वृत्तीभवेत् चरितार्थः स्यादित्यर्थः ।

स्मृतिलक्षणरहितमनुभूतिरिति तृतीयकल्पे स्मृतित्वव्यतिरिक्तज्ञानपक्षोक्तं दूषणमतिदिशति ।

२५८ तृतीयकल्पे दूषणातिदेशः स्मृतिलक्षणानिरुक्तिश्च ।

स्मृतित्ववत् स्मृतेर्लक्षणान्तरेण राहित्यमनुभूतित्वमिति प्रत्युक्तं वेदितव्यम् । गृहीतस्य हि ज्ञानं स्मृतिरिति च स्मृतिलक्षणे धारावाहिकज्ञानेऽतिप्रसक्तिः । सापेक्षज्ञानं स्मृतिः, सापेक्षता च स्वविषयनियमे समानविषयज्ञानापेक्षतेति चेन्न । प्रत्यभिज्ञाया *भागस्य स्मृतित्वापत्तेः । एवमस्त्विति चेन्न । तर्हि प्रत्यभिज्ञायां स्मृत्यनुभवभागयोर्भिन्नविषयत्वव्यवस्थितौ तदभेदः केन गृह्येतेति[1] । संस्कारमात्रजं ज्ञानं स्मृतिरित्यपि न, सामग्रीतः सर्वसम्भवेन लक्षणस्यासम्भवात् । असाधारणतद्धेतुकधीत्वमिति चेन्न । आत्मप्रत्यभिज्ञानेऽप्यापत्तेः

१ पूर्वदोष आवर्तते इत्यधिकं का० मु० पु० ।

* एतत्त भागस्येति सो० पु० पा० ।

आत्ममनोयोगस्यासाधारण्यात् । कार्य्यैक्यानवधारणे च कारणत्वानवधारणात् । तदैक्ये च तदेव लक्षणं स्यात् । येन ज्ञानेनार्थो ज्ञाततात्मकः क्रियते तदनुभवो, येन तु ज्ञानमेव[2] तथा तत्स्मरणमिति चेन्न । ज्ञातो ज्ञास्यते चेत्यनुमानादाव्याप्तेः ।

* स्मृतित्वेति * स्मृतित्वसमवायः स्मृतिलक्षणमेकं तावत्, तदपेक्षया लक्षणान्तरं गृहीतग्रहणमित्यादि, तद्रहितज्ञानमनुभूतिरिति लक्षणे रहितशब्देनाभावमात्रविवक्षायामन्योन्याभावमादाय, संसर्गाभावविवक्षायां तदन्योन्याभावमादाय स्मृतावुक्तातिव्याप्तेः परिहर्त्तुमशक्यत्वादित्यर्थः ।

स्मृतिलक्षणान्तरमभ्युपगम्य तद्रहितत्वं नानुभूतिलक्षणं यत्किञ्चित्स्मृतिलक्षणरहितत्वस्य स्मृत्यन्तरे भावात्सकलस्मृतिलक्षणरहितत्वस्यास्मादृशो दुरवगम्यतया लक्षणासिद्धिरित्युक्तं इदानीं स्मृतिलक्षणानिरूपणाच्च तद्रहितत्वं नानुभूतित्वमित्याह *गृहीतेति* ज्ञानं स्मृतिरित्युक्ते प्रमाणज्ञानेऽतिप्रसक्तिस्तन्निवारणायाऽऽह * गृहीतेति * तावत्युक्ते स्मर्य्यमाणेऽतिव्याप्तिस्तन्निवृत्त्यर्थमुक्तं ज्ञानमिति । तत् दूषयति * नेति * धारावाहिकबुद्धीनां गृहीतग्रहणरूपत्वात्स्मृतित्वप्रसक्तिरिति स्मृतिलक्षणस्य तत्राऽतिव्याप्तिरित्यर्थः । गृहीतग्रहणत्वं यद्यपि न स्मृतिलक्षणं तथाऽपि सापेक्षज्ञानत्वं स्मृतित्वमिति लक्षणान्तरमनुवदति * से-

२ ज्ञा.तमेव ज्ञाततात्मकत्वेन क्रियते तत्स्मरणमिति का.मु.पु.पा. ।

ति * ज्ञानं स्मृतिरित्युक्ते प्रमाणज्ञानेऽतिव्याप्तिस्तन्नि-
वृत्त्यर्थं सापेक्षेति विशेषणम् । तथोक्ते कारणसापेक्षघ-
टादावतिव्याप्तिपरिहारार्थं ज्ञानेति विशेषणम् । कुम्भो-
ऽयमिति ज्ञानं चक्षुःसन्निकर्षापेक्षं भवतीति तत्रातिः-
व्याप्तिं परिहरति * सापेक्षतेति * ज्ञानापेक्ष-
तेत्युक्ते शब्दज्ञानापेक्षं शाब्दज्ञानं स्मृतिः स्यात् त-
दर्थमुक्तं समानविषयेति । तावत्युक्ते प्रमाणान्त-
रसापेक्षपौरुषेयवाक्यजन्यज्ञानेऽतिव्याप्तिरिति तद-
र्थमुक्तं विषयनियम इति । अन्यविषयनियमे तथात्वं
नास्तीत्यत आह * स्वेति * अत्रैकश्चकारः समुच्चया-
र्थो द्वितीयस्तु स्मृतेः पूर्वानुभवसंस्कारजनिततया
पूर्वानुभूतविषयत्वं पौरुषेयवाक्यजन्यस्य स्वप्रमात्वे
ज्ञानान्तरापेक्षा न विषयनियमे तस्य शब्द-
सामर्थ्यनिबन्धनत्वादित्यव्याप्तिरतिव्याप्तिर्वा नास्ती-
त्येतदर्थः । सापेक्षज्ञानं स्मृतिरिति लक्षणे स्वविषय-
नियमे समानविषयज्ञानापेक्षता च सापेक्षतेति स-
म्बन्धः । सोऽयं घट इति प्रत्यभिज्ञाने स इत्यंशस्य पू-
र्वानुभूतविषयत्वं पूर्वानुभवसंस्कारजनिततया भ-
वतीति तस्य स्मृतित्वप्रसङ्ग इति लक्षणमतिव्याप्त्या
दूषयति * नेति * प्रत्यभिज्ञानस्य स्मृत्यनुभवज्ञान-
द्वयात्मकत्वान्न तत्रातिप्रसक्तिरिति शङ्कते *एवमिति*
प्रत्यभिज्ञानभागयोरन्योन्याघ्रातविषयत्वं, व्यवस्थित-
विषयत्वं, वा आद्ये स इत्यंशस्यानुभवत्वमयमित्यंशस्य
च स्मृतित्वं द्वितीये तत्तेदन्तावच्छिन्नाभेदस्ताभ्यां न सि-
ध्येदन्योन्यानाघ्रातविषयत्वान्नच साधकान्तरमस्तीति

परिहरति * नेति *

शालिकनाथोक्तं स्मृतिलक्षणमाह * संस्कारेति * ज्ञानं स्मृतिरित्युक्ते प्रमाणेऽतिव्याप्तिनिरासाय संस्कारजमिति। तावत्युक्ते प्रत्यभिज्ञायां प्रसक्तिवारणाय मात्रग्रहणम्। तावति च भ्रमसंस्कारजनितभयकम्पादिनिरासाय ज्ञानमित्युक्तम्। दूषयति * इत्यपि नेति * संस्कारमात्रजमिति मात्रग्रहणेन संस्कारातिरिक्तकारणमात्रनिषेध, उतासाधारणकारणनिषेध, इति विकल्प्याद्ये ऽसम्भवो लक्षणस्येत्याह * सामग्रीत इति *

"न किंचिदेकमेकस्मात्सामग्र्याः सर्वसम्भव" इति न्यायादित्यर्थः। द्वितीयकल्पमाशङ्कते * असाधारणेति * स चासौ हेतुश्चेति तद्धेतुरसाधारणश्चासौ तद्धेतुश्चेति तथोक्तः स यस्या धियः साऽसाधारणतद्धेतुधीस्तद्भावस्तत्त्वं ततस्तत्स्मृतित्वमित्यर्थः। एतच्चातिव्यापकमिति दूषयति * नेति * सोऽहमित्यात्मप्रत्यभिज्ञानस्य संस्कारातिरिक्तमसाधारणकारणं नास्तीति स्मृतित्वप्रसङ्ग इत्यर्थः। अस्त्येव संस्कारव्यतिरिक्त आत्ममनःसंयोगः कारणमित्त्याशङ्क्याऽऽह * आत्मेति * आत्ममनःसंयोगस्य सकलज्ञानसाधारणत्वमिति यावत्। अङ्कुरत्वाक्रान्तानां बीजकार्यत्वमितिवदेतद्धर्मवतां संस्कारकार्यत्वमिति स्मृतिगतानुगतरूपमवाधारि त्वया न वा, यदि न तत्राह * कार्येति * स्मृतिव्यक्तिसङ्ग्राहकानुस्यूतरूपपरिज्ञाने संस्कारकारणत्वमधिगन्तुमशक्यमिति लक्षणासिद्धि-

रित्यर्थः । यदि निरधारि तत्राह *तदिति* अव्यवहितप्रतिपत्तिकत्वात् तदेव लक्षणमस्तु व्यर्थमिदमित्यर्थः ।

एवं प्राभाकरीयस्मृतिलक्षणं खण्डयित्वा भट्टपादीयं लक्षणमुत्थापयति * येनेति * आत्मपरिणामरूपं ज्ञानमर्थनिष्ठां ज्ञाततां प्राकट्यापरपर्यायां करोतीति कौमारिलं दर्शनं तत्र च धर्मधर्मिणोस्तादात्म्यादर्थो ज्ञाततात्मकः क्रियते इत्युक्तम् । येन अर्थनिष्ठज्ञातता क्रियते तदनुभव इति यावत् । स्मरणव्यावृत्त्यर्थमर्थेति विशेषणम् । ज्ञानस्य स्मृत्यनुभवद्वैराश्यादनुभवलक्षणमुक्त्वा सम्प्रति स्मृतिलक्षणमाह * येनेति * अनुभवभिन्नविषयं स्मरणमित्यङ्गीकारात् ज्ञाननिष्ठा ज्ञातता येन क्रियते तत्स्मरणमित्यर्थः । एवं सत्यनुमानार्थापत्त्योरपि स्मृतित्वप्रसङ्ग इति दूषयति *न ज्ञात इति* विमतो ज्ञातो व्यवह्रियमाणत्वात्सम्प्रतिपन्नवत् ज्ञास्यते व्यवहरिष्यमाणत्वादित्यनुमाने व्यवहारानुपपत्तिरूपार्थापत्तौ च ज्ञाननिष्ठज्ञातताजनकत्वं स्मृतिलक्षणमस्ति न च स्मृतित्वमिति लक्षणमतिव्यापकमित्यर्थः ।

यदि कश्चिदुक्तदोषजातपरिहाराय लक्षणान्तरं कुर्यात्तत्रापि विषयद्वारा स्मृतिर्लक्ष्यते, कारणभेदाद्वा, किं वा विलक्षणकार्यजनकतयेति, तद्विभिन्नजातिसमवायितया, सर्वथाऽप्यनुपपत्तिरिति निगमनच्छलेन दर्शयति ।

२५९ स्मृतिलक्षणानुपपत्त्युपसंहारः ।

ततश्च विषयतः स्मृतिविवेचनमन्ततो वाक्येनाप्यनुभाव्यत्वात् कार्यकारणाभ्यां चानुगतरूपस्य प्राग-

सिद्धेर्जातितश्च सङ्करप्रसङ्गादशक्यमिति ।

*ततश्चेति* प्रागुक्तहेतुव्रातपरामर्शस्तत इति। प्रमाणाभिमतधारावाहिकप्रत्यये गृहीतगोचरतया स्मृतिविषयसाम्यं यतस्ततोऽनुभवात्स्मृतेर्विवेचनं विषयतोऽशक्यमिति परस्तात्सङ्गतिः । किंचैतद्गोचरज्ञानं स्मृतिरिति यत्तल्लक्षणप्रतिपादकं वाक्यं तत्स्मर्यमाणमगोचरीकृत्य लक्षणं न प्रतिपादयितुमीष्टे तेन तज्जन्यज्ञानस्यास्मृतित्वेऽपि तल्लक्षणवत्त्वादतिव्याप्तिरित्याह *वाक्येति* ननु वाक्यजन्यज्ञानं लक्षणं गोचरयति न स्मार्तमर्थमित्यत आह *अन्तत इति* लक्षणविशेषणतयाऽपि तद्गोचर एव इत्यभिप्रायः। नापि द्वितीयतृतीयावित्याह * कार्येति * कार्यकारणाभ्यां च स्मृतिविवेचनमशक्यं, कुत इत्यत आह *अनुगतेति* बीजत्वाक्रान्तमङ्कुरत्वाक्रान्तं प्रति कारणमितिवदेतदालिङ्गितमेतदालिङ्गितज्ञानं प्रति कारणमिति कार्यकारणभावोऽनुगतरूपोपाधावनुगन्तव्यः ततश्च लक्षणात्प्रागनुगतरूपसिद्धौ तदेव व्यावर्तकतया लक्षणमस्त्वव्यवहितप्रतिपत्तिकत्वात्तदसिद्धौ लक्षणस्यासिद्धिरित्यर्थः । स्मृतित्वजातियोगि स्मरणमिति चरमोऽपि न घटत इत्याह * जातीति * त्वग्भिज्ञायां स्मृतित्वानुभूतित्वयोः साङ्कर्यप्रसङ्गात्तदभाव इत्यर्थः ।

एवं स्मृतिलक्षणानिरूपणात्तद्रहितज्ञानत्वमनुभूतित्वमिति तार्तीयः पन्था असाधीयानिति संसाध्याधुना यदविदूरमाकालनियतोत्पत्त्यसाधारणबुद्धित्व-

मिति चरमोऽपि न चातुरीं प्राश्नुतीत्याह ।

२६० चतुर्थविकल्पनिरासः ।

नापि चतुर्थः यतः कार्य्यगतवैलक्षण्यानवगमे क्व कारणता क्वासाधारण्यं वा ज्ञेयमिति ।

* नापीति * अनुभवाख्यकार्यानुगतरूपं कारणावगमात्प्रागवगतमनवगतं वा, यदि न, तदा कारणत्वमेव दुरवधारणमिति लक्षणासिद्धिरवगमे तस्य न्यूनवृत्तित्वे तदधीनज्ञानलक्षणाव्याप्तिरधिकवृत्तित्वे ऽतिव्याप्तिः समवृत्तित्वे तदेव लक्षणमस्तु व्यर्थमितरदित्याह * यत इति * यद्वा तदनुगतरूपमुपसङ्ग्राहकरूपान्तरोपाधौ ज्ञेयं चेदनवस्था, कथितलक्षणोपाधाववसेयत्वे लक्षणसिद्धावनुगतरूपसिद्धिस्तत्सिद्धौ च लक्षणासिद्धिरिति परस्पराश्रयान्नैकमपि सिद्ध्यतीत्याह *यत इति*

तत्त्वपदार्थमनुभूतिपदार्थं तयोश्चालक्ष्यव्यवच्छेदकत्वं निरस्येदानीं मिलितमप्येतल्लक्षणमसमर्थं विजातीयव्यवच्छेदकत्वेऽपि सजातीयाऽप्रमाख्यानुभवाऽव्यवच्छेदकत्वादिति दर्शयति ।

२६१ मिलितलक्षणे प्रातिभज्ञाने दूषणोपन्यासः ।

न केवलं प्रत्येकं पदार्थस्य तद्व्यवच्छेदकत्वस्य चानुपपत्तिर्मिलितेऽप्यस्मिन् लक्षणे दूषणमुच्यते, तथा हि—तत्त्वानुभूतिः प्रमेत्यनेन काकतालीयमपि यथार्थं ज्ञानं व्याप्यते । तद्यथा—पाणौ पञ्च वराटकान् पिधाय कश्चित्

पृच्छति "कति वराटका" इति, पृष्टश्चाजाकृपाणीयन्यायेन ब्रवीति 'पञ्चेति' ततश्च पञ्चेति ज्ञानमस्ति वक्तुः श्रोतुश्च, दृश्यन्ते तावदेवम्विधान्युदाहरणानि । तच्च ज्ञानं न तत्त्वपदेन व्यवच्छेत्तुं शक्यम् । वस्तुतस्तस्य पञ्चसङ्ख्यावच्छिन्नत्वेनातथाभूतत्वाभावात् । नाप्यनुभवशब्दव्यवच्छेद्यमननुभूतचरत्वेन स्मरणलक्षणोपेक्षणात् । नच वक्तुः संशय एव निश्चायकाभावादेकतरकोटिव्यवहारस्तु कृष्यादिप्रवृत्तिवदिति युक्तं, तत्राप्याहाररूपैककोटिनिश्चयास्थानादन्यथा संशयस्य कोटिद्वयनिश्चयसमुच्चयतापत्तेः । नच प्रमैव तदित्युरीकरणीयं, मध्येऽध्यक्षादि दुरन्तर्भावत्वात् ।

* न केवलमिति * तत्त्वानुभूतिरूपसंशयादेरदर्शनात्कथं लक्षणमव्यवच्छेदकमित्यत आह * तथा हीति* परिणततालफलपतनकाले काकोऽपि तद्वन्तं वृक्षमाश्रयते तत्र काकयोगस्य तालफलपतनेऽन्वयव्यतिरेकविरहाद्याहच्छिकः काकयोग इति तथा दैवादागतविज्ञानं याहच्छिकं काकतालीयसमं ज्ञानं काकतालीयज्ञानमुच्यत इति द्रष्टव्यम् । याहच्छिकं यथार्थज्ञानमेव नास्तीत्याशङ्क्य तदुदाहरणेनोपपादयति *तदिति* वराटकाः कपर्दकाः । यत्र कण्डूयनार्थे स्तम्भादौ शिथिलबन्धखड्गे छागी ग्रीवां प्रसारयति यदृच्छया च ग्रीवा छिद्यते तथाभूतो ऽजाकृपाणीयन्यायः का-

कतालीयन्यायसमः। किं सङ्ख्यावच्छिन्ना अमी कपर्द्दिका इति पृष्टे पञ्चसङ्ख्यावच्छिन्ना इति प्रतिवाक्यं यद्यप्यस्ति तथाऽपि तत्तादृगर्थज्ञानजनकमेव न भवतीत्यत आह *तत इति* यद्यपि वक्तारं प्रति तद्बोधकं तथाऽपि वाक्यप्रयोगमूलतया तथात्वज्ञानमस्तीत्यर्थः। श्रोतारं प्रति बोधकमेवैतदित्याह *श्रोतुश्चेति* न चैवंविधोदाहरणसद्भावेऽपि प्रतिवक्तव्यं बहुलमुपलम्भादित्याह *दृश्यन्त इति* धूमत्वपरिगृहीतधूलीपटलादिस्थितवन्ह्यनुमापकमित्यर्थः।

तद्यादृच्छिकज्ञानं प्रमा स्यादप्रमा वा, यद्यप्रमा तदा तत्त्वपदेन व्यवच्छिद्यतेऽनुभपदेन वा, न तावदाद्य इत्याह * तच्चेति * कुत इत्यत आह *वस्तुत इति* ज्ञानविषयस्य वस्तुतस्तथात्वेन तद्गोचरविज्ञानस्य न तत्त्वपदव्यवच्छेद्यत्वमित्यर्थः। अनुभवपदव्यवच्छेद्यत्वमिति द्वितीयोऽपि नानवद्य इत्याह *नापीति*स्मरणमात्रमनुभवपदव्यवच्छेद्यं न चैतत्स्मरणमविदितवेदनत्वादित्यर्थः। पञ्चसङ्ख्यावच्छिन्नत्वज्ञानं यद्वक्तृसमवेतं तत्रातिव्याप्तिरुत श्रोतृज्ञाने, न तावत् श्रोतृज्ञाने,तस्यानाप्तवाक्यजन्यत्वेनातत्त्वविषयत्वा,न्नापि वक्तृज्ञाने, तस्य चक्षुःसम्प्रयोगादिप्रमाणाजन्यत्वेन संशयरूपतया तत्त्वपदव्यवच्छेद्यत्वादित्याशङ्क्याह *न चेति* पञ्चैवेति निश्चयाभावे वक्तुः कथं तथात्वेनाभिवदनव्यवहार इत्याह * एकतरेति * यथा दृष्टफले कृष्यादौ फलावश्यकत्वानिश्चयेऽपि सम्भावनामात्रात्प्रवृत्तिस्तथा पञ्चत्वनिश्चयाभावेऽपि तत्सम्भावनया पञ्चेति व्यवहारो वक्तुरित्यर्थः। कुत इत्यत आ-

ह * तत्रेति * आहरणमाहार उत्प्रेक्षा आहार-श्चासावेकनरकोटिनिश्चयश्चेति विग्रहः। प्रवृत्तेः स्ववि-षयनिश्चयजन्यत्वनियमात्तस्य निष्पत्तिफलावश्यकत्व-सन्देहेऽप्याहार्यफलावश्यम्भावनिर्णयजन्यैव तत्राऽपि प्रवृत्तिरित्यसिद्धो दृष्टान्त इत्यर्थः। व्यतिरेकमुखेनैतदुप-पादयति *अन्यथेति* वक्तुः पञ्चसङ्ख्यावच्छिन्नत्व-विज्ञानं कोटिद्वयावलम्बित्वेन संशयश्चेत्तदा प्रवृत्तेः स्व-विषयनिश्चयपुरःसरत्वव्याप्तेरस्खलनात्तदभावे व्यव-हार एव नोपपद्येत अतश्च तद्व्यवहारमूलतया पञ्चसङ्-ख्यावच्छिन्नत्वकोटौ निश्चय एव स्यात् एवं चान्यकोटा-वपि अविशेषात्तेन पञ्चैव नैवेति विरुद्धकोटिद्वयसमुच्च-यो ऽविरुद्ध आपद्यते तथा कृष्यादावपीत्यर्थः। न या-दृच्छिकविज्ञानेऽतिव्याप्तिस्तस्यापि प्रमारूपतया लक्ष्यै-कदेशत्वादिति प्रथमकल्पमाशङ्क्याह *न चेति* प्रमा-णकारणाजन्यत्वादिति हेतुमाह *मध्य इति* अध्यक्षा-देर्मध्यं मध्येऽध्यक्षादि, "पारे मध्ये षष्ठ्या वे"तिस्मरणात् अङ्गुलिपिहितत्वादनिन्द्रियसम्प्रयुक्तत्वान्नाध्यक्षं,तद-विनाभूतलिङ्गाग्रहणान्नानुमानं, पञ्च वराटका इति श-ब्दादर्शनान्नागमः, असादृश्यविषयत्वान्नोपमानं, कर-तले कपर्दकपञ्चकव्यतिरेकेणानुपपत्तिव्यतिरेकान्नार्था-पत्तिः, भावविषयत्वान्नाभावो मानमपीत्यर्थः।

अव्यभिचारिकारणजन्यत्वे सति तत्त्वानुभूतिः प्रमेति लक्षणं विशेषणीयं अनेवंरूपत्वाद्यादृच्छिक-विज्ञाने नातिव्याप्तिरिति शङ्कते।

२६२ विशेषणदाने तत्त्वपदवैयर्थ्यापत्तिः।

अव्यभिचारकारणजत्वे सतीति विशेषणीयमिति चेन्न । तत्त्वपदवैयर्थ्यापातात् । काकतालीयसंवादमपि ज्ञानं न व्यभिचारि साधारणकारणसामग्रीजन्यमास्थातुमीशिषे व्यभिचारिणोऽपि कारणाद्विशेषाद्यथार्थत्वप्रसङ्गात् । न-ह्यहेतुकमेवास्य यथार्थत्त्वं नियामकाभावेनातिप्रसङ्गा-पातात् । अवश्यमस्याव्यभिचारित्वे अव्यभिचारि नि-यतमेव कारणं वक्तव्यम् । किन्तदिति चेत् स्वात्मनैवात्र प्रश्ने दीयतामुत्तरम्भवता, येन नियतेषु प्माराशिषु[2] चे-दं ज्ञानमन्तर्भाव्यं, प्रमासामान्यलक्षणेन वा व्यव-च्छेत्तव्यम् ।

* अव्यभिचारीति * प्रतिक्षिपति * नेति * अ-व्यभिचारिलिङ्गेन्द्रियादिकरणकानुभवस्यातत्त्वविषय-स्याभावात्तत्वपदं व्यर्थं स्यात् । न च दोषोपेतेन्द्रियादि-जन्यक्लृप्तकारणजं, प्रमाकरणस्यैव तथात्वेन विवक्षि-तत्वादिति भावः ।

काकतालीयविज्ञानस्याव्यभिचारिकारणत्वा-भावमभ्युपगम्य विशेषणान्तरवैयर्थ्यमुक्तं इदानीम-व्यभिचारिकारणजन्यत्वमप्यस्तीत्यसमर्थविशेषणमि-दं लक्षणमिति परिशेषत उपपादयति * काकता-लीयेति * पश्चेतिज्ञानं किं व्यभिचारिकारणज-न्य, मुताकारणजन्य, माहोस्विदव्यभिचारिकारणजन्य-

१ व्यभिचारिकारणेति का० मु० पु० पा० ।
२ राशिष्वेवेदमिति का० मु० पा० ।

मिति वक्तव्यं गत्यन्तराभावात्तत्र न प्रथमो व्यभिचारिभिः- शुक्तिरजतप्रत्ययादिभिः सह साधारणी या कारणसामग्री-तज्जन्यमास्थातुंनेशिषे-न शक्तो भवसीत्यर्थः । हेतुमाह * व्यभिचारिणोऽपीति* व्यभिचारिकारणजमपि याद्दच्छिकज्ञानं काकतालीयसम्वादं काकतालीये याद्दच्छिकेऽर्थे मानान्तरसंवादो यस्य तत्ताद्दग्यथार्थं चेद्व्यभिचारिणो रजतादिप्रत्ययस्याऽपि यथार्थत्वं स्यात्कारणाविशेषादित्यर्थः । अहेतुकमेव काकतालीयज्ञानमिति द्वितीयमाशङ्क्य निषेधति * नहीति * ज्ञानस्वरूपं नाहेतुकं भावकार्यस्य सहेतुकत्वनियमात्, नापि यथार्थत्वं अस्य निर्हेतुकं तथासति नियामकाभावेन भ्रान्त्यादावपि यथार्थत्वापातात्प्रमायामपि कारणसम्बन्धनिरपेक्षत्वेनायथार्थत्वप्रसङ्गाच्चेत्याशयः । तस्माद्व्यभिचारिकारणजन्यमिति तृतीयः कल्पः परिशिष्यत इत्याह * अवश्यमिति * विमतमव्यभिचारिकारणजन्यं व्यभिचारिसाधारणकारणाजन्यानीश्वरज्ञानत्वात्सम्प्रतिपन्नवदित्यर्थः । अव्यभिचारीत्यस्य व्याख्या नियतमेवेति । एवमव्यभिचारिकारणे सामान्यावगते विशेषपरिज्ञानाय पृच्छति *किमिति * सामान्यं विशेषमपेक्षते विशेषश्च न सम्भवति मध्येऽध्यक्षादि दुरन्तभावस्यानिरुक्तत्वादित्यर्थः। न ममात्र किञ्चिद्वक्तव्यमस्ति अनिर्वक्तव्यवादित्वान्नैयायिकम्मन्येन त्वयैवोत्तरं देयमित्याह *त्वेति*स्वपक्षसिद्धिं परपक्षप्रतिक्षेपं वा ऽभिलषता त्वयाऽपि निरूपणीयमेव प्रमाणं सर्वविधिनिषेधयोः प्रमाणाधी-

नत्वात्किमिदमवोचः स्वात्मनैवोत्तरं दीयतामिति तत्राह * येनेति * पराभिमतप्रमाणबलेन परपक्षप्रतिक्षेपोपपत्तेः न मया किञ्चिन्निरूपणीयं भवतैव प्रमाणसामान्यं लक्षयता प्रमात्त्वमभ्युपगतं चेत्परिगणितप्रमाणराशिष्वन्तर्भावनीयं अन्यथा प्रमातिरेकापाता,दप्रमात्त्वं चेत्प्रमाणलक्षणेन व्यावर्तनीयमन्यथाऽतिव्याप्तेरिति भावः।

एवंविधानि बहून्युदाहरणानि सन्तीति यदुक्तं तदिदानीमुदाहरति।

२६३ उदाहरणप्रदर्शनम्।

एवं लिङ्गाभासादिभ्योऽपि जातं लिङ्गिज्ञानं दैवगत्या स्थितलिङ्गलिङ्गिनि लिङ्गिमत्येव वा यत्स्यात्तद्यद्यपि लिङ्गाभासे न प्रमा, न वा तद्वति लिङ्गिस्वरूपे, तथाऽपि विशिष्टं तथाविधं गोचरयन्त्यास्तस्या बुद्धेर्लिङ्गान्तरवति केवले वा लिङ्गिनि वह्न्यादावप्यंशे विषये प्रामाण्यस्वीकारेणोक्तदोषापरिहारादिति। आभासकरणजत्वात्तद्विषयस्य वस्तुभूताल्लिङ्ग्यादेरन्यत्त्वमेवेति चेन्न। विशेषस्यान्यत्त्वेऽपि तज्जातीयमात्रवृत्तावभासांशे दोषापरिहारात्। सामान्यसम्बन्धकोटिनिविष्टत्वात् विशेषस्य, तस्य च तत्रानवस्थितस्यैव स्फुरणान्नैष दोषइति चेन्न। विशेषाप्रतिभासे सामान्यतस्तन्मात्रवृत्ताप्रतिभासस्याप्यभ्युपेयत्त्वात् देवदत्तयज्ञदत्तसम्बन्धि-

तासंशयेऽपि पुरुषसम्बन्धितानिश्चयवत्सम्बन्धिविशेषस्य निर्लुठितविशेषरूपतया च प्रवेशे व्याप्त्यादेरननुगमप्रसङ्गात् । सामान्यानुमानाभासे च संवादिनि विशेषान्यतावत्ताकल्पनानवकाशात् । सामान्यसमवाययोरप्यन्ययोरेव प्रतिभासे अन्यथाख्यातिं विहायासत्ख्यातिप्रवेशापातात् । तत्रस्थधर्मान्तरस्य जात्या तादात्म्यारोपस्तत्रेति चेन्न । तथाऽपि धर्मिणि जातौ च प्रमात्त्वतादवस्थ्यात् संसर्गारोपानिमित्ताच्च तादात्म्यारोपानुपपत्तेः परार्थानुमानाभासे हि प्रतिपादितपदार्थसंसर्गारोपकारणसम्भवात्तथापि तत्र तादात्म्यारोपकल्पने च तथाभ्रमानियमस्य निष्प्रमाणकत्वात् ।

*एवमिति* दैवगत्याऽनलवति शैले बाष्पधूमेन सम्यक्धूमपरिगृहीतेनात्र कृशानुरस्तीति यत्र मतिरुत्पद्यते सा तावन्न स्मृतिरननुभूतगोचरत्वा,न्नापि प्रमा ऽऽभासकरणजन्यत्वात्, न च तत्त्वपदव्यवच्छेद्यता स्थितवस्तुगोचरत्वात्तेन तत्त्वानुभूतिरिति लक्षणमतिव्याप्तमित्यर्थः। लिङ्गाभासादीत्यादिशब्देनार्थापत्त्याभासादयो गृह्यन्ते। धूमवत्त्वादग्निमानिति धूमविशिष्टवन्हिमद्गिरिगोचरं तद्भवति न च तस्य तत्त्वविषयत्वं तत्र धूमाभावादेव तद्विशिष्टवह्न्यभावादित्याशङ्क्याह * स्थितेति * स्थिते लिङ्गलिङ्गिनी यस्मिंस्तत्स्थितलिङ्गलिङ्गि तस्मिन् गिर्यादाविति यावत्।

सति धूमे वाष्पं दृष्ट्वा धूमवानिति यत् ज्ञानं जायते तत्राऽप्यतिव्याप्तिरित्याह * लिङ्गमिति * लिङ्गलिङ्गिनोरप्रतिभासमानयोरनुमानाविषयत्वात् न लिङ्गे तद्विशिष्टलिङ्गिस्वरूपे वा तत्र ज्ञानं न प्रमाणमित्याशङ्क्याह * तदिति * तर्ह्यप्रमाणमेव तदित्यत आह *तथाऽपीति* विशिष्टं तथाविधमिति * लिङ्गाविशिष्टं वन्हिप्रकारं गोचरयन्त्या बुद्धेर्दैवगत्या स्थिनालिङ्गलिङ्गिविषयत्वात्परमार्थलिङ्गविशिष्टे केवले वा व्यापके प्रामाण्यस्वीकारात्तत्त्वानुभूतित्वस्वीकारेणातिव्याप्तेरपरिहारादिति यावत् आभासलिङ्गजन्यज्ञानं परमार्थस्थितवस्तुनो ऽन्यविषयमाभासकारणजन्यत्वात्. क्लृप्तकारणाजन्यत्वाद्वा प्रत्यक्षादिभ्रमव,द्यद्वा ऽऽभासजन्यज्ञानविषयः परमार्थतन्निष्ठवन्हेरन्यः आभासज्ञानविषयत्वात्प्रत्यक्षभ्रान्तिगोचरवन्हिवदित्यतत्त्वानुभूतित्वासिद्धेर्नातिव्याप्तिरिति शङ्कते * आभासेति * परिहरति * नेति * वन्हौ वन्हिमानित्याकारप्रतीतेरन्यथाविषयत्वे सम्यक्धूमजन्यज्ञानस्यापि तथात्वं स्यात्, भवतु तथाऽपि सा वन्हिव्यक्तिरन्येत्युच्यते, किं वा वन्हित्वजातिरपि, न चरमः तस्या एकत्वेनान्यत्वासम्भवाद्व्यक्तेरन्यत्वेऽपि तज्जातीयमात्रांशे तत्त्वानुभूतित्वेनातिव्याप्तेरित्यर्थः ।

"निर्विशेषं न सामान्यं भवेच्छशविषाणव"दिति न्यायेन सामान्यस्य विशेषपरतन्त्रतया प्रत्येतव्यत्वात्तस्य च सामान्यसंसर्गिणो विशेषस्य तत्रासत्वान्न तत्त्वानुभूतित्वमिति नातिव्याप्ति-

रिति शङ्कते * सामान्येति * सामान्यसंसर्गितया विशेषस्फुरणे कुतो ऽतत्त्वानुभूतित्वमित्यत आह * तस्येति * तत्रानवस्थितस्य—गिरावसन इति यावत्। सम्बन्धस्य द्वे कोट्यौ तत्रैककोटौ सामान्यं निविष्टं द्वितीयकोटौ विशेष इत्यर्थः। आभासलिङ्गदर्शने विशेषप्रतिभासोऽस्ति न वा, न चेदाभासजन्यज्ञानाविषयस्य स्थितलिङ्गादेरन्यत्वमिति स्ववचनविरोधो,ऽस्ति चेत् द्रव्यविषयस्य सामान्यविशेषवत्तया प्रतिभासनियमाद्विशेषाभावेनातत्त्वानुभूतित्वे सामान्यभावेन तत्त्वानुभूतित्वादतिव्याप्तिः किं न स्यादिति दूषयति *नेति* सामान्यत इति* परमार्थत्वापरमार्थत्वविशेषमपहायेति यावत् *तन्मात्रवत्ताप्रतिभासस्येति* अग्निजातिसंसर्गितया प्रतिभासस्येत्यर्थः। विशेषाऽप्रतिभासे तत्परतन्त्रसामान्यप्रतिभासः कथमित्याशङ्क्य दृष्टान्तेनैतत्सम्भावयति *देवदत्तेति* पथि शालिसम्पन्नक्षेत्रं पश्यतस्तस्य देवदत्तयज्ञदत्तादिपुरुषविशेषसंसर्गित्वानिश्चयेऽपि पुरुषमात्रसम्बन्धित्वनिश्चयो यथा तत्त्वानुभूति,स्तथा व्यापकविशेषाऽप्रतिभासेऽपि तन्मात्रवत्ताप्रतिभासस्तत्त्वानुभूतिरित्यर्थः। किं च व्याप्यसामान्यस्य व्यापकसामान्येन व्याप्तिर्गृहीता, किं वा तद्विशेषस्य तद्विशेषेण, आद्ये धूमत्वपरिगृहीतधूलीपटलादग्निमात्रप्रतिभासः स्यादिति तन्मात्रे तत्त्वानुभूतित्वमिति प्रथमविकल्पदूषणं च शब्देनाभिधाय द्वितीयविकल्पं प्रत्याह * सम्बन्धीति * व्याप्यव्यापकौ सम्बन्धिनौ तद्विशेषस्येत्यर्थः *निर्लु-

ठितविशेषरूपतयेति * विमर्दिनसामान्याभाधारण-रूपतयेति यावत्। सहानसनिष्ठव्याप्तस्य तन्निष्ठव्यापकेन व्याप्तिग्रहणाविषयतया प्रवेशो पर्वतादावभावस्तन्निष्ठयोर्व्याप्त्याधारतया प्रवेशो दृष्टान्ताननुगम इत्यर्थः। तत्त्वानुभूतिरिति लक्षणस्य लिङ्गाभासज्ञाने ऽतिव्याप्तिमुदाहरणान्तरेणोपपादयति * सामान्येति * यदा गोव्यक्तिमेव पक्षीकृत्यायं गौर्विषाणित्वात् गवान्तरवदिति गोव्यक्तौ गोत्वं व्यभिचारिलिङ्गेनानुमीयते तदा तज्ज्ञानविषयस्य गोत्वसमवायस्य तत्रस्थगोत्वसमवायादन्यत्वकल्पना न युक्ता गोत्वस्य तत्समवायस्य चैकत्वादतश्च तत्त्वानुभूतित्वमस्ति, नास्ति च प्रमात्वं व्यभिचारिकारणजन्यत्वादित्यतिव्याप्तिरित्यर्थः।

आभासजन्यत्वेन प्रामाण्ये स्थिते सामान्यानुमानस्य परमार्थतन्निष्ठसामान्यसमवायाभ्यामन्य एव विषयः सामान्याभासः समवायाभासो वेत्याशङ्क्याऽऽह * सामान्येति * सामान्यसमवाययोरेकत्वेनान्ययोरन्यत्रासम्भवात्तयोरिह प्रतीतिश्चेदन्यत्र सतोऽन्यत्र ख्यातिरन्यथा ख्यातिः स्वाभ्युपगमभङ्गः पराभ्युपगतानिष्टाभ्युपगम इति दोषद्वयमापद्यत इत्यर्थः।

व्यभिचारिलिङ्गजन्यगोत्वविषयानुमानस्य न गोत्वमात्रं तत्समवायो विषयोऽपि तु गोत्वस्य व्यक्त्याकारतादात्म्यं विषयस्तेन न तत्त्वविषयत्वं तस्य सम्भवति असत एव तादात्म्यस्य तत्र भासनात्, नाप्यसत्ख्यातिप्रवेशस्तस्यान्यत्र सत्त्वादिति शङ्कते * तत्रेति * गोव्यक्तौ गोत्वं द्रव्यत्वं स-

त्वमित्याद्या जातयः सन्ति तत्र सास्नादिमदाकारो गोत्वव्यञ्जको गुणवदाकारो द्रव्यत्वस्येत्याकारभेदाः सन्ति त एव तत्रत्या धर्म्मास्तज्जातीनां धारणात्तथा च स्वव्यञ्जकाकारगोत्वस्य तादात्म्यं प्रतीयते न च तदस्ति जातिव्यञ्जकयोः समवायवत्तया भिन्नत्वाभ्युपगमादित्यर्थः । तत्र – गवीति यावत् । तादात्म्यारोपमङ्गीकृत्यापि दूषयति * नेति * यत्र तादात्म्यारोपो गिरिशिखरविपरिवर्त्तितर्वोस्तत्र तादात्म्यभ्रमस्तस्मिन्नो च तरू तद्वदिहापि तादात्म्यारोपे गोत्वव्यञ्जकधर्मिणो गोत्वस्य च सत्त्वं स्वीकरणीयमतश्च तस्मिंस्तद्ज्ञानं तत्त्वानुभूति,रिति लक्षणमतिव्यापकमित्यर्थः । अपिशब्दद्योतितामरुचिमाह * संसर्गेति * नायमारोपस्तादात्म्यगोचरः संसर्गारोपनिमित्तजन्यत्वात्प्रतिवादिप्रयुक्तप्रयोगाभासजन्यभ्रमवदित्यर्थः।संसर्गारोपनिमित्तजन्यत्वहेतोरसिद्धिमाशङ्क्य परिहरति * परेति * पदानां परस्परसंसर्गयोग्यत्वायोग्यत्वयोरभावात्संसर्गायोग्यतद्योग्यपदार्थप्रतिपादनद्वारकत्वात्तयोस्तथा च परार्थानुमाने पञ्चावयववाक्ये संसर्गायोग्यपदार्थप्रतिपादकतया संसर्गायोग्यपदेषु संसर्गाभावस्याऽऽरोपिततया तस्मिन्निमित्तधर्मिसाध्यादिसंसर्गज्ञानाभासस्योत्पत्तेरित्यर्थः । स्वार्थानुमाने वाक्यप्रयोगाभावात्तादात्म्यारोपस्तदाभासे सम्भवत्यपीति परार्थेति विशेषणम् । संसर्गारोपनिमित्तादेव कदाचित्तादात्म्यारोपः किं न स्यादित्यत आह * तत्रेति * यत्र संसर्गारोपनिमित्तं

तत्र तादात्म्यारोपश्चेच्छुक्तिरजतादौ संसर्गभ्रम एव, तत्कारणाभावाद्दूरस्थगिर्यादौ तादात्म्यारोपस्तत्कारणाभावादिति योऽयं भ्रमनियमः स न स्यान्नियामकप्रमाणाभावादित्यर्थः ।

संसर्गारोपनिमित्तात्तादात्म्यारोपं कदा चिदभ्युपगम्याप्याऽऽह ।

२६४ अभ्युपगम्याऽपि दोषप्रदर्शनम् ।

कस्य चित्तु जातसम्वादजातिसंसर्गभ्रमस्य मितौ का गतिः, ? का वा गतिः सिद्धसाधने, ? तत्राऽप्यन्यत्वकल्पनायां सिद्धत्वव्याघातात् । तत्त्वं[1] च हेत्वाभासस्यापि यथार्थग्राहिणि यथोक्तनिमित्तस्य व्यभिचारेणाप्यन्यत्राभासेऽन्यप्रतिभासकल्पनाया निर्निमित्तत्वात् । सिद्धे[2]साधनमितेरेव वा व्यवच्छेदात् ।

* कस्य चिदिति * भवतु तादात्म्यारोपोऽपि

---

१ तथात्वेऽचेति का० मु० ख० पाठः ।

२ यद्यपि सिद्धसाधनेऽनुमितिरेव नोदेति कुत्र याथार्थ्यापत्तिः ? धारावाहने सिद्धेः सिद्ध्यन्तराप्रतिबन्धकतया प्रकृतेऽपि न प्रतिबन्धकत्वमिति चेन्न । तत्र प्रत्यक्षसामग्र्या अप्रतिहतत्वादिह पक्षधर्मताविघटनेन तत्प्रतिघातात् । बाधोऽपि तर्हि स्वरूपसन्नेव प्रतिबन्धकः स्यादिति चेन्न । इष्टत्वात् । हेत्वाभासत्वं तस्य यज्ज्ञायमानं सदनुमितिप्रतिबन्धकं स हेत्वाभास इति तल्लक्षणात् इति चेन्न । सदनुमितिप्रतिबन्धकत्वमात्रस्य तल्लक्षणत्वात् । तर्हि श्रुतस्याऽऽत्मनो मननं न स्यादिति चेन्न । श्रुतातिरिक्तप्रकारेणासिद्धेन तत्र मननात् तथाऽपि यन्मते सिद्ध्यन्तरं न सिद्ध्यन्तरविरोधि तन्मतमाश्रित्य खण्डनावतारः ( इति शा० )

तथाऽपि संसर्गारोपो भवत्येव तस्य च तत्त्वानुभूतित्वं तत्रातिव्याप्तिरित्यर्थः । जातः सम्वादो यस्य जातिसंसर्गभ्रमस्य स तथोक्तः स यस्य पुंसः स जातसम्वादजातिसंसर्गभ्रमस्तस्येति विग्रहः । सम्वादज्ञानस्याप्यतद्गोचरत्वान्न संसर्गभ्रमस्य तत्त्वानुभूतित्वमित्यत आह * मिताविति * तस्यैव भ्रान्तस्य पुनः प्रमाणोत्पत्तौ का गतिः, संसर्गभ्रमस्य न तावत्प्रमात्वमाभासजत्वाज्ज्ञाप्रमात्वमतिव्याप्तेर्लक्षणस्येति यावत् । किं च सिद्धसाधनानुमानज्ञानस्य तत्त्वविषयत्वे सत्यपि न प्रमात्वं तेन तस्य लक्षणस्यातिव्याप्तिरित्याह*केति* सिद्धसाधनहेतोराभासत्वात्तज्जनितज्ञानविषयस्य परमार्थतन्निष्ठसाध्यादन्यविषयत्व,मुत परमार्थसाध्यविषयत्वमिति विकल्प्याऽऽद्यमपवदति * तत्रेति * प्रमाणान्तरेण पक्षधर्मतया सिद्धस्य साध्यस्य साधनं सिद्धसाधनमित्युच्यते ऽतो ऽपरमार्थगोचरत्वे सिद्धसाधनत्वमेव व्याहन्येतेत्यर्थः। अस्तु तर्हि परमार्थतन्निष्ठसाध्यविषयत्वमिति द्वितीयमाशङ्क्याह *तत्त्व इति* सिद्धसाधनज्ञानविषयस्य परमार्थत्वेऽन्यत्राभासे–ऽप्यनैकान्तिकाद्याभासजनितज्ञानाभासेऽपि परमार्थतन्निष्ठाविषयादन्यत्र विषयान्तरे प्रतिभासकल्पनाया निर्बीजत्वाद्धेत्वाभासान्तरजन्यज्ञानस्य तत्त्वानुभूतित्वेन प्रमात्वं स्यादतत्त्वानुभवकारणादाभासादुत्पन्नवेदनस्य तत्वानुभूतित्वमिति स्ववचनविरोध इत्याह * हेत्विति * हेत्वन्तराभासः सि-

१ तत्त्वेति सां० पु० पा० ।

द्धसाधनं तस्यापि यथार्थज्ञानजनकतया कथितनिमि-त्तस्याऽऽभासजन्यत्वस्यातत्त्वानुभवत्वे व्यभिचारान्न विरोध इति शेषः । यद्वा अनाभासजन्यत्वं तत्त्वानुभूतित्वाप्रयोजकं तदभावाद्धेत्वाभासान्तरजन्यज्ञानस्य कथं तत्त्वानुभूतित्वमित्यत आह * हेत्विति * सिद्धसाधनस्य ज्ञानस्य व्याप्तहेतुजन्यत्वाद्यथार्थत्वे सम्भवत्यपि न ज्ञानान्तरस्य तथात्वं व्याप्तकरणजन्यत्वाभावादित्याशङ्क्य तथाऽपि सिद्धसाधनानुमानेऽतिव्याप्तिर्दुष्परिहरेत्याह * सिद्धेति * चशब्दादितरत्रापि दुष्परिहरेति द्योतयति ।

लक्षणान्तरमुपन्यस्य दूषयति ।

२६५ लक्षणान्तरदूषणम् ।

यथार्थानुभवः प्रमेत्यप्यलक्षणम् । यथार्थत्वं हि तत्त्वविषयत्वं वा अर्थसदृशत्वं वा स्यात् । नाद्यः पूर्वं निरस्तत्वात् । नापि द्वितीयः व्यभिचारिणोऽपि प्रमेयत्वादिनाऽर्थसादृश्येन प्रमात्वापातात् । ननु ज्ञानविषयीकृतेन रूपेण सादृश्यमिदं विवक्षितम् । नच प्रमेयत्वादिरूपस्य व्यभिचारिण्यपि प्रकाशनसम्भवेन तथाऽप्यतिप्रसङ्ग इति वाच्यम् । प्रमेयत्वाद्यंशे प्रकाशमाने विषयीभूतधर्मान्तरापेक्षया व्यभिचारिणोऽपि प्रमात्वाभ्युपगमादिति । नैतद्युक्तम् । प्रकाशमानेन रूपादिसमवायित्वेन रूपेण ज्ञानस्यार्थसादृश्यानभ्युपगमेऽपि तत्र तदीयप्रमात्वाङ्गीकारादिति ।

*यथेति* अनुभवः प्रमेत्युक्ते भ्रमादावतिव्याप्तिस्त-

द्व्युदासार्थमुक्तं यथार्थेति । तावत्युक्ते स्मृतौ प्रसक्तिं वारयति * अनुभव इति * इत्येतदपि प्रमालक्षणन्न भवतीति यावत् । यथार्थशब्दस्य तत्त्वानुभवत्वे ऽर्थसदृशानुभवत्वे च साधारण्याद्विकल्पयति * यथेति * यथार्थत्वस्य तत्त्वाविषयत्वे तत्त्वानुभूतिरित्येवोक्तं स्यात् तच्च निरस्तमिति नाद्यः कल्पश्चतुरस्र इत्याह * नेति * यदर्थसदृशत्वं किं तत्सर्वात्मनो,तयेन केन चिद्रूपेण, यद्याद्यस्तर्हि कस्यापि ज्ञानस्य सर्वात्मनाऽर्थसादृश्याभावादसम्भव इत्याह *नापीति* येन केन चिद्रूपेण सादृश्ये सत्यर्थव्यभिचारिरजतादिज्ञानस्यापि प्रमात्वं स्यात्प्रमेयतासत्ववाच्यत्वादिना सादृश्यादित्यातिव्याप्तिरित्याह *व्यभिचारिण इति* येन ज्ञानेन यद्रूपमर्थस्य प्रतीयते तेन रूपेणार्थसदृशं ज्ञानं प्रमेति विशेषणे नातिव्याप्तिस्तदभावाद्व्यभिचारिज्ञान इति चोदयति *नन्विति* व्यभिचारिज्ञानेऽपि प्रकाशमानरूपेण सादृश्यमस्ति रजतमिदं प्रमेयं सचेत्यादिरूपेणापि प्रकाशनसम्भवादतोऽतिव्याप्तिरित्याशङ्क्य पूर्ववाद्येव निराकरोति *न चेति* न तावदतिप्रसङ्गः लक्ष्यैकदेशत्वादित्याह*प्रमेयेति*प्रकाशमाने प्रमेयत्वाद्यंशे प्रमात्वाभ्युपगमादिति सम्बन्धः । प्रकाशमानरूपे प्रमात्वाभ्युपगमे तस्य ज्ञानस्य कथं तर्हि व्यभिचारित्वमित्यत आह *विषयीकृतशुक्तिरजतसंसर्गादिधर्मान्तरापेक्षयेति* एवं विशेषणेऽपि यद्यप्यतिव्याप्तिः परिह्रियेत तथाऽप्यव्याप्तिरिति दूषयति *नैतदिति* द्वौ घटौ शुक्लावित्यत्र रूपसङ्ख्यादिसमवायित्वं

न ज्ञानस्य गुणत्वादतः प्रकाशमानरूपेणा ऽर्थसादृश्यं ज्ञानस्य नास्ति, अस्ति च तस्य ज्ञानस्य तत्र घटयोः प्रमात्वमित्यव्याप्तिरित्यर्थः ।

उक्ताव्याप्तिपरिहारमाशङ्कते ।

२६६ परिहाराशङ्कातन्निराकरणं ।

प्रकाशमानेन रूपेण विशेषणभावादर्थसादृश्यमनुभवस्य विवक्षितं अर्थस्य हि यथा समवायाद्रूपं विशेषणीभवति तथा विषयभावात् ज्ञानस्यापि तादृशेषणं भवत्येवेति चेन्न । एवं हि पुरोवर्त्तित्वादिना रूपेण तथाभावसम्भवात् पुरोवर्त्तिनीं शुक्तिं रजततया ऽवगाहमानं ज्ञानं प्रमा स्यात् । नच वाच्यमिष्यत एव सा प्रमाऽपीति न व्यभिचारचोदनेयं युक्तिमतीति, यथार्थताविशेषणवैयर्थ्यप्रसङ्गात् । अनुभूतिः प्रमेत्युक्त एव हि तावन्नास्त्यतिप्रसङ्गः सर्व्वस्य व्यभिचार्य्यनुभवस्यान्ततोऽन्यथाख्यातिवादिनये धर्मिण्यपि प्रमात्वसम्भवेन प्रमायामेवानुभवत्त्वस्य स्थैर्य्यात् । यदि त्वंशतोऽपि व्यभिचारिण्यां मा लक्षणं गमदिति[1] चेतसि निधाय यथार्थत्त्वं विशेषणं प्रयुक्तं तदा न युक्तमुक्तदोषात् ।

* प्रकाशेति * प्रकाशमानं रूपं विशेषणं यत्र ज्ञानार्थयोस्तत्र तद्विशेष्यत्त्वं नामार्थेन सादृश्यं ज्ञानस्य,

---

१ गमयेदिति सो० पु० पा० ।

रूपवान्घट इत्यत्र रूपं घटस्य विशेषणं ज्ञानस्यापीति नाऽव्याप्ति, नाप्यतिव्याप्तिर्विभ्रमस्य शुक्तिरजतादिसंसर्गो विशेषणं भवन्नपि न पुरोवर्तिद्रव्यस्य, तत्रासत्त्वादित्यर्थः। विशेष्यसम्बद्धं विशेषणं भवति रूपस्य घटसमवेतत्वेऽपि न ज्ञाने समवायोऽतद्गुणत्वादतो ज्ञानविशेषणत्वाभावादव्याप्तिस्तदवस्थेत्यत आह*अर्थेति*विशेषणं विशेष्यसम्बन्धमात्रमपेक्षते न समवायादिविशेषं व्यभिचारादस्ति च ज्ञानेन सम्बन्धो रूपादेर्विषयविषयिभावलक्षणस्तेन नाव्याप्तिरित्यर्थः।

प्रकाशमानरूपेण केन चिद्विशेषणभावादर्थसादृश्य, मुत सर्वात्मना, यद्याद्यस्तत्रातिव्याप्तिरपरिहार्येति परिहरति * नेति * एवं सति पुरोवर्तिनो शुक्तिं रजतरूपेणावगाहमानं विषयीकुर्वत् भ्रान्तिज्ञानमप्रमा स्यादिति सम्बन्धः। कुत इत्यत आह * पुरोवर्तित्वादिना तथाभावस्य—तथात्वस्य प्रकाशमानरूपेण विशेषणतयाऽर्थसदृशत्वस्य सम्भवादिति* शुक्तिरजतज्ञानस्य पुरोवर्तित्वांशे प्रमात्वाङ्गीकारान्न तत्रातिव्याप्तिरित्याशङ्क्याह * न चेति * इदं रजतमिति यज्ज्ञानं साऽपि प्रमेष्यते। विधेयालङ्काभिप्रायेण सेति प्रयोगः इति कृत्वा इयं व्यभिचारचोदना—तत्रातिव्याप्तिकथना न युक्तिमतीति न च वाच्यमित्यर्थः। तथासति लक्षणस्य व्यर्थविशेष्यतापातादिति हेतुमाह * यथेति * विशेषणवैयर्थ्यमुपपादयितुं व्यावर्त्यस्य व्यभिचारस्याभावमाह *।दिन्विति *

स्वं

October 1908.

THE

# CHOWKHAMBÂ SANSKRIT SERIES

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS

## NO. 130.

श्रीहर्षप्रणीतम्

# खण्डनखण्डखाद्यम् ।

आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया
व्याख्यया 'विद्यासागरी'-ति प्रसिद्धया समेतम्
चित्सुख-शङ्करमिश्र-रघुनाथकृतटीकावल-
म्बिन्या टिप्पण्या सनाथम्

द्राविड—श्रीलक्ष्मण शास्त्रिणा परिशोधितः ।

SRÎ HARSHA'S

# KHANDANAKHANDAKHÂDYA,

WITH THE COMMENTARY

'khandanaphakkikâvibhajana'(vidyâsâgarî)of Ânandapûrna

WITH EXTRACTS FROM THE COMMENTARIES OF

Chitsukha, Sankara Misra and Raghunâtha,

EDITED BY

PANDIT LAKSHMANA SÂSTRÎ DRÂVIDA,

*Professor of Vedânta, The Gaurishankar Central Hindu College, Benares.*

FASCICULUS V.

*PUBLISHED AND SOLD BY THE SECRETARY*

CHOWKHAMBÂ SANSKRIT BOOK-DEPÔT:

BENARES:

AGENTS:—OTTO HARRASSOWITZ, LEIPZIG:
PANDITA JYESHTHÂRÂMA MUKUNDAJÎ, BOMBAY.
PROBSTHAIN & CO., BOOKSELLERS LONDON,

*Printed by Harikrishna Dâs Proprietor,*

AT THE VIDYÂ-VILÂSA PRESS.
BENARES.

*Price Rupee One.*

॥ श्रीः ॥

-*-

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितभव्याभशतपत्त्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दामोदमोहितम् ॥ २ ॥

स्तबकः—१३०

"सम्भवे व्यभिचारे च स्याद्विशेषणमर्थव"दिति न्यायादिह व्यभिचाराभावाद्वैयर्थ्यमित्यर्थः । अनुभूतिः प्रमेति लक्षणस्य यद्यप्यख्यातिनये नास्त्यतिव्याप्तिस्तथाप्यन्यथाख्यातिनयेऽस्ति, रजतादिप्रत्ययस्य पुरोवर्तित्वादिधर्मांशे प्रमात्वेऽपि रजतादिधर्म्यंशेऽप्रमात्वादित्याशङ्क्याह * सर्वेति * अन्यथाख्यातिमते सर्वस्य रजतादिव्यभिचार्यनुभवस्य धर्मिण्यपि रजतादौ प्रमात्वसम्भवेनानुभवत्वस्य प्रमात्व एव स्थैर्यात्प्रमात्वेनाव्यभिचारादिति यावत् । अत्रासति रजतादावपरोक्षप्रत्ययस्य कथं प्रमात्वमित्यत आह * अन्तत इति * इदं रजतमिति त्रयः प्रतिभान्ति अधिष्ठानं समवायो रजतत्वमिति, तत्रैकस्याप्यसतोऽभानात्प्रमात्वमित्यन्तत इत्युक्तम् । रजतादिधर्म्यंशे व्यभिचारित्वं ज्ञानस्याभ्युपगम्याऽऽह्याह * यदीति * यद्रूपमसत्तद्रूपप्रतिभासासम्भवाद्व्यभिचारानुपपत्तिरिति तु शब्दार्थः । अंशतो व्यभिचारिण्यां भ्रान्तौ लक्षणं मागमन्न गच्छेदिति यावत् । तदा प्रागुक्तातिव्याप्तिरिति परिहरति * तदेति * इदं रजतमिति ज्ञानं तावदेकमन्यथाख्यातिपक्षे तच्चेदप्रमा न यथार्थविशेषणेन तद्व्यावृत्तिः प्रकाशमानपुरोवर्तित्वादिरूपेण विशेषणभावादित्यतिव्याप्तिरित्यर्थः ।

प्रकाशमानविश्वरूपेण विशेषणभावादर्थसाद्दृश्यं ज्ञानस्येति द्वितीयकल्पमाशङ्कते ।

२६७ द्वितीयकल्पनिराकरणम् ।

अथोच्यते प्रकाशमानेन रूपेण सर्वेण विशेषणभा-

वाद्यस्यानुभवस्यार्थसादृश्यं सा प्रमा, नच तावता धर्मिणो धर्म्यविशेषणतया दोषः तस्यापि तद्विषयान्तरव्यवच्छेदकत्वादिति । तर्हि व्यभिचारज्ञानं धर्मिण्यपि प्रमा न स्यात् सर्वात्मना सादृश्याभावात् । अव्यभिचारिणं चांशमननुरुध्य तदीयप्रमितिकोटिनिक्षेपसाहसिक्याद्बिभ्यता किमव्यभिचार्य्यंशानुरोधेन व्यभिचार्य्यंशस्यापि प्रमाकोटिनिवेशनमेव नाध्यवसीयते भवता शक्यन्ते ह्यनुभूतित्वज्ञानत्वादयः तादृशाभिप्रायाविरोधिनो लक्षणीकर्तुम् ।

* अथेति * नेत्यप्रमाव्याप्तिः रजतादिविभ्रमस्य पुरोवर्तित्वादिनाऽर्थसादृश्येऽपि तद्विशेषणीभूतस्य रजतसंसर्गस्य तत्रासत्त्वेनेदमंशाविशेषणत्वाभावादिति भावः । यस्यानुभवस्य येनार्थेन सह सादृश्यं सा तत्र प्रमेति शेषः । रूपवान्घट इत्यत्र घटो ज्ञानस्य विषयतया विशेषणं भवन्नपि न स्वस्य स्वयं विशेषणं आत्माश्रयादतो धर्म्यंशज्ञाने प्रमालक्षणस्याव्याप्तिदोष इत्याशङ्क्याऽऽह * न चेति *तावतेति* प्रतीयमानकृत्स्नरूपेण विशेषणभावादर्थसादृश्यं विवक्षितमिति यावत् । हेतुमाह * तस्येति * येन ज्ञानेन यावानर्थः प्रतीयते तावतोऽर्थस्य तज्ज्ञानविशेषणत्वे सति तद्विषयविशेषणत्वं विवक्षितं घटस्य घटविशेषणत्वाभावेऽपि रूपविशेषणत्वमस्ति घटस्य रूपमिति घटेन रूपस्य पटादिरूपाद्व्यावृत्ते रूपस्य घटविशे-

---

१ तावतेतियावत् इति सो० पु० पा० ।

षणत्वमिति ज्ञानविषयविशेषणत्वमस्तीति नासम्भवो ऽव्याप्तिर्वेत्यर्थः ।

"सर्वं ज्ञानं धर्मिण्यभ्रान्तं प्रकारे तु विपर्ययः"

इति लीलावतीकारवचनाद्रजतादिज्ञानस्य धर्म्यंशे प्रमात्वमिष्टं न चैतल्लक्षणं तत्रेत्यव्याप्तिरिति परिहरति * नहीति * कुतो न स्यादित्यत आह * सर्वेति * पुरोवर्तित्वादिविशेषणतया सादृश्येऽपि न रजतत्वादिसंसर्गस्यार्थविशेषणत्वमस्ति । न च तज्ज्ञानं यावत्यंशे प्रमा तावत्यंशेनोक्तसादृश्यमस्तीति वाच्यम् । अन्यथाख्यातिनये ज्ञानस्यैकत्वादित्यर्थः । लक्ष्यैकदेशे लक्षणाप्रवृत्तिरव्याप्तिर्व्यभिचारिज्ञानं धर्म्यंशेपि न प्रमा रजतत्वाद्यंशे व्यभिचारितया प्रमात्वायोगादेकत्वाच्च ज्ञानव्यक्तेः प्रमात्वाप्रमात्वयोर्विरोधापातादित्याशङ्क्याह * अव्यभीति * अव्यभिचार्यंशसम्बन्धी—तदीयश्चासावप्रमितिकोटौ निक्षेपश्चेति तथोक्तं तदेव साहसिक्यं— साहसिकस्य भावः साहसिक्यं सहसा बलेन यः करोति स साहसिकः- तस्मादिति । अत्रायमन्वय अव्यभिचारिणमंशमननुरुध्याऽकिञ्चित्करीकृत्य तदीयाप्रमितिकोटिनिक्षेपसाहसिक्यादबिभ्यता भवताऽव्यभिचार्यंशानुरोधेन व्यभिचार्यंशस्यापि प्रमाकोटिनिवेशनमेव किं नाध्यवसीयत इत्यव्यभिचार्यंशस्य च प्रमात्वेनानुगतं प्रमालक्षणं न शक्यं वक्तुं न चालक्षणं वस्त्वस्ति शशशृङ्गादिवदित्याशङ्क्याऽऽह * शक्य-

१ न च तल्लक्षणमिति पु० पा० ।

न्त इति* अनुभूतिरिति लक्षणमपि नानुगतमस्मिन्पक्षे स्मृतेरपि प्रमात्वादित्यत आह *ज्ञानत्वेति* परोक्षत्वापरोक्षत्वयोरन्यतरयोगित्वमादिशब्दार्थः ।

उक्तमर्थं विपक्षबाधकोपन्यासेनोपपादयति ।

२६८ विपक्षबाधकोपन्यासः ।

यदि च बाध्यार्थांशा धीरबाध्यार्थांशेप्यप्रमैव तदा सौधाग्रकुम्भादिवद्दूरत्वात्तुहिनद्युतिविद्युदादिपरभागाग्रहणादवयविनश्च तावत्परिमाणाग्रहणादल्पपरिमाणमुल्लिखत्प्रत्यक्षं प्रमात्वेन लोकप्रसिद्धमप्रमां स्यात् । क्व च लभ्यं देशकालालोकादिव्यक्तिसहितजलादिज्ञानस्य समस्ततावदर्थप्रवृत्तिसामर्थ्योदाहरणं येन तत्प्रामाण्यं मन्यसे ।

*यदीति* चशब्दो दूषणान्तरसमुच्चयार्थः अरुचिद्योतनार्थोऽपि । एवकारोंऽशतोऽपि प्रमात्वाभावार्थः । एवं विपक्षमनूद्य सम्प्रति तत्र बाधकमतिप्रसङ्गं दर्शयति * तदेति * तुहिनद्युतिविद्युदाद्यवयविनं चाल्पपरिमाणमुल्लिखत्प्रत्यक्षमप्रमा स्यादिति सम्बन्धः । अल्पपरिमाणग्रहे हेतुस्तावदिति । तत्र हेतुः*परेति*तत्रापि हेतुः*दूरत्वादिति*तत्र दृष्टान्तमाह *सौधेति* यथा दूरत्वदोषेण धवलप्रासादशिखरस्थः कुम्भो ऽल्पतया प्रतीयते, तथा दूरत्वाचन्द्रमण्डलादि सङ्कुचितावयवमवयविनं चाल्पतया गृह्णत् प्रत्यक्षमप्रमा स्यादल्पपरिमा-

१ मप्रमां स्यादिति सो० पु० पा० ।

णत्वस्य ज्ञानविशेषणस्यार्थविशेषणत्वाभावादित्यर्थः ।
न च तदप्रमेति वाच्यं प्रमात्वेन लोकप्रसिद्धत्वादित्याह
*प्रमेति* अप्रमी स्यादप्रमा स्यादिति। एवं प्रकाशमान-
सर्वरूपेण यस्यानुभवस्यार्थसादृश्यं सा प्रमेति लक्षण-
स्यासिद्धिः कस्मिंश्चिदपि ज्ञाने तादृशसादृश्याप्रकाशा-
दित्याह *क्वचेति* देशश्च कालश्चाऽऽलोकश्च देशकाला-
लोकास्त आदयो ययोर्देशकालयोस्तौ देशकाललोकादी
इति तद्गुणसंविज्ञानो बहुव्रीहिस्तयोर्व्यक्ती ताभ्यां
सहितं जलादि चेति तथोक्तं तज्ज्ञानस्य *समस्ततावदर्थ-
प्रवृत्तिसामर्थ्योदाहरणं कलभ्यमिति सम्बन्धः। समस्त-
श्चासौ तावानर्थश्चेति तथोक्तस्तद्गोचरा प्रवृत्तिस्तस्यां
सामर्थ्यं तस्योदाहरणमिति। एतदुक्तं भवति उक्तज्ञा-
नस्य समस्तप्रकाशमानरूपेण विशेषणभावादर्थसादृ-
श्यं किं स्वेनावसेय,मुत तद्गोचरप्रवृत्तिजननसमर्थज्ञान-
संवादात्, नाद्यः स्वतः प्रामाण्यानभ्युपगमाद्रजता-
दिज्ञाने प्रसङ्गात्। नापि द्वितीयस्तस्यापि ज्ञानस्य त-
थाविधसंवादान्तरादेव विषयसादृश्यमवसेयमित्यन-
वस्था स्यादिति । न च प्रवृत्तिजननसमर्थज्ञानस्य
प्रामाण्यानिश्चयेऽपि प्रथमज्ञानप्रामाण्यव्यवहारहेतु-
त्वान्नानवस्थेति वाच्यम्। तथासत्याऽऽद्यज्ञानस्यापि
तथैव स्वविषयव्यवहारहेतुत्वेन प्रवृत्तिजननसाम-
र्थ्यात् ज्ञानानपेक्षत्वप्रसङ्गादिति । यद्वा बाध्यांशा धीः
प्रमा न भवतीति वदता सर्वथैवाबाध्यत्वेन प्रमात्वं
वाच्यं तथोदाहर्तुमशक्यमित्याह *क्व चेति* देशका-

* समस्तपदार्थेति पु० पा०।

नुभूयमानेऽनुभूतेर्न प्रमात्वं स्यात् । दीर्घत्वादेर्दण्डादि-द्वारा विशेषकत्वादिति । ज्ञानरूपद्वारानपेक्षतया विशे-षणत्वमिष्टमिति चेन्न । साक्षात्कृत इत्याद्यवगमानाम-प्रमात्वापातात् । तज्ज्ञानप्रकाशितरूपेण विशेषणत्व-मिष्टमिति तु दूरन्तुच्छं रूपादेः समवायेन ज्ञानाद्वि-शेषकत्वात् । अर्थविशेषणत्वेऽयं नियमो यत्तज्ज्ञानप्रका-शितेन रूपेणेति न तु ज्ञानेऽपीति चेन्न । तज्ज्ञानव्य-क्तेरन्यत्रासम्भवेनासाधारण्यादव्यापकत्वादित्यलम् ।

* अथेति * अव्याप्त्या दूषयति * मैवमिति * रू-पवान्घट इत्यत्र विशेष्यज्ञाने प्रमा न स्याद्विशेष्यांश-स्य विषयतया स्वज्ञानविशेषणत्वेऽपि नतद्विषयविशे-षणत्वं स्वविशेषणत्वायोगादुपलक्षणमेतद्विशेषणां-शस्यापि, स्वज्ञानं विशेषणत्वेऽपि तद्विषयविशेषण-त्वाभावादव्याप्तिस्तज्ज्ञान इति ज्ञानव्यावर्तकत्वे सति तद्विषयव्यावर्तको योऽर्थस्तज्ज्ञानं तत्र प्रमेति नियमोऽ-स्तिच विशेषणविशेष्यभावस्य कामचारिता धर्मिणो-धर्मं प्रति धर्मस्य च धर्मिणं प्रति विशेषणत्वं घटस्य शौ-क्ल्यं शुक्लो घट इति दर्शनादतो नोभयत्राप्यव्याप्तिरि-ति प्रागुक्तं स्मारयति पूर्ववादी *व्यवच्छेदेति* तस्यापि तद्विषयान्तरव्यवच्छेदकत्वादित्यवोक्तमित्यर्थः । अव्या-प्त्यन्तरप्रदर्शनेन परिहरति *नेति* रूपवान्घट इत्यत्र य-द्विशिष्टं प्रतीयते तस्य विशेष्यांशं विशेषणांशं च प्रति न विशेष्यत्वं विशेषणविशेष्यतत्सम्बन्धानां विशिष्टतयां-

शातः स्ववृत्त्यापाताञ्चापि विशिष्टं प्रति विशेषणत्वं स्वं प्रति तदयोगात्तेन ज्ञानविशेषणत्वेऽपि तद्विषयविशेषणत्वाभावादव्याप्तिर्विशिष्टज्ञान इत्यर्थः। प्रकाशमानरूपेण विशेषणतया यदर्थसादृश्यमनुभवस्य तज्ज्ञानं तत्र प्रमेत्येवं लक्षणं यदि तर्हि इदं रजतमिति प्रतीयमानरजतत्वं तत्तादात्म्यं वा शुक्तिकामपि व्यवच्छिनत्त्येवेति लक्षणस्य तत्रातिव्याप्तिरित्यर्थः। रजतत्वस्यासंसृष्टस्य कथं शुक्तिव्यवच्छेदकत्वमित्याशङ्क्य प्रतीतिसिद्धं तदित्याह * रजतेति * या पुरा रजततया प्रकाशिता सेयं शुक्तिरिति प्रकाशितं रजतत्वं पुरोवर्तिनीं शुक्तिं व्यवच्छिनत्तीत्यर्थः। उक्तातिव्याप्तिपरिहाराद्याभिप्रायविशेषं शङ्कते * नन्विति * प्रकाशमानरूपेणाव्यवधानेन विशेषणभावादर्थसाम्यं विवक्षितमित्यर्थः। विशिष्टलक्षणं न रजतादिज्ञानेऽस्ति तद्विषयस्याव्यवधानेन पुरोवर्तिव्यावर्तकत्वाभावादिति विशेषणार्थवत्तामाह * रजतेति * रजतत्वं ज्ञानस्य विशेषणीभवच्छुक्तिकां व्यवच्छिनत्ति यद्रजतमिति प्रतिभातं सेयमिति न तत्रातिव्याप्तिरित्यर्थः। एक इतिः शङ्कार्थः परस्तु शङ्कासमाप्तौ। व्यवधानानिरुक्तेरव्यवधानमपि न निर्वक्तुं शक्यमिति प्रतिषेधति * नैवमिति * किं च व्यवधानाभावमात्रं विवक्षितं,उत ज्ञानव्यवधानाभावो, यद्याद्यस्तत्राह * तर्हीति * दीर्घदण्डः पुरुषो, रक्तपटो मस्करी, कृष्णाजिनो ब्रह्मचारीत्यादौ ह्रस्वदण्डादिभ्यः पुरुषादिभ्यो दीर्घदण्डादेर्वैलक्षण्यमनुभूयते तत्र च दीर्घत्वादिकं दण्डादेर्विशेष-

णीभवत्तद्द्वारा पुरुषादिविशेषणं अतश्च व्यवधाना-त्तज्ज्ञाने लक्षणस्याव्याप्तिरित्यर्थः । ज्ञानव्यवधानाभावो विवक्षित इति द्वितीयमाशङ्कते *ज्ञानेति* या रजत-मित्यभात् सेयं शुक्तिरित्यत्र रजतत्वं ज्ञानस्य विशे-षणं भूत्वा शुक्तिविशेषणं भवतीति नातिव्याप्तिः ना-व्याप्तिर्दीर्घित्वादेर्ज्ञानव्यवधानापेक्षया पुरुषादिव्यावर्त-कत्वादित्याशयः । अव्याप्त्यन्तरप्रदर्शनेन दूषयति *नेति* साक्षात्कृतोऽयं कुश इत्यत्र साक्षात्त्वं ज्ञानस्य विशे-षणं भवदेव तद्द्वाराऽर्थं परोक्षज्ञानविषयाद्विशिनष्टी-ति कथितलक्षणं प्रमात्वेनाभिमते तद्विषयज्ञाने नास्ती-त्यव्यापकतेत्यर्थः । आदिशब्देन परोक्षीकृतः स्मृत इ-त्यादयो गृह्यन्ते । यस्मिन् ज्ञाने योऽर्थः प्रकाशते यथा, तेन रूपेण विशेषणत्वमव्यवधानार्थो न ज्ञानाद्यनन्तरित-त्वं रजतत्वादेः पुनः पुरोवर्तिसमवायित्वं प्रतीयते न च तेन रूपेणार्थविशेषणत्वमतो नोक्तदुष्टिरित्याश-ङ्क्याह *तादीति* दुरन्तुच्छमत्यल्पतरामिति यावत् । ज्ञानप्रकाशितप्रकारेण विशेषणत्वं ज्ञानं प्रत्युतोभ-यं प्रति किं वार्थं प्रत्येव, यदि प्रथमद्वितीयौ तत्राह *रूपेति* चाक्षुषानयमेको घट इत्यत्र रूपादेर्घटसमवायि-त्वेन रूपेण प्रकाशमानस्य ज्ञानं प्रति समवायसंस-र्गितया विशेषकत्वं नास्ति घटगुणतयाऽन्यत्राऽसमवा-यात् तद्विषयज्ञानेऽव्याप्तिरित्यर्थः । ज्ञाने प्रकाशित-रूपेण विशेषणत्वमर्थं प्रत्येव विवक्षितमिति चरम-कल्पमवलम्ब्य *अर्थेति* कोऽसौ नियम इत्यत आह *यदिति* तज्ज्ञानप्रकाशितेन रूपेण विशेषणत्वमि-

ति यद्यमिति यावत् । विशेषणत्वाविशेषाज्ज्ञानं मत्यपि तेनैव रूपेण किं न स्यादित्यत आह *न त्विति* अन्यथा रूपादिसमवायितया ज्ञानस्य द्रव्यत्वापातान्मैवमिति शङ्कानिवृत्तये तु शब्दः । तच्छब्देन ज्ञानव्यक्तिरुच्यते किं वा ज्ञानमात्रं, आद्ये ऽव्याप्तिरिति दूषयति * नेति * तच्छब्दो यदि ज्ञानव्यक्तिवचनस्तदा घटज्ञानप्रकाशितरूपेणार्थविशेषणत्वं पटज्ञानार्थस्य नास्ति तज्ज्ञानव्यक्तेरन्यत्र पटादावसम्भवात्तेन लक्षणस्यासाधारण्याद्व्यावृत्तत्वादव्याप्तिरित्यर्थः । यद्वा ऽसाधारण्यादिति ज्ञानव्यक्तेरन्यत्रासम्भवे हेतुः । यदि ज्ञानमात्रवचनस्तच्छब्दस्तदा ऽतिव्याप्तिः रजतत्वस्य ज्ञानप्रकाशितरूपेण शुक्तिविशेषणत्वादित्युपसंहरति * इत्यलमिति *

---

सम्यक् परिच्छेद इति लक्षणान्तरमेवास्तु प्रमाया इत्याशङ्क्य निषेधति ।

२७१ उदयनाचार्यलक्षणखण्डनम् ।

सम्यक्परिच्छेदः प्रमेत्यपि न युक्तम् । न खलु सम्यक्त्वं तत्त्वविषयता याथार्थ्यं वा सम्भवत्युक्तदोषात् ।

*सम्यगिति* परिच्छेदोऽनुभवः प्रमेत्युक्ते रजतादिज्ञानेऽतिव्याप्तिस्तन्निरासायाह *सम्यगिति* तावत्युक्ते तत्त्वगोचरेच्छादावतिव्याप्तिनिवारणायानुभव इति । किमिदं सम्यक्त्वं तत्त्वविषयत्व,मुत यथार्थत्वं, किं वा सामस्त्य,मिति विकल्प्य प्रथमद्वितीयावुक्तदोषाऽतिदेशेन पराकरोति *न खल्विति* यथार्थस्य भावो या-

थार्थ्य सम्यक्परिच्छेदत्वम् ।

सम्यक्परिच्छेदत्वं साकल्येनार्थविशेषानुभवत्व-मिति तृतीयं कल्पमुत्थापयति ।

२७२ तृतीयकल्पोत्थापनम् ।

ननु सामस्त्यं सम्यक्त्वमिष्टं अभिधीयते हि लोके न मया सम्यक् दृष्टं सामान्याकारेण तूपलब्धमिति तदिह समीचोऽर्थस्य परिच्छेदः सम्यक्परिच्छेदः सम्यगर्थविषयत्वाद्वा सम्यक्शब्दः—परिच्छेदसमानाधिकरण एवायमिति ।

*नन्विति* समस्तस्य भावः सामस्त्यं । सम्यक्शब्दस्य सामस्त्यार्थत्वं स्वसमयानुसारेणाऽवसित,मुत वृद्धव्यवहारानुरोधेन, नाद्योऽतिप्रसञ्जकत्वात् । नापि द्वितीयः तथा प्रयोगादर्शनादित्याशङ्क्याह *अभिधीति* न मया दृष्टमिति वचनं व्याहतं वचनव्यक्तेरर्थप्रकाशकत्वादित्याशङ्क्याह *सामान्येति* सामान्यतो ज्ञानाद्वाक्यप्रवृत्तिः सर्वात्मना ऽदृष्टत्वात्सम्यक् न दृष्टमिति प्रयोग इति यावत् । तुशब्दः शङ्कानिवृत्तिप्रयोजनः । सजातीयविजातीयेभ्यो व्यावर्तको लक्ष्यनिष्ठो धर्मो लक्षणं सामस्त्यमर्थधर्मः कथं प्रमां लक्षयेदित्याशङ्क्याह *तदिति* तत्तत्र सम्यक्पदस्य सामस्त्यमर्थ इति स्थित इति यावत् । इह लक्षणवाक्य इत्यर्थः । समस्तस्यार्थस्य परिछेदः सम्यक्परिछेद इति षष्ठीसमासो विवक्षित इति शेषः । सम्यक् चासौ परिछेदश्चेति

कर्मधारयो वा तस्य स्वरूपपरतया षष्ठीसमासाद्भ्यर्हितत्वादिति पक्षान्तरमाह *सम्यगिति* सम्यगर्थविषयत्वात्परिच्छेदस्य सम्यक्त्वोपचारः ।

लक्ष्यनिष्ठतयाऽज्ञातस्य च गमकत्वायोगान्मैवमिति प्रतिषेधति प्रकारान्तरेणापासितुं विकल्पति ।

२७३ सामस्त्यानिर्वचनम् ।

मैवम् । सामस्त्यमर्थस्य किं सर्वावयवसहितत्वमथवा सर्वधर्मसहितत्वम् । नाद्यः अनवयवपदार्थपरिच्छेदस्यैव सावयवपदार्थपरिच्छेदस्यापि मध्यभागाद्यविषयस्याप्रमात्वापातात् । नापि द्वितीयः असर्वविित्परिच्छित्तीनां सर्वासामप्रमात्वापत्तेः ।

* सामेति * अवयवानामवयाविनं प्रत्यान्तरत्वात्सर्वावयवसहितत्वमर्थस्य सामस्त्यमिति प्रथमकल्पमाशङ्क्य पराचष्टे * नेति * अव्याप्त्यतिव्याप्तिपरिहारेण सर्वत्र लक्षणस्य वक्तव्यत्वादिह चाव्यापकत्वादिति हेतुमाह *अनवयवेति* पृथिव्यप्तेजोवायवः कार्यरूपाः सावयवास्तदतिरिक्ताः सर्वे निरवयवास्तद्गोचरानुभूतीनामप्रमात्वं स्यात्सर्वावयवसहितपरिच्छेदत्वाभावादितिभावः । एवमव्याप्तिमभिधायाधुना सावयवपरिच्छेदेऽपि कथितलक्षणस्यासिद्धिरित्याह * सावयवेति * न हि किंचिज्ज्ञानं सर्वात्मनाऽर्थग्राहकं बाह्यावयवप्रतिबन्धतया मध्यमावयवग्रहणायोगादतश्च लक्षणमसम्भवीत्यर्थः । उक्तं हि

"सर्वात्मनाऽर्थो ज्ञानेन केन चिन्न हि गृह्यत" इति। सर्वधर्मसहितत्वमर्थस्य सामस्त्यमनवयवानामपि सर्वधर्मत्वसम्भवादिति द्वितीयं निषेधति * नापीति * धर्माणां सधर्मत्वाभावात्तद्गोचरप्रमायामव्याप्तिरित्यर्थः। दूषणान्तरमाह * असर्वेति * घटे यावन्तो धर्मा रूपरसादयः सन्ति तावतां सर्वेषां ग्राहकमेकं ज्ञानमस्मदादेर्नास्ति विभिन्नसामग्रीजन्यत्वाददृष्टजत्वादीनामयोग्यत्वादेवेत्यर्थः।

सर्वं वस्तु सामान्यविशेषात्मकं तेन विशेषसहितत्वं सम्यक्त्वमर्थस्य तेन सविशेषार्थपरिच्छित्तिः प्रमेति लक्षणे नोक्तदोष इति शङ्कते।

२७४ सम्यक्छब्दस्य सविशेषार्थत्वकशङ्का।

अथ मन्यसे सम्यक् शब्दः सविशेषार्थः यदपि लोकेऽभिधीयते न मया सम्यक् दृष्टं तस्यापि न मया विशेषतो दृष्टमित्यर्थः तस्माद्विशेषसहितधर्मिपरिच्छित्तिः प्रमेत्युक्तम्भवति। विभ्रमादयो हि विशेषमपश्यतो जायन्त इति तद्व्यावृत्त्यर्थं विशेषणमिदं विशेषाणाञ्च सर्व्वेषां विशेषान्तरानभ्युपगमेऽपि स्वरूपमेव केषाञ्चिद्विशेष इति।

*अथेति* न च सामान्यादेः सामान्याद्यभावात्तज्ज्ञानेऽव्याप्तिः सामान्यशब्देनानुगतसाधारणरूपाभिधानादस्ति तत्र प्रमेयत्वादिविशेषस्य च व्यावृत्तमात्र-

१ तत्प्रमेयेति पु० पा०।
२ चाव्यावृत्तेति पु० पा०।

रूपत्वादिति द्रष्टव्यं । सम्यक्शब्दस्य सामस्त्यार्थे लोकावगतसङ्गतिकस्य कथं सविशेषवचनत्वमित्यत आह * यदिति * न मया सम्यक् दृष्टमिति यदभिधीयते लोकेनेति एकेतिशब्दाध्याहारेण ग्रन्थयोजना । सम्यक्शब्दः सामस्त्यार्थे च साधारण इति यथारुचि स पूर्ववादिना लोकप्रयोगः प्रमाणीक्रियत इति न ग्रन्थकारस्य शब्दार्थापरिज्ञातता शङ्कनीया । एवं सम्यक्शब्दस्य सविशेषार्थत्वं प्रसाध्य सम्यक्परिच्छेदः प्रमेति लक्षणवाक्यस्य विवक्षितमर्थं कथति * तस्मादिति * सम्यक्शब्दः सविशेषवचन इति यस्मात्तस्मादित्यर्थः । इदं रजतमित्यादिज्ञानानामपि सविशेषज्ञानत्वमिदमिति साधारणाकारस्य, रजतमिति विशेषाकारस्य च भासनादतो ऽतिव्याप्तिरित्याशङ्क्याह * विभ्रमेति * शुक्तित्वादिविशेषाग्रहस्येदमिति साधारणग्रहस्य च विभ्रमादिं प्रति हेतुत्वमन्वयव्यतिरेकावसितं तत्कथं विशेषार्थत्वं तेषामित्यर्थः । संशयादिसङ्ग्रहार्थमादिपदं । तद्व्यावृत्तिफलतया विशेषणं साधितयाह *इतीति* यद्वा परिच्छित्तिः प्रमेत्युक्त एव लक्षणं सिद्ध्येदतो व्यावर्त्याभावात्सम्यगिति विशेषणं व्यर्थं यथाहुः प्रमाणमनुभूतिरित्याशङ्क्याह * विभ्रमेति* सविशेषार्थपरिच्छित्तिरिति लक्षणस्यातिव्याप्त्यभावे ऽप्यव्याप्तिर्विशेषाणां निर्विशेषतया तद्विषयज्ञानानां सविशेषार्थपरिच्छित्तित्वाभावादित्यत आह * विशेषेति * यद्वा विशेषाः सविशेषा निर्विशेषा वा, चरमे तज्ज्ञानेऽव्याप्तिः । आद्ये यैर्विशेषैः स-

विशेषता तेषामपि सविशेषत्वे ऽनवस्था, क्वचित् विशेषविश्रामे तत्रैवाव्याप्तिरित्याशङ्क्याह * विशेषेति * सर्वेषामिति विशेषणात्केऽपि विशेषाः सविशेषा, नाप्यनवस्था केषां चिदन्त्यविशेषाणां निर्विशेषत्वात् । नाप्यव्याप्तिः तत्स्वरूपस्य विशेषशब्दार्थतया तत्स्वरूपविशेषज्ञानानां सविशेषज्ञानत्वादित्यर्थः ।

निर्विकल्पकज्ञानस्याप्रमात्वापातान्नैवमिति परिहरति ।

२७५ निर्विकल्पज्ञानेऽव्याप्तिकथनम् ।

नैतद्युक्तं विशेषपदेन विशेषमात्राभिधाने रजतत्वादिना विशेषेण सहैव शुक्तिव्यक्त्यादेर्भ्रमेणावगाहनात् तस्यापि प्रमात्वं स्यात् । प्रत्यर्थं व्यावृत्ताकाराणाञ्च विशेषाणामुपादानेऽननुगमप्रसङ्गात् सामान्यतश्चातिप्रसङ्गात् उभयथाप्यसङ्गततापत्तेः । विशेषस्य च भवतु स्वरूपमेव विशेषस्तथाऽप्यभेदादेव विशेषसहितत्वं नास्तीत्यव्याप्तेरपरिहारात् ।

*नेति* विशेषशब्देन तत्र सत्वासत्वोदासीनं विशेषमात्रमुच्यते, किं वा तत्र सन्निति विकल्प्याऽऽद्यमतिव्याप्त्या दूषयति *विशेषेति* तत्र सन्निति विकल्पस्योपरिष्टाद्दोषो भाष्यते । किं च विशेषशब्देन प्रत्यर्थं व्यावृत्ताकारः कथ्यते किं स्विद्विशेषत्वाक्रान्तस्वरूपमात्रमिति प्रथमकल्पमेव द्विधा विकल्प्याद्यं दूषयति *तावेति* प्रत्यर्थं व्यावृत्ताकारस्य विशेषत्वे घटगतविशेषस्य च विवक्षितत्वे त-

द्विशिष्टं विषयत्वं पटादिप्रतीतेर्नेति लक्षणमव्यापकमित्यर्थः । विशेषत्वाक्रान्तस्वरूपमात्रं विशेषपदार्थ इति द्वितीयोऽस्तु निरवद्यत्वादित्यत आह *सामान्येति* प्रत्यर्थं व्यावृत्तत्वादिविशेषमुपेक्ष्य विशेषमात्राभिधाने रजतत्वादिविशेषेण सहैव शुक्त्यादेर्भानाद्रजतादिज्ञानेऽतिप्रसक्तिरित्यर्थः । कतरः पक्षोऽत्रोपादेय इति चेन्नैकतरोऽपीत्याह *उभयेति* लक्षणस्य हेतुविशेषस्य पक्षद्वयेऽपि क्रमेण भागासिद्धिविरुद्धत्वाभ्यामपक्षधर्मत्वापत्तेरित्यर्थः । यद्यन्त्यविशेषाणां स्वरूपमेव विशेष इति विशेषान्तराभावेऽपि न तज्ज्ञानस्याप्रमात्वापात इति तत्राह * विशेषेति * विशेषस्वरूपं विशेष इति वचनं पुनरुक्तमितिदोषसमुच्चयार्थश्चः । विशेषस्य स्वरूपस्य चाभेदाद्विशेषसाहितज्ञानत्वं विशेषस्य नास्ति साहित्यस्य भेदगर्भत्वादित्यव्याप्तिरित्यर्थः विशेषपरिच्छित्तिः प्रमेति च न शङ्कनीयं विशिष्टधर्मिज्ञानस्याप्रमात्वापातादित्यर्थोऽपि ।

विशेषशब्देन प्रत्यर्थं व्यावृत्ताकारो विशेषत्वाक्रान्तस्वरूपमात्रं वा नोच्यते किं तु यदज्ञानात् भ्रमसंशयजन्म यज्ज्ञानाच्च तदुपशमस्ते विशेषाभिलप्या इति मतान्तरमुत्थापयति ।

२७६ मतान्तरोत्थापनम् ।

यत्तु काश्चिदत्रोचत् विशेषशब्देन तेऽभिधीयन्ते यददर्शने भ्रमसंशयावकाशो यद्दर्शने च बाधव्यवस्था तदनभ्युपगमे तत्त्वातत्त्वविभागो न स्यात् भवितव्यञ्च

तेनान्यथा व्याघातादिति ।

*यत्त्विति* येषां शुक्तित्ववक्रकोटरत्वादीनामज्ञाने सति रजतमित्यादिभ्रमस्य, स्थाणुर्वा पुमान्वेत्यादिसंशयस्याऽवकाशो-जन्मेति यावत् येषां पुनर्ज्ञाने भ्रमस्य बाधः संशयव्यवस्थैकतरनिश्चयो भवति स्थाणुरेवेति न इत्यर्थः । ग्रहणस्मरणाद्यविवेकव्यतिरेकेण भ्रमसंशयौ न स्तः कुतस्तरामुक्तरूपविशेषा इत्यत आह *तदिति* भ्रमादिगोचरोऽतत्त्वं, तदितरस्तत्त्वमिति स्थितिः सैव न स्यादविवेकस्याभावस्यासाधारणकारणत्वायोगाद्भ्रमाभ्युपगम इति यावत् । यद्वा तथाभूतविशेषाभ्युपगमे किं प्रमाणमित्यत आह *तदिति* प्रमाविषयत्वाप्रमाविषयत्वयोरेव तत्त्वातत्त्वपदार्थत्वादुक्तविशेषानभ्युपगमे तद्व्यवस्था न सिद्ध्येदित्यर्थः । अथवा भ्रमबाधौ न स्तः कुतस्तद्व्यवस्थापकतया विशेषसिद्धिरित्यत आह *तदिति* बाध्यमतत्त्वं तत्त्वमबाध्यमिति विभागो न सिद्ध्येत् भ्रमबाधानभ्युपगम इत्यर्थः । माभूदयं विभाग इत्यत आह *भवितव्यमिति* तत्त्वातत्त्वविभागोऽस्तीति मदीयज्ञानस्य तत्त्वविषयत्वे विभागसिद्धिरतत्त्वविषयत्वे मदीयज्ञानविषयोऽतत्त्वविभागो नास्तीति तावकीनज्ञानविषयस्तत्त्वमिति तत्सिद्धिरित्यर्थः । उक्तमर्थं व्यतिरेकमुखेन दृढीकुरुते *अन्यथेति* तत्त्वातत्त्वविभागमनभ्युपगच्छन्प्रष्टव्यः ज्ञानं सर्वं तत्त्वमेव, किमतत्त्वमिति, किं वा किंचित्तत्त्वं किं चिदतत्त्वमिति, आद्ये परपक्षानुवादेन तत्खण्डनासिद्धि,र्द्वितीये त्वद्वचनस्या-

तत्त्वाविषयतया ऽनवधेयवचनत्वप्रसङ्गः, तृतीये तत्त्वान- त्वाविभागमभ्युपगम्य स नास्तीति वचनं माता मे वन्ध्येति वद्विरुद्धमित्यर्थः।

अनिर्वचनीयतैव सर्वानुपपत्तिबाणवारणाय व- ज्रवारबाणायमाना विजयते इत्यादिना व्याघातस्य पुरस्तान्निरस्तत्वान्नैवमिति परिहरति।

२७७ मतान्तरखण्डनम्।

तदयुक्तम्। न तावदेवम्विधो विशेषोऽभिधातुं शक्यो यदवगमस्य न भ्रमत्वादिसम्भवः स्वप्नदशः सर्वविशे- षोपलम्भात्। नच व्याघातदण्डभयमात्रादसावुपपा- दयितुमशक्योऽप्यभ्युपगन्तव्यइति युक्तम्। तदुपदर्शना- शक्यत्वेन व्याघातपरिहार एव कश्चिदन्यो निर्वक्तुम- शक्योऽस्तीत्येव तदा किं न व्यवस्थाप्यते? न हि परिदृ- श्यमानपदार्थगोचरं तदस्ति किञ्चिदनुभूयमानं यत्स्वप्ने वा वाक्याभासे वा प्रतिपत्तुमशक्यमिति प्रतिपत्त्यारू- ढतया येयमप्रतीयमानकल्पना ततो वरमनुपलभ्यमान- स्य व्याघातपरिहारस्यैव कल्पना भद्रा। बहुशश्च व्याघा- तोद्भावनाविभीषिकामुन्मूलयिष्यामः।

*तदिति* एवंविधो विशेषः प्रतीयमानत्वादभ्यु- पगम्यते, किं वाऽनभ्युपगमे व्याघातात्, नाद्य इत्याह *नेति* अभिधातुमशक्यः कुतः प्रमातुमिति शेषः। स्व- प्नदशायां शुक्तित्वादिविशेषदर्शनेऽपि भ्रमदर्शनादि-

ति हेतुमाह *स्वप्नेति* विशेषानभ्युपगमे प्रागुक्तव्याघातादसावभ्युपगम्य इति द्वितीयं कल्पमाशङ्क्य निषेधति *न चेति* यद्यनग्निस्तर्ह्यधूमः स्यादित्यादिव्याघातदण्डभयादग्निमत्त्वाद्यभ्युपगम्यतेऽतोऽयुक्तं कुत इत्यत आह *तादिति* तस्य विशेषस्य दर्शयितुमशक्यत्वेनेति यावत्। उक्तन्यायेन तद्विशेषस्य निर्वक्तुमशक्यत्वादयमसाविति निर्वक्तुमशक्योऽपि कश्चिदस्तीति सामान्याकारेण व्याघातपरिहारं परिकल्प्य व्याघाताभाव एव किं नावसीयत इत्यर्थः। एवकारावयोगान्ययोगव्यवच्छेदप्रयोजनौ। विशेषस्योपदर्शयितुमशक्यत्वमसिद्धं यत्र स्वप्ने ऽनुभूयते ज्ञातत्त्वाज्ञातत्त्वाभ्यां भ्रमबाधप्रयोजकः स विशेष इति तन्निरुक्तेरित्यत आह *न हीति* असौ विशेषः परिदृश्यमानपदार्थमध्यवर्ती, किं स्विद्बाह्यः, चरमे ब्रह्मैव त,दाद्ये कदाचिदनुभूयते न वा, न चेत् तुरगशृङ्गसमः अनुभवाभावात् भ्रमाद्यपनोदाप्रयोजकता च। न च प्रथमस्तथाऽनुपलम्भादिति भावः। नन्वस्त्यसौ विशेषः यद्दर्शनाज्जाग्रत्प्रत्ययस्तस्या ऽज्ञायमानतया स्वप्नभ्रमप्रयोजकत्त्वादिति। नैतत्। यावन्तः पदार्था जाग्रति प्रतीयंते तावतां स्वप्नेऽप्यनुभूयमानत्त्वादिति। किं च नदीतीरे फलानि सन्तीत्याप्तवाक्यसदृशानाप्तवाक्याभासे विशिष्टोऽर्थः प्रतीयते ऽतो वाक्यजनितभ्रमे सर्वो विशेषः प्रतिपत्तुं शक्य इत्यर्थः। अप्रतीयमानव्याघातपरिहारः कल्प्यते चेत्तथाभूतो विशेषः किं न कल्प्यत इत्यत आह *प्रतीति* प्रतीयमानविशेषाणां कल्पना

प्रतिपत्त्याऽऽरूढत्वेन ततो वरं व्याघातपरिहारस्य कल्पनेति सम्बन्धः । एतदुक्तं भवति कल्प्यमाना विशेषा अनुपलभ्यमाना अपि बुद्ध्यारूढतयैव कल्पनीया अन्यथा तदनुभवाभावाद्भ्रान्त्यादिबाधानुपपत्तेरतश्चानुपलभ्यमाना बुद्ध्यारूढतया कल्प्यन्त इति व्याघातः । नचैवं व्याघातपरिहारकल्पने कश्चिद्दोष इति, अस्य परिहारस्य सत्वे द्वैतापत्तिरसत्वे व्याघातनिष्प्रत्यूहतेत्यत आह * भद्रेति * भद्रा विचारमन्तरेण रमणीयेति । व्याघातमभ्युपगम्यैतदवोचाम न चासौ, तुरीयपरिच्छेदे पराकरिष्यमाणत्वादित्याह*वह्निति*

विशेषपदेन सत्त्वासत्त्वोदासीनं विशेषमात्रमुच्यते किं स्वित्तत्र सन्निति विकल्प्य प्रथमकल्पो निराकारि, सम्प्रति द्वितीयकल्पमुत्थापयति ।

२७८ सन्विशेषः कथ्यते विशेषपदेनेतिशङ्का ।

ननु न ब्रूमो विशेषेण सहोपलम्भो विशेषसहितोपलम्भ इति, किन्नाम ? विशेषेण सहितस्य पदार्थस्योपलम्भस्तथा च न शुक्तौ रजतत्वं विशेषोऽस्ति तत्कथं रजतभ्रमेऽपि तत्प्रसङ्ग इति ।

* नन्विति * विशेषेण सहोपलम्भो विशेषसहितोपलम्भ इति न ब्रूमः इतीति शब्दोऽध्याहार्यः । कस्तर्ह्यसाविति चेद्वस्तुतो विशेषसहितस्योपलम्भः स इत्याह * किमिति * शुक्तेरपि शुक्तित्वविशेषवत्या रजतमित्युपलम्भात् । तर्हि प्रमालक्षणमतिव्याप-

कमित्यत आह * तथाचेति * प्रतीयमानविशेषेण सहितत्त्वं विवक्षितं न च तद्रजतत्वं तत्रास्तीत्यर्थः । एवं चातिव्याप्त्यादेरभावान्निरवद्यं लक्षणमित्याह * तदिति *

प्रथमकल्पनिराकरणेन द्वितीयोऽपि निरस्त इत्याह ।

२७९ शङ्कापरिहारः ।

मैवम् । उक्तदोषेणैव निरस्तत्वात् । यदि हि विशेषस्य सामान्यतोऽभिधानं तदा पुरोवर्त्तित्वादेः सत्त्वान्न प्रसङ्गनिवारणम् । विशेषेण तदभिधाने त्वननुगम इति ।

* मैवमिति * किमन्यदीयो दोषोऽन्यत्रानुषज्जेदित्यत आह * यदीति * विशेषपदेन विशेषत्वाक्रान्तं स्वरूपमात्रमभिधाय तत्सहितोपलम्भोऽभिधीयते किंवा विशेषव्यक्तिमभिधायेति विकल्प्याद्यमपवदति * यदीति * पुरोवर्तित्वसत्वादितत्रत्यविशेषसहितस्य शुक्तिशकलस्य रजतात्मना ऽवभासान्न तत्रातिव्याप्तिः परिहर्तुं शक्येत्यर्थः । विशेषपदेन विशेषव्यक्त्यभिधानमिति द्वितीयमाशङ्क्य निषेधति * विशेषेणेति *

तत्त्वातत्त्वविभागानुपपत्त्या बाधव्यवस्थाहेतुरस्ति विशेष इत्याशङ्क्य निर्वचनानर्हतया निरस्तः सम्प्रति पूर्वपक्षबीजमुद्घाटयितुं निरस्तमप्यनुभाषते ।

२८० पूर्वोक्तार्थस्यैव कथनेन परिहारः ।

बाधाबाधव्यवस्थाहेतुरस्ति विशेष इति पक्षं यस्तु

जडतरो न जहाति स आप्तानाप्तवाक्याभ्यां नदीतीरे पञ्च फलानि सन्तीत्येवं रूपाभ्यां प्रतिपाद्यमानेऽर्थे स्थितं किं विशेषमेकत्र पश्यसि यमपरत्र न पश्यसीति पृष्ट्वा प्रतिबोधनीयः । तथाप्यनुपजातप्रबोधस्तु जडतमः कश्चिद्यदि स्यात् स एवं प्रबोध्यः । ये ते विशेषान्तरप्रवाहस्वीकारेऽनन्तविशेषापत्तिभयात् त्वया स्वत एव विशेषरूपा इति स्वीकृताः तेषां स्वरूपं तावत् परस्परव्यावृत्तमतोऽनुगतैकरूपाभावादव्यापकत्वं स्यादिति । बाधव्यवस्थाहेतुत्वादेवानुगतिरिति चेन्न । क्वाचित्कबाधव्यवस्थाहेतोर्भ्रमेऽपि प्रकाशात् । तत्र तस्येति चेन्न । व्यावृत्तेः । बाधस्य च तद्विपरीतार्थप्रमात्वेन तदर्थाननुगमात् प्रमायाश्चाद्याप्यव्यवस्थापनादिति ।

* बाधेति * बहुशश्चेत्येतदनन्तरं यद्यप्ययं ग्रन्थो युक्तस्तथाऽपि लेखकदोषादत्र पतित इति द्रष्टव्यम् । एकरूपगोचरज्ञानयोरेकतरस्य प्रमारूपतया तत्त्वगोचरत्वमपरस्याऽप्रमारूपतयाऽतत्त्वगोचरत्वमिति विभागदर्शनान्न विशेषभावाभावनिबन्धनस्तत्त्वातत्त्वविभाग इति दूषयति * स इति * सरित्परिसरे फलानि सन्तीत्याप्तवाक्यप्रतिपन्नेऽर्थे को विशेषो लक्ष्यते योऽनाप्तवाक्यप्रतिपन्नैवंरूपे नेति वक्तव्यं, न चासौ कश्चिदस्तीत्यभिधाय विशेषदर्शनादर्शनाभ्यां न भ्रमबाधाविति बोध्यत इत्यर्थः । प्रमाणमूलरचितवाक्यज-

न्यज्ञानविषयत्वमाप्तवाक्यार्थे विशेषो नेतरस्मिन्नित्य-स्ति विशेष इत्याशङ्क्याह * तथेति * अनुभवविरोधस्तो-र्थः । जडतमत्वमत्यागहेतुः । अपिररुचिद्योतनार्थः । जडतमत्वेनासौ नोपेक्ष्यः प्रकारान्तरेणापि बोधनीय एवेत्याह * स इति * विशेषसहितोपलम्भः प्रमेति वदन् प्रष्टव्यः किं ते विशेषा अपि सविशेषा, उत निर्विशेषाः केचिदन्त्या इति, प्रथमे व्यक्ता ऽन-वस्थेति बहिरेव दूषयित्वा द्वितीयमनुभाषते * य- इति * अस्मिन्पक्षे लक्षणाव्याप्तिरिति दर्शयितुं तेषां स्वरूपं नानुगतं मन्तव्यमैक्यापत्तेरतः परस्परतो व्या-वृत्तमित्याह * तेषामिति * तावच्छब्दो निश्चयार्थः । फलितं दर्शयति * अत इति * विशेषेष्वनुगतध-र्माभावोऽसिद्धो बाधव्यवस्थाहेतुत्वस्यैव तत्रानुग-तत्वादिति शङ्कते * बाधेति * सार्वत्रिकबाधव्यव-स्थाहेतुत्वं विशेषत्व,मुत क्काचित्कबाधव्यवस्थाहेतुत्व,-माहोस्विद्यत्र यो बाधस्तत्र विषये तस्य बाधस्य व्य-वस्थाहेतुत्वमिति, विकल्प्य प्रथमं प्रत्याह * नेति * सार्वत्रिकबाधव्यवस्थाहेतुत्वं विशेषः क्कचिदपि न प्रकाशत इत्यर्थः । द्वितीयं दूषयति * क्काचित्केति * चरमकल्पमाशङ्कते * तत्रेति * तर्हि विशेषस्य प-रस्परव्यावृत्तेरनुगतं लक्षणं न सिध्येदिति परिहरति * नेति * बाधस्वरूपमभ्युपगम्य तद्व्यवस्थाहेतुत्वं विशेष-त्वं नानुगतमस्तीत्युक्तम् । इदानीं बाध एव निरूपण-सरणिमधिरोढुं नार्हतीत्याह * बाधेति * बाधस्या-ननुगमेन च तद्व्यवस्थाहेतुत्वाऽननुगतिरिति शेषः । त-

च्छब्देन भ्रान्तिः परामृश्यते । तद्विपरीतार्थप्रमात्वमात्रेण कथमननुगमो बाधस्येत्यत आह *तदिति* तच्छब्देन रजतभ्रमपरामर्शे सर्पभ्रमबाधो न स्यादिति बाधस्याननुगमेन तद्व्यवस्थाहेतुविशेषस्याननुगमात्तत्साहितोपलम्भप्रमालक्षणस्याव्यापकता । न च तत्त्वमनुगतमस्ति स्ववृत्त्यवृत्तिभ्यामनुपपत्तेरित्यर्थः । प्रमासिद्धौ तद्विपरीतार्थप्रमालक्षणबाधसिद्धिस्तत्सिद्धौ च तद्व्यवस्थाहेतुविशेषसहितोपलम्भप्रमासिद्धिरितीतरेतराश्रयादसिद्धिर्लक्षणस्येत्याह * प्रमेति *

सम्यत्कमबाधिताध्यवसायित्वं ज्ञेयसादृश्यं वा ज्ञानस्य भविष्यतीत्यत आह ।

२८१ शङ्कान्तरनिराकरणम् ।

शङ्कान्तराणि चात्रातः पराणि याथार्थ्यविशेषणदूषणदूषितान्येवोपनिपतन्तीति[1] द्विरभिधानभयान्नोक्तानि ।

* शङ्केति * चशब्दादबाधितत्वादिखण्डनानि वक्ष्यमाणानि गृह्यन्ते । शङ्कान्तरं याथार्थ्यविशेषमाश्रितं पौनरुक्त्यभयान्नोक्तमित्यर्थः ।

सविशेषार्थानुभूतिः प्रमेति लक्षणस्य विशेषाननुगमेनाव्याप्तिरुक्ता साम्प्रतमतिव्याप्तिमाह ।

१८२ सविशेषार्थानुभव इति लक्षणेऽतिव्याप्त्युद्भावनम् ।

किञ्च तर्कज्ञानमाहार्यौ च संशयविपर्ययौ परिदृश्यमान एव विशेषे भवन्तीति तैरतिप्रसङ्गः स्यात् । नचा-

1 न्तीतितै रिति का० मु० पु० पा० ।

हार्य्यौ तौ नाभ्युपगन्तव्याविति युक्तम । विप्रलम्भकस्य वाक्यप्रयोगमूलतयाऽऽहार्य्यभ्रमस्य ज्ञाततत्त्वस्य च गुरोः शिष्यप्रबोधार्थं विचारं प्रवर्त्तयतश्चाहार्य्यसंशयानां भवत एव शास्त्रेऽनुमतत्वात् ।

* किं चेति * व्याप्तिपक्षधर्मत्वप्रमितिबलाद- ग्निमान्पर्वत इति विशेषावगमेऽपि यद्यग्निमान्न स्यात्तर्हि निष्कारणको धूमः प्रसज्येतातो ग्निमानेवा- यमिति तर्कज्ञानं विशेषोपलम्भे सत्येव जायमानं सविशेषार्थानुभूतिर्भवति न च तत्प्रमेति तत्र लक्षणातिव्याप्तिस्तथा रजतादिभ्रमस्य समानधर्मा- दिजनितसंशयस्य च विशेषाग्रहणजन्यत्वेऽप्यौत्प्रेक्षि- कसंशय औत्प्रेक्षिकविपर्ययश्च विशेषदर्शने सत्येव जायत इति ताभ्यां चातिव्याप्तिरित्यर्थः । आहार्यसं- शयविपर्ययावेव न स्तः कुतस्ताभ्यामतिव्याप्तिरित्यत आह * न चेति * कुत इत्यत आह * विप्रलम्भकेति * नदीतीरे फलासम्बन्धे दृश्यमाने एव नद्यास्तीरे फला- नि सन्तीति विप्रलम्भकवाक्यप्रयोगमूलतयाऽऽहार्य- भ्रमस्यानुमतत्वादन्यथा प्रामाण्यप्रसङ्गा"द्विमृश्य प- क्षप्रतिपक्षाभ्यामर्थावधारणं निर्णय" इति न्यायेन वि- दिततत्त्वस्य गुरोः शिष्यप्रबोधनार्थं शब्दो नित्यः अ- नित्यो वेत्याहार्यसंशयस्य तथाविधपूर्वपक्षभ्रमस्य विचारं प्रवर्त्तयत इष्टत्वात्तत्त्वज्ञानविरोधाद्विशेषाज्ञा- नमूलसंशयविपर्ययासम्भवादन्यथा निर्णयफलशास्त्रा- नारम्भप्रसङ्गादिति भावः ।

सम्यक् परिच्छेद इत्युदयनोदीरितलक्षणे सम्यग्विशेषणं निरास्थदिदानीं परिच्छेदविशेषणमतिदेशेन निरस्यति ।

२८३ पूर्वोक्तदोषोपसंहारः ।

परिच्छेदशब्दश्चानुभूतिपर्य्यायोऽनुभूतिदूषणं नातिक्रामतीत्यलम् ।

* परिच्छेदेति *

---

भाट्टदेशीयाभिमतप्रमालक्षणमुद्भाव्य भङ्गं भणति ।

२८४ भाट्टदेशीयलक्षणखण्डनम् ।

नाप्यव्यभिचार्य्यनुभवः प्रमेति युक्तम् । अव्यभिचारिपदस्य यदि तत्त्वविषयाद्यर्थत्त्वं तदा दूषणान्युक्तान्येवानुवर्त्तन्ते ।

* नापीति * ज्ञानं प्रमेत्युक्ते स्मृतावतिव्याप्तिस्तदर्थमनुभवग्रहणम् । भ्रमादिव्यावृत्त्यर्थमव्यभिचारीति । तत्त्वगोचरेच्छादिव्यावृत्त्यर्थमनुभवग्रहणम् । किमिदमव्यभिचारित्त्वं तत्त्वविषयत्त्वं, याथार्थ्यं वा,त सम्यक्त्वं,माहोस्विदर्थाविनाभूतत्त्व,मिति विकल्प्य प्रथमकल्पत्रयं प्रागुदीरितव्याख्यानलविप्लुष्टतया नोज्जीवितुमलमित्याह * अव्यभिचारीति *

अव्यभिचारित्त्वमनुभवस्यार्थाविनाभूतत्वमिति चतुर्थमुत्थापयति ।

२८५ चतुर्थविकल्पे विकल्पोपन्यासः ।

अथैवमुच्यते अव्यभिचारित्त्वमर्थाविनाभूतत्त्वं, तदा

प्रष्टव्यं कोऽस्यार्थः किं यदैवार्थ स्तदैव ज्ञानम्? उत यत्रार्थस्तत्रैव देशे ज्ञानम्? अथ यादृगर्थस्तादृगेवज्ञानं यत्तत्प्रमितिरिति? ।

* अथेति * दूषणविभागप्रज्ञप्तये विकल्पयति * तदेति * अस्याविनाभावपदस्य कोऽर्थ इत्यर्थः। समुद्रवृद्धिचन्द्रोदयवदेककालनियमोऽविनाभाव इत्येकं शृङ्गमाह * किमिति * धूमाग्न्योरिवैकदेशसम्बन्धोऽविनाभाव इत्यपरं शृङ्गमाह * उतेति * शिंशपात्वस्य वृक्षत्वाव्यभिचारिणस्तत्तादात्म्यं द्रष्टव्यमित्यवष्टम्भेन कल्पान्तरमाह * अथेति *

तत्राऽऽद्यमपवदति।

२८६ आद्यविकल्पनिरासः।

नाद्यः अतीतानागतानुमित्याद्यव्यापनात् । न द्वितीयः ज्ञानासमानदेशार्थप्रमितीनामव्यापनात्। ज्ञानसमानदेशमर्थमन्यत्रारोपयतोऽप्यनुभवस्य प्रमात्वापत्तेः । नापि तृतीयः ज्ञानार्थभेदवादे सर्वाकारेण तत्साम्यानुपपत्तेः । अभेदवादे तु भ्रमस्याऽपि तथाभ्युपगन्तव्यत्वप्रसङ्गेन विशेषणवैयर्थ्यापातात्। तैस्तैश्च विशेषैः सादृश्यस्य विवक्षितत्वे यथार्थताप्रस्तावोक्तान्येव दूषणान्यावर्त्तन्त इति।

* नेति * कुत इत्यत आह * अतीतेति * विशिष्टनदीपूरणालिङ्गेनाभूद्वृष्टिरित्यनुमीयते मेघोदयदर्शनाद्भविष्यति वृष्टिरिति। न चानुमानकाले सोऽर्थो

स्तीति तत्राऽव्याप्तिरित्यर्थः। आदिपदेन कालान्तरभाविनियोगादिबोधकागमाद्युपादीयते। एकदेशसम्बन्धो ज्ञानज्ञेययोरविनाभाव इति द्वितीयोऽपि न हृद्य इत्याह *नचेति* घटादिप्रमितीनामनेवंरूपतया लक्षणस्याव्यापकत्वादित्याह *ज्ञानेति* ज्ञानेन सह विभिन्नदेशा ये घटाद्यर्थास्तज्ज्ञानानां प्रमात्वं न स्यात् तज्ज्ञानस्यात्मैकगुणस्य तन्निष्ठत्वाद्घटादीनां धराद्यधिकरणत्वादिति भावः। आत्मसमवेता ये सुखादयस्तज्ज्ञानानामप्यात्मसमवेततया समानदेशत्वात्प्रमात्वं सम्भवतीत्यत उक्तं *ज्ञानासमानदेशेति* अर्थेन सहैकदेशनिष्ठोऽनुभवः प्रमेति लक्षणस्याव्याप्तिमभिधायेदानीमतिव्याप्तिं दर्शयति * ज्ञानेतिं * ज्ञानेन सह समान एको देशो यस्यार्थस्य स तथोक्तः। आत्मत्वादिधर्मस्यान्यत्रारोपज्ञानानामारोप्यमाणधर्मस्य चात्मदेशत्वेन देशाव्यभिचाराद्देहादावात्मत्वादिभ्रमेऽतिव्याप्तिरित्यर्थः। यादृगर्थस्तादृगाकारज्ञानं प्रमेति परिशिष्टपक्षं प्रतिषेधति * नापीति * ज्ञानज्ञेययोः सर्वात्मना सादृश्यं विवक्षित,मुत येन केन चिद्रूपेण, किं स्विदर्थविशेषणीभूतरूपेण ज्ञानस्यापि विशेषणतया सादृश्यं विवक्षित,मिति त्रिधा विकल्प्य प्रथमकल्पेऽपि तयोर्भेद उताभेद इति विकल्प्याऽऽद्यमपवदति * ज्ञानेति * घटत्वज्ञानत्वद्रव्यत्वगुणत्वादिमहद्वैलक्षण्यान्न सर्वसाम्यमित्यर्थः। ज्ञानज्ञेययोरभेदे सर्वसाम्योपपत्तिरिति प्रथमविकल्पस्य द्वितीयं कल्पमाशङ्क्याह * अभेदेति * यदन्तर्ज्ञेयतत्वं तद्बहिर्व-

दवभासत इति रजतादिज्ञानानामप्यर्थाभेदेन सर्व-सामान्यस्याभ्युपगन्तव्यतया कथितलक्षणं तत्रागतमिति यथार्थेति विशेषणमसमर्थमित्यर्थ । प्रकाशमानरूपैर्विशेषणतया ऽर्थसाम्यमनुभवस्येति तृतीयकल्पमाशङ्क्य पराकरोति * तैस्तैरिति * प्रकाशमानतया प्रसिद्धैरिति यावत् । विशेषमात्राभिधाने भ्रमादावतिव्याप्तिर्विशेषव्यक्त्यभिधानेऽननुगम इत्यादि याथार्थ्यखण्डनानि प्रसज्यन्त इत्यर्थः । चकारात् द्वितीयं कल्पं येन केन चित्सत्वप्रमेयत्वादिना साम्यादतिव्याप्तिर्भ्रमादाविति निरास्थत् ।

---

बौद्धानां प्रमालक्षणमुपस्थापयति ।

२८७ बौद्धलक्षणखण्डनम् ॥

अविसम्वाद्यनुभवःप्रमेत्यपि न युक्तम् । अविसंवादित्वं हि ज्ञानान्तरेण तथैवोल्लिख्यमानार्थत्वं वा ? ज्ञानान्तरेण विपरीततया प्रतीयमानार्थत्वं वा ? अप्रतीयमान व्याप्यविषयत्वं वा ? अन्यदेव वा किञ्चित् ? ।

* अवीति * विसम्वादराहित्यमविसम्वादित्वमिति यावत् । पदकृत्यं तु पूर्ववदिति । अभावेऽपोद्यमाने हि भाव एवावशिष्यत इति विसम्वादराहित्यं ज्ञानान्तरसंवाद इति कल्पमाह *अवीति* विसंवादो बाधस्तद्भिन्नत्वं ज्ञानांतरेणान्यथाबोध्यमानार्थत्व-

१ याथात्म्येति पु० पा० ॥

मिति कल्पान्तरमाह । ज्ञानेति । विपरीततया पूर्वप्रकाशितरूपाद्रूपान्तरेणाप्रकाशमानत्वमिति यावत् । नांतरीयकार्थदर्शनं अन्यज्ञानस्य संवाद इति केषांचिन्मतमनुरुध्य प्रकारान्तरेण विकल्पयति * प्रतीति * प्रतीयमानो व्याप्यो यस्य व्यापकस्य तद्विषयत्वमित्यर्थः। यद्वा प्रतीयमानश्चासौ व्याप्यश्च तद्विषयत्वमिति । अर्थक्रियाकारिवस्तुविषयत्वमविसंवादित्वमिति पक्षान्तरमाह * अन्यदिति *

२८८ प्रथमकल्पेऽतिव्याप्तिः ।

तत्र प्रथमकल्पमतिव्याप्त्या दूषयति ।

न प्रथमः धारावाहिनो भ्रमस्य प्रमात्वप्रसङ्गात् । नच प्रमाभूतं ज्ञानान्तरं विवक्षितमिति वाच्यम् । प्रमाया एव लक्ष्यमाणत्वात् ।

* नेति * ज्ञानमात्रेण तथोल्लिख्यमानविषयत्वमविसंवादित्वमुत प्रमयेति विकल्प्य प्रथमं प्रत्याह * धारेति * मनुष्योऽहमिति देहात्मभ्रमस्य सततमुत्पद्यमानतया कथितलक्षणमस्तीति तत्रातिव्याप्तिरित्यर्थः । प्रमाभूतज्ञानान्तरेण तथैवोल्लिख्यमानार्थत्वं विवक्षितमिति द्वितीयमाशङ्क्याह * न चेति * प्रमासिद्धौ तथा तथैवोल्लिख्यमानार्थत्वविशेषणासिद्ध्या विशिष्टलक्षणसिद्धिस्तत्सिद्धौ च प्रमासिद्धिरिति परस्पराश्रय इत्यर्थः ।

ज्ञानान्तरेण विपरीततया ऽप्रतीयमानत्वमविसंवादित्वमिति द्वितीयं निषेधति ।

२८९ द्वितीयविकल्पनिरासः ।

नापि द्वितीयः अजातबाधभ्रमव्यापनात् स्वस्थदशोत्पन्नस्य शङ्खशङ्खज्ञानादेर्दुष्टेन्द्रियदशोत्पन्नतत्पीतिमज्ञानाद्युल्लिखितविषयवैपरीत्यस्याप्रमात्वप्रसङ्गाच्च । प्रमित्यनुल्लिखितार्थवैपरीत्यभावविवक्षायां तु प्रमाया एव लक्ष्यमाणत्वादित्युक्तमनुषजति । अदुष्टकरणकज्ञानेनाबाधितत्वं विवक्षितमिति चेत्तदेव तर्हि प्रमालक्षणमस्तु । किञ्च दुष्टत्वनिरूपणमन्तरेणादुष्टत्वस्य दुर्निरूपत्वात् । ननु किमेतावता दुष्टत्वं विपरीतज्ञानप्रयोजकस्तद्धेतुगतो विशेष इति सुवचमेवेति । न विपरीतपदव्यवच्छेद्याप्रमितौ तदुपादानवैयर्थ्यात् । तदनुपादाने[1] च ज्ञानजनकत्वमात्रं दुष्टत्वमित्यदुष्टकारणजं ज्ञानं नास्त्येवेति स्यात् विपरीतपदव्यवच्छेद्या प्रमैवेति चेन्न । तस्या एव लक्ष्यमाणत्वात् तदीयस्वरूपस्येतरव्यावृत्तस्याद्याप्यप्रतीतेः कुतो व्यवच्छेदः प्रत्येतव्य इति व्यवच्छिन्नतज्ज्ञानमन्तरेण व्यवच्छिन्नतज्ज्ञानमशक्यमित्यात्माश्रयान्योन्याश्रयौ अनवस्था वा ।

एकोऽनेकविशेषेऽर्थे विशेषो यत्र लक्ष्यते ।
तद्विशेषान्तरान्यत्वाद्दोष स्तत्रैव धावति ॥ ३२॥

* नापीति * ज्ञानमात्रेण विपरीततयाऽनु-

१ तदुपादा इति सो० पु० पा० ।

ल्लिख्यमानार्थत्व,मुत प्रमाभूतेन, किं स्विददुष्टकरणजेने,ति त्रिधा विकल्प्य प्रथमं प्रत्याह * अजातेति * यस्मिन् भ्रमे बाधो न जायेत तत्रोक्तलक्षणमतिव्यापकमित्यर्थः। न चैवं भूतो भ्रम एव नेति वाच्यम्। परपक्षभ्रमस्य तथात्वादन्यथैकदर्शनपरिशेषापातात्। अतश्च सम्प्रति तन्निरासप्रयासानुपपत्तेरिति। ज्ञानान्तरेणान्यथाऽनुल्लिख्यमानार्थानुभवः प्रमेति लक्षणस्यातिव्याप्तिमभिधायाव्याप्तिमिदानीं दर्शयति * स्वेति * निर्दोषदशायामुत्पन्नस्य शुक्लशङ्खादिज्ञानस्य दुष्टदशोत्पन्नशङ्खपीतिमादिज्ञानेनोल्लिखितं संसृष्टविषयीकृतं विषयवैपरीत्यं यस्य तस्योक्तलक्षणाभावादप्रमात्वं स्यादित्यर्थः। आदिपदेन स्थाणौ स्थाणुरिति बुद्धेर्दुष्टदशोत्पन्नपुरुषविपरीततया बोधितार्थत्वेनाप्रमात्वं सङ्गृह्यते। प्रमया अनुल्लिख्यमानविपरीतार्थत्वमनुभवस्याविसम्वादित्वं तेन नाव्याप्तिरिति द्वितीयकल्पमाशङ्क्याह * प्रमित्येति * प्रमित्याऽनुल्लिखितमप्रकाशितमर्थस्य विपरीतत्वं यस्य स तथोक्तस्तस्य विवक्षायामिति यावत्। प्रमाया एव लक्ष्यमाणत्वादित्यत्रोक्तोऽन्योन्याश्रयः स्यादित्यर्थः। लक्षणं लक्ष्याधिकरणं वक्तव्यं अतश्च प्रमयाऽनुल्लिखिताविपरीतार्थोऽनुभव इति लक्षणस्य प्रमानिष्ठत्वे प्रमायाश्च लक्षणविशेषणतया लक्षणान्तर्गतायाः स्ववृत्त्यापात इतितोरर्थः। अदुष्टकरणजज्ञानेनानुल्लिख्यमानार्थविपरीतत्वमविसंवादित्वमिति चरमक-

---

१ ज्ञानेनोपप्लवितामिति सो.पु.पा.।

रूपमवलम्ब्यते * अदुष्टेति * अदुष्टकरणजज्ञानं प्रमेत्युक्ते व्यभिचाराभावादितरद्व्यर्थमतश्च व्यर्थविशेषणामिदं लक्षणमिति दूषयति * तादिति * न च स्मृताव‌तिव्याप्तिर्ज्ञानपदेऽनुभवाभिधानेन सौस्थ्यादिति भावः ।

अदुष्टकरणजन्यज्ञानानुल्लिख्यमानार्थविपरीतत्वविशेषणवैयर्थ्यं कथितं । सम्प्रति तदेव न निरूपणसरणिं सहत इत्याह * किं चेति * असिद्धिः लक्षणस्येति शेषः । अदुष्टेति नञोऽभावविरुद्धान्यत्वानामन्यतमार्थत्वेऽपि प्रतियोगिभूतदुष्टत्वनिरूपणमन्तरेणादुष्टत्वमसिद्धं तद्विशिष्टं लक्षणमप्यसिद्धमिति दुष्टत्वं च प्रमाधीननिरूपणं सा चादुष्टत्वसिद्ध्येति चक्रकापात इति भावः । यत्रान्यतमस्यापि नान्यतः सिद्धिस्तत्र चक्रकादय उपसर्पन्ति इह तु दुष्टत्वं स्वलक्षणादन्यत एव सिद्ध्यति तेन न चक्रकक्रकचविदारणमिति चोदयति *नन्विति* दुष्टत्वनिरूपणमंतरेणादुष्टत्वं दुर्निरूपमित्येतावता किमिति यावत् । दुष्टत्वासिद्धावदुष्टत्वसिद्धिस्तत्सिद्धौ च दुष्टत्वसिद्धिरिति परस्पराश्रय इति नेत्याह *दुष्टत्वमिति* दुष्टत्वमिति लक्ष्यनिर्देशः इतरल्लक्षणम् । विशेष इत्युक्ते कारणसमवेतत्वरूपकार्यगतविशेषेऽतिव्याप्तिस्तन्मा भूदित्याह * हेत्विति * तावत्युक्ते कारणगतकार्यजननशक्तावतिव्याप्तिस्तन्माप्रसञ्जीदित्याह *तदिति* तत्पदेन विपरीतप्रत्ययपरामर्शः । तावत्युक्ते चक्षुष्ट्वादावतिप्रसक्तिस्तन्निरसनायाह * ज्ञानेति * चक्षुष्ट्वादि न ज्ञानप्रयोजकं व्यभिचारात् । एवमपि गुणे-

ऽतिप्रसक्तिस्तत्पराकरणं *विपरीतेति* विपरीतज्ञान-प्रयोजकमितीन्द्रियस्वरूपे प्रसक्तिनिवारणाय तद्धे-तुगत इति विशेषणम् । तावति कथित एकदेशकालाव-स्थानरूपमेलकेऽतिप्रसक्तिस्तद्वारणं विशेष इति । न च तद्विशेषः सकलकारणसाधारणत्वादिति ।

विपरीतज्ञानेत्यत्र विपरीतपदव्यावर्त्यमस्ति न वा, अस्ति चेत् प्रमितं न वा । न चेत् विशेषणमुपादीयते न वा । यथायस्तत्राह *नेति* अप्रमितस्य सप्तमरसादिवद्व्यव-च्छेदानर्हत्वाद्विपरीतेति विशेषणं व्यर्थमित्यर्थः । तर्हि विपरीतपदं परित्यज्य ज्ञानजनकेत्यादिलक्षणमाचक्ष्महे इति द्वितीयमाशङ्क्याह * तदिति * प्रमाप्रयोजकगु-णेऽतिव्याप्तिरिति भावः । प्रमितैव प्रमा विपरीतपदेन व्यवच्छिद्यत इति द्वितीयमाशङ्कते * विपरीतेति * लक्षणप्रतीतेः प्राक् प्रमाया अप्रतीतेस्तत्प्रतियोगिकस्त-द्धर्मिको वा व्यवच्छेदः प्रमातुमशक्य इति परिहरति * नेति * स्वरूपसत्याः प्रमाया व्यवच्छेदः किं न स्यादित्यत आह * तदिति * प्रमास्वरूपस्याप्रमाव्या-वृत्तस्याद्याप्यसिद्धत्वादप्रमायां कुतः प्रतियोगिनो व्यवच्छेदः प्रत्येतव्यो—ज्ञेयो न तु कुतश्चिदात्मनोऽपि तत्प्रसङ्गादिति सम्बन्धः । न च भेदः सत्तामात्रेण प्र-तियोगित्वोपयोगी, दूरतरगिरिशिखरपरिवर्तिनोस्त-र्वोर्व्यावृत्त्यप्रतीतौ प्रतियोगित्वाप्रतीतेरित्याशयः । फ-लितमाह *इतीति*व्यावृत्तप्रमाज्ञानाभावे दुष्टजन्येत्या-दिलक्षणाधीनव्यावृत्तप्रमाज्ञानासिद्धिरिति स्वासिद्धौ स्वसिद्धिरित्यात्माश्रयः।प्रमासिद्ध्या लक्षणसिद्धिरतो ना-

त्माश्रय इत्यत आह *अन्योन्येति* प्रमासिद्ध्या लक्षणं सिध्यति लक्षणसिद्ध्या प्रमा सिध्यतीति। ततो लक्षणान्तरेणैव प्रमासिद्धिस्तस्य च प्रमान्तरसिद्धैवेति चेत्तत्राह *अनवस्थेति* न चैतत्खण्डनमेतल्लक्षणस्यासाधारणं किं तु सार्वत्रिकमिति दर्शयन् श्लोकेन सङ्गृह्णात्येक इति। यत्रानेकविशेषेऽर्थे एको विशेषो लक्ष्यते तत्रैव आत्माश्रयादिदोषो धावतीत्यन्वयः। हेतुं व्याचष्टे * तदिति * स चासौ विशेषान्तरेभ्योऽन्यश्चेति तथोक्तस्तद्भावस्तत्त्वं तस्मादिति यावत्। एतदुक्तं भवति यत्राबादिभेदसहिते पृथिवीलक्षण एको विशेषो लक्ष्यते गन्धवतीति तत्रगुणवतीत्युक्ते ऽबादिप्रसक्तिं निरसितुं गन्धेति विशेषणं वाच्यं ततश्च व्यवच्छेद्याप्रतीतौ विशेषणवैयर्थ्यं, प्रतीतौ च स्वरूपेण प्रतीतिरप्रयोजिकेति व्यवच्छिन्नप्रतीतिर्वाच्या एवं च व्यवच्छिन्नपृथिवीत्वसिद्धौ व्यवच्छिन्नाबादिव्यवच्छेदे पृथिवीसिद्धिरित्यात्माश्रय एवमन्योन्याश्रयाद्यपि सुसंपादमिति।

प्रतीयमानव्याप्याविषयत्वमविसम्वादित्वमिति तृतीयं पराचष्टे।

२९० तृतीयविकल्पनिरासः।

नापि तृतीयः व्याप्यशब्देन व्याप्यमात्रं? तद्विशेषो-वा? कश्चिदभिप्रेतः स्यात्। आद्ये सधूमाग्निविषयस्य स्व प्नज्ञानस्यानात्तत्राक्यजबोधस्य वा नाप्रमात्वं स्यात्। नापि द्वितीयः स ह्यर्थक्रिया वा,? सामग्री वा, ? उभयत्रापि

पूर्व्वदोषानिवृत्तेः । एकदा च सर्व्वत्र प्रमाणासम्भवेन क्रमाश्रयणे तत्तदर्थक्रियातत्तत्सामग्रीपरम्परावगमनियमाभ्युपगमे एकस्मिन्नेव विषये पुरुषायुषः पर्य्यवसानप्रसङ्गात् । विच्छेदाभ्युपगमे त्वान्तिमावगमस्याप्रामाण्यादा प्रथममप्रमात्वापत्तेः । वास्तवतदर्थक्रियात्वस्य च दुर्न्निरूपत्वेन व्यवहारानर्हत्वात् । तथाप्रतीतिमात्रस्याप्रमासाधारण्यात् ।

* नापीति * व्याप्यशब्दस्य व्याप्तिविषयसामान्ये तद्विशेषे च साधारण्याद्विकल्पयति * व्याप्येति * प्रतीयमानव्याप्यमात्रविषयोऽनुभवः प्रमेति प्रथमकल्पे लक्षणार्थः स चानुपपन्नोऽतिप्रसक्तेरित्याह *आद्य इति * अग्निव्याप्यो धूमः स्वप्ने च प्रतीयमानधूमवद्वन्हिविषयप्रत्ययो जायते न चासौ प्रमा, अस्ति च प्रतीयमानव्याप्यविषयानुभवत्वं लक्षणमित्यातिव्याप्तिरित्यर्थः।अस्वप्नप्रत्ययेन प्रतीयमानव्याप्यविषयत्वमविसम्वादित्वमतो नातिव्याप्तिरित्यत आह * अनाप्तेति * सधूमो वन्हिरचले ज्वलतीति वाक्याभासजनितप्रत्ययस्य कथितलक्षणादप्रमात्वं न स्यादित्यतिव्याप्तिरित्याशयः । प्रतीयमानव्याप्यविशेषविषयत्वमविसम्वादित्वमिति द्वितीयं प्रसज्य प्रतिषेधति *नापीति* दूषणं स्फुटयितुं विकल्पयति * स हीति * अर्थक्रिया दाहपाकादिरूपा । सामग्री तृणपर्णादिरूपा । उभयोरन्यतरोऽस्तु नैकतरपक्षानिर्बन्धस्ततः कि-

मित आह * उभयेति * अर्थक्रियासामग्रीविशिष्टकु-
शानुविषयस्वप्रत्ययस्यानाप्तवाक्यजन्यज्ञानस्य वा
तादृग्विषयस्याप्रमात्वं न स्यादित्यर्थः । व्यापकविष-
यप्रत्ययस्यैव व्याप्याविषयत्वमविसम्वादित्वं, उत
व्याप्यविषयप्रत्ययस्तदनन्तरभाविनो व्यापकप्रत्यय-
स्याविसम्वाद इति विकल्प्य प्रथमं पराचष्टे * एकेति *
"युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्ग"मिति वचनादेक-
दैव व्याप्यव्यापकविषयप्रत्ययद्वयं न चातुरीं धत्ते । ना-
प्येको व्याप्यव्यापकद्वयगोचरः, प्रतीयमानव्याप्य-
विषयत्वोक्तेः अन्यथा आत्माश्रयादिति प्रथमप-
क्षासम्भवेन द्वितीय आश्रयणीय इत्यर्थः । आश्रियतां
तर्हि द्वितीयकल्पस्तत्राह * क्रमेति * अर्थक्रिया व्याप्य-
शब्दार्थश्चेत्प्रथमतस्तां गृहीत्वा द्वितीयलक्षणे व्यापको
ग्राह्यस्ततश्चार्थक्रियाज्ञानस्यापि प्रमात्वसिद्ध्यर्थमेव तद्व्या-
प्यार्थक्रियान्तरमवसेयमेवं तत्र तत्रापत्त्येकस्मिन्नेव विष-
ये पुरुषायुषोपक्षयाद्विषयान्तरसंचारो मुक्तिसुषुप्ती च न
स्यातामेवं सामग्रीव्याप्यत्वेऽपीत्यर्थः । व्याप्यप्रत्ययस्य
त्रिचतुरकक्षासु विश्रामाश्रयणान्नैकोऽपि दोष इत्यत
आह *विच्छेद इति* यस्मिन्विच्छेदस्तस्यैवाप्रमात्वमतः
पूर्वतनस्येत्येवं प्रथमपर्यन्तमप्रमात्वमापतेदित्यर्थः । किं
च प्रतीयमानवास्तवार्थक्रियालक्षणव्याप्याविषयत्वम-
विसम्वादित्व,मुत वास्तवत्वादिविशेषविधुरप्रतीय-
मानार्थक्रियाविषयत्वमिति विकल्प्याद्येऽसम्भवमाह
* वास्तवेति * प्रमितत्वव्यतिरेकेण वास्तवत्वासि-
द्धेरद्यापि प्रमितेरसिद्धेर्वास्तवत्वासिद्धिरतश्च प्रतीय-

मानव्याप्यविषयत्वानुभवात्प्रमेति व्यवहार्यो न भवतीत्यर्थः । गत्यन्तराभावाद्द्वितीयकल्पाश्रयणेऽतिप्रसक्तेरनिरास इत्याह * तथेति * स्वप्नप्रत्ययादावपि प्रतीयमानव्याप्यमात्रविषयत्वं सम्भवतीत्यर्थः ।

कल्पत्रयनिराकरणमपि महदिन्द्रजालमेव मदभिसंहितार्थास्पर्शनादिति चतुर्थं कल्पं चोदयति ।

२९१ चतुर्थकल्पनिरासः ।

नन्वेवं चतुर्थः पक्षोऽस्तु तथा हि—अर्थक्रियाकारिविषयत्वं वाऽविसंवादित्वमिति, यथाह "प्रमाणमविसम्वादि ज्ञान,मर्थक्रियास्थितिश्चाविसम्वाद इति । न। सामान्यतो विवक्षायां भ्रान्तावपि प्रसङ्गात् । प्रतीयमानरूपेणार्थक्रियाकारित्त्वमर्थस्य विवक्षितमिति चेन्न । दुरवधारणत्वात्। तदर्थक्रियादर्शनात्तदवधारणमिति चेन्न । विनाऽप्यर्थक्रियां तद्दर्शनसम्भवात् । अर्थक्रियाप्रमितिरभिधित्सितेति तु दूषितमेव प्रमाया एव निरूप्यमाणत्त्वात्। अभिप्रायाविसम्वादात्प्रमाणं सर्व्वमुच्यत इतिचेन्न । तदा अभिप्रायाविसम्वादस्य स्वप्नादिप्रत्ययेऽपि सम्भवात् । कालान्तराविसम्वादस्य च दुरवधारणत्वात् ।

*नन्विति* तत्र सतोनिर्वचनतापातान्नैवमित्यत आह *तथाहीति* उक्तमर्थमाप्तवाक्येन द्रढयति *यथेति*

१ संवादित्वमिति सो.पु.पा. ।

प्रमाणमिति धर्मकीर्तेर्लक्ष्यनिर्देश इतरल्लक्षणम्। रजतादिज्ञानव्यावृत्त्यर्थमविसम्वादीति विशेषणं । न च स्मृतावतिव्याप्तिः स्मृतिप्रत्यभिज्ञयोस्तन्मते विसम्वादात् । कस्तर्ह्यविसम्वादो यद्वतो ज्ञानस्य प्रमाणत्वमित्यत आह *अर्थेति * स्थितिः सत्वमित्येव । तृतीयकल्पान्तर्गतोऽयं चतुर्थः कल्पो न पृथगुद्भावनीय इति चेन्न। तत्र व्याप्यपुरस्कारेणार्थक्रियोद्भावनादिह च स्वतन्त्रतया तदुपन्यासादनुक्तदोषान्तराभिधित्सया पृथग्विकल्पोपपत्तेरिति ।

येन केन चिदाकारेणार्थक्रिया विवक्षिता, किं वा प्रतीयमानाकारेणेति, विकल्पयाद्यमपवदति * नेति * रजतज्ञानविषयस्यापि येन केन चित्पुरोवर्त्तित्वशुक्तित्वाद्याकारेणार्थक्रियाकारित्वमस्तीत्यतिव्याप्तिरित्यर्थः । द्वितीयं कल्पमुद्भावयति * प्रतीयमानेति * यथाकथञ्चिदर्थक्रियाकारित्वं न विवक्षितं किं तु प्रतीयमानाकारेण, प्रकृते च प्रतीयमानरजताकारेणार्थक्रियाकारित्वं नास्ति तेन नातिव्याप्तिरित्यर्थः । अर्थक्रियाशक्तत्वं विवक्षितमुतार्थक्रियाजनकत्वमेवेति द्विधा ऽपि लक्षणासिद्धिरित्यभिप्रेत्य दूषयति * नेति * शक्तेरतीन्द्रियत्वात्प्रथमतः प्रमाणभूमा ज्ञातुमशक्यतया तद्विशिष्टलक्षणासिद्धिरिति। द्वितीयेऽपि भ्रान्तिज्ञानस्यार्थक्रियाजनकत्वाद्विषयस्य वास्तवार्थक्रियाकारित्वं दुरवधारणमित्यसिद्धिरिति भावः । प्रतीयमानाकारस्यार्थक्रियाशक्तत्वमर्थक्रियादर्शनादनुमीयत इति शङ्कते * तादिति * यद्वा घटस्य तत्व-

व्यवस्थापकोऽनुभव एव यथा तथा, प्रतीयमानाऽर्का-र्थक्रियादर्शनात्तथात्वं निश्चेतव्यमित्यनुभवेन व्यवस्थाप्यत इति शङ्कते * तदिति * अर्थक्रियादर्शनमात्रेण तथात्वाधिगतिरुत तत्प्रमितिर्येति विकल्प्य प्रथमं प्रत्याह * नेति * यथा रजतं विनाऽपीदं रजतमिति प्रतीतिस्तथाऽर्थक्रियाव्यतिरेकेणापि तद्दर्शनसम्भवान्न तन्मात्रेण तथात्वावगतिरित्याशयः। द्वितीयमाशङ्क्य प्रतिषेधति * अर्थेति * प्रमाया एव निरूप्यमाणत्वादित्यात्माश्रयादिना दूषितत्वमित्यर्थः। अर्थक्रियाकारिविषयत्वं ज्ञानस्य नाविसम्वादित्वमपि तु ज्ञानविषयत्वे योऽभिप्रायो घटेनोदकमाहरिष्यामीति तस्याविसम्वादित्वमेकाविषयतया ज्ञानस्योच्यत इति शङ्कते *अभिप्रायेति * तत्कालीनाऽविसम्वाद उत कालान्तरीय इति विकल्प्याऽऽद्यमतिव्याप्त्या दूषयति *नेति* द्वितीयेऽसम्भवमाह *कालेति* अविसम्वादो नाम बाधाभावः स च केषांचित्प्रत्यक्षो, ऽनुमेयो वा, परेषां योग्यानुपलब्धिलिङ्गो वा, सर्वथाऽपि दुरवधारण एव, प्राकृतप्रत्यक्षस्य वर्तमानमात्रगोचरत्वात्कालान्तराविसम्वादेन व्याप्तलिङ्गाभावादयोग्यत्वाच्च तस्येदानीं षष्ठप्रमाणानवसरादित्यर्थः।

प्राप्तियोग्यत्वमर्थस्याविसम्वादित्वन्तद्गोचरानुभूतिः प्रमेत्याशङ्क्याह।

२९.२ प्राप्तियोग्यत्वमविसम्वादित्वमित्यस्य निरासः।

एतेन प्राप्त्यादियोग्यताऽविसंवादार्थ इत्यपि निरस्तम्।

दुराबाध इव चायं धर्मकीर्त्तेः पन्था इत्यत्राहितेन भाव्यमिहेति ।

* एतेनेति * वास्तवप्राप्तियोग्यताया दुरवधारणत्वात्प्रातिभासिक्या रजतादावपि सम्भवाद्यथाकथंचित्प्राप्तियोग्यता प्रतीयमानाकारेणेत्यादिविकल्पासंहत्वाच्चेत्यर्थः । आदिपदेन प्रवृत्तियोग्यताग्रहः । मन्दबुद्धिमोहमात्रप्रयोजनतया प्रणीतमिदं लक्षणं धर्मकीर्त्तिनेति साक्षेपमुप संहरति * दुराबाध इति * दुःखेन बाधो यस्य स तथोक्तः । इव ग्रहणान्मन्दबुद्धीनामबाध्य इव भातीति तस्मिन् मार्गे समाहितेन भवितव्यं विश्रम्भेन परिहर्तव्य एवायं मार्ग इत्यर्थः ।

बौद्धाभिमतं लक्षणान्तरं आशङ्क्य निरस्यति ।

२९३ बौद्धाभिमतलक्षणान्तरनिरासः ।

अबाधितानुभूतिः प्रमेत्यपि निरस्तम् । तदानीं बाधाविरहस्यातिप्रसञ्जकत्वात् । कालान्तरेऽपि च बाधाविरहस्य दुर्निरूपत्वात् । स्वतो बाधाविरहस्याऽतिप्रसञ्जकत्वात् । सर्वजनबाधाविरहस्य च दुरवधारणत्वादिति ।

* अबाधितेति * व्यवच्छेद्यं पूर्ववत् अनुभूतित्वनिरासेन निरस्तमित्यर्थः । किं च तत्कालबाधाराहित्यं पुन कालान्तरेऽपि तद्राहित्यमिति विकल्प्य प्रथमं पराचष्टे * तदानीमिति * प्रतीतिकाले बाधराहित्यं कालान्तरबाधेऽपि विद्यत इत्यतिव्याप्तिरित्यर्थः । द्वितीयमसम्भवेन दूषयति * कालेति * किं च स्वस्य

१ विकल्पाग्रहत्वाच्चेति सो० पु० पा० ।

बाधहीनत्वं विवक्षितमुत सर्वजनानामिति विकल्प्य प्रथमं प्रत्याह * स्वत इति * स्वस्य द्रष्टुरिति यावत् । भ्रान्तिरपि भ्रान्तपुरुषस्याबाधितेति लक्षणमतिव्यापकमित्यर्थः । न च भ्रान्तिर्भ्रान्तपुरुषस्याबाधिता नास्ति तस्यैव कालान्तरे बाधात् भ्रान्तः सम्यक् न वेति स इति न्यायादिति साधु, सञ्जातभ्रमाणामनुपजातबाधानां निधनोपलम्भादिति । प्राकृतः सर्वजनबाधवैधुर्यस्य बोद्धुमशक्यतया लक्षणासिद्धिरिति द्वितीयं दूषयति * सर्वेति * लक्षणखण्डनसमाप्ताविति शब्दः ।

प्रमालक्षणान्तरमाशङ्क्य निरस्यति ।

२९४ प्रमाया लक्षणान्तरनिरासः ।

तर्कसंशयाविपर्ययस्मृतिव्यतिरिक्ता प्रतीतिः प्रमेत्यपि न, स्मृतिव्यतिरिक्तत्वखण्डनन्यायेन निरस्तत्वादिति ।

* तर्केति * प्रतीतिः प्रमेत्युक्ते तर्कादिप्रतीतेस्तथात्वप्रसक्तिं निरस्यति तर्केत्यादिविशेषणैः । यत्किञ्चित्तर्कादिव्यतिरिक्तत्वं तथात्वमुत सर्वतर्काद्यतिरिक्तत्वमाद्ये तर्कादिविशेषेऽतिव्याप्तिरितरस्मिन्नसम्भवोऽसर्वज्ञानां तादृशज्ञानायोगादिति स्मृतिव्यतिरिक्तखण्डनन्यायः ।

---

आत्मत्वजातिमानात्मेतिवत्प्रमात्वजातिमती प्रमेति लक्षणमस्तु तर्हीत्यत आह ।

२९.५ प्रमात्वजातिमत्त्वं प्रमालक्षणमिति पक्षनिरासः ।

जातिसङ्करमिच्छतश्च प्रमात्वलक्षणजात्यभिसम्बन्धात् प्रमेत्यपि दुर्लक्षणम् । अस्याज्ञातस्य तद्व्यवहारजनकत्वे प्रमायामप्रमाभ्रमसंशयौ न स्याताम् । दोषाभावसहकृतस्य तथात्वे चाजायमानभ्रमसंशयप्रमादिव्यवहारे ज्ञानमात्रावगमोदाहरणेऽपि तदापत्तेः ।

* जातीति * जातिमतीत्युक्ते भ्रान्तावतिव्याप्तिस्तन्निरसनं प्रमात्वेति । जातिसङ्करं बाधकमिच्छतो जातेः प्रमात्वस्याभावादलक्षणमेतत्साङ्कर्यं च, प्रमात्वस्य परोक्षत्वेन परापरभावानिरूपणादित्यर्थः । संस्कारमात्रातिरिक्तादुष्टकरणजन्यप्रतीतित्वं प्रमात्वव्यञ्जकं, इन्द्रियाजन्यप्रतीतित्वं परोक्षत्वव्यञ्जकमिति व्यञ्जकोपाधिभेदान्नास्ति साङ्कर्यमित्यत आह * अस्येति * प्रमात्वजातियोगित्वलक्षणमज्ञातं सत्तामात्रेण यदि प्रमात्वव्यवहारजनकं तर्हि सुरसरित्परिसरवासिनामार्द्रमरिचादावुत्पन्नायां प्रमायां प्रमा वाऽप्रमा वेति संशयानुपपत्तेः, सुगतसमयानुसारिणां निगमोद्गतावगमेऽप्रमात्वभ्रम एव न स्या,त्प्रमैवेति विशेषज्ञानेन लक्षणाधीनेन विरोधादिति भावः । अज्ञातमेव लक्षणं यद्यपि प्रमात्वव्यवहारकारणं तथाऽपि न स्वयमेव, किं तु दोषाभावसहकृतमतो यत्र दोषस्तत्र भ्रमादिव्यवहारस्तदभावे प्रमात्वव्यवहार इत्याशङ्क्याह * दोषेति * तथात्वे प्रमात्वव्यवहारज-

नकत्वे इति यावत्।अज्ञायमानो भ्रमसंशयादिव्यवहारो यस्मिन् ज्ञाने तत्तथोक्तं आदिपदेन प्रमात्वग्रहः। यत्र भ्रमादिव्यवहारो न जायते ज्ञानमित्येव गम्यते तत्र दोषाभावस्य वस्तुदृश्या विद्यमानतया तत्सहकृतं लक्षणं प्रमात्वमेव ज्ञापयेत्। न च तादृशज्ञानानवगम एवेति वाच्यम्। प्रामाण्याप्रामाण्ययोरुभयोरपि परतो ज्ञप्तिपक्षे ज्ञानव्यक्तेर्ज्ञप्तेः पृथगुदाहर्त्तव्यत्वादिति भावः।

अज्ञातं लक्षणं यदि प्रमात्वज्ञापकं तर्हि भवेदयमुपालम्भो न चैतत्, ज्ञातस्यैव गमकत्वाङ्गीकाराद्धेतुविशेषत्वाल्लक्षणस्येत्यत आह

२९६ ज्ञातस्य लक्षणत्त्वेऽपि दोषः।

ज्ञातेनानेन लक्षणेन व्यवहारे च कथमिदमेव ज्ञातव्यमिति वक्तव्यं नतावत्प्रत्यक्षेण मानसेन, तथा सति क्वचिज्ज्ञातायां[1] प्रमायामप्रमाविपर्य्ययसंशयानवकाशादि स्यात्। धर्मिवत् मनसैव निर्णीतत्वात्। चिह्नान्तरसापेक्षेणैव मनसा सम्वेदनचिन्हैनैव वा तेनैव लक्षणीभूय ज्ञापनमित्यपि प्रत्याशामात्रम्। ताचिन्हेनैव प्रमात्वजातिकल्पनाप्रतिक्षेपापत्तेः। तेषां नानात्वे च कानि तानीति वक्तव्यं स्यात्। तच्चिन्हानां यथोपन्यासं सर्वेषामेव दूषितत्त्वात्। प्रामाण्यपरतस्त्वव्युदस्तिप्रस्तावे च विस्तरेण दूषयिष्यामः।

*ज्ञातेनेति* कथमिति केन प्रमाणेन, प्रत्यक्षेण किं

---

[1] क्वचिज्ज्ञातायां इति का.मु.पु.।

लिङ्गेनेति विकल्पाभिप्रायः । यदि प्रत्यक्षेण तदाऽपि किं बाह्येनो,त मानसेन, न तावद्बाह्येन ज्ञातृतद्गुणयोरबहिरिन्द्रियग्राह्यत्वात्।यदि मानसेन तत्राह *न तावदिति* मनः संयुक्त आत्मा तस्मिन् समवेता प्रमा तत्र समवेतं प्रमात्वमिति संयुक्तसमवेतसमवायलक्षणात्संसर्गान्मनसैव प्रमात्वज्ञानं किं न स्यादित्यत आह *तथेति* क्वचिद्रूपकपरीक्षादौ प्रमायां जातायामप्रमाभ्रमादिव्यवहारो न स्याद्वस्तुतस्तस्याः प्रमात्वादादिपदेन प्रमात्वव्यवहाराभावश्च न स्यादित्यर्थः । कुतो न स्यादित्यत आह *धर्मीति* कथितसंसर्गसहकृतं मन एव प्रमात्वज्ञप्तौ पुष्कलं कारणं, किं वा लिङ्गसापेक्षं, प्रथमे ज्ञानस्वरूपवत् तत्समवेतप्रमात्वज्ञानप्रसङ्गात् तद्विपरीतभ्रमाद्यनवकाश इत्यर्थः । लिङ्गान्तरसहकृतं मनः प्रमात्वज्ञप्तौ पुष्कलं कारणमिति द्वितीयमनूद्यापवदति *चिन्हेति* चिन्हं च तत्त्वानुभूतित्वादिसंवेदनं प्रमात्वस्येति शेषः ।निराकरणन्यायसाम्यात्किमनुमानेनेत्युक्तकल्पान्तरं सहोपादत्ते *चिन्हेनेति* इतरेभ्यो व्यावर्तको धर्मश्चिन्हं लक्षणीभूतव्यतिरेकानुमानं भूत्वा प्रत्याशामात्रं—प्रतिपक्षश्रद्धामात्रमित्यर्थः । तच्चिन्हमेकमनेकं वा, यत्रैकं तत्राह *तदिति* सर्वप्रमाव्यक्तिष्वनुगतचिन्हेनैवेयं प्रमेत्यनुगतशब्दबुद्ध्योरुपपत्त्या प्रयोजनाभावात्प्रमाणाभावाच्च प्रमात्वजातिः परास्ता तदननुगमे चिन्हत्वमेव न स्यादित्यर्थः । नानात्वं लिङ्गानामिति द्वितीयमनुभाषते *तेषामिति* नानेति*गौरवं चार्थः । तानि चिन्हानि तत्त्वानुभूतित्वं

यथार्थानुभवत्त्वमित्यादीनि किं वा ऽन्यानीति विकल्पा भिप्रायेण कानीत्युक्तम्। यद्युक्तान्येव तत्वानुभूतित्वादीनीति प्रथमस्तत्राह *तदिति* यथोपन्यासमिति क्रियाविशेषणमुपन्यासक्रमेणेत्यर्थः। अन्यान्येव कारणगुणादीनि तच्चिन्हानीति यदि द्वितीयस्तत्राह *प्रामाण्येति* प्रमात्त्वं ज्ञानज्ञापकमात्रात् ज्ञायते दोषाजन्यधर्मत्वे स्मृतीतरत्वे च सति ज्ञानत्वावान्तरजातित्वात्प्रत्यक्षत्ववन्न च साध्यविकलता प्रत्यक्षत्वस्य तथात्वेन स्वीकार्यत्वादन्यथा सुखादेरपि ज्ञानत्वप्रसङ्गात् किं च प्रमा स्वतो ज्ञायते परानिरपेक्षोत्पत्तित्त्वात् ज्ञानव्यक्तिवन्न चासिद्धो हेतुः प्रमाप्रमयोरुभयोः परतस्त्वे प्रमाप्रमाविभागहीनज्ञानव्यक्तेः शून्यत्वादाह च—

"स्वतस्तावद्द्वयं नास्ति विरोधात्परतोऽपि न।
निःस्वभावत्वमेवं हि ज्ञानरूपे प्रसज्यत" इति।

यदपि कुसुमाञ्जलावुत्पत्तिपरतस्त्वेऽनुमानमुक्तं प्रमा ज्ञानहेत्वतिरिक्तहेत्वधीना कार्यत्वे सति तद्विशेषत्वादप्रमावत्। यदि तु तावन्मात्राधीना भवेदप्रमाऽपि प्रमैव भवेदस्ति च तत्र ज्ञानहेतुरन्यथा ज्ञानमपि सा न स्यादिति तदसत्। प्रत्यक्षादिव्यक्त्या व्यभिचारात्। न च तत्र ज्ञानहेत्वतिरिक्तमिन्द्रियादिकमस्तीति वाच्यम्। तस्यापि ज्ञानप्रयोजककत्वादात्ममनोयोगमात्रस्य ज्ञानप्रयोजकत्वे सुखादेरपि ज्ञानत्वप्रसङ्गादप्रमायाश्च केवलाविद्याविवर्तत्वेन ज्ञानहेतुजन्यत्वाभावात्। तदभावे कथं ज्ञानत्वमिति चेत् न कथं चित्। हेत्वाभासस्याहेतुत्ववत् ज्ञानाभा-

सस्य ज्ञानत्वाभावादिति साध्यविकलता। विपक्षबाधकाभावादप्रयोजकत्वाच्चेति। तथा गुणशब्दार्थानिर्वचनाशक्त्याऽनवस्थाप्रसङ्गेन प्रामाण्यपरतस्त्वनिराससमये पराकरिष्याम इत्यर्थः।

प्रमात्वं जातिरिति तार्किकसमयो निरस्तः सम्प्रत्यर्थविबोधसामर्थ्यं प्रमात्वं तद्योगश्च प्रमालक्षणमिति भाट्टसिद्धान्तः उक्तं हि—

"स्वतः सर्वप्रमाणानां प्रामाण्यमिति गम्यताम्।
न हि स्वतोऽसती शक्तिः कर्तुमन्येन शक्यते"

इति तमतिदेशेन निराकरोति।

२९७ भाट्टसिद्धान्तनिरासः।

एतेन शक्तिविशेषः प्रमात्वं तद्योगः प्रमालक्षणमित्यपास्तम्। दुरवधारणत्वात्।

* एतेनेति * प्रत्यक्षेण लिङ्गेन वा तज्ज्ञानायोगादज्ञातस्य च लक्षणस्य लक्ष्यव्यवहाराजनकत्वादिति परामृष्टहेतुं स्पष्टयति * दुरिति *

अज्ञातार्थपरिच्छित्तिः प्रमेत्यादिलक्षणान्तरमित्याशङ्क्य लक्षणानामानन्त्येन प्रत्येकनिराकरणानुपपत्तेः कानि चित् प्रमालक्षणानि निराकृत्यान्यत्र साधारणं दूषणं सङ्गृह्याह।

२९८ सर्वलक्षणेषु साधारणदूषणातिदेशः।

यच्च किञ्चित्प्रमाया लक्षणमुच्यते तदज्ञातं ज्ञातमात्रं वा यदि तत्त्वव्यवहारकं तदा अत्यापत्तिः प्रमितश्चे-

त्प्रमानवधारणे तद्दुरवधारणता । माऽवधारि वस्तुतस्तु तथेति चेन्न । वस्तुतो न तथैव किन्नेति वादिन्यनुत्तरापत्तेः प्रमात्वनिरूपणवैयर्थ्यापाताच्च । वस्तुतस्तु प्रमयैव घटादितत्त्वव्यवहारोऽपि तर्ह्यस्त्वित्यास्तां वीस्तरैः ।

*यच्चेति* तदज्ञातं व्यवहारनिदानमुत ज्ञातं,ज्ञातमपि ज्ञातमात्रं प्रमितं वेति विकल्प्य कल्पद्वयं यत्नलाघवादयुगपदुपादत्ते * तदिति * तत्त्वव्यवहारकं-प्रमात्वव्यवहारनिदानमिति यावत् । अतिप्रसङ्गेन निराकरोति * तदेति * अज्ञातलक्षणस्य ज्ञातमात्रस्य वा प्रमाप्रमयोः साधारण्याद् बुद्धादिवाक्यजन्यज्ञानेऽपि प्रमात्वारोपदर्शनात्केषांचिदतो ऽप्रमायामपि प्रमात्वव्यहारः स्यादित्यतिप्रसङ्ग इत्यर्थः । अर्थापत्तिरिति ये पठन्ति तेषामर्थस्य प्रमात्वव्यवहारस्यापत्तिरप्रमायामित्येवार्थः । प्रमितं व्यवहारकारणमिति तृतीयं शङ्कते * प्रमीति * प्रमितमपि प्रमितमिदमिति ज्ञातं व्यवहारकारक,मुत वस्तुनस्तथाभूत,मिति विकल्प्य प्रथममसम्भवेन दूषयति * प्रमेति * प्रमाया निरूप्यमाणतया प्रमितविशेषणासिद्धिरित्यर्थः । प्रमितत्वेनानवधृतमपि वस्तुतः प्रमितं लक्षणं प्रमाव्यवहारनिदानमिति द्वितीयं शङ्कते *प्रमीति* मावधारीति* माभूदवधृतमिति यावत् । वस्तुतो यत्र प्रमितत्वं तत्र प्रमा-

---

१ प्रसङ्ग० इत्याधिकं सो०पु० ।

व्यवहारः यत्र पुनर्न तथा न तत्र प्रमाव्यवहार इति नियमाज्ञातिप्रसङ्ग इत्यर्थः । प्रमितत्वं अजडं चेदात्मैव, जडं चेत्स्वगोचरप्रमामन्तरेण न सिध्येदतोऽत्र प्रमितत्वमत्र नेति विभागज्ञानापेक्षायां प्रमाणान्तरं मृग्यं तेनानवस्थेति परिहरति * नेति * प्रमितत्वस्यानवगतौ तन्नास्त्येवेति शक्यविपरीतप्रसङ्गतया तदसिद्धिश्चेत्यर्थः । प्रमा प्रमात्वेनानवगता सत्तामात्रेण स्वविषयव्यवहारनिदानं तन्निदानत्वात्प्रमालक्षणवत् तच्च लक्षणतः प्रमावधारणं च व्यर्थं तदन्तरेणापि व्यवहारोपपत्तेरिति दोषान्तरमाह * प्रमेति * न क्वापि व्यभिचारशङ्कावकाशः उक्तसाधनेन सर्वत्र साध्यप्रतिपत्तेः सुकरत्वात् । उक्तसाध्याभावे कथितसाधनाङ्गीकारे[1] को बाधस्ततश्च विपक्षदण्डासत्वेनाप्रयोजकत्वमत आह * वस्तुत इति * यदि वस्तुतः प्रमितलक्षणस्तद्गोचरव्यवहारस्तर्हि प्रमयाऽपि घटादिगोचरया सत्तामात्रेण तद्व्यवहारोऽस्तु न चेदप्रमितप्रमितत्वलक्षणेनापि तद्गोचरव्यवहारो न स्यादविशेषादित्यर्थः । लक्षणं व्यतिरेकिरूपलिङ्गं च व्याप्तिपक्षधर्मत्वाभ्यां प्रमितत्वेनावगतं साध्यगमकमन्यथा व्याप्यत्वासिद्ध्याद्याभासतो विवेकाभावापातादतश्च प्रमितत्वानवगतं व्यवहारनिदानमिति कल्पोऽसम्भवीत्यादि बहुवक्तुं शक्यं तथापि ग्रन्थगौरवभयान्न विस्तराय प्रयत्यत इत्युपसंहरति * इत्यास्तामिति *

---

१ साध्याभावाङ्गीकारे इति सो० पु० पा० ।

एवं लक्षणभूतां प्रमां खण्डयित्वाऽधुना तल्लक्ष्यप्रमाणखण्डनायोपक्रमते ।

२९९ लक्ष्यप्रमाणखण्डनम् ।

एवं प्रमितेरनिरुक्त्या प्रमाकरणं प्रमाणमित्यप्ययुक्तम् । करणार्थानिरुक्तेश्च ।

* एवमिति * प्रमाद्वारा प्रमाणस्य लक्षणीयत्वाल्लक्षणभूतप्रमाखण्डनानन्तरं लक्ष्यभूतप्रमाणखण्डनं प्राप्तमिति सङ्गतिः । करणं प्रमाणमित्युक्ते कुठारादौ मा प्रसाङ्क्षीत्याह * प्रमेति * तावति फले लक्षणं माभूत् माभूच्चासम्भव इत्यत आह * करणमिति * दूषणानां सम्भावनायामित्यपीति । प्रमाकरणं प्रमाणमिति वदता प्रमापदार्थोऽवश्यं वक्तव्यः अन्यथा विशेषणासिद्ध्या विशिष्टलक्षणासिद्धिः स च निर्वक्तुं न शक्य उक्तप्रकारेण तल्लक्षणानिरूपणादित्यर्थः । करणार्थमभ्युपगम्य प्रमाऽनिरूपणात्तद्विशिष्टलक्षणासिद्धिरुक्तेदानीं सोऽपि न निरूपणं सहत इत्याह * करणेति *

करणार्थोऽसन्ननिरूपितलक्षणकत्वाच्छशशृङ्गवदिति । न च क्वचिद्व्यभिचारो न्यायविद्भिरलक्षणपदार्थानङ्गीकारात्तदवलम्बनप्रवृत्तेश्चेत्युक्तं तत्रासिद्धो हेतुः करणलक्षणस्य सुवचत्वादिति महता सम्भ्रमेण चोदयति ।

३०० करणत्वनिर्वचनपूर्वपक्षः ।

ननु कारकान्तरेऽचारितार्थस्य हेतुत्वं करणत्वं, कर्तुर्हि

करणं निष्पादयतः कारकान्तरे चरितार्थत्वं स्वरूपतोऽनिष्पादनेऽपि व्यापारवत्तया निष्पादनात्। तादृशस्य च तस्य करणत्वात्। एवं कर्मापि करणनिष्पादने चरितार्थं, करणव्यापारो हि कर्मविषयो भवति कर्माभावे विषयाभावात् करणव्यापार एव न निष्पद्यत इति तन्निर्वाहे तस्यापि चरितार्थत्वमिति। एवमधिकरणस्यापि करणव्यापारनिर्वाहकत्वम्। सम्प्रदानापादानयोश्चासार्वत्रिकत्वम्। करणन्तु सार्वत्रिकमेवेति कारकान्तरेऽचरितार्थः सार्वत्रिको हेतुः करणमिति।

*** नन्विति * हेतुत्वं करणत्वमित्युक्ते कर्त्रादावतिव्याप्तिस्तन्निवृत्त्यर्थमाह * अचरितार्थेति * अचरितार्थस्य हेतुत्वं करणत्वमित्युक्तेऽसिद्धिः करणस्यापि क्रियासिद्धौ चरितार्थत्वादत उक्तं * कारकेति * कारकेऽचरितार्थस्य हेतुत्वमित्युक्ते कर्त्रादिकारके कर्त्रादेरचरितार्थत्वमस्ति तत उक्तं * कारकान्तरेति * कर्त्रादेर्हि करणकारकं निष्पाद्य स्वातिरिक्ते तस्मिंश्चरितार्थत्वं साधनत्वान्नैवं करणस्य क्रियासिद्धिमन्तरेण चरितार्थत्वं साधकतमत्वात्। एतत्करणसाध्यक्रियाजनकस्यापि तथात्वमस्तीत्यत उक्तं *हेतुत्वमिति* कर्त्रादि करणं निष्पाद्य क्रियां साधयति, करणं साक्षादित्यर्थः। कथमचरितार्थपदेन कर्तुरपोहस्तस्याऽप्यधिकरणादावचरितार्थत्वादित्याशङ्क्य तदपोहप्रकारं दर्शयन्नुक्तं व्याचष्टे * कर्तुरिति * चरितार्थत्वं कृतका-**

र्यत्त्वं । निष्पादिते करणे क्रियाया अवश्यं भावादिति यावत् । प्रयत्नरूपकर्तृव्यापारात्प्रागेव कुठारादिकरणस्य निष्पन्नत्वात्कथं करणोत्पादनेन कारकान्तरे करणे चरितार्थत्वमित्यत आह * स्वरूपत इति * स्वरूपतो निष्पन्नत्वेऽपि व्यापाराविष्टरूपेणानिष्पन्नत्वात्ताद्रूप्येण तदुत्पाद्य तत्र चरितार्थ इत्यर्थः । अस्तु व्यापाराविष्टतया तन्निष्पादनमेतावता कथं करणे चरितार्थत्वमित्यत आह * तादृशेति * कर्त्तुरिव कर्मणोऽपि कारकान्तरे चरितार्थत्त्वं दर्शयति * एवमिति * कर्तुरिव करणप्रेरणव्यापारः कर्मणो न दृश्यते तत्कथं करणानिष्पादकत्वं कर्म्मण इत्यत आह * करणेति * करणस्य कुठारस्य उद्यमननिपतनरूपो व्यापारश्छिद्यमानवृक्षविषयो भवति। कर्म्म विषयो यस्य स तथोक्तः। एवमन्वयमभिधाय व्यतिरेकद्वारा कर्म्मणः करणनिष्पादकत्त्वं साधयति * कर्मेति * सर्वत्र करणव्यापारस्य विषयजन्यत्वनियमदर्शनादित्यर्थः । तत्सिद्धं कर्म्मणोऽपि कारकान्तरे चरितार्थत्वमित्याह *इतीति* करणानिष्पादकस्य कारकान्तरेऽचरितार्थत्त्वमधिकरणस्यास्तीति तत्रातिव्याप्तिरित्यत आह *एवमिति * करणव्यापारनिर्वाहकयोः कर्त्तृकर्मणोराधेययोः स्थितिद्वारेणाधिकरणमपि चरितार्थं कारकान्तर इत्यर्थः। सम्प्रदानापादानयोः करणप्रेरकतया तद्व्यापारविषयतया वा स्थितिहेतुत्वेन वा करणानिष्पादकयोः कथं व्यवच्छेद इत्यत आह *सम्प्रदानेति* सम्यक्प्रदीयते यस्मिन् सम्प्रदानं दानपात्रमिति यावत् । विश्लेषावधिर-

पादानमतश्च दानक्रियायाः सम्प्रदानापेक्षा, विश्लेषक्रियाया अपादानापेक्षा, करणं तु सर्वक्रियायामपेक्ष्यते तेन सार्वत्रिकत्वविशेषणेन तदपोह इत्यर्थः । कथं तर्हि विशिष्टं लक्षणं स्यात्तत्राह * इतीति *

पूर्वपक्षं प्रतिक्षिपति ।

३०१ पूर्वपक्षनिरासः ।

मैवम् । अस्तु तावदविचारितरमणीयमिदं व्याख्यानम् । अन्तरशब्दो यदि विशेषमात्रवचनस्तदा न व्यवच्छेदकः न हि विशेषमपास्य कारकमात्रं केनचित् जन्यते यद्व्यवच्छिद्येत । नापि चान्तरशब्दोऽन्यवचनः तथासति कस्मादन्यदिति विशेषानिर्देशे करणादिति समभिव्याहाराल्लभ्येत यथान्य आत्मा शरीरमन्यदित्यादौ, तथा सति करणव्यातिरिक्तकारकाभिप्रायेण प्रयुक्तः स्यात् । तच्च न । करणस्यैवाद्यापि निरूप्यमाणत्वादतिव्याप्तेश्च । नापि कर्तृकर्मणोः स्वरूपोपादानपरोऽयमन्तरशब्दः ताभ्यामेवातिव्याप्त्यापत्तेः । नापि कर्तृकर्मणी अपेक्ष्यान्यदन्तरशब्दार्थः वैयर्थ्यापातात् । कारकेऽचरितार्थत्वमेवोच्यताम् । नाप्यनधिकार्थ एवायमिति न प्रयोक्तव्योऽन्तरशब्दः, तथा सति करणजनकं हस्तादि न करणं स्यात् । व्यापारवाद्धि कारणं करणमुच्यते, अस्ति च स्थालीसंयोगादिव्यापारवतोऽन्यादेस्तथात्वम् । अस्ति च

हस्तादेस्तज्जनकत्वम्। नच हस्ताद्यकरणमेवाभ्युपेयं, व्यापारवतः कारणत्वेन तत् कारकत्वस्यावश्याभ्युपेयत्वात्। कर्त्रादिषु दुरन्तर्भावत्वात्। सप्तमकारकस्वीकारापत्तेः। नच व्यवधानान्नाहेतुत्वमेव तेषां, किंनाम हेतुहेतुत्वमिति। कर्त्तुरप्येवम्भावप्रसङ्गात्। पुंव्यापाराद्देहस्पन्दादि स्तेन कुठारक्रियादि स्ततश्छिदेति परम्पराव्यवधानात्। सर्व्वेयं कर्तृव्यापारपरम्परा न तस्य हेतुनां हन्तीति चेत् तुल्यं। तस्मात् करणत्वेनावश्याभ्युपगन्तव्यहस्ताद्यव्यापकत्वादलक्षणमिदम्।

*नेति* कर्त्रादेः क्रियां प्रति हेतुत्वमस्ति न वा, न चेद्देवदत्तः पलाशं छिनत्तीत्यनुभवविरोधोऽस्ति चेत्क्रियानिष्पत्तेः पूर्वक्षणे व्यापारितयाऽवस्थितिरेष्टव्या तल्लक्षणत्वाद्धेतुत्वस्य. तेन कर्त्रादिव्यापारस्य फलपर्यन्तत्वान्न तदपोह इति अलक्षण,मङ्गीकृत्यापि दोषमभिदधत्त इत्याह *अस्त्विति* तावदिति निर्द्धारणे। अन्तरशब्दः किं विशेषमात्रपर.उतान्यत्त्ववचनः,किं स्वित्कर्तृकर्म्मस्वरूपपर,आहो तदपेक्षयाऽन्यपर.इति विकल्प्याऽऽद्यमनुवदति *अन्तरेति* अनयोरन्तरं महदित्यादौ तस्य विशेषवचनत्त्वं प्रसिद्धमित्याह * यदीति * विशेषणवैयर्थ्येन दूषयति *तदेति* व्यवच्छेदको व्यावर्तक इति यावत्। विशेषवचनत्वे अन्तरशब्दस्य कथमव्यवच्छेदकत्वमित्यत आह *न हीति* कारकेऽचरितार्थ इत्युक्त एव

१ न्यत्त्वपर इति पु० पा०।

हि कारकविशेषे चरितार्थत्वं निषिद्धं भवति निषेधस्य प्राप्तिपुरःसरत्वात् नहि करणत्वादिविशेषमपास्य कारकसामान्यं केन चिज्जन्यते यन्निषिध्यते तेन विशेषवचनं अन्यावर्त्तकमित्यर्थः । कारणान्तरमित्यादावन्तरशब्दस्य भेदवचनत्वप्रसिद्धेरन्यत्ववचनोऽयमन्तरशब्द इत्याशङ्क्य निषेधति *नापीति* अन्यत्वस्य भेदापरपर्यायस्य प्रतियोगिसापेक्षप्रतीतित्वात्तत्प्रतियोगिविशेषानिर्देशात्कस्मादन्यइति करणमेव प्रतियोगित्वेनावतिष्ठत इत्यर्थः । उक्तेऽर्थे बुद्धिसाम्यार्थमुदाहरणमाह *यथेति* अन्य आत्मेत्युक्ते कस्मादिति वीक्षायां शरीरादिति लभ्यते शरीरमन्यदित्युक्ते आत्मन इत्यर्थात्सिद्ध्यति सन्निधानाद्यथा तथेत्यर्थः ।आदिपदेनेन्द्रियमतिरिक्तमित्युक्ते गोलकादि लभ्यत इत्यादि द्रष्टव्यं सन्निधानादेव । एवमन्तरशब्दस्य करणप्रतियोगिकान्यत्वमर्थ इत्युक्त्वेदानीं विशिष्टलक्षणवाक्यस्यैवार्थं कथयति *तथा सतीति* करणव्यतिरिक्तकारकेऽचरितार्थः सार्वत्रिको हेतुः करणमित्युक्तं स्यादित्यर्थः । अस्तु तथाऽपि को दोष इत्यत आह *तदिति* हेतुमाह *करणेति*सिद्धे करणे ततोऽतिरिक्तकारकान्तरसिद्धिस्तत्सिद्धौ च तत्राचरितार्थहेतुरूपकरणसिद्धिरिति परस्पराश्रयः एकस्याप्यन्यतो ऽसिद्धत्वात् करणस्याद्यैव निरूप्यमाणत्वादित्यर्थः । असिद्धिमभिधायाधुनाऽतिव्याप्तिमभिधत्ते *अतीति* कर्त्रादिकारकाणामपि करणमुत्पाद्य तत्रैव चरितार्थानां तदतिरिक्तकर्त्रादिकारके चरितार्थत्वं नास्तीति तत्रातिव्याप्तिरित्यर्थः । कर्तृ-

कर्म्मणोः स्वरूपोपादानपरोऽन्तरशब्द इति तृतीयं परा-चष्टे*नापीति* कुत इत्यत आह *ताभ्यामेवेति* तथा च सति कर्तरि कर्मणि वा चरितार्थं करणमित्युक्तं स्यादेवं च कर्त्तुः कर्म्मणो वा तत्राऽचरितार्थत्त्वं नास्त्य-स्ति च सार्वत्रिकहेतुत्वमिति प्रत्येकं तयोरतिव्याप्ति-रित्यर्थः। कर्तृकर्मप्रतियोगिकान्यत्त्वमन्तरशब्दार्थ इति चतुर्थं प्रतिषेधति *नापीति* अधिकरणादेः कारकपदे-नैवोपादानात्करणस्य कर्तृकर्मणोरप्यचरितार्थत्वात्त-दन्तरेति विशेषणं व्यर्थमित्यर्थः। कर्तृकर्म्मव्यतिरिक्त-कारकेऽचरितार्थत्त्वं विवक्षितं तत्सिद्धिः प्रयोजनमन्त-रशब्दस्येत्यत आह *कारक इति* नात्र गौरस्तीति गो-मात्रनिषेधे गोविशेषोऽपि निषिद्धो भवति तद्वत्का-रकमात्रे चरितार्थत्वनिषेधेन करणादौ चरितार्थत्वं निषिद्धं भवतीत्यर्थः। कारकेऽचरितार्थ इत्युक्ते यावान-र्थस्तावानेवान्तरपदोपादानेऽपि लभ्यते नाधिक इति वैयर्थ्यात् त्यज्यत एवान्तरपदमित्याशङ्क्याह *नापीति* यदुपादानेनाधिकार्थलाभस्तन्न त्याज्यमिति निद्रातु-रचेतसा प्रलपितमिवेत्यत आह * तथेति * अन्तरप-दपरित्यागे कारके ऽचरितार्थः सार्वत्रिको हेतुः करण-मित्युक्तं स्यात्तदा देवदत्तो हस्तेनाग्निना पचतीत्या-दौ हस्तादि यत्करणमग्न्यादिकारकान्तरजननद्वारा पाचिक्रियादौ, तत्रैतल्लक्षणं नास्तीत्यव्याप्तिरित्यर्थः। आ-दिपदेन पद्भ्यामुपानद्भ्यां गच्छतीत्यादि गृह्यते। अग्नेः कारकत्वं यदि स्यात्तर्हि तज्जनको हस्तो न करणं स्या-त्तदेव नास्ति मानाभावादित्याशङ्क्य तदुपपादयितुं

कारकलक्षणमाह *व्यापारेति* कारणं कारकमित्युक्ते व्यापारेऽतिव्याप्तिस्तन्मा भूदित्याह *व्यापारवदिति* एतावत्युक्ते व्यापारवतः कुठारस्य पञ्चयादौ कारकत्वप्रसङ्गनिवारणाय कारणमित्याह *कारणमिति* तत्रेति शेषः । एतदपि पराभ्युपगमसिद्धं न यौक्तिकमिति दर्शयन्ति * हीति * अग्निः कारकं तल्लक्षणयोगित्वात्पाचकवदित्यनुमानं तल्लक्षणयोगमाह *अस्ति चेति* यथा चक्षुरादेर्विषयसंयोगो व्यापारस्तथाऽग्नेरपि स्थालीसंयोगादिर्व्यापार इत्यर्थः । आदिपदेनोर्ध्वज्वलनं सङ्गृह्यते । तथात्वं कारकत्वमिति यावत् । हस्तादेरग्न्यादिजनकत्वमेव नास्ति मानाभावादित्यत आह * अस्तीति * व्यापारवदग्निरूपोत्पत्तेर्हस्तेनान्वयव्यतिरेकित्वात्तत्कारणत्वमन्यथा ताभ्यां कार्यकारणभावनिश्चयः क्वापि न स्यादित्यर्थः । हस्तादि न करणं कारकजनकत्वात्कर्त्रादिवदतश्चाऽस्याऽलक्ष्यत्वात्तत्र लक्षणाभावो न दोषायेत्यत आह * न चेति * हस्तादेः करणत्वं परिशेषयितुं करणत्वं तावत्साधयति * व्यापारेति * हस्तादि करणं व्यापारित्वाद्दण्डादिवदत्र च न व्यभिचारो व्यापारवतः संयोगादिनिमित्तकार्ये प्रति कारणत्वादित्यर्थः । तत्कारणत्वस्य हस्तादेः कारकत्वस्येति यावत् । "प्रसक्तप्रतिषेधेऽन्यत्रा । प्रसक्तिप्रसङ्गे न भ्यन्यः परिशेष" इह प्रसक्तमात्रेवाभावान्न परिशेष इत्याशङ्क्य प्रसक्तं प्रतिषेधति * कर्त्रादीति * प्रयत्नानाधारत्वान्न कर्त्तृत्वं, पराश्रयक्रियाफलानाश्रयत्वान्न कर्म्मत्वं, सम्प्रदानापा-

दानत्वे नाशङ्कनीये, ददात्यादिक्रियाविशेषस्येहाभा-
वात् । अनाधारत्वान्नाधिकरणत्वमिति यावत् । एवं
प्रसक्तं प्रतिषिध्याऽन्यत्राप्रसङ्गं दर्शयति * सतीति * यदि
कर्त्राद्यनन्तर्भूतस्य कारणत्वमपि न, तर्हि सत्यं कार-
कनैष्ठ्यं तदयुक्तमपसिद्धान्तादतः करणत्वं पारिशेष्य-
मित्यर्थः । कारकविशेषः कारणं तद्विशेषः करणं अतः
कारकत्वाभावात्तद्व्याप्यव्यापककरणत्वमपि नास्तीत्या-
शङ्क्याह * न चेति * नियतपूर्वभावित्वं कारणत्वं न च
तद्धस्तादीनां तत्र पच्यादावस्ति काष्ठादिभिर्व्यव-
धानादतः कारकत्वव्यावृत्तौ तद्व्याप्यकारणत्वव्या-
वृत्तिस्ततश्च करणत्वस्य व्यावृत्तिः द्रव्यत्वव्यावृत्त्या
पृथिवीत्वादिव्यावृत्तौ तद्व्याप्यघटत्वादिव्यावृत्तिरिवे-
त्यर्थः । हस्ताद्यन्वयव्यतिरेकावन्यथासिद्धौ न तत्र तेषां
कारणत्वं दर्शयितुमीशाते इत्याह * किं नामेति *
अग्न्यादेस्तत्र हेतुत्वं हस्तादीनामिति हेतुहेतुविष-
यावन्वयव्यतिरेकौ यथा परेषामिन्द्रियसम्प्रयोगा-
न्वयव्यतिरेकावधिष्ठानग्रहणोपयुक्ताविन्द्रियजत्वं भ्रम-
स्य न कल्प्यत इत्यर्थः । न च वाच्यमिति शेषः । कुतो
न वाच्यमित्यत आह * कर्त्तुरिति * कर्त्तुरपि काष्ठा-
दिव्यवधानात्प्रधानक्रियां प्रति हेतुत्वाभावप्रसङ्गा-
दित्यर्थः । पुरुषस्य प्रधानक्रियां प्रति व्यवधानं दर्शय-
ति * पुमिति * पुंसो व्यापारः प्रयत्नस्तस्मादेहे स्पन्द-
श्चेष्टा आदिपदेन देहावयवहस्तचलनं ततो हस्तकु-
ठारसंयोगो गृह्यते । ततो-देहस्पन्दात् कुठारव्यापार-
उन्नमननिपतनरूपः आदिपदेन करणस्य कर्मणो योगात्

छिदा छिदिक्रिया । पक्षं प्रकृत्य छिदामुदाजहार समानन्यायत्वादव्यापकत्त्वस्य सार्वत्रिकत्त्वदर्शनाय च। कर्तुरहेतुत्वप्रसङ्गपरिहारमाशङ्कते * सर्वेति * देहस्पन्दादिरूपा कर्तृव्यापारपरम्परैव तेन न तया व्यवधानं, व्यापारम्पराया व्यापारिव्यवधायकत्वाभावादित्यर्थः। समः समाधिरन्यत्राभिनिवेशादिति समाधत्ते * तुल्यमिति * काष्ठव्यापारादि सर्वं हस्तव्यापारपरम्परेति न तया हेतुत्वव्याघात इत्यर्थः ।

हस्तादेरकरणत्त्वे प्रकृतलक्षणस्य किं छिन्नमित्याकाङ्क्षायां तद्दर्शयन्नुपसंहरति * तस्मादिति *

कर्तृकर्म्मव्यतिरिक्तकारकेऽचरितार्थः सार्वत्रिको हेतुः करणमिति पक्षे प्रागव्यर्थत्त्वमुक्तमिदानीं अव्यापकत्त्वं दूषणं प्रसङ्गादतिदिशति ।

३०२ अव्याप्त्युद्भावनम् ।

एतेनाऽपि कारकान्तरशङ्कः कर्तृकर्मव्यतिरिक्तवचन इति पक्षो व्युदास्यः ।

* एतेनेति * अग्न्यादिः कर्ता न भवत्यप्रेरकत्वान्न कर्म्म तण्डुलादेरेव कर्म्मत्वादतः कर्तृकर्मव्यतिरिक्ताग्न्यादिजनकहस्तादावव्यापकत्त्वमित्यर्थः ।

अस्तु तर्हि कर्तृव्यापाराविषयः करणमिति लक्षणं कथितदोषाभावादित्याशङ्क्याह ।

---

१ तत्र व्यापारेति सो० पु० पा० ।

२ हस्तादेः करणस्य किं छिन्नमिति सो० पु० पा० ।

३०३ करणस्य लक्षणान्तरनिरासः।

कर्तृव्यापारविषयः करणमित्यपि न। शरीरचालनाय प्रयतमानस्य निष्पाद्या शरीरक्रिया क्रियाविशिष्टं वा शरीरं प्रयत्नलक्षणकर्तृव्यापारविषयीभवतीति तस्यां क्रियायां करणं स्यात्। नचैतत् शक्याङ्गीकारं, भविष्यतः स्वं प्रति च कारकत्वानुपपत्तेः। नच साक्षात्कर्तृव्यापारविषय इति विशेषोपादानेऽप्यस्य परिहारः, साक्षाद्व्यापार्य्यमनःप्रभृतिक्रियायां प्रसङ्गतादवस्थ्यात्। अव्यापकत्वाच्च।

* कर्त्रिति * विषयः करणमित्युक्ते ज्ञानविषये घटादावतिप्रसक्तिस्तन्निरासायाह * व्यापारेति * तावत्युक्ते करणव्यापारविषये कर्म्मण्यतिव्याप्तिस्तन्निरासाय *कर्त्रिति* कर्ता तद्व्यापारो वेत्युक्तेऽसम्भवो माभूदित्याह * व्यापारविषय इति * कुतो न लक्षणमित्यत आह *शरीरेति * शरीरचालनाय—बाह्यचेष्टार्थं प्रयतमानस्य पुंसः प्रयत्नलक्षणकर्तृव्यापारस्य शरीरक्रिया क्रियाविशिष्टं शरीरं वा विषयो भवतीति कृत्वा तत्क्रिया अस्यां शरीरचेष्टाक्रियायामेव करणं स्यादित्यतिव्याप्तिरिति सम्बन्धः। शरीरस्य तत्क्रियाया वा कथं प्रयत्नविषयत्वमित्यत आह *निष्पाद्येति* प्रयत्नसाध्यत्वात्प्रयत्नविषयत्वं प्रयत्नस्य कस्य कुत्रेति साध्यविषयतयैव प्रतीतेरिति यावत्। क्रियायाः प्रयत्नविषयत्वं नास्ति शरीरस्यैव तद्विषयत्वेन नान्तरीयकतया क्रियायास्तद्विषयत्वमित्यत आह *तद्विशिष्टेति *ए-

तदुक्तं भवति वृक्षच्छेदाय प्रयतमानस्य कर्त्तुर्व्यापारस्य कुठारः क्रियाविशिष्टस्तद्व्यापारो वोद्यमननिपतनरूपो विषयीभवतीति तस्य यथा छिदायां करणत्वं तथेहापि कर्तृव्यापारविषयतया करणत्त्वं तच्च क्रियान्तराभावादस्यामेव क्रियायामिति। शरीरादि करणं कर्तृव्यापारविषयत्वात् कुठारादिवदिति करणत्वानुमानान्नातिव्याप्तिरित्याशङ्क्याह * न चेति * शक्योऽङ्गीकारो यस्य तत्तादृक्। शरीरादेः करणत्त्वं शक्याङ्गीकारं न भवतीत्युक्तं कुतो नेत्यपेक्षायामाह *भविष्यत इति * भविष्यतः शरीरादेः पूर्वं कारणत्त्वानुपपत्तेर्नियतपूर्वसत्त्वं कारणत्त्वं न च भविष्यतस्तदस्तीति कारकत्वानुपपत्तौ तद्विशेषकरणत्वानुपपत्तेः। हेत्वन्तरमाह* स्वामिति * यदा क्रिया तद्विशिष्टं शरीरं वा तामेव क्रियां प्रति करणं स्यात्तदा स्वयमेव स्वसिद्धौ करणमित्यात्माश्रयस्तन्न युक्तं करणत्वतान्निष्पाद्यत्वे च विप्रतिपदेनाऽभिन्नाधिष्ठाने कार्यकारणभावत्त्वान्मृत्घटयोः कार्यकारणभाववदिति प्रयोगाविरोधात्। नच हेतोरेकत्राऽप्यभाव इति वाच्यम्। उत्कर्षनिकर्षवत्त्वादिति परैर्विशिष्टहेतुप्रयोगदर्शनादित्यर्थः। अव्यवधानेन कर्तृव्यापारविषयत्त्वं न चैतच्छरीरादावस्ति मनोव्यापारव्यवधानेनैव कर्तृव्यापारविषयत्वाच्छरीरादेरिति नातिव्याप्तिरित्यत आह * न चेति * अस्यातिव्याप्तिदोषस्येति यावत्। साक्षात्त्वविशेषणस्य शरीरादावभावात्कुतो न परिहार इत्यत आह * साक्षादिति * यदा साक्षादेव मनो व्यापार्यते तद्व्यापा-

रश्च सङ्कल्पो हितसाधनत्वाद्यनुसंधानं वा त-त्प्रभृत्येतदादेस्तस्य तद्व्यापारस्य च तस्यां क्रिया-यां करणत्वासङ्गतादवस्थ्यात्। यद्वा मनोव्यापारः सङ्क ल्पादिबुद्धेरध्यवसायः ततश्च बुद्धेर्मनसो वा साक्षा-द्व्यापारविषयत्वात्ताभेव क्रियां प्रति करणत्वं प्रसज्ये-तेति स्वसमयासिद्धं मनोबुद्धिभेदमाश्रित्यातिव्या प्तिमाह * साक्षादिति * तर्हि तदन्यत्वे साक्षात्कर्तृ-व्यापारविषयः करणमिति लक्ष्यत इत्यत आह * अव्यापकेति * कर्तृव्यापारस्य प्रयत्नरूपस्य मनोव्यापा-रादिव्यवधानेन विषयत्वात्कुठारादेस्तत्राव्याप्तिरित्य-र्थः। न च कार्यकरणसङ्घातस्य कर्तृत्वात्साक्षात्तद्व्यापा-रविषयत्वं कुठारादेरिति वाच्यम्। तस्याचेतनत्वेनाक-र्तृत्वात् घटादिवत्। चेतनविशिष्टतया कर्तृत्वे लाघवा-त्तस्यैव कर्तृत्वमस्त्विति द्रष्टव्यम्।

उक्तातिव्याप्तिं परिहरन्नुक्तलक्षणं विधान्तरेणो-पस्थापयति।

३०४ प्रकारान्तरेण करणलक्षणं तत्खण्डनं च।

अथ तत्क्रियाहेतुस्तत्क्रियाकर्तृव्यापारस्य विषयस्त-त्क्रियाकरणमिति मन्यसे। नैवम्। अनीश्वरवादे अङ्कुरादी-नामकरणकत्वप्रसङ्गात्। सुषुप्त्यनन्तरभाविन्याः प्रमायाः परिगणितकरणोपाधिभेदपरिसङ्ख्यातेषु प्रमाराशिषु वहिर्भा-वप्रसङ्गात्। अचेतनस्यापि कर्तृत्वे चातिप्रसङ्गात्। से-श्वरवादेऽपीश्वरव्यापारविषयः सर्वं कारणमिति नाकर-

णं कारणं स्यात् । ओमित्यभिधाने चाऽकारणमात्रं व्यव-च्छेद्यमिति कारणं करणमित्येवोच्यतां वृथा विशेषण-पूरणप्रयासः ।

*अथेति* तदिति सर्वत्र क्रियामात्रमुच्यते । तत्क्रि-याहेतुः करणमित्युक्ते कर्त्रादावतिप्रसक्तिस्तां निवार यति * व्यापार इति * तत्क्रियाहेतुर्व्यापारविषयः करणमित्युक्ते करणव्यापारविषये कर्मण्यतिव्याप्ति-स्तन्निरासाय *कर्तृव्यापार इति *तत्क्रियाहेतुः कर्तृव्यापा रविषयः करणमित्युक्तेऽधिकरणस्यापि करणत्वप्रसङ्ग-स्तत्क्रियाहेतुत्वात्सर्वकर्त्रीश्वरव्यापारविषयत्वाच्च, त न्निषेधति *तत्क्रियाकर्त्रीति* असाधारणकर्तृव्यापारवि-षयत्वं विवक्षितमिति यावत् । तत्क्रियाहेतुस्तत्क्रियाक-र्तृव्यापारविषयः करणमित्युक्ते तच्छिदिक्रियाकर्तृव्या पारविषयस्य तत्क्रियाहेतोः कुठारस्य गमनादौ करणता-प्रसक्तिं निरस्यति *तत्क्रियाया इति* तत्क्रियाकर्तृव्यापा-रविषयस्तत्क्रियायाः करणमित्युक्ते मनःशरीरादिव्या-पारस्य तद्विशिष्टमनआदेश्च बाह्यचेष्टां प्रति करणत्वं प्रसक्तं प्रतिषेधति *तत् क्रियाहेतुरिति* मनः शरीरादि-व्यापारस्य तद्विशिष्टस्य मनआदेः तत्क्रियां प्रति हे-तुत्वाभावान्नातिव्याप्तिरित्यर्थः । केनेत्थं लक्ष्यते किं मीमांसकेनोत कणादादिना, न तावन्मीमांसक ए-वं लक्षयितुमीष्ट इति दूषयति * मैवमिति * कुतो न शक्नुयादित्यत आह * अनीश्वरेति * अङ्कुरादीनां करणपूर्वकत्वमस्ति वा न वा, न चेत्कार्य

करणपूर्वकमिति व्याप्त्यभावाद्रूपादिज्ञानलिङ्गेन चक्षुरादिकरणानुमानं न स्यादस्ति चेत्सकारणत्वं तर्हि तत्कर्तृत्वं किमस्मदादेरुतेश्वरस्य, नास्मदादेस्तद्विषयज्ञानाभावात्क्रियमाणज्ञानवत एव कर्तृत्वा,न्नापीश्वरस्य तस्यानङ्गीकारादतश्च कर्तृव्यापारविषयत्वमङ्कुरादिकरणस्य नास्तीति तत्राव्याप्तिरित्यर्थः। अव्याप्त्यन्तरमाह * सुषुप्त्येति * सुषुप्त्यनन्तरं प्रथमतो या प्रमा जायते तस्या अकरणकत्वप्रसङ्गः सुषुप्तस्यात्मनश्चेतनाहीनस्य कर्तृत्वानुपपत्त्या तद्व्यापारविषयस्य पूर्वकालसत्तः करणस्यासम्भवा,न्न च सा करणशून्या, एवं सति परिगणितानि यानि करणानीन्द्रियादीनि तान्येवोपाधयस्तेषां भेदेन परिसङ्ख्याताः पञ्चधा षोढेति वा ये प्रमाराशयस्तेषु बहिर्भावः प्रसज्येत तत्क्लृप्तकारणाजन्यत्वादतश्च तस्याः करणमस्ति न च तस्य कर्तृव्यापारविषयत्वमित्यव्याप्तिरित्यर्थः। अनीश्वरवादे सुषुप्त्यनन्तरभाविन्याः प्रमायाः परिगणितकरणोपाधिभेदपरिसङ्ख्यातेषु प्रमाराशिषु बहिर्भावप्रसङ्गात्। किमिव अङ्कुरादीनामकरणत्वप्रसङ्गवदिति ग्रन्थसम्बन्धः। तत्क्षणे ज्ञानाभावेऽपि पूर्वन्तदुपादानज्ञानं सुषुप्तस्यासीदिति चास्मदादिभोक्तृशरीरमचेतनं वा कर्तृ स्यादतो नाव्याप्तिरित्यत आह * अचेतनेति * सुषुप्त्यादावपि कर्तृत्वमङ्कुरादीनामकर्तृत्वं न स्यादित्यतिप्रसङ्ग इत्यर्थः। काणादादेरिदं तर्हि लक्षणमस्तु तत्रेश्वरस्य कर्तुः सर्वत्र भावादुदिताव्याप्त्यभावादिति द्वितीयमाशङ्क्याह * सेश्वरेति * सेश्वरवादे कारण-

मकरणन्न स्यात् । हेतुमाह *ईश्वरेति* सर्वं कारणमीश्वरव्यापारविषय इति कृत्वेति शेषः । तत्क्रियाहेतुस्तत्क्रियाकर्त्तृव्यापारविषयस्तक्रियायाः करणमिति लक्षणयोगित्वात्कारणमात्रं करणं स्यादित्युक्तम् । नन्वीश्वरव्यापारविषयतया कारणमात्रस्य करणत्वमिष्यत एव को दोष इत्यत आह *ओमिति* ॐमित्यभिधानेऽस्त्वित्यभिधाने इति यावत् । अकारणमात्रं व्यवच्छेद्यं स्यात्तद्व्यवच्छेदस्य कारणग्रहणेनैव सिद्धेः कारणं करणमित्येव लक्षणमुच्यतां तत्क्रियाहेतुरित्यादिविशेषणप्रक्षेपो व्यर्थस्तस्या व्यावर्त्तकत्वादित्यर्थः ।

तस्य अव्यावर्त्तकत्वेऽपि न वैयर्थ्यं स्वरूपकथनार्थत्वादिति शङ्कते ।

३०१ विशेषणस्य सार्थकत्वशङ्का तन्निराकरणंच ।

अथ मन्यसे न धर्म्यन्तरव्यवच्छेदाय विशेषणानि किन्त्वेकस्यापि धर्मिणो रूपभेदेन करणपदाभिधेयतोपदर्शनायेति । एवं तर्ह्येतद्रूपालिङ्गनस्य करणत्वालक्षणोक्तिप्रवृत्तेन त्वया लक्ष्यमात्रमुक्तं भवेत् । नच लक्ष्यपदप्रवृत्तिनिमित्तमत्र लक्षणार्थः गन्धवत्त्वादेः पृथिव्याद्यलक्षणत्वापत्तेः । अपि चैवं वस्तुमात्रं करणमित्यभिधायैव किन्न करणपदप्रवृत्तिनिमित्तमुपादर्शि । स्यादेवं यदि सर्वत्र वस्तुनि करणव्यवहारः स्यादिति चेत् तर्हि त्व-

१ कारणं नस्यादिति सो० पु० पा० ।

दुक्तलक्षणमपि भवेत् । यदि सर्वत्र कारणे करणव्यवहारः स्यादित्यपि पश्य, न हि कर्त्तरि कर्मणि वा कस्य चित्करणव्यवहारः ।

*अथेति* कारणमात्रस्य करणत्वेऽपि न कारणमात्रं करणपदप्रवृत्तिनिमित्तं किन्त्वेकस्यापि तद्धर्म्मविशिष्टस्य धर्मिणः स्वरूपभेदमादाय करणपदाभिधेयत्वमित्यर्थः। पदप्रवृत्तिनिमित्तलक्षणयोर्मिथो भेदोऽभेदो वेति विकल्प्य भेदपक्षमपवदति *एवमिति* करणपदप्रवृत्तिनिमित्तस्य लक्षणत्वाभावात्तल्लक्षणे पृष्टे तत्कथनमर्थान्तरमापद्यत इत्यर्थः। अस्तु तर्हि तयोरभेदपक्षस्तत्रार्थान्तराभावादिति द्वितीयं प्रतिषेधति *न चेति* पदप्रवृत्तिनिमित्तमेव लक्षणमुच्यते, किं वा क्वचित्तदपीति, नाद्यः एवं सति गंधवत्वादीनां पृथिव्यादिशब्दप्रवृत्तिनिमित्तत्वं नास्ति तत्तत्सामान्यानां निमित्तत्वात् अतो गंधवत्वादीनामलक्षणत्वं स्यात् । यदि द्वितीयस्तर्हि करणपदप्रवृत्तिनिमित्तमेव तल्लक्षणमिति प्रमाणाभावादर्थान्तरत्वं दुष्परिहरमित्यर्थः । पूर्वं कारणमात्रस्य रूपभेदालिङ्गितस्य करणपदवाच्यत्वमूरीकृत्यादूषि, इदानीं तदपि न प्रमाणाभावादन्यथा वस्तुमात्रस्य तथात्वापातादित्याह * अपिचेति * करणपदप्रवृत्तिनिमित्तमभिधाय तस्य करणत्वाभिधानमिष्टं चेत्तर्हि वस्तुमात्रं करणपदप्रवृत्तिनिमित्तमिति प्रदर्श्य तस्य करणत्वमुच्यतामित्यर्थः। गोशब्दस्य प्रवृत्तौ गोत्वस्य निमित्तत्वे सति तस्मिन्ननन्यापेक्षयाऽखण्डा-

दौ सर्वत्र तच्छब्दप्रवृत्तिवद्वस्तुत्वमात्रस्य करणपदप्रवृत्तिनिमित्तत्वे सति तस्मिन्ननन्यापेक्षया करणव्यवहारेण भवितव्यं न च तथा व्यवहरंति वृद्धाः घटादौ सति तस्मिन् घटेन छिनत्तीति तददर्शनादतो न तन्निमित्तमिति शङ्के * स्यादिति * वस्तुत्वमात्राक्रान्ते यदि करणमित्यभिवदनव्यवहारस्तृतीयाप्रयोगो वा यदि भवेत्तर्ह्येवं स्यादिति सम्बन्धः। न्यायाभिमानी चेत्स्वपक्षपातं हित्वाऽनुसरन्यायं तदनुसरणे च कारणमात्रं करणमित्यपि न संत्स्यतीत्यभिसन्धाय सिद्धान्तयति * तर्हीति * सति वस्तुत्वे तद्व्यवहारान्न तत्करणपदप्रवृत्तिनिमित्तं चेत्कारणत्वमात्रेणापि न कारणलक्षणं स्याद्व्यभिचारसाम्याल्लक्षणस्यापि व्यवहारनिमित्तत्वाभ्युपगमादिति भावः। सति कारणत्वे कुठारादौ करणव्यवहारो दृश्यत एवेत्यत आह * न हीति * कुठारादौ करणत्वव्यवहारे किं कारणत्वं प्रयोजकमुत वस्तुत्वमिति विशये कारणत्वमिति निर्णयः स्याद्यदि कारणत्वाक्रान्ते कर्त्रादौ तद्व्यवहारः स्याद्वस्तुत्वाक्रान्तमात्रे चान्यत्र न स्यान्न चैवमस्तीत्याशयः।

कर्त्रादौ करणव्यवहारो लौकिको नास्तीति वदतः किमाकूतं कर्त्तरि करणव्यवहारो लौकिको नास्तीति किं स्विच्छास्त्रीयो नेति, न तावदाद्यो ह्य इत्याह।

३०६ कर्तरि करणव्यवहारस्यगौणत्वप्रदर्शनम्।

कर्त्तरि तावदस्ति लोके "प्रमाणमिह देवदत्त" इति,

शास्त्रेऽपि "मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्या"दितीति चेन्न । किमयं माणवकेऽग्निव्यवहार इव गौणो मुख्य एव वेति संशये यदि त्वत्परिकल्पितान्निमित्तान्मुख्यः स्यात्ततः कर्मण्यपि स्यात्तत एव निमित्तादिति बाधकदर्शनेन पारिशेष्यात् गौणतयैव तद्व्यवस्थापनाया युक्तत्वात् ।

*कर्तरीति* तावच्छब्दः कर्मापेक्षया कर्त्तरि करणव्यवहारे सिद्धे कर्म्मणोऽपि कारणत्वलिङ्गेन करणत्वव्यवहारः सिद्ध्यतीति भावः।तदेवोदाहरणेन परबुद्ध्याऽऽरूढं करोति * प्रमाणमिति * विवदमानो लौकिको वदति मदुक्तेऽर्थे देवदत्तः प्रमाणमिति तत्र प्रमाकर्तरि देवदत्ते प्रमाणमिति प्रमाण निर्देशात्कर्तरि करणव्यवहारः सिद्ध इत्यर्थः।नापि द्वितीय इत्याह *शास्त्रेऽपीति* उक्तसमुच्चयार्थोऽपिः। आप्तप्रामाण्यान्मन्त्रस्याम्नायस्यायुर्वेदस्य च नरकश्रुत्यादे र्यथा प्रामाण्यं व्यवह्रियते तथा कर्त्तृप्रामाण्यमपि व्यवह्रियत इत्यर्थः। यद्वा शास्त्रेऽपि कर्तरि करणव्यवहारोऽस्तीत्यनुषङ्गः तत्र परकीयमेव वचनं प्रमाणयति *मन्त्रेति* मन्त्रायुर्वेदयोर्यथा प्रामाण्यमाप्तवाक्यत्वात्तथाऽऽप्तप्रामाण्यादेव तत्प्रमाणं तत्प्रणीतशास्त्रप्रामाण्यं वाऽस्तीति वदताऽऽप्ते प्रमाकर्तरि प्रमाकरणत्वकथनादित्यर्थः। अनन्यथासिद्धव्यवहारात्तथात्वावगतिरयं तु व्यवहारो गौणतया ऽप्युपपन्नो न कर्त्तरि करणव्यवहारं गमयितु मीष्ठ इति परिहरति *नेति* अयं कर्तरि

करणव्यवहारोऽग्निरधीतेऽनुवाकमिति माणवकेऽग्निव्यवहारवन्मुख्यार्थगुणयोगात्प्रमाहेतुसम्बन्धाद्गौणः किं वाऽग्नावग्निव्यवहारवन्मुख्य एवेति व्यवहारस्योभयसाधारण्यात्संशये सति गौणतयैव तद्व्यवहारस्थापनायाः कर्त्तरि करणव्यवहारस्थापनस्य युक्तत्वादिति सम्बन्धः। किमत्र प्रमाणमित्यत आह *पारीति* मुख्यत्वेन तदुपपत्तौ प्रसक्तप्रतिषेधासिद्धेः पारिशेष्यासिद्धिरित्यत आह * यदीति * त्वत्परिकल्पितात्करणत्वनिमित्ताद्यदि मुख्यः स्यात्तर्हि तत एव निमित्तात्कर्म्मण्यपि स्यान्मुख्यार्थबाधके सति तद्गुणयोगादर्थान्तरे वृत्तित्वं दर्शयति * इतीति *

मुख्यार्थे बाधकं प्रमाणं तर्को वा वक्तव्यः न चायं तर्कः कर्मणि करणव्यवहारप्रसङ्गस्येष्टापादनरूपतयाऽऽभासत्वादिति शङ्कते ।

३०७ कर्मणिकर्तृव्यवहारस्येष्टत्वशङ्का तन्निराकरणम् ।

अस्त्येव कर्मण्यपि तेन रूपेणेति चेन्न तावदयं शक्योपदर्शनोदाहरणः शास्त्रलोकयोः । क दृश्यते घटं पश्यतीत्यर्थे घटेन पश्यतीति। यदि तु त्वच्चेतसि केवलं स्यात् तत्र च नादरं विधातुमुत्सहामहे । प्रमेयमात्रं करणमिति वदतो वामबुद्धेर्मनसि विपरिवर्त्तमानं प्रमेयमात्र एव करणव्यवहारास्तित्वमेवमनुरोद्धव्यं स्यादिति। घटेन पश्यतीत्याद्यनभिधानवशान्न प्रयोगो न हि सर्वं लाक्षणिकं प्रयुज्यत इति चेत् न। मास्तु तदभावे कोऽन्योऽस्ति

तेषु करणव्यवहार इति वक्तव्यः स स्यात् न चासौ शक्यदर्शन इति।

* अस्तीति * तेन रूपेण व्यवहारः शास्त्रे कारणस्वरूपेणेति यावत्। कर्माणि करणव्यवहारः शास्त्रे लोके वा करणार्थविभक्तिप्रयोगादुच्यते किं वा त्वदनुभवादिति विकल्प्य प्रथममनुपलम्भेनापनयति * नेति * यत्र कर्मणि करणव्यवहारो दर्शयितुं शक्यते नादृशमुदाहरणं लोकशास्त्रयोर्नास्तीत्यर्थः। अनुपलम्भमेवोपपादयति * क्वेति * यदि कर्म्मापि करणं स्यात्तर्हि कर्म्मविवक्षायां तृतीयाप्रयोगः स्यान्नासौ क्वापि दृश्यत इत्यर्थः। द्वितीयमनुवदति * यदीति * मच्चेतसि कर्म्म न करणमिति भावान्न तस्य करणत्वमिति युक्तिबाधादनुभवस्याभासत्वं त्वर्थः। प्रतिविधत्ते *तत्रेति* कर्म्मणः करणत्वे कर्मापि करणमिति पौनरुक्त्यं चार्थः। त्वदङ्गीकारमात्रान्नातिप्रसक्तिपरिहार इति तात्पर्यम्। विपक्षदण्डेनैतदुपपादयति * प्रमयेति * त्वदनुभवमात्रेण कर्मणः करणत्वमभ्युपगम्यं चेत्कश्चिद्वामबुद्धिर्वस्तुमात्रं करणतया मयाऽनुभूयत इति यदि वक्ति तर्हि तदनुभवानुरोधेन वस्तुमात्रे करणस्य व्यवहारास्तित्वमुपेयं स्यादित्यतिप्रसङ्गान्न कारणमात्रं करणमित्यर्थः। वामबुद्धिश्चतुरबुद्धिः कोमलबुद्धिर्वा उभयोरपि विजिगीषया भ्रान्त्या च तदाभिधानसम्भवात्। कर्म्माणि करणविभक्तिप्रयोगानुपलम्भान्न तस्य करणत्वमिति यदु-

क्तं तदयुक्तं करणत्वे सत्यपि तदप्रयोगोपपत्तेरिति शङ्कते * घटेनेति * घटं पश्यतीत्यर्थे घटेन पश्यतीति वृद्धप्रयोगाभाववशादिदानीन्तनानां तथा प्रयोगाभावो न तु कर्मणः करणत्वाभावादृवृद्धव्यवहारमूलत्वादिदानीन्तनव्यवहारस्येत्यर्थः । कर्म्मणि करणत्वं वस्तुवृत्त्याऽस्ति चेत्कर्तृकरणकरणयोस्तृतीयेति लक्षणसिद्धत्वात्तदप्रयोगो वृद्धानां वा कथमित्यत आह * न हीति * वृद्धैर्यत्प्रयुज्यते तल्लक्षणसिद्धमिति नियमो न तु यल्लक्षणसिद्धं तत्प्रयुज्यत एवेति लोपः शाकल्यस्ये"त्यादि लक्षणसिद्धस्याऽपि यथागता इत्यादेरप्रयुज्यमानतया व्यभिचारादित्यर्थः । कर्म्मणि करणत्वे सत्यपि तदर्थविभक्तेरप्रयोगोपपत्तिमुपपादितामङ्गीकरोति *मास्त्विति* करणत्वाभावसाधकतदप्रयोगस्यान्यथोपपत्तिर्दूरीकृता चेत्सिद्धं तर्हि करणत्वं कर्मण इत्यत आह * तादिति * तेष्विति व्यक्तिबहुत्वाभिप्रायं बहुवचनं । यत्करणं तत्तदुचितव्यवहाराणामन्यतमगोचर इति व्याप्तमतश्च व्यापकनिवृत्त्या तत्राप्यकरणत्वनिवृत्तिर्न हि, तदयं प्रयोगः कर्म्म न करणं तदुचितव्यवहारमात्रागोचरत्वाच्छशविषाणवन्न चाश्रयहीनमुदाहरणं निषेधसाध्यस्य निषेधकहेतोश्च निरुपाख्यस्याप्याश्रयतोपपत्तेरन्यथा कुत इत्युक्तं हेतूपादानानुपादानयोर्व्याघातादिति न च हेतोरसिद्धिः कर्म्मसु करणव्यवहारस्य कस्य चिदपि वक्तुमशक्यत्वादित्याह * न चेति * न हि करणार्थी कश्चित्कर्मोपादत्ते तेन तद्व्यवहारमात्रं नास्तीत्यर्थः ।

अस्तु तर्हि क्रियया ऽयोगव्यवच्छेदेन सम्बन्धि करणमिति लक्षणान्तरमनवद्यत्वात्तत्राह।

३०७ करणस्य लक्षणान्तरनिरासः।

क्रियया अयोगव्यवच्छेदेन सम्बन्धि करणमित्यपि न। तथा हि—अयोगव्यवच्छेदो योग एव पर्य्यवस्येदिति सम्बन्धेन सम्बन्धीत्युक्तं स्यादिति पौनरुक्त्यम्। यदा सम्बन्धीत्यनेन कालविशेषनियतसम्बन्धिताऽभिधीयते ततोऽन्यस्मिन्नपि काले सम्बन्धिताऽयोगव्यवच्छेदपदेन विवक्षितेति चेन्न। सम्बन्धीत्यनेन न कालविशेषनियता सम्बन्धिताऽभिहिता येन कालान्तरेऽलब्धसम्बन्धिताऽभिधानाय पदान्तरमुपादीयेत। अथोच्यते सम्बन्धीत्यस्य सामान्यतोऽभिधायिनः कालविशेषनियतं सम्बन्धमादायापि पर्य्यवसानं सार्थकत्वं भवत्येवेति कालान्तरेऽसम्बन्धितया व्यवतिष्ठमानं कर्त्राद्यपि करणं प्रसज्येत तद्व्यवच्छेदाय कालान्तरे सम्बन्धिता पदान्तरेणाभिधीयत इति। मैवम्। तर्हि तेनापि क्वचिदेव कालान्तरे यदि सम्बन्धिताऽभिधीयेत तदापि तस्य सार्थकता सम्बन्धिपदस्येव सामान्याभिधायिनो भवेदिति ततोऽपि कालान्तरेऽसम्बन्धव्यवच्छेदाय विशेषणान्तरमपि निवेशनीयं स्यात्।

१ त्यनेन सम्बन्धवत्तथाऽभिधीयते सो० पु० पा०।
त्यनेन कालविशेषनियतसम्बन्धवत्तयाऽभिधीयते इति पु. पा.।

*क्रिययेति* सम्बन्धि करणमित्युक्ते द्रव्यसम्बन्धिनि गुणेऽतिव्याप्तिस्तद्व्युदासायाऽऽह *क्रिययेति* क्रियया सम्बन्धि करणमित्युक्ते कर्त्रादावतिव्याप्तिस्तन्निरासायाह *अयोगव्यवच्छेदेनेति* कर्त्रादेः क्रियाया अयोगव्यवच्छेदो नास्तीति क्रियोत्पत्तेः प्रागेवोपरमाद्धि कर्त्रादौ व्याप्रियमाणेऽपि क्रिया जायते यावद्व्यापाराविष्टं करणं न व्याप्रियते, करणे तु व्याप्रियमाणे व्यवच्छिद्यत एवायोगः क्रियायास्तन्निष्पत्तिपर्यन्तं करणव्यापारात् क्रियाजन्मनियमोऽस्ति करणे व्याप्रियमाण इत्यर्थः । अव्याप्त्यादिदोषादर्शनात्कथमलक्षणत्वमित्यत आह *तथा हीति* पौनरुक्त्यादिदोषं दर्शयितुमयोगव्यवच्छेदपदार्थं दर्शयति *अयोगेति* भावाभावयोरन्यतरनिषेधेऽन्यतरविधिध्रौव्यादित्यर्थः । अस्तु तथाऽपि प्रस्तुते किं स्यादित्यत आह*इतीति* सम्बन्धस्याभेदात् पौनरुक्त्यं, तृतीयार्थोऽपि कारकभेदादिर्न सङ्गच्छत इत्यर्थः । सम्बन्धस्यैकत्वेऽपि कालोपाधिभेदेन भेदान्न पौनरुक्त्यं नापि तृतीयार्थस्य कारकभेदादेरनुपपत्तिरिति शङ्कते *यदेति* सम्बन्धीत्यनेन सम्बन्धी यदा कालविशेषनियतसम्बन्धितयाऽभिधीयते ततोऽन्यस्मिन् काले सम्बन्धिताऽयोगव्यवच्छेदपदेन विवक्षिता इति सम्बन्धः । सम्बन्धोऽस्यास्तीति सम्बन्धी "अत इनि ठनौ" इतिस्मरणादस्येति प्रत्ययस्य वर्तमानसम्बन्धार्थत्वात्सम्बन्धीत्यनेनाभिधानात्तत्क्षणसम्बन्धिताऽभिधीयते ततः कालान्तरसम्बन्धिताऽयोगव्यवच्छेदपदेनोच्यते परप्रयुक्तभेदमुपजीव्य विप्रपरिव्राजकन्या-

येनेत्यर्थः। परिहरन्ति * नेति * सम्बन्धीत्यनेन काल-विशेषनियतसम्बन्धित्वमुच्यत इति शब्दसामर्थ्यादु-च्यते किं वा न्यायसामर्थ्यादिति, न तावदाद्य इत्य. ह* सम्बन्धीति * सम्बन्धीत्यनेन न कालविशेषनियतसं म्बन्धितोच्यते किं तु सम्बन्धितामात्रमतो न काल-विशेषसम्बन्धितासिद्धये पदान्तरमुपादेयमित्यर्थः। सम्बन्धिपदस्य सामान्यवचनत्वेऽपि किंचिद्विशेष-मादायापि पर्यवसानात्कालविशेषनियतसम्बन्धित्वं तेनोच्यते इति न्यायबलात् ब्रूम इति द्वितीयमाशङ्क-ते *अथेति* सम्बन्धीत्येतत्पदं सम्बन्धितामात्रमाचष्टे तत्सामान्याभिधायिनो विशेषमात्राकाङ्क्षिणो यस्मि-न्कस्मिंश्चित्कालविशेषे नियतसम्बन्धमभिधाय पर्यव-साने सार्थकत्वं भवतीत्यर्थः। सम्बन्धीति पदं यदा-कदाचित्तत्सम्बन्धे पर्यवस्यति सामान्याभिधानद्वा-रेति स्थिते कथितलक्षणं कर्त्रादावपि प्रसज्येत तन्मा-भूदित्ययोगपदोपादानं नाफलमित्याह * इतीति * कालेति सम्बन्धिपदस्य सम्बन्धविशेषपर्यवसाने क्रि-यया यदा-कदा-चित्सम्बन्धिकरणमिति लक्षणं स्या-त्तच्च कर्त्रादावस्तीति तन्निवारणायायोगव्यवच्छेदपदं ततश्च क्रियानिष्पत्तिपर्यन्तं व्यापारितया कारणत्वेन क्रियासम्बन्धिकरणमिति लक्षणं कर्त्रादेर्व्यावर्त्तकमि-त्यर्थः। सामान्येन सम्बन्धवाचिनः क्षणमात्रसम्बन्धे पर्यवसितश्चेत्तर्हि स्यादतिप्रसङ्ग इति परिहरति * मै-वमिति * यथा सम्बन्धिपदस्य सामान्याभिधानद्वा-रा क्षणमात्रसम्बन्धे चरितार्थत्वं तथाऽयोगव्यवच्छेद-

पदस्यापि सामान्याभिधायिनः क्षणमात्रसम्बन्धे चरितार्थत्वं स्यात्सामान्यस्य विशेषमात्रनिष्ठत्वेन निराकाङ्क्षोपपत्तेरित्यर्थः। ततः किमनिष्टं निरटङ्कीत्यत आह * इति ततोऽपीति * सम्बन्ध्ययोगव्यवच्छेदपदाभ्यां क्षणद्वयसम्बन्धि करणमित्युक्तं स्यादेतच्च कर्त्रादावतिव्यापकमतो विशेषणान्तरमपि कालान्तरीयासम्बन्धव्यवच्छेदायोपादेयं स्यादतश्च हेत्वन्तरं नाम निग्रहस्थानं स्यादित्यर्थः।

अयोगव्यवच्छेदपदस्य सम्बन्धिपदन्यायेन क्षणमात्रसम्बन्धपर्यवसितत्वेऽपि सार्वकालिकायोगव्यवच्छेदविवक्षया प्रयोगान्नातिव्याप्तिरिति शङ्कते।

३०८ अतिव्याप्तिशङ्कापरिहरौ।

अथ यदा कदाचिदपि योऽयोगस्तस्य सर्वस्य व्यवच्छेदो विवक्षितइति, तर्हि सम्बन्धिपद एवैषा विवक्षाऽस्तु कृतमधिकमुपादाय तद्विवक्षया। निषेधव्यवच्छेदेन सार्वत्रिकत्वलाभ इति चेन्न। निषेधव्यवच्छेदस्य विध्यनतिरेकार्थत्वेनाविशेषात्।

* अथेति * विवक्षया लक्ष्यया लक्षणनिर्वाहाय यथा तृतीयं पदमुपादेयं न तथा द्वितीयमपि सम्बन्धिपदं प्रथम एव सार्वकालिकसम्बधस्य विवक्षितुं शक्यत्वादिति परिहरति * तर्हीति * असौ विवक्षासम्बन्धसार्वत्रिकत्वविवक्षेति यावत्। कृतमलमित्येवमेतत्। ननु योगस्य सार्वत्रिकत्वं न विवक्षितं

किं त्वयोगव्यवच्छेदपदाभिधेयमतो नोक्तदोष इति शङ्कते * निषेधेति * योगस्य निषेधो ऽयोगः तद्व्यवच्छेदेनेति यावत् । सार्वत्रिकत्वलाभः सम्बन्धस्येति शेषः । अयोगव्यवच्छेदपदं योगं ब्रूया"द्वौ नञौ प्रकृत मर्थं गमयत" इति न्यायान्न पुनर्योगस्य सार्वत्रिकत्वमतो भवितव्यमेव विवक्षयेति परिहरति * नेति * अविशेषात् सम्बन्धिपदादयोगव्यवच्छेदपदस्येति शेषः ।

शङ्कते ।

३०९ शङ्कापरिहारौ ।

तद्धर्मिकं सम्बन्धस्यासम्बन्धासामानाधिकरण्यमयोगव्यवच्छेदेनेत्यनेनोच्यत इति चेन्न । तस्यापि सत्त्वकाले तत्रासत्त्वोपगमात् । सर्वदेति चेन्न । यद्येवं तत् किं करणासत्त्वकालेऽपि योग एव करणेन क्रियायाः । यावत्सत्त्वमिति चेत्तर्हि सम्बन्धीति व्यर्थं, यावत् सत्वमयोगव्यवच्छेदेन यद्विशिष्टमुपलक्षितं वा तत्करणमित्येवास्तु, सम्बन्धीत्येव वा तथा विवक्ष्यतामित्युक्तमेव ।

* तदिति * अर्थाभेदे शब्दाभ्यासः पुनरुक्तिः न चेह तदस्ति असम्बन्धासमानाधिकृतसम्बन्धयोगव्यवच्छेदपदेनोच्यते सम्बन्धितामात्रं तु सम्बन्धिपदेन, तेन न पौनरुक्त्यं कर्त्रादौ स्वाभावसमानाधिकृतक्रियाप्रतियोगिकसम्बन्धस्य सत्वेन तद्व्यावृत्त्यर्थत्वादित्यर्थः । यदा क्रियया सम्बन्धस्तत्कालीनसम्बन्धाभावसामानाधिकरण्यनिषेधो ऽयोगव्यवच्छेदार्थः किं-

वा सार्वकालिकसामानाधिकरण्यनिषेध इति विकल्प्य प्रथममतिव्याप्त्या पराकरोति * नेति * अत्र कर्त्रादावपि तस्य सामानाधिकरण्यस्य सम्बन्धकाले सम्बन्धाभावस्याभावादेवासत्त्वस्वीकारादतिव्याप्तिरित्यर्थः। सार्वकालिकसामानाधिकरण्यनिषेधोऽयोगव्यवच्छेदार्थ इति द्वितीयमाशङ्कते *सर्वदेति* कर्त्रादेः क्रियया कदा चिदसम्बन्धाभ्युपगमात्तादृशनिषेधो नास्ति कालभेदेन भावाभावयोरेकाश्रयत्वात्तन्निषेधस्य लक्षणत्वान्नातिव्याप्तिरित्यर्थः । किं कालमात्रे सामानाधिकरण्यनिषेधो लक्षणमुत स्वसत्तावच्छिन्नकालीननिषेध इति विकल्प्य प्रथमं प्रत्याह * यदिति * सर्वदा सामानाधिकरण्यनिषेधो विवक्षित इत्येवं यदि, तर्हि क्रियया करणासत्वकालेऽपि करणेन सम्बन्ध एव किमित्याक्षेपः । एतदुक्तं भवति यस्य सर्वदा क्रियया सम्बन्ध एव तस्य सामानाधिकरण्यनिषेधवत्वान्न पुनः कदा चिदपि सम्बन्धवतः सर्वदा सम्बन्धरहितस्य वा, कर्त्रादौ शशविषाणादौ चातिव्याप्तेः ततश्च करणासत्वकाले तेन क्रियासम्बन्धाभावादेतल्लक्षणं न सम्भवतीत्यर्थः । असम्भवं परिहरन् द्वितीयमाशङ्कते * यावदिति * यत्कारकं यावत्सत्वं क्रियासम्बन्धि तत्करणं न च कर्त्रादि तथेति नातिव्याप्तिर्नाप्यसम्भवः करणस्य तथात्वादित्यर्थः। प्रागीरितपौनरुक्त्यं स्मारयन्परिहरति * तर्हीति * सम्बन्धीति विशेषणवैयर्थ्यमुपपादयति *यावदिति* भावाभावयोर्विशेषणाविशेष्यभावः सम्बन्ध इति पक्षमुपादाय विशिष्टमित्युक्तम्। संयोगादि-

मूलसम्बन्धानिरूपणाद्विशेषणविशेष्यभावानुपपत्ते-रुपलक्षणत्वमिति पक्षान्तरमाश्रित्याह *उपलक्षितमि-ति* इत्येवास्तु—लक्षणमिति शेषः। योगाधीननिरूप-णोऽयोगस्तदधीननिरूपणश्च नान्निषेध इति गौरवं सम्ब-न्धीत्युच्यमाने लाघवात्सम्बन्धीत्येव वक्तव्यं न पु-नरयोगव्यवच्छेदो विशेषणमित्याह*सम्बन्धीति*तथा विवक्षयतां यावत्सत्वं क्रियासम्बन्धित्वमित्यर्थः।

ननु न पौनरुक्त्यं सम्बन्धिपदेन सम्बन्धित्वमात्रस्य विवक्षितत्वादयोगव्यवच्छेदेनेति तस्य यावत् कार-कसत्वस्य विवक्षितत्वात्। न च विवक्षाऽप्येकस्मिन्प-द एवास्तीति वाच्यम्। वक्तुर्विवक्षाधीनत्वाच्छब्दप्रवृ-त्तेर्ग्रंथलाघवाद्बुद्धिलाघवस्य प्रयोजनत्वादिति शङ्कते।

३१० पौनरुक्त्यपरिहारशङ्का दूषणं च।

अयमेवार्थः कयाऽपि कुसृष्ट्या सम्बन्धिपदसार्थक-तामुपपाद्य यदि विवक्षितस्तदाप्युच्यते कृत्तिकोदय-क्रियायां रोहिण्यासत्तिरप्येवं करणं स्यात् अनन्तरभा-विनश्चतुर्दशस्य नक्षत्रस्योदयं प्रति पूर्वभाविचतुर्दश-सङ्ख्यनक्षत्रास्तमयस्य च करणत्वं स्यात्। नचैवमेव युक्तं यौगपद्येन कारणत्वानुपपत्त्या कारकत्वस्य दूरनिरस्तत्वेन करणत्वस्य सम्भावनानारोहात्।

*अयमिति* किं दूषणमुच्यत इत्यत आह * कृ-त्तिकेति * रोहिण्यासत्तेः कृत्तिकोदयक्रिययाऽयोग-व्यवच्छेदेन सम्बन्धित्वात्तां प्रति करणत्वं स्यान्न हि

कृत्तिकोदये सति रोहिण्यासत्तिः कदा चिद्व्यभिच-
रति घटिकानन्तरं तस्या अप्युदयादित्यर्थः । अति-
व्याप्त्यन्तरमाह * अनन्तरेति * पूर्वभाविनश्चतुर्दशन-
क्षत्रस्यास्तमयानंतरभाविनश्चतुर्दशनक्षत्रस्योदयं प्र-
ति करणत्वं स्यादिति सम्बन्धः । एतदुक्तं भवति अ-
ष्टाविंशतिनक्षत्राणि अभिजिन्नक्षत्रेण सह, तत्र सपा-
दं नक्षत्रद्वयमेकैकस्मिन्राशौ गच्छति उदयराशिमार-
भ्य षष्ठराश्यन्तोऽस्तमय एवं च षट्सु राशिषु चतुर्दश-
नक्षत्राण्यस्तं यान्ति अनन्तरराशौ पञ्चदशसङ्ख्याव-
च्छिन्ननक्षत्रोदयस्तथा चतुर्दशसङ्ख्यान्तरितनक्षत्रास्त
मयस्य चतुर्दशसङ्ख्यान्तरितानन्तरभाविनक्षत्रोदयं
प्रति करणत्वं स्यात् अयोगव्यवच्छेदेन सम्बन्धात् अ-
तश्च यत्किञ्चिन्नक्षत्रमारभ्य परिगणने यत्किञ्चिन्न-
क्षत्रस्य चतुर्दशसङ्ख्यावाच्छिन्नत्वमस्तीति विभागं
कृत्वा चतुर्दशनक्षत्रस्येत्युक्तमिति । रोहिण्यासत्त्यादेः
कृत्तिकोदयादौ करणत्वं स्यादतोऽतिव्याप्तिः ना-
तिव्याप्तिस्तस्यापि लक्ष्यत्वादित्यत आह * न चेति *
कुतो न युक्तमित्यत आह * योगेति * कारकवि-
शेषः करणं कारकत्वं च नियतपूर्वभावित्वं न च त-
दस्ति यौगपद्यादतो व्यापककारकत्वव्यावृत्त्या व्या-
प्यकरणत्वव्यावृत्तिरित्यर्थः ।

तत्र सम्बन्ध एव नास्ति कुतोऽयोगव्यवच्छेदवि-
शिष्टसम्बन्धित्वमित्यत आह ।

३११ सम्बन्धासत्त्वशङ्कापरिहारः ।

नच तत्र सम्बन्ध एव नास्ति व्याप्तेः स्वभावसम्बन्धा

रिमकाया दुरपह्नवत्वात् । अथ कार्य्यकारणभावः सम्बन्धो विवक्षितः । न, सामग्र्याः करणत्वापत्तेः । ओमिति चेत् तत्किमोमित्यभिधायैव निर्वृत्तो भवान् ? आकलितं किलास्माभिः सामग्र्यपि करणमित्यत्र न श्रद्दधतः प्रणवपूर्व्विकां श्रुतिमेव काञ्चित्पठित्वा श्रद्धापयिष्यति भवानस्मानिति ।

* न चेति * हेतुमाह * व्याप्तेरिति * वृक्षत्वशिंशपात्वयोरिव स्वभावसम्बन्धो ऽत्राप्यस्तीत्यर्थः । रोहिण्यासत्त्यादेः कृत्तिकोदयादिना स्वभावसम्बन्धे सत्यपि न तत्र करणत्वप्रसङ्गो विवक्षितसम्बन्धाभावादिति शङ्कते * अथेति * अयोगव्यवच्छेदेन क्रियया जन्यजनकभावलक्षणसम्बन्धवत्करणमिति लक्षणं विवक्षितं न च रोहिण्यासत्त्यादौ जन्यजनकभावो ऽस्तीति नातिव्याप्तिरित्यर्थः । क्रियया ऽयोगव्यवच्छेदेन जन्यजनकसम्बन्धित्वं सामग्र्यामस्ति न च करणमिति अतिप्रसक्त्या दूषयति * नेति * सामग्र्याः करणत्वमुक्तमङ्गीकरोति * एवमस्त्विति चेदिति * सामग्र्यपि करणमेवेति लक्ष्यैकदेशत्वान्न तत्रातिव्याप्तिरित्याशयः । सामग्र्याः करणत्वे प्रमाणाभावादप्रामाणिकत्वाङ्गीकारमात्रेणातिव्याप्तिः परिहरणीया तथाऽपि किं परिह्रियते उत मौनमेवेति, यदि मौनं तदा न वादिनः प्रतिस्पर्द्धी तस्मादाद्यः परिशिष्ट इति परिहरति * तदिति * तत्रातिप्रसङ्गे ओमित्य-

भिधायैव निवृत्तश्चरितार्थोऽतिव्याप्तिं परिहृतवानिति मित्यर्थः । ततश्च न्यायाभिमानं हित्वा श्राद्धत्वमेवात्मनः सम्पादितं स्यादित्यत आह * आकलितमिति * अस्माभिरेतल्लक्षणवादिभिः सामग्र्यपि करणमाकलितमित्यत्र न श्रद्दधतोऽस्मानपि प्रणवपूर्विकां कांचित् श्रुतिमेव पठित्वा श्रद्धापयिष्यति भवान् किलेति सम्बन्धः । किलेत्यप्रामाणिकतया हासप्रकटनार्थः । सभामध्ये स्वात्मन्यश्रद्दधतोऽपि प्रणवपूर्विकां काञ्चिच्छ्रुतिं वेदवाक्यं पठित्वा श्रद्धापयिष्यति तथाऽस्मानपि प्रणवपूर्वकं वाक्यमेवोच्चार्य भवान् श्रद्धापयिष्यति किलेति हासभावः ।

करणखण्डनप्रसङ्गेन सामग्रीमपि खण्डयितुं प्रसङ्गं करोति ।

३१२ सामग्रीखण्डनभूमिका ।

न सामग्री कारणं किन्तु तदेकदेशो नानाभूतः प्रत्येकं तथा, सामग्री तु यदनन्तरं कार्य्यं भवत्येवेत्येतावन्मात्ररूपेति चेन्न । एतादृशस्य सामग्रीलक्षणस्य करणेऽपि सत्त्वात् ऽकरणस्यापि सामग्रीत्वापातात् क्रियाया विभागादौ विभागस्य च संयोगनाशादिं प्रति तथात्वापत्तेः ।

* न सामग्रीति * अयोगव्यवच्छेदेन क्रियासम्बन्धेऽपि सामग्र्या जन्यजनकभावसम्बन्धो नास्ति तस्यैवेह विवक्षितत्वान्नातिव्याप्तिरित्यर्थः । सामग्री यदि न कारणं किं तर्हि कारणमित्यत आह * किं-

त्विति * सामग्र्येकदेशोऽपि निमित्तासमवाय्यादि-नानाभूतः प्रत्येकं तथा कारणमित्यर्थः । समवाय्यसमवायिनिमित्तभेदेन नानाभूत इति यावत् । कारणव्यतिरेकेण सामग्रीं नाम न पश्यामस्तद्भेदकधर्मादर्शनादित्यत आह * सामग्रीति * यदनन्तरं कार्यं भवति सा सामग्रीत्युक्ते कर्त्रादावतिप्रसक्तिस्तद्व्यावृत्त्यर्थमाह * भवत्येवेति * करतलानलसंयोगरूपसामग्र्यां सत्यामेव प्रतिकूलमन्त्रादौ च सति कदा-चित्कार्यानुदयादव्यापकं न च तत्र प्रतिबन्धकाभावरूपकारणाभावात्सामग्र्यभावः, प्रतिबन्धकाभावो न कारणं प्रतिबन्धकाभावत्वात्तदन्योन्याभाववदित्यव्याप्तिर्दोषो यद्यप्यस्ति तथाप्यतिव्याप्त्या दूषयति * नेति * व्यापृते करणे कार्यावश्यम्भावाभ्युपगमादतिव्याप्तिरित्यर्थः । अतिव्याप्त्यन्तरमाह * क्रियेति * मनसि क्रियानन्तरं विभागोत्पत्तिनियमस्ततो विभागात्पूर्वसंयोगनाशः ततः संयोगान्तरं ततो ज्ञानादिकार्यान्तरं भवतीति नियमात्क्रियाविभागादेरपि विभागसंयोगनाशादौ तथात्वापत्तिः सामग्रीत्वापातश्चशब्दात्संयोगजसंयोगे संयोगस्य विभागजविभागे विभागस्येति द्रष्टव्यम् ।

सामग्र्याः कारणत्वाभावमभ्युपगम्य दूषणमुक्तमिदानीं कारणत्वमपि सामग्र्या अभ्युपगन्तव्यमित्याह ।

३१३ सामग्र्याः कारणत्वाङ्गीकारणम् ।

यच्च प्रतिसामग्र्येकदेशं नियतप्राग्भावादि कारणल-

क्षणमिष्यते तत्सामग्र्यामपीति कथंतदकारणता?। प्राक्का-लमन्तर्भाव्य सामग्री तादृश्याश्च तस्याः प्राक्सत्त्वमेव नास्तीति चेन्न। तत एव प्राक्कालस्याकारणत्वात्कारण-सामग्र्यां तदनिवेशात्।

*यच्चेति* सामग्र्येकदेशान् प्रति यत्कारणलक्षण-मुच्यते नियतप्राक्सत्वं पूर्वसम्बन्धनियमो वा, त-त्सामग्र्यामपीति कथं तस्य न कारणत्वं न हि त-ल्लक्षणे सति ततोऽन्यत्वं, लक्षणस्यातिव्यापकत्वेना-लक्षणत्वप्रसङ्गादित्यर्थः। सामग्र्याः कारणलक्षणयो-गित्वे कारणत्वं स्यान्न च तदस्ति कुतः कारणत्व-मिति वक्तुं सामग्र्याः स्वरूपमाह * प्रागिति * प्राक्कालोऽपि सामग्र्यामन्तर्भवतीत्येतावता कथं सा-मग्र्यां कारणलक्षणाभाव इत्यत आह * तादृश्या इति * प्राक्कालस्य प्राक्कालसत्वं नास्ति तस्य स्वाश्र-यप्रसङ्गादतश्च तद्विशिष्टसामग्र्या अपि प्राक्कालसत्वं लक्षणं नास्तीत्याशयः। प्राक्कालस्य सामग्र्या बहि-र्भावमापादयितुं कालस्य कारणत्वं न स्यादिति प-रिहरति * नेति * प्राक्कालो न कारणं नियतप्राक्स-त्वहीनत्वात्कार्यवदित्यर्थः। कालस्याकारणत्वे साम-ग्र्यन्तर्भावात्तत्सहितसामग्र्याः कारणलक्षणं ना-स्तीत्यत्र किमायातमित्यत आह * कारणेति * कार-णान्येवैकदेशकालावस्थितानि सामग्री भवति काल-स्याकारणस्य न सामग्र्यनुप्रवेशो न तस्याः प्राक्कालस-त्त्वाभावेन सामग्र्याः कारणत्वाभावः सुभण इत्यर्थः।

एवमतिव्याप्तिमभिधायेदानीमव्याप्तिमाह ।

३१४ अव्याप्त्युद्भावनम् ।

अपि चैवं विवक्षितमपि करणं नस्यात् । न हि यावत्सत्त्वं व्यापारवतोऽपि तस्य क्रियाजनकत्वं, क्रियाकाले क्षणमपि तदनुवृत्तिनिषेधे प्रमाणस्य दुरुपन्यासतया संशयेनापि लक्षणासिद्धेः । प्रत्युत चिरस्थिरकरसंयोगे स्पृश्ये स्पर्शप्रमाकरणस्पर्शनेन्द्रियसंयोगस्थैर्यस्य मन्तुमुचितत्वात् ।

* अपि चेति * यावत्सत्त्वं जनकतया क्रियासम्बन्धिकरणमित्युच्यमाने करणत्वेन विवक्षितं कुठाराद्यपि करणं न स्यान्नेदं करणं तल्लक्षणहीनत्वात् कर्त्रादिवदिति प्रयोगादित्यर्थः । कुठारादिस्वरूपमात्रस्य करणत्वसाधने सिद्धसाधनता व्यापाराविष्टस्य तथात्वसाधने हेत्वसिद्धिर्व्यापाराविष्टस्य तस्य यावत्सत्त्वं जनकतया क्रियासम्बन्धादित्याशङ्क्याह * न हीति * कुत इत्यत आह * क्रियेति * व्यापाराविष्टं करणं क्रियोत्पत्तिकाले न तिष्ठतीति नियतप्राक्क्षण एव तस्य सत्त्वं न तु क्रियोत्पत्तिकाले क्षणमपि तया सह यौगपद्यमित्यत्र प्रमाणस्य भवता दुरुपन्यासत्वादनुवृत्तावपि प्रमाणाभावात्संशयः स्यादतश्च क्षणमात्रे क्रियया सह सन्दिग्धसत्त्वस्या नियतप्राक्सत्त्वकारणत्वेन सम्बन्धाभावात्संशयेनापि लक्षणस्यासिद्धिः सन्देहाविषयस्य पुरुषस्य स्थाणाव-

सिद्धिवत्सन्देहविषयत्वात्सन्दिग्धासिद्धवदित्यर्थः । लक्षणासिद्धत्वस्याप्यसिद्धेः सिद्धिरेवक्षणस्य किं न स्यादित्याशङ्क्य निश्चितमव्याप्तिस्थलमाह *प्रत्युतेति* विपरीतनिश्चयो स्तीति यावत् । चिरस्थितः करसंयोगो यस्मिन् स्पृश्ये द्रव्येनाचिरस्थितकरसंयोगं तस्मिन् स्पृश्ये द्रव्ये स्पर्शप्रमायां करणं च तत् स्पर्शनेन्द्रियं चेति तथोक्तं तद्व्यापाररूपस्य संयोगस्य स्थैर्यं स्थिरत्वं तस्य मन्तुं निश्चेतुमुचितत्वात् । इन्द्रियस्य संयोगव्यतिरेकेण नास्ति व्यापारः स्पर्शनेन्द्रियस्य च स्पृश्यपदार्थसंयोगे चिरस्थितेऽपि न सर्वदा स्पर्शप्रमा जायतेऽन्यासक्तचित्तत्वादिप्रतिबन्धादतश्च व्यापाराविष्टस्पर्शनेन्द्रिये सत्येव स्पर्शप्रमानुदयात् यावत्सत्वं जनकतया क्रियासम्बन्धित्वलक्षणं तत्र नास्तीत्यव्याप्तिरित्यर्थः ।

एव मव्याप्तिमुक्त्वाऽसम्भवमाह ।

३१९ असम्भवकथनम् ।

यावत्सत्त्वं च करणमिति भाषायां सर्व्वस्मिन् तत्सत्त्वकाले करणत्वमित्यर्थो नच कारणत्वस्य नियतपूर्वकालसम्बन्धात्मकस्य क्वचित्काले सत्त्वं, कालं प्रतिकालान्तराभावादिति ।

* यावदिति * यावत्सत्त्वमयोगव्यवच्छेदेन क्रियासम्बन्धिकरणमिति वाक्यस्य करणसम्बन्धिकाले सर्वस्मिन् करणमित्यर्थः । कारणत्वसम्बन्धाभ्युपगमा-

यावत्सत्त्वं कारणं क्रियाया इत्युक्तं स्यादिति कारणमिति भाषायां इत्युक्तम् । करणसम्बन्धि काले सर्वस्मिन् कारणं यत्तत्करणमिति वाक्यार्थो ऽस्तु तावता प्रस्तुते किं स्यादित्यत आह * न चेति * करणसम्बन्धिकाले तस्य कारणत्वमेव नास्ति नियतपूर्वकालसम्बन्धात्मकत्वात्कारणत्वस्य. यदि करणकाले तस्य कारणत्वं तर्हि नियतप्राक्कालसम्बन्धवत्त्वस्य कारणत्वस्यान्तर्भावितकालत्वेन स्वाश्रयः स्यादतोऽसम्भवि लक्षणमित्यर्थः । नात्माश्रयता नियतकालसम्बन्धवत्त्वस्य करणत्वस्यान्तर्भूतकालादन्यस्मिन् करणकाले वृत्तेरित्यत आह * कालमिति *

गदितावद्यं परासितुं प्रकारान्तरेण लक्षणमुपस्थापयति ।

३१६ अर्थान्तरनिराकरणम् ।

अथ क्रियया अयोगव्यवच्छेदेन सम्बन्धीत्यस्यायमर्थो यस्मिन् सतिभवत्येव क्रियेति । कोऽस्यार्थः किं यस्मादनन्तरं क्रियोत्पद्यत एव? उत यस्मिन् वर्त्तमाने क्रियोत्पद्यत एव? उत यस्मादनन्तरं क्रिया तिष्ठत्येव? उत यस्मिन् वर्त्तमाने क्रिया तिष्ठत्येव । नाद्यः सामग्र्याः करणत्वप्रसङ्गात् हस्तादीनामकरणत्वप्रसङ्गात् च । सुखदुःखादेः प्रमेयस्यापि प्रमाकरणत्वप्रसङ्गाच्च । नच प्रमेयमपि प्रमायाः करणं स्यादेवेति वाच्यम् । नत तथा व्यवहार-

स्य कस्यचिदप्यसिद्धेः । नापि द्वितीयः स्पृश्येन सह स्थिरसंयोगस्य स्पर्शनेन्द्रियस्याव्यापनात् तत्सत्त्वेऽपि व्यासक्तौ तेन प्रमानुत्पादनात् । नापि तृतीयः सामग्र्यादेः करणत्वप्रसङ्गात् उत्पत्तेः[२] स्थिरे करणत्वप्रसङ्गाच्च । नापि चतुर्थः सहस्थायिनां करणत्वप्रसङ्गात् । अथ क्रियया ऽयोगव्यवच्छेदेन सम्बन्धित्वं करणत्वमित्यस्यायमर्थः व्यापारवतः फलाव्यभिचारित्वमिति । मैवम् । हस्ताद्यव्यापनात् ।

* अथेति * कोऽर्थ इत्यत आह * यदिति * यस्मिन् भवति सति क्रिया भवत्येवेति यदयमस्य लक्षणवाक्यस्यार्थ इति यावत् । एतदाक्षेप्तुं पृच्छति * क इति * दूषणोक्तिविभागभङ्गप्रयै स्वाशयस्थान्विकल्पानीरयति * किमिति * वालेषु चमरीं हन्तीतिवत्सप्तम्या निमित्तार्थत्वमुररीकृत्य स्वाश्रयाव्यवहितोत्तरक्षणे जायमानक्रियाकारणं करणं विवक्षितमिति प्रथमविकल्पार्थः । भवतीति लडर्थमूरीकृत्य कल्पान्तरमाह *उतेति* यस्मिन् भवतीति सप्तम्यर्थकटाक्षेण विकल्पद्वयमभिधाय सम्प्रति भवतीत्याख्यातस्य वर्तमानार्थत्वस्वीकारेण कल्पान्तरमाह *उतेति* क्रियास्थितिकारणं करणमित्यर्थः । सप्तम्याख्यातयोरपि वर्तमानार्थत्वमादाय भङ्गान्तरमाह *उतेति* सर्वत्रायोग-

---

१ कश्चिदिति सो०पु०पा० ।

२ उत्पन्ने स्थिरे करणत्वेति सो०पु०पा० ।

व्यवच्छेदार्थः करणस्य कारणविशेषत्वादाद्यकल्प एव मदभिमत इत्याशङ्क्य तं प्रतिषेधति * नेति * यदनन्तरं कार्यं भवत्येवेत्येतावन्मात्ररूपत्वात्सामग्र्याः करणत्वं प्रसज्येतेति लक्षणस्यातिप्रसक्तिरित्यर्थः । ननु सामग्र्यनन्तरं घटादिद्रव्यादिव्यक्तयो जायन्ते न क्रिया, ततः कथमतिव्याप्तिरिति । मैवम् । तथाऽपि क्रियासामग्र्यामतिव्याप्तेरपि च द्रव्यादिसामग्र्यनन्तरमपि द्रव्याद्युत्पत्तिक्रियैव जायते । नोत्पत्तिक्रिया जायते किं तु घटादिरिति चेन्न । तद्गतजनेरजनित्वेनानादितया तदाश्रयघटादेरप्यनादित्वापातात्सामग्र्यन्तरकल्पने मानाभावाच्च । ननु जनिर्न क्रिया किं तु कारणसमवायः प्रागसतः सत्तासमवायो वेति । मैवम् । समवायहीनस्य प्रध्वंसस्याऽजनिमत्त्वं स्यादिति । एवमतिव्याप्तिमभिधायाऽव्याप्तिमाह * हस्तेति * हस्तादयः पाकादौ करणतयेष्यन्ते न च समनन्तरक्षणे क्रियोत्पत्तिः काष्ठव्यापाराग्निज्वालादिव्यवधानादकरणत्वं स्यादित्यव्याप्तिरित्यर्थः । यदनन्तरं क्रिया जायत एव तत्करणमिति लक्षणस्याव्याप्तिमुक्त्वाऽतिव्याप्तिमाह * सुखेति * आत्ममनःसंयोगादात्मसमवेतं सुखादि जायते तदुपलम्भे च मनःसंयुक्तात्मसमवायः सामग्री ततश्च सुखाद्युत्पत्त्यनन्तरं तदुपलम्भनियमात्तत्र करणत्वं सुखादेः प्रसज्येतेत्यर्थः । प्रमेयमपि तुलाद्रव्यं यथा प्रमाणं तद्वदुभयलक्षणोपपन्नत्वात्प्रमेयं प्रमाणं च सुखादि स्यादित्यत आह * न चेति * कुतो न वाच्यमित्यत आह * तत्वेति * प्रमेये प्रमा-

णत्वेन व्यवहारो न दृश्यते सुखमनुभवतीत्यर्थे सुखेनानुभवतीति प्रयोगादर्शनात्तदुचितस्य व्यवहारस्य कस्य चिदप्यभावेन तथात्वाङ्गीकारेऽतिप्रसङ्गाचेत्यर्थः । यस्मिन्वर्तमाने क्रियोत्पद्यते एव तत्करणमिति द्वितीयमपवदति * नापीति * कुत इति चेदव्याप्तेरित्याह *स्पृश्येनेति* स्थिरः संयोगो यस्य तत्तथोक्तं । संयोगव्यापारवतः स्पर्शनेन्द्रियस्य करणत्वमस्ति न च तस्मिन्वर्तमाने स्पृश्यप्रमा जायते तेनाव्याप्तिरित्युक्तं, स्पर्शनेन्द्रियं व्यापाराविष्टं क्रियोत्पत्त्यविनाभूतं व्यापारवत्करणत्वात्कुठारवदिति लक्षणमनुमिमीमहे तत्कथमव्याप्तिरित्यत आह * तदिति * व्यापारवति स्पर्शनेन्द्रिये सत्यपि मनसोऽन्यासक्तया सामग्र्यभावे तदनुपलम्भविरुद्धमनुमानमित्यर्थः । अपि शब्दाद्घटादिसंयुक्तचक्षुरादौ सत्यपि तत्प्रमानुदयात्तत्रातिव्याप्तिरिति द्रष्टव्यम् । यदनन्तरं क्रिया तिष्ठत्येव तत्करणमिति तृतीयपक्षोऽपि न समंजसपक्षनिक्षेपक्षम इत्याह *नापीति* तत्र कारणमीरयति *सामग्रीति* सामग्र्यनन्तरं क्रिया व्यवतिष्ठत एवेति तत्रातिव्याप्ति रादिपदेन सुखोत्पत्त्यनन्तरं तत्प्रमा तिष्ठतीति तत्रातिव्याप्तिर्द्रष्टव्या । अतिव्याप्त्यन्तरमाह*उत्पत्तेरिति*स्थिरः पदार्थो यो बुद्ध्यादिव्यतिरिक्तो घटादिस्तस्योत्पत्त्यनन्तरं स्थितिनियमात् स्थितिक्रियां प्रति तद्विशिष्टघटं प्रति कारणत्वं प्रसज्येत । अस्त्विति चेन्न। व्यापारवतः कारणत्वादुत्पत्तेर्व्यापाराभावात् । उत्पत्तेः स्थितेः करणत्वप्रसङ्गादिति के

श्चित्पठन्ति। तत्र पाठे उत्पत्तेः स्थितिक्रियां प्रति तस्याश्च तदुत्तरनाशादिक्रियां प्रति करणत्वप्रसङ्ग इति व्याख्येयम्। यस्मिन्वर्तमाने क्रिया व्यतिष्ठत एव तत्करणमिति चतुर्थोऽपि न चातुरीं प्राश्नतीत्याह * नापीति * अतिव्याप्तेरित्याह * सहेति * सह तिष्ठन्ति ये रूपरसादयस्तेषामन्योन्यं करणत्वं प्रसज्येत। ननु येन सह क्रिया वर्तते तत्करणं न च रूपादयः क्रिया नातोऽतिव्याप्तिरिति मैवम्। क्रियाशब्देन कार्यस्य वक्तव्यत्वादन्यथा कार्यं करणपूर्वकमिति व्याप्तेर्भङ्गा दपि च गमनादिक्रियया देवदत्तसमवायिन्या सह स्थितानां रूपादीनां करणत्वप्रसङ्गादिति। उक्तावद्यं परिहर्तुं प्रकारान्तरेण लक्षणार्थमाख्याति * अथेति * अव्यभिचारित्वमित्युक्ते रूपाव्यभिचारिरसे प्रसक्तिस्तन्निवारणाय फलाव्यभिचार इत्युक्तम्। सामग्र्यां व्यापारांशे वा प्रसक्तिं निवारयितुं व्यापारवत इति जगौ। तत्र व्यापाराभावात्। अव्याप्त्या दूषयति * मैवमिति * अव्यभिचारशब्देनैकदेशाविवक्षया रूपादावतिव्याप्तिः ज्ञानकरणे चातिव्याप्तिः ज्ञानस्यात्मदेशत्वात्करणस्य देहादिदेशत्वात्कालाव्यभिचारविवक्षायां हस्तादावव्याप्तिर्व्यापारवति हस्तादौ सत्यपि द्वितीयक्षणे पाकाद्यनुदयादित्यर्थः।

व्यापारवत इत्यत्र व्यापारविशेषणांशानिरुक्त्या तद्विशिष्टलक्षणानिरुक्तिं दर्शयितुं व्यापारं विकल्पयति।

३१७ व्यापारविकल्पः।

कश्चायं तद्व्यापारो नाम? किं तज्जन्यं कारणम्? उत

तदाश्रयं कारणम् ? । नाद्यः लिङ्गपरामर्शे तदसम्भवात् ।

*कश्चेति* क इत्यभिप्रेतं कल्पं विशदयति *किमिति* तेन करणेन जन्यः क्रियां प्रति कारणं स करणव्यापारो यथा कुठारजन्य उद्यमननिपतनरूपो व्यापारः छिदां प्रति हेतुः । करणजन्यस्तद्व्यापार इत्युक्ते क्रियायामतिव्याप्तिस्तन्निवारणाय कारणमिति । तावत्युक्ते कर्त्रादौ प्रसक्तिनिवारणाय तज्जन्य इति विशेषणम् । विरोध्यनेकप्रकारसंभवे सत्येव विकल्प इति प्रकारान्तरमाह * उतेति * तज्जन्यत्वस्थाने तदाश्रयत्वविशेषणम् । अव्याप्त्या प्रथममपाकरोति * नाद्य इति * व्याप्यस्य धूमादेः पक्षधर्मतया स एवायं धूम इति अनुसन्धानं लिङ्गपरामर्शः सोऽनुमितौ करणतयेष्यते न च तज्जन्योऽनुमितिकरणव्यापारो स्ति व्याप्तस्य पक्षधर्मतानुसन्धानादेवानुमित्युत्पत्तेरित्यर्थः ।

लिङ्गपरामर्शे लक्षणासत्त्ववल्लक्ष्यत्वमपि नास्तीत्यव्याप्तिपरिहारमाशङ्कते ।

३१८ अव्याप्तिपरिहाराशङ्का ।

पक्षे प्रथमधूमादिदर्शनस्य व्याप्तिस्मृतिद्वारा द्वितीयलिङ्गपरामर्शव्यापारं जनयतः करणत्वमेष्टव्यं, एवञ्च परमार्थतो व्याप्यस्य स्वरूपेण प्रमिति र्द्वितीयव्याप्ततत्परामर्शव्यापारिकाऽनुमानमिष्यत इति चेन्न ।

* पक्षे इति * गिरिशिखरावपरिवर्तिप्राथमिक-

धूमदर्शनात्सदृशसन्दर्शनसमुद्बुद्धव्याप्तिगोचरसंस्कारात् व्याप्तिः स्मर्यते ऽतश्च स एवायं वन्हिव्याप्तो धूम इति व्याप्यस्य पक्षधर्मतया परामर्शस्ततो वन्हिमानित्यनुमितिरतः प्रथमं पक्षनिष्ठतया व्याप्यस्वरूपप्रतीतिर्द्वितीयं व्याप्यपरामर्शं व्यापारं जनयन्ती करणमनुमितावेष्टव्यमित्यर्थः । एवं च व्यापारवतः फलाव्यभिचारित्वमिति लक्षणं नाव्याप्तं तथाविधव्यापारित्वमनुमितिकरणे ऽप्यस्तीत्यङ्गीकारादित्याह * एवं चेति *

लिङ्गपरामर्शव्यापारमजनयतोऽपि प्रथमपक्षनिष्ठलिङ्गदर्शनस्यानुमितिकरणत्वदर्शनादव्याप्तिर्न परिहृता स्यादिति परिहरति ।

३१९ अव्याप्त्यपरिहारः ।

अन्यतोजाताग्निधूमादिव्याप्तिस्मृतौ सत्यां पक्षगतप्रथमधूमादिदर्शनस्य तद्व्यापारकत्वासिद्धेः । तत्राप्युभयकर्मजसंयोगवत्तदपि कारणमिति चेन्न । अभावादिसापेक्षविशिष्टप्रतिपत्तिवत् प्रागुपजातवह्निव्याप्तधूमस्मृतेः प्रथममपि योऽसौ वह्निव्याप्तः सोऽयं धूम इति परामर्शोपपत्तेः । नित्यसापेक्षेऽर्थेऽस्तु तथा नान्यत्र प्रथमं तथेति चेन्न । प्राक्तत्कारणोपपत्तौ नान्यत्रैवमिति नियमे प्रमाणस्याभावात् । तस्य व्यापाराभावान्नानुमित्युत्पादकत्वमेवेति चेत् स्यादप्येवं यदि व्यापारवतः करणत्वमित्येव सिद्धं स्यात् ।

* नेति * वस्तुगत्या व्याप्ये दृष्टेऽपि
"सदृशाऽदृष्टचिन्ताद्याः स्मृतिबीजस्य बोधिका"

इत्युक्तत्वात्सदृशदर्शनवददृष्टादेरपि संस्कारोद्बोधकत्वाददृष्टादिनोद्बुद्धसंस्काराद्यत्र व्याप्तिः स्मर्यते तत्र समुद्बुद्धसंस्कारसहकृतसम्प्रयोगादेव व्याप्यप्रत्यभिज्ञानान्न प्रथमलिङ्गदर्शनस्य परामर्शजनकत्वमस्ति चानुमितिकरणत्वमित्यव्याप्तिरित्यर्थः। ननु सदृशदर्शनं परिदृष्टकारणे सति नादृष्टादौ कारणत्वं कल्प्यमिति। मैवम्। तथाऽपि तत्सम्भावनाया दुर्निवारत्वात्सन्देहेनापि लक्षणासिद्धेः। पाकार्थिनां मशकातुराणां च चिन्तादेरपि परिदृष्टत्वसम्भवाच्चेति। विमतं प्रथमलिङ्गदर्शनजन्यं अनुमितिकरण लिङ्गपरामर्शत्वात्सम्प्रतिपन्नवदिति प्राथमिकलिङ्गदर्शनस्यापि कारकत्वानुमानान्नाव्याप्तिरिति शङ्कते * तत्रेति * अदृष्टादिसमुद्बुद्धसंस्कारजस्मृतावपि तदपि प्रथमलिङ्गदर्शनमपि कारणमदृष्टादिकारणान्तरादेव तदुपपत्तौ न लिङ्गदर्शनस्य कारणत्वं कल्प्यं गौरवादित्यत आह * उभयेति * यथा मल्लयोः संयोग उभयकर्मभ्यां जायते तत्रैकेनैव कर्मणा संयोगसिद्धेर्नापरकर्मणो हेतुत्वं निवार्यते प्रमाणबलादेव गौरवपरिहारादेवमिहापीत्यर्थः। अव्याप्त्यन्तरप्रदर्शनेन परिहरति * नेति * प्रागुपजाता वह्निव्याप्तधूमस्मृतिर्यस्य प्रथममपि पक्षनिष्ठलिङ्गदर्शनव्यतिरेकेणादावपि यो सौ वन्हिव्याप्तः सोऽयं धूम इति परामर्शोपपत्तेर्दृष्टान्तमाह * अभावेति * अभावो भेद इत्यय-

मर्थो नित्यं धर्मिप्रतियोगिज्ञानसापेक्षप्रतीतिर्यथा धर्मिग्रहणे प्रतियोगिस्मरणे च सति प्रथमतोऽभावादेर्ग्रहणं विनैव निर्घटं भूतलं पटाद्भिन्नो घट इति विशिष्टं प्रतीयते तद्वददृष्टादिवशेन जनितव्याप्तिस्मृतेः कदा चित्पक्षनिष्ठव्याप्यप्रथमदर्शनव्यतिरेकेण व्याप्तिविशिष्टतयैव पक्षधर्मत्वानुसन्धानं सम्भवति तत्र का गतिः स्यादित्यर्थः । अभावादेर्धर्मिप्रतियोगिसापेक्षस्य तदविशिष्टतया प्रतिपत्तिवदिति योजनीयम् । नित्यसापेक्षो यः पदार्थस्तस्मिन्प्रथमत एव विशिष्टप्रतिपत्तिरस्तु न नित्यसापेक्षताहीन इति शङ्कते * नित्येति * अभावादेर्धर्म्यादिप्रतीतिपुरःसरमेव प्रतीतिनियमात्प्रतियोग्याद्यज्ञाने तद्ग्रहणायोगात्प्रथमत एव तद्वैशिष्ट्यप्रतीतिरस्तु लिङ्गस्य पुनर्व्याप्तिस्मृतिव्यतिरेकेणापि प्रतीतेः प्रथमं स्वरूपतः प्रतीतिस्ततो व्याप्तिस्मृतिद्वारा विशिष्टपरामर्श इत्यर्थः । अप्रतिबन्धसामग्र्यनन्तरं कार्यजन्मनियमान्नैवमिति परिहरति * नेति * पक्षनिष्ठप्रथमलिङ्गदर्शनात्प्रागेव व्याप्तिस्मृतिसहितलिङ्गाक्षसन्निकर्षलक्षणतत्परामर्शकारणसम्पत्तौ सत्यां नित्यसापेक्षताहीने प्रथमं विशिष्टपरामर्शो न जायते इत्यत्र प्रमाणस्योपन्यसितुमशक्यत्वादित्यर्थः । यदि लिङ्गपरामर्शोऽनुमितिकरणं स्यात्तर्हि तत्र लक्षणमनुगमयितव्यं तदेव न, व्यापारवतः करणत्वात्तस्य च व्यापाराभावादिति शङ्कते * तस्येति * कथमसिद्धेनासिद्धं सिषाधयिषसीति परिहरति * स्यादिति * गृहीताविनाभावस्य

व्याप्तिपक्षधर्मताप्रमितावनुमानस्यान्वयव्यतिरेकासिद्धत्वान्निर्व्यापारस्यापि तस्य करणत्वमेष्टव्यमित्यर्थः ।

लिङ्गपरामर्शो विमतो निर्विकल्पकपुरःसरस्सविकल्पकत्वात् सम्प्रतिपन्नवदिति तज्जनकलिङ्गविषयनिर्विकल्पकसिद्धेरस्यानुमितिकरणतोपपत्तावन्यथासिद्धिरन्वयव्यतिरेकयोरिति शङ्कते ।

३९९ अन्वयव्यतिरेकयोरन्यथासिद्धिशङ्कापरिहारः ।

तत्र धूमादिनिर्विकल्पकस्य तद्व्यापारस्य करणत्वमितिचेन्न । नित्यसङ्घटितार्थवह्निनापि निर्विकल्पकं सविकल्पकोत्पत्तेरविरोधेन त्वदुक्तप्रक्रियानियमे प्रमाणाभावात् । नित्यसङ्घटितेपि निर्विकल्पकं मंस्यस इति चेन्न । कारणान्तरादेव तदुपपत्तौ तत्र निर्विकल्पककल्पनायां प्रमाणाभावात् प्रत्युत तत्सङ्घटनस्य स्वभावानतिरेकोपगमात् ।

*तत्रेति* सविकल्पकत्वादिति हेतोरभावादिति सविकल्पे व्यभिचारोद्भावनेन परिहरति *नेति* निर्विकल्पकं विना सविकल्पकोत्पत्तेरविरोधेन त्वदुक्तप्रक्रियानियमे सविकल्पकं निर्विकल्पकपूर्वकमित्यत्र प्रमाणाभावाद्धेतोर्व्यभिचारित्वान्निर्विकल्पकव्यतिरेकेण तदुत्पत्तौ दृष्टान्तमाह *नित्येति* नित्यं धर्मिप्रतियोगिघटितेऽभावादौ निर्विकल्पकव्यतिरेकेण विशिष्ट-

विकल्पोत्पत्तिवदित्यर्थः। अभावादिविकल्पस्यापि निर्विकल्पकपूर्वकत्वेन सापेक्षत्वान्न व्यभिचार इति शङ्कते * नित्येति * नित्यसङ्घटिते- धर्मिप्रतियोगिविशिष्टे मंस्ये-ऽवगमिष्यामि। मैवं। तत्र निर्विकल्पकसत्वे प्रमाणाभावादिति परिहरति * नेति * अदृष्टादिसमुद्बोधितशब्दविषयसंस्कारादिना सविकल्पकज्ञानोत्पत्तौ न निर्विकल्पकस्य कारणत्वं कल्प्यमनन्यथासिद्धं हि कार्यं कारणं कल्पयति न चेदं तथा, प्रतियोगिस्मृत्यादिसहकृताक्षसम्प्रयोगाददृष्टादिसमुद्बुद्धशब्दसंस्कारसहकृताच्च कारणान्तरात्सविकल्पोत्पत्तेर्निर्विकल्पकस्य च शब्दसंस्कारोद्बोधकत्वेन सविकल्पं प्रति अकारणत्वादित्यर्थः। एवं न्यायबलादभावादिविकल्पस्य निर्विकल्पपुरःसरत्वं परास्य संप्रति तत्प्रक्रियया पराचष्टे * प्रत्युत विपरीतमिति *

निर्विकल्पकमभावादावभ्युपगम्यमानमभिन्नविषयं भिन्नविषयं वा सविकल्पकेन, नाद्यः सविकल्पकनिर्विकल्पकभेदाभावप्रसङ्गान्नापि द्वितीयस्तदनिरूपणात्। निर्विकल्पकस्य स्वरूपमभावादेर्विषयः प्रतियोग्यादिवैशिष्ट्यमभावस्य सविकल्पकविषय इति चेन्न। विशेषणविशेष्यस्वरूपानतिरेकाभ्युपगमाद्वैशिष्ट्यस्य। भवस्वभावावभासस्य निर्विकल्पकाजन्यत्वं तथाऽपि कार्यत्वाद्भवितव्यं केन चित्कारणेन, तदेव परामर्शव्यापारवत्तया ऽनुमितिकरणमित्यव्याप्तिपरिहारं शङ्कते।

४०० अव्याप्तिपरिहाराशङ्कातन्निराकरणे।

तथापि यत्किञ्चित्तज्जनकं तदेव तत्रानुमितिकरण-

मास्तामिति चेन्न। तथेन्द्रियादेरनुमितिकरणत्वापत्तेरित्यलमतिप्रसरेणेति ।

* तथाऽपीति * प्रत्यक्षानुमितिभेदो न स्यात्तज्जनकेन्द्रियादेरनुमितिकरणत्वप्रसङ्गादिति परिहराति * नेति * अदृष्टमादिपदोपात्तं तर्हि लिङ्गमेव कर्म्मतया परामर्शजनकं तद्व्यापारतयाऽनुमितिकरणमित्यत आह * इत्यलमिति * तर्हि घटज्ञानं घटस्य व्यापारः स्यात्ततो लिङ्गपरामर्शस्य तद्व्यापारत्वासम्भव इत्यर्थः ।

तज्जन्यस्तत्कारणं व्यापार इत्यत्र तज्जन्यत्वविशेषणप्रयुक्त्या दूषणमाह ।

४७१ विशेषणप्रयुक्त्या दूषणम् ।

शब्दश्रोत्रसन्निकर्षस्य च श्रोत्राव्यापारत्वप्रसङ्गात् । अन्यथा श्रोत्रस्य शब्दप्रतिपत्त्यात्रकरणत्वप्रसङ्गात् सन्निकर्षोहीन्द्रियव्यापार उच्यत इति व्यापारान्तरञ्च तस्य क्षणिकमसिद्धं स्थिरे चोक्त एव दोषः । शब्द एवतद्व्यापारः किन्न स्यादितिचेन्न । तस्य कर्मत्वेन करणकोटिबहिर्भावात् ।

*शब्देति * श्रोत्रं तावदाकाशमेव तद्गुणस्य च शब्दस्य तत्र समवायः संनिकर्षस्तस्य च नित्यत्वेनातज्जन्यत्वान्न तद्व्यापारत्वं द्रव्यत्वेऽपि नित्यविभुतया नित्यसंयोगतया न संनिकर्षत्वमित्यर्थः । शब्दस्य नि-

(१) मतिविस्तरेणेति का०मु०पु०पा० ।
(२) तथाचेति का०मु०पु०पा ।

स्यविभुत्वान्न नित्याकाशात्मकश्रोत्रेण संयोगो ऽज-संयोगानङ्गीकारादित्यत आह * अन्यथेति * शब्दस्य श्रोत्रसन्निकर्षाभावे श्रोत्रस्य शब्दोपलब्धौ करण-त्वं न स्यात्तदसन्निकृष्टत्वाच्चक्षुरादिवदित्यर्थः । अस्तु तर्हि श्रोत्रस्य शब्देन नित्यसंनिकर्षस्तथाऽपि शब्दोप लब्धिकरणता किं न स्यादित्यत आह *सन्निति* व्या-पारवतः करणत्वं व्यापारश्च तज्जन्यः कारणमिन्द्रिय-स्य च सन्निकर्षो व्यापारस्तस्य च श्रोत्रजन्यत्वाभा-वात्करणलक्षणं तव नास्तीत्यर्थः । तर्हि श्रोत्रस्य सन्नि-कर्षातिरिक्तं व्यापारान्तरं करणत्वनिर्वाहाय कल्प्य-तामित्यत आह *व्यापारेति* कल्प्यमानं व्यापारान्तरं क्षणिकं स्थिरं वा, क्षणिकमपि प्रयत्नरूपं परिणामरू-पं परिस्पन्दरूपं वा, नाद्योऽचेतनत्वान्नापि द्वितीयतृ-तीयौ विभौ विभुगुणे वा तयोरसम्भवादित्यर्थः । अ-स्तु तर्हि स्थिरमेव तदिति द्वितीयस्तत्राह * स्थिरे चे-ति * समवायवत्तस्यापि तज्जन्यत्वायोगात्तद्व्यापार-त्वासंभवे करणत्वासम्भवः श्रोत्रस्येत्युक्त एव सम-वायपक्षे दोष इत्यर्थः । तर्हि शब्द एव श्रोत्रजन्यत्वा-त्सविषयप्रतीतिजनकत्वाच्च श्रोत्रव्यापारोऽस्तु ततश्च श्रोत्रस्य व्यापारवत्तया करणत्वान्नाव्याप्तिरिति श-ङ्कते * शब्द इति * शब्दो न श्रोत्रव्यापारस्तद्विष-यत्वाद्यदेवं तदेवं यथा रूपादि,श्रोत्रं वा नस्वविष-यव्यापारं करणत्वाच्चक्षुरादिवदिति परिहरति * ने-ति * तस्य शब्दस्य श्रोत्रजन्यं ज्ञानं प्रति कर्मतया करणपक्षबहिर्भावादित्यर्थः ।

**शब्दस्य श्रोत्रव्यापारतया श्रोत्रजन्यं ज्ञानं प्रति करणत्वं तत्प्रयुक्तव्यवहारविषयतया कर्म्मत्वं चास्तु ततश्च विपक्षबाधकाभावादप्रयोजकतेति शङ्कते ।**

४०२ अप्रयोजकत्वशङ्कापरिहारः ।

क्वचित्तयोरेकत्वेऽपि का क्षतिरिति चेन्न । शब्दबुद्धौ कार्य्यायामुपधायकत्वेन प्रविष्टस्य शब्दस्य करणव्यापारतया कारणकोटावपि प्रवेशनेंऽशतो नियम्यानियामकत्वविरोधापत्तेः । घटादिबुद्धौ चक्षुरादेश्चक्षुर्घटादिसंसर्गव्यापारकत्वेऽपि सममिदमिति चेत् किन्न स्यात् । तथा च-

बाधेऽदृढेऽन्यसाम्यात् किं दृढेऽन्यदपि बाध्यताम् ।
क्व ममत्वं मुमुक्षूणामनिर्वचनवादिनाम् ॥ ३३ ॥
तथा हि मिथिलानाथो मुमुक्षुर्निर्ममः पुरा ।
आहेदं मिथिलादाहे नमे किञ्चन दह्यते ॥ ३४ ॥
इति ।

*** क्वचिदिति * विपक्षे दण्डं दर्शयन्परिहरति * नेति * शब्दबुद्धौ श्रोत्रकार्यायामुपधायकत्वेन विषयतया (व्यावर्तकत्वेन प्रविष्टस्य करणीभूतश्रोत्र) व्यापारतया करणकोटावपि प्रवेशनेंऽशतः शब्दस्य नियम्यनियामकविरोधापत्तिर्व्यापारविशिष्टस्य करणत्वात्तद्व्यापारतया करणत्वं तस्यैव पुनः कार्यबुद्धिविशेषणतया कार्यत्वमापद्येत तच्च विरुद्धं निय-**

() एतदन्तर्गतोग्रन्थः सो० पु० नास्ति ।

अस्यां चौखम्बा-संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतकं सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तबको मुद्रयित्वा प्रकाश्यते।
२ एकस्मिन् स्तबके एव ग्रन्थो मुद्र्यते।
प्राचीनादुर्लभाश्चाऽमुद्रिता मीमांसावेदान्तादिदर्शन, व्याकरण, धर्मशास्त्र. साहित्य, पुराणादिग्रन्था एवात्र सुपरिष्कृत्यमुद्र्यते।
३ काशिकराजकीयप्रधानसंस्कृतपाठालयाऽध्यापकाः पण्डिता अन्येच शास्त्रदृष्टयो विद्वांसः एतत्परिशोधनादिकार्यकारिणो भवन्ति।
४ भारतवर्षीयै, ब्रह्मदेशीयैः. सिंहलद्वीपवासिभिश्च एतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम् मुद्राः ७ आणकाः ८
५ अन्यैर्देयं प्रतिस्तवक " " १ " ०
६ प्रापणव्ययः पृथग् नास्ति।
७ साम्प्रतं मुद्र्यमाणा ग्रन्थाः- मुद्रिताः स्तबकाः

(१) संस्काररत्नमाला। गोपीनाथभट्टकृता (संस्कारः) २
(२) शब्दकौस्तुभः। भट्टोजिदीक्षितकृतः (व्याकरणम्) १०
(३) श्लोकवार्तिकम्। भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृत-न्यायरत्नाकराख्यया व्याख्याया सहितम् सम्पूर्णम्। (मीमांसा) १०
(४) भाष्योपबृंहितं तत्त्वत्रयम् विशिष्टाद्वैतदर्शनप्रकरणम् श्रीमल्लोकाचार्य्यप्रणीतम्। श्रीनारायणतीर्थ विरचित भाष्टभाषा प्रकाश सहितम्। स० (वेदान्त) २
(५) करणप्रकाशः। श्रीब्रह्मदेवविरचितः सम्पूर्णः (ज्योतिषः) १
(६) भाट्टचिन्तामणिः महामहोपाध्याय-श्रीगागाभट्ट विरचितः। तर्कपादः (मीमांसा) २
(७) न्यायरत्नमाला-श्रीपार्थसारथिमिश्र वि० स०(मीमांसा) २
(८) ब्रह्मसूत्रभाष्यम्-बादरायण प्रणीत वेदान्त सूत्रस्य यतीन्द्र श्रीमद्विज्ञानभिक्षु कृत व्याख्यानम्। सम्पूर्णः। (वेदान्तः) ६
(९) स्याद्वादमञ्जरी-मल्लिषेणनिर्मिता सम्पूर्णा। (जैनदर्शनम्) २
(१०) सिद्धित्रयम्-विशिष्टाद्वैत-ब्रह्मनिरूपणपरम्-श्रीभाष्यकृतां परमगुरुभिः श्री ६ यामुनमुनिभिर्विरचितम्। सम्पूर्णम् (वेदान्तः) १
(११) न्यायमकरन्दः। श्रीमदानन्दबोधभट्टारकाचार्यसंगृहीतः आचार्यचित्सुखमुनिविरचितव्याख्योपेतः (वेदान्तः) ४
(१२) विभक्त्यर्थनिर्णयः न्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायरचितः। सम्पूर्णः (न्यायः) ५

(१३) विधिरसायनम् श्रीअप्पयदीक्षितकृतम् स० ( मीमांसा ) २
(१४) न्यायसुधा ( तन्त्रवार्तिकटीका ) भट्टसोमेश्वरविरचिता । ( मीमांसा ) १५
(१५) शिवस्तोत्रावली । उत्पलदेवविरचिता । श्रीक्षेमराजविरचितवृत्तिसमेता । ( वेदान्तः ) २
(१६) मीमांसाबालप्रकाशः ( जैमिनीयद्वादशाध्यायार्थसंग्रहः ) श्रीभट्टनारायणात्मजभट्टशङ्करविरचितः । ( मीमांसा ) २
(१७) प्रकरणपञ्चिका ( प्रभाकरमतानुसारि मीमांसादर्शनम् ) महामहोपाध्यायश्रीशालिकनाथमिश्रविरचितम् । श्रीशङ्करभट्टकृता मीमांसासारसंग्रहश्च सम्पूर्णः ( मीमांसा ) ३
(१८) अद्वैतसिद्धिसिद्धान्तसारः । पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृतश्च । ( वेदान्त ) ३
(१९) कात्यायनश्रौतसूत्रम् महामहोपाध्यायश्रीकर्काचार्यविरचितभाष्यसहितम् । १२
(२०) ब्रह्मसूत्रभाष्यम् श्रीभास्कराचार्यविरचितम् ( वेदान्तः ) १
(२१) श्रीहर्षप्रणीतम् खण्डनखण्डखाद्यम् आनन्द पूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया ( विद्यासागरी ) ति प्रसिद्धया समेतम् । (वेदान्तः) ४
(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता । १
(२३) श्रीलक्ष्मीसहस्रम्—बालबोधिनीव्याख्यया ऽवतरणिकया च सहितम् । ८
(२४) ब्रह्मसूत्रवृत्तिः मरीचिका श्रीव्रजनाथभट्टकृता । ( वेदान्त ) २
(२५) क्रोडपत्रसंग्रहः अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्याः प्रत्यक्षानुमानगादाधर्याः प्रत्यक्षानुमानमाथुर्या व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकायाः कुसुमाञ्जलेश्च क्रोडपत्राणि । ( न्यायः ) १
(२६) ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम्। श्रीसुन्दरभट्टरचितसिद्धान्तसेतुकाभिधटीकासहितश्रीदेवाचार्यप्रणीतसिद्धान्तजाह्नव्याख्यव्याख्या० २
(२७) षड्दर्शनसमुच्चयः । बौद्ध नैयायिक कापिल्य जैन वैशेषिक जैमिनीयदर्शन संक्षेपः । मणिभद्रकृतटीकया सहितः । हरिभद्रसूरिकृतः । १
(२८) शुद्धाद्वैतमार्तण्डः प्रकाशव्याख्यासहितः । प्रमेयरत्नार्णवश्च १
(२९) अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृतदीधित्याः जागदीशी टीका । १३
(३०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः । ५
(३१) स्मृतिसारोद्धारः । विश्वम्भरविश्वम्भरत्रिपाठिसंकलितः । २
(३२) वेदान्तरत्नमञ्जूषा । श्रीभगवत्पुरुषोत्तमाचार्य कृता । २

पत्रादिप्रेषणस्थानम् } हरिदासगुप्तः, बनारस सिटी

November. 1908.

THE

# CHOWKHAMBÂ SANSKRIT SERIES

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS

NO. 131.

श्रीहर्षप्रणीतम्

खण्डनखण्डखाद्यम् ।

आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया

व्याख्यया 'विद्यासागरी'-ति प्रसिद्धया समेतम्

चित्सुख-शङ्करमिश्र-रघुनाथकृतटीकावल-

म्बिन्या टिप्पण्या सनाथम्

द्राविड—श्रीलक्ष्मण शास्त्रिणा परिशोधितः ।

ŚRÎ HARSHA'S

## KHAṆḌANAKHAṆḌAKHÂDYA,

WITH THE COMMENTARY

'khandanaphakkikâvibhajana'(vidyâsâgarî)of Ânandapûrna

WITH EXTRACTS FROM THE COMMENTARIES OF

Chitsukha, Śankara Miśra and Raghunâtha,

EDITED BY

PANḌIT LAKSHMANA ŚÂSTRÎ DRÂVIḌA,

*Professor of Vedânta, The Gaurishankar*

*Central Hindu College, Benares.*

FASCICULUS VI.

*PUBLISHED AND SOLD BY THE SECRETARY*

CHOWKHAMBÂ SANSKRIT BOOK-DEPÔT:

BENARES:

AGENTS:—OTTO HARRASSOWITZ, LEIPZIG:

PAṆḌITA JYESHṬHARÂMA MUKUNDAJÎ, BOMBAY.

PROBSTHAIN & CO., BOOKSELLERS LONDON,

*Printed by Harikrishna Dâs Proprietor,*

AT THE VIDYÂ-VILÂSA PRESS.

BENARES.

*Price Rupee One.*

॥ श्रीः ॥

-*-

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णालङ्कृतभव्याभशतपत्त्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दामोदमोहितम् ॥ २ ॥

स्तबकः—१३१

त्प्रागभावस्य कार्यत्वादित्यर्थः। एकस्य करणव्यापारतया करणत्वं बुद्धिव्यावर्तकतया कार्यत्वं चोररीकरणीयं अन्यथा चाक्षुषप्रत्यये कुम्भादेरप्यनेवम्भावप्रसङ्गादिति प्रतिबन्दीग्रहेण शङ्कते *घटादीति* घटादिबुद्धौ कार्यायां चक्षुरादेर्घटादिसंसर्गव्यापारतया करणत्वेऽपि सममिदं घटादेः संसर्गविशेषणतया करणत्वं बुद्धिव्यावर्तकतया कर्मत्वं च स्यादिन्द्रियसंनिकर्षव्यापारत्वादित्यर्थः। खण्डकं प्रत्ययं प्रसङ्गाभास इष्टापादनरूपत्वादिति परिहरति * किमिति * नास्माकं किं चिन्निर्वाच्यमस्ति निर्वाच्यपक्षखण्डनमात्रव्यापारादतस्तत्खण्डनमपि भवतामेवानिष्टाय टीकते इत्यर्थः। प्रतिबन्दीखण्डनन्यायसङ्ग्राहकश्लोकमात्र भवतीत्याह * तथेति * एकस्य नियम्यनि-
—यामकविरोधात्मको बाधो मदुक्तो दृढोऽदृढो वा, यद्यदृढस्तत्राह * बाध इति * अदृढे मदुक्ते बाधे प्रशिथिलमूलत्वादिदोषे सत्यन्यसाम्यात्किं स्यान्न किंचिदपि तदेवादार्ढ्यकारणं प्रशिथिलमूलत्वाद्युद्भाव्यतामन्यसाम्योद्भावनं व्यर्थं प्रशिथिलमूलत्वाद्युपजीव्यैव तदुद्भावनादित्यर्थः। यदि दृढस्तत्राह *दृढ इति* प्रशिथिलमूलत्वादिहीनतयाऽपरिहार्ये सत्यन्यत्प्रतिबन्दीस्थानमपि बाध्यताम्। तर्हि स्वपक्षोऽपि तव न सिध्येदेवं च जात्युत्तरता कथं न तवेत्यत आह * केति * अहंममभावहीनत्वान्मुमुक्षूणां कोऽपि स्वीयतया स्वीकृतपक्षो नास्ति यद्बाधया जात्युत्तरता स्यादित्यर्थः। मुमुक्षूणां स्वपक्षक्षतावपि निर्विकारतयाऽवस्थानं पु-

राद्वृत्तकथनेनोपपादयन्ति * तथाहीति * मिथिला नामनगरी तस्या नाथो जनकः । याज्ञवल्क्येन जनकस्य वेदान्तश्रवणयोग्यतापरीक्षार्थं मायावह्निना मिथिला नगरी प्रज्वालिता तदा जनकेनैवमुक्तं

"अनन्तमेव मे वित्तं यस्य मेनास्ति किञ्चन ।
मिथिलायां प्रदीप्तायां न मे किं चन दह्यत" ।

इति भारते श्रूयते इत्यर्थः ।

तदाश्रयः कारणं व्यापार इति द्वितीयमाशङ्क्य प्रतिषेधति ।

४०३ द्वितीयकल्पनिषेधः ।

नापि द्वितीयः लिङ्गपरामर्शस्यानुमितावकरणत्वप्रसङ्गात् । निर्विकल्पकस्यापि तस्योपगमे सविकल्पकानाश्रयत्वात् अतद्धेत्वाश्रयस्य तद्धेतुव्यापारत्वे चात्यापत्तेः।

* नापीति * कुत इत्यत आह * लिङ्गेति * लिङ्गपरामर्शोऽनुमितौ करणं न च तदाश्रयोऽनुमितिहेतुर्व्यापारोऽस्तीत्यव्याप्तिरित्यर्थः । धूमादिविषयं निर्विकल्पकज्ञानं करणं तत्परामर्शस्तु तद्व्यापार इति नाव्याप्तिरित्याशङ्क्याह * निर्विकल्पेति * तस्य धूमादेर्निर्विकल्पस्योपगमेऽपि सविकल्पानाश्रयत्वादव्याप्तिरिति शेषः । अपिशब्दान्निर्विकल्पव्यतिरेकेणापि विकल्पोत्पत्तिरुपपादितेति द्रष्टव्यम् । सविकल्पस्य निर्विकल्पाश्रितत्वं मा भूदस्तु च तद्व्यापारत्वमतश्च निर्विकल्पकस्य तद्व्यापारतयाऽनुमितिकरणत्वमित्यत आह * अतदिति * तस्याः प्रधानक्रियाया हेतुस्तद्धेतुः स

आश्रयो यस्य न भवति सोऽनङ्गत्वाश्रयस्तस्य प्रधान-क्रियाहेतुव्यापारत्वेऽतिप्रसङ्गः सर्वः सर्वस्य व्यापारः स्याद्विशेषादित्यर्थः ।

व्यापारवतः फलाव्यभिचारित्वमित्यत्र व्यापारा-निरूपणेन व्यापारवदित्यंशं परास्यदिदानीं फलाव्य-भिचारित्वं पराचष्टे ।

४०४ फलाव्यभिचारित्वांशखण्डनम् ।

किञ्च फलाव्यभिचारित्वं किन्तस्मिन्नेव काले फ-लस्य सत्त्वनियमः उत तदनन्तरं फलसत्त्वनियमः । नाद्यः कारणस्य पूर्वभावितायाः अवश्यं वक्तव्यत्वात् । न द्वितीयः आनन्तर्य्यं यद्यव्यवहितानन्तर्य्यं विवक्षि-तं तदा यत्किञ्चिद्व्यापारवतः करणत्वपक्षे हस्तादेर-करणत्वापत्तेः । आफलव्यापारवतस्तथात्वे कर्त्रादिष्व-तिव्याप्तिः । अथ व्यवहितस्याप्यानन्तर्य्यं विवक्षितं तदा-पि यत्किञ्चिद्व्यापाराभिप्रायेऽन्तरायसम्भवात् हस्ता-द्यव्याप्तिः आफलव्यापाराभिप्राये च व्यवधानासम्भ-वात् कारकमात्रं करणमित्युक्तं स्यात् ।

*किञ्चेति* आद्यं दूषयति *नेति* यस्मिन् काले करणं तस्मिन्नेव फलं न संभवति करणजन्यत्वात्फल-स्य जन्यजनकयोश्च पूर्वापरभावनियमादित्यर्थः । कर-णानन्तरं फलसत्त्वनियम इति द्वितीयं दूषयति * ना-पीति * आनन्तर्यं किमव्यवहितानन्तर्यं विवक्षित-

मुत व्यवहितानन्तर्यं यद्याद्यस्तदाऽपि यत्किञ्चिद्व्यापारवतः करणत्वमुताऽऽफलव्यापारवत इति विकल्प्य यत्किञ्चिद्व्यापारपक्षं दूषयति * आनन्तर्यमिति * काष्ठसंयोगादिव्यापारवतो हस्तादेः पाककरणतया इष्टस्यानन्तरं पाकादर्शनात्करणत्वं न स्यादित्यव्याप्तिरित्यर्थः । आफलव्यापारत्वात्करणमिति द्वितीयोऽस्तु गदितावद्याभावादित्यत आह *फलेति * यद्व्यापारानन्तरं फलं जायते स आफलव्यापारः फलोत्पत्तिपर्यन्तं व्यापृतस्येति यावत् । करणत्वे कर्त्रादेरपि करणत्वापातस्तस्यापि फलपर्यन्तव्यापारस्यैष्टव्यत्वादन्यथाऽकारणत्वप्रसक्तेरित्यर्थः । अव्यवहितानन्तर्यमिति न विशेष्यते किं त्वानन्तर्यमात्रमतश्च व्यवहितमप्यानन्तर्यं विवक्षितमिति नाव्याप्तिरिति द्वितीयं कल्पमुत्थापयत्यथेति । तदाऽपि यत्किञ्चिद्व्यापारवतः करणत्वमुताऽऽफफलव्यापारवत इति विकल्प्य प्रथमं दूषयति * तदापीति * यत्किञ्चिद्व्यापारवतोऽनन्तरफलत्वं करणत्वमित्युक्तं स्यात्तच्च न संभवति काष्ठसंयोगादिव्यापारवतो हस्तादेरग्निज्वालादिव्यवधानवतोऽपि यतः कुतश्चित्पाकोत्पत्तेः प्रतिबन्धसंभवादव्यापकत्वादित्यर्थः । द्वितीयमतिव्याप्त्या दूषयति * आफलेति * व्यवधानस्य कर्त्रादिष्वप्यसंभवादतिव्याप्तिरित्यर्थः ।

प्रकारान्तरेण लक्षणं दूषयितुं विकल्पयति ।

४०५ विकल्पनिरासः ।

व्यापारवतश्च फलाव्यभिचार इति किन्तद्व्यापारस्य

फलाव्यभिचारित्वं व्यापारविशिष्टस्यवा । नाद्यः हस्ताद्यकरणत्वापातात् । अत एव नद्वितीयः यागादेः स्वर्गाद्यकरणत्वापातात् । अपूर्ववाक्यार्थत्ववादिनाऽपि चरमयागस्य फलकरणत्वाभ्युपगमादिति ।

*व्यापारेति* व्यापारवतः फलाव्यभिचारित्वमित्यत्र करणोपलक्षितव्यापारस्य फलाव्यभिचारित्व,मुत व्यापारविशिष्टहस्तादेरिति विकल्पाभिप्रायः । हस्ताद्युपलक्षितव्यापारस्य करणत्वमित्याद्यं दूषयति *नेति* एवं च हस्तादेरकरणत्वं स्यादुपलक्षितादुपलक्षणस्यान्यत्वादेवं च हस्तेन रामेण शरेण विद्ध इत्यादिव्यवहारो विरुध्येतेत्यर्थः । व्यापारविशिष्टं हस्तादि करणमिति द्वितीयं दूषयति *नेति* यजेतेत्यादिवाक्यस्य भावनाऽर्थ इति केचित् । अपरे समीहितोपायत्वमिति । अन्येऽपूर्वमिति । तत्र पक्षद्वये दोषमाह *यागादेरिति । यागदानहोमानां स्वर्गपशुपुत्रादिकं प्रत्यकरणत्वापातात्काष्ठसंयोगादिव्यापारवतो हस्तादेरकरणत्वापाताद्यागादेः स्वयं व्यापारतया व्यापारवत्त्वाभावात्क्षणिकत्वाद्व्यापारितया स्वर्गादिफलपर्यन्तावस्थानायोगाच्चेत्यर्थः । अपूर्ववाक्यार्थपक्षे नायं दोषो यागादेरपूर्वं प्रति करणत्वात्तस्य च स्थिरस्य स्वर्गादिकरणत्वादित्याशङ्क्य निगदति*अपूर्वेति*दर्शपूर्णमासाभ्यां यजेतेत्यत्राग्नेयादयःषड्यागा गम्यन्ते तेषां समप्राधान्यादन्योन्यमङ्गाङ्गितया करणत्वायोगात्स्वयं क्षणिकत्वादेककर्तृकत्वाच्च सम्भूयापूर्वकरणत्वायोगात्पूर्वपूर्व-

यागजन्यावान्तरापूर्वविशिष्टस्य चरमयागस्य परमापूर्वकरणत्वमिष्टं तन्न स्याद्यागस्य व्यापारत्वादेवान्यव्यापारविशिष्टत्वाभावादित्यर्थः ।

फलाव्यभिचारप्रयुक्तदोषं परिहर्तुं लक्षणान्तरमाह

४०६ उद्योतकरकृतकरणलक्षणनिरासः ।

अथान्येन यद्वानेव करोति तत्करणं, यद्वानेव प्रमिमीते तत्प्रमाणम् । मैवम् । आत्मधर्मप्रध्वंसादीनामकरणानां प्रमाणत्वप्रसङ्गात् ।

*अथेति* यत्करोति तत्करणमित्युक्ते कर्त्रादावतिव्याप्तिस्तन्निरासार्थमाह *यद्वानिति* तावत्युक्तेऽलङ्कारादावतिव्याप्तिरत उक्तं *एवेति* प्रकृतप्रमाणलक्षणोपयोगितया करणसामान्यलक्षणानन्तरं तद्विशेषप्रमाणलक्षणमाह *यदिति* कृत्यं पूर्ववत् । यच्छब्देन करणमुच्यते किमकरणं, आद्येऽसिद्धः द्वितीये व्याघातस्तथा विशेषाभिधानेऽननुगमः सामान्यं स्वासिद्धं यच्छब्दवाच्यमिति दूषयति * मैवमिति * अतिव्यापकत्वादपि नेदं लक्षणमित्याह *आत्मेति* आत्मधर्मा ये क्षणिका बुद्ध्यादयस्तेषां प्रध्वंसानां क्रियां प्रति करणत्वं नास्तीत्यतिव्याप्तिरित्यर्थः ।

अतिव्याप्तिपरिहाराय लक्षणं विशिनष्टि ।

४०७ विशेषणदानेऽप्यतिव्याप्तिः ।

येन क्रियाकारणेन युक्त एव प्रमिमीत इति चेन्न । सुखादिप्रमितौ करणव्यापारस्याऽपि करणत्वप्रसङ्गात् । ओमि-

तिचेन्न । अव्यापारतयाऽकारकत्वेन तद्विशेषकरणभावा-नुपपत्तेः । व्यापारवत्ताऽपीति चेन्न । एवं हि व्यापारवत एव करणत्वं न स्यात्, न हि व्यापारवतस्तस्य व्यापारान्तरवत्ताऽस्ति । अथ व्यापारवतो व्यापारांशमपहाय करणत्वं, तत्र चास्त्येवेदं लक्षणं-यस्य करणत्वमस्ति त-स्य व्यापारवत्त्वमप्यस्तीति व्यापारवत् करणमुच्यत इति । न, पटमुद्यम्य निपात्य च प्रक्षालयतः स[2] कर्मैव हि कर-णं स्यात् ।

* येनेति * अतिव्याप्त्यैव दूषयति * नेति * सुखादय आत्मगुणा आत्ममनःसंयोगात्प्रतीयन्ते तत्रात्मसंयुक्तं मनः करणं संयुक्तसमवायात्तत्प्रमाति साधनत्वात्तस्य मनसो व्यापारः संयुक्तसमवाय इति इन्द्रियस्यार्थसंनिकर्षमात्रव्यापारत्वात्तस्यापि सु-खादिप्रमितिकरणत्वं प्रसज्येत कथितलक्षणस्य तत्र भावादिति भावः । मनसा सुखादिसन्निकर्षः सुखा-दिप्रमितौ करणं नियमेन तत्प्रमातृविशिष्टत्वे सति क्रियाकारणत्वान्मनोवदिति शङ्कते *अमितिं* हेतो-र्विशेषणासिद्ध्या दूषयति * नेति * मनःसन्निकर्षो न कारणं व्यापारहीनत्वाच्छशशृङ्गवद्व्यापारहीनश्च स्वयं व्यापारतया, व्यापारान्तरापगमेऽनवस्थाना-देवं च न तत्करणं तदकारकत्वाद्वस्त्वन्तरवदिति

(१) व्यापारवत्ताऽस्ति इति० सो० पु०पाः

२ स-पटः कर्म वस्तुगत्या भवति त्वल्लक्षणेन करणं स्यादित्यर्थः।

भावः। व्यापारवत्कारकं कारकविशेषश्च करणं मनः-संनिकर्षस्य निर्व्यापारतया कारकत्वानुपपत्तौ तद्विशेषकरणत्वानुपपत्तिरिति तत्रोक्तामतिव्याप्तिं परिहर्तुं विशेषणान्तरं शङ्कते * व्यापारेति * येन व्यापारवता कारणेन युक्त एव प्रमिमीते तत्प्रमाणमिति विशिष्टलक्षणं तत्र नास्तीत्यर्थः। व्यापारवतेत्यत्र व्यापारविशिष्टस्य करणत्वमुच्यते व्यापारोपलक्षितस्येति विकल्प्य प्रथममसम्भवेन पराकरोति * नेति * व्यापारवतापीति विशेषणोपादाने व्यापारवतः कुठारान्तःकरणादेरेव करणत्वं न स्यादिति वचः परस्परव्याहतमित्यत आह * न हीति * व्यापारवतो व्यापारवत्त्वाऽस्ति न वा, अस्ति चेत्तेनैव व्यापारेण व्यापारान्तरेण वा, तेनैव चेद्दशात आत्माश्रयो,ऽन्येन चेत् क्वचिद्व्यापाराविच्छेदे तत्रैवाव्याप्तिरविच्छेदेऽनवस्थाऽतोऽव्यापारवतो व्यापारवत्त्वं नास्तीति द्वितीयः परिशिष्यते ततोऽसम्भव इत्यर्थः। व्यापारविशिष्टं करणं न ब्रूमः किं तु तदुपलक्षितमुपलक्षणं चोपलक्ष्याद्बहिर्भवति तेन न गदितावद्यमिति द्वितीयमवलम्बते *अथेति* व्यापारस्योपलक्षणत्वाश्रवणे विशेषणपक्षात्को विशेष इत्यत आह * तत्रेति * लक्षणसत्त्वमभिनयेन दर्शयति * यस्येति * निगमयति * व्यापारेति * व्यापारलक्षितेन येन कारणेन युक्त एव करोति तत्करणमित्येतद्लक्षणं क्रियाकर्म्मणोऽपि करणत्वापातादिति दूषयति *नेति* उद्यम्य निपात्य च पटं प्रक्षालयतो रजकस्य या प्रक्षाल-

नक्रियां तत्प्रति कर्म्मकारकं स पट एव करणं स्यान्न च कर्म्मणः करणत्वं तदुचितव्यवहारस्य कर्म्मणि कस्यचिददर्शनादिति पुरा निरधारीत्यर्थः ।

एवं करणलक्षणं परास्य संप्रति कस्येदं लक्षणमिति लक्ष्यं पक्षीकृत्य तद्धर्म्मतया लक्षणोक्तिः क्रियते तथा च किं तल्लक्ष्यमिति पृष्टे तद्वक्तव्यमन्यथाऽऽश्रयासिद्धेर्लक्षणस्येत्याह ।

४०८ लक्ष्यस्वरूपापरिज्ञाने लक्षणस्यानन्वत्त्वम् ।

किंच किं तस्य करणत्वमिति लक्ष्यीभूतस्यावश्यवक्तव्यत्वात् यद्युक्तलक्षणवत्त्वमेव तत् स्यात् तदाऽऽत्माश्रयापातः स्यात् । स्वरूपमिति चेन्न। स्वरूपस्य प्रतिकरणं भिन्नतया एकपरित्यागेनापरत्र लक्षणं गतमित्यतिव्यापकं स्यात्, न हि चक्षुषः स्वरूपं श्रोत्रस्येति ।

*किं चेति* लक्षणमिति लक्ष्यीभूतस्य लक्ष्यस्येति यावत् । किं त्वदुक्तलक्षणाविशिष्टं लक्ष्यं किं वालक्षणांशमपहाय स्वरूपमात्रमिति विकल्प्य प्रथममनुवदति *यदीति*तदाऽपि किं लक्षणं लक्ष्ये वर्तते उत न, न चेदलक्षणं स्यात् वर्तते चेत्तत्राह*तदेति*तर्हीति यावत् । लक्ष्यं करणमुक्तलक्षणविशिष्टमेव विशेषणविशेष्यतत्संसर्गमात्रमतश्च स्वविशिष्टे स्वयं वर्त्तते इत्यंशात आत्माश्रय इत्यर्थः । यस्यैतल्लक्षणवैशिष्ट्यं तत्स्वरूपमात्रस्य तल्लक्ष्यत्वान्न तत्र लक्षणवृत्तावात्माश्रय इति द्वितीयं शङ्कते *स्वेति* सकलकरणस्वरूपसङ्ग्राहकरूपान्तरक्रोडीकृतस्वरूपाणां प्रत्येकं लक्ष्यत्वमुत प्रतिकरणं भिन्न-

भिन्नरूपेणाऽऽश्रये तदेव रूपान्तरं लक्षणमस्तु व्यर्थोऽयमुपन्यास इति बहिरेकं दूषयित्वा द्वितीयं प्रत्याह *नेति* प्रतिकरणं भिन्नस्वरूपाणां सम्भूय लक्ष्यत्वे न क्वापि। प्रत्येकं लक्ष्यत्वे नयनादिस्वरूपपरित्यागेन श्रोत्रादिस्वरूपे लक्षणगमनादतिव्याप्तिरिति यावत् । चक्षुःस्वरूपस्य लक्ष्यत्वेऽपि लक्षणस्य श्रोत्रे प्रवृत्तिर्न दोषाय तयाः स्वरूपस्यैक्यादित्यत आह *न हीति* न हि चक्षुःस्वरूपं श्रोत्रस्यास्ति तयोरैक्यापादिति शेषः । उपलक्षणं चैतद्वंधवर्ती पृथिवीत्यादिलक्षणसाधारणत्वात् ।

यद्वानेव प्रमिमीत इत्येवकारेण प्रमाणस्य प्रमात्रव्यभिचार उच्यत इति वाच्यमन्यथा वक्ष्यादाव्याप्तेर्यद्वान्प्रमिमीत एवेति लक्षणस्य भावादेव चाव्यापकमित्याह ।

४०९ यद्वानेवप्रमिमीत इत्यत्र दोषान्तरम् ।

किञ्चैवामिन्द्रियादेः प्रमाणत्वं न स्यात् अतद्वतोऽप्यनुमात्रादेः प्रमातृत्वात् । नासौ प्रत्यक्षमिति चेन्न। नेदमपिहि प्रत्यक्षमात्रस्य लक्षणं भवता क्रियते । ननु यद्यपीन्द्रियादेर्विशेषतो व्यावृत्तिस्तदपि तज्जातीयकरणमात्तया तज्जातीयमात्रस्याव्यावृत्तिरेव, नह्यनुमित्यादावप्यकरणजातीयवान् प्रमिमीते इति । न । करणतया साधारणभावस्याद्याऽपि निर्णतुमशक्यत्वात् ।

१ प्रत्यक्षप्रमेति सो० पु० पा० ।
२ इदमपिहि इति सो० पु० पा० ।

*किं चेति* इन्द्रियादेरित्यादिशब्देन लिङ्गादि गृह्यतेऽनुमात्रादेरित्यादिपदेन प्रत्यक्षप्रमात्रादि गृह्यते। इन्द्रियव्यापारादिव्यतिरेकेणानुमानादिप्रमा जायते लिङ्गादिव्यापारव्यतिरेकेणापि प्रत्यक्षप्रमाऽतो यज्ञानेव प्रमिमीत इति लक्षणमिन्द्रियादावव्यापकमित्यर्थः। इन्द्रियव्यापारस्यानुमात्रादिव्यभिचारेऽपि प्रत्यक्षप्रमात्रव्यभिचारात्प्रमाणत्वमिति शङ्कते *नेति* सामान्यलक्षणे विशेषाव्यभिचारः किञ्चित्कर इति परिहरति *नेति* यच्छब्देन करणमात्रमभिधाय तस्य प्रमिमीत इति प्रमातृमात्राव्यभिचार उच्यते सामान्यलक्षणत्वात्तच्च नेन्द्रियादौ तद्धीनस्याप्यनुमात्रादित्वादित्यर्थः। यज्ञानेव प्रमिमीत इति यज्जातीयवानेव यां कां चित्प्रमां करोतीत्यर्थेन इन्द्रियादेर्विशेषरूपात् व्यावृत्तावपि करणत्वोपाधौ प्रमात्रव्यभिचारान्नाव्याप्तिरिति चोदयति *नन्विति* तदपि—तथाऽपीति यावत्। तज्जातीयमात्रस्याव्यावृत्तिः करणत्वाक्रान्तरूपस्यानुगमः। हेतुमाह *तज्जातीयकरणमात्रतयेति* प्रमाजातीयकरणमात्रत्वादित्यर्थः। इन्द्रियव्यापारविरहवत् करणमात्ररहित एवानुमात्रादिर्भवति तेन न सामान्येनाप्यनुगम इत्याशङ्क्यानुमित्यादावपि करणमात्ररहितो न प्रमां करोतीत्याह *न हीति* कथमसिद्धेन करणत्वोपाधिना लक्षणस्यानुगमयितासीति परिहरति *नेति* करणत्वे सिद्धे तदुपाधावनुगतलक्षणसिद्धिस्तत्सिद्धौ च करणत्वसिद्धिरिति परस्पराश्रय इत्यर्थः।

**यद्वा नैव प्रमिमीत इति लक्षणमव्याप्तिपरिहाराय विशिनष्टि ।**

४१० अव्याप्तिपरिहाराशङ्कातन्निराकरणे ।

अथ यां प्रमा यद्वानेव जनयति तस्यां तत्करणमिति । मैवम् । कौपीनाच्छादनादेरपि करणत्वप्रसङ्गात् । यज्जातिकामिति चेत् । मैवम् । परोक्षत्वजातिकां प्रमां लिङ्गवानेव शब्दवानेव वा जनयतीति नियमाभावात् तस्याकरणत्वप्रसङ्गात् । साक्षात्कारित्वानुमितित्वादयो जातिभेदा विवक्षिता इति चेन्न । प्रत्येकमुपादानेऽव्याप्तेः । सम्भूयोपादाने सर्व्वाव्याप्तेः । अनियमेनोपादाने च लक्षणाननुगमापातादिति ।

*** अथेति * प्रतिप्रमाव्यक्ति तत्तत्करणविशेषवत्त्वं विवक्ष्यते यस्यां प्रमायां यस्यान्वयो दृश्यते तत्करणमित्यतो नाव्याप्तिरित्यर्थः । यस्यामिति प्रमाव्यक्तिरुच्यते किं वा यज्जातीयप्रमायां यस्यान्वयो दृश्यते तत्र तत्करणमिति, नाद्योऽतिव्यापकत्वादित्याह * मैवमिति * कौपीनं गुह्यं तदाच्छादनं पटः उक्तं हि "अकृत्यगुह्ये कौपीनं कीलालं रुधिरं जल" मिति कौपीनाछादनादेरपि कस्यांचित्प्रमाव्यक्तावन्वयो दृश्यत इति तस्य तत्र करणत्वं स्यादित्यर्थः । यज्जातीयप्रमायां यस्यान्वयस्तत्करणमिति गदितावद्यपरिहाराय द्वितीयमाशङ्कते * यदिति * कौपीनाच्छादनादिमान्यद्यपि कां चित्प्रमां करोति तथाऽपि तद्वा-**

नेव तज्जातीयसर्वप्रमां न जनयति तदभावेऽपि दर्शनादिहेतुतथाभावस्य विवक्षितत्वान्नातिव्याप्तिरित्यर्थः । यज्जातीयामिति परोक्षजातीयामपरोक्षजातीयां चेति विवक्षितं उत साक्षात्कारित्वानुमितित्वादिजातीयां वेति विकल्प्याऽऽद्यमव्याप्त्या दूषयति * नैवमिति * परोक्षजातीयप्रमानिष्पादकस्य शब्दवत्वं लिङ्गवत्वं वेति नियमाभावाल्लिङ्गादेरकरणत्वप्रसङ्ग इत्यर्थः । न च परोक्षजातीयप्रमानिष्पादने लिङ्गाद्यन्यतमनियमात्तस्य करणत्वमिति वाच्यम् । अन्यतमार्थव्यावृत्त्याऽव्याप्तितादवस्थ्यात्साक्षात्कारिजातीयां यद्वानेव जनयति तत्तत्र करणमेवमनुमितिजातीयां यद्वानेव जनयति तत्तत्र करणमेवमुपमितित्वादावपीति द्वितीयं शङ्कते * साक्षादिति * साक्षात्कारित्वादिजातिभेदाः प्रत्येकमुपादीयन्त उत सम्भूय उतानियमेनेति. न तावदाद्योऽव्याप्तेरित्याह *नेति* साक्षात्कारिजातीयां यद्वानेव जनयति तत्प्रमाणमित्यादिप्रत्येकोपादाने लक्षणं तच्च नानुमानादावित्यतिव्याप्तिरिति यावत् । द्वितीयमसम्भवेन दूषयति * सामिति * यद्वानेव साक्षात्कारित्वादिसर्वजातीयां प्रमां करोति तत्प्रमाणमित्यर्थः स्यान्न चैतादृक् किं चिदस्तीति सर्वाव्याप्तिरसम्भव इत्यर्थः । तृतीयं प्रत्याह * अनियमेनेति * यदाकदाचिद्यत्किञ्चिद्वान् यां कां चित्प्रमां जनयति तत्प्रमाणमित्यर्थः स्यात् नचैतल्लक्षणं व्याप्नोति यदेत्यादिविशेषणस्य व्यावृत्तार्थत्वादित्यर्थः ।

व्यतिरेकमुखेन करणसामान्यस्य लक्षणमुपन्यस्यति

४११ व्यतिरेकमुखेन करणसामान्यस्य प्रमाणस्य च दूषणम् ।

यदभावात् कर्तृकर्मणी क्रियां न जनयतः तत्करणं तेन यदभावात् प्रमातृप्रमेये प्रमां न जनयतः तत्प्रमाणमिति लक्षणमित्यपि नयुक्तम् । किं प्रमातृप्रमेये सती यत्र न जनयतः उताऽसती अपि । आद्ये अतीतानागतानुमानादिकरणाव्याप्तिः । नापि द्वितीयः प्रमातृप्रमेययोरपि प्रसङ्गात् । यथा हि तत्र चक्षुराद्यभावात् प्रमा न जायते तथा प्रमातृप्रमेययोरप्यभावात्, अन्यथा तयोः कारणत्वमेव नस्यात् । एतेन सामान्यतोऽभिधानं प्रत्युक्तम् । अस्मदादिकर्तृमापेक्षेश्वरकर्तृके चास्मदादिज्ञाने अस्मदादिकर्तृकरणतापत्तेः । एवञ्चसति प्रकारभेदेनापि प्रमाणप्रमात्रादिव्यवस्थासमर्थना कृता न स्यात्, येनैव रूपेण कर्तृत्वादिना तस्य प्रमायामन्वयस्तेनैव तद्व्यतिरेकस्य प्रमानुत्पत्तौ प्रयोजकत्वादिति ।

* यदिति * यत् क्रियां न जनयति तत्करणमित्युक्ते क्रियायामेवातिव्याप्तिरसम्भवो वा तद्व्यावृत्त्यर्थं यदभावादित्युक्तम् । यदभावात् क्रिया न जायते तत्करणमित्युक्ते कर्त्र्यतिव्याप्तिस्तन्निवारणाय कर्त्रिति विशेषणम् । यदभावात्कर्त्ता क्रियां न जनयतीत्युक्ते कर्मण्यतिव्याप्तिस्तन्निरासाय कर्मेति । एवं करणसामान्यमुपन्यस्य सामान्यज्ञानपुरस्सरत्वाद्विशेषज्ञानस्य

तद्विशेषप्रमाणलक्षणं प्रकृतोपयोगितया दर्शयति * तेनेति * यस्मात्कारणात्सामान्यस्यैतल्लक्षणं तेन हेतुना तद्विशेषप्रमाणस्यापि । प्रमातृप्रमेये यदभावात् प्रमां न जनयतः तत्प्रमाणमिति सम्बन्धः । प्रमातृप्रमेयप्रमाणां कर्तृकर्मक्रियाविशेष्यत्वाद्विशेषणकृत्यं तु पूर्ववत् । यत्र दानक्रियाकर्त्ता दाता दीयमानं हिरण्यादिकर्म्म च संप्रदानकारकाभावे दानक्रियां न जनयत इति संप्रदाने करणलक्षणमतिव्यापकमिति हृदि निधाय दूषयति *इत्यपीति* एवं करणसामान्यलक्षणमाशयवशान्निरस्य प्रमाणलक्षणं प्रतिक्षेप्तुं विकल्पयति *किमिति* यत्रेति निमित्तसप्तमी । यदभावं निमित्तीकृत्य सती प्रमातृप्रमेये क्रियां न जनयतस्तत्करणमित्यर्थः । ( विरोध्यनेकप्रकारसंभवेऽपि विकल्प इति ) प्रकारान्तरमाह *उतेति* यथा करणत्वाभिमतयच्छब्दाभिधेयोऽसत्तथा प्रमातृप्रमेये अपीति समुच्चयार्थोऽपिशब्दः । प्रमातृप्रमेयसत्त्वं प्रमाणलक्षणान्तर्गतमिति प्रथमकल्पं दूषयति *आद्य इति*विशिष्टनदीपूराल्लिङ्गनाभूद्वृष्टिरिति वा विशिष्टमेघोदयदर्शनाद्भविष्यति वृष्टिरित्यनुमाने यत्करणं नदीपूरदर्शनादि तत्राव्याप्तिः सती प्रमातृप्रमेये इत्यंशस्याभावात् प्रमातुः सत्वेऽपि प्रमेयासत्वेन तद्द्वयसत्वस्य विशेषणस्याभावादिति भावः । आदिपदेन क्वचिद्वर्त्तमानेऽप्यभावानुमानं दर्शयति यथा कदलीपक्के क्षाराभावस्य । तर्हि तयोरसतोर्यदभावात्प्रमाजनकत्वं तत्प्रमाणमिति द्वितीयोऽस्तु

( ) एतद्वन्तर्गतो ग्रन्थः सो०पु०नास्ति ।

तत्राह * नेति * अव्याप्त्यभावेऽप्यतिव्याप्तीरित्याह * प्रमात्रिति * प्रमात्रादौ कथितलक्षणसत्वं दृष्टान्तेन स्पष्टयति * यथेति * इत्यनुभवप्रकटनं। तत्र-प्रमाणभूमाविति यावत्। यदभावात्प्रमाजनकत्वमिति लक्षणं प्रमेयादावस्ति प्रमातृप्रमेययोरसतोः स्वाभावादप्यजनकत्वादित्यर्थः। प्रमेयाद्यभावो न प्रमाभावव्याप्त इन्द्रियाजन्याभावत्वाद्यत्किञ्चिदभाववदित्याशङ्क्याह * अन्यथेति * अन्वयव्यतिरेकगम्यत्वात्कार्यकारणभावस्य व्यतिरेकाभावे न स्यादित्यर्थः। अदृष्टादिसाधारणनिमित्तेऽतिव्याप्तिरिति केचित्। तदसत्। व्यतिरेकस्य दर्शयितुमशक्यत्वात्सती अपि नोच्यते नाप्यसती इति किं तु प्रमातृप्रमेये यदभावात्प्रमां न जनयत इति सामान्येनाभिधीयते इत्यत आह * नेति * प्रमातृप्रमेययोः स्वाभावादप्यजनकत्वादतिव्यापकतेत्यर्थः। अतिव्याप्त्यन्तरमाह * अस्मदादीति * अस्मदादिकर्तृकरणतापत्तेः अस्मदादिश्चासौ कर्ता चेत्यस्मदादिकर्त्ता तस्य करणता तदापत्तेरित्यर्थः। उपपादयति * अस्मदादीति * ईश्वरः कर्ता यस्य तदीश्वरकर्तृकं अस्मदादिकर्तृसापेक्षं च तदीश्वरकर्तृकं चेति तथोक्तमेतदुक्तं भवति ईश्वरस्तावत्सर्वकर्तृत्वादस्मदादिज्ञानस्यापि कर्ता अस्मदादिश्च तत्र कर्ता तथा च ज्ञानाश्रयास्मदादिव्यतिरेकेण प्रमेयेश्वरौ तत् ज्ञानं न जनयत इत्यस्मदादेस्तत्कर्तुः करणत्वं प्रसज्येत तदयुक्तं प्रधानक्रियाश्रयस्य कर्तुरन्यस्याभावादिति। द्विकर्त्तृकं तत् ज्ञानं तत्रास्मदादिजन्यस्वाकारेण कर्तृत्वमीश्वरसा-

ध्यत्वाकारेण करणत्वमित्याकारभेदेनोभयत्वमपीष्यत आह * एवमिति * व्यतिरेकद्वारा कारणत्वावधारणे सति प्रकारभेदेनापि प्रमात्रादिव्यवस्थायाः समर्थनं न कृतं स्यादित्युक्तं तत्र हेतुमाह * येनेति * येन रूपेण तस्यास्मदादेः कर्तृत्वादिना प्रमायामन्वयः समवायित्वं तेनैव रूपेण प्रतियोगितानिरूपितस्य व्यतिरेकस्याभावस्य प्रमानुत्पत्तिप्रयोजकत्वात्साङ्कर्यमित्यर्थः।

लक्षणान्तरमनूद्य दूषयति।

४१२ लक्षणान्तरनिरासः।

चरमव्यापारवत्त्वं करणत्वमित्यपि न। व्यापाराभावात् लिङ्गपरामर्शस्याकरणत्वापातात्। नच सविकल्पकव्यापारवतो निर्विकल्पकस्य तत्र प्रामाण्यं, केवलविकल्पनीयलिङ्गविषये तदनुपपत्तेः। संस्कारादिपर्य्यन्तानुसरणे चानुमितेस्तज्जन्यत्वे प्रमाणाभावात् कार्य्यहेतोश्च कारकाव्यापारत्वात्। अपि चाज्ञातकरणत्वापातात्। नच लिङ्गमेव परामर्शव्यापारवत्तया करणमिति युक्तम्। अनुमितानुमानादौ परामर्शस्यालिङ्गजत्वेन तद्व्यापारत्वानुपपत्तेः। आप्तोक्त्यादिभिस्तत्रासीद्धूम इति प्रतीत्य तदा तत्र वह्निरप्यासीदिति यदनुमानं तत्रासत्त्वात् धूमस्य परामर्शव्यापारवत्तया करणताया दूरनिरस्तत्वात्।

*चरमेति* चरमो व्यापारो यस्य स चरमव्यापारस्तद्भावस्तत्त्वं, चरमत्वं च व्यापारस्य सकलकारकव्यापारोत्तरकालभावित्वम् कृत्यं लक्षणस्य स्पष्टम् । कुतो नेत्यत आह *व्यापारेति* व्याप्तस्य पक्षधर्मतया ऽनुसन्धानं लिङ्गपरामर्शः स च व्यापारमन्तरेणानुमितिकरणं तत्रोक्तलक्षणाभावादव्याप्तिरित्यर्थः । लिङ्गविषयनिर्विकल्पकस्य सविकल्पकव्यापारवतोऽनुमितिकरणत्वान्नाव्याप्तिरित्यत आह *न चेति* कुतो नेत्यत आह *केवलेति* केवलं विकल्पस्य गोचरो लिङ्गविषयो यस्य परामर्शस्य स तथोक्तस्तत्र लक्षणानुपपत्तेः व्यक्तिर्वाच्या प्रमेयत्वात्सामान्यवदित्यत्र प्रमेयत्वं प्रमाविषयत्वं तदप्रत्यक्षत्वात्केवलं विकल्पगोचरप्रत्यक्षाविषय एव निर्विकल्पनियमादतश्च प्रमेयत्वविषयपरामर्शेऽनुमितिकरणे ऽव्याप्तिरित्यर्थः । यत्र प्रमेयत्वादौ निर्विकल्पकं नास्ति तत्र संस्कार उद्बुद्धः स्मृतिर्वा व्याप्तिगोचराविकल्पस्य व्यापारोऽस्तीत्यत आह *संस्कारेति* व्याप्तस्य पक्षधर्मतानुसन्धानादेवानुमित्युपपत्तौ न संस्कारादेस्तज्जनकत्वे प्रमाणमस्ति व्यतिरेकाभावादतश्च न संस्कारादिः करणव्यापारः क्रियाऽजनकत्वात् क्रियावदित्यर्थः । संस्कारादिर्नानुमितिक्रियाहेतुरस्तु अस्तु च तत्करणव्यापारस्तथा च विपक्षबाधकाभावेनाप्रयोजकतेत्यत आह *कार्येति* तज्जन्यस्तत्कारणं व्यापार इति लक्षणोपगमादित्यर्थः । संस्कारादेरनुमितिकरणव्यापारत्वे दोषान्तरमाह *अपि चेति* इन्द्रियातिरिक्तं ज्ञानमेव प्रमाजनकमिति नि-

थमः स न स्यात्संस्कारस्यातीन्द्रियतया तद्विशिष्टप-रामर्शस्यातीन्द्रियत्वापातात्स्मृतेश्च न प्रत्यक्षत्वं तद्विशेषणतया स्मर्य्यमाणस्यापि प्रत्यक्षत्वापातादित्यर्थः । सम्यगविनाभावेन परोक्षानुभवसाधनमनुमानमिति सर्वाकाराद्धूमादिलिङ्गमेव परामर्शव्यापारतयाऽनुमिति-करणमतो नोक्तदोष इत्यत आह * न चेति * कुतो न युक्तमित्यत आह *अनुमितेति * रूपादिज्ञानलिङ्गेन चक्षुरादिरनुमीयते तेन च करणपरम्पराविच्छिन्नत्वमनुमीयते त-त्रानुमितस्य चक्षुरादेः स्वविषयपरामर्शजनकत्वन्नास्ति प-त्यक्षेतरप्रत्ययस्याकर्म्मजत्वादस्ति चानुमितिसाधनत्व-मित्यतिव्याप्तिरित्यर्थः।प्रत्यक्षमेव कर्म्मजन्यमिति नास्ति नियमोऽनुमानादिज्ञानमपि कर्म्मजं प्रमात्वात्प्रत्यक्षव-दित्य नुमानादित्याशङ्क्याह *आप्तेति* आदिपदेन गृहा-न्तर्गतचैत्रसम्पर्कानुपपत्तिरूपार्थापत्तिरुच्यते । नियत-प्राक्तनत्वं कारणत्वं न च तदस्मतो धूमादेरस्तीत्याशयः।

चरमव्यापारवत्त्वमित्यत्र व्यापारवत्त्वप्रयुक्तं दूषणमुक्त्वा व्यापारस्य चरमत्वप्रयुक्तं दर्शयति ।

४२३ चरमत्वप्रयुक्तदूषणम् ।

किञ्च यत्किञ्चिदपेक्षया चरमव्यापारत्वस्य सर्वकारकसाधारणत्वात् सर्वकारकापेक्षया चरमव्यापारत्वस्य स्वापेक्षया चरमत्वानुपपत्तत्या सर्वत्रासिद्धेः । कर्त्रपेक्षयेति चेन्न । कर्तृधर्मिमात्रापेक्षया विवक्षितत्वे कर्त्तरि प्रसङ्गतादवस्थ्यात् । व्यापारवत्कर्त्रपेक्षाभिप्राये च कर्त्तरि स

एव प्रसङ्गः । एकव्यापारवत्कर्त्रपेक्षयाऽपरापरकर्तृव्यापारस्य चरमभावित्वात् । यावद्व्यापारवत्कर्त्रपेक्षापक्षे तु विवक्षितमपि कारणं न स्यात् । आफलसिद्धेः कर्तृव्यापाराविरामात् । व्यापारस्य विच्छेदे तद्धेतुलक्षणक्षीणतापत्तेः ।

* किं चेति * यत्किञ्चित्कारकव्यापारापेक्षया चरमत्वमुत सर्वकारकव्यापारापेक्षया, आद्येऽतिव्याप्तिरित्याह * यदिति * कर्त्रादीनामपि यत्किञ्चित्कारकव्यापारापेक्षया चरमत्वामित्यतिव्याप्तिरित्यर्थः । द्वितीये तु लक्षणस्यासिद्धिः सर्वकारकमध्ये करणस्यापि निविष्टत्वात्तदपेक्षया तस्य चरमत्वासिद्धेरित्यर्थः । स्वेतरसकलकारकव्यापारापेक्षयेति चेन्न । स्वशब्देन कर्त्रादीनामभिधातुं शक्यतयाऽसिद्धेरपरिहारात् । करणेतरकारकापेक्षयेति चेन्न । तस्यैवानिरुक्तेरात्माश्रयादित्याशयः । शङ्कते *कर्त्रिति* कारकव्यापाराणां यत्किञ्चिद्व्यापारमपेक्ष्य चरमत्वं नोच्यते नापि सर्वकारकव्यापारापेक्षया किं तु कर्तृव्यापारापेक्षया यस्य व्यापारश्चरमस्तत्करणमित्यर्थः । व्यापारानाविष्टकर्तृस्वरूपमपेक्ष्य चरमत्वमुत व्यापाराविष्टस्वरूपमिति विकल्प्य प्रथमं दूषयति * नेति * कर्तृस्वरूपमात्रापेक्षया चरमत्वं कर्तृव्यापारस्यैवास्ति तज्जन्यत्वादतश्च व्यापारवति कर्तर्यतिव्याप्तिरित्यर्थः । व्यापारवत्कर्तृरूपमपेक्ष्य चरमव्यापारवत्त्वं तत्त्वमिति द्वितीयं दूषयति * व्यापारेति * कर्तृव्यापारा-

णां मध्ये यत्किंचिद्व्यापारवदपेक्षया चरमत्वमुत कर्तुर्यावन्तो व्यापाराः सन्ति तावद्विशिष्टमपेक्ष्येति विकल्पपुरःसरं कर्त्तर्यतिव्याप्तिमुपपादयति *एकेति* पूर्वपूर्वव्यापारवत्कर्त्रपेक्षया उत्तरोत्तरस्तद्व्यापारश्चरम इति चेद्विशिष्टेऽनिव्याप्तिरित्यर्थः । द्वितीये लक्षणासम्भव इत्याह * यावदिति * विवक्षितं चक्षुरादि करणं न स्यात्समस्तव्यापारविशिष्टकर्त्रपेक्षया चरमव्यापारस्य करणत्वे कुतो लक्षणासिद्धिरित्यत आह * आफलेति * कार्योत्पत्तिपर्यन्तं कर्तृव्यापाराविच्छेदात् तदपेक्षया चरमव्यापारत्वं चक्षुरादेरपि न सम्भवतीत्यर्थः । कर्त्ता करणव्यापारमुत्पाद्य चरितार्थस्तदुत्पादितं करणं क्रियां प्रयोजयति नातोऽसम्भव इत्याशङ्क्याह *व्यापारेति* तस्य कर्तुः हेतुलक्षणं नियतपूर्वसत्वं तद्धीनतापत्तिरतश्चाकारणत्वेऽपि न तद्विशेषकर्तृत्वायोग इति भावः ।

व्यापारस्य चरमत्वं प्रकारान्तरेणोपस्थापयन्नाशङ्कते ।

४१४ शङ्कापरिहारौ ।

यद्व्यापारानन्तरं कारकान्तरं न व्याप्रियते तत् चरमव्यापारमिष्टमिति चेन्न । सेश्वरपक्षे कर्तृव्यापाराविरमात् तदानन्तर्यासिद्धेस्तत्करणत्वापातात् । अनीश्वरपक्षे चाक्षसंयोगादिभिरेव सव्यापारे कर्मण्यपि प्रसङ्गात् । छेद्यादेर्हि करणसंयोगादिव्यापारश्चरम एवेति कुतस्तद्व्यवच्छेदः हस्ताद्यव्याप्तिश्चेति ।

* यदिति * तार्किकेणेत्थमुच्यते उत मीमांसकेन, नतावत्तार्किकस्येदृशं वचनं चातुरीमश्नुतीत्याह *नेति* ईश्वरव्यापारः प्रयत्नरूपस्तस्य नित्यत्वात्तदनंतरं किंचिदपि कारकं न व्याप्रियते तदानन्तर्याभावादतश्च कर्तुरीश्वरस्य करणत्वापात इत्याशयः । मीमांसकमतानुसारिणामिदं चोद्यमिति द्वितीयेऽप्यतिव्याप्तिमाह *अनीति* अथेन्द्रियसम्प्रयोग इन्द्रियार्थयोरुभयोरपि व्यापारस्तद्द्वयनिष्ठत्वादेवं च तैरेव संयोगादिभिः कृत्वा सव्यापारकं यत्पटादिकर्म्म तत्र करणलक्षणातिव्याप्तिरर्थसम्प्रयोगानन्तरं कारकान्तराव्यापृतेरिति यावत् । योगशब्देन संयोग उच्यते संयुक्तसमवायादय आदिपदेनोपादीयन्ते । एवं प्रमाणलक्षणस्यातिव्याप्तिमुक्त्वा करणमात्रलक्षणस्यातिव्याप्तिमाह * छेद्यादेरिति* आदिपदेन पाकादिविषयास्तण्डुलादयो गृह्यन्ते संयोगादीत्यादिग्रहणेन पाककरणाग्निसंयुक्तस्थालीसंयोगात्तन्दुलानां करणेनैकार्थसंसृष्टत्वादि गृह्यते । न केवलमतिव्याप्तिरव्याप्तिश्चेत्याह * हस्तेति * हस्तव्यापारानन्तरं काष्ठादीनां व्यापाराद्धस्तस्य पाककरणत्वं न स्यादित्यव्याप्तिरित्यर्थः । काष्ठादिकमपीत्यादिशब्दार्थः ।

करणमात्रस्य लक्षणान्तरं प्राप्य प्रतिषेधति ।

४१५ करणमात्रस्य लक्षणान्तरनिरासः ।

अनन्तरफलं करणमित्यपि न । अविशेषितानन्तर्यस्य सर्व्वकारणसाधारण्यात् । अव्यवहितानन्तर्यस्य व्यापा-

र्थापेक्षस्य यागाद्यव्यापनात् । व्यापारापेक्षस्य च हस्ता-द्यव्यापनात् । व्यापारपरम्परापेक्षस्य सर्वकारकव्यापनात् ।

* अनन्तरेति * सामग्र्याः करणत्वापातादि-त्यर्थः । किं चानन्तर्यमात्रं विवक्षितमुताव्यवहितं त-दिति विकल्प्य प्रथमं प्रत्याह *अविशेषिणेति* कर्त्रा-द्यनन्तरमपि फलोत्पत्तेस्तत्रातिव्याप्तिरित्यर्थः । अव्य-वहितानन्तर्यमपि किं व्यापार्यपेक्षमुत व्यापारापेक्ष-माहोस्वित् व्यापारपरम्परापेक्षमिति त्रिधा विकल्प्य प्रथमं प्रत्याह * अव्यवहितेति * यागादीनां स्वर्गं व्यापारतया व्यापारित्वाभावात्तदपेक्षफलानन्तर्यं क-रणलक्षणं तत्र नास्तीत्यव्याप्तिरित्यर्थः । द्वितीयं दूषय-ति * व्यापारेति * तृतीयं दूषयति * व्यापारपरम्प-रेति * कर्त्रादेरपि फलपर्यन्तव्यापाराविरमात्तत्पर-म्परापेक्षयाऽनन्तरफलत्वमस्तीत्यतिव्याप्तिरित्यर्थः ।

पूर्वं करणव्यापारमूरीकृत्य दूषणमभाणि इदानीं व्यापारमेव दूषयति ।

४१६ व्यापारदूषणम् ।

किञ्च तत्कार्य्यो यदि क्रियाहेतु स्तद्व्यापार इष्ट स्त-देन्द्रियकार्य्यो लिङ्गपरामर्शोऽनुमितिक्रियाहेतुरितीन्द्रिय-करणिकाऽनुमितिः प्राप्ता । अथ हेतोः सतः कार्यः क्रियाहेतुस्तद्व्यापारस्तथा सत्यनुमित्यहेतोरिन्द्रियस्य कुतः करणत्वं स्यादिति । मैवम् । किं तद्धेतुत्वं यन्नास्त्य-नुमितौ इन्द्रियस्य । नियतपूर्वभावित्वमिति चेत् । अस्ति

तावत् पूर्वभावित्वं नियतत्वमपि यदि कारणतायां प्रयोजकमिच्छसि तदा भवतैव यतितव्यं केनचिद्रूपेणेन्द्रियादेर्नियतत्वं प्रति, अन्यथा लिङ्गेन्द्रियादेः परस्परव्यभिचारादकरणिकैव प्रमा स्यात् । मनःसंयोगादेरेव तथात्वे चाऽप्रमासाधारण्यम् । अपि चाक्षादेरकरणत्वापातः यत्सामान्ये यत्सामान्यं प्रयोजकं तद्विशेषस्यैव तद्विशेषे प्रयोजकत्वनियमदर्शनात् । ततो येन केनापि रूपेणेन्द्रियस्य प्रमायां नियतत्वमुपपाद्यते तेनैव रूपेण प्रसङ्गोपपत्तिः । अथ प्रमात्वे तत् प्रयोजकं नत्वनुमितित्वादाविति चेन्न । निरुपाधित्वाविशेषेणोक्तार्थानाधिक्यात् । सामान्यप्रयोजकत्वेन विशेषत्यागानवकाशादिति । अन्यथा व्यक्तेरकारणकत्वानुपपत्तेः ।

* किं चेति * तत्कार्यस्तत्क्रियाहेतुस्तद्व्यापार इष्टो यदि, तदा तर्हि अनुमितिरिन्द्रियकरणिका प्राप्ता अनुमिताविन्द्रियं करणं स्यादिति यावत् । कुत इत्यपेक्षायां तदुपपादयति * इन्द्रियेति * लिङ्गपरामर्श इन्द्रियकार्योऽनुमितिहेतुर्यस्मादित्यर्थः । लिङ्गपरामर्शे इन्द्रियजन्योऽनुमितिक्रियाहेतुरिति गदितलक्षणाभावेऽपीन्द्रियव्यापारत्वाल्लक्षणस्य तत्रातिव्याप्तिरादिता तां परिहर्तुमाशङ्कते * अथेति * प्रधानक्रियाहेतोः कार्यः क्रियाहेतुस्तद्व्यापार इति व्यापारलक्षणमित्यर्थः । अस्तु तावता प्रस्तुते किं स्यादि-

त्यत आह * तथेति * इन्द्रियस्यानुमितिक्रियाहेतुत्वाभावात्तज्जन्यलिङ्गपरामर्शस्य न करणव्यापारत्वप्रसङ्ग इत्याशयः। इन्द्रियस्याप्यनुमितिं प्रति हेतुत्वाद्विशेषणोपादानेऽप्यतिव्याप्तितादवस्थ्यमिति परिहरति * नैवमिति * अनुमित्यपेक्षया नियतपूर्वभावित्वरूपं हेतुत्वमिन्द्रियस्य नास्तीति शङ्कते * नियतेति * पूर्वभावित्वमात्रं नास्ति किं वा नियतत्वविशिष्टं नाद्य इत्याह * अस्तीति * नियतत्वापेक्षया तावत्प्रयोग इन्द्रियव्यापारान्वयव्यतिरेकित्वादनुमानस्य पूर्वभावित्वमस्तीत्यर्थः। इन्द्रियव्यापाराल्लिङ्गपरामर्शस्ततोऽनुमितिरतो नियतत्वविशिष्टं पूर्वभावित्वं नास्तीति द्वितीयमाशङ्क्याह * नियतेति * नियतत्वं कारणत्वे प्रयोजकं न वा, न चेत्तदभावे न काचित्क्षतिः, प्रयोजकं चेत्तदेन्द्रियस्यापि करणत्वोपाधौ नियतत्वमनुमित्यपेक्षयाऽस्तीति त्वयैवोपपादनीयमित्याशयः। प्रमाकरणत्वरूपेणेन्द्रियस्यानुमितौ नियतत्वमुक्तं व्यतिरेकमुखेन द्रढयति *अन्यथेति* अयं भावः अनुमितिः प्रमा न वा, न चेत्तत्करणमनुमानमप्रमाणं स्यात्प्रमा चेदकरणिका सकरणिका वा,अकरणिका चेदनादिरनन्ता चेति नित्यज्ञानवानीश्वर इति लक्षणं जीवेऽतिव्याप्तं,यद्युत्तरस्तर्हि किं तत्करणमिन्द्रियाद्येव मनःसंयोगादिर्वा, नाद्य इन्द्रियादेः परस्परव्यभिचारितया सम्भूय प्रत्येकं वा करणत्वानुपपत्तेः। मनःसंयोगादि प्रमाकरणमिति द्वितीयमपवदति * मन इति * आदिपदेनादृष्टेश्वरेच्छादि गृह्यते। तस्य प्रमाकरणत्वे प्र-

मायां अप्रमासाधारण्यं स्यात् प्रयोजकस्य प्रमाप्रमयोः साधारण्यादित्यर्थः। मनःसंयोगादेः प्रमाऽप्रमाप्रयोजकत्वे प्रमाऽऽप्रमाविभागानुपपत्तिर्न केवलं परन्तु प्रमाकरणतयेष्टाक्षादेरकरणत्वापातश्चेत्याह * अपि चेति * एकस्मिन् करणद्वयायोगाद्द्वारत्वादित्यर्थः। मनःसंयोगादेः प्रमासामान्ये प्रयोजकत्वं तद्विशेषे प्रत्यक्षप्रमादाविन्द्रियादेरतो नाकरणत्वप्रसङ्ग इत्याशङ्क्याह *यदिति* बीजमात्रस्याङ्कुरमात्रप्रयोजकत्वे बीजविशेषस्यैवाङ्कुरविशेषप्रयोजकत्ववदिहाऽपि मनःसंयोगादिविशेषस्यैव प्रयोजकत्वं स्यादित्यर्थः। फलितमाह * तत इति * प्रमाविशेषेऽक्षादेः करणत्वं वदतः प्रमासामान्येऽक्षादिसामान्यस्य प्रयोजकत्वं वाच्यमन्तेनरूपेण चानुमितिप्रमायामिन्द्रियस्य नियतत्वोपपत्तेरनुमितिरिन्द्रियकरणिका स्यादित्युक्तमुपपन्नमित्यर्थः। इन्द्रियस्य केनचिद्रूपेण प्रमाप्रयोजकत्वेऽपि नानुमितिरिन्द्रियकरणिका अनुमितिरूपे तस्याप्रयोजकत्वादितिशङ्कते * प्रमात्वेति * परिहरति * नेति * निरुपाधिकत्वमनन्यथासिद्धान्वयव्यतिरेकित्वन्तत्र यथा प्रमात्वं प्रतीन्द्रियस्य निरुपाधिता एवमनुमितित्वादिं प्रत्यपि तयोरविनाभावादेवं चानुमितिरिन्द्रियकरणिका स्यादित्युक्तार्थाधिक्यं नास्तीत्यर्थः। प्रमासामान्यप्रयोजकस्य तद्विशेषानुमितित्वादावप्रयोजकत्वमित्याशङ्क्याह * सामान्येति * विपर्ययेदण्डमाह * अन्यथेति * तन्तुसामान्यस्य पटसामान्यप्रयोजकस्य तद्विशेषस्याकारणत्वं स्यात्तन्तुत्वाक्रान्तस्य पटव्यक्तावप्रयोजकत्वादित्यर्थः।

प्रमाखण्डनानन्तरं प्रमाणलक्षणस्यैव प्रस्तुतत्वाद्-प्रस्तुतं करणमात्रलक्षणमास्ताम्प्रमाणलक्षणं पुनरिद-मितिशङ्कते ।

४१७ प्रमाणलक्षणमिदमिति शङ्का ।

अथान्यत्रास्तु यद्वा तद्वा करणं, प्रमाविवक्षितजा-तिविशेषव्यपदेशकं प्रमाणं, चतस्रः खल्विमाः प्रत्य-क्षादिप्रमितयो भिन्नव्यपदेशभाजः । नच प्रमाता प्रमेयं वा तद्भेदहेतुः प्रमाणानि तु यथायथं चतसृष्वसाधार-णानीति भिन्नबुद्धिव्यपदेशनिबन्धनानीति ।

* अथेति * अन्यत्र कुठारादौ करणे यत्किञ्चिल्ल-क्षणमस्तु प्रमाया ये जातिविशेषा विवक्षिताः प्रत्यक्ष-त्वानुमितित्वादयस्तैराक्रान्ततया यो व्यपदेशः प्रत्य-क्षमनुमानमित्यादिस्तत्रानामकं प्रमाणं न च तत्प्रमे-यभेदादेव एकस्मिन्नपि प्रमेयेऽनेकप्रमादर्शनात्परि-शेषात्तन्निमित्तमिन्द्रियलिङ्गपरामर्शादि प्रमाणमित्यर्थः। व्यपदेशकं व्यवच्छेदकं व्यावृत्तप्रमाव्यवहारकारण-मितियावत्। कास्तर्हि विवक्षिता जातिविशेषालिङ्गि-तप्रमाव्यक्तय इत्यत आह * चतस्र इति * प्रत्यक्षमनुमा-नमुपमानमागम इतिभिन्नबुद्धिशब्दजातिभाज इति यावत्। प्रमाविवक्षितजातिविशेषव्यपदेशनिमित्तमि-ति लक्षणं प्रमातरि प्रमेये च नातिव्यापकं तयो-स्साधारणत्वेनासाधारणव्यवहारकारणत्वाभावादित्या-ह *नचेति* एवमतिव्याप्तिं परिहृत्यासिद्धिं परिहरति

* प्रमेति * तुशब्दो वैशिष्ट्यार्थः * यथायथमिति * योग्यतामनतिक्रम्येति यावत् । इन्द्रियलिङ्गपरामर्शादीति भिन्नबुद्धिव्यपदेशौ प्रत्यक्षमनुमितमित्यादिरूपौ तत्र निमित्तानि । हेतुमाह * असाधारणानीति * कृत्वेति शेषः ।

लक्षितपदं कस्यचिदर्थस्य व्यावर्तकं न भवतीति व्यर्थविशेषणासिद्धं लक्षणमिति दूषयति ।

४१८ शङ्कापरिहारः ।

मैवम् । विवक्षितपदं तावल्लक्षणे भण्डालेख्यमिव पुरुषेच्छानामनियतविषयत्वात् । अर्थजत्वस्य च साक्षात्कारित्वं प्रतीन्द्रियजत्वाविशिष्टतयाऽर्थस्यापि करणत्वप्रसङ्गात् । आप्तोक्तौ तु कर्त्तुरपि शाब्दप्रमाजातिविशेषकत्वेनातिप्रसङ्गात् ओमित्युत्तरे च पूर्वमेवोक्तमिति ।

*मैवमिति* भण्डो विप्रलम्भकः तस्यालेख्यं भण्डालेख्यं । देवदत्तस्य जाया किमपत्यं जनयिष्यतीति पृष्टे यथा पुत्रो न पुत्रीति विप्रलम्भकस्य कुडयोपर्यालेख्यं न विषयविशेषनियतं निषेधस्योभयथा योजयितुं शक्यत्वात्तथा विवक्षितपदमपि पुरुषेच्छानामनियतत्वेन चतुष्टयजातीयस्य नियमेन प्रत्येतुमशक्यत्वात्कस्य चिचत स्रः प्रमितयो विवक्षिताः कस्य चित्पञ्चेति । तद्विवक्षितपदमबुद्धिपूर्वकमिव व्याख्याय तद्विशेषप्रतिपत्तौ प्रत्येकमिलितविकल्पेन दूषणीयमित्यर्थः । आलेख्य लिपिविन्यासो वचनं वा । प्रमाविवक्षितजातिविशेषव्यपदेशकं प्रमाणमिति लक्षणस्य प्रमेयेऽतिव्या-

तिमाह *अर्थेति* साक्षात्कारित्वं प्रतीन्द्रियं करण-मितीन्द्रियजं प्रत्यक्षमिति भिन्नव्यपदेशहेतुरिन्द्रियजं प्रत्यक्षमिति व्यवहरणाद्यथा तथाऽर्थोऽपि साक्षात्कारित्वं प्रति हेतुरित्यर्थजं प्रत्यक्षमिति व्यवहारसम्भवादर्थजत्वस्य साक्षात्कारित्वं प्रतीन्द्रियजत्वाविशिष्टतया ऽर्थोऽपीन्द्रियवत्प्रमाणं स्यादित्यर्थः। एवं प्रमेयेऽतिव्याप्तिमुक्त्वा प्रमातर्यतिव्याप्तिमिदानीं दर्शयति *आप्तेति* आप्तवाक्यमागम इत्यत्राप्तस्यापि शाब्दप्रमाजातिविशेषकत्वेन शब्दवदाप्तस्यापि प्रमाणत्वं प्रसज्यत इति यावत्। उक्तलक्षणबलादाप्तस्यापि प्रामाण्यमभ्यनुज्ञायत इत्यत आह *ओमिति* किमग्नावग्निव्यवहारवत्कर्तरि करणव्यवहारो मुख्य उत माणवकेऽग्निव्यवहारवद्गौण इत्यादिना विमृश्य गौण एव न वास्तव इत्युक्तमित्यर्थः। इति शब्दः समाप्तौ ।

उक्तन्यायेन लक्षणान्तरमपि दूषितं भवतीत्यतिदिशति ।

४१९ लक्षणान्तरदूषणातिदेशः ।

विवक्षितजातिभेदौपयिकत्वेन प्रमित्यसमवायिकारणविशेषकं प्रमाणमित्यप्यत एव प्रत्युक्तम् ।

इति प्रमाकरणनिरुक्तिदूषणानि ।

---

*विवक्षितेति* विवक्षिता ये साक्षात्कारित्वानुमितित्वादयो जातिभेदास्तेषामौपयिकत्वेनोपायत्वेन प्रतीतेरसमवायिकारणमात्ममनःसंयोगस्तस्य

विशेषका व्यावर्तका इन्द्रियलिङ्गसादृश्यशब्दाः प्रमाणं । विशेषकं प्रमाणमित्युक्ते दण्डादावतिप्रसक्तिस्तन्निरासायासमवायीति विशेषणं । तावति च रूपादिव्यावर्त्तकपाकजत्वादावतिव्याप्तिस्तन्मा भूदित्याह * प्रमीति * तथाऽपि प्रमित्यसमवायिकारणस्य संयोगत्वं मनोविशिष्टं व्यावर्त्तकं भवति तदर्थं *विवक्षितेत्यादि* इन्द्रियलिङ्गादिसहितस्यैव मनोयोगस्य ज्ञानजनकत्वादिन्द्रियादेस्तद्विशेषकत्वं विवक्षितपदखण्डनन्यायेनैवेत्यर्थः । प्रमाणसामान्यलक्षणदूषणमुपसंहरति * इतीति *

---

प्रमाणसामान्यखण्डनानन्तरं विशेषखण्डनं प्राप्तमिति प्राप्तावसरे तदुपक्रमते ।

४२० प्रमाणविशेषलक्षणखण्डनातिदेशः ।

एवं विशेषतोऽपि प्रमाणलक्षणानि प्रतिवक्तव्यानि । तथा हि प्रत्यक्षमिन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यभिचारीत्याहुः । किमर्थमिदमुच्यते किं सजातीयविजातीयव्यवच्छिन्नतत्प्रतीत्यर्थम, उत साक्षात्कारित्वप्रतीतये तच्चिह्नोपदर्शनमिदम, उत व्यवहारार्थम्, उत प्रत्यक्षादिशब्दप्रवृत्तिनिमित्तावधारणार्थम्, उतान्यत्किञ्चिदर्थमत्र ।

*एवमिति* ननु सामान्यखण्डनेनैव विशेषा अपि खण्डिता एव सामान्यानालिङ्गितानां विशेषाणाम-

सिद्धेरतः पृथक् खण्डनमनर्थकमिति । मैवं । यथा वैशेषिकादिमते सामान्यानालिङ्गिताः सामान्यादयस्त्रयः सिध्यन्ति, यथा चौपनिषदानामद्वयं ब्रह्म, तथा प्रमाणविशेषा अपीति कस्य चिन्मन्दस्याशङ्का स्यात्तन्माशङ्कीति पृथक् खण्डनं सार्थकमिति। सर्वं प्रमाणानां प्रत्यक्षाधीनसिद्धित्वेन सकलप्रमाणज्येष्ठं प्रत्यक्षं तेन तदेव तावदुपस्थापयति *तथा हीति*इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यभिचारीति लक्षणांशः।प्रत्यक्षमितिलक्ष्यांशः। ज्ञानं प्रत्यक्षमित्युक्तेऽनुमानज्ञानेऽतिव्याप्तिस्तन्निवारणायेन्द्रियेति । भ्रान्तिनिवारणायाव्यभिचारीति विशेषणं । सुखादिव्यावृत्त्यर्थं ज्ञानमिति । करणप्रमाणवादिमते सम्यगपरोक्षानुभवकरणं प्रत्यक्षमिति लक्षणं तत्सम्यक्त्वानुभवत्वापरोक्षत्वकरणत्वानां खण्डनेन खण्डितमिति । ज्ञानं प्रमाणमिति मीमांसकलक्षणानुवादः इदं च लक्षणं "सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म प्रत्यक्षं तदनिमित्तं विद्यमानोपलम्भनत्वा"-दिति सूत्रेण कथितमित्यर्थः। लक्षणप्रणेतुरनर्थकं नाम निग्रहस्थानं दर्शयितुं प्रयोजनं विकल्पयति* किमिति* हृदि कृतान्विकल्पान्विशदयति *किमिति* स जातीयमनुमानादि, विजातीयं प्रमेयादि, तेभ्यो व्यवच्छिन्नतया प्रत्यक्षप्रमाणसिद्ध्यर्थमिदं लक्षणप्रणयनं, सजातीयविजातीयव्यावर्त्तकधर्मस्य लक्षणत्वादित्यर्थः। साजात्यवैजात्ययोर्लक्ष्यसिद्ध्यधीनसिद्धित्वादन्योन्याश्रयात्कल्पान्तरमाह * उतेति * प्रत्यक्षं साक्षात्कारित्वसमवायि कथितलक्षणयोगित्वाद्व्यतिरेकेणा-

नुमानवदिति साक्षात्कारित्वप्रतीतये लिङ्गोपदर्शनमित्यर्थः। साक्षात्कारित्वं जातिर्न सम्भवति प्रमात्वेन सङ्करादत इन्द्रियजज्ञानत्वमेव तदिति साध्याविशिष्टता स्यादिति कल्पान्तरमाह * उतेति * इदं प्रत्यक्षमिति व्यवहर्त्तव्यमेतल्लक्षणवत्त्वादिति व्यवहारसिद्ध्यर्थं लक्षणप्रणयनमित्यर्थः। व्यवहारसिद्धौ सिद्धसाधनताऽसिद्धावप्रसिद्धविशेषणतेति पक्षान्तरमाह * उतेति * प्रत्यक्षं साक्षात्कारीत्यादिशब्दप्रवृत्ताविदं निमित्तमिति लक्षणकरणमित्यर्थः। न्यूनतापरिहाराय विकल्पान्तरम् *उतान्यदिति* नन्वेतादृशविकल्पकरणेऽधिकं नाम निग्रहस्थानमन्यस्यासम्भवादिति। मैवं। अन्योक्तदोषेण सम्भावितत्वादधिकत्वेऽस्य सर्वत्र तत्स्यादन्यच्च दूषणं नोपलक्ष्यते इति।

विकल्पक्रमेण निराकरोति।

४२१ विकल्पनिरासः।

तत्र नाद्यः। तथा हि किं सजातीयेति प्रत्यक्षत्वेन साजात्यमपेक्षितं रूपान्तरेण वा। नाद्यः तस्माद्व्यवच्छेदाव्यथेः सजातीयादव्यावृत्तत्वेन व्यवच्छेदकत्वानुपपत्त्या व्यावृत्तत्वस्वीकारेणाव्यापकत्वात्। नापि द्वितीयः विजातीयपदोपादानवैयर्थ्यात् अस्ति हि प्रमेयत्वादिना सर्वसाजात्यम्। अथ प्रमाणत्वादिना विशेषेण साजात्यं विवक्षित्वेदमुच्यते तर्हि लक्ष्यस्यापि प्रमाणत्वेन साजात्याद्व्यवच्छेद्यकोटिप्रविष्टतया सङ्ग्राह्याभावप्र-

सङ्गः । लक्ष्यस्य यत्प्रमाणत्वादिभिः सजातीयं तद्व्यव-च्छेद्यं, नच लक्ष्यस्य लक्ष्यं सजातीयं षष्ठ्यर्थस्य भेदव्यव स्थितत्वादिति चेत् । एवं तर्हि लक्ष्यापेक्षया भिन्नात् व्यव-च्छेद इत्येवोच्यतां कृतं प्रमाणत्वादिना साजात्येन प्रकृतानुयोगिना वर्णितेन । यदा च लक्ष्यादन्यत्वं परे-षामवगतं तदा परस्मादन्यत्वमपि लक्ष्यस्यार्थादवग-म्यत इति सिद्धमग्रत एव लक्षणप्रयोजनमिति वैयर्थ्य-मेव स्याल्लक्षणाख्यानस्येति ।

*तत्रेति*लक्षणविशेषणस्य सजातीयादेरव्यावर्त-कत्वं दर्शयितुं सजातीयपदार्थं विकल्पयति *किमि-ति * समाना जातिर्येषां तानि समानजातीयानि तत्र समानजातिः प्रत्यक्षत्वमेव वोत रूपान्तरमेवानुगतं किमपीति विकल्पयाद्यं दूषयति * नेति * कुत इ-त्यपेक्षायां हेतुमाह * तस्मादिति * यस्मात्प्रत्यक्षत्वे-न सजातीयादिदं व्यवच्छिद्यते तस्माद्व्यवच्छेदावधे-र्व्यावृत्तिप्रतियोगिनो लक्षणस्याव्यावृत्तत्वेऽव्यावृत्त-त्वेनैव हेतुना व्यवच्छेदकत्वानुपपत्तिर्वैधर्म्यस्यैव व्या-वर्तकत्वादतो व्यवच्छेदकत्वानुपपत्त्या ततो व्यावृत्तत्वं स्वीकरणीयं तेन लक्षणं तत्राव्यापकं स्यात्प्रत्यक्षत्वा-क्रान्ततया लक्ष्यैकदेशत्वात्तस्यापि प्रत्यक्षसामान्यल-क्षणत्वादित्यर्थः। अस्तु तर्हि रूपान्तरेण सजातीयत्व-मिति द्वितीयो निरवद्यत्वादित्यत आह * नापीति * हेतुमाह * विजातीयेति * सजातीयविजातीय-

व्यवच्छिन्नतत्प्रमित्यर्थमित्यत्र विजातीयेति पदं व्यर्थं सर्वस्यैव सजातीयतया सजातीयव्यवच्छेदेनैव लक्षणस्य चरितार्थत्वादित्यर्थः। सर्वपदार्थेषु भावाभावरूपेष्वनुगतरूपाभावात्सर्वेषां साजात्याभावेन विजातीयपदसङ्ग्राह्यमस्त्येवेत्याशङ्क्याह * अस्तीति * प्रमेयत्वाभिधेयत्वाद्यनुगतमस्तीत्यर्थः। प्रत्यक्षस्यातिरिक्तरूपेण साजात्ये विजातीयपदं व्यर्थं प्रमेयत्वादिना सर्वसाजात्यादित्युक्तं तत्परिहारमाशङ्कते * अथेति * प्रमाणत्वज्ञानत्वादिना सजातीयत्वविवक्षया लक्षणं सजातीयविजातीयव्यवच्छेदकमुच्यते तत्रानुमानादिसजातीयवत्प्रमेयादिविजातीयस्यापि भावाद्विजातीयपदमर्थवदित्यर्थः। एवं तर्ह्यन्यापोहेन लक्ष्यप्रतीतये प्रणीतं लक्षणं साजात्याल्लक्ष्यमपि त्याजयेदिति दूषयति * तर्हीति * प्रमाणत्वाक्रान्तं सजातीयं तच्चेद्व्यवच्छिद्यते प्रत्यक्षेऽपि तर्हि प्रमाणत्वाक्रान्तत्वात्साजात्यमस्तीति व्यवच्छेद्यकोटित्वात्ततो लक्षणव्यावृत्तावसम्भवोऽव्यावृत्तावतिव्याप्तिरित्यर्थः। प्रत्यक्षे प्रणीतलक्षणं वर्त्तते न चातिव्याप्तिस्तदितरस्य प्रमाणत्वादिना सजातीयस्य व्यवच्छेद्यत्वादिति शङ्कते * लक्ष्येति * लक्ष्यस्य लक्ष्यमपि सजातीयमतो गदितावधतादवस्थ्यमित्याशङ्क्याह * न चेति * कुत इत्यत आह * षष्ठीति * सजातीयमित्युक्ते कस्येति मीमांसने लक्ष्यस्येति वाच्यमतः षष्ठ्या लक्ष्यसम्बन्धिनः साजात्यं प्रतीयते नच लक्ष्यं लक्ष्यसम्बन्धि सम्बन्धस्य भिन्नाधिष्ठानत्वादित्यर्थः। यल्लक्ष्यादन्यत्ततो व्यव-

च्छेदो लक्षणस्य कृत्यमिति वाच्यं लाघवान्न प्रमाणत्वेनेत्याद्यानर्थक्यापातादिति परिहरति * एवमिति * अलक्ष्याल्लक्ष्यव्यावृत्तये लक्षणप्रणयनमिष्टमेवास्माभिरित्यत आह * यदि * 

लक्ष्यादन्यतया प्रतिपन्नमलक्ष्यं किं वा प्रतिपन्नमात्रं, नान्त्यो लक्ष्यस्यापि तथात्वेन व्यावर्त्यत्वापाताद्याद्यस्तदाऽपि लक्ष्यप्रतियोगिकमन्यत्वमलक्ष्यस्य ततो लक्ष्यस्यान्यत्वप्रतीतिमन्तरेण प्रतिपत्तुमशक्यमात्मनोऽपि तत्प्रसङ्गादतश्चालक्ष्यस्यान्यत्वप्रतिपत्तावेव लक्ष्यस्यापि ततोऽन्यत्वं लक्षणोदीरणात्पूर्वमेव सिद्धमिति व्यर्थं लक्षणमित्यर्थः । घटप्रत्यक्षं यथा घटादन्यत्वेनानवगतपटादेर्व्यावृत्तं घटं बोधयति तथा लक्षणमपि लक्ष्यादन्यत्वेनानवगतादलक्ष्याद्वस्तुनोऽन्यस्माल्लक्ष्यं किं न व्यवच्छिन्द्यादित्याशङ्क्याह ।

४२२ लक्षणस्यज्ञातस्याज्ञातस्यवा व्यवच्छेदकत्वाऽसम्भवः ।

अस्तु वा विवक्षावैचित्र्यवशात् कथमपीदृशमभिधानं तथापि न तावदनेन लक्षणेनानवगतेनैव व्यवच्छिन्नप्रतीतिसम्भवोऽतिप्रसङ्गात् । नापि ज्ञानेन दुरवधारणत्वात् । तथा हि—न तावदिन्द्रियार्थसन्निकर्षोत्पत्तिः प्रत्यक्षाऽप्रत्यक्षविशेषणत्वात् । नापि कार्य्येण लिङ्गेन तदनुपपत्त्या वा तदवगमः ताभ्यां सामान्यतः कारणमात्राक्षेपेण कारणगतानुगतरूपासिद्धावेकरूपलक्षणासिद्धेः ।

कार्य्यस्यैकजात्यादेकजातीयकारणसिद्धिरिति चेत् । तर्हि कार्य्यगतैकजात्यस्य पूर्व्वमवश्यं प्रत्येतव्यत्वाङ्गीकारे तत एव सजातीयविजातीयव्यवच्छेदप्रतिपत्तिरस्तु कृतमनया पारम्पर्य्यकुसृष्ट्या ।

* अस्तु वेति * अज्ञातं व्यवच्छेदकं ज्ञातं वेति विकल्प्याद्यं दूषयति * तथापीति * तत्र हेतुरतिप्रसङ्गादिति । सत्तामात्रेण व्यवच्छेदकत्वे सर्वदा सर्वेषामेव सर्वान्प्रति च व्यवच्छेदकत्वं स्यादविशेषादित्यतिप्रसङ्ग इत्यर्थः । द्वितीयमसम्भवेन दूषयति * नापीति * लक्षणस्य दुरवधारणत्वान्न ज्ञातमपि व्यवच्छिन्नलक्ष्यज्ञानहेतुरित्यर्थः । दुरवधारणत्वं च तत्साधकप्रमाणाभावात् तथा हि प्रत्यक्षलक्षणं प्रत्यक्षेण ज्ञायते उत लिङ्गेनेति विकल्प्य प्रथमं पराकरोति *न तावदिति* इन्द्रियार्थसन्निकर्षजन्म प्रत्यक्षलक्षणं न तत्प्रत्यक्षगम्यं अप्रत्यक्ष इन्द्रियार्थसन्निकर्षो विशेषणं यस्य तत्तथोक्तं तद्भावस्तत्त्वं तस्मान्नागृहीतविशेषणा विशेष्ये बुद्धिरिति न्यायादित्यर्थः । प्रत्यक्षलक्षणस्याप्रत्यक्षत्वेऽपि कार्यलिङ्गादनुमीयते तदन्यथानुपपत्तिरूपार्थापत्त्या वा प्रमीयते इति द्वितीयमाशङ्क्याह * नापीति * कथमनवगम इत्यत उपपादयति *ताभ्यामिति* कार्यं कारणपूर्वकमिति व्याप्तिर्न त्वनुगतकारणपूर्वकमिति तथा च ज्ञानादिलक्षणकार्येण किं चित्कारणं सिध्यति न पुनः कारणस्यानुगतरूपसिद्धिरतोऽव्याप्त्या लक्षणासिद्धिरित्यर्थः ।

विमतं ज्ञानमेकजातीयकारणजन्यमपरोक्षत्वेनैकजातीयकार्यत्वाद्यदेकजातीयं कार्यं तदेकजातीयकारणपूर्वकं यथा घट इति सामान्यतो दृष्टात्कारणस्यानुगतरूपसिद्धिरिति शङ्कते * कार्येति * कार्यगतं यदैकजात्यं कारणैकजात्ये लिङ्गन्तस्यैव लक्षणवदनसमर्थस्योपजीव्यस्य लक्षणत्वमस्तु व्यर्थं त्वदुपन्यस्तलक्षणमिति परिहरति * तर्हीति * कार्यैकजात्यमभिगम्य कारणानुगतरूपसिद्धिस्ततो लक्ष्यसिद्धिरिति[1] यत्नगौरवात्पारम्पर्यस्य या कुत्सिता सृष्टिस्तया कृतमलमित्यर्थः ।

कार्यगतैकरूप्यप्रमित्या लक्ष्यस्य सजातीयादिव्यवच्छेदोपपत्त्या लक्षणस्योक्तं वैयर्थ्यमभ्युपगम्यापि लक्षणस्यादुष्टत्वं चोदयति ।

४२३ लघूपायेन सिद्धौगुरूपाये प्रवृत्तिर्दोषः ।

नन्वेतावतापि न प्रकृतलक्षणखण्डनं भवत्यव्याप्तेरतिव्याप्तेर्वाऽनुद्भावनात् । मैवम् । प्रथमभावितयाऽवश्यानुष्ठेयतया च लघोरुपायात्साध्यसिद्धौ सम्भवन्त्यां चरमभावितयाऽवश्यानुष्ठेयत्वाभावेन च गुरूपाये प्रवर्त्तमानस्य तवैवेदं दोषोद्भावनं प्रदीपे प्रदीपान्तरं प्रज्वाल्य तमोनिरासाय यतमानस्येव पुंसः । न हि तस्य[2] दीपान्तरस्य कश्चिद्दोषः किन्तु तथाकारी पुरुष एव पर्य-

(१) गयभगौरवादिति सो० पु० पा० ।
(२) तस्येति सो० पु० नास्ति ।

नुयोज्यः। सर्वसाधनसाधारणोऽयं वा दोषो यत्सम्भवद्दे-
वंविधलघूपायत्वं नाम, स्वरूपासिद्धिरिव सर्वप्रमाणा-
नाम्। तस्मान्मा नाम भूदातिव्याप्त्यादिर्दोषः सामान्यदो-
षादेवेदं लक्षणं दुष्टमिति।

* नन्विति * लक्षणान्तरसम्भवेऽपि न प्रकृत-
स्य लक्षणत्वक्षतिः लक्षणदोषस्यातिव्याप्त्यादेरक-
थितत्वादिति तात्पर्यं। परोदीरितलक्षणस्य दूषणो-
दीरणं स्वरूपेण न प्रयोजकं किं तु जयहेतुतया तदि-
ह लक्षणं स्वयमदुष्टमपि स्वप्रणेतुर्दोषमापादयन्मम ज-
यहेतुर्भवत्येवेति परिहरति * नैवमिति * लघोरुपा-
यात्कार्यसिद्धौ सम्भवन्त्यां गुरावुपाये प्रवर्तमानस्य त-
थैवेदं दोषोद्भावनमिति सम्बन्धः। गौरवं चात्र हेतुः।
"इष्टस्यायत्नसंसिद्धौ को विद्वान्यत्नमाचरेदि"ति न्यायः।
उपायान्तरस्य लाघवं हेतुमाह *अवश्येति* कार्यगतै-
करूप्यानवगतौ कथितलक्षणस्यैवावगत्यसम्भवेनाव-
श्यानुष्ठेयत्वं अवश्यज्ञेयत्वमिति यावत्। तदेव कुत इत्यत
आह *प्रथमेति* प्राथम्यं च तस्य कार्यैकरूप्यावगमस्य
लक्षणावगमं प्रति हेतुत्वात्। इतरस्य गुरुत्वे कारणमाह
*अवश्येति* तदभावश्च साधनान्तरादावश्यकात्साध्य-
सिद्धाविपरीतं किं न स्यादित्यत आह * चरमेति * ल-
क्षणस्य चरमभावित्वान्न वैपरीत्यचोदनमित्यर्थः। उक्त-
मुदाहरणेनोपपादयति *प्रदीप इति* द्वितीयप्रदीपहेतु-
तया प्रथमदीपस्यावश्यकस्य दीपान्तरानपेक्षतया त-
मोनिरासासामर्थ्ये सति दीपान्तरमुज्ज्वाल्यतमोनिरा-

साय यतज्ञानस्य यथा प्रतिपत्त्यादिदोषस्तद्वदित्यर्थः । विषम उपन्यासस्तत्र द्वितीयदीपस्य दुष्टत्वात्तन्मार्गं पर्यनुयुज्यते न तु कथितलक्षणस्यानवद्यत्वात्कथं मम पराजय इत्याशङ्क्याह * न हीति * नहि साधनस्यादुष्टत्वात्तत्रापि साध्यासिद्धिरित्याशङ्क्य कर्तृदोषादित्याह * किं त्विति * पुरुषस्य दुष्टत्वेऽपि लक्षणादुष्ट्या नह्यलाल्लक्ष्यादिसिद्ध्याऽद्वैतविध्वंस इत्याशङ्क्याह * सर्वेति * एवंविधं–प्राथमिकमवश्यानुष्ठेयं सम्भवति यस्मिँल्लघूपायरूपे तत्सम्भवदेवंविधलघूपायस्तद्भावस्तत्त्वम् । एतदुक्तं भवति । लघावुपाये सम्भवति गुरोरुपायस्योपायत्वमेव नास्ति उपेयस्यान्यत एव सिद्धेरुपेयते साध्यमनेनेति ह्युपायः प्राथमिकप्रदीपनिरस्ते तमसि जायमानदीपान्तरस्य निराससाधनत्वाभाववदिति । बुद्धिसाम्यापादनार्थं प्रत्यक्षादिप्रमाणानां स्वरूपासिद्धिर्यथा दोषस्तद्वदिति दृष्टान्तमुपादत्ते * स्वेति * अन्धत्वादिदोषासत्त्वेऽपि सामान्यदोषेण दुष्टं लक्षणमिति प्रथमपक्षमुपसंहरति * तस्मादिति * मा नाम भून्माभून्नामेति सम्बन्धः ।

साक्षात्कारित्वप्रतीतये तच्चिह्नोपदर्शनमिति द्वितीयोऽस्तु निरवद्यत्वादित्यत आह ।

४२४ द्वितीयविकल्पनिरासः ।

एतेन द्वितीयोऽपि निरस्तः । साक्षात्कारित्वावगममन्तरेण तदवगमानुपपत्तेः तदवगमाच्चास्य प्रतीतावन्योन्याश्रयप्रसङ्गः । अस्तु वाऽन्यदपि किञ्चिदिन्द्रियजत्वे

लिङ्गं तथापि तदेव साक्षात्कारित्वाविनाभूततया प्रत्यक्षलक्षणमुपन्यस्यतां सन्निहितप्रतिपत्तिकत्वात् । नच तदवश्यं व्यापकं वक्तव्यं लिङ्गस्य तदव्याप्यत्वेनैवोपपत्तेरिति चेन्न। यत्र लिङ्गमव्यापकत्वान्नास्ति तत्रेन्द्रियजत्वस्य प्रमाणाभावात् प्रत्येतुमशक्यत्वेन कथं ततः साक्षात्कारित्वावगमः। यदा च क्वचित्प्रत्यक्षजातीय एव प्रमाणाभावादिन्द्रियजत्वमनवधारणीयतया साक्षात्कारित्वव्यापकत्वेनानवगतमपि लक्षणं तदा किमपराद्धं लिङ्गान्तरेणाव्यापकेन । अथ यत्र तदिन्द्रियजत्वे लिङ्गं नास्ति तत्र लिङ्गान्तरात्तत्प्रत्येतव्यम् । तथापि तदेवास्तां साक्षात्कारित्वे लिङ्गं कृतमिन्द्रियजत्वानुमानपूर्वकतदनुमानकल्पनया । अथ तथा लिङ्गद्वयं तत् प्रत्येकमव्यापकतया न लक्षणं इन्द्रियजत्वन्तु तथात्वात् लक्षणमिति चेन्न । साक्षात्कारित्वानुमानस्य लक्षणप्रयोजनस्योभाभ्यामेव सिद्धेः कृतं व्यापकेन तेन ।

* एतेनेति * परामृष्टं हेतुं स्पष्टयति * साक्षादिति * साक्षात्कारित्वप्रतीतिव्यतिरेकेण कथितप्रत्यक्षलक्षणं दुरधिगममिति। अस्तु तर्हि साक्षात्कारित्वादिदमिन्द्रियजमव्यभिचारि इत्यादिलक्षणावगमे को दोष इत्यत आह *तदिति* साक्षात्कारित्वसिद्धौ लक्षणसिद्धिस्तत्सिद्धौ च साक्षात्कारित्वसिद्धिरिति पर-

स्पराश्रयः । अपरोक्षव्यवहारहेतुप्रत्ययत्वलिङ्गेनेन्द्रियजत्वादिलक्षणावगमान्नेतरेतराश्रय इत्यत आह * अस्त्विति * इन्द्रियजत्वे लिङ्गमुपगतं चेत्परस्पराश्रयपरिहारात्सिद्धस्तर्हि द्वितीयकल्पस्तत्राह * तथाऽपीति * साक्षाद्व्यवहारहेतुप्रत्ययत्वमेव लक्षणमुच्यतां कृतमनेन । कुत एतत्तत्राह *सन्निति* प्रथमज्ञेयतया सन्निहितप्रतिपत्तिकत्वादिति यावत् । लक्षणं सकलं लक्ष्यव्यक्तिव्यापकं वक्तव्यमिदं तु न व्यापकमुपेक्ष्यतृणादिप्रत्यक्षोत्पत्तावपि पथि गच्छतोऽपरोक्षव्यवहाराभावादिति शङ्कते *नेति* अव्यापकत्वे लिङ्गत्वमेव तस्य न स्यात्कृतकत्वादेरनित्यत्वं प्रति व्यापकस्यैव लिङ्गत्वादित्यत आह *लिङ्गेति* व्याप्यत्वं लिङ्गत्वे प्रयोजकं न व्यापकत्वं सपक्षैकदेशवृत्तेरपि धूमादेर्लिङ्गत्वादित्यर्थः । अव्यापकस्य लिङ्गत्वोपपत्तावपीदमिन्द्रियजत्वंलिङ्गं व्यापकं वाच्यमन्यथा तस्य सार्वत्रिकत्वानुपपत्त्या सर्वत्र लक्ष्ये साक्षात्कारित्वप्रतीतिहेतुत्वं न स्यादिति परिहरति * नेति * यत्र लिङ्गाभावादिन्द्रियजत्वमनवगतं तत्र स्वरूपसत्त्वात्साक्षात्कारित्वव्यापकत्वेनानवगतमपि लक्षणं भवतीत्यत आह * यदेति * इन्द्रियजत्वं क चित्प्रत्यक्षजातीय एव प्रमाणाभावात्साक्षात्कारित्वस्य व्यापकतया ऽनवगतमपि लक्षणं तदाऽव्यापकेन लिङ्गान्तरेण किमपराद्धं कोपराधः कृतो यस्मा त्तस्य लक्षणत्वं न भवेदिति यावत् । लिङ्गद्वयेनेन्द्रियजत्वस्य साक्षात्कारित्वव्यापकतयाऽवगतस्य लक्षणत्वं भवतीति शङ्कते *अथेति*

तदपरोक्षव्यवहारहेतुत्वं लिङ्गं यत्र प्रत्यक्षभागे नास्ति तत्र सविशेषार्थप्रधानत्वं लिङ्गान्तरं तदनुमापकं भवतीत्यर्थः। लिङ्गद्वयस्यापि परस्मात्पराकारिष्यमाणत्वादरुच्याऽङ्गीकृत्यापि परिहरति * तथापीति * तथापि तावेव-लिङ्गविशेषावेव साक्षात्कारित्वे लिङ्गमास्तां ताभ्यामिन्द्रियजत्वमनुमाय तत्पूर्वकतया साक्षात्कारित्वानुमानकल्पनया कृतमलं गौरवापातादित्यर्थः। लक्षणं व्यापकं वाच्यं लिङ्गद्वयं प्रत्येकं मिलितं च साक्षात्कारिव्यापकं न भवति तेनेन्द्रियजत्वमेव व्यापकत्वाल्लक्षणमिति शङ्कते*अथेति*यत्र लक्षणव्यतिरेकेण लक्ष्यानुमानं न सिध्येत्तत्र व्यापकं लक्षणं वाच्यमिह त्विन्द्रियजत्वानुमापकलिङ्गद्वयेनैव साक्षात्कारित्वसिद्धेर्नेन्द्रियजत्वं लक्षणमिति परिहरति * नेति * व्यवहारार्थं लक्षणमिदमिति तृतीयकल्पं निराचष्टे।

४२५ तृतीयकल्पनिरासः।

नापि तृतीयः। स ह्येवंरूपो यदिन्द्रियार्थसन्निकर्षजनितं तत्प्रत्यक्षमिति व्यवहर्त्तव्यमिति। अयमप्यर्थोऽनुपपन्नो लक्षणस्य ज्ञातुमशक्यत्वात्। साक्षात्कारित्वावगमे साक्षात्कारित्वमेवास्तु व्यवहारनियमनिदानमव्यवहितप्रतिपत्तिकत्वादित्यावेदितम्।

* नापीति * निषेध्ये सम्यगवगते तन्निषेधः सुशक इति निषेध्यकल्पमेव दर्शयति * स हीति * किंरूप इत्यत आह * यदिति * यदिन्द्रियार्थसंनिकर्षजमव्यभिचारिज्ञानं तत्प्रत्यक्षमिति व्यवहर्तव्यमित्येवंरूपः

स तृतीयकल्प इत्यर्थः एवमनूद्यापवदति * अयमिति * लक्षणस्य ज्ञातुमशक्यत्वमसिद्धं साक्षात्कारित्वेनैव तदवगमादित्याशङ्क्याह * साक्षादिति * सन्निहितप्रतिपत्तिकरत्वादिति। प्रथमं ज्ञायमानतया लघुत्वादिति यावत्।

प्रत्यक्षशब्दप्रवृत्तिनिमित्तावधारणार्थं लक्षणमुच्यत इति तुरीयं कल्पमतिदेशेन दूषयति ।

४२६ चतुर्थकल्पनिरासः ।

अतएव न चतुर्थः कल्पनागौरवदोषश्चाधिकः ।

* अत इति * लक्षणस्य ज्ञातुमशक्यत्वादिति हेतोरेवेत्यर्थः। अस्मिन् कल्पे तदसाधारणदोषमाह * कल्पनेति * अन्वयव्यतिरेकावगतप्रत्यक्षत्वजातेरेव तच्छब्दप्रवृत्तिनिमित्तत्वोपपत्तावनेकविशेषविशिष्टस्येन्द्रियजत्वादिलक्षणस्य निमित्तत्वकल्पने गौरवमिति यावत्। अस्तु तर्ह्यन्यत्किञ्चिदर्थमिति पञ्चमः कल्पो नेत्याह ।

४२७ पञ्चमकल्पनिरासः ।

नापि पञ्चमः तादृशस्य दर्शयितुमशक्यत्वात् । एतेन भासमानाकारेन्द्रियसंयोगजं प्रत्यक्षमित्यपि निरस्तम् । किञ्च प्रमाणविशेषलक्षणमिदं प्रमाणलक्षणोपसङ्गृहीतस्य कियतः सङ्ग्राहकं कियतश्च प्रतिक्षेपकं वक्तव्यं ? प्रमाणलक्षणेन च व्यभिचारिणो निवृत्तिः प्रदर्श्यते तथा च सति यथाश्रुतमिदं लक्षणं, व्यभिचार्यपि हि भासमानस्य सत्तादेराकारस्येन्द्रियसंयोगादुत्पद्यते । अथ

विशेषाभिप्रायेणेदं लक्षणं वाच्यं तथाऽप्यसङ्गतिः तथा हि किं कियन्मात्रभासमानेन्द्रियसम्प्रयोगजत्वं विवक्षितम्। उत यावद्भासमानेन्द्रियसम्प्रयोगजत्वम् ?। आद्ये व्यभिचार्य्यव्यवच्छेदः निर्विकल्पकासङ्ग्रहश्च ।

*नेति* हेतुमाह *तादृशेति* तस्य सतो निर्वचनापातान्निर्वक्तुं चाशक्यत्वादित्यर्थः । उक्तं दूषणं प्रत्यक्षलक्षणान्तरे ऽतिदिशति * एतेनेति * सम्प्रयोगः सम्बन्धः । तज्जन्यमित्युक्तेऽनुमानादेरपि प्रत्यक्षत्वं वारयतीन्द्रियेति । अपरोक्षभ्रमव्युदासाय भासमानेति विशेषणम् । निष्प्रयोजनत्वदोषेणैतदपि निरस्तमित्यर्थः । एवं निष्प्रयोजनत्वमुक्त्वाऽतिव्याप्तिं कथयितुमुपोद्घातं करोति *किं चेति* प्रमाणसामान्यलक्षणस्योक्तत्वात्तद्विशेषलक्षणमिदमित्यर्थः । अस्तु ततः किमित्यत आह * प्रमाणेति * प्रमाणसामान्यलक्षणेन यावानर्थः सङ्गृहीतस्तत्र कियतः सङ्ग्राहकं कियतश्च व्यवच्छेदकं वाच्यं सामान्यानालिङ्गितविशेषाभावात्सामान्यतो न्यूनवृत्तित्वाच्च विशेषस्येत्यर्थः। प्रमाणस्य सतोऽनुमानादेर्व्यवच्छेदकं प्रत्यक्षस्य सङ्ग्राहकमिष्यत एवेदं लक्षणमित्यत आह *प्रमाणेति* यथार्थानुभवः प्रमा तत्करणं प्रमाणमिति व्यभिचारिणो निवृत्तिः प्रदर्शितेत्यर्थः । यथा सामान्यलक्षणेन व्यभिचार्यनुभवो व्यवच्छिद्यते तथा विशेषलक्षणेनापीत्यत आह * तथा चेति * यथाश्रुतमिदं लक्षण, मुत विशेषाकारेणेन्द्रियजन्यत्वाविशेषवदिति, नाद्यः

सामान्याकारस्य सत्वद्रव्यत्वादेरिन्द्रियेण व्यभिचार्यनुभवोऽपि जायत एवेति तद्व्यवच्छेद इत्यर्थः। द्वितीयमाशङ्कते * अथेति * घटत्वपटत्वादिविशेषाकारेन्द्रियसम्प्रयोगजन्यत्वं विवक्ष्यते, रजतभ्रमादौ तु रजतत्वस्य विशेषस्याव्यवस्थितत्वादेवेन्द्रियसम्प्रयोगायोगात्तद्व्यावृत्तिरित्यर्थः। विशेषविवक्षायामननुगम इत्यरुच्याङ्गीकृत्य दूषयति * तथा ऽपीति * अनुपपत्तिमेव प्रथयितुं विकल्पयति * तथा हीति * कियन्मात्रमिति-किं चिन्मात्रमित्यर्थः। कस्मिन् सति किं स्यादित्यत आह * आद्य इति * भासमानद्रव्याकारादिना कियन्मात्रेणेन्द्रियसम्प्रयोगाद्व्यभिचार्यनुभवो जायते इति न तद्व्यावृत्तिरित्यर्थः। न केवलमतिव्याप्तिरव्याप्तिरपीत्याह * निरिति * निर्विकल्पके वस्तुमात्रं भासते तस्य च निर्भागतया भासमानसकलाकारेन्द्रियसम्प्रयोगजत्वमेव निर्विकल्पकस्येत्यर्थः।

भासमानसकलाकारेन्द्रियसम्प्रयोगजत्वं विवक्षितमिति द्वितीयमाशङ्क्य प्रतिषेधति।

४२८ द्वितीयविकल्पनिरासः।

नापि द्वितीयः विकल्पासहत्वात्। तथा हि किं भासमानताविशिष्टस्येन्द्रियसम्प्रयोग, उत भासमानतोपलक्षितस्य। नाद्यः पूर्वं भासमानत्वाभावात् कारणस्य च पूर्वभावित्वात्। द्वितीये लटोऽविवक्षितार्थत्वं विवक्षितार्थत्वं वा। नाद्यः तथा—हि यावद्भासमानाकारेन्द्रि-

भवति, तन्निदन्द्रियसन्निकर्षजत्वं तत्प्रत्यक्षत्वे प्रयोजकं न तद्विषयत्वमित्याशयः । सिद्धान्ती स्वाशयमाविष्कुर्वन्परिहरति * तदिति * आत्ममनःसंयोगस्य सर्वज्ञानासमवायित्वादुक्तप्रयोजकभावात् घटोऽयमिति ज्ञानमात्मनि प्रत्यक्षं स्यादित्यर्थः । उक्तप्रयोजकत्वेऽप्यात्मनि भासमानत्वं नास्तीति शङ्कते *कथमिति* घटज्ञानमात्मनि कथं प्रत्यक्षं स्यादित्यर्थः । पूर्वापरपरामर्शविकलस्येदं चोद्यं शोभते परं न पुनः परामर्शवत इति परिहरति *नेति* भासमानेत्यत्र लटोऽविवक्षितार्थत्वपक्षमाश्रित्येदं दूषणमुच्यत इति भवता स्मर्तव्यमिति सम्बन्धः । भासमानत्वस्य वर्तमानत्वाविवक्षायामपि भासमानत्वप्रयोगमात्रेण भवितव्यमित्यत आह * अस्तीति * काले हि दाप्रत्ययस्तेन यदाकदाचिद्भासमानत्वमस्तीत्यर्थः । अनात्मप्रत्ययव्यतिरेकेणात्मगोचरः प्रत्ययो नास्त्येवेत्यत आह *अन्यथेति* अप्रमेयत्वमात्मनोऽनिष्टं तार्किकादीनामिति भावः ।

भासमानसमस्ताकारेन्द्रियसम्प्रयोगजज्ञानं स्वविषये प्रत्यक्षमिति विशेषणान्तरोपादानेन शङ्कते ।

४३० विशेषणान्तरशङ्कानिरासः ।

उक्तलक्षणकं स्वविषये प्रत्यक्षं न त्वन्यत्राऽपीति-चेन्न । स्वशब्देन यदि ज्ञानमात्रं विवक्षितं तदा स दोषस्तदवस्थः । अथ ज्ञानव्यक्तिरपेक्षिता तदा लक्ष्यस्वरूपस्यासाधारणतया तत्परित्यागेन लक्षणस्यान्यत्र गतत्वा-

१ मेव भासमानत्वमात्रेणेति सो० पु० पा० ।

दतिव्याप्तिः व्यक्त्यन्तरस्य लक्षणाश्रयस्य एकव्यक्त्यभिहितलक्ष्यीभूतासाधारणरूपत्वाभावात् । व्यक्त्यन्तरमपि लक्ष्यमेव अलक्ष्ये च लक्षणस्य गमनादतिव्याप्तिरिति चेन्न । यदेकतासाधारणस्वरूपं लक्ष्यत्वेन निरूप्यते भवता न तदन्यस्य स्वरूपमतः कथं तदपि लक्ष्यमित्यपिशब्देनानेकं साधारणीकृत्य समुच्चेतुं शक्यम् । यदपि साधारणं रूपं तद्व्यक्त्यन्तरव्यवच्छेदकस्वविषयपदं विशेषणं प्रक्षिपता भवतैवासाधारणीकृतं स्वशब्दस्य ज्ञानमात्रार्थत्वे दोषस्योक्तत्वात् स्वत्वस्य चाननुगतस्वरूपस्य निर्वक्तुमशक्यत्वात् । अन्यथाऽन्यव्यक्तिविषयस्यान्यत्र तथात्वापत्तेः ।

*उक्तेति* स्वशब्देन ज्ञानमात्रमुच्यते उत व्यक्तिविशेष इति विकल्प्याद्यं दूषयति *नेति* ज्ञानमात्रविषयत्वमात्मनोऽप्यस्तीति घटज्ञानमात्मनि प्रत्यक्षं स्यादित्युक्तदोषतादवस्थ्यमित्यर्थः । स्वशब्दो ज्ञानव्यक्तिपर इति द्वितीयमवलम्बते *अथेति* आक्षिपति *तदेति* ज्ञानव्यक्तिविशेषवाचकस्वपदं लक्षणविशेषणमुत लक्ष्यरूपनिर्देशकमाद्ये विशेषणासाधारण्याद्विशिष्टलक्षणमप्यसाधारणमित्यव्याप्तिः द्वितीये विषयविशेषावच्छिन्नं प्रत्यक्षं लक्ष्यं त्वयोक्तं स्यात्तत्परित्यागेनेन्द्रियसन्निकर्षजत्वादिलक्षणं व्यक्त्यन्तरे गतमित्यतिव्याप्तिरित्यर्थः । यस्मिन् लक्षणमगमत्तदपि व्यक्त्य-

न्तरमभिहितलक्ष्यस्वरूपमेव तत्कुतोऽतिव्याप्तिरित्यत आह *व्यक्तीति* सर्वं प्रत्यक्षमेकमिति तस्यानाद्यनन्ततया सुषुप्त्याद्यभावप्रसङ्गादित्यर्थः। एकव्यक्त्यभिहितासाधारणरूपत्वाभावेऽपि व्यक्त्यन्तरं लक्ष्यमेवातो नातिव्याप्तिरिति शङ्कते *व्यक्तीति* व्यक्त्यन्तरस्य लक्ष्यत्वमात्रेण कथमतिव्याप्तिनिरास इत्यत आह * अलक्ष्य इति * व्यक्त्यन्तरस्य लक्ष्यत्वमेव नास्ति एकव्यक्तितोऽसाधारणस्वरूपस्यैव लक्ष्यत्वेन दर्शितत्वादिति परिहरति *नेति* फलितमाह *अन इति* तदपि लक्ष्यमित्यत्र प्रयुक्तापिशब्देन कथं समुच्चयः कर्तुं शक्यते समुच्चयस्य साधारणरूपापेक्षत्वादित्यर्थः। तदपीत्यपि शब्देन समुच्चेतुं शक्यत एव प्रत्यक्षत्वेन सकलज्ञानव्यक्तिसाधारण्यात्तदुपाधावेव लक्ष्यत्वादित्याशङ्क्याह * यदपीति * यदपि साधारणं रूपं तदपि व्यक्त्यन्तरव्यवच्छेदकं स्वपदविशेषणं प्रक्षिपता भवतैवासाधारणीकृतमिति सम्बन्धनीयम्। प्रत्यक्षमात्रं लक्ष्यं परित्यज्य स्वविषयावच्छिन्नं प्रत्यक्षं त्वया लक्ष्यमुपात्तमतोऽसाधारण्यमिति यावत्। अस्तु तर्हि स्वशब्दो ज्ञानमात्रार्थ इति प्रथमः कल्प इति सिंहावलोकनन्यायेनाशङ्क्याह * स्वेति * घटज्ञानमात्मन्यपि प्रत्यक्षं स्यादित्युक्त एव दोष इत्यर्थः। स्वत्वमनुगतमुपेत्यातिव्याप्तिरुक्ता सम्प्रति तदपि नेत्याह * स्वत्वस्येति * स्वत्वमुपाधिर्जातिर्वा, न तावज्जातिः सामान्यादीनां जातिरहितानामप्रत्यक्षत्वापातात्। नाप्युपाधिस्तद्गोचरज्ञानस्यापि स्वविषयत्वसिद्धये स्वत्वेऽपि स्ववृत्तिर्वाच्या तथा

त्माश्रयोऽनवस्था चेत्यर्थः । स्वशब्दस्य सर्वनामतया सर्वत्र प्रवृत्त्यनुपपत्त्या स्वत्वमनुगतं किं चिदुपादेयमिति चेत् ब्रूषे तर्हि घटज्ञानमात्मनि प्रत्यक्षं स्यादित्युक्तदोषान्न विमोक्ष्यसे इत्याह * अन्येति *

भासमानेत्यत्र लटो विवक्षितार्थत्वमिति द्वितीयपक्षं प्रतिक्षिपति ।

४३१ लटो विवक्षितार्थत्वपक्षनिरासः ।

नापि द्वितीयः पक्षः विकल्पासहत्वात् । किं सम्प्रयोगापेक्षया वर्त्तमानत्वमथ यत्किञ्चिदपेक्षया । प्रथमे विशेषणत्वपक्षान्न विशेष इत्युक्तदोषापत्तिः । द्वितीये तु लटोऽविवक्षितार्थत्वमेव स्यात् व्यवच्छेद्ययो भासितभासिष्यमाणयोरपि तदा तदा भासमानत्वस्वीकारात् ।

* नापीति * प्रतिज्ञामात्रेण नार्थसिद्धिर्विपरीतमपि प्रतिज्ञातुं शक्यत्वादिति मनसि निधाय हेतुमाह * विकल्पेति * विकल्पमसहमानत्वादिति हेतुसमर्थनार्थं विकल्पयति *किमिति * सम्प्रयोगापेक्षया वर्तमानत्वं भासमानत्वस्येति प्रथमं पराकरोति* प्रथम इति * इन्द्रियसम्प्रयोगभासमानयोरेककालत्वान्नेन्द्रियसम्प्रयोगो भासनकारणं स्यात्कारणस्य पूर्वभावित्वादिति गदितावस्थामित्यर्थः । यत्किञ्चिदपेक्षया वर्तमानत्वमिति द्वितीयं दूषयति * द्वितीय इति * अस्मिन् पक्षे लटोऽविवक्षितार्थता स्यादित्युक्तं तत्र हेतुमाह * व्यवच्छेद्येति * भासमानेति वि-

शेषणेन भासितं भासिष्यमाणं च व्यवच्छेद्यमन्यथा विशेषणवैयर्थ्यान्न च तद्व्यवच्छेत्तुं शक्यते तयोरपि तत्तत्काले यत्किञ्चिदपेक्षया वर्त्तमानभासमानत्वादतोऽसमर्थविशेषणताऽन्यज्ञानमन्यत्र प्रत्यक्षं स्यादित्युक्तातिव्याप्तिरपीत्यर्थः ।

विवक्षितार्थत्वं लट उपपादयन् स्वाशयं पर आशङ्कते ।

न हीति * यस्माद्घटभासनदशायां आत्मनो भासमानत्वाभावेऽपि स आत्मा यदा मनसा गृह्यते तदेन्द्रियसम्प्रयोगानन्तरमात्मनो भासमानत्वमस्तीति पूर्वोक्तप्रसङ्गस्तदवस्थ इत्यर्थः। सम्प्रयोगमात्रानन्तर्यं न विवक्षितं किं तु सम्प्रयोगविशेषानन्तर्यमिति द्वितीयं शङ्कते * नेति * किं तर्हि विवक्षितमित्यत आह * किमिति * यस्य सम्प्रयोगस्यानन्तरं भासनमुत्पद्यते तत्सम्प्रयोगानन्तरं भासमानत्वं विवक्षितमतो नातिव्याप्तिर्घटसम्प्रयोगानन्तरमात्मनोऽनवभासमानत्वादित्यभिप्रायः। भासनमात्रजनकेन्द्रियसम्प्रयोगानन्तर्यं विवक्षितमुत घटभासनजनकसम्प्रयोगानन्तर्यमिति विकल्प्याद्यं दूषयति * नेति * आत्ममनःसम्प्रयोगानन्तरमहमिति भासनोत्पत्तेस्तदनन्तरं भासमानत्वमात्मनोऽपीत्युक्तातिव्याप्तिरित्यर्थः। द्वितीयमाशङ्कते * भासेति * अननुगमेन परिहरति * नेति * उपपादयति * एकेति * घटभासनजनकेन्द्रियसम्प्रयोगानन्तरं भासमाने कथितलक्षणं ज्ञानं प्रत्यक्षमित्युक्तं स्यान्न च तत्पटादिप्रत्यये ऽस्तीत्यव्याप्तिरिति यावत्।

भासमानाकारेन्द्रियसम्प्रयोगजं प्रत्यक्षमिति लक्षणे भासमानाकारेति पदस्थाने यस्यार्थस्येति विशेषणप्रक्षेपेण लक्षणमुपस्थापयति।

४३३ विशेषणप्रक्षेपशङ्कानिरासः।

अथ मन्यसे यद्भासनं यस्य विषयस्येन्द्रियसंयोगा-

दुत्पन्नं तत्तत्र प्रत्यक्षं प्रमाणमिति निरुक्तौ न दोष इति । मैवम् । यज्ज्ञानं घटोऽयमिति यस्य विषयस्यात्मन इन्द्रियेण सह सन्निकर्षादुत्पन्नं तज्ज्ञानं तस्मिन्नात्मनि प्रमाणं स्यात् । नात्मा तस्य विषयः तत्कथमेवं स्यादितिचेत् । नहि भवता तदीयविषयस्येत्युक्तं किन्तु सामान्यतो विषयस्येति तेनेदमभिहितम् । यदि तु तदीयताविशेषणमुपादत्ते भवान् तदा यदि तच्छब्देन ज्ञानजातीयमात्रपरामर्शस्तदा स दोषस्तदवस्थः । यदि तु ज्ञानजातीयमात्रव्यक्तिविशेषपरामर्शस्तदाऽव्यापकत्वं प्रतिज्ञानं तच्छब्दार्थस्य भेदात् । नहि यत्त्वं तत्त्वं वा किञ्चिदनुगतं रूपमस्ति ।

* अथेति * यज्ज्ञानं यस्य विषयस्येत्यत्र मात्रमुच्यते किं वा तद्विशेष इति विकल्प्य प्रथमं प्रत्याह * मैवमिति * घटोऽयमिति यज्ज्ञानं यच्छब्दवाच्यज्ञानं यच्छब्दवाच्यस्यात्मनो विषयस्येन्द्रियेण मनसा सन्निकर्षादुत्पन्नं तच्छब्दवाच्यमात्मनि विषये प्रत्यक्षं स्याद्विषयमात्रयच्छब्दवाच्यत्वमात्रयोरात्मन्यपि भावादिति भावः । द्वितीयकल्पमतिव्याप्तिपरिहाराय शङ्कते * नात्मेति * यस्य तदीयविषयस्येन्द्रिययोगाद्यज्ज्ञानमुत्पन्नं तत्तत्र प्रत्यक्षं घटोऽयमिति ज्ञानस्य नात्मा विषयस्तेन तदीयेतिविशेषणाभावान्नातिव्याप्तिरित्यर्थः । लक्षणस्य हेतुविशेषत्वा-

दविशेषोक्तस्य परेण दूषितस्य विशेषोपादाने हेत्वन्तरं स्यादिति परिहरति *नेति* यद्वासनं यस्य विषयस्येन्द्रिययोगादुत्पन्नमित्यत्र तदीयेति विशेषणं नोक्तं किं तु विषयमात्रस्येन्द्रिययोगाद्यज्ज्ञानमुत्पन्नमिति सामान्यतोऽभिहितं, ततः किमित्यत आह *तेनेति* तेन हेतुनेदमभिहितमात्ममनःसन्निकर्षोत्पन्नघटज्ञानमात्मनि प्रमाणं स्यादित्यर्थः । तदीयताविशेषणोपादानेऽपि लक्षणासाकल्यं दर्शयितुं विशेषणपक्षमनुवदति *यदीति* यस्य तदीयविषयस्येन्द्रिययोगादित्यत्र तच्छब्देन ज्ञानमात्रमुच्यते किं वा घटज्ञानादिविशेषः, आद्ये भाषितदोषानुषङ्ग इत्याह *तदेति* आत्मनोऽपि ज्ञानत्वालिङ्गितव्यक्तिविषयत्वात् घटज्ञानमात्मनि प्रमाणं स्यादित्यर्थः । द्वितीयेऽव्याप्तिरित्याह * यदीति * अव्यापकत्वे हेतुमाह * प्रतीति* तच्छब्देन घटज्ञानपरामर्शे तस्य घटज्ञानेऽभावात्तत्र लक्षणमव्यापकं स्यादित्यर्थः । खण्डादिव्यक्तिभेदेऽपि गोशब्दवाच्यगोत्वानुवृत्तिवत्प्रतिज्ञानं व्यक्तिभेदेऽपि यत्तच्छब्दवाच्ययोर्यत्वतत्त्वयोरनुवृत्तेर्नाव्यापकतेत्यत आह * नहीति * यत्वतत्त्वयोरपि यच्छब्दवाच्यत्वमेष्टव्यमन्यथा तज्ज्ञानयोरप्रत्यक्षत्वापातात्यत्तच्छब्दयोः सर्वनामत्वव्याघाताच्चेति स्ववृत्तावात्माश्रयो यत्वाद्यन्तरवृत्तावनवस्था तदन्तरेण यदादिशब्दवाच्यत्वे ज्ञानादिव्यक्तीनामपि तथात्वोपपत्तेर्यत्त्वतत्त्ववैयर्थ्यमित्यर्थः ।

घटोऽयमिति ज्ञानमात्मानमाश्रयतया प्रत्यक्षय-

न स्वात्मानं प्रकाशाभिन्नतया घटं च कर्मतयेति
प्राभाकरैरङ्गीकारात् ज्ञानमात्मनि प्रत्यक्षं स्यादिति
दुक्तं तदिष्टमेवेत्याशङ्क्याह ।

४३४ प्राभाकरनयेनेष्टापत्तिशङ्कानिरासः ।

अत एवात्मविषयत्वानुयोगवत् त्रिपुटीप्रत्यक्षवादि-
नं पटज्ञानस्य घटादौ प्रत्यक्षतया प्रामाण्यानुयोगो
ष्टव्यः चक्षुःसन्निकर्षाभावात् । अन्यथा तस्येष्टप्रस-
ाकत्वात् । तदर्थं यादिन्द्रियसन्निकर्षोत्पन्नमिति विशे-
णप्रक्षेपे यत्तच्छब्दार्थस्यासाधारण्यादव्याप्त्यापत्तेः । यदि
यत्तच्छब्दार्थावनुगतौ स्यातां पुनरप्यन्यत्र घटो-
यमितिज्ञानस्य प्रक्षत्वेन प्रमाणता प्रसज्येत ।

* अत इति * घटज्ञानस्यात्मविषयत्वानुयोगो य-
नैयायिकादिनये तथा त्रिपुटीप्रत्यक्षवादिनः प्रा-
ाकरस्य घटज्ञानं पटादौ प्रत्यक्षतया प्रमाणं स्या-
समानाकारेन्द्रियसम्प्रयोगजत्वाविशेषादित्यनुयो-
द्रष्टव्य इत्यर्थः । पटज्ञानं घटादौ किमिवाप्रत्य-
स्यादित्यत आह *चक्षुरिति* घटादौ पटोऽयमिति-
नोत्पादकचक्षुःसन्निकर्षानाधारत्वात्तद्विषयत्वमनि-
मित्यर्थः । पटज्ञानस्यात्मनि प्रत्यक्षत्वप्रसञ्जनं कस्मा-
त्यत आह *अन्यथेति* यदिन्द्रियसन्निकर्षाद्यज्ज्ञान-
पन्नं तत्तत्र प्रत्यक्षं नैवंसति घटज्ञानस्य पटे प्रत्यक्षता
सन्निकर्षाजन्यत्वादित्यत आह*यदिति*तदर्थं-तस्य

१ कस्मान्नेत्यत आहेति सो० पु० पा० ।

प्रसङ्गस्य निवृत्तयेऽर्थशब्दस्य निवृत्तिवचनत्वान्मशकार्थो धूम इति वत् । यच्छब्देनार्थज्ञानविशेषानुच्यते तन्मात्रं वाऽऽद्येऽव्याप्तिर्यच्छब्दार्थस्य व्यावृत्तत्वादित्यर्थः। द्वितीयकल्पानुवादेन पूर्वोक्तातिव्याप्तिमाह *यदीति* तदा पटज्ञानस्य घटादौ प्रत्यक्षता स्याद्यच्छब्देन घटादिव्यावृत्तार्थानभिधानादित्युक्तदोषतादवस्थ्यमित्यर्थः ।

यदिन्द्रियसन्निकर्षाद्यज्ज्ञानमुत्पन्नं तत्रान्यव्यतिरिक्ते प्रत्यक्षं तदिति विशेषो लक्षणमतो नातिव्याप्तिरिति शङ्कते ।

४३५ अतिव्याप्तिपरिहारशङ्कानिरासः ।

अथान्य[1]व्यतिरिक्त इति विशेषणं प्रक्षिपसि तदाऽन्य[2]विषयस्य प्रत्यक्षता न स्यात् । तच्छब्देनानुगतार्थाभिधाने व्यवच्छेदकत्वाभावात् ।घटज्ञानस्य च पटे प्रत्यक्षतया प्रामाण्यं प्रसज्येत ।

*अथेति*अन्यशब्देन घटादिविशेष उच्यते किं वा भेदाधिकरणं वस्तुमात्रमिति विकल्प्य प्रथमं प्रत्याह *अन्येति* तदाऽन्यघटादिविषयज्ञानस्य प्रत्यक्षता न स्यादन्यव्यतिरिक्तत्वलक्षणविशेषणस्यान्यविषयेऽभावादित्यर्थः । अन्यशब्देन भिन्नं वस्तुमात्रमुच्यते ततो व्यतिरिक्तत्वप्रतियोगिनोऽन्यस्याप्यन्यव्यतिरिक्तत्वमस्तीति नाव्याप्तिरिति द्वितीयमाशङ्क्याह *तदिति* तच्छब्देनान्यशब्देनेत्यर्थः । घटज्ञानस्य पटे

१ अथात्मव्यति० इति का० मु० पु० पा० ।
२ तदाऽऽत्मेति का० मु० पु० पा० ।

प्रत्यक्षतया प्रामाण्यं प्रसज्येत तदुपपादयति * व्यव-
च्छेदकत्वाभावात् * अन्यव्यतिरिक्तविशेषणस्येति शे-
षः। अथात्मव्यतिरिक्त इति केचित्पठन्ति तस्मिन् पा-
ठे घटज्ञानमात्मनि प्रमाणं स्यादिति यत्पुरस्तादुक्तं
तत्परिहारः शङ्कार्थः। आत्मविषयस्य प्रत्यक्षता न
स्यादिति परिहारग्रन्थार्थः। तच्छब्देन आत्मशब्देन स्व-
रूपमात्रमुच्यते, घटादिस्वरूपमपि स्वरूपमेव तद्व्यति-
रिक्तत्वमात्मनोऽपीति नातिव्याप्तिरित्याशङ्क्याह * त-
च्छब्देनेति *

भासमानाकारेत्यादिलक्षणोक्तदोषं लक्षणान्तरे-
ऽप्यतिदिशति।

४३६ लक्षणान्तरेऽपि दोषातिदेशः।

एतेनेन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यभिचारि प्रत्य-
क्षमित्यत्रापि दोषोऽयमुक्तो द्रष्टव्यः तादृशस्यापि ज्ञान-
स्य विषयान्तरे प्रत्यक्षत्वेन प्रामाण्यप्रसङ्गात्। यस्यार्थस्य
सन्निकर्षात् यदुत्पद्यते ज्ञानं तत्तत्र प्रत्यक्षतया प्रमाण-
मित्यभिधाने तु यच्छब्दतच्छब्दसाधारणासाधारणार्था-
भिधानविकल्पोक्तदोषप्रसङ्गः।

*एतेनेति * सति न्यायसाम्येऽतिदेशः प्रवर्तत इति
न्यायात्किमत्र न्यायसाम्यमित्यत आह *तादृशेति* य
स्यार्थस्य यदिन्द्रियसन्निकर्षाद्यज्ज्ञानमुत्पद्यते तत्तत्र
प्रत्यक्षं न विषयान्तर इत्याशङ्क्याह *यस्येति* यत्तच्छ-
ब्दाभ्यां व्यावृत्तोऽर्थोऽभिधीयतेऽनुवृत्तो वा, ऽऽद्येऽव्या-
प्तिः द्वितीये व्यवच्छेदकाभावात् घटज्ञानं पटेऽपि प्र-

त्यक्षं स्यादित्यर्थः ।

यदसाधारणदूषणाभिधानायातिदेशव्याजेन लक्षणं प्रासञ्जि तदिदानीमाह ।

४३७ अव्यभिचारिपदवैयर्थ्यम् ।

अव्यभिचारिपदञ्च व्यर्थं, न हि शुक्तौ रजतज्ञानं रजतेन्द्रियसन्निकर्षादुत्पन्नम् । संस्कारलक्षणा प्रत्यासत्ती रजतत्वेऽप्यस्तीति चेन्न । पूर्व्वानुभूतरजततादात्म्यस्य संस्काराभावादुक्तदोषतादवस्थ्यात् । गुरुमतानुसारेण सुतरां विशेषणवैयर्थ्यात्तेन व्यभिचारानङ्गीकारात् । रजतत्ववैशिष्ट्ये पुरोवर्त्तिनस्तदभावात् तस्मिन्नेव चांशेऽप्रामाण्यं न तु रजतत्वमात्रे तस्यान्यत्र सत्त्वात् ।

* अव्यभीति * शुक्तिरजतज्ञानव्यवच्छेदार्थत्वादव्यभिचारविशेषणस्य न वैयर्थ्यमित्याशङ्क्याह * न हीति * रजतज्ञानस्य सन्निकर्षाजन्यत्वात् सन्निकर्षजत्वविशेषणेन व्यवच्छिन्नत्वादव्यभिचारविशेषणं व्यर्थमित्यर्थः । चक्षुःसंयुक्त आत्मा तत्र पूर्वरजतप्रत्ययसंस्कारः तद्गोचरो रजतमिति संस्कारलक्षणेन्द्रियप्रत्यासत्त्या प्रत्यक्षरजतज्ञानस्य जननात्सन्निकर्षजत्वविशेषणेन तद्व्यवच्छेदासिद्धेरव्यभिचारिविशेषणं न व्यर्थमिति शङ्कते *संस्कारेति* पूर्वानुभूते संस्कारनियमाच्छुक्तिरजततादात्म्यस्य पूर्वमननुभवात्तत्संस्कार एव नोपपद्यत इति परिहरति *नेति* एवं भट्टमतानुसारेण लक्षणविशेषणवैयर्थ्यमभाणि । सम्प्रति गुरुमतेऽपि तदीरयति *गुरु-

मतेति* गुरुमतानुसारेण सुतरामव्यभिचारिपदं व्यर्थं तेन व्यभिचारिज्ञानानङ्गीकारात्प्रमाणं स्मृतिश्चेति प्रत्ययद्वैराश्याश्रयणादित्याशयः। किं च शुक्तिं रजततयाऽवगाहमानं ज्ञानं व्यवच्छिद्यते किं वा रजतत्वमात्रज्ञानं नाद्य इत्याह *रजतेति* पुरोवर्तिनः शुक्तिशकलस्य रजतत्ववैशिष्ट्ये पूर्वानुभवसंस्काराभावात् ज्ञानं सन्निकर्षजत्वविशेषणेन व्यवच्छिद्यते इत्यर्थः। द्वितीयं प्रत्याह *तस्मिन्निति* पुरोवर्तिनो रजतत्ववैशिष्ट्यांश एवाप्रामाण्यं ज्ञानस्य न पुना रजतत्वमात्रे तस्य देशान्तरादौ सत्वात्तद्गोचरज्ञानस्यापि प्रमाणतया व्यवच्छेद्यत्वायोगादित्यर्थः।

प्रत्यक्षलक्षणान्तरमाशङ्कते।

४३८ प्रत्यक्षलक्षणान्तरनिरासः।

अथ साक्षात्कारित्वं प्रत्यक्षलक्षणमुच्यते तदा साक्षात्कारिभ्रमेऽपि प्रसङ्गः। अव्यभिचारित्वेन विशेषितं तल्लक्षणमिति वा भेदाग्रह व्यतिरिक्तविभ्रमाभावो वेति चेत्। न। विकल्पासहत्वात्। किमवगतमिदं लक्षणं फलहेतुः अनवगतं वा, न तावच्चरमः तदभिधानवैयर्थ्यप्रसङ्गात्। अभिधानस्य ज्ञानोत्पादोपयोगित्वात् तस्य चानवगतस्यैव फलसाधकत्वाभ्युपगमात्। आद्ये किन्यस्मात्तदवगमः उत त्वदीयाल्लक्षणवाक्यात्, यद्यस्मात कृतममुना लक्षणाभिधानप्रयासेन, अभिधानस्य ज्ञानोत्पादातिरिक्तप्रयोजनाभावात् तस्य चान्यत एव सिद्धेः।

अन्ये किं त्वदभिधानमाप्तोपदेशतया साक्षात्कारित्वं बोधयति उत लिङ्गादिभावेन ? । न तावच्चरमः त्वद्वचनस्य साक्षात्कारित्वाविनाभावादेर्दर्शयितुमशक्यत्वात् । नापि प्रथमः वादिनं प्रति भवत आप्तत्वासिद्धेः । सिद्धौ हि प्रतिज्ञामात्रादेव साध्यसिद्धेर्हेत्वाद्यभिधानमनर्थकं सर्वत्र स्यात् ।

* अथेति * यथाश्रुतं तावदलक्षणमिदं रजतमित्यादिज्ञानस्यापि साक्षात्कारितयाऽतिव्याप्तेरित्याह * तदेति * अव्यभिचारि साक्षात्कारिज्ञानं प्रत्यक्षमिति लक्षणं विशेष्यत इत्याशङ्क्ते * अव्यभीति * प्राभाकरनये पुनः साक्षात्कारिभ्रम एव नास्ति तत्प्रसिद्धिव्यवहारयोर्विवेकाग्रहमात्रालम्बनत्वादतो न तन्मते विशेषणाभावेऽप्यतिव्याप्तिरित्याह * भेदेति * लक्षणप्रणयनवैयर्थ्यप्रसञ्जनेन परिहरति * नेति * विकल्पपुरःसरमुपपादयति * किमिति * साक्षात्कारित्वलक्षणं स्वयं ज्ञातमितरेभ्यो व्यवच्छेदज्ञानहेतुरुत सत्तामात्रेणेति विकल्पार्थः। द्वितीयं कल्पमादौ दूषयति तत्र बहुवक्तव्याभावात् * नेति * अनवगतलक्षणस्य लक्ष्यव्यवच्छेदप्रतीतिहेतुत्वे लक्षणाभिधानवैयर्थ्यप्रसङ्गादिति हेतुमाह * तदिति * तदेव कुत इत्यत आह * अभिधानेति * अस्तु तर्हि ज्ञानोत्पादकत्वेनेदं लक्षणं सार्थकमित्यत आह * तस्येति * तस्य लक्षणस्यानवगतस्यैव व्यावृत्तज्ञानहेतुत्वान्न तदभिधानस्य प्रयोजनमित्यर्थः। अवगतं तर्हि तत्फलहेतुरिति प्रथमकल्पमाशङ्क्य प-

मानभावेनैव, नाप्तोपदेशतया। अतएव च लक्षणं केवलव्यतिरेक्यनुमानमाचक्ष्महे, तद्यथा—श्रावणादिप्रमितयः साक्षात्कारिप्रमितयो वा प्रत्यक्षत्वेन व्यवहर्त्तव्याः साक्षात्कारिप्रमितित्वात् न यत्प्रत्यक्षतया व्यवह्रियते न तत्साक्षात्कारि यथाऽनुमितिः तथाचैता स्तस्मात्तथा । एतदनुमानप्रतिपादकञ्च वाक्यं नाप्तवाक्यत्वेन प्रयुज्यते वादिना, किन्तु व्याप्त्यादेः प्रतिपन्नस्यैव स्मारकं, पूर्व्वाप्रतिपन्नस्य वा जिज्ञासोत्पादनद्वारेणेदानीमेव वादिनि प्रमाणोत्पादकमित्युक्तदोषानवकाश इति ।

* अथेति * अन्यतो–ऽनुव्यवसायात्साक्षात्कारित्वं ज्ञानसमवेतं संयुक्तसमवेतसमवायाज्ज्ञानानीति यावत् । तर्ह्यनवगतस्यासत्वादभिधानं व्यर्थमेवेत्यत आह * प्रत्यक्षेति * साक्षात्कारित्वं प्रत्यक्षव्यवहारहेतुरिति न जानातीत्यर्थः । यदन्यत् प्रयोजनमभिधानस्येत्युक्तं तदिदानीमाह * तमिति * अस्य साक्षात्कारित्वस्येति साक्षात्कारित्वव्यवहारनिदानत्वमपि नाप्तोपदेशतया बोधयितुं शक्यं वादिनो ऽनाप्तत्वादित्याशङ्क्य तदसम्भवेऽपि परार्थानुमानतया बोधकमित्याह * तच्चेति * तच्च ज्ञाप्यत इति सम्बन्धः । साक्षात्कारित्वस्यान्यत्र प्रत्यक्षव्यवहारनिदानत्वसिद्धौ वैयर्थ्यमसिद्धौ व्याप्त्यसिद्ध्या हेत्वासिद्धिरिति कथमनुमानभावेन बोधकमित्यत आह * अत इति * अन्वयव्याप्त्यभावादेवेति यावत् ।

कीदृशं तद्व्यतिरेक्यनुमानमित्यपेक्षायां तदुदाहरति *त-दिति * तदिति श्रावणः शब्दः आदिपदोपादाने विशे-ष्यासिद्ध्याऽऽशङ्का स्यादिति साक्षात्कारिप्रमितय इ-त्याह * प्रमितित्वादिति * प्रमितित्वादित्युक्तेऽनुमाना-दिज्ञाने विरुद्धता स्यात्तद्वारणाय * साक्षादिति * सा-क्षात्कारित्वादित्युक्ते रजतादिभ्रमे विरुद्धता तद्व्यु-दासाय * प्रमितित्वादिति * व्यतिरेकव्याप्तिं कथयति * न यदित्यादिना * तथाचैता इति * उक्तसाधना इत्य-र्थः * तस्मात्तथेति * उपनयानन्तरमुक्तसाधनत्-त्वादुक्तसाध्या इति निगमयति पञ्चावयवप्रयोगस्यैव परार्थानुमानत्वात् । एतत्पञ्चावयववाक्यं व्याप्त्यादि-कमनुमानतया बोधयति किं वाऽऽप्तवाक्यतयाऽऽद्येऽन-वस्थानं द्वितीये ऽसम्भवो वादिन आप्तत्वासिद्धेरि-त्याशङ्क्याह * एतदिति * तर्हि प्रकारान्तरासम्भवेन वैयर्थ्यमित्याशङ्क्य प्रकारद्वयमीरयति * किं त्विति * "सम्बन्धिदर्शनात्सम्बन्ध्यन्तरे स्मृति"रितिन्यायात् व्या-प्त्यादिविषयशब्ददर्शने वादिना पूर्वानुभूतव्यतिरेक-व्याप्त्यादिपदार्थः स्मर्यते तत्स्मारकत्वेन प्रयोग इ-त्यर्थः । भवतु पूर्वप्रतिपन्नव्याप्त्यादिविषये तथा यत्र पुनरप्रतिपन्नव्याप्त्यादिकं प्रत्यनुमानं प्रयुज्येत तत्र कथं स्मारकत्वमित्यत आह * पूर्वेति * वादिना प-ञ्चावयवं प्रयुक्तं वाक्यमुपश्रुत्य प्रतिवादिनो जिज्ञा-सा जायते किमनेन साधनमुपन्यस्तमिति जिज्ञास-मानस्य चात्मनि लिङ्गविषयप्रमाणज्ञानं जायते ततश्चानुमानप्रमाणोत्पत्तिः स्वात्मनीति प्रमाणोत्पा-

दकामिति कृत्वा ऽभिधानवैयर्थ्यलक्षणदोषानवकाश इत्यर्थः ।

विपक्षबाधकतर्कदुष्टत्वादप्रयोजको हेतुरिति परिहरति ।

४४० शङ्कानिरासः ।

न प्रत्यक्षतया व्यवहर्त्तव्या इति व्यवहारस्य किं विषयभेदो विशेषः उत शब्दभेदः ।

* नेति *

व्यवर्त्तव्या इति व्यवहारमात्रविषयत्वं त्वया न साध्यते प्रत्यक्षेतिविशेषणोपादानवैयर्थ्यप्रसङ्गात् किं तु व्यवहारविशेषविषयत्वं सपक्षभेद एव विशेष इति प्रथमकल्पमाशङ्क्य दूषयति ।

४४१ विकल्पपूर्वकंनिरासः ।

आद्ये यद्यसौ विषयविशिष्टं व्यवहारं नाज्ञासीत्कथं साक्षात्कारिणि तस्य स्वकर्त्तव्यतां लक्षणवाक्यादप्यवगच्छेत् नह्यविदिताग्निरनुमानादप्यग्निसम्बन्धं बोधयितुं शक्यः । अथाज्ञासीत् तदा ज्ञातज्ञापनवैयर्थ्याल्लक्षणरूपमनुमानं निष्प्रयोजनम् । अथ सामान्यतो जानाति अस्ति कश्चिद्विषयः प्रत्यक्षव्यवहारस्य, विशेषतस्तु नजानाति तं प्रतीदमुच्यते । न । किं सामान्यतो निमित्तवत्तां व्यवहारमात्रस्य जानाति उत व्यवहारविशेषस्य । आद्ये प्रकृतानुपयोगः व्यवहारविशेष-

स्य चिन्त्यमानत्वात् । द्वितीये किंकृतोऽसौ व्यवहारस्य विशेष इति विकल्पितपक्षानुप्रवेशमन्तरेण न निस्तारः।

* आद्य इति * अयमर्थः असौ बोध्यस्तद्विषय-विशिष्टं तद्व्यवहारमज्ञासीदन्यतो नाज्ञासीद्वा, यदि नाज्ञासीत्साक्षात्कारिज्ञाने तस्य व्यवहारस्य स्वकर्तव्यतां कथं जानीयान्न कथं चिदप्रसिद्धविशेषणत्वेन पक्षा-भासत्वापातादिति । सर्वप्रमाणानामनवगताधिगन्तृ-त्वस्वाभाव्यादन्यतो व्यवहारस्यानवगतावपि व्य-तिरेक्यनुमानरूपलक्षणवाक्यादेव तदधिगतिः किं न स्यादित्यत आह *नेति* अविदितो ऽग्निर्येन सोऽवि-दिताग्निः प्रमाणानामज्ञातज्ञापकत्वेऽपि तद्भेदस्यानु-मानस्य सामान्यतो ऽन्यत्र प्रसिद्धिगोचरत्वमेव व्या-प्त्यादिसापेक्षतया बोधकत्वा दन्यथा ऽप्रसिद्धवि-शेषणत्वादेरुच्छेदापातादन्वयिनि तद्दूषणं के-वलव्यतिरेकिणि नेति कोशपानमेव शरणमित्यर्थः। विषयविशेषविशिष्टं व्यवहारमन्यतो ज्ञातवानिति द्वितीयकल्पमाशङ्कते * अथेति * लक्षणप्रवृत्तेः प्राग-व तत्कृत्यस्य व्यवहारविशेषज्ञानस्य सिद्धतयाऽ-नुमानरूपमपि लक्षणं व्यर्थमिति दूषयति * तदेति * अत्यन्तज्ञानाज्ञानपक्षयोरुक्तदोषपरिहारमाशङ्कते * अथेति * प्रत्यक्षव्यवहारस्य कश्चिद्विषयविशेषोऽस्ती-ति सामान्यतो ऽधिगतं साक्षात्कारिज्ञाने साध्यते तेन नाप्रसिद्धविशेषणता, नापि सिद्धसाधनता, पक्ष-धर्मताबलादसिद्धविशेषलाभादिति भावः । प्रत्य-

ज्ञानवगमे तद्विशेषितव्यवहारस्य सामान्यावगमोऽपि न सम्भवति विशेषणज्ञानाधीनत्वाद्विशेष्यज्ञानस्येत्यभिप्रेत्य परिहरति * नेति * विकल्पमुखेनाप्येतदपाकर्तुं उपक्रमते * किमिति * सामान्यतो यस्य निमित्तवत्तां जानाति तद्व्यवहारमात्रमुक्तं उत व्यवहारविशेष इति विकल्पार्थः । अर्थान्तरतापत्त्या प्रथमं दूषयति * आद्य इति * तत्र हेतुमाह * व्यवहारेति * द्वितीयं प्रत्याह * द्वितीय इति * किं विषयभेदो विशेष उत शब्दभेद इति विकल्पितपक्षानुप्रवेशान्न निस्तार इत्यर्थः ।

उक्तं दूषणं लक्षणान्तरेऽप्यतिदिशति ।

४४२ लक्षणान्तरेऽप्युक्तदूषणातिदेशः ।

एतेनसर्व्वस्यैव लक्ष्यस्य[1] स्वीकारः परासनीयः । तथाहि"

नात्यापत्त्या प्रमामात्रात्ते तेऽर्थाः स्वीक्रियोचिताः ।
तद्धियस्तदुरीकारे स्वाश्रयं कश्चिकित्सतु ॥ ३५ ॥
अथान्यः स विशेषश्चेन् तद्धीत्वं कश्चिदिष्यते ।
दत्तः साकारवादाय विष्टरः स्पष्टमेव तत् ॥ ३६ ॥
अर्थादुत्थास्तत्रो धर्मा नानुमात्वादयो यथा ।
तद्धीत्वमपि तद्वत्स्यादित्यर्थोऽनर्थमाविशेत् ॥ ३७ ॥
सोऽपि वा धीविशेषः किं स्वीकार्य्यस्तद्धियं विना ।

---

१ लक्षणस्येति का० मु० पु० पा० ।

एवञ्च सोऽपि सोऽपीति नान्तः सोपानधावने ॥३८॥
समस्तलोकशास्त्रैकमत्यमाश्रित्य नृत्यतोः ।
का तदस्तु गति स्तत्तद्वस्तुधीव्यवहारयोः ॥३९॥
उपपादयितुं तैस्तैर्मतैरशकनीययोः ।
अनिर्वक्तव्यतावादपादसेवागतिस्तयोः ॥ ४० ॥

* एतेनेति * इयं पृथिवीति व्यवहर्तव्या गन्धवत्वाद्व्यतिरेकेणाबादिवदित्यादिलक्षणेन लक्ष्यस्वीकारो निराकर्तव्य इत्यर्थः। निराकरणप्रकारं श्लोकेन सङ्गृह्णाति *तथा हीति * लक्षणतो जायमानात्प्रमामात्रात्तत्तल्लक्ष्यस्वीकार, उत पृथिव्यादिलक्ष्यविशिष्टप्रमात इति प्रथमं दूषयति * नेति * ते ते पृथिव्यादयोऽर्थाः प्रमामात्रात् स्वीकारोचिता न भवन्ति कुतो ऽत्यापत्तेरतिप्रसङ्गात्। ज्ञानमात्रस्य सर्वार्थसाधारणतया एकज्ञानेन सर्वार्थस्वीकारप्रसङ्गात्। अर्थापत्तेरिति पाठे अर्थस्यातिप्रसङ्गलक्षणस्यापत्तेरित्यर्थः। द्वितीयं दूषयति * तदिति * पृथिवीविशिष्टज्ञानस्य पृथिव्यां मानत्वे पृथिवीसिद्धौ तत्सिद्धिरित्यात्माश्रयदोषं कः चिकित्सतु न कोऽपीत्यर्थः। तद्धीत्वं नाम ज्ञानस्यैव कश्चिद्धर्मो न तु ज्ञेयस्य तस्य ज्ञानेऽन्तर्भावस्तेन नात्माश्रयइति शङ्कते * अथेति * परिहरति * दत्त इति *

"अर्थेनैव विशेषो हि निराकारतया धिया"

मिति स्वसिद्धान्तः स त्यक्तः स्यात् ज्ञानस्य ज्ञेयाभेदमन्तरेण तद्धीत्वधर्मायोगात्। तथा—

"सहोपलम्भनियमादभेदो नीलतद्धियो"

रिति बौद्धसिद्धान्तस्वीकारोऽपीति स्वाभ्युपगमहानिरनभ्युपगतोपगम इति दोषद्वयं तात्पर्यार्थः। साकारवादाय विष्टर आसनं स्पष्टमेव दत्तः स्यात्साकारवादः पूजितः स्यादिति सम्बन्धः। ज्ञानस्य प्रकाशमात्रस्वाभाव्यात्तद्धीत्वविशेषो न स्वाभाविकः किं त्वर्थसम्बन्धौपाधिकः स्फटिकस्येव लोहितिमा, ततश्च ज्ञानगतविशेषजनकतया बाह्यार्थसिद्धेर्न शाक्यमतप्रवेश इत्याशङ्क्याह *अर्थादिति*अनुमित्यादयोऽनुमितित्वागमत्वादयो ज्ञानधर्मा अर्थाद्विषयादुत्थास्तव-उत्थानशीला न भवन्ति किं तु लिङ्गादिकारणविशेषादुत्तिष्ठन्ति यथा तद्धीत्वमपि तद्वत्स्यादर्थादुत्थितं न स्याद्धीधर्मत्वादेवं च बाह्यार्थासिद्धिरित्याह * इत्यर्थोऽनर्थमाविशेदिति * उदीरितरीत्याऽर्थो विषयोऽनर्थस्वभावमाविशेन्न सिद्ध्येदित्यर्थः। तपोधर्मा इति पाठे ज्ञानधर्मा इति योज्यम्। तद्धीत्वविशेषस्य ज्ञानधर्मत्वे बाह्यार्थासिद्धिरुक्ता। सम्प्रति दूषणान्तरमाह *सोऽपीति* सोऽपि तद्धीत्वं नाम धियो विशेषो धर्म स्तद्धिया स्वीकार्य उत धीमात्रा,यदि धीमात्रात्स्यादतिप्रसङ्गः धीमात्रस्य सर्वसाधारण्यादेकज्ञानस्य सर्वधीत्वापातादतस्तद्धियैव स्वीकार्यः ततश्चात्माश्रय इत्यर्थः। धीविशेषस्तद्धीत्वं तद्धियं विनाऽपि स्वीकार्यः किं नेत्यन्वयः। अस्तु तद्धियस्तदूरीकारस्ततः किं तत्राह * एवञ्चेति * एवं च सति तद्धीत्वधियः तद्धीत्वं धर्म्मः सोऽपि तया स्वीकार्य इति सोपानधावने चक्रकक्षाविशि-

ष्टमार्गमगने अन्तोऽवसानं न—अनवस्था स्यादित्यर्थः। यद्युक्तप्रकारेण बाह्योऽर्थस्तद्धीत्वं च न सिद्ध्येत्तर्हि सकललोकतैर्थिकाविसम्वादेनायं घटोऽनेन जलमाहरणीयमिदं च तज्ज्ञानमिति सिद्धयोर्ज्ञानव्यवहारयोः का गतिरिति पृच्छति *समस्तेति* तत्तर्हि तत्तद्वस्तुधीव्यवहारयोः का गतिरस्तु किमत्यन्तासद्विषयत्वमुत सद्विषयत्वमिति पृच्छायामत्यन्तासद्विषयत्वं तयोर्गतिं र्वाच्या शशशृङ्गतैक्ष्ण्यप्रतीतिव्यवहारयोरिवेत्यत आह * समस्तेति * समस्तलोक आबालपण्डितजनस्तद्व्यवहारो वा समस्तानि शास्त्राणि तर्कतन्त्रादीनि तेषामैकमत्यमविसम्वादस्तमाश्रित्य नृत्यतोऽतिशयेन वर्त्तमानयोरित्यर्थः । न सद्विषयत्वं नाप्यसद्विषयत्वमपि त्वनिर्वचनीयाऽज्ञानविलासविषयत्वमेव गतिरिति सिद्धान्त्याह * उपपादयितुमिति * गदितार्थोऽयं श्लोकः ।

व्यवहारस्य शब्दभेदो विशेष इति द्वितीयं कल्पमपवदति ।

४४३ द्वितीयकल्पनिरासः ।

नापि द्वितीयः । तथा हि अयमनुमानार्थः स्यात् श्रावणादिप्रतिपत्तयः प्रत्यक्षशब्दाभिधेयाः साक्षात्कारित्वादित्यादिः सोऽपि न, यद्यसाक्षात्कारिण्यनुमानादौ तच्छब्दाप्रयोगमात्रात्साक्षात्कारिणि तच्छब्दप्रयोगः क्रियते तर्हि शशविषाणजवगडदशादिशब्दप्रयोगोऽपि सा-

क्षात्कारिणि कर्त्तव्य एवाविशेषात् । अथ जवगडदशादिशब्दाः सामान्यतोऽर्थवत्तया न प्रसिद्धाः क्वचिदप्यप्रयोगात्, शशविषाणादिशब्दाश्चासद्विषया एवेति सिद्धाः, प्रत्यक्षादिशब्दास्तु सद्विषयवत्तया सामान्यतः सिद्धाः प्रत्यक्षमस्तीत्यादिप्रयोगदर्शनादित्यस्ति विशेष इति चेत् । मैवम् । एतेनापि विशेषेण चाक्षुषादिशब्दानामव्यवच्छेदात् तेषामपि साक्षात्कारिमात्रे प्रयोगप्रसङ्गः। साक्षात्कारित्वे सत्यपि श्रावणादौ चाक्षुषादिशब्दानामप्रयोगो न त्वेवं प्रत्यक्षादिशब्दानामिति विशेष इति चेत् । एवं तर्हि यत्र साक्षात्कारित्वं नास्ति तत्र प्रत्यक्षशब्दप्रयोगो नास्ति यत्र साक्षात्कारित्वमस्ति तत्र सर्वत्रास्तीति यो जानीते तं प्रति लक्षणाभिधानमिति स्यात् स च व्यवहारान्तरवदन्वयव्यतिरेकाभ्यामेव वाच्यवाचकभावमवधारितवानिति व्यर्थं लक्षणम।

*** नापीति * द्वितीयकल्पेऽनुपपत्तिं प्रथयितुमनुमानार्थं प्रथयति * तथा हीति * इष्यत एवायमनुमानार्थं इत्यत आह * सोऽपीति * प्रत्यक्षशब्दस्यासाक्षात्कारिण्यप्रयोगात्तदभिधेयत्वं साक्षात्कारिणि साध्यते किं वा साक्षात्कारिण्येव प्रयोगादिति विकल्प्य प्रथममनुवदति * यदीति * मात्रग्रहणेनात्र प्रयोगनैरपेक्ष्यं दर्शयति । अतिप्रसङ्गपराहतत्वेनाप्रयोजकत्वमाह * तर्हीति * अन्यत्राप्रयोगाविशेषात्**

ष्टमार्गमगने अन्तोऽवसानं न—अनवस्था स्यादित्यर्थः । यद्युक्तप्रकारेण बाह्योऽर्थस्तद्धीत्वं च न सिद्ध्येत्तर्हि सकललोकतैर्थिकाविसम्वादेनायं घटोऽनेन जलमाहरणीयमिदं च तज्ज्ञानमिति सिद्धयोर्ज्ञानव्यवहारयोः का गतिरिति पृच्छति *समस्तेति* तत्तर्हि तत्तद्वस्तुधीव्यवहारयोः का गतिरस्तु किमत्यन्तासद्विषयत्वमुत सद्विषयत्वमिति पृच्छायामत्यन्तासद्विषयत्वं तयोर्गति र्वाच्या शशशृङ्गतैक्ष्ण्यप्रतीतिव्यवहारयोरिवेत्यत आह * समस्तेति * समस्तलोक आबालपण्डितजनस्तद्व्यवहारो वा समस्तानि शास्त्राणि तर्कतन्त्रादीनि तेषामैकमत्यमविसम्वादस्तमाश्रित्य नृत्यतोऽतिशयेन वर्त्तमानयोरित्यर्थः । न सद्विषयत्वं नाप्यसद्विषयत्वमपि त्वनिर्वचनीयाऽज्ञानविलासविषयत्वमेव गतिरिति सिद्धान्त्याह * उपपादयितुमिति * गदितार्थोऽयं श्लोकः ।

व्यवहारस्य शब्दभेदो विशेष इति द्वितीयं कल्पमपवदति ।

४४३ द्वितीयकल्पनिरासः ।

नापि द्वितीयः । तथा हि अयमनुमानार्थः स्यात् श्रावणादिप्रतिपत्तयः प्रत्यक्षशब्दाभिधेयाः साक्षात्कारित्वादित्यादिः सोऽपि न, यद्यसाक्षात्कारिण्यनुमानादौ तच्छब्दाप्रयोगमात्रात्साक्षात्कारिणि तच्छब्दप्रयोगः क्रियते तर्हि शशविषाणजबगडदशादिशब्दप्रयोगोऽपि सा-

क्षात्कारिणि कर्त्तव्य एवाविशेषात् । अथ जबगडदशादिशब्दाः सामान्यतोऽर्थवत्तया न प्रसिद्धाः क्वचिदप्यप्रयोगात्, शशविषाणादिशब्दाश्चासद्विषया एवेति सिद्धाः, प्रत्यक्षादिशब्दास्तु सद्विषयवत्तया सामान्यतः सिद्धाः प्रत्यक्षमस्तीत्यादिप्रयोगदर्शनादित्यस्ति विशेष इति चेत् । मैवम् । एतेनापि विशेषेण चाक्षुषादिशब्दानामव्यवच्छेदात् तेषामपि साक्षात्कारिमात्रे प्रयोगप्रसङ्गः । साक्षात्कारित्वे सत्यपि श्रावणादौ चाक्षुषादिशब्दानामप्रयोगो न त्वेवं प्रत्यक्षादिशब्दानामिति विशेष इति चेत् । एवं तर्हि यत्र साक्षात्कारित्वं नास्ति तत्र प्रत्यक्षशब्दप्रयोगो नास्ति यत्र साक्षात्कारित्वमस्ति तत्र सर्वत्रास्तीति यो जानीते तं प्रति लक्षणाभिधानमिति स्यात् स च व्यवहारान्तरवदन्वयव्यतिरेकाभ्यामेव वाच्यवाचकभावमवधारितवानिति व्यर्थं लक्षणम् ।

*** नापीति * द्वितीयकल्पेऽनुपपत्तिं प्रथयितुमनुमानार्थं प्रथयति * तथा हीति * इष्यत एवायमनुमानार्थ इत्यत आह * सोऽपीति * प्रत्यक्षशब्दस्यासाक्षात्कारिण्यप्रयोगात्तदभिधेयत्वं साक्षात्कारिणि साध्यते किं वा साक्षात्कारिण्येव प्रयोगादिति विकल्प्य प्रथममनुवदति * यदीति * मात्रग्रहणेनात्र प्रयोगनैरपेक्ष्यं दर्शयति । अतिप्रसङ्गपराहतत्वेनाप्रयोजकत्वमाह * तर्हीति * अन्यत्राप्रयोगाविशेषात्**

जबगड्डदशादिशब्दानां प्रत्यक्षशब्देन सहेत्यर्थः । सामान्यतो ऽर्थवत्तया प्रसिद्धत्वे सद्विषयत्वे च सत्यन्यत्राप्रयोगाच्छब्दाभिधेयत्वं साक्षात्कारिणि साध्यते नैवं जबगड्डदशादिशब्दा इत्यतिप्रसङ्गपरिहारं शङ्कते * अथेति * एवं विशेषणेऽतिप्रसङ्गपरिहारेऽपि नासिद्धिपरिहारः प्रत्यक्षशब्दस्याप्यनेवंरूपत्वादित्यत आह * प्रत्यक्षादीति * आदिग्रहणेनापरोक्षशब्दादयो गृह्यन्ते । अतिप्रसङ्गपराहतिस्तदवस्थेति दूषयति * नैवमिति * चाक्षुषादिशब्दानामुक्तविशेषणवत्त्वात्साक्षात्कारित्वप्रत्ययमात्रे प्रयोगः प्रसज्येत प्रत्यक्षशब्दवदतश्च श्रावणादिप्रतिपत्तीनामपि चाक्षुषादिशब्दवाच्यत्वं विरुद्धमापद्येतेत्यर्थः । तत्रैव प्रयोगात्प्रत्यक्षशब्दाभिधेयत्वं साक्षात्कारिणि साध्यत इति द्वितीयमाशङ्कते * साक्षादिति * अस्मिन्पक्षे लक्षणवैयर्थ्यं कथयितुमुपोद्घातं करोति * एवमिति * यदर्थमुपोद्घातितं तद्दर्शयति * सचे ति * वृद्धव्यवहारेऽन्वयव्यतिरेकाभ्यामेव घटादिशब्दसङ्गत्यधिगतिवत्प्रत्यक्षशब्दस्यापि तत एव सङ्गत्यधिगते र्लक्षणं व्यर्थमित्यर्थः ।

लक्षणेन विधिव्यवहारसाध्यपक्षोक्तदोषं निषेध्यव्यवहारसाध्यपक्षे ऽतिदिशति ।

४४४ दोषातिदेशः ।

एतेनानुमित्यादि व्यवच्छिन्नतया व्यवहर्त्तव्यमित्यप्युक्तानुमानसाध्यतयाऽभिधीयमानमपास्तं वेदितव्यम् ।

पूर्वप्रतिपन्नमेव वाच्यवाचकभावं लक्षणाभिधानेन स्मार्य्यत इति चेन्न। अवगतसमयस्य प्रत्यक्षशब्दादेव तत्स्मरणसम्भवात् व्यर्थता लक्षणाभिधानस्य स्यात्। अवगतशब्दार्थसम्बन्धः शब्दादेव स्मरन् यदि लक्षणेन स्मार्य्यते तदा लक्षणवाक्यगतपदकदम्बार्थस्मरणार्थमपि तल्लक्षणमभिधानीयमविशेषादेवं तल्लक्षणवाक्येऽपीत्यपर्य्यवसानं स्यात्।

* ऐतेनेति * अनुमित्यादि व्यवच्छिन्नतया व्यवहर्तव्या इति व्यवहारस्य किं विषयभेदो विशेष उत शब्दविशेषः इत्यादिविकल्पदोषेणेत्यर्थः। वाच्यवाचकसम्बन्धबोधो न लक्षणप्रयोजनं किं तु तत्स्मरणमतोऽन्वयव्यतिरेकाभ्यां तत्सिद्धावपि न लक्षणप्रणयनवैयर्थ्यमिति शङ्कते * पूर्वेति * शिष्य आचार्येण स्मार्यत इति शेषः। सम्बन्ध्यन्तरदर्शनसमुद्बुद्धसंस्कारादेव सम्बन्ध्यन्तरस्मृत्युत्पत्तेर्लक्षणं व्यर्थमेवेति परिहरति * नेति * समयः शब्दार्थसम्बन्धः। उक्तमर्थं विपक्षदण्डप्रदर्शनेन द्रढयति * अवगतेति * तदप्यस्तु ततः किमित्यत आह * एवमिति * अपर्यवसानमनवस्थेतियावत्।

कथायां प्रतिवादिना वादिनं प्रति लक्षणं प्रणीयते इत्येवं नेष्यते येनेयमुक्तदोषपरम्परा स्यादिति चोदयति।

४४५ शास्त्रस्य शिष्यार्थत्वे हेत्वादिकथनस्य वैयर्थ्यम्।

ननु प्रतिवादिनं प्रति लक्षणाभिधानं नार्थवत् ते-

न वाद्याप्तभावानङ्गीकारात्, किन्तु शिष्यार्थं लक्षणमुच्यते शास्त्रे, स हि शास्त्रस्य कर्त्तारमाप्तमेव मन्यते तस्मात् शिष्यं प्रत्याप्तवचनतयैव लक्षणवाक्यमर्थं प्रतिपादयिष्यति गुरुणा गीयमानम्, यस्त्वया साक्षात्कारिशब्दार्थः प्रतीतः स एवप्रत्यक्षशब्दार्थ इति । मैवम् । यदि वादिनं प्रति न शास्त्रं किन्तु शिष्यं प्रति तदा प्रतिज्ञामात्रादेवाप्तवचनात् शिष्यस्यार्थनिश्चयोत्पत्तेः हेत्वाद्यभिधानमनर्थकमापन्नं शास्त्रे ।

*** नन्विति * कुतो नार्थवदित्यत आह * तेनेति * आप्तवाक्यतयाऽनुमानतया वा लक्षणवाक्यस्य लक्षणप्रमापकत्वायोगादित्यर्थः । कस्य तर्हि लक्षणतो बोधनमित्यत आह * किं त्विति * शिष्यार्थं लक्षणप्रणयनमित्यस्मिन् पक्षे को लाभ इत्यत आह * स हीति * तच्च लक्षणवाक्यमनुमानत्वेनाबोधकमपि आप्तवाक्यतया बोधकमित्याह * तस्मादिति * आप्तोपदेशतया लक्षणवाक्यस्य बोधकत्वप्रकारमुदाहरति * यस्त्वयेति * हेतुदृष्टान्तादिकथनानुपपत्त्या वादिनं प्रति शास्त्रप्रणयनं न शिष्यं प्रतीति परिहरन्ति * मैवमिति ***

**हेत्वाद्यभिधानलक्षणप्रणयनयोरर्थवत्त्वमापादयितुं शास्त्रे द्वैराश्यमाशङ्कते ।**

**४४६ शास्त्रद्वैराश्यशङ्का तत्परिहारश्च ।**

अथ भवतु तत्प्रतिवादिनमपि प्रति शास्त्रे वाक्यं

यत्र हेत्वाद्युपात्तं, लक्षणवाक्यन्तु शिष्यमेव प्रति प्रयोजकं प्रतिपन्नशास्त्रकारासभावमिति मन्यसे । तदप्यनुपपन्नम् । शास्त्रान्तरसाध्यत्वादस्यार्थस्य । अस्ति समग्रग्राहकं शास्त्रं मुनिभिः प्रणीतं नामलिङ्गानुशासनव्याकरणादि । यदि च शास्त्रान्तरसाध्योऽप्यर्थो भवदीयशास्त्रस्य विषय स्तर्हिप्रकृतिप्रत्ययविभागेन साधनमपि शब्दानां कुतो न व्युत्पाद्यते लिङ्गं वा शब्दानां कुतो नाभिधीयते तदज्ञानेऽपि पराजयो जायत एव । अथ वाऽस्तु व्याकरणादिविषयं विहाय नामव्युत्पादनं कथमपि भवच्छास्त्रस्य विषयः । तथापि न्यूनतरत्वमस्मिन् विषये भवदीयशास्त्रस्य । बहूनि नामानि विद्यन्ते कोषान्तरवर्त्तीनि कुतो न व्युत्पादितानि तानीति । अथास्मिन् शास्त्रे येषां शब्दानामुपयोग स्तेषामनेन व्युत्पादनं न सर्वेषामित्युच्यते । तथापि यथैकवाक्यगतस्य पदस्य लक्षणव्युत्पादनमेवं तल्लक्षणवाक्यगतपदस्यापीत्यपर्य्यवसानमापतितं शास्त्रस्य, तत्तल्लक्षणवाक्यप्रयोग एव तेषां तेषां पदानां शास्त्रे जातोपयोगत्वात् । अथ नानालक्षणप्रणेतॄणां वादिनां विप्रतिपत्तेः प्रत्यक्षादिशब्दार्थ एव व्युत्पाद्यते संशयनिरासाय नान्योऽसंशयत्वादिति मन्यसे, तथाप्यनुपपत्तिः । अस्ति हि वादीनामर्थे वाच्य-

देनोच्यत इति वैयाकरणास्तदपरे न क्षमन्ते कर्तृत्वकर्मत्वयोरेकत्रविराधादिति। आदिपदेन भिदुरो विदुर इत्यादि गृह्यते। तथा भावशब्दः सच्छब्दसमानार्थः तदर्थेऽपि विप्रतिपत्तिः स्वरूपसत्त्वं भाव इति। अपरस्तु सत्तासामान्यमिति। प्रमाणसम्बन्धस्तद्योग्यत्वं वेति कश्चित्। अर्थक्रियाकारित्वमित्यपरः। अधिकरणे सप्तमी विहिता तदर्थेऽपि विप्रतिपत्तिः। समवायित्वमाश्रयत्वमिति कश्चित्। अपरस्तु पतनप्रतिबन्धकत्वमिति। अन्यस्तु संयोगित्वमिति। प्रकृतप्रमेयमुपसंहरति * तदिति *

साक्षात्कारित्वमुपेत्य लक्षणमदूषि सम्प्रति तदपि न निरूपणगोचर इत्याह।

४४७ साक्षात्कारित्वानिरुक्तिः।

किञ्च तत्साक्षात्कारित्वम्?। सविशेषार्थप्रकाशत्वमिति चेन्न। सविशेषत्वस्योपलक्षणत्वेऽनुमानादिव्याप्तिः। विशेषणत्वे च यदि विशेषशृङ्खलाया विश्रान्ति स्तदाशेषविशेषस्य बोधे प्रत्यक्षलक्षणक्षीणत्वेनाऽऽमूलमप्रत्यक्षतापातः। यद्यविश्रान्तिस्तदा तादृशस्यैव व्याप्तिग्रहादनुमायामपि तादृशसिद्धेरिति साक्षात्कारित्वापत्तिः।

* किं चेति * साक्षात्कारित्वं च किमिति विकल्पाभिप्रायः। विकल्पास्तु तत्र तत्र शङ्काग्रन्थ एव व्यक्तीभविष्यन्ति तेषां बहुत्वान्नात्र प्रदर्श्यन्ते। इदं

१ प्रकाशकत्वमिति सो० पु० पा०।

साक्षात्कारित्वमित्येकं कल्पमुपादत्ते * सेति * अर्थप्रकाशत्वमित्युक्तेऽनुमानातिव्याप्तिस्तन्निवारणाय सविशेषविशेषणम् । विशेषसहितः सविशेषस्तत्र विशेष उपलक्षणमर्थस्य विशेषणं वा, आद्येऽतिव्याप्तिरित्याह * नेति * अनुमानादौ सामान्यस्यैव स्फुरणेऽपि सविशेषत्वस्य वस्तुगत्या सत्वात्तदुपलक्षितत्वादित्यर्थः । सविशेषत्वं विशेषणामिति पक्षेऽपि विशेषस्य सविशेषत्वमस्ति किं न वा, न चेद्विशेषज्ञानमप्रत्यक्षं स्यादस्ति चेद्विशेषशृङ्खला क्वचिद्विश्राम्यति न वा यद्याद्यस्तत्राह * विशेषणत्व इति * यस्मिन्विशेषे विशेषो नास्ति स विशेषोऽप्रत्यक्षः स्यादतश्च तद्विशिष्टपूर्वविशेषोऽपि प्रत्यक्षो न स्यादप्रत्यक्षविशेषणस्य विशिष्टस्य प्रत्यक्षत्वायोगादतो मूलपर्यन्तमप्रत्यक्षतापातादसम्भवो लक्षणस्येत्यर्थः । विशेषमालाया अपर्यवसानपक्षमाशङ्कते * यदीति * अनवस्थायाः स्पष्टत्वात्तद्दोषमुपेक्ष्यातिव्याप्तिमाह * तदेति * प्रत्यक्षेण व्याप्यं व्यापकं च गृहीत्वा यदा तयोर्व्याप्तिर्गृह्यते तदा व्यापकस्यानन्तविशेषसहितस्यैव स्फुरणात्तेनैव रूपेणानुमानेनापि विषयीकरणादनुमानेऽतिव्याप्तिरित्यर्थः ।

सविशेषार्थप्रकाशत्वमिति साक्षात्कारित्वलक्षणस्यानुमितावुक्तातिव्याप्तिपरिहारं शङ्कते ।

४४८ अतिव्याप्तिपरिहाराशङ्का तन्निराकरणं च ।

अथाननुगमात्तत्र न तदनुमा, तर्हि तदनुगतप्रती-

त्याद्यनुपपत्तिः व्यक्तेरनुमानादसिद्ध्यापत्तिश्च । यथा हि व्यक्तिं विना सामान्यस्य, तथा तावत् तं विशेषं विना व्यक्तेरप्यनुपपत्त्यविशेषात् । यदि च प्रतीत्यपर्य्यवसानाभावात्पक्षधर्मतया नानन्तविशेषसिद्धिरिति मन्यसे तदा प्रतीतापर्य्यवसानात्तद्बुद्धिः साक्षात्प्रकाशः स्यात् ।

* अथेति * विशेषाणामननुगतत्वात्तेषामनुमितौ नास्ति प्रकाश इति नातिव्याप्तिरित्याशयः। विशेषवतो दृष्टान्तदृष्टस्याप्यननुगमादप्रकाशश्चेदग्निमानयमिति व्यापकविशेषानुगतलक्ष्यप्रतीतिरग्न्यर्थिनस्तत्र व्यवहारश्च न स्यादिति परिहरति * तर्हीति * दोषान्तरमाह * व्यक्तेरिति * यस्मिन् ज्ञाने यो न प्रकाशते तेन तत्सिद्धेरयोगादनुमाने सामान्यमेव सिध्यतीति वाच्यमेवं च "सामान्ये सिद्धसाध्यते"ति चार्वाककथितदोषापरिहारादनुमानोच्छित्तिरित्यर्थः । अनुमानात्सिध्यत् सामान्यमेव विशेषमाक्षिपदेव सिध्यति विशेषमन्तरेण सामान्यापर्यवसानादित्याशङ्क्याह * यथा हीति * सामान्यानुपपत्त्या विशेषप्रतीतिश्चेत्तर्ह्यनन्तविशेषं विना व्यक्तेरप्यनुपपत्तावविशेषादनन्तविशेषवत्या एव व्यक्तेः प्रकाशः स्वीकार्य इत्युक्तातिव्याप्तितादवस्थ्यमित्यर्थः । अविशेषादित्युक्तहेतोरसिद्धिं शङ्कते * यदीति * प्रतीतसामान्यस्य विशेषमन्तरेण प्रतीत्यपर्यवसानवत्प्रतीयमानव्यक्तेरनन्तविशेषमन्तरेण प्रतीत्यपर्यवसानाभावात्प-

क्षधर्मतया नानन्तविशेषसिद्धिरित्यर्थः । व्यक्तिप्रतीत्यपर्यवसानाभावेऽपि प्रतीतव्यक्तेरनन्तविशेषानुपपत्तेरनन्तविशेषप्रकाशसम्भवादनुमितिः साक्षात्स्यादित्याह * तदेति *

विशेषाविश्रान्तिपक्षेऽतिव्याप्तिमुक्त्वाऽसम्भवं दर्शयितुं दोषान्तरमाह ।

४४९. असम्भवदानाय दोषप्रदर्शनम् ।

अप्रतिपद्यमानानन्तविशेषप्रकाशकल्पनाच्चैकाकिसाक्षात्त्वनामकविशेषकल्पनैवाल्पत्वात् श्रेयसितरा । साक्षात्त्वव्यवहारान्यथानुपपत्तेः कल्पनाबीजस्य तावताऽपि चरितार्थत्वादिति कृत्वा तत् कल्पनाऽपिनात एव, । विस्तरश्चात्र वक्ष्यते ।

* अप्रतिपद्येति * घटोऽयमिति ज्ञानस्य प्रत्यक्षत्वसिद्धयेऽनन्ता विशेषाः कल्पनीया उत साक्षात्त्वं नामैकाकिविशेषः कल्पनीय इति विचारे एकाकिनः साक्षात्त्वधर्मस्य कल्पनैव श्रेयसितराऽतिशयेन श्रेयसी लाघवादित्यर्थः । अनन्तविशेषकल्पनागौरवं दोषं नावक्ष्यति साक्षात्त्वव्यवहारानुपपत्तिसिद्धत्वात्

"प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपी"ति

न्यायादित्याशङ्क्याह * साक्षात्त्वेति * तावताऽपीति * एकाकिसाक्षात्त्वधर्मेणापि उपपन्नत्वादिति कृत्वेत्यर्थः । अस्तु तर्हि साक्षात्त्वनामैकाकिधर्मस्यैव कल्पना तावताऽपि प्रत्यक्षलक्षणं निर्व्यूढमित्यत आह * तदि-

नि * अत एव तत्कल्पनाबीजस्य साक्षात्त्वव्यवहारानुपपत्तेरनिर्वचनीयसाक्षात्त्वेनापि चरितार्थत्वादन्यस्य प्रमाणस्याभावादेवेत्यर्थः । साक्षात्त्वं ज्ञानधर्मः संयुक्तसमवेतसमवायान्मनसाऽध्यवसीयत इत्यत आह * विस्तरश्चेति * परमाणुबुद्धावनुव्यवसीयमानायां साक्षात्त्वासाक्षात्त्वसाङ्कर्याद्युपपादनेन साक्षात्त्वस्य मानसवेद्यत्वे दोषविस्तरो वक्ष्यत इत्यर्थः ।

सविशेषार्थप्रकाशत्वमिति लक्षणस्यातिव्याप्तिमभिधायेदानीमव्याप्तिं वक्तुमुपोद्घातप्रक्रियया विशेषशब्दार्थमुपस्थापयति ।

४५० विशेषशब्दार्थे दोषप्रदर्शनम् ।

विशेषश्च यदि व्यवच्छेदस्तदा निर्विकल्पकाव्याप्तिः । यदि च विश्वव्यावृत्तस्वरूपप्रकाशात् सोऽपि तथा, तदा दूरे सामान्यप्रत्यक्षस्याप्रत्यक्षत्वापातः तत्र जगद्वैलक्षण्यप्रकाशे संशयाद्यनुपपत्तेः । यदि तत्रापि प्रतिपत्त्रादिव्यवच्छेदमात्रप्रकाशाद्विशेषप्रकाशत्वमेव तदाऽनुमित्यादिव्याप्तिः ।

* विशेषश्चेति * व्यवच्छेदो भेदः भिन्नस्यार्थस्य प्रकाशः साक्षादित्युक्तं भवतीति प्रतिवाद्यव्याप्तिमाह * तदेति * निर्विकल्पज्ञानस्य वस्तुमात्रग्राहकस्य भेदविषयत्वाभावात्साक्षात्त्वं न स्यादित्यर्थः । निर्विकल्पकेऽपि स्वेतरस्मात्सर्वस्माद्व्यावृत्तमेव वस्तुस्वरूपं प्रकाशते वस्तुवृत्त्या विश्वव्यावृत्तेस्तत्र भावादतो ना-

व्याप्तिरिति शङ्कते * यदीति * एवं तर्ह्यनुमानादेरपि साक्षात्त्वापात इत्यरुच्याङ्गीकृत्यापि स्थलान्तरमाह * तदेति * दूरे विप्रकृष्टदेश ऊर्द्धत्वादिसामान्यज्ञानं प्रत्यक्षं न स्याद्विशेषव्यावृत्तग्राहकत्वाभावादित्यर्थः। तस्यापि व्यावृत्तविषयत्वे दण्डमाह * तत्रेति * स्थाणुर्वा पुरुषोवेति संशयः पुरुष एवेति भ्रमश्च न स्यात्तयोर्भेदाग्रहपूर्वकत्वादित्यर्थः। दूरे सामान्यज्ञानं विविश्वव्यावृत्तिं न गृह्णाति तेन संशयाद्युपपत्तिः प्रमाणादिव्यावृत्तिं गृह्णाति तेन सविशेषार्थप्रकाशत्वमपीति शङ्कते * यदीति * अनुमित्यादावप्येवंरूपव्यावृत्तिप्रकाशादतिव्याप्तिरित्याह * तदेति *

विधान्तरेण साक्षात्त्वलक्षणमुपस्थापयति।

४५१ प्रकारान्तरेण प्रत्यक्षलक्षणखण्डनम्।

अथ इन्द्रियकरणकानुभूतित्वम्। तन्न। साक्षात्कारिधीकरणस्यैवेन्द्रियत्वेनान्योन्याश्रयत्वापत्तिरिति केचित्। तन्न। अज्ञातप्रमाकरणत्वस्य भात्वविशेषितस्येन्द्रियत्वनिरुक्तेः सम्भवात्। विना कार्य्यगतविशेषसिद्धिं किं प्रति कारणत्वमेव ज्ञेयमिति तु बाधः साधीयान्।

* अथेति * इन्द्रियं करणं यस्यानुभवस्य स तथोक्तस्तथात्वं साक्षात्त्वमिति शेषः। अनुभवत्वग्रहणं स्मृतिव्यवच्छेदाय। अनुमित्यादिव्यवच्छेदार्थमिन्द्रियग्रहणम्। प्रदर्शितलक्षणे सिद्धान्तैकदेशिनां दोषमुद्भाव्य स एव लक्षणवादी पराचष्टे * तत्रेति * तत्र लक्षणे ऽन्योन्याश्रयापत्तिरिति केचिदिति सम्बन्धः।

कुत इत्यत आह * साक्षादिति * इन्द्रियस्य लक्षणविशेषणत्वात्तदधिगम्यैव विशिष्टं लक्षणमधिगन्तव्यमिन्द्रियं च साक्षाद्धीसाधनत्वेनाधिगम्यते शरीरसंयुक्तमतीन्द्रियं साक्षात्प्रतीतिसाधनमिन्द्रियमिति लक्षणाङ्गीकारादेवं च साक्षाद्धीसिद्धाविन्द्रियसिद्धिस्तत्सिद्धौ साक्षाद्धीसिद्धिरिति परस्पराश्रय इत्याशयः। साक्षाद्धीज्ञानव्यतिरेकेणैवेन्द्रियज्ञानान्नान्योन्याश्रय इति परिहरति * तन्नेति * हेतुमाह * अज्ञातेति * भावत्वविशेषितस्याज्ञातप्रमाकरणत्वस्येन्द्रियत्वनिरुक्तेः सम्भवात्। एतदुक्तं भवति। भावत्वेऽज्ञातत्वे च सति प्रमाकरणमिन्द्रियमनुपलब्धिव्यवच्छेदाय भावत्वविशेषणं लिङ्गादिव्यवच्छेदार्थमज्ञातत्वग्रहणम्। तदेतल्लक्षणं खण्डयति * विनेति * प्रमाया अपि कार्यभूताया लक्षणविशेषणत्वात्सा तावदन्यतो ज्ञेया तथा च तदेव लक्षणमस्तु अन्यतस्तदज्ञाने विशिष्टलक्षणासिद्धिर्विशेषणासिद्ध्यधीनत्वाद्विशिष्टसिद्धेरित्यर्थः।

उक्तन्यायं भाट्टनयेऽप्यतिदिशति।

४५२ उक्तदूषणस्य भाट्टमतेऽप्यतिदेशः।

एतेन ज्ञातता काचिद्विलक्षणा तज्जनकत्वं ज्ञानस्य साक्षात्त्वमिति निरस्तम्। ऐकरूप्याव्यवस्थितौ कारणत्वानवधारणात्। नच ज्ञाततावैलक्षण्यान्यथानुपपत्तेरेव तत्सिद्धिः कारणान्तरवैलक्षण्यादेव तदुपपत्तेः।

* एतेनेति * अनुमेयादिनिष्ठा का चित् ज्ञात-

ता परोक्षव्यवहारजननी ततो विलक्षणा ज्ञातता प्रत्यक्षव्यवहारप्रसवित्री तज्जनकत्वमपरोक्षत्वमित्येतदपि निरस्तमिति यावत् । एतेनेति परामृष्टं हेतुं स्पष्टयति *एकेति* जनकत्वस्य कार्यप्रतियोगिकत्वात्कार्यगतमैकरूप्यमविज्ञाय जनकत्वमेव न विज्ञातुं शक्यमित्यर्थः । अनुमेयादिनिष्ठज्ञातततो घटादिनिष्ठज्ञातता विलक्षणाऽनुभूयते तच्च वैलक्षण्यं स्वजनकज्ञानगतवैलक्षण्यमन्तरेणानुपपद्यमानं ज्ञानगतापरोक्षत्वं कल्पयतीत्यत आह * नचेति * कुत इत्यत आह * कारणेति * इन्द्रियलिङ्गादिकारणवैलक्षण्यादपि तदुपपत्तेरन्यथोपपत्तेरित्यर्थः ।

कर्मकारकजन्यज्ञानत्वमपरोक्षत्वमिति लक्षणान्तरमाशङ्क्य दूषयति ।

१५३ प्रत्यक्षलक्षणान्तरखण्डनम् ।

नापि मेयजनितत्वमतिप्रसङ्गात् । स्वमेयजत्वे च स्वार्थव्यावृत्त्याऽननुगमात् । पूर्वदोषानिवृत्तेश्च ।

* नापीति * मेयजनितत्वमात्रं लक्षणमुत स्वमेयजनितत्वमाद्ये घटज्ञानस्य पटेऽपरोक्षत्वप्रसङ्ग इत्याह * अतीति * द्वितीये स्वार्थव्यावृत्त्या लक्षणव्यावृत्तिरित्याह * स्वेति * मेयजन्यत्वं नाम लक्षणमसिद्धं तावन्न लक्ष्यसाधकमतिप्रसङ्गात्सिद्धमपि न स्वतो जडत्वादन्यतः सिद्धं चेत्तदेव लक्षणमास्तां अव्यवहितप्रतीतिकत्वादित्याह * पूर्वेति *

ज्ञातत्वे सति विषयप्रमित्सोत्पत्तिनिवारकं साक्षात्कारीति लक्षणान्तरमाशङ्कते ।

४५४ प्रमित्सागर्भलक्षणान्तरखण्डनम् ।

अथ येन प्रमिते सति न प्रमित्सा पुनर्भवति तज्ज्ञानं साक्षात्कारीति । तन्न । प्रत्यक्षावगतेऽपीष्टे तनयादौ प्रमित्सादर्शनात् । अथ यदनन्तरं न विजातीयप्रमित्सा तद्भावस्तथात्वम् । तन्न । तत्साजात्यानवगतौ तद्विजातीयानवगतेः अरिसम्पद्यनुमादिविषयायां प्रत्यक्षयितुमनिष्टेश्च । प्रत्यक्षावगतेऽपि दहने रक्ताशोकस्तबकसन्देहे धूमदर्शनेन वह्नेरनुमीयमानत्वादित्यप्येके ।

* अथेति * प्रमातुमिच्छा प्रमित्सा सा न जायते येन ज्ञानेन प्रमितेऽर्थे[1] तदपरोक्षं तत्र प्रमित्साऽदर्शनादित्यर्थः । येन ज्ञानेन प्रमित्सा न जायते तदपरोक्षमुत विजातीयप्रमाणेन, प्रथमेऽव्याप्तिरिष्टपुत्रादौ दृष्टेऽपि पुनर्दिदृक्षादर्शनादिति परिहरति * नेति* द्वितीयकल्पमुत्थापयति * अथेति * तद्भावस्तथाविधज्ञानत्वं तथात्वमपरोक्षत्वमिति यावत् । असम्भवेनैतद्दूषयति *तन्नेति* समानजात्याऽऽलिङ्गितं सजातीयं तेन विरुद्धजात्याऽऽलिङ्गितं विजातीयमेवं च प्रतियोगिभूतसाजात्यावगमेन तन्निरूप्यविजातीयस्य लक्षणविशेषणस्यासिद्धिरतो लक्षणात्साजात्यावगतौ परस्पराश्रयोऽन्यतोऽवगतौ तदेव लक्षणमस्तु मुधेतरच्चिन्तेत्यर्थः । एवमव्याप्तिमुक्त्वाऽतिव्याप्तिमाह * अरीति * शत्रोः सम्पदि लिङ्गाद्यवगतायां पुनरपरो-

१ प्रमितेऽर्थे तदपरोक्षतया प्रमित्सादर्शनादित्यर्थः इति पाठः सो०पु०

चयितुं इच्छैव न जायते शत्रुसम्पदोऽनिष्टत्वान्न च तत्प्रत्यक्षमित्यतिव्याप्तिरित्यर्थः । विषयायामिति स्त्रीलिङ्गप्रयोगोऽनुपपन्नो नियतपुंल्लिङ्गत्वाद्विषयशब्दस्येति चेन्न । विषयशब्दस्य भावपरत्वाद्विषयतायामिति विवक्षितत्वात् "द्व्येकयोर्द्विवचनैकवचने" इति प्रयोगात् यथा द्वित्वैकत्वयोरिति विवक्षितं इति । एवं स्वयं लक्षणमपास्य तत्त्वोपप्लवकारोक्तदूषणं प्रदर्शयति * प्रत्यक्षेति * दूरदेशे प्रत्यक्षदृष्टेऽपि वन्हौ सादृश्यदूरत्वादिदोषेण रक्ताशोकस्तबकोऽयमुत वन्हिरिति सन्देहे जाते तदाश्रितधूमदर्शनेन वन्हिरनुमातुमिष्यतेऽतो यदनन्तरं न विजातीयप्रमित्सेति लक्षणाभावादव्याप्तिरित्याशयः ।

विधान्तरेण साक्षात्त्वलक्षणमित्याशङ्कते ।

४५५ प्रकारान्तरेणप्रत्यक्षलक्षणखण्डनम् ।

अज्ञायमानासाधारणकारणकानुभवत्वं कारणविशेषणीकृतभावत्वं वा साक्षात्कारित्वमिति चेन्न । दीर्घादिप्रत्यक्षाव्यापनात् तत्रावधिप्रभृतेः प्रतीयमानस्यापेक्षणात् । नावधिस्तत्र ज्ञायमानस्तथा, अवधिज्ञानं तु स्यात् अतीतादावप्यवधौ तथाप्रत्ययादिति चेत् तुल्यं लिङ्गे धूमादावपि, धूमदर्शनात्तत्राग्निरासीदिति पश्चादप्यनुमानात् । ज्ञानविशेषणतया तु ज्ञेयहेतुता तुल्यैवेति ।

*अज्ञायमानेति* अज्ञायमानमसाधारणं कारणं यस्यानुभवस्य स तथोक्तस्तथात्वं साक्षात्त्वम् । अज्ञायमानसंस्का-

रासाधारणकारणकस्मृतिव्यवच्छेदायानुभवग्रहणम्। अनुमादिव्यवच्छेदायासाधारणग्रहणम्। मनःसंयोगस्य साधारणकारणस्य सर्वत्राज्ञायमानत्वादभावप्रमाणवादिमतेऽभावज्ञानस्यापि कथितलक्षणमस्त्यनुपलब्धेरज्ञायमानाया एव करणत्वात्तद्व्यावृत्त्यर्थमाह * कारणेति * कारणेन विशेषणीकृतं भावत्वं यस्य तत्तथोक्तं अज्ञायमानासाधारणभावकारणकानुभवत्वमिति यावत्। वाशब्दः पक्षभेदेन विकल्पार्थः। अज्ञायमानसमस्तासाधारणकारणत्वं विवक्षितमुत यत्किञ्चिदज्ञायमानासाधारणकारणत्वं किं स्विदज्ञायमानकरणकत्वमिति त्रिधा विकल्प्य प्रथमकल्पेऽव्याप्तिमाह * नेति * इदमस्माद्दीर्घमिदं ह्रस्वमिदमनेन सदृशमित्यादिप्रत्यक्षप्रत्ययानां ज्ञायमानप्रतियोगिधर्म्याद्यसाधारणकारणत्वादव्याप्तेरित्यर्थः। उक्तं हेतुं कथया प्रपञ्चयति * तत्रेति * अव्याप्तिपरिहारमाशङ्कते * नावधिरिति * अतीतमनागतं वा दीर्घमपेक्ष्य ह्रस्वमिति ज्ञानं जायते प्रतियोगिनोऽसतः कारणत्वायोगात्तज्ज्ञानमेव कारणं तच्च न ज्ञायमानमनवस्थानाद्व्यतिरेकाभावाच्चातो नाव्याप्तिरित्यर्थः। तथा कारणमिति यावत्। अव्याप्तिपरिहारमूरीकृत्यानुमानेऽतिव्याप्त्या दूषयति * तुल्यमिति * धूमादौ लिङ्गेऽप्यज्ञायमानतज्ज्ञानस्यैव कारणत्वं तुल्यमित्यर्थः। कुत इत्यत आह * धूमेति * धूमं दृष्टवानिति धूमदृश्वा तेन इति यावत्। गिरिशिखरविपरिवर्तिधूमं प्रातर्दृष्टवतः सायान्हे केनापि निमि-

त्तेन तद्धूमस्मृतिमतस्तत्र प्रातरग्निरासीदित्यनुमाना-दसतो धूमस्य कारणत्वायोगात्तज्ज्ञानं हेतुरित्याशयः । लिङ्गज्ञानस्य हेतुत्वे ज्ञानविशेषणतया धूमादिलिङ्ग-मपि हेतुरिति नातिव्याप्तिरित्यत आह * ज्ञानेति * ज्ञेयभेदानवच्छिन्नज्ञानस्य ह्रस्वादिप्रत्यक्षकारणत्वेऽति-प्रसङ्गात् ज्ञेयभेदावच्छिन्नस्य तथात्वे प्रतियोग्यादेरपि कारणत्वं तुल्यमित्यव्याप्तिरुपलक्षणत्वं लिङ्गेऽपि तु-ल्यमित्यर्थः ।

अज्ञायमानयत्किञ्चिदसाधारणकारणत्वमनुमाना-दावप्यस्ति प्रातिस्विकादृष्टादेस्तथात्वादिति द्वितीयम-भिप्रायबलादेव परामृश्य तृतीयं कल्पमनुभाषते ।

४५६ तृतीयकल्पनिराकरणम् ।

असाधारणकारणगिरा करणमभिमतमिति चेन्न। अ-नुमितभाविलिङ्गकभाविलिङ्ग्यनुमितावसतो लिङ्गस्य क-रणत्वासम्भवेन ज्ञायमानकरणकत्वाभावात् ।

* असाधारणेति * अज्ञायमानासाधारणकारण-कानुभवत्वं साक्षात्त्वं न चैवमव्याप्तिः प्रतियोग्या-देरकरणत्वादित्यर्थः । अतिव्याप्त्यन्तरेण परिहरति * नेति * अनुमितं भावि लिङ्गं यस्य भाविलिङ्गिन-स्तदनुमितभाविलिङ्गकभाविलिङ्गि तस्यानुमितौ यदा पुरोवातादिलिङ्गे विशिष्टमेघोदयमनुमाय तेन भ-विष्यति वृष्टिरित्यनुमीयते तदा ऽसतो मेघोदय-स्याकारणत्वात्तज्ज्ञानमज्ञायमानं करणमित्यतिव्याप्ति-रित्यर्थः ।

उक्तातिव्याप्तिपरिहाराय प्राभाकरः प्रत्यवतिष्ठते।

४५७ प्राभाकरनिरासः।

लिङ्गज्ञानं तावत्करणं तच्च स्वप्रकाशवादिनो मम ज्ञायमानमेव तत्रेति चेन्न। तस्यापि ज्ञायमानतया करणकोटिप्रवेशे प्रमाणाभावात् उक्तप्रत्ययानां तथात्वाभावात्। अन्यथासिद्धस्यापि ज्ञायमानत्वस्यावर्ज्जने चक्षुराद्यनुमित्यनन्तरं दैवोपजातघटादिप्रत्यक्षाव्यापनात्।

* लिङ्गेति * तावदिति निर्द्धारणे। ज्ञानस्य स्वसत्तायां प्रकाशाव्यतिरेकित्वादज्ञायमानतया नातिव्याप्तिरित्यर्थः। लिङ्गज्ञानं स्वरूपेणैव करणमुत ज्ञायमानतयेति विशये ज्ञायमानतयेति न विकल्पनीयं केवलव्यतिरेक्यादिप्रमाणाभावादिति परिहरति * नेति * अस्ति प्रमाणमुदाहृतप्रत्यया एवेत्यत आह * उक्तेति * अनुमितभाविलिङ्गप्रत्यया उक्तप्रत्ययास्तेषां तथात्वाभावाल्लिङ्गप्रत्ययस्य ज्ञायमानतया कारणकोटौ प्रवेशे प्रमाणत्वाभावाद्भविष्यद्वृष्टिसत्तायां प्रमाणत्वेनैकस्य द्विकरणत्वायोगादित्यर्थः। ज्ञायमानत्वमव्यतिरेक्यप्यन्वयित्वान्न हातुं शक्नुम इत्यत आह * अन्यथेति * ज्ञानस्य ज्ञायमानत्वं ज्ञानत्वादेव न पुनः करणत्वादित्यन्यथासिद्धस्य ज्ञायमानत्वस्यावर्जने। अवर्जनमिति पदच्छेदः। रूपोपलब्धिः करणजन्या कार्यत्वात् कुम्भवदित्यादिलिङ्गेन यदा चक्षुराद्यनुमीयते तदैव घटादिगोचरं प्रत्यक्षं प्रमाणवस्तुसा-

मर्थादुद्‌पादि तन्न व्याप्नुयादनुमितज्ञानवच्चक्षुरादि-जन्यत्वात्तस्येत्यर्थः।

अनुमानं नियमेन ज्ञानकरणजन्यं ज्ञातस्यैव धूमादेः करणत्वान्न तथा प्रत्यक्षं क्वचित् ज्ञानस्य चक्षुषस्तज्जनकत्वेऽपि सर्वत्र तथात्वाभावादतो नियमेनाज्ञायमानकरणानुभवत्वं साक्षात्त्वमित्युक्ते नाव्याप्तिरिति शङ्कते।

४५८ नियमविशेषणेन दोषपरिहाराशङ्का तन्निवारणञ्च।

नियमेनेति चेन्न। विधौ वैयर्थ्यात्। नियमेन निषेधस्य विशेषणे दैवात्वगनेन्द्रियज्ञानानन्तरजप्रत्यक्षसम्भवादसिद्धिः। विधौकरणत्वप्रविष्ट एवायं नियमो निरुच्यत इतिचेन्न। तथाऽपि वैयर्थ्यादेव। अन्यथाऽतिप्रसक्तेरवैयर्थ्यमिति चेन्न। तथाऽप्यतिप्रसक्तेरेव। नहि रसादिसाक्षात्कारे रूपादिर्हेतुः। अन्यथासिद्धेर्नेति चेन्न। तुल्यत्वादनुमानेऽपि। किं च यत्र निषेधस्तद्गतमैकरूप्यं निरूप्यमन्यथा किमादाय नियमो निरूप्येनेति कार्यगतैकरूप्यमनभिधाय न निस्तारः। विनाऽपि च नियमपदप्रवेशं कार्यगतैकरूप्यमनिरूप्याऽनिस्तार एव। ज्ञायमानं नात्र करणमिति हि यदि कार्यव्यक्तिमभिसन्धाय तदा तत्पूर्वं प्रतीतानां तत्राकारणत्वं दुरवधारणं ततस्तज्जातीये तज्जातीयव्यभिचारप्रतिसन्धानेऽवश्ययतनीयमिति। अथाऽव्यवहितार्थप्रमात्वं तथा, तर्हि कि

मपेक्ष्याव्यवधानम् । किञ्च तदिति वाच्यम् । इन्द्रिय-मपेक्ष्य तत् असन्निकर्षश्च तदिति चेत् । तर्हीन्द्रियसन्निकृष्टप्रकाशत्वमिति कुटिलिकार्थः स चानुपपन्नः स्वविलोचनगोलकानुमानव्याप्तेः ।

* नियमेनेति चेदिति * नियमेनाज्ञातं करणं यस्येति विधेर्नियमो विशेषणमुत ज्ञातं करणं नियमेन नेति निषेधस्य विशेषणमिति विकल्प्याद्यं दूषयति * नेति * नियतप्राग्भाविनः कारणत्वात्कारणपदेनार्थान्नियमसिद्धेर्नियमविशेषणवैयर्थ्यमिति यावत् । द्वितीयमपवदति * नियमेनेति * निषेधस्य विशेषणे व्यावर्त्तक इत्यनेन ज्ञायमानजातीयं करणं न भवति यस्येतिहि तदा लक्षणार्थः स्यादेवं च रूपज्ञानानुमितचक्षुर्जन्यप्रत्यक्षसम्भवेऽप्यसम्भव इत्यर्थः । नियमो न निषेधविशेषणं किं त्वज्ञानकरणजन्यत्वविधेर्नचैवं वैयर्थ्यं करणपदलभ्यनियमस्पष्टीकरणार्थत्वादिति शङ्कते *विधाविति* सम्भवव्यभिचाराभ्यां विशेषणसाफल्यादिह चाव्यभिचारात् स्पष्टीकरणस्य विशेषणप्रयोजनतानङ्गीकाराद्व्यर्थविशेषणतेति परिहरति * नेति * अस्तु तर्हि व्यभिचारनिवारणं विशेषणप्रयोजनमिति शङ्कते *अन्यथेति* अज्ञातकरणजन्यत्वविधेर्नियमविशेषणानुपादानेऽतिव्याप्तिर्भाविलिङ्गस्याज्ञातस्यानुमितिकरणत्वादित्यर्थः । क चित् ज्ञायमानं लिङ्गं करणं क चिदज्ञायमानं तज्ज्ञानमिति कल्पनानुपपत्तेः सर्वत्राज्ञायमानं

ज्ञानमेवानुमितिकरणमित्यतिव्याप्तिरिति परिहरति * नेति * वर्त्तमानस्थले ज्ञायमानलिङ्गमेव करणमन्वयव्यतिरेकाभ्यामित्याशङ्क्यातिप्रसङ्गं व्यतिरेकमुखेनाह * न हीति * रसादीत्यत्र गन्धो गृह्यते रूपादीत्यत्र स्पर्शः। अतिप्रसङ्गपरिहारं शङ्कते * अन्यथेति * रूपादौ सति रसादिसाक्षात्कारो नासतीत्यन्वयव्यतिरेकौ रूपादेरसादिव्यापकत्वान्न तु तत्र साक्षात्कारणत्वादित्यर्थः। लिङ्गस्यापि ज्ञानकर्मतयाऽन्वयव्यतिरेकौ नानुमितिकरणतयेति तुल्यमुत्तरमित्याह * नेति * नियमो विधिविशेषणमिति कल्पं दूषयित्वा प्रतिषेधविशेषणमिति पक्षे दोषान्तरमाह * किं चेति * ज्ञायमानकरणकत्वं यस्मिन्ननुभवे नास्तीति निषिध्यते तद्गतमैकजात्यं निषेधाधिकरणतया प्रत्येतव्यं निषेधज्ञानस्याऽधिकरणज्ञानजत्वादिति यावत्। विपक्षदण्डदर्शनेनैतद्दृढीकरोति *अन्यथेति* व्यक्तिर्न निषेधधार्मिण्यव्यापकत्वादत एकोपाधिना क्रोडीकृतं रूपं वाच्यं तच्चेदज्ञातमस्येति परामर्शस्तर्हि नोपपद्यत इत्यर्थः। फलितमाह * इति कार्येति * नियमस्यान्वयव्यतिरेकावसेयस्य जात्युपाधिविषयत्वात्तदनभिधाने न निस्तारस्तज्ज्ञाने च तदेव लक्षणमस्तु लाघवादित्यर्थः। नियमविशेषणं तर्हि परित्यज्य लक्षणं ब्रूमः तत्राऽऽह *विनेति* घटज्ञानमुपलभ्य नात्र ज्ञायमानं करणमिति लक्षणं गम्यतां किमनुगतरूपज्ञानेन तत्राह *ज्ञायमानमिति* ज्ञायमानं नात्र करणमिति कार्यव्यक्तिमभिसन्धाय लक्षणाभिधानं यदि तदा तर्हि त

स्पूर्वे तस्याः प्रत्यक्षव्यक्तेः पूर्वं प्रतीतानां चक्षुरादीनां तत्र करणत्वाभावो दुरवधारण एकव्यक्तेरिव निषेधाधिकरणतया व्यक्त्यन्तराणामनिषेधाधिकरणत्वादिति यावदतोऽव्याप्तिपरिहाराय जात्युपाधौ लक्षणमभिधेयमिति निगमयति * तत इति* तज्जातीयेऽनुभवजातीये । तज्जातीयव्यभिचारप्रतिसन्धानेऽज्ञातकरणजातीयस्य व्यभिचारप्रतिसन्धाने । एतदुक्तं भवति ज्ञातकरणजातीयाजन्यानुभवजातीयः साक्षादिति अनुभवत्वे सत्यवान्तरजात्युपाधावज्ञानकरणजन्यत्वात्यन्ताभावानधिकरणमिति यावत् ।

साक्षात्त्वलक्षणान्तरमनुभाषते * अथेति * सन्निहितार्थविषयज्ञानत्वमिति यावत् । लक्षणविशेषणाव्यवधानस्यासिद्धिं दर्शयितुं तत्प्रतियोगि व्यवधानं पृच्छति * तर्हि किमपेक्ष्येति * न केवलं व्यवधानापेक्ष्यं दुर्निरूपं किं तु व्यवधानं च किमिति वाच्यमित्यर्थः । अपेक्ष्यं व्यवधानस्वरूपं च पूर्ववादी दर्शयति *इन्द्रियमिति* इन्द्रियमपेक्ष्य व्यवधानं तच्च तदसन्निकर्ष इत्यर्थः । लक्षणं दूषयितुं लक्षणवाक्यस्य परिनिष्पन्नमर्थमनुवदति * तर्हीति * वक्तोक्तेरित्यर्थः । अस्तु ततः किमित्यत आह * सेति * मदीयं चक्षुः साश्रयमिन्द्रियत्वादन्येन्द्रियवदिति अस्यादि ज्ञानं चक्षुस्सन्निकृष्टगोलकविषयमिति साध्यार्थः ।

अनुमानज्ञानं लिङ्गज्ञानजन्यं ज्ञानाजन्यज्ञानत्वं
साक्षात्त्वं विवक्षितमतो नातिव्याप्तिरिति शङ्कते ।

४५९ विधान्तरेण लक्षणनिरासः ।

ज्ञानाजन्यज्ञानत्वं तदिति चेन्न । सविकल्पकाविशेषाव्यापनात् ।

* ज्ञानेति * निर्विकल्पकजन्यत्वात्सविकल्पकस्याव्याप्तिरिति दूषयति * नेति * भेदाभावप्रत्यक्षस्य निर्विकल्पकाजन्यत्वाद्विशेषपदोपादानम् ।

घटप्रत्यक्षं घटविषयनिर्विकल्पकजन्यं न विषयान्तरज्ञानजन्यं तथात्वस्य विवक्षितत्वान्नाव्याप्तिरित्याशङ्क्याऽऽह ।

४६० शङ्कान्तरनिरासः ।

एतेन विषयान्तरज्ञानाजन्यत्वं तदिति प्रत्युक्तम् । सविकल्पकस्याधिकव्यवच्छेदरूपाविषयत्वात् तदवधिज्ञानजन्यत्वात् ।

* एतेनेति * एतच्छब्दपरामृष्टं हेतुं स्पष्टयति *सविकल्पकेति* निर्विकल्पकार्थाद्वस्तुमात्रादधिकं यदितरेभ्यो व्यावृत्तिरूपं तद्विषयत्वादित्यर्थः । व्यावृत्तिविशिष्टस्य विशेष्यस्वरूपत्वादतत्वान्तरत्वात्कथं विषयान्तरज्ञानजन्यत्वं तत्राह * तदिति * भेदप्रतियोगिज्ञानजन्यत्वादिति ।

साक्षात्त्वस्य लक्षणान्तरं शङ्कते ।

४६१ प्रत्यक्षस्य लक्षणान्तरनिरासः ।

स्वविषयानन्तर्गतार्थज्ञानाजन्यधीत्वं तत्, नच स

प्रतियोगिकार्थप्रत्यक्षाव्याप्तिः प्रतियोगिनोऽपि विशिष्टार्थप्रविष्टस्य तत्ताया इव प्रत्यभिज्ञायां प्रत्यक्षविषयत्वोपगमात्, अप्रतियोगित्वेन विशेषणाद्वेति चेन्न। स्वपदेनैव क्षारीकृतत्वात् कार्यव्यक्त्यावजन्यताया दुरवधारणत्वाच्च। तज्जातीये तज्जातीयव्यभिचारशङ्काग्रहे च कार्य्यैकजात्ये च पूर्ववत्पतनमिति।

* स्वेति * स्वविषयानन्तर्गतार्थविषयेण ज्ञानेनाजन्यज्ञानत्वं तत्साक्षात्वमनुमादिव्यवच्छेदाय ज्ञानाजन्येति विशेषणम्। सविकल्पसङ्ग्रहाय स्वेति विशेषणम्। इदमस्माद्भिन्नमित्यादिविकल्पज्ञानं स्वविषयानन्तर्गतप्रतियोगिज्ञानजन्यमिति तदव्याप्तिरित्यत आह * नचेति * कुत इत्यत आह * प्रतियोगिनोऽपीति * प्रतियोगिनोऽपि प्रत्यक्षविषयत्वोपगमादिति। भेदप्रत्यक्षं कथमन्यं प्रतियोगिनं विषयीकुर्यात्तत्राह * विशिष्टेति * धर्मिप्रतियोगिविशिष्टं भेदं गृह्णत् विशेषणं प्रतियोगिनमपि गृह्णात्येव यथा दण्डीति ज्ञानं दण्डं गृह्णाति तद्वदिति यावत्। प्रत्यक्षं स्वकालीनमेव प्रकाशयति कालान्तरीयस्यापि प्रतियोगित्वसम्भवात्कथं प्रतियोगिनः प्रत्यक्षोल्लेख्यत्वमित्याशङ्क्य पूर्वानुभवसंस्कारसहकृतेदानीन्तनसम्प्रयोगात्तद्विशिष्टभेदप्रत्यक्षोपजन इत्यत्र दृष्टान्तमाह * तत्ताया इति * स्वविषयानन्तर्गतप्रतियोगिव्यतिरिक्तार्थज्ञानाजन्यत्वं तदिति विशेषणाद्वा सप्रतियोगि-

कप्रत्यक्षे नाऽव्याप्तिरित्याह * अप्रतीति * स्वपदेन ज्ञानमात्रोपादानेऽनुमादावतिव्याप्तिस्तद्विशेषोपादाने चाऽव्याप्तिरिति दूषयति * तन्नेति * लक्षणजन्मनां क्षारीकृतत्वात् दुःखनिरोधादिति यावत् । असम्भवं चाह *कार्येति * अन्वयव्यतिरेकभावाभावावसेयत्वात्कार्यकारणत्वभावाभावयोस्तयोश्चानुगतरूपविषयत्वेन व्यक्तावसम्भवादित्यर्थः। अस्तु तर्हि स्वविषयज्ञानमात्रस्य विषयानन्तर्गतज्ञानमात्राजन्यत्वनिश्चयस्तत्राह *तज्जातीय इति* तज्जातीये—ज्ञानव्यक्तिमात्रे ज्ञानव्यक्तिमात्रस्य कारणत्वव्यभिचारप्रतिसन्धानात्मकशङ्काग्रहे तु लक्षणाधिगमात्प्रागनुगतरूपावगममन्तरेण तज्जातीयत्वमेव दुरवधारणमिति कार्यैकरूप्ये यतितव्यमिति तदेव लक्षणमस्तु आवश्यकत्वाद्व्यर्थमितरदिति पूर्वदोषापत्तिरित्यर्थः।

४६२ प्रत्यक्षलक्षणान्तरनिरासः।

स्वकालावच्छिन्नार्थबोधत्वं साक्षात्त्वमित्यपि न ।

स्वार्थाविवेचनात्। कथञ्चानुमानादिव्यवच्छेदः ?। तत्र व्याप्त्यादिप्रविष्टकालनियतार्थत्वं, यत्रापि चन्द्रोदयसमुद्रवृद्ध्यादौ स्वकालार्थत्वं तत्रापि व्याप्तिप्रविष्टतैव तादृशत्वस्य प्रयोजिकेति चेन्न। कथमप्यस्तु तथापि स्वकालावच्छिन्नार्थत्वस्य सम्भवात् । नच यज्जातीयमेवमेवेति विशेषः, साजात्यस्य वैलक्षण्यस्याग्रतः सिद्धौ किमन्येन। नच तदपीति वक्ष्यते। व्याप्त्यादिकमन्तरेणेति चेन्न। तस्यैव स-

मर्थत्वेन स्वकालकथावैयर्थ्यात् । यथाच न तदपि तथा वक्ष्यते ।

*स्वेति* स्वस्य ज्ञानस्य यः कालस्तदवच्छिन्नार्थज्ञानत्वमितिसुगतमतनिरासार्थेति विशेषणम् । अनुमानादिपरासाय *स्वेति* कुत इत्यत आह *स्वेति* स्वपदेन ज्ञानमात्राभिधानेऽतिव्याप्तेर्विशेषाभिधानेऽव्याप्तेरित्यर्थः । एवमसम्भवमुक्त्वाऽतिव्याप्तिमाह*कथं चेति* अनुमादेः कालावच्छिन्नार्थबोधत्वेऽपि स्वकालावच्छिन्नार्थबोधत्वं नास्ति व्याप्त्यादिकालावच्छिन्नस्य तत्र स्फुरणादिति शङ्कते * तत्रेति * व्याप्त्यन्तर्गतत्वात्कालावच्छेदोऽनुमाने प्रतीयते सङ्गत्यन्तर्गततया तदवच्छेद आगमादाविति यावत् । अयं चन्द्रोदयः स्वकालसमुद्रवृद्धिमान् चन्द्रोदयत्वात् ह्यस्तनचन्द्रोदयवदित्यनुमानस्य स्वकालावच्छिन्नार्थबोधकत्वेनास्त्यतिव्याप्तिरित्याशङ्क्याह *यत्रापीति* आदिपदेनायं घटो वर्तत इत्याद्यागमादि ग्राह्यम् । व्याप्तिप्रविष्टैव कालस्य तादृशात्वस्य कालावच्छिन्नार्थत्वस्य प्रयोजिकेति सम्बन्धः । व्याप्त्यन्तर्गततया कालावच्छेदः प्रतीयतेऽतोन्यथासिद्धं स्वकालार्थत्वमतीतानागतानुमितौ तथात्वदर्शनादित्यर्थः । स्वकालावच्छिन्नार्थत्वस्यान्यथासिद्धिमङ्गीकृत्याति-व्याप्तिदोषपरिहारेति परिहरति *नेति* अन्यथासिद्धमप्यस्तु तथाऽप्युक्तलक्षणसम्भवादतिव्याप्तिर्ह्यन्यथासिद्धत्वमनन्यथासिद्धत्वं लक्षणविशेषणं तदुपादाने च हेत्वन्तरं नाम निग्रहस्थानमित्याशयः । अनुमानविशेषस्य

स्वकालावच्छिन्नार्थत्वेऽपि न तज्जातीयत्वमात्रं स्वकालावच्छिन्नार्थे तत्साक्षाद्विवक्षितमित्यत आह *न चेति* तदेव विवृणोति *साजात्येति* अनुगतैकरूपयोगित्वस्य साजात्यस्यानुमादितो वैलक्षण्यस्याभ्रतोऽसिद्धौ विशेषणासिद्ध्या लक्षणासिद्धिस्तत्सिद्धौ च तदेव लक्षणमास्तामित्यर्थः । अस्तु तर्हि साक्षात्त्वजातिसमवाय एव लक्षणमित्याशङ्क्याह *न चेति* व्याप्त्याद्यजन्यत्वे सति स्वकालावच्छिन्नार्थबोधत्वं साक्षात्त्वमिति लक्षणं विशिनष्टि *व्याप्त्यादीति* व्यर्थविशेषणतया परिहरति *नेति* व्याप्त्याद्यजन्यबोधत्वमित्युक्ते व्यभिचाराभावात्स्वकालेत्यादिविशेषणं व्यर्थमित्यर्थः । अस्तु तर्ह्येतदेव लक्षणं तत्राह *यथा चेति* व्याप्त्यादिखण्डनेनेत्यर्थः ।

तत्त्वोपप्लवकारेणास्य लक्षणस्याऽसम्भवदोष उक्तस्तमनुवदति दूषणाय ।

४६३ तत्त्वोपप्लवकारोक्त दूषणनिरासः

यत्तु कश्चिदाह स्वप्रकाशनिषेधात् स्वकालावच्छिन्नार्थप्रकाशत्वासम्भव इति । तदयुक्तम् । वस्तुतो यः स्वकालस्तस्य विवक्षितत्वात् । वर्त्तमानप्रकाशस्तथेति निरुक्तिपर्य्यवसानात् । वर्त्तमानार्थस्य च सर्व्वनिर्व्वचनीयत्वात् । तथा चोक्तम्—

"सम्बद्धं वर्त्तमानञ्च गृह्यते चक्षुरादिना" ।

तस्मादस्मदुक्तमेव युक्तम् ।

*यद्विवति* किं तदित्याह *स्वेति* स्वकालावच्छिन्नार्थप्रकाशत्वं ज्ञानस्य न सम्भवति तथात्वे कालविशेषणतया ज्ञानस्यापि स्वेनैव ग्रहणप्रसङ्गात्तस्य च स्वप्रकाशत्वस्य परैः प्रतिषेधादित्यर्थः। दूषयति *तदिति* हेतुमाह *वस्तुत इति* ज्ञानं कालस्योपलक्षणं न विशेषणमित्यर्थः । एतदुक्तं भवतीत्याह * वर्तमानेति * वर्तमानार्थप्रकाशः साक्षादिति निरुक्तिरिति तात्पर्यम्। अर्थस्य वर्तमानत्वमेव कथं निरुच्येत तत्राह *वर्तमानेति * सर्ववादिभिरेव निर्वचनीयत्वान्न ममैवायं दोष इत्यर्थः। उक्तेऽर्थे भट्टवचनमुदाहरति *तथेति* सम्बद्धमिति देशाव्यवहितमुच्यते वर्तमानमिति कालाव्यवहितमुच्यते। तर्ह्यदुष्टमेवेदं तार्किकाणां लक्षणं नेत्याह * तस्मादिति *

विधान्तरं साक्षात्त्वस्योपस्थापयति ।

४६४ प्रत्यक्षलक्षणान्तरानिरासः ।

षोढासान्निकर्षेतराप्रयुक्तविषयनियमं ज्ञानं तथेति चेन्न। दोषवशजातसाक्षादबोधे तदसम्भवात् । प्रमासाक्षात्कारस्तात्त्तथेति चेन्न । साक्षात्त्वेन प्रमेतरयोरविशिष्टतया साक्षात्त्वस्य साधारणस्यैव निर्व्वक्तव्यत्वात् । अनिष्टभ्रमबुद्धिमते षोढासन्निंकर्षस्य प्रत्येकमिलितविकल्पानुपपत्तेः ।

* षोढेति * षोढा सन्निकर्षः संयोगः समवायः समवेतसमवायः संयुक्तसमवायः संयुक्तसमवेतस-

अस्यां चौखम्बा-संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतकं सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तबको मुद्रयित्वा प्रकाश्यते।

२ एकस्मिन् स्तबके एव ग्रन्थो मुद्यते।

प्राचीनादुर्लभाश्चाऽमुद्रिता मीमांसावेदान्तादिदर्शन, व्याकरण, धर्मशास्त्र. साहित्य, पुराणादिग्रन्था एवात्र सुपरिष्कृत्यमुद्यते।

३ काशिकराजकीयप्रधानसंस्कृतपाठालयाऽध्यापकाः पण्डिता अन्येच शास्त्रदृष्टयो विद्वांसः एतत्परिशोधनादिकार्यकारिणो भवन्ति।

४ भारततवर्षीये, ब्रह्मदेशीयैः. सिंहलद्वीपवासिभिश्च एतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम् मुद्राः ७ आणकाः ८

५ अन्यैर्देयं प्रतिस्तबक " " १ " ०

६ प्रापणव्ययः पृथग् नास्ति।

७ साम्प्रतं मुद्यमाणा ग्रन्था:- मुद्रिताः स्तबकाः

(१) संस्काररत्नमाला। गोपीनाथभट्टकृता ( संस्कारः ) २

(२) शब्दकौस्तुभः। भट्टोजिदीक्षितकृतः ( व्याकरणम् ) १०

(३) श्लोकवार्तिकम्। भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृत-न्यायरत्नाकराख्यया व्याख्यया सहितम् सम्पूर्णम्। ( मीमांसा ) १०

(४) भाष्योपबृंहितं तत्त्वत्रयम् विशिष्टाद्वैतदर्शनप्रकरणम् श्रीमल्लोकाचार्य्यप्रणीतम्। श्रीनारायणतीर्थ विरचित भाट्टभाषा प्रकाश सहितम्। स० (वेदान्त) २

(५) करणप्रकाशः। श्रीब्रह्मदेवविरचितः सम्पूर्णः ( ज्योतिषः ) १

(६) भाट्टचिन्तामणिः महामहोपाध्याय-श्रीगागाभट्ट विरचितः। तर्कपादः ( मीमांसा ) २

(७) न्यायरत्नमाला-श्रीपार्थसारथिमिश्र वि० स०( मीमांसा ) २

(८) ब्रह्मसूत्रभाष्यम्-बादरायण प्रणीत वेदान्त सूत्रस्य यतीन्द्र श्रीमद्विज्ञानभिक्षु कृत व्याख्यानम्। सम्पूर्णः। ( वेदान्तः ) ६

(९) स्याद्वादमञ्जरी-मल्लिषेणनिर्मिता सम्पूर्णा। ( जैनदर्शनम् ) २

(१०) सिद्धित्रयम्-विशिष्टाद्वैत-ब्रह्मनिरूपणपरम्-श्रीभाष्यकृतां परमगुरुभिः श्री६ यामुनमुनिभिर्विरचितम्। सम्पूर्णम् ( वेदान्तः ) १

(११) न्यायमकरन्दः। श्रीमदानन्दबोधभट्टारकाचार्यसंगृहीतः आचार्यचित्सुखमुनिविरचितव्याख्योपेतः ( वेदान्तः ) ४

(१२) विभक्त्यर्थनिर्णयः न्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायरचितः। सम्पूर्णः ( न्यायः ) ५

(१३) विधिरसायनम् श्रीअप्पयदीक्षितकृतम् स० ( मीमांसा ) २

(१४) न्यायसुधा ( तन्त्रवार्तिकटीका ) भट्टसोमेश्वरविरचिता । ( मीमांसा ) १५

(१५) शिवस्तोत्रावली । उत्पलदेवविरचिता । श्रीक्षेमराजविरचितवृत्तिसमेता । ( वेदान्तः ) २

(१६) मीमांसाबालप्रकाशः ( जैमिनीयद्वादशाध्यायार्थसंग्रहः ) श्रीभट्टनारायणात्मजभट्टशङ्करविरचितः । ( मीमांसा ) २

(१७) प्रकरणपञ्चिका ( प्रभाकरमतानुसारि मीमांसादर्शनम् ) महामहोपाध्यायश्रीशालिकनाथमिश्रविरचितम् । श्रीशङ्करभट्टकृतो मीमांसासारसंग्रहश्च सम्पूर्णः ( मीमांसा ) ३

(१८) अद्वैतसिद्धिसिद्धान्तसारः । पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृतश्च । ( वेदान्त ) ३

(१९) कात्यायनश्रौतसूत्रम् महामहोपाध्यायश्रीकर्काचार्यविरचितभाष्यसहितम् । १२

(२०) ब्रह्मसूत्रभाष्यम् श्रीभास्कराचार्यविरचितम् ( वेदान्तः ) १

(२१) श्रीहर्षप्रणीतम् खण्डनखण्डखाद्यम् आनन्द पूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया ( विद्यासागरी ) ति प्रसिद्धया समेतम् । (वेदान्तः) ६

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता । १

(२३) श्रीलक्ष्मीसहस्रम्—बालबोधिनीव्याख्यया ऽवतरणिकया च सहितम् । ८

(२४) ब्रह्मसूत्रवृत्तिः मरीचिका श्रीव्रजनाथभट्टकृता । ( वेदान्त ) २

(२५) क्रोडपत्रसंग्रहः अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्याः प्रत्यक्षानुमानगादाधर्योः प्रत्यक्षानुमानमाथुर्यो व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकायाः कुसुमाञ्जलेश्च क्रोडपत्राणि । ( न्यायः ) १

(२६) ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम्।श्रीसुन्दरभट्टरचितसिद्धान्तसेतुकाभिधटीकासहितश्रीदेवाचार्यप्रणीतसिद्धान्तजाह्नव्याख्यव्याख्या० २

(२७) षड्दर्शनसमुच्चयः । बौद्ध नैयायिक कापिल्य जैन वैशेषिक जैमिनीयदर्शन संक्षेपः । मणिभद्रकृतटीकया सहितः । हारिभद्रसूरिकृतः । १

(२८) शुद्धाद्वैतमार्तण्डः प्रकाशव्याख्यासहितः । प्रमेयरत्नार्णवश्च १

(२९) अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृतदीधित्याः जागदीशी टीका । १३

(३०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः । ५

(३१) स्मृतिसारोद्धारः ।विद्वद्वरविश्वम्भरत्रिपाठिसंकलितः । २

(३२) वेदान्तरत्नमञ्जुषा । श्रीभगवत्पुरुषोत्तमाचार्य कृता । २

पत्रादिप्रेषणस्थानम् } हरिदासगुप्तः,

*February.* 1909.

THE

# CHOWKHAMBÂ SANSKṚIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

## NO. 134.

श्रीहर्षप्रणीतम्

## खण्डनखण्डखाद्यम् ।

आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया
व्याख्यया 'विद्यासागरी'-ति प्रसिद्धया समेतम् ।
चित्सुख-शङ्करमिश्र-रघुनाथकृतटीकावल-
म्बिन्या टिप्पण्या सनाथम् ।

द्राविड-श्रीलक्ष्मण-शास्त्रिणा परिशोधितम् ।

SRÎ HARSHA'S

## KHAṆḌANAKHAṆḌAKHÂDYA,

WITH THE COMMENTARY

'khandanaphakkikâvibhajana'(vidyâsâgarî)of Ânandapûrna

WITH EXTRACTS FROM THE COMMENTARIES OF

Chitsukha, Ŝankara Miŝra and Raghunâtha,

EDITED BY

PANDIT LAKSHMANA ŜÂSTRÎ DRÂVIDA,

*Professor of Vedânta, The Gaurishankar*
*Central Hindu College, Benares.*

FASCICULUS VII.

*PUBLISHED AND SOLD BY THE SECRETARY*

CHOWKHAMBÂ SANSKRIT BOOK-DEPÔT:

BENARES:

AGENTS:—OTTO HARRASSOWITZ, LEIPZIG:
PANDITA JYESHTHÂRÂMA MUKUNDAJÎ, BOMBAY.
PROBSTHAIN & CO., BOOKSELLERS, LONDON

*Printed by Harikrishna Dâs, Proprietor,*
AT THE VIDYÂ-VILÂS PRESS.
BENARES.

*Price Rupee One.*

मवायः एतत्पञ्चविधसम्बन्धसम्बद्धविशेषणविशेष्यभावश्च तेषामन्यतमो विषयनियमे प्रयोजकः प्रत्यक्षस्या,नुमायां व्याप्तिः, सादृश्यमुपमाने, सङ्केत आगमे संस्कारः स्मृतौ, अभावार्थापत्त्योरत्रैवान्तर्भावान्न प्रयोगान्तरं एतेभ्यः षड्भ्यः सन्निकर्षेभ्य इतरेण न प्रयुक्तो विषयनियमो यस्य ज्ञानस्य तत्साक्षात्त्वं विवक्षितमित्यर्थः। अव्याप्त्या दूषयति *नेति* इदं रजतमित्यादिज्ञाने मिथ्यासंसर्गविषयनियमः षोढासन्निकर्षेतरदोषप्रयुक्तः साक्षाच्च भवति तेनाव्याप्तिरित्यर्थः। प्रमात्वविशिष्टसाक्षात्त्वस्येदं लक्षणं न साक्षात्त्वमात्रस्य तेन नाव्याप्तिरित्याशङ्कते * प्रमेति * साक्षात्त्वसामान्यं लक्षयित्वा तद्विशेषो लक्षणीयोऽनाकलितसामान्यरूपस्य विशेषस्य बुद्धावारोपयितुमशक्यत्वादिति दूषयति *नेति* अन्यथाख्यातिवादिनो भाट्टस्यायं पततु वज्रप्रहारः शिरसि न त्वख्यातिवादिनो ममेत्याशङ्क्याह * अनिष्टेति * संयोगादिसन्निकर्षविशेषेतराप्रयुक्तविषयनिमत्वं विवक्ष्यते किं वा समुदितषड्विधसन्निकर्षेतराप्रयुक्तनियमत्वमाद्येऽव्याप्तिर्घटादिप्रत्यक्षस्य समवायादितरप्रयुक्तविषयनियमत्वात् द्वितीये त्वसम्भवो न ह्येकमपि समुदितषड्विधसन्निकर्षप्रयुक्तविषयमित्यर्थः।

अस्तु तर्हि स्वरूपधीः साक्षाद्धीरिति शङ्कते।

४६५ प्रकारान्तरेण प्रत्यक्षनिरासः।

साक्षाद्धीः स्वरूपधीः स्वेन रूपेण वस्तुनो भानमिति चेन्न। अनुमानादिव्यापनात्। अनुमानादौ लिङ्गाद्यपे-

क्षत्वात्तदवच्छिन्नकालसम्बद्धबोधत्वं न त्वध्यक्ष इति चेन्न । व्यभिचारात् । यत्र लिङ्गादि भाव्यादिबोधकं तत्र तत्कालताव्यभिचारात् । एतेन यदि न लिङ्गकालावच्छिन्नव्यापकप्रतिभासोऽनुमा तदाकूटव्याप्यानुमितस्य व्यापकस्य दैववशात् सत्यव्याप्यव्यक्त्यन्तरवतः प्राप्तौ व्याप्तिकालावच्छिन्नव्यापकप्राप्त्या तावत्यंशे प्रमात्वं प्रमाविशेषान्तर्भावानिर्वाह्यमापद्येतेति निरस्तम् । भूतादिव्यापकानुमाने व्याप्यकालत्वासम्भवात् । तथापि चाग्न्यादिमदंशमात्रे प्रमात्वापातदुष्परिहरत्वस्योक्तत्वात् ।

*साक्षादिति* किमिदं स्वरूपधीत्वं तत्राह *स्वेनेति* अन्यथा सतोऽन्यथा भानेऽप्रामाण्यप्रसङ्गात् । अनुमानादिव्यापकमेतदिति दूषयति *नेति* लिङ्गाद्यनवच्छिन्नकालसम्बद्धार्थबोधत्वं स्वरूपधीत्वं विवक्षितमतो नातिव्याप्तिरिति शङ्कते*अनुमानादाविति*परिहरति *नेति* अनुमानादिविषये लिङ्गाद्यपेक्षत्वात्तदवच्छिन्नलिङ्गाद्यवच्छिन्नकालसम्बन्धाव्यभिचारोऽनुमानादिविषयस्य तत्राह *यत्रेति* विशिष्टमेघोदयनदीपूरणादिलिङ्गं भाव्यादेर्भाविनोऽतीतस्य च बोधकं तत्र भाव्यादेरनुमेयस्य वर्तमानलिङ्गकालसम्बन्धस्य व्यभिचार इति तत्रातिव्याप्तिस्तथा भाव्यर्थबोधकशब्दज्ञानजे ज्ञानेपीत्यादिपदार्थः । भाव्याद्यनुमाने लिङ्गकालावच्छिन्नार्थबोधत्वाभावोपपादनेन परेषां चोद्यान्तरमपि चूर्णितमति प्रसङ्गादित्यतिदिशति *एतेन

ति* लिङ्गकालावच्छिन्नव्यापकप्रतिभासोऽनुमानं न भवति किंतु व्याप्तिकालावगतव्यापकप्रतीतिमात्रं सेति स्वीक्रियते यदि तदा तर्हि मिथ्याव्याप्येन धूमत्वपरिगृहीतधूलीपटलादिनाऽनुमितस्य व्यापकस्य दैववशात् सत्यव्याप्यव्यक्त्यन्तरवतः प्राप्तौ प्रतीतौ सत्यां तज्ज्ञानस्य तावत्यंशे व्याप्तिकालावगतव्यापकांशे प्रमात्वमापद्येतेति यच्चोद्यं तदपि निरस्तमिति सम्बन्धः । व्याप्त्यभावे कथं व्याप्तिकालावगतव्यापकांशे प्रमात्वं तत्राह * व्याप्तीति * व्याप्तस्य व्याप्तिकालावच्छिन्नव्यापकेन व्याप्तेर्विद्यमानत्वादित्यर्थः । उभयनिष्ठव्याप्तेरेकतरासत्त्वेऽपि कथं सत्वमित्याशङ्कानिरासाय कथितं * दैवेति * लक्षणबलादायातं तदपि स्वीक्रियत इत्यत आह*प्रमेति*प्रमाविशेषाः प्रत्यक्षादयस्तेष्वन्तर्भावो निर्वोढुं न शक्यते यस्य तत्तादृशं अक्लृप्तकरणजन्यतया तत्रान्तर्भावासम्भवादतिरेके च प्रमाणचतुष्टयवादिनियमभङ्गाद्व्याप्यकालावच्छिन्नव्यापकप्रतिभासोऽनुमेति वक्तव्यमित्यर्थः । परामृष्टं हेतुमेव स्पष्टयति *भूतेति* लिङ्गं व्याप्यतया गमकं व्याप्तिश्च द्विष्ठेति तदाधारतया व्यापकस्य व्याप्यकालावच्छिन्नत्वमस्तीत्याशङ्कामङ्गीकृत्यापि दूषयति *तथापीति* प्रमाखण्डने लिङ्गान्तरवति केवले वा विषयतया प्रामाण्यस्वीकारेणोक्तदोषापरिहारादित्यत्रोक्तत्वान्नेदमप्यनुमानलक्षणमित्यर्थः ।

प्रासङ्गिकं परिसमाप्य प्रकृतसाक्षात्त्वलक्षणान्तरमाशङ्कते ।

४६६ प्रत्यक्षलणान्तरनिरासः ।

अनुपहितप्रतीतिः साक्षाद्धीरिति चेन्न । विशिष्टप्रविष्टविशेष्यप्रत्यक्षाव्यापनात् । करणानुपहितत्वं विवक्षितमिति चेन्न । परकरणोपहिताव्यापनात् । स्वकरणोपहितत्वस्य च स्वपदकुक्षिनिक्षिप्तत्वात् ।

*अन्विति* साध्यधर्मोपहितो धर्म्यनुमाने प्रकाशत इति तत्र तद्व्यावृत्तयेऽनुपहितेति विशेषणम् । अनुपहितशब्देन किं विशेषणमात्रानुपहितत्वं उत लिङ्गासम्बद्धत्वमिति विकल्प्य आद्ये ऽव्याप्तिरिति परिहरति *नेति* दण्डीति विशिष्टप्रत्यक्षं विशेषणं विशेष्यं च गृह्णाति विशिष्टस्य तावन्मात्रत्वादतश्च विशेष्यांशे साक्षात्त्वं न स्यात्तस्य विशेषणोपहितत्वादित्यर्थः॥द्वितीयं शङ्कते *करणेति* परकरणानुपहितत्वं वा स्वकरणानुपहितत्वं वा आहो स्वित् करणमात्रानुपहितत्वमिति विकल्प्याद्यं दूषयति *नेति* धूमवत्त्वलिङ्गेन गिरिशिखरे कृशानुर्यदाऽनुमीयते परेण तदा तत्समीपस्थस्य वह्निप्रत्यक्षं साक्षान्न स्यात्परकरणोपहितविषयत्वादित्यर्थः । अस्तु तर्हि द्वितीयस्तत्राह *स्वेति* स्वपदेन विशेषोपादानेऽव्याप्तिः सामान्योपादाने कथितातिव्याप्तिरित्याशयः ।

प्रकारान्तरेण साक्षात्त्वं लक्षयति ।

४६७ प्रत्यक्षस्य लक्षणान्तरनिरासः ।

व्याप्त्याद्युपहितत्वादीनां व्यतिरेकस्य यत्र समुच्चयः

सा धीः साक्षाद्धीरिति चेन्न। व्याप्त्यादिप्रत्यक्षाव्यापनात्। असिद्धत्वाच्च। पर्व्वतोऽग्निमानित्येव प्रतिज्ञानात्। शब्देन च स्वाप्रतिपादनात्। शाब्दादिमितेश्च प्रत्यक्षत्वापादनात्।

* व्याप्तीति * व्याप्तिसङ्गतिसादृश्योपहितत्वानां यत्राभावः सा साक्षाद्धीरनुमादित्रयव्यावृत्त्यर्थं विशेषणम्। नेदं लक्षणमव्यापकत्वादित्याह * नेति * अग्निव्याप्तोऽयं धूम इति व्याप्तिप्रत्यक्षं व्याप्तिविशिष्टं घटशब्दस्य घटेन साङ्केतिकः सम्बन्धस्तद्विषयमेवेश्वरप्रत्यक्षं तदुपहितं चन्द्रसदृशं मुखमित्यत्र सादृश्यप्रत्यक्षं च तदुपहितमिति तत्राव्याप्तिरित्यर्थः। लक्षणस्यासम्भवं चाह * असिद्धत्वाच्चेति * यत्र व्याप्त्यादिसमुच्चयसम्भवस्तत्रैव तद्व्यतिरेकसमुच्चयोऽपि, न च प्रत्यक्षे तदस्तीत्यसिद्धिरित्याशयः। न केवलमव्याप्त्याद्यतिव्याप्तिरपीत्याह * पर्वत इति * पर्वतोऽग्निमानिति प्रतिज्ञानाद्व्याप्यधूमव्यापकवानित्यप्रतिज्ञानादनुमाने व्याप्त्यस्फुरणात् फलिता द्रुमा इति शब्देन शब्दाविषयज्ञानाजननाच्च व्याप्त्याद्यव्यवहितत्वं शाब्दप्रतीतावनुमितौ चास्तीति साक्षात्त्वापात इत्यर्थः।

लक्षणान्तरमनूद्य दूषयति।

४५८ प्रत्यक्षस्य लक्षणान्तरनिरासः।

अव्यवहितधीत्वं साक्षाद्धीत्वमिति चेन्न। व्यवधानविकल्पानुपपत्तेः। यदि द्रव्यविशेषान्तरावस्थितिर्व्यवधिः तदानीमप्रत्यक्षविभुधियां साक्षात्त्वापत्तिः। अथ ज्ञापक-

ज्ञानपूर्वसत्ता व्यवधानं तदा परत्वाद्यप्रत्यक्षतापत्तिरिति । विशिष्टवैशिष्ट्यं व्यवधानमिति चेन्न । धूमविशिष्टे वह्निवैशिष्ट्यमिति स्वरूपस्थितौ तथात्वे कार्य्यकारणभावविरोधः प्रतीतौ धूमवैशिष्ट्यस्य धर्मिविशेषणत्वे हेतोरंशतः स्ववृत्तिः । साध्यविशेषणत्वे व्याप्तिग्राहिप्रत्यक्षे ऽप्यव्यवधानाभावात् न साक्षात्त्वं स्यात् ।

* अव्यवहितेति * अव्यहितस्य धीरव्यवहितधीस्तत्त्वमिति यावत् । अव्यवधानस्य च व्यवधानेन निरूप्यत्वात्तस्यच दुर्निरूपत्वाद्विशिष्टलक्षणासिद्धिरित्यर्थः । किमिदं व्यवधानं मूर्त्तद्रव्यस्य मध्येऽवस्थानं तदुत ज्ञापकविषयज्ञानस्य प्रथमत्वमाहोस्विल्लिङ्गादिविशिष्टे साध्यादिवैशिष्ट्यमिति विकल्प्य प्रथममनुवदति *यदीति* द्रव्यविशेषस्य मूर्तस्यान्तरा ज्ञानज्ञेययोर्मध्ये व्यवस्थितिर्व्यवधिस्तदभावोऽव्यवधानमित्यर्थः । अतिव्याप्त्या दूषयति *तदेति* विभवो दिक्कालादयो नित्यानुमेयाः तेषां ज्ञानानि साक्षात्स्युस्तत्र द्रव्यविशेषान्तरावस्थानाभावादित्यतिव्याप्तिरित्यर्थः । द्वितीयं कल्पमवलम्बते *अथेति* ज्ञापका लिङ्गादयस्तज्ज्ञानपूर्वकान्यनुमानादीनि न तथा प्रत्यक्षत्वामिन्द्रियाणामज्ञातानामेव ज्ञापकत्वादित्याशयः । परत्वापरत्वपृथक्त्वादीनां प्रतियोग्यपेक्षज्ञानानामप्रत्यक्षता स्यात्प्रतियोगिज्ञानपूर्वकत्वात्तज्ज्ञानस्येत्यव्याप्तिमाह *तदेति* ननु ज्ञानाजन्यज्ञानत्वं साक्षात्त्वमिति पूर्वमेव परास्तं किमिदानीमाश-

ध्यते । नैष दोषस्तत्रैव दोषान्तराभिधित्सया व्यवधानशब्दार्थविकल्पविशेषतया पुनरुद्भावनादिति । अन्यमुत्थापयति *विशिष्टेति* लिङ्गादिविशिष्टे धर्मिणि साध्यादिविशिष्टज्ञानमनुमानादौ तदभावः प्रत्यक्ष इत्यर्थः । विशिष्टस्य वैशिष्ट्यं विशिष्टवैशिष्ट्यं लिङ्गविशिष्टस्य साध्यवैशिष्ट्यं शब्दविशिष्टस्य देशजात्यादिवैशिष्ट्यं सादृश्यविशिष्टस्य संज्ञावैशिष्ट्यं तद्ग्राहकत्वमनुमादेर्व्यवधानमिति द्रष्टव्यम् । धूमविशिष्टे वह्निवैशिष्ट्यं स्वरूपेण प्रथमं भवति तद्ग्राहित्वं किमनुमानस्य व्यवधानमुत धूमवैशिष्ट्यं गृहीत्वा वह्निवैशिष्ट्यग्राहकत्वप्रतीतौ धूमवैशिष्ट्यस्य प्राथम्यं व्यवधानमिति विकल्प्याद्यं दूषयति * नेति * धूमस्य वह्नेः प्रथमभावित्वे वह्निकार्यत्वं न स्यात्पूर्वोत्तरभावनियतत्वात्कार्यकारणभावस्य तेन स्वरूपस्थित्या धूमवैशिष्ट्ये वह्निवैशिष्ट्याभावादेतत्ग्राहकत्वव्यवधानाभावादनुमानेऽतिव्याप्तिरित्याभिसन्धिः । तथात्वं धूमस्य पूर्वभावित्वं इति यावत् । द्वितीयेऽपि धूमवैशिष्ट्यं धर्मिविशेषणतया गृह्यते किं वा साध्यविशेषणतयेति विकल्प्य प्रथममपाकरोति * प्रतीताविति* धूमवैशिष्ट्यविशिष्टश्चेद्धर्म्मी तदा हेतोर्धूमस्य धर्मिविशेषणभूतस्यात्मनि वृत्तिः स्यादित्यंशतः स्ववृत्त्यापातो धर्मिनिष्ठतया हेतोर्वक्तव्यत्वादित्यर्थः । परिशिष्टं कल्पं श्लथयति *साध्येति* धूमवैशिष्ट्यस्य साध्यविशेषणत्वे यो धूमवान् सोऽग्निमानिति प्रत्यक्षे साध्यत्वं न स्याद्धूमवैशिष्ट्यप्रतीतिरूपव्यवधाना-

दन्यथा धूमस्य धूमेनैव व्याप्तिग्रहापत्तेरित्यतिव्याप्तिरिति यावत् ।

एवमौपाधिको धर्म्मः साक्षात्वं नेत्युक्ते ऽस्तु जातिरित्याह ।

४६९ प्रत्यक्षत्वस्य जातित्वनिरासः ।

अथ ज्ञानस्य जातिभेदः कश्चित्साक्षात्त्वं, तत्रानुभवत्वेन परापरभावानुपपत्तिः स्मृतेरपि साक्षात्कारित्वादिति केचित् । तन्न । स्मृतेस्तथात्वानभ्युपगमात् । स्वप्नस्य तावत् स्मृतित्वासिद्धेः सिद्धौ वा तत्र साक्षात्त्वारोपोपगमात् । भावनाबलजस्य च क्वचिदालोकादिधर्मिकप्रियाद्याश्रयधर्मारोपत्वं शुक्तिरजतभ्रमवत् निमीलितनयनादेश्च स्वप्नवदेव गतिरवगन्तव्येति ।

* अथेति * संशयत्वादिव्यतिरिक्तत्वे सति ज्ञानत्वापरजातिः साक्षात्त्वमित्यर्थः । प्राभाकरोक्तदूषणं दर्शयति *तत्रेति* अनुभवत्वं न परजातिस्तदभावेऽपि स्मृतौ साक्षात्वभावान्नापि साक्षात्वं परमसाक्षात्कार्यनुमानादावनुभवत्वभावादिति परापरभावानुपपत्तेर्जातिसङ्करस्य परस्परव्यभिचारिणोरेकत्रावस्थानस्य सङ्करस्य जातिबाधकत्वादित्यर्थः । स्मृतेः साक्षात्कारित्वादित्युक्तहेत्वसिद्ध्या तदुक्तं दूषणं परिहरति * तन्नेति * तार्किकैः स्मृतेः साक्षात्त्वानङ्गीकारात्साक्षात्त्वमपरमनुभवत्वं परमिति शक्यत एव परापरभावो निरूपयितुमित्यर्थः । स्वप्नज्ञानं स्मृतिः संस्कारमात्रज-

त्वात्सम्प्रतिपन्नवदपरोक्षं च इदन्तावभासत्वात् कुम्भोऽयमिति ज्ञानवदतः स्वप्नस्मृतावनुभवाभावेऽपि साक्षात्त्वादुक्तदोष इत्यत आह *स्वप्नस्येति* संस्कारमात्रजत्वमसिद्धं दोषजन्यत्वादितियावत्।जाग्रत्युपलब्धानामेव स्वप्ने दर्शनात्तज्ज्ञानं स्मृतिः प्रसिद्धस्मृतिवदित्याशङ्क्याह * सिद्धौ चेति * साक्षात्त्वं तत्रारोप्यते न मुख्यं साक्षात्त्वमतो न साङ्कर्यमित्यर्थः। भावनाबलात्कामिन्यादिसाक्षात्कारो दृश्यमानः स्मृतिरेवेति तत्राह * भावनेति * आलोकादिधर्म्यधिष्ठानं यस्य प्रियाद्याश्रयधर्मारोपस्य स तथोक्तः। एतदुक्तं भवति चक्षुःसम्प्रयुक्तालोकदेशादौ धर्मिणि कामुकस्य कामादिदोषात् ध्यायतो द्वेषादिदोषाच्च सुभ्रूः सुनासेत्यादिप्रियाश्रयधर्म्मा असुखहेतुत्वादयः शत्र्वाश्रयधर्मा आरोप्यन्त इति। निमीलितनयनस्याक्षादिसम्प्रयोगानुभवकारणाभावे यद्देवताद्यापरोक्ष्यं ध्यानबलाद्दृश्यते पारिशेष्यात् स्मृतिरेवेत्यत आह * निमीलितेति * मनोनिरोधदोषसहितात्ममनःसंयोगाज्जायमानतया स्वप्नवत् भ्रान्तिरित्यर्थः।

एवं परोक्तदोषस्यानुपादेयत्वमुक्त्वा स्वयमुच्यमानस्योपादेयत्वमाह।

४७० प्रत्यक्षत्वस्य जातित्वे दोषकथनम्।

इदन्तु स्यात् परमाण्वादिबुद्धावनुव्यवस्यमानायां परमाणुप्रतीत्यंशेऽपि साक्षात्त्वमनुभूयत इत्यत्र न नः सम्प्रतिपत्तिः। अन्यथा लिङ्गबुद्धिलक्षणया प्रत्यासत्त्या

वह्निरपि मानसप्रत्यक्ष एव न लैङ्गिक इति परेण सुवच त्वात् । एवं प्रत्यभिज्ञायां पूर्वदेशकालस्थितिमस्य प- श्यामीति कस्यानुभवो यद्बलाऽत्तथाभ्युपेयं तस्मात्प्रती- ति कलहोऽयम् ।

*इदन्त्विति* द्व्यणुकं स्वपरिमाणादणुतरपरिमाणा- रब्धं कार्यद्रव्यत्वात्पटवदित्यनुमानजा परमाण्वादि- बुद्धिर्ज्ञाता: परमाण्वादय इत्यनुव्यवस्यते निर्विषयबु- द्धेरनुव्यवस्यत्वायोगात्तद्विषयपरमाण्वादिरपि तत्र- भात्येवेति मानसानुव्यवसायस्य तत्राप्यपरोक्षत्वं स्यान्न चैवमनुभवोऽस्ति परमाणूनामयोगिगम्यत्वापा तादित्यर्थः । व्यवसायः परमाणुविषयः स चात्म- समवेत आत्मा च मनः संयुक्त इति बुद्धिलक्षणसं- निकर्षात्परमाणुरपि प्रत्यक्ष इत्यत आह * अन्यथेति * वन्हिसम्बद्धो धूमस्तद्विषयं ज्ञानमात्मनि विशेषणं स च मनस्संयुक्त इति लैङ्गिकोऽपि प्रत्यक्षः स्यादित्य- र्थः। चक्षुःसंयुक्तदेवदत्तविशेषणसंस्कारविषयः पूर्वदेश- काल सम्बन्धः सोऽयमिति प्रत्यभिज्ञायां संस्कारलक्ष- णप्रत्यासत्त्या प्रत्यक्षीक्रियते तद्वदनुमेयोऽपीत्यत आ- ह * एवमिति * अस्य–प्रत्यभिज्ञायमानस्य पूर्वदेश- कालस्थितिं सम्बन्धमित्यर्थः । विप्रतिपन्नानुभवान्ना- र्थसिद्धिरित्युपसंहरति * तस्मादिति *

किं च साक्षात्त्वं जातिः किं प्रत्यक्षगम्योतानु- मेयेति विकल्प्य प्रथममनुवदति ।

४७१ साक्षात्त्वजातेः प्रत्यक्षगम्यत्वनिरासः।

यदि च साक्षात्त्वं जातिरध्यक्षमानिका तदा प्रतीतौ कस्याञ्चिदध्यक्षानध्यक्षात्विवादो न स्यात्। न हि घटादिप्रत्यक्षत्वे विवदन्ते। क्वचिदस्फुटत्वाद्विवाद इति चेत्। नैवम्। निरंशे वस्तुनि कः स्फुटत्वानवभासः। यद्येकार्थसमवायिभिर्भूयोभिः सहोपलम्भः, स ज्ञानत्वादिवत्साक्षात्त्वेऽपि तर्हीति ज्ञानादित्वे न विवादः साक्षात्त्वे त्विति विशेषो वाच्यः। दर्शनकृतो हि विवादो न मात्सर्येण वाङ्मात्रेण वा किन्तु तत्त्वाभिमानादेव।

*यदीति* तर्हि वादिनां व्यवसायादिषु प्रत्यक्षत्वविवादो न स्यादिति दूषयति *तदेति* कुतो विवादासम्भव इत्याशङ्क्य प्रत्यक्षे घटादौ तथात्वे विप्रतिपत्त्यदर्शनादित्याह * नहीति * घटादेः स्फुटावभासत्वाद्विवादाभावेऽप्यस्यास्फुटावभासत्वात्प्रत्यक्षत्वे विवादः स्यादिति शङ्कते * क्वचिदिति * साकल्येनार्थग्रहणं स्फुटावभासः साक्षात्वजातेरनवयवत्वादवभासेत् स्फुट एवेति परिहरति * नैवमिति * साकल्येनार्थग्रहणं न स्फुटावभासः किं तु ज्ञानत्वानुभवत्वप्रमात्वादयो भूयांसो ऽपरोक्षत्वेनैकार्थसमवायिनो धर्माः सन्ति तैः सह ग्रहणं स्फुटावभास इत्याशङ्क्याह

१ स ज्ञानादित्ववत्साक्षात्त्वेऽपि तर्हि ज्ञानादित्वे न विवादः साक्षात्त्वेऽपि विशेषो वाच्यः दर्शनकृतो हि विवादो न मात्सर्येण वाङ्मात्रात्किन्तु इति सो॰ पु॰ पा॰।

* यदीति * तर्हि साक्षात्त्वस्य ज्ञानत्वादिवत्स्फुटाव-भासो विद्यते ततश्च ज्ञानादित्वे यथा नास्ति विवादस्तथा साक्षात्त्वेऽपि न स्यादविशेषादित्याह * स इति * साक्षात्त्वे स्फुटमवभासमानेऽपि परोक्षेन तत्र विवादितव्यमिति मात्सर्यनिमित्तोऽपवादः स्यादित्यत आह * दर्शनेति *

एवं परमाणुबुद्धिविषयानुव्यवसाये साक्षात्त्व-परोक्षत्वसाङ्कर्यमुपवर्ण्य सम्प्रत्यनुमानविशेषेऽपि तदुपपादयति ।

४७२ प्रत्यक्षत्वस्य जातित्वे साङ्कर्यम् ।

प्रत्यक्षार्थधर्मिकायाश्चानुमायां साक्षात्त्वपरोक्षत्वसङ्करो दुर्व्वारः । परोक्षत्वं न जातिः किन्तु साक्षात्त्वमेव तथा केवलन्तु साक्षात्त्वाभावः परोक्षत्वमिति चेन्न । अस्यार्थस्या[१]ऽविनिगन्तव्यत्वापत्तेः[२] । सर्वज्ञमनुमन्यमानस्य च मते दृष्टलिङ्गादेरीश्वरस्य लिङ्ग्यादिबुद्धावपरोक्षत्वेनापि विरोधः। लिङ्गादिधीजन्यत्वमनुमितित्वादौ प्रयोजकमिति चेत्। साक्षात्त्वेऽपि तर्हीन्द्रियसन्निकर्षादिजत्वमिति साक्षादपि सा न स्यात् ।

*प्रत्यक्षेति* वह्निमान् गिरिरिति प्रत्यक्षधर्मिकानुमा धर्मिविशिष्टसाध्यधर्मं गोचरयति तत्र धर्म्यंशे सासाक्षात्स्यादिन्द्रियजत्वात् धर्मांशे लिङ्गजत्वेन परोक्षा स्यादित्येकस्यामेव निरंशायामनुमायां साक्षा-

१ न भवितव्यमिति सो० पु० पा० ।

२ विनिगन्तव्यत्त्वापत्तेरिति सो० पु० पा० ।

त्वपरोक्षत्वसङ्कर इत्यर्थः । परोक्षत्वापरोक्षत्वयोरपि जातित्वे स्यादयं दोषो न चैवं परोक्षत्वस्याजातित्वादिति शङ्कते * परोक्षत्त्वमिति * भावरूपधर्मयोः परस्परव्यभिचारे सत्येकत्रावस्थानं भवति साङ्कर्यमजातित्वेऽपीत्यत आह *केवलमिति* परोक्षत्वं जातिरपरोक्षत्वं तदभाव इति विपरिवर्तिप्रसङ्गान्मैवमिति परिहरति *नेति* न्यायतः परोक्षत्वापरोक्षत्वसाङ्कर्यं प्रतिपाद्य तदङ्गीकारपर्यालोचनेनाप्युपपादयति * सर्वज्ञमिति * दृष्टो लिङ्गादिर्येन स दृष्टलिङ्गादिरादिपदेनागमादयो गृह्यन्ते । एतदुक्तं भवति । ईश्वरस्य सर्वमेव करतलादिवदपरोक्षं तत्र धूमाद्यापरोक्ष्याद्वह्न्यादिज्ञानं जायतैव ज्ञायमानलिङ्गादेर्लिङ्ग्यादिज्ञानजनकत्वस्वाभाव्यादेवं च वह्निज्ञानमैश्वरं परोक्षं लिङ्गजत्वादपरोक्षं च न च तत् ज्ञानद्वयमेकस्मिन् युगपदेकजातीयविशेषगुणद्वयसमवायाविरोधान्न च तत्परोक्षमेवेश्वरप्रत्यक्षं सर्वविषयमित्युपगमादिति वह्न्यादिबुद्धावपरोक्षत्वेनापि परोक्षत्वस्य साङ्कर्यं नाम विरोधः स्यादिति । नित्याया ईश्वरबुद्धेर्लिङ्गाद्युपरक्ताया लिङ्ग्याद्युपरागोऽपि भवतीत्येतावता न परोक्षत्वमनुमित्यादित्वे लिङ्गादिजन्यत्वस्य प्रयोजकत्वादिति शङ्कते * लिङ्गेति * अतिप्रसङ्गेन परिहरति * साक्षात्वेऽपीति * इन्द्रियसन्निकर्षजत्वं साक्षात्वप्रयोजकमिति कृत्वा तदजन्या बुद्धिः साक्षादपि न स्यादिति साक्षात्वस्य स्वरूपहानिरित्यर्थः ।

न केवलं परस्वीकारनिरूपणायां साक्षात्वजा-

स्यसम्भवः किं तु जातिस्वभावनिरूपणोऽपीत्याह ।

४७३ व्यञ्जकाभावात्प्रत्यक्षत्वस्य जातित्वाभावः ।

व्यञ्जकोपाधिर्नियता च जातिरिष्यते । नच तदत्र उक्तप्रकारबाधात् । नच व्यञ्जकनियमानभ्युपगत्या न तदत्रोपगम्यमितिवाच्यम् । किं मया दृष्टं तथा किं वा केन चित्कथितमिति संशयानुपपत्तेः । प्राग्भूतायां स्मर्य्यमाणायां तद्बुद्धौ त्वन्मते मनसा ज्ञानरूपया प्रत्यासत्त्या प्रत्यक्षीक्रियमाणायां साक्षात्त्वाऽग्रहो विना व्यञ्जकाभावं कथं स्यात् ।

* व्यञ्जकेति * अस्तु ततः किं तत्राह न *चेति* हेतुमाह * उक्तेति * सविशेषार्थप्रकाशत्वादिकथितप्रकाराणां निरासादित्यर्थः । अस्माभिर्जातेर्नियतोपाधिज्ञाप्यत्वानभ्युपगमान्न साक्षात्वजातावसावभ्युपगन्तव्य इत्याशङ्क्याह *न चेति* कुत इत्यत आह * किमिति * ज्ञानाकारातिरिक्तसाक्षात्त्वस्य व्यञ्जकानङ्गीकारात्तन्मया दृष्टमुत केन चित्कथितमिति दृष्टे तथा संशयो न स्याद्दृष्टमित्येवापरोक्षत्वनिश्चयः स्याद्विशेषाग्रहणस्य संशयप्रयोजकस्यासत्त्वादित्यर्थः । उपपादयति * प्रागिति * पूर्वोत्पन्ना प्राग् बुद्धिर्यदा स्मर्यते तदा तद्विषयस्मृतिज्ञानस्य मनःसंयुक्तात्मनि समवायात् ज्ञानरूपैव प्रत्यासत्तिस्तस्या बुद्धेर्मनसा सह त्वन्मते तया प्रत्यासत्त्या तस्यां पूर्वोत्पन्नबुद्धौ प्रत्यक्षीक्रियमाणायां साक्षात्वाग्रहो

व्यञ्जकाभावं विना कथं स्यात्सति व्यञ्जके तद्गत-साक्षात्त्वग्रहः स्यादेव । न च गृह्यते, स्मर्यमाणायां तद्बुद्धौ साक्षात्त्वासाक्षात्त्वसंशयानुपपत्तेस्तस्मात्संशयादगृह्यमाणायामेवेति वाच्य मतो यस्याभिव्यञ्जकस्याग्रहात्संशयस्तदभिव्यञ्जकं तस्योपगन्तव्यमित्यर्थः ।

न ज्ञानधर्मः साक्षात्त्वं किं तु मेयधर्मः तद्विषयतया ज्ञानस्य साक्षात्त्वव्यपदेश इत्याशङ्क्याह ।

४७४ प्रत्यक्षत्वस्यार्थधर्मत्वनिरासः ।

अर्थधर्मश्च साक्षात्त्वमिति स्वप्रकाशवादे निरस्तम् ।

* अर्थेति * कर्मलक्षणखण्डनेन तत् खण्डितमित्यर्थः ।

यद्यप्यौपाधिकं जातिरूपं वा साक्षात्त्वमर्थधर्मो वा न सम्भवत्युक्तयुक्तितस्तथाऽपि न स्वरूपमपलपनीयमनुगतप्रत्ययव्यवहारविरोधादिति शङ्कते ।

४७५ प्रत्यक्षत्वस्य पदार्थान्तरत्वनिरासः ।

तथाप्यबाधितसाक्षात्त्वबुद्धिव्यवहारबलादन्ततः पदार्थान्तरमपि साक्षात्त्वमननुमत्य न निस्तारोऽस्ति, भ्रान्तेरप्यभ्रान्तिपूर्वकत्वादिति चेन्न । तस्यापि साक्षाद्ग्रहे क्वचिदपि तद्विवादो न स्यादित्यादिदोषसाम्यात् । अनुमानादिवेद्यत्वे च लिङ्गाद्यनुपपत्तेः क्व च व्याप्त्यादिग्रह इत्यादिरुत्तरपरम्परैव स्यात् । सप्तपदार्थीनियमसाधनानि च न कथं परिपन्थीनि स्युरिति ।

* तथापीति * असत्यपि विषये प्रत्ययव्यवहाराविदं रजतमितिवत् भ्रान्तौ स्यातामित्याशङ्क्याह * भ्रान्तेरिति * अन्यथाख्यातित्वाद्भ्रान्तेस्तथात्वमुपगम्याप्यन्ततस्तत्स्वीकार्यमन्यत्र सत एवान्यत्र भ्रान्तिविषयत्वादित्यर्थः । उक्तदूषणातिदेशेन परिहरति * नेति * अर्थान्तरमपि साक्षात्त्वं न सम्भवति यदि वाऽध्यक्षमानिकेत्यादिना कथितदोषस्य तस्यापि समानत्वादिति । लिङ्गशब्दसादृश्यानुपपद्यमानत्वयोग्यानुपलब्धीनामभावान्नानुमादिगम्यमिति द्वितीयं दूषयति * अनुमानादीति * क्व चित्प्रत्यक्षेण व्यापकादिना व्याप्यादेर्गृहीतसङ्गतिकस्यानुमानादिबुद्धिजननात्साक्षात्त्वस्य क्व चिदप्यप्रत्यक्षत्वे व्याप्त्याद्यग्रहादनुमेयताद्यनुपपत्तिरित्याह * क्व चेति * अनवसानदोषपरम्परा स्यादिति यावत् । दोषान्तरमाह * सप्तेति * द्रव्यादयः षट् पदार्था अभावः सप्तमः सप्तानां पदार्थनां समाहारः सप्तपदार्थी तन्नियमगोचराणि प्रमाणानि कथं न विरोधीनि स्युः साक्षात्त्वस्य न द्रव्यादित्रिकेऽन्तर्भावः गुणवृत्तित्वान्नापि सामान्यादित्रिकेऽनित्यत्वान्नाप्यभावता प्रतियोग्यनिरूप्यत्वादिति द्रव्यादिपदार्थातिरिक्तत्वप्रसङ्गादित्यर्थः ।

साक्षात्त्वस्य लक्षणान्तरमाशङ्कते ।

४७६ प्रत्यक्षस्य लक्षणान्तरनिरासः ।

लिङ्गादिजत्वाभावसमुदायवती धीः साक्षादितिचेन्न । परोक्षविषयसंशयादावतिव्याप्तेः । ईदृशीप्रमा तथेति चे-

न । प्रत्यक्षप्रमाव्याप्तेः ।

* लिङ्गेति * लिङ्गशब्दसादृश्यजन्यत्वाभावविशिष्टं ज्ञानं साक्षादित्यर्थः । धीरित्युक्तेऽनुमायामतिव्याप्तिस्तन्निवारणाय लिङ्गजन्यत्वाभाववतीत्युक्तम् । आगमादिनिरासायादिपदोपादानम् । लिङ्गादिजन्यधर्मेतरेतराभाववत्ताऽनुमानादावस्तीति तदपोहाय पुनः समुदायविशेषणम् । नेदमपि लक्षणमतिव्यापकत्वादित्याह * नेति * परमाणुर्वा जगत्कारणं प्रधानं वेति परोक्षसंशयः प्रधानमेवेति परोक्षभ्रान्तिः सा मे मातेति स्मृतिरेतासु लक्षणातिव्याप्तिरपरोक्षत्वाभावेऽपि कथितरूपत्वादित्यर्थः । लिङ्गादिजन्यत्वाभावसमुदायवती प्रमा साक्षादिति विवक्षितत्वान्नातिव्याप्तिरिति शङ्कते *ईदृशीति* अतिव्याप्तिपरिहारेऽपि नाव्याप्तिपरिहार इत्याह * नेति * प्रमाप्रमासाधारणसाक्षात्त्वमात्रस्य लक्ष्यमाणत्वादव्याप्तिरित्यर्थः ।

अव्याप्त्यतिव्याप्तिपरिहाराय प्रकारान्तरेण लक्षणं विशिनष्टि ।

४७७ प्रकारान्तरेण लक्षणनिरासः ।

अनुमानादिव्यवच्छेद्यतत्तदसाधारणकारणाजनिता धीः साक्षादिति चेन्न । एवं हि प्रत्यक्षतत्तदपरव्यतिरिक्ता धीरनुमानादिरिति वैपरीत्यमत्र कुतो न स्यादित्यविनिगम्यत्वं स्यात् । तेषु व्यवच्छेद्येष्वेकद्यादि परिहाय व्यवच्छेद्यहेत्वजनितत्वेनापि साक्षात्त्ववत्तत्र तत्रानुगत-

बुद्ध्याद्यन्तरापत्तेः । व्यवहारे सति निमित्तानुसरणं न तु निमित्तानुसरणेन व्यवहार इति चेन्न। निमित्तस्यानत्या-पत्तिद्वारस्यैव कल्प्यत्वात् । तत्तज्जनितत्वाभावो हि ते-नैव रूपेणानुगतव्यवहारप्रत्ययावादध्यान्न त्वन्येना-पि । तथात्वे यावत्परिदृष्टव्यक्तिविशेषान्यत्वेन व्यवहारो-पपत्तौ गोत्वाद्युच्छेदप्रसङ्गः । तस्मात्—

विधिजः प्रत्ययोऽन्योऽयं व्यतिरेकासमर्थनः ।
नैवं चेदपराद्धं ते किमन्यापोहवादिना ॥ ४१ ॥

*** अनुमानादीति * अनुमानमादिर्येषां तान्यनु-मानादीनि । अनुमानागमोपमानपरोक्षभ्रमसंशयस्म-रणानि तान्येव व्यवच्छेद्यानि तेषां तानि तान्यसाधा-रणकारणानि लिङ्गशब्दसादृश्यविप्रतिपत्तिहेत्वाभा-ससंस्काराख्यानि तदजन्यं ज्ञानमिति लक्षणं स्यादित्य-र्थः । एवं च प्रत्यक्षसिद्धौ तद्व्यावृत्तानुमादिसिद्धिस्त-त्सिद्धौ च तद्व्यावृत्तप्रत्यक्षसिद्धिरिति परस्पराश्रय इ-त्याशयेन परिहरति *नेति* प्रत्यक्षं च तेभ्यस्तेभ्योऽ-नुमानादिभ्योऽपराणि च प्रत्यक्षतत्तदपराणि तद्व्यतिरि-क्ता इन्द्रियशब्दसादृश्यविप्रतिपत्तिहेत्वाभाससंस्का-राजन्या धीरनुमानं, इन्द्रियलिङ्गसादृश्यविप्रतिपत्त्या-द्यजन्या धीरागम इत्यादिप्रत्येकमनुमानादिलक्षणं कु-तो न स्यादित्यनिश्चयत्वं लक्षणस्येत्यर्थः । अतिप्रस-ङ्गबाधमाह * तेष्विति * एकद्व्यादि परिहाय—एकं द्वयं त्रयं वा परित्यज्य व्यवच्छेद्यहेत्वजनितत्वेनाप्य-**

नुगतरूपेण तत्र तत्रानुमादावनुगतबुद्ध्यन्तरादेः प्रत्यक्षबुद्धिव्यतिरिक्तबुद्धिव्यवहारयोरापत्तिर्यथा ऽनुमादिहेत्वजन्यत्वेन घटादिप्रत्यये प्रत्यक्षमित्यनुगतबुद्धिव्यवहारौ । एतदुक्तं भवतीन्द्रियाजन्यत्वेनानुगतरूपेणानुमादिषु लिङ्गसादृश्याजन्यत्वेन प्रत्यक्षागमयोः शब्दसादृश्यसंस्काराजन्यत्वेन प्रत्यक्षानुमयोः लिङ्गसादृश्याजन्यत्वेन प्रत्यक्षस्मरणयोरनुगतबुद्धिव्यवहारौ स्यातां लिङ्गाद्यजन्यत्वेन घटादिप्रत्ययेषु प्रत्यक्षबुद्धिव्यवहारवदविशेषादिति । नैमित्तिकानुसारि निमित्तं प्रसिद्धं न निमित्तानुसारि नैमित्तिकं घटादौ व्यभिचारादिति शङ्कते *व्यवहार इति* सत्यं यत्र नैमित्तिकं दृष्ट्वा निमित्तं कल्प्यते तत्रान्ययोगायोगव्यवच्छेदेन नियतमेव कल्प्यं न्यायविद्भिरन्यथा दर्शनमात्रशरणतया विचारानवतारापातादिति परिहरति * नेति * अत्यापत्ति रतिप्रसक्तिः तस्या द्वारं मुखमत्यापत्तिद्वारं तन्न भवतीत्यनत्यापत्तिद्वारमतिप्रसङ्गानापादकमिति यावत् । तत्तद्धेत्वजनितत्वमनुगतप्रत्ययव्यवहाराधायकमनुगतरूपत्वाद्गोत्ववदिति तत्र तत्रानुगतव्यवहारप्रत्ययावनुमेयौ स्त इत्याशङ्क्याह *तत्तदिति* तज्जनितत्वाभावो निषेधरूपेणाभावगोचरावनुगतप्रत्ययव्यवहारौ कुर्यान्न विधिरूपेणाप्येवं च तत्तल्लिङ्गाद्यजन्यत्वेन घटादिप्रत्ययेषु न प्रत्ययव्यवहारौ इत्यर्थः । उक्तमर्थं विपक्षदण्डप्रदर्शनेन दृढीकुर्वन्नाह * तथात्व इति * विधिमुखेनापि प्रत्यक्षव्यवहाराधायकत्व इति यावत् । प-

रिदृष्टव्यक्तिविशेषा अश्वादयस्तदन्यत्वेनैव गोत्वादिव्यवहारोपपत्तेर्गोत्वाद्युच्छेदप्रसङ्गः प्रयोजनप्रमाणयोरभावादित्यर्थः। यस्मादन्यव्यावृत्तिरभावव्यवहारं करोति तस्मादित्युत्तरश्लोकापेक्षितं पूरयति * तस्मादिति * विधिजो भावजन्यः व्यावृत्तिगोचरात्प्रत्ययादन्यः। हेतुमाह * व्यतिरेकेति * व्यतिरेकेणाभावेन समर्थनं नास्ति यस्य स व्यतिरेकासमर्थनः। उक्तमर्थं परं बलादङ्गीकारयति * नैवमिति * यदि भावप्रत्ययोऽप्यभावविषयस्तर्हि गौरिति शब्दप्रत्ययावगोव्यावृत्तिविषयाविति वदता बौद्धेन किमपराद्धं ततश्च

"सिद्धश्च गौरगोभ्योऽन्यो गोनिषेधात्मकश्च सः।
तत्र गौरेव वक्तव्यो नायं गौः प्रतिषिध्यते॥
गव्यसिद्धेप्यगौर्नास्ति तदभावे तु गौः कुत"

इत्यादिना कथितेतरेतराश्रयस्तवापि स्यादित्यर्थः।

प्रत्यक्षलक्षणान्तरमनुवदति।

४७८ प्रत्यक्षलक्षणान्तरनिरासः।

शब्दानुमानोपमानजप्रमितिव्यतिरिक्तत्वे सति प्रमितित्वं प्रत्यक्षलक्षणमभिधाय यः कोपि न त्रपते स प्रष्टव्यः किं प्रत्येकमिदं लक्षणमुत मिलितम्। नाद्यः प्रत्येकं व्यभिचारात्। द्वितीये किं मिलितानां निषेधः उत निषेधानां मिलितत्वम्। नाद्यः प्रत्येकमेव व्यभिचारात्। न हि प्रत्येकमनुमित्यादौ मिलिततद्रूपसम्भवः। नापि द्वितीयः मिलितास्त्वनुमित्यादिषु निषेधमेलकस-

भवेऽपि प्रत्यक्षत्वानभ्युपगमात् ।

* शब्देति * प्रमितित्वं प्रत्यक्षत्वमित्युक्तेऽनुमादावतिव्याप्तिस्तन्निरासाय शब्देत्यादिविशेषणम् । शाब्दादिजप्रतीतिव्यतिरिक्तत्वमित्युक्ते घटादि व्याप्नुयात्तदर्थमाह *प्रमितित्वमिति* भ्रान्त्यादिपरासाय प्रमेतिविशेषणम्।एवं विधं लक्षणं सर्वत्रैव कथयितुं शक्यमिति प्रागुक्तपरस्पराश्रयादिदोषग्रासाल्लज्जाकारणं प्राप्तमथवाऽयं निर्लज्ज एव कोऽपि लक्षणं वक्तीत्यर्थः । आक्षेप एव लक्षणमन्यथयतीत्यन्यथयितुं विकल्पयति * स इति * शब्दजप्रतीतिव्यतिरिक्तप्रतीतित्वमनुमानजप्रमितिव्यतिरिक्तप्रमितित्वमुपमानजप्रतीतिव्यतिरिक्तप्रमितित्वमिति प्रत्येकं लक्षणमुत त्रयं मिलितमिति विकल्पार्थः । प्रथमं दूषयति * नेति * एकैकव्यतिरिक्तत्वाविवक्षायां तदितरयोरतिव्याप्तिरित्यर्थः । द्वितीये विकल्पेऽवद्यं कथयितुं विकल्पयति * द्वितीय इति * मिलितानां शब्दानुमानोपमानानामन्योन्याभावो यत्र प्रमितौ तत्प्रत्यक्षमुत शाब्दादित्रयप्रतियोगिकान्योन्याभावत्रयसमुदायो यस्यां प्रमितौ तत्प्रत्यक्षमिति विकल्पार्थः । उक्तदोषादेव न प्रथम इत्याह * नेति * कथमन्यदीयो दोषोऽन्यत्र भवेदित्यत आह * नहीति * यद्यप्यनुमित्यादौ प्रत्येकं स्वप्रतियोगिकेतरेतराभावो नास्ति तथाऽपि मिलितत्रयरूपत्वमेकस्य नास्तीति मिलिताभावः प्रत्येकमस्तीत्यर्थः । निषेधानां मेलनं लक्षणमिति द्वितीयेऽपि दूषणमाह * नापीति * मि-

लिता अनुमित्यादय एकैकस्वभावा न भवन्तीति मिलितास्वनुमित्यादिषु लक्षणातिव्याप्तिरित्यर्थः।

एकत्वे सति शाब्दादिप्रतीतिप्रतियोगिकेतरेतराभावसमुदायवती प्रमा प्रत्यक्षमिति लक्षणं विशिष्टमाशङ्कते।

४७९ विशिष्टलक्षणनिरासः।

न बह्वाश्रयाणामुक्तनिषेधानां लक्षणत्वमपि त्वेकाश्रयाणामिति चेन्न। समुदायिभेदेऽपि समुदायस्यानुमित्यादिवदेकत्वोपचारबीजाविशेषाभ्युपगम इति हि वक्ष्यते। असमुदायत्वे सतीत्यपि विवक्षितमिति चेन्न। समुदायत्वविशिष्ट एवांशतः स्वात्मनि वृत्तिविरोधभयेनासमुदायत्वस्यैष्टव्यत्वेन तादृशि प्रसङ्गो दुर्वारः। ज्ञानस्यैवं विवक्षितमिति चेन्न। विशिष्टस्यापि ज्ञानस्य ज्ञानत्वादेव।

* नेति * मिलिता अनुमित्यादयो बन्ध्योऽस्त एकेतिविशेषणाभावान्नातिव्याप्तिरित्यर्थः। समुदायिभेदेऽपि समुदायस्यैकत्वात्तदुपाधावनुमित्यादेरप्येकत्वादतिव्याप्तिरेवेति परिहरति * नेति * वैशेषिकमते गुणस्य गुणत्वेनैकानुमितिरेका शाब्दीत्यादिव्यवहारो नैकत्वसङ्ख्यागुणवत्तया किन्तु द्व्यादिसङ्ख्यायोगवैधुर्यादुपचारात्तत्समुदायेऽप्यविशिष्ट इत्यतिव्याप्तिरित्यर्थः। एकोपचारे बीजं यस्य तत्तादृशं तत्त्वाविशेषाभ्युपगम इति यावत्। एकत्वेऽसमुदायत्वे-

त्व सति शब्दादिप्रतीतिप्रतियोगिकेतरेतराभावसमुदायवत्प्रत्यक्षमिति विवक्षितत्वान्नातिव्याप्तिरिति शङ्कते * समुदायत्व इति * अकिंचित्करमिदं विशेषणमिति परिहरति *नेति* समुदायत्वविशिष्ट एवासमुदायत्वस्यैष्टव्यत्वेन तादृशि समुदायत्वविशिष्टानुमितिसमुदाये समुदायान्यत्वविशिष्टलक्षणप्रसङ्गो दुर्वारः। हेतुमाह * अंशतः स्वात्मनि वृत्तिविरोधभयेनेति * समुदायत्वविशिष्टः समुदायो भवतीति न विधातुं शक्यते समुदायत्वाधिकरणविशिष्टे समुदायत्वाधिकरणात्मत्वविधानेऽशतो विशेषणांशे समुदायत्वे समुदायत्वस्यात्मनि वृत्तिप्रसङ्गादित्यर्थः। ज्ञानत्वे सति कथितविशेषणवत्प्रत्यक्षमिति लक्षणाद्ज्ञानात्मके समुदाये कथमतिव्याप्तिरिति शङ्कते * ज्ञानेति * शुक्लस्यापि पटत्ववत्समुदायत्वविशिष्टेऽप्यनुमित्यादौ ज्ञानत्वमस्त्येवेति परिहरति * नेति *

अनुमित्यादावतिव्याप्तिमुक्त्वेदानीमव्याप्तिं कथयितुमेकाश्रयाणामित्यत्रैकशब्दार्थे विकल्पयति।

४८० एकशब्दार्थविकल्पनिरासः।

एकेति च किमाश्रयव्यक्त्यभेदो विवक्षितः, उताभिन्नजातीयता, उतैकोपाधिकता, उतैकसङ्ख्यायोगिता, उत द्व्यादिसङ्ख्यायोगाभावः। आद्ये तद्विशिष्टस्याव्यापकतादोषः व्यक्त्यात्मनोऽभेदस्य व्यावृत्तत्वात् धर्मिणा च लक्षणविशेषणेऽलक्ष्यधर्मत्वं धर्मस्य स्यात् स्वस्यैव स्वधर्मत्वानुपपत्तेः। आश्रयाभेदस्योपलक्षणत्वे प्रागुक्तदोषः।

* एकेति * एकाश्रयाणामित्यभिन्नाश्रयाणामिति प्रथमः कल्पः एकजातीयाश्रयाणामिति द्वितीय एकोपाधिक्रोडीकृताश्रयाणामिति तृतीय इतरौ स्पष्टौ। कस्मिन् सति किं स्यादित्यत आह *आद्य इति* तद्विशिष्टस्याश्रयव्यक्त्यभेदविशिष्टस्य लक्षणस्येति यावत्। कुत इत्यत आह * व्यक्तीति * अभेदो व्यक्तिस्वरूपमेव तच्च व्यक्त्यन्तराद्व्यावृत्तमिति घटप्रत्ययाभेदविशिष्टाभावसमुदायस्य लक्षणत्वे घटादिप्रत्यक्षेऽव्याप्तिरित्यर्थः। किं चाश्रयव्यक्त्यभेदो लक्षणस्य विशेषणमुतोपलक्षणमिति विकल्प्य प्रथमं प्रत्याह * धर्मिणेति * धर्मस्य लक्षणस्येति यावत्। कुत इत्यत आह * स्वेति * लक्ष्याविशिष्टलक्षणस्य लक्ष्यधर्मत्वे लक्ष्यस्यापि स्वधर्मत्वं स्यान्न चैतद्युक्तं स्ववृत्तिविरोधादित्यर्थः। द्वितीयं प्रत्याह * आश्रयेति * उपलक्षणस्य व्यावर्त्याद्बहिर्भूतत्वात्तद्व्यावृत्तमभावत्रयमात्रं लक्षणं स्यात्तच्चानुमित्यादावपीति प्रागुक्तदोषतादवस्थ्यमित्यर्थः।

एकजातीयाश्रयाणामभावानां लक्षणत्वमिति द्वितीयोऽस्तु गदितावद्याभावात्तत्राह।

४८१ द्वितीयादिविकल्पनिरासः।

द्वितीये तदेवाभिन्नजातीयत्वं लक्षणमस्तु अवश्यन्तया प्राथम्येन प्रतीयमानत्वात्। न तृतीयः परोक्षप्रमितित्वस्यानुमित्यादिषु मिलितास्वपि भावात्। नापि चतुर्थः वैशेषिकपक्षे गुणतया तदभावात् भावे वाऽनुमि

त्यादित्रयवृत्तीनां त्रयाणामप्यभावानामेकत्वसङ्ख्यासामानाधिकरण्यसम्भवात्, मिलितानामप्येकसमुदायापेक्षया तथात्वात् । नापि पञ्चमः वैशेषिकमतानुसारेणानुमित्यादित्रयेऽपि तदभावस्य तुल्यत्वात् । अतदनुसारे[1] प्रत्यक्षव्यक्तिष्वपि द्व्यादिसङ्ख्यायोगात् ।

* द्वितीय इति * यथाऽपरोक्षत्वजात्या साजात्यं व्यक्तीनां सैव लक्षणमस्य लक्ष्यधर्मत्वे लक्ष्यस्यापि स्वधर्मयोगान्ययोगव्यवच्छेदेन प्रत्याययितुं सामर्थ्यात्तस्या इत्यर्थः। तस्योक्तलक्षणस्य च लक्ष्यव्यापकत्वसाम्ये सैवेत्यवधारणं कुतस्त्यं तत्राह * अवश्यन्तयेति * अवश्यं भावेनेति यावत् । अव्यवहितप्रतिपत्तिकत्वाल्लाघवाच्चेत्यर्थः।एकोपाधितैकशब्दार्थ इति तृतीयपक्षमाक्षिपति * नेति * कुत इत्यत आह * परोक्षेति * प्रत्यक्षमात्रनिष्ठमर्थजत्वादिकमुपाधि,स्तत्र यः कोऽपि, प्रथमे तदेव लक्षणमस्तु द्वितीये परोक्षप्रमितित्वमुपाधिरनुमित्यादावस्त्यस्ति चाभावत्रयमित्यतिव्याप्तिरित्यर्थः। न तुरीयोऽपि चातुरीयं प्राञ्चतीत्याह * नेति * हेतुमाह * वैशेषिकेति * अगुणतया गुणहीनतयेति यावत्। "गुणादीनां पञ्चानां निर्गुणत्वनिष्क्रियत्वे" इति भाष्यवचनात्प्रत्यक्षस्य च गुणत्वादेकत्वसङ्ख्यागुणायोगादसम्भव इत्यर्थः। एकं प्रत्यक्षमिति प्रतीतिव्यवहारदर्शनादेकत्वसङ्ख्योपेयत इति मतान्तरमाशङ्क्याह * भाव इति * अनुमित्यादित्रयवृत्तयस्तत्प्रतियोगिकान्योन्या-

1 अतदनुसारेणेति का० मु० पु० पा० ।

भावाश्रय एकत्वसङ्ख्या चाऽनुमित्यादिनिष्ठेत्यभावाना-मेकत्वसङ्ख्यया समानाश्रयत्वसम्भवादतिव्याप्तिरित्यर्थः। अयन्त्रीनामेकत्वसङ्ख्यासामानाधिकरण्यमिति कथं न प्रतिज्ञाविरोधस्तत्राह * मिलितेति * समुदाय्यपेक्षया तदसम्भवेऽपि समुदायोपाधावेकत्वसम्भव इति भावः। द्व्यादिसङ्ख्यायोगाभाव एकशब्दार्थ इति पञ्चमं प्रति-क्षिपति * नेति * वैशेषिकमतानुसारेणेदं लक्षणमु-च्यते उतान्येन केन चित्प्रथमं प्रत्याह * वैशेषिकेति * अनुमित्यादित्रयस्यापि गुणतया द्व्यादिसङ्ख्यायोगाभा-वादतिव्याप्तिरित्यर्थः। द्वितीयमपवदति * अतदिति * अतदनुसारे ततोऽन्यमतानुसरण इति यावत्। एकं प्रत्यक्षं द्वयं त्रयमिति च द्व्यादिसङ्ख्यायोगादसम्भवो लक्षणस्येत्याशयः।

एकत्र समाप्तद्व्यादिसङ्ख्याविधुरवृत्त्यनुमानादिप्र-तियोगिकान्योन्याभावत्रयं प्रत्यक्षलक्षणमतो नास-म्भव इति शङ्कते।

४८२ एकशब्दार्थविकल्पनिरासः।

तथापि नैकस्यां प्रत्यक्षव्यक्तौ द्व्यादिपरिसमाप्तिः द्व्यादिसङ्ख्यापरिसमाप्त्यभावश्च तदभावशब्देन विव-क्षित इति चेन्न। का हि परिसमाप्तिर्यैकस्यां व्यक्तौ ना-स्तीत्युच्यते। तत्रैव वृत्तिर्द्व्यादेः परिसमाप्तिः सैक-स्यां व्यक्तौ नास्तीति चेन्न। एवमेकत्वस्यापि न क्वचित्प-रिसमाप्तिः स्यात् न हि तस्य तत्रैव वृत्तिरन्यस्यैक-

त्वाभावप्रसङ्गात् । अत एकत्वसङ्ख्यावत्यामेव व्यक्तौ द्व्यादिपरिसमाप्तिरित्यविशेष एव ।

*तथापीति* तत्रैव वृत्तिः परिसमाप्तिस्तदभावश्च तदभावशब्देनेत्येकत्र परिसमाप्तद्व्यादिसङ्ख्याभावो द्व्यादिसङ्ख्यायोगाभावशब्देनेति यावत् । प्रत्यक्षत्वेनैकव्यक्तित्वेऽनुमानादिकमादायैव द्व्यादिपरिसमाप्तिरित्याशयः । असम्भवातिव्याप्त्योरन्यतरावश्यकत्वप्रतिपादनाय परिसमाप्तिस्वरूपं पृच्छति *केति* तत्रैव वृत्तिः परिसमाप्तिरिति पूर्ववादी लक्षणमाह । तत्रैवेत्येवकारानन्तरं वृत्तिशब्दो द्रष्टव्यः । अनुमितित्वशाब्दत्वोपमितित्वोपाधिक्रोडीकृतेष्वेव द्वित्वादि वर्तते नैवं प्रत्यक्षेऽनुमाद्यपेक्षणान्नातोऽसम्भवातिव्याप्ती इत्यर्थः । परिसमाप्तिमात्रस्येदं लक्षणमत एकत्वसामान्यादेः परिसमाप्यवृत्तितयाऽङ्गीकृतस्यापि परिसमाप्तिर्न स्यादिति परिहरति *नेति* एकस्यापीति भावपरो निर्देशः । एकत्वं तत्रैव परिसमाप्तं स्ववृत्तावाश्रयान्तरानपेक्षणादित्याशङ्क्य तदसिद्धमित्याह *नहीति* औष्ण्यस्य तेजोनिष्ठत्वेऽबादीनामनुष्णत्ववदेकत्वस्य तन्मात्रनिष्ठत्वेऽन्यत्रैकत्वव्यवहारो न स्यादित्यर्थः । फलितमाह *अत इति* ययोर्द्वित्वं वर्त्तते तयोर्द्वयोरप्येकत्वसङ्ख्यावत्वादेकस्यां व्यक्तौ द्वित्वादेः परिसमाप्तत्वाद् द्वित्वादिपरिसमाप्त्यभावलक्षणैकशब्दार्थाभावादेकाश्रयाणां निषेधानामभावे तल्लक्षणासम्भवे विशेषाभाव इत्यर्थः ।

तत्रैव वृत्तिलक्षणपरिसमाप्तिमेकत्वसङ्ख्याया उपपादयन्नाह ।

४८३ एकत्वसङ्ख्यया परिसमाप्तिशङ्कातन्निराकरणे ।

एकव्यक्तिगतैकत्वसङ्ख्याव्यक्तिर्नान्यत्रेति चेन्न । सत्ताव्यक्तेरप्येवम्भावप्रसङ्गात् अननुगतत्वापत्तेश्च । सत्तैकैव जातिरूपा एकत्वन्तु प्रतिव्यक्ति भिन्नं गुणपदार्थ इति चेत् । नूनं वैशेषिकैर्विप्रलब्धोऽसि, कथमन्यथा सदेकप्रत्यययोरनुभवव्यवहाराविशेषमपश्यन्नपि कानि चित्कानि चिदसम्बद्धान्यक्षराणि प्रलपसि । सत्त्वैकत्वयोः परापरत्वानुपपत्तेरेवं स्यादिति चेन्न । साम्यात् । जातिपरापरत्वध्रौव्यमेव च क्वाप्येकन्यूनवृत्तित्वे प्रमाणं स्यात् । क्व तथेति चेन्न । शैलेऽनलस्यानुमायां क्व हस्तवितस्त्यादौ तदंश इत्यनिश्चयवददोषत्वात् ।

* एकेति * एकत्वमेकव्यक्तावेव वर्त्तते व्यक्त्यन्तर एकत्वान्तरमत एकत्वसङ्ख्यावत्यामेव द्व्यादिपरिसमाप्तिर्नास्ति व्यक्त्यन्तरे ऽपि तस्या एव द्व्यादिव्यक्तेर्वर्त्तनादतो न लक्षणासिद्धिरित्यर्थः । एकत्वञ्च प्रतिव्यक्ति भिद्यते अबाधितानुगतप्रत्ययगोचरत्वात्सत्तावद्विपक्षे सत्ताया अपि प्रतिव्यक्ति भेदप्रसङ्ग इत्याशयवान्परिहरति * नेति * एकत्वस्य प्रतिव्यक्ति भेदे दोषान्तरमाह * अनन्विति * एकत्वं प्रतिव्यक्ति

१ नैवं स्यात् इति का० मु० पु० पा० ।

भिन्नं चेत्तर्हि प्रातिस्विकस्वरूपवदेकत्वमनुगतं न स्यादेवं च एको घट एकः पट इत्याद्यनुगतप्रत्ययव्यवहारौ निर्विषयौ स्यातामित्यर्थः । सत्तावदेकत्वमपि न प्रतिव्यक्ति परिसमाप्तमिति यदुक्तं तत्र दृष्टान्तं विघटयन्नाशङ्कते * सत्तेति * जातित्वात्सत्तायाः प्रतिव्यक्त्यभेद इति युक्तं एकत्वं तु प्रत्याश्रयत्त्वान्नाना छित्वाद्यन्यत्वे सति गुणत्वाद्रूपादिवदित्याह * एकत्वं त्विति * सोपहासं परिहरति * नूनमिति * विप्रलब्धोसि–वञ्चितोऽसीत्यर्थः । न गालिरेवार्थमन्यथयतीत्यत आह * कथमिति * सत्तावदेकत्वेऽप्यनुगतप्रत्ययव्यवहाराविशेषेऽपि सत्ता जातिरेका चैकत्वं तु गुणः प्रतिव्यक्ति नाना चेत्यवद्याक्षराणि कथमन्यथोपपद्येरन्नत एकत्वमपि जातिरिति स्वीकार्यमित्यर्थः । एकत्वस्य जातिताङ्गीकारे बाधकमाशङ्कते * सत्तेति * यद्येकत्वं जातिस्तर्हि सत्ताद्रव्यत्वयोरिव परापरभावो वाच्यस्तन्न सम्भवति सत्तायां सत्तावैधुर्येऽप्येकत्वभावेन न सत्ता परं नाप्येकत्वं परमेकत्व एकत्वाभावेऽपि सत्ताभावात् द्रव्यादौ च तयोः साङ्कर्यादेकत्वं गुण इत्यर्थः । सत्तैव गुण एकत्वं जातिरित्यत्रापि युक्तिसाम्यमिति परिहरति * नेति * सत्ता जातिरेकत्वं गुण इति प्रतितन्त्रप्रसिद्धेरप्रमाणत्वाल्लोकप्रसिद्धेश्चाभावात्परापरभावानुपपत्तेस्तुल्यत्वान्न्यायसाम्यमित्यर्थः । पूर्वं सत्ता गुण इत्यङ्गीकारेण परिहार उक्तः सम्प्रति सत्ताया अपि जातिताङ्गीकारे न कश्चित् दोष इत्याह * जातीति * सत्तैकत्वे परापरभा-

वनियत एकव्यक्तिजातित्वात्सत्ताद्रव्यत्ववदित्यनुमानं मानमित्यर्थः । अनुपलब्धिविरोधमनुमानस्य शङ्कते * क्वेति * नानुपलब्धिमात्रं बाधकं किं तु योग्यत्वविशिष्टं न चानुमेयस्य प्रत्यक्षयोग्यत्वमिति सदृष्टान्तं परिहरति * नेति * अयं गिरिर्वह्निमान् तत्केतुमत्वादित्यनुमाने स वह्निः शैले क्व वर्त्तते हस्तप्रदेशे वितस्तिमात्रे प्रदेशे वेत्यादिनिश्चयाभावे ऽप्यनुमानस्यादुष्टत्ववदिदमपि न्यूनपरभावस्थलविशेषानिश्चयेऽपि न दुष्टं स्यादित्यर्थः ।

अध्यक्षलक्षणखण्डनं प्रकृत्यैकत्वानुगतत्वप्रतिपादनमर्थान्तरं नाम निग्रहः स्यादिति चोदयति ।

४८४ अर्थान्तरशङ्कातन्निराकरणं च ।

नन्वस्तु मा वासीदेकत्वमनुगतं किमनेनात्र निरूपितेन, द्वित्वादि यत्र न समाप्यते अभिहिताभावत्रयं चास्ति तत्प्रत्यक्षमिति । मैवम् । अनुमित्यादित्रयेऽपि न त्रित्वं परिसमाप्तम् । एवं सत्यन्यानि त्रीणि न स्युः । अन्या सा त्रित्वव्यक्ति र्याऽन्यत्रेति चेन्न । त्रित्वव्यक्तेः कस्याश्चिदनुमित्यादित्रये समाप्त्यभावात् ।

* नन्विति * एकत्वमनुगतमस्तु मासीद्वा माभूद्वेति योजना । प्रकृतानुपयुक्तस्यार्थान्तरस्य प्रतिपादनं निग्रह इदं तु प्रकृतोपयोगित्वान्न निग्रहमावहतीत्यत आह * द्वित्वेति * एकत्वस्य विशेषणानङ्गीकारेणैव प्रत्यक्षलक्षणमुच्यत इत्यर्थः । सर्वास्त्रित्व-

व्यक्तयो यत्र समाप्यन्ते तन्निष्ठमभावत्रयं लक्षण,मुतैकैका, अथैकापीति, त्रिधा विकल्प्य प्रथमेऽतिव्याप्तिरिति परिहरति * मैवमिति * कुतो न समाप्तिस्तत्राह * एवमिति * यावत्यस्त्रित्वव्यक्तयः सन्ति तावतीनामनुमानादित्रितयपरिसमाप्तौ प्रमेयादीनि त्रीणि न स्युस्तत्र त्रित्वसङ्ख्यायोगाभावादित्यर्थः । द्वितीयकल्पावलम्बनेनाशङ्कते * अन्येति * तत्राव्याप्तिरेवेति परिहरति * नेति * यस्याः कस्याश्चित् त्रित्वव्यक्तेरनुमित्यादावपरिसमाप्तत्वादेकत्वाच्च तस्याः एका त्रित्वव्यक्तिर्यत्र न समाप्यते तन्निष्ठाभावत्रयं लक्षणमनुमित्यादावतिव्यापकमिति यावत् ।

तृतीयकल्पमुत्थापयति ।

४८५ तृतीयकल्पनिरासः ।

का चिदपि त्रित्वव्यक्तिर्यत्र न समाप्यत इति चेन्न । अव्यापकत्वात् । प्रत्यक्षत्वस्य च त्रित्वव्यक्तेश्चावश्यं सामानाधिकरण्यस्य वैशेषिकमतव्युत्थितेन भवताऽभ्युपगम्यत्वात् । अन्यथा प्रत्यक्षव्यक्तयस्तिस्रो न स्युः तदेव हि त्रिरभिधीयते यत्र त्रित्वं परिसमाप्यते ।

* का चिदिति * त्रित्वव्यक्त्यधिकरणत्वात्यन्ताभाववन्निष्ठाभावत्रयं लक्षणमित्यर्थः । शरीरपरित्यागेन रोगपरिहारवदयमतिव्याप्तिपरिहारः इत्थं विवक्षायां लक्षणस्यासम्भवित्वादिति परिहरति *नेति* अव्यापकत्वादसिद्धत्वादित्येवाव्यापकत्वमेवोपपादयति*प्र-

त्यक्षेति * सामानाधिकरण्यस्य—समानाश्रयत्वस्येति यावत् । गुणा निर्गुणा इति वैशेषिकाभिमताद्विशिनष्टि * वैशेषिकमतादुत्थितेनेति * विपक्षे दण्डं पातयति * अन्यथेति * प्रत्यक्षत्वाधिकरणव्यक्तिषु त्रित्वानङ्गीकारे कथं त्रिरिति व्यवहाराभावस्तत्राह * तादिति *

न केवलमव्याप्तिरतिव्याप्तिरपि स्यादित्याह ।

४८६ उक्तविशेषणेऽप्यतिव्याप्तेरवारणम् ।

किञ्च तथापि स एवातिव्यापकतादोषः त्रित्वेनावच्छिन्नास्वनुमित्यादिव्यक्तिषु त्वदभिहितमभावत्रयमस्तीति तत्र प्रत्यक्षलक्षणं गतमित्यतिव्याप्तिरुक्ता तद्व्यावर्त्तनाय भवताऽभिधीयते काचिदपि त्रित्वव्यक्तिर्यत्र न समाप्यत इति । न चैवमुक्ते साऽतिव्याप्तिर्निवर्त्तते तत्राप्युक्तविशेषणस्य विद्यमानत्वात् । न हि त्रित्वावच्छिन्ने तस्मिन् त्रित्वव्यक्तिः काचिदपि समाप्यते त्रित्वलक्षणैकोपाध्यवच्छिन्ने तस्मिन् त्रित्वव्यक्त्यन्तरं भवदप्याश्रयान्तरमादाय वर्त्तते न तु यत्रैव परिसमाप्यते । यत्र चोक्तमुपाधिभूतं त्रित्वं तेषु यदि त्रित्वसमाप्तिधर्मिषु दृश्येत तदा तद्दर्शनेन तत्र धर्मिमात्रे लक्षणव्यावृत्तिः सिद्ध्येत् । न तु त्रित्वविशिष्टे धर्मिणि तस्मादतिव्यापकत्वं तदवस्थमेव । अभावत्रयञ्च

त्रित्वोपाध्यवच्छेदेन समुदिततामुपगतवति विशिष्टे धर्मिणि वर्त्तते नत्वविशिष्टे प्रत्येकमभावत्रयावस्थानस्य तेषु वक्तुमशक्यत्वात् ।

* किं चेति * यद्यप्यतिव्याप्तिपरिहाराय का चिदित्यादिविशेषणं निक्षिप्तं तथाऽप्यतिव्यापकता स्यादेवेति यावत् । व्यभिचारनिवारणफलस्य विशेषस्य स्वीकारे कथमतिव्याप्तिरित्याशङ्क्यासमर्थत्वाद्विशेषणस्येति दर्शयितुं पूर्ववादिनो विशेषणोपादानप्रकारमनुवदति * त्रित्वेति * अनुमित्यादिप्रतियोगिकेतरेतराभावत्रयं यत्र तत्प्रत्यक्षमित्युक्ते त्रित्वेनावच्छिन्ना अनुमित्यादय एकैकस्वभावा न भवन्तीत्यभावत्रयलक्षणं तत्रातिव्याप्तमिति खण्डनवादिनोक्ते तत्परिहाराय काचिदपीत्यादिविशेषणं त्वया निक्षिप्तमित्यर्थः । तथापि कथं विशेषणस्यासामर्थ्यं तत्राह * न चेति * कुत इत्यत आह * तत्रेति * त्रित्वापरिसमाप्तिलक्षणोक्ताविशेषणस्य सद्भावादिति यावत् । अनुमित्यादित्रये त्रित्वापरिसमाप्तौ तिस्रोऽनुमित्यादिव्यक्तयो न स्युरित्यत आह * नेति * त्रित्वानवच्छिन्ने त्रित्वसमाप्तावपि न तदवच्छिन्ने तत्समाप्तिर्यया त्रित्वव्यक्त्या तदवच्छिन्नं तस्या एव तत्र वृत्तावंशतः स्ववृत्त्यापातादन्यस्यावृत्तावनवस्थानात् क्व चिदन्तोपगमे तत्रैवातिव्यापकतेति भावः । त्रित्वावच्छिन्ने त्रित्वान्तरवृत्तावप्यतिव्यापकतैवेत्याह *त्रित्वलक्षणेति * त्रित्वावच्छिन्नमेतदनुमानादिव्यक्तित्रयमेकं पुनरपि तथा तथा त-

खेदं च मिलितं त्रयमिति त्रित्वावच्छिन्नेऽपि त्रित्वान्तरं यद्यपि भवति तथापि न तत्र परिसमाप्यते आश्रयान्तरमादायैव तत्र वर्तनादतश्च पूर्वत्रित्वावच्छिन्नेऽनुमित्यादित्रये लक्षणमतिव्यापकमित्यर्थः । उक्तमेवार्थं सङ्क्षिप्य दर्शयन् स्पष्टयति * यत्रेति * यत्र-धर्मिषु त्रित्वमुपाधिभूतमुक्तं तेषु धर्मिषु त्रित्वसमाप्तिर्दृश्येत यदीत्यन्वयः। त्रित्वसमाप्तिश्चेद्दृश्येत न तर्हुक्तलक्षणं तत्रातिव्यापकमित्यत आह * न त्विति * त्रित्वावच्छिन्नेऽनवच्छिन्ने च तत्समाप्तिविरोधादिति त्वर्थः। त्रित्वानवच्छिन्नधर्मिस्वरूपाद्यावर्त्तमानमपि लक्षणं न तदवच्छिन्नाद्यावर्तेत इत्यर्थः। उपसंहरति * तस्मादिति * अनवच्छिन्नेऽनुमित्यादावतिव्याप्तिर्नोच्यते किन्त्ववच्छिन्न एवेति यस्मात्तस्मादिति यावत्। तत्र को हेतुरित्यपेक्षायामाह * अभावेति * समुदिततामुपगतवति— समुदितत्वं प्राप्त इति यावत् । अनवच्छिन्नेषु तेषु प्रत्येकमभावत्रयावस्थानं वक्तुमशक्यमितरद्वयाभाववत्तावपि स्वाभावस्य स्वास्मिन्वृत्तिविरोधादित्यर्थः *

अनुमित्याद्यभावत्रयवती प्रामितिः प्रत्यक्षमितिलक्षणस्य विवक्षितत्वान्न त्रित्वावच्छिन्नेऽनुमित्यादावतिव्याप्तिरिति शङ्कते ।

४८७ अतिव्याप्तिशङ्कापरिहारौ ।

अथ मन्यसे तादृशस्य विशिष्टस्य प्रमितित्वेनैव व्यवच्छेदः नह्यभावत्रयवत् त्रित्वं विशेषणमाश्रयकोटावन्तर्भाग्य तासु धर्मिव्यक्तिषु प्रमितित्वं वर्त्तते किन्तु

१ तदिति सो० पु० पा० ।

तेषां धर्मिणां स्वरूपमात्रे उक्ताभावत्रयं प्रमितित्वञ्चेत्ये-तद्यत्रास्ति तत्प्रत्यक्षमिति हि ब्रूम इति। न। भवताऽपि भिन्नाभिन्नधर्मावच्छिन्नस्यैव धर्मिणः प्रमितित्वमभावत्रयत्र-त्वञ्चावश्यमभ्युपगन्तव्यम् । तथा हि—यदि प्रमितित्व-स्य काचित्कत्वे नियामकं नोच्यते तदा सर्वा प्रमि-तिः स्यात् न वा काचिदपि ।

सर्व्वत्र सत्ताऽसत्ता वा नियमेऽन्यानपेक्षया ।
नियामकाद्धि भावानां काचित्कत्वस्य सम्भवः ॥४२॥

***अथेति* त्रित्वपरिसमाप्त्यभाववदुक्ताभावत्रयवि-शिष्टस्य त्रित्वावच्छिन्नस्यानुमित्यादेःप्रमितित्वविशेष-णेनापोह इति यावत्। त्रित्वावच्छिन्नानामनुमित्यादी-नां प्रमितित्वाधिकरणत्वात्कथं तद्व्युदासस्तत्राह *न-हीति* अभावत्रयं यस्य त्रित्वस्य तदभावत्रयवत्त्रित्वं तद्विशेषणमाश्रयकोटावतम्भाव्य तास्वनुमित्यादिध-र्मिव्यक्तिषु प्रमितित्वं न वर्त्तते ऽन्यथा ऽभावत्रयस्य त्रित्वस्य च प्रमात्वापातादित्यर्थः। तर्ह्यवच्छिन्ना अनु-मित्यादयोऽप्रमा स्युस्तत्राह *किं त्विति* विशेषणांश मपहाय विशेष्यानुमित्यादिस्वरूपे प्रमितित्वसमवाया-न्नाप्रमात्वं दण्डस्य पुरुषत्वाधिकरणत्वेऽपि विशेष्य-देवदत्तस्य पुरुषत्ववादित्यर्थः। एवं प्रमितिविशेषस्य व्या-वर्त्तकत्वसामर्थ्यमुक्त्वा लक्षणस्वरूपं दर्शयति *उक्ते-ति* प्रमितित्वाधिकरणत्वे सति कथिताभावत्रयवत्प्र-त्यक्षमित्याशयः। एवं कथं चिदतिव्याप्तिपरिहारे लक्षण-**

मसम्भवि स्यादिति परिहरति * नेति * भिन्नभिन्न-धर्मावच्छिन्नस्येति * अन्योन्यधर्माविशिष्टस्येति यावत् । अभावत्रयप्रमितित्वयोर्वैयधिकरण्याल्लक्षणासिद्धिरित्यर्थः । अवश्यमित्यर्थापत्तिरन्यथा प्रमात्वस्य काचित्कत्वानुपपत्तिरूपा सूचिता तां विकल्पपुरःसरं प्रथयति * तथाहीति * प्रमितत्वस्य कादाचित्कत्वे किं नियामकं नास्ति किं वा ऽस्तीति विकल्प्य प्रथममनुवदति * यदीति * शुक्तिरजतादिज्ञानमपि प्रमा स्यादविशेषादिति परिहरति * तदेति * विपक्षे दण्डमाह * न चेति * अनियामकपक्षोक्तमर्थं सर्वत्रानुसन्धानार्थं श्लोकेनोपनिबध्नाति * सर्वेति * अन्यानपेक्षया नियमे स्वीक्रियमाणे सर्वत्र सत्ताऽसत्ता वा स्यादिति सम्बन्धः । नियामकाभावे काचित्कत्वाभावः कुतस्तत्राह * नियामकादिति * अङ्कुरत्वादीनां बीजोद्भवत्वादिनियामकादेव काचित्कत्वं प्रसिद्धमित्यर्थः ।

अबाधितानवगतासन्दिग्धविषयज्ञानत्वं संस्कारमात्रेतरादुष्टकारणोद्भवत्वं वा नियामकमुच्यते इति द्वितीयमाशङ्क्य तदपि प्रमात्वाधिकरणव्यक्तीनां विशेषणमुपलक्षणं वेति विकल्पयति ।

४८८ विकल्पपुरस्सरं नियामकनिरास ।

तन्नियामकमाश्रये विशेषणीभूतं वा वक्तव्यं, उपलक्षणीभूतं वा । आद्ये यदेव प्रमितित्वस्याश्रयविशेषणं तदेव यद्यभावत्रयस्यापि तस्य तदा त्रित्वावच्छिन्नेऽनुमि-

त्यादावभावत्रयस्य दर्शितत्वात्तत्र च प्रमितित्वेनापि त्रित्वावच्छिन्ने भवितव्यमिति प्रमितित्वान्न तद्व्यवच्छेदः। अथान्यावच्छिन्ने प्रमितित्वमन्यधर्मावच्छिन्ने चाभावत्रयसम्बन्धः तदा नास्ति त्वत्पक्षेऽपि प्रमितित्वस्यैकधर्मविशिष्टाश्रयत्वलक्षणमेकाश्रयत्वं विशिष्टेऽपि धर्मिण्याश्रितो धर्म्याश्रित एवेति कृत्वा च प्रमितित्वस्याभावत्रयसमानाश्रयत्वेऽनुमित्यादित्रयेऽपि प्रसङ्गस्तदवस्थः।

* तदिति * यदा विशेषणं तदाऽपि प्रमितित्वाश्रयविशेषणमेवाभावत्रयस्यापि नियामकतयाऽऽश्रयविशेषणमुतान्यदिति विकल्प्य प्रथममनुवदति * आद्य इति * प्रमितित्वाभावत्रययोर्नियामकैक्यादनुमित्यादौ त्रित्वावच्छिन्ने प्रमितित्वस्य वृत्तिरूपेणाऽभावत्रयवृत्तिदर्शनादिति दूषयति * तदेति * त्रित्वावच्छिन्नमनुमित्यादित्रयं प्रमितित्वाधिकरणमुक्ताऽभावाधिकरणत्वात्प्रत्यक्षवदित्यनुमानान्न प्रमितित्वविशेषणेन तदपोह इत्यर्थः। द्वितीयमनुवदति * अथेति * प्रमितित्वाधिकरणत्वे सत्युक्ताभावत्रयवत्त्वाविशिष्टलक्षणासिद्धिस्तयोर्वैयधिकरण्याद्विशिष्टभेदादिति दूषयति * तदेति * अभावत्रयेणेति शेषः। दण्डित्वकुण्डलित्वयोर्दण्डकुण्डलांशविशिष्टाधिकरणभेदेऽपि विशेष्यदेवदत्तस्यैक्यादैकाधिकरण्यवन्नियामकधर्मविशिष्टभेदेऽपि प्रत्यक्षधर्मिण एकत्वादेकाश्रयत्वमभावत्रयप्रमितित्वयोरित्याशङ्क्याह

* विशिष्ट इति * त्रित्वावच्छिन्नानुमित्यादिनिष्ठाभावत्रयस्य प्रमितित्वस्य च धर्मिद्वारा सामानाधिकरण्यमस्तीति कथितातिव्याप्तितादवस्थ्यमित्यर्थः ।

उपलक्षणपक्षमाक्षिपति ।

४८९. उपलक्षणपक्षप्रतिक्षेपः ।

नापि द्वितीयः उपलक्षणीभूतेन केन चिद्धर्मेण योऽसावुपलक्षितो धर्मी स एव खलु त्रित्वविशिष्टोपि विशेषणवतोपि यावद्विशेष्यवस्तुनो विशेष्यवस्त्वात्मकत्वात् । यथा दण्ड्यपि पुरुषः पुरुष एव एवञ्च सत्युपलक्षितादनन्यभूते त्रित्वविशिष्टेऽप्यनुमित्यादौ प्रमितित्वमाश्रितं नियामकेनोपलक्षणेनोपलक्ष्याभेदव्यवस्थिततया तस्याप्यवच्छिन्नत्वात् । तथाचातिव्याप्तिर्वज्रलेपायिता ।

* नेति * काऽनुपपत्तिरित्यपेक्षायामनुपपत्तिं प्रथयितुमुपलक्षितविशिष्टयोरैक्यमाह * उपेति * प्रागुक्तोपलक्षणेन य उपलक्षितो वित्तिलक्षणो धर्म्मी स एवानुमित्यादौ त्रित्वविशिष्टोऽपीत्यर्थः । उपलक्षितं वित्तिस्वरूपमात्रं विशिष्टं तु त्रित्वसम्बन्धरूपमनयोर्विशिष्टाविशिष्टयोरेकत्वमित्यत आह * विशेषणेति * विशेषणयोगे विशेष्यस्वरूपैक्यानपायादिति भावः । उक्तमर्थं दृष्टान्तेन बुद्ध्यारूढं करोति *यथेति* एवं च सति त्रित्वावच्छिन्नानुमित्यादिनिष्ठाभावत्रयस्य प्रमितित्वस्य च सिद्धमेकाश्रयत्वमित्याह *

एवं चेति * हेतुमाह * नियामकेनेति * तस्यानुमित्यादित्रयस्यापि प्रमात्वनियामकेनोपलक्षणेनोपलक्ष्यवित्तिस्वरूपाभेदे व्यवस्थिततया भिन्नतया त्रित्वावच्छिन्नत्वादित्यर्थः । एवं च प्रत्यक्षलक्षणं त्रित्वावच्छिन्नानुमित्यादावगमादित्याह * तथा चेति *

उपलक्षणेन त्रित्वावच्छिन्नतया वित्तिस्वरूपानुपलक्षणादुपलक्षितवृत्तिप्रमात्वस्य त्रित्वावच्छिन्नवृत्त्यभावात्प्रमात्वाधिकरणमुक्ताभावत्रयवत्प्रत्यक्षमित्युक्तेनातिव्याप्तिरिति शङ्कते ।

४९० अतिव्याप्तिशङ्कापरिहारौ ।

तथाप्युपलक्षकेण त्रित्वविशिष्टतया नोपलक्षितोऽसौ धर्मी किन्तु स्वरूपेणेति चेन्न । उक्तमत्र । यदेव तदुपलक्षितं तदेव विशिष्टमपि । तथापि विशिष्टेन रूपेण तावन्नोपपलक्षितमिति चेत् मोपलक्षि । अविशिष्टेनापि तन्नोपलक्षितमेव अन्यथा प्रकृतेपि वैयधिकरण्यापत्तेः ।

* तथापीति * उपलक्षितवित्तिस्वरूपस्यैव त्रित्वावच्छेदात् धर्म्मैक्यमुक्तामिति परिहरति *नेति* यद्यपि यस्य यद्विशेषणं तदेवोपलक्षणेनाप्युपलक्षितं तथापि विशिष्टेन रूपेण नोपलक्षितमतो विशिष्टोपलक्षितयोरैक्यानुपपत्तिस्तथात्वे विशेषणेनाप्यभेदप्रसङ्गादुपलक्षितस्येति शङ्कते * तथापीति * स्वरूपेणोपलक्षितस्य विशिष्टाद्भेदोऽपि न सम्भवति स्वस्य त्रित्वरूपस्य भेदप्रसङ्गादित्यभिप्रेत्य परिहरति * मोपलक्षीति *

उपलक्षितं माभूदिति यावत् । किं च प्रमात्वाधिकरणं नियामकेन त्रित्वानवच्छिन्नतया यद्युपलक्ष्येत तर्हि प्रमात्वाभावत्रययोरवच्छिन्नानवच्छिन्नवृत्तित्वेऽनुमित्यादिव्युदासः स्यान्न च तथा स्वरूपेणैवोपलक्षितत्वादित्याह * अविशिष्टेति * भावाभावयोर्विरुद्धयोरौदासीन्यायोगादविशिष्टेनैव तदुपलक्षितमित्यत आह * अन्यथेति * अनवच्छिन्नवृत्ति प्रमात्वमभावत्रयमवच्छिन्नवृत्तीति वैयधिकरण्यं यथाऽनुमित्यादौ तथा प्रत्यक्षेऽपि स्यादविशेषादित्युक्तलक्षणासम्भव इत्यर्थः ।

प्रत्यक्षलक्षणखण्डनमुपसंहरति ।

४९१ उपसंहारः ।

तदास्तामुल्लसत्पल्लवदलनविलसितेनेति । तदेवं लक्षणान्तरेऽपि प्रतिपादितोऽयं दूषणसमूहः स्वयमूहनीयः ।

एतदेव परामृश्य भट्टैरिदमुदाहृतम् ।
लक्षणस्याऽभिधानन्तु केनांशेनोपयुज्यते ॥ ४३ ॥

अन्याभिप्रायोक्तमपि हि तत्सामान्यतोऽप्युपपद्यमानमेवेति।

* तदिति * उल्लसन्तः ऊर्द्ध्वं लसन्त उर्द्ध्वं गच्छन्त इति यावत् । पल्लवाः किसलयानि तेषां दलनं मोटनं तत्र क्रीडितेनेत्यर्थः। प्लववलनविलसितेनेति केचित्पठन्ति तत्राद्यमर्थः उल्लसन्तो माद्यन्तः प्लवाः पक्षिणः प्लवन्तीति तेषां वलनं वलयाकारेण गमनविशेषस्तत्क्रीडितेनेति दूषितलक्षणस्यैव पुनः पुनर्विशेषान्तरशब्दा-

१ वचनेति पु॰ पा॰ ।

न्तरोपादानात्किमर्थमिदमभिधीयत इत्यादिना ऽभिहितो दोषव्रातो न प्रत्यक्षलक्षणस्यैवेति मन्तव्यं सर्वलक्षणसाधारणस्यापि ज्येष्ठप्रमाणलक्षणखण्डने ऽभिहितत्वादित्यभिप्रेत्याह * तदिति * लक्षणस्य विद्वव्याद्यनुपयुक्तत्वे भट्टसंमतिमाह * एतदिति* लक्षणस्यानुपयुक्तत्वं विमृश्य- विचार्य भट्टैरिदं- वक्ष्यमाणमुदाहृतं किं तदित्यत आह * लक्षणेति * प्रत्यक्षलक्षणस्याभिधानं "चोदनालक्षणोऽर्थो धर्म" इत्यत्र चोदनैव प्रमाणं धर्मे चोदना प्रमाणमेवेति प्रतिज्ञाद्वये केनांशेनोपयुज्यते न केनापीत्यर्थः। "सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म प्रत्यक्षं तदनिमित्तं विद्यमानोपलम्भनत्वा" दित्यनेन सूत्रेण प्रत्यक्षादेर्धर्मे प्रत्यनिमित्तत्वं अप्रमाणत्वमुच्यते चेत्तर्हि विद्यमानोपलम्भनत्वादित्यनेनैवालं किं सदित्यादिलक्षणेनेति प्रत्यक्षलक्षणाभिधानस्य पूर्वप्रतिज्ञातार्थेऽनुपयोग उक्तो न तु लक्षणमात्रस्येत्यत आह * अन्येति * सामान्यतो लक्षणमात्रस्यानुपयोगेऽप्युपपद्यमानमेव तद्वचनमुक्तरीत्याऽत उदाहृतमित्यर्थः।

इति प्रत्यक्षखण्डनं समाप्तम्।

---

प्रत्यक्षप्रतिक्षेपेणैव यद्यप्यनुमानादि प्रतिक्षिप्तं प्रत्यक्षसिद्धव्याप्त्याद्युपजीवित्वात्तथापि विशेषतो यावन्न निरस्यते तावत्तस्य प्रामाण्याशङ्का मन्दमतेर्न निवर्तत इति विशेषतस्तत्खण्डनं प्रस्तौति।

४९२ अनुमानखण्डनारम्भः।

अनुमानमपि किमुच्यते। करणपक्षे लिङ्गपरामर्शो-

ऽनुमानमिति चेत् किं लिङ्गत्वं। व्याप्तस्य पक्षधर्मत्वमिति चेत्। न। संशयस्योपलक्षणत्वे तत्र दृष्टापि व्यापकं तत्परामर्शेऽतिप्रसङ्गात्। अतएव न तस्य वर्त्तमानस्या,तत्कालेऽप्युपलक्षणत्वात्। विशेषणत्वे चानुमाय व्यापकं धर्मिनाशवदप्रवृत्त्यापत्तेः। पक्षधर्माद्धेतोः पक्षांशे विशेष्ये साध्यसिद्धिरीदृशञ्च वैयधिकरण्यमिष्टमेवेत्यतो नैवमिति चेन्न। पक्षमादाय वैयधिकरण्ये नियतसामानाधिकरण्यलक्षणव्याप्तिलोपापत्तेः। तथापि विशेष्यमादाय साऽस्त्वेवेति चेन्न। साध्यविशेषसिद्धिरपि यत्र व्याप्तिबलायातं सामान्यं तत्र सामान्यप्रतीत्यपर्य्यवसानबलादेवेति सामान्यविशेषसिद्ध्यनुपयोगिनी पक्षधर्मता त्वदिष्टा केवलं सिद्धसाधनपरिहारायानुमितिकारणत्वेनेष्टव्या। सिद्धसाधनञ्च न स्वार्थानुमाने दोष इति नानुमितिमात्रहेतुनिवेशिनी सति। मोक्षमाणैर्हि——

"आगमेनानुमाने न ध्यानात्प्रत्यक्षणेन च।
त्रेधाऽऽत्मनि प्रमाणानां संप्लवः स्वार्थमिष्यत इति॥४४॥

एतेन संशययोग्यताऽपि निरस्ता।

* अनुमेति * अनुमीयतेऽनेनेति किं करणव्युत्पत्त्याऽनुमितिकरणं पृच्छ्यत उतानुमितिरनुमानमिति भावव्युत्पत्त्या व्यापकज्ञानं पृच्छ्यते इति विकल्प्य प्रथमं प्रत्याह *करणेति* सौषुप्तिक सुखादिपरामर्शव्यावृत्त्यर्थं

लिङ्गेति विशेषणम् । करणखण्डनेन फलमपि खण्डितं स्यात्तज्जन्यत्वात्तस्येत्यभिप्रेत्य लिङ्गं पृच्छति * किमिति * व्याप्यस्य धूमादेः पर्वतादिपक्षनिष्ठत्वं लिङ्गत्वम्प्रसिद्धं किमत्र प्रश्नेनेत्याह * व्याप्तेति * पक्षधर्मत्वं व्यापकस्याप्यस्ति ततो विशिनष्टि * व्याप्तेति * सन्दिग्धसाध्यः पक्षस्तत्र वृत्तिः पक्षधर्मत्वं, तत्र सन्देहः पक्षोपलक्षणं किं विशेषणमिति विकल्प्य प्रथमं दूषयति * नेति * यत्रासौ गिरिर्वह्निमान्न वेति सन्देहः समजनि ततस्तन्निकटोपसृप्तस्य प्रत्यक्षेण वह्निं दृष्टवतः तत्र धूमं पश्यतोऽसौ धूमो वह्निव्याप्त इति परामृशतोऽपि परामर्शोऽनुमानं स्यात्, त्वदुक्तलक्षणभावादित्यतिव्याप्तिरित्यर्थः । वर्त्तमानसन्देहोपलक्षितपक्षनिष्ठत्वं लिङ्गत्वमिति नातिव्याप्तिरित्यत आह * अत इति * उपलक्षणत्वादेवेति यावत् । उपलक्षणत्वमिति शेषः । कुत इत्यत आह * अतादिति * गुरुटीका कुरुक्षेत्रमित्यादावसतो गुर्वादेष्टीकाद्युपलक्षणत्वदर्शनादित्यर्थः । द्वितीयं प्रत्याह * विशेषणेति * यथा धर्म्यभावे प्रवृत्त्यभावस्तथाऽनुमानन्तरमानुमानिकनिश्चयेन संशयनाशे तद्विशिष्टपक्षनाशो दण्डनाशे दण्डिनाश इव, एवं चानुमाय तत्रतत्र-तथा प्रवृत्तिर्न स्यादन्यत्र ज्ञानमन्यत्र प्रवृत्तिरित्यतिप्रसङ्गादित्याशयः । साधनवत्साध्यमपि यदि पक्षे सिद्धेत्तर्हि अनुमाय प्रवृत्तिर्न स्यात्पक्षनाशान्नैवं पक्षधर्मस्य साधनस्य तदंशे साध्यसाधनत्वादिति शङ्कते * पक्षेति * तर्हि व्यधिकरणासिद्धता हेतोः स्यादित्यत आह

ऽनुमानमिति चेत् किं लिङ्गत्वं। व्याप्तस्य पक्षधर्मत्वमिति चेत्। न। संशयस्योपलक्षणत्वे तत्र दृष्ट्वापि व्यापकं तत्परामर्शेऽतिप्रसङ्गात्। अतएव न तस्य वर्त्तमानस्या,तत्काऽऽप्युपलक्षणत्वात्। विशेषणत्वे चानुमाय व्यापकं धर्मिनाशवदप्रवृत्त्यापत्तेः। पक्षधर्माद्धेतोः पक्षांशे विशेष्ये साध्यसिद्धिरीदृशञ्च वैयधिकरण्यमिष्टमेवेत्यतो नैवमिति चेन्न। पक्षमादाय वैयधिकरण्ये नियतसामानाधिकरण्यलक्षणव्याप्तिलोपापत्तेः। तथापि विशेष्यमादाय साऽस्त्येवेति चेन्न। साध्यविशेषसिद्धिरपि यत्र व्याप्तिबलायाते सामान्यं तत्र सामान्यप्रतीत्यपर्य्यवसानबलादेवेति सामान्यविशेषसिद्ध्यनुपयोगिनी पक्षधर्मता त्वदिष्टा केवलं सिद्धसाधनपरिहारायानुमितिकारणत्वेनैष्टव्या। सिद्धसाधनञ्च न स्वार्थानुमाने दोष इति नानुमितिमात्रहेतुनिवेशिनी सति। मोक्षमाणैर्हि—

"आगमेनानुमाने न ध्यानात्प्रत्यक्षणेन च।
त्रेधाऽऽत्मनि प्रमाणानां संप्लवः स्वार्थमिष्यत इति ॥४४॥
एतेन संशययोग्यताऽपि निरस्ता।

* अनुमेति * अनुमीयतेऽनेनेति किं करणव्युत्पत्त्याऽनुमितिकरणं पृच्छ्यत उतानुमितिरनुमानमिति भावव्युत्पत्त्या व्यापकज्ञानं पृच्छ्यते इति विकल्प्य प्रथमं प्रत्याह *करणेति* सौषुप्तिक सुखादिपरामर्शव्यावृत्त्यर्थं

लिङ्गेति विशेषणम्। करणखण्डनेन फलमपि खण्डितं स्यात्तज्जन्यत्वात्तस्येत्यभिप्रेत्य लिङ्गं पृच्छति * किमिति * व्याप्यस्य धूमादेः पर्वतादिपक्षनिष्ठत्वं लिङ्गत्वम्प्रसिद्धं किमत्र प्रश्ननेनेत्याह * व्याप्तेति * पक्षधर्मत्वं व्यापकस्याप्यस्ति ततो विशिनष्टि * व्याप्तेति * सन्दिग्धसाध्यः पक्षस्तत्र वृत्तिः पक्षधर्मत्वं, तत्र सन्देहः पक्षोपलक्षणं किं विशेषणमिति विकल्प्य प्रथमं दूषयति * नेति * यत्रासौ गिरिर्वह्निमान्न वेति सन्देहः समजनि ततस्तन्निकटोपसृप्तस्य प्रत्यक्षेण वह्निं दृष्टवतः तत्र धूमं पश्यतोऽसौ धूमो वह्निव्याप्त इति परामृशतोऽपि परामर्शोऽनुमानं स्यात्, त्वदुक्तलक्षणभावादित्यतिव्याप्तिरित्यर्थः। वर्त्तमानसन्देहोपलक्षितपक्षनिष्ठत्वं लिङ्गत्वमिति नातिव्याप्तिरित्यत आह * अत इति * उपलक्षणत्वादेवेति यावत्। उपलक्षणत्वमिति शेषः। कुत इत्यत आह * अतदिति * गुरुटीका कुरुक्षेत्रमित्यादावसतो गुर्वादेष्टीकाद्युपलक्षणत्वदर्शनादित्यर्थः। द्वितीयं प्रत्याह * विशेषणेति * यथा धर्म्यभावे प्रवृत्त्यभावस्तथाऽनुमानन्तरमानुमानिकनिश्चयेन संशयनाशे तद्विशिष्टपक्षनाशो दण्डनाशे दण्डिनाश इव, एवं चानुमाय तत्रतत्रतथा प्रवृत्तिर्न स्यादन्यत्र ज्ञानमन्यत्र प्रवृत्तिरित्यतिप्रसङ्गादित्याशयः। साधनवत्साध्यमपि यदि पक्षे सिद्ध्येत्तर्हि अनुमाय प्रवृत्तिर्न स्यात्पक्षनाशान्नैवं पक्षधर्मस्य साधनस्य तदंशे साध्यसाधनत्वादिति शङ्कते * पक्षेति * तर्हि व्याधिकरणासिद्धता हेतोः स्यादित्यत आह

* ईदृशामिति * पक्षाधिकरणं साधनं तदंशधर्मिमात्राधिकरणं साध्यमितीदृशं वैयधिकरण्यमिष्टमेव विशेष्यस्य विशिष्टेऽप्यनुगमादिति यावत्। अन्यनिष्ठस्यान्यत्र साधकत्वे व्याप्त्यसिद्धिरिति परिहरति * नेति * यो धूमवान् सोऽग्निमानिति साध्यसाधनयोर्नियतैकाश्रयत्वलक्षणव्याप्तिरनुमानाङ्गमङ्गीकृता सा हीयेत पक्षमादाय साध्यसाधनयोर्वैयधिकरण्यादित्यर्थः।दण्डिनि वर्तमानदण्डित्वस्य देवदत्तवृत्तित्ववह्निविशिष्टपक्षनिष्ठसाधनस्य विशेष्यधर्मिमात्रनिष्ठत्वमपीत्यस्ति व्याप्तिसिद्धिरिति शङ्कते *तथापीति* विशेष्यमात्र सामानाधिकरण्यलक्षणव्याप्तिमुपगच्छतो व्याप्तस्य पक्षधर्मत्वं लिङ्गत्वमित्यत्र पक्षधर्मत्वविशेषणमकिञ्चित्करं व्याप्तिमात्रेण लिङ्गत्वोपपत्तेरिति परिहरति * नेति * यत्र सामान्यं व्याप्तिबलादायातं तत्र साध्यविशेषसिद्धिरपि सामान्यप्रतीत्यपर्यवसानादेवेति योजना । एतदुक्तं भवति पक्षधर्मत्वं किं सामान्यसिद्धावुपयुक्त,मुत साध्यविशेषसिद्धां,वुत यत्र सामान्यं तत्रैव विशेषसिद्धा,वाहो स्वित्सिद्धसाधनतापरिहारे, न तावत्प्रथमे त्रयः सम्भवन्ति यत्र धूमस्तत्राग्निरिति व्याप्त्यैव साध्यसामान्यसिद्धेर्विशेषमन्तरेण सामान्यस्यासिद्ध्या विशेषसिद्धेस्तत्रैव च सिद्धेरिति तुरीयमरुच्याङ्गीकरोति * केवलमिति * अरुचिमेव दर्शयति * सिद्धेति * प्रमाणान्तरसिद्धस्याप्यर्थस्य दृढीकरणाय स्वार्थानुमाने साधनात्परार्थानुमान एव तस्य दूषणत्वात्तत्रैव पक्षधर्मता तत्परिहारफला स्यान्न सर्वत्रेति

भावः । प्रमाणान्तरसिद्धस्य न स्वार्थानुमानेऽपि साधनमित्याशङ्क्य तद्दर्शयन्नुत्तरश्लोकापेक्षितं पूरयति * मोक्षेति * मोक्षमाणैरात्मनि प्रमाणानां त्रिधा संप्लवः सङ्करः स्वार्थमिष्यत इत्यन्वयः । तदेव दर्शयति * आगमेनेति * आगमानुमानध्यानशब्देन श्रवणमनननिदिध्यासनानि कथ्यन्ते । प्रत्यक्षेणेनेति प्रत्येकं सम्बन्ध्यते । आगमानुमानयोरपि प्रत्यक्षात्मनि साक्षात्प्रत्ययजनकत्वादन्यथा भ्रान्तत्वापातात् । सन्देहयोग्यसाध्यविशिष्टः पक्षः व्याप्तस्य तन्निष्ठत्वं लिङ्गत्वमिति केचित्तत्राऽप्युक्तमतिदिशति *एतेनेति* दृष्टाऽपि व्यापकं तत्परामर्शप्रसङ्गादित्युक्तेनानुमेये निश्चितेऽपि तद्योग्यतायाः यावद्द्रव्यभावितया भावादन्यथा कालान्तरे तत्र कस्य चित्संशयानुपपत्तेरित्यर्थः । यद्वा स्वार्थानुमाने साध्यस्य संशययोग्यता संप्लवाङ्गीकारेण निरस्या अन्यथा सन्दिग्ध एकस्य विषयोऽन्यस्य तद्योग्य इति विषयभेदेन संप्लवानुपपत्तेरित्यर्थः ।

पक्षधर्मत्वविशेषणं विहाय व्याप्यत्वं लिङ्गत्वं तत्परामर्शोऽनुमानमिति शङ्कते ।

४९३ व्याप्यत्वं लिङ्गत्वमिति शङ्कानिरासः ।

व्याप्यत्वमिति चेत् । किं वस्तुगत्या व्याप्यस्य स्वरूपेण परामर्शोऽनुमानं व्याप्यतया वा । नाद्यः अगृहीतव्याप्तिनाऽपि धूमादिपरामर्शस्यानुमानताप्रसङ्गात् । नापि द्वितीयः व्याप्त्युल्लेखिनः प्रमाणस्यानुमानत्वप्रसङ्गात् । त-

स्यापि व्याप्यत्वग्राहिताया अवश्यवक्तव्यत्वात् । अतएव द्वितीय तृतीयविशेषणे अपि निरस्ते । धारावाहिनि तथा-त्वापत्तेः । गृहीतव्याप्तिनाऽपि युगपदुभयग्रहणे द्वावेतौ व्याप्यव्यापकाविति परामर्शस्यानुमानत्वप्रसङ्गात् । न-च तदनुमानमेव,असन्दिग्धतया पक्षत्वाभावेन तद्धर्मस्य हेतोः सिद्धसाधनवदपक्षधर्मत्वात् ।

* व्याप्येति * दूषणोक्तिविभागाय विकल्पयति * किमिति * कस्मिन् सति किं स्यात्तत्राह * नेति* परामर्शः प्रत्ययमात्रमुत प्रत्यभिज्ञानं, यदि प्रथम-स्तर्हि न गृहीता व्याप्तिर्येनसो ऽगृहीतव्याप्तिस्तेनापि पुरुषेण सोऽयं धूम इति यः परामर्शस्तस्यापि वस्तुग-त्या व्याप्तविषयत्वमिति तत्राप्यननुमानेऽप्यनुमानत्व-मित्यतिप्रसक्तिरित्यर्थः । व्याप्यस्य व्याप्तिमत्तया यः परामर्शः सोऽनुमानमिति द्वितीयं दूषयति * नेति * हेतुं कथयति * व्याप्तीति * धूमाग्नी व्याप्ताविति व्याप्तिं गृह्णतः प्रमाणस्य तद्धर्मितया व्याप्यविषय-त्वमपीत्यतिव्याप्तिरित्यर्थः । सम्बन्धिग्रहणमन्तरेण सम्बन्धग्रहणानुपपत्ते"राधारात्मनि विज्ञाते सुखमाधे-यबोधन"मिति न्यायादित्याह * तस्येति * यदित्थं तत्तथेति द्वितीयलिङ्गपरामर्शस्तथा चायमिति तृती-यलिङ्गपरामर्शोऽनुमानमतो नातिव्याप्तिरित्यत आह * अत इति * व्याप्त्युल्लेखिनो ऽनुमानत्वप्रसङ्गादेवे-ति यावत् । तदेवोपपादयति * व्याप्येति * द्वितीया-दिविशेषणे यद्यपि न प्रथमव्याप्यपरामर्शेऽतिव्या-

प्तिस्तथापि तावेतौ धूमाग्नी व्याप्ताविति धाराग्राहि-
ण्यतिव्याप्तिरित्यर्थः । व्याप्तिग्राहिप्रत्यक्षान्यत्वे सति
व्याप्यपरामर्शो ऽनुमानमित्यत आह * गृहीतेति *
तदपि लक्ष्यमित्यत आह *न चेति* यथा सिद्धसाध-
नस्य हेतोः पक्षधर्मता नास्ति साध्यस्य प्रमाणान्तर-
सिद्धतया सन्देहाभावात्तथा युगपदुभयग्रहेऽपि सा-
ध्यस्य प्रत्यक्षविषयत्वेनासन्दिग्धत्वात्तद्विशिष्टस्य प-
क्षत्वाभावेन तन्निष्ठहेतोरपक्षधर्मत्वादित्यर्थः ।

प्रमाणान्तरेण साध्यनिश्चयेऽपि स्वार्थानुमाने पक्ष-
धर्मत्वमिष्टमतोनोक्तदोष इति शङ्कते

४९४ सिद्धावपि सन्देहसत्त्वेनदोष इति शङ्कानिरासः ।

स्वार्थानुमाने नाऽयं दोष इति चेन्न । प्र-
त्यक्षलक्षणोपत्तया साक्षात्त्वासाक्षात्त्वविरोधापत्तेः । अ-
व्यापकविषयत्वे सतीति चेन्न । व्याप्यविषय-
त्वाभावप्रसङ्गात् । व्याप्यत्वं हि सप्रतियोगिक-
ग्रहणं तथा चैतस्य व्याप्यमिदमिति गृह्यते तथा च सति
व्यापकस्यापि विशेषणस्य ग्रहणमवश्यं वक्तव्यमन्यथा
विशिष्टग्रहणस्य कर्तुमशक्यत्वात् । विशेषतो व्यापकावि-
षयत्वे सतीति चेन्न । अग्निधूमौ व्याप्तावित्याप्तोपदेशात्पू-
र्वं भूयोगृहीतवह्निधूमसाहचर्यस्य वन्हिधूमाग्रहणका-
ले विमर्शवशात् वा जायमानव्याप्तिग्रहणस्य व्याप्यप-
रामर्शोऽनुमानं स्यात् । न परामर्शः प्रत्ययमात्रं येन प्रथ-

मग्रहणे प्रसङ्गः स्यात् किन्नाम प्रत्यभिज्ञानमिति चेन्न । विचारादाप्तोपदेशाद्वा प्रतीत्य व्याप्तिं पुनराप्तोपदेशाद्विचाराद्वा यैव मया व्याप्तिर्गृहीता सैवेयमिति प्रत्यभिजानानस्य व्याप्तिज्ञानमनुमानं स्यात् । विशेषतो व्याप्यविषयत्वे सतीति चेन्न । अव्यापकत्वप्रसङ्गात् । एकव्यक्तिविषयत्वस्य व्यक्त्यन्तरेऽसम्भवात्सामान्यतो व्यक्तिविषयत्वस्य चातिप्रसञ्जकत्वात् ।

*स्वेति* अनुमानमात्रस्येदं लक्षणं नानुमानविशेषस्य दूषणं च नानुमानमात्रस्य स्वार्थानुमानेऽस्यादोषत्वाद्विशेषदूषणेन नानुमानमात्रं दुष्टमित्यर्थः । अनिष्टापादनेन परिहरति * नेति * युगपदुभयग्रहणे व्यापकधर्मविशिष्टधर्मिज्ञानस्येन्द्रियान्वयव्यतिरेकवतः प्रत्यक्षलक्षणोपपत्त्या साक्षात्त्वं लिङ्गपरामर्शजन्यतया परोक्षत्वमिति साक्षात्वासाक्षात्वयोः साङ्कर्यं स्यादित्यर्थः । उक्तातिव्याप्तिपरिहाराय व्यापकाविषयत्वे सति व्याप्यपरामर्शो ऽनुमानमिति विशेषणप्रक्षेपेण शङ्कते * व्यापकेति * व्याप्तिग्रहणस्य युगपदुभयग्रहणस्य च व्यापकविषयत्वान्न तत्रातिव्याप्तिरित्यर्थः । व्यापकमात्राविषयत्वं विशेषणमुत व्यापकविशेषाविषयत्वमिति विकल्प्य प्रथममपाकरोति * नेति * व्यापकाविषयत्वे व्याप्यविषयत्वासम्भवादसम्भवि लक्षणं भवेदिति भावः । व्याप्यव्यापकयोरन्यत्वात् व्यापकाग्रहे व्याप्याग्रहणं कस्मादित्यत आह * व्याप्यत्वं हीति * अन्याग्रहणे नान्यग्रहणं ब्रूमः किं

तु प्रतियोग्यग्रहणेऽनुयोगिनोऽप्यग्रहणमिति भावः । व्याप्यस्य सप्रातियोगिकग्रहणमनुभवसिद्धमित्याह- * तथा चेति * अस्तु ततः किं स्यादित्यत आह * तथा चेति * व्याप्यस्य सप्रातियोगिग्रहणत्वे सति व्याप्यग्रहणे व्यापकस्यापि विशेषकस्य विशेषणतया व्यावर्त्तकतया ग्रहणं वाच्यमित्यर्थः । उक्तं व्यतिरेकद्वारा दृढीकरोति * अन्यथेति * विशेषणज्ञानं विशिष्टज्ञानकारणमिति केचित् । केचित्तु विशेषणविशेष्ययोरेकप्रत्ययविषयत्वमिति सर्वथा व्यापकाग्रहणे तद्विशिष्टव्याप्यग्रहणमनुपपन्नमित्यर्थः । द्वितीयं कल्पमाशङ्कते *विशेषेति* प्रत्यक्षेण व्याप्तिग्रहे युगपदुभयग्रहे च व्यापकस्य विशेषेणैव ग्रहणान्नातिव्याप्तिर्नाप्यसम्भवो लिङ्गपरामर्शे व्यापकस्य सामान्येनैव स्फुरणादित्याशयः । एवमप्यतिव्याप्तिस्तदवस्थेति परिहरति * नेति * अग्निधूमौ व्याप्तावित्याप्तवाक्याज्जायमानव्याप्तिग्रहो यस्य पुरुषस्य तस्य व्याप्यपरामर्शोऽनुमानं स्याद्वाक्यजन्यप्रत्ययस्य विशेषाविषयत्वादित्यर्थः । यदि कश्चिद्वाक्याजन्यत्वे विशेषाविषयत्वे च सति व्याप्यपरामर्शोऽनुमानमिति ब्रूयात्तं प्रति अतिव्याप्त्यन्तरमाह * पूर्वमिति * भूयो—बहुशो गृहीतमग्निधूमयोः साहचर्यं सहचरितत्वमविनाभावो येन तस्य प्रत्यक्षेण वह्निधूमाग्रहणकाले विमर्शवशात्पूर्वानुभूतसाहचर्यं स्मृत्वा यदि धूमो वह्निं व्यभिचरेत्तर्हि नियतसाहचर्यमनुपपन्नमिति विचारात् जायमानव्याप्तिग्रहस्य तस्यैव व्याप्यपरामर्शोऽनुमानं स्यात्तस्याप्याविशेषवि-

षयत्वादित्यर्थः। परामर्शः प्रत्ययमात्रमुत प्रत्यभिज्ञानमिति विकल्प्य प्रथमकल्पोऽपाकृत इदानीं द्वितीयमनुभाषते * नेति * परामर्शवचनस्य प्रत्यभिज्ञार्थत्वात्प्रथमग्रहणे युगपदुभयग्रहणे च नातिव्याप्तिरित्यर्थः। व्याप्यमात्रविषयपरामर्शः किं वा व्यापकविशेषविषयोऽनुमानमिति विकल्प्य प्रथममतिव्याप्त्या दूषयति * नेति * धूमाग्न्योरविनाभावेन भवितव्यमन्यथा नियतसाहचर्यमनुपपन्नमिति विचारात्पूर्वं व्याप्तिं प्रतीत्य—ज्ञात्वा तत्संस्कारसहितविचारान्तरात् यैव व्याप्तिर्मया पूर्वं गृहीता सैवेयमिति प्रत्यभिजानानस्य—प्रत्यभिज्ञां कुर्वतो व्याप्तिप्रत्यभिज्ञाने व्याप्यस्य स्फुरणात्तत् ज्ञानमनुमानं स्यादिति योजना। आप्तोपदेशादेरित्यत्रापि एवं योजनं द्रष्टव्यम्। उक्तातिव्याप्तिपरिहाराय द्वितीयमाशङ्कते * विशेषेति * विचाराप्तोपदेशाभ्यां जायमानज्ञानस्य परोक्षतया विशेषविषयत्वेनास्ति व्याप्यविशेषविषयत्वे सति परामर्शत्वमनुमानत्वमतो नातिव्याप्तिरित्यर्थः। विशेषस्य विषयान्तरेऽभावादव्याप्तिरिति दूषयति * नेति * किमिदं विशेषविषयत्वं पर्वतादिनिष्ठधूमादिभेदविषयत्वं किं वा सामान्यतो व्यक्तिविषयत्वमिति विकल्प्य प्रथमेऽव्याप्तिरित्युक्तं स्पष्टयति * ऐकेति * पर्वतनिष्ठधूमविषयत्वस्यारण्यगतधूमपरामर्शेऽनुमापकेऽभावादव्याप्तिरित्यर्थः। द्वितीयं प्रत्याह * सामान्येति * व्यक्तित्वाधिकरणमात्रं प्रागुदाहृतप्रत्यभिज्ञानेऽपि स्फुरतीत्यतिव्याप्तिरित्यर्थः।

४९५ विकल्पोपन्यासपूर्वकं साध्यज्ञापकत्वदूषणम् ।

एवं व्याप्यविषयत्वप्रयुक्तं दूषणमुक्त्वा साध्यज्ञानजनकत्वप्रयुक्तं दूषणं दर्शयितुं विकल्पयति ।

किञ्च धूमवत्त्वादे र्यदाकदाचिदग्निमत्वं वा प्रतीयते तदानीं वाऽग्निमत्त्वं पर्व्वतादेः । नाद्यः तदानीमिवान्यदाऽप्यग्न्यर्थिप्रवृत्तेस्तत्र प्रसङ्गात् । न द्वितीयः तदानीमग्निमत्तया व्याप्तत्वानवगमात् । तदेति धूमकालोऽपेक्षित इति चेन्न । क्वचिद्देशेऽन्यदाऽपि धूमस्यावस्थानमस्तीति कालान्तरस्यापि धूमकालत्वात् । तद्धूमकालोऽपेक्षित इति चेन्न । तच्छब्दस्य व्यक्तिविशेषवचनत्वेऽप्रतीतव्याप्तिकत्वं यत्किञ्चिद्व्यक्तिवचनत्वे चोक्तदोषापत्तिः । हेतोः पक्षधर्मतयांऽप्यपर्व्वतादिधर्मः साध्यो माभूत्ततस्तु कालान्तरे किं न स्यात् । तं कालमन्तर्भाव्य पक्षत्वे कथं पश्चान्निष्कम्पं प्रवर्त्तेत । धूमकालमन्तर्भाव्य चेदुक्तमावर्त्तते । तद्धूमकालञ्चेदंशतः स्ववृत्तिः ।

*** किं चेति * धूमवत्त्वादिहेतोः पर्वतादेरग्निमत्वं यदाकदाचित्प्रतीयते कालविशेषस्य व्याप्तिविशेषणस्यास्फुरणा,त्तुत यदा व्याप्यपरामर्शस्तदानीमेवानतिप्रसङ्गादिति विकल्पार्थः । आद्यमतिप्रसङ्गेन दूषयति * नेति * अनियतकालाग्निमत्त्वादिप्रतीतौ यथाऽनुमानकाले ऽग्न्यर्थी पर्वते प्रवर्त्तते तथा कालान्तरेऽपि तदर्थी प्रवर्त्ततैव प्रवृत्तिहेतुविषयनिश्चय-**

भावादिति भावः । अस्तु तर्हि द्वितीयस्तत्राह * नेति * तदिति प्रयोगकालो विवक्षित उत धूमकाल इति विकल्प्य प्रयोगकालस्य विवक्षितत्वे तद्विशिष्टाग्निना धूमस्य व्याप्त्यग्रहाद्व्याप्यपरामर्श इति लक्षणासम्भव इति भावः । द्वितीयं कल्पमाशङ्कते * तदेति * धूममात्रकालो विवक्ष्यते किं वा पक्षनिष्ठधूमकाल इति विकल्प्य प्रथमं दूषयति * नेति * कालान्तरेऽपि क्वचिद्देशान्तरे धूममात्रस्यावस्थानमस्तीति कृत्वा कालान्तरस्य धूमकालत्वादग्न्यर्थिप्रवृत्तिप्रसङ्ग इत्यर्थः । द्वितीयमाशङ्कते * तदिति * तच्छब्देन पर्वतादिपक्षविशेषो विवक्ष्यते किं वा पक्षमात्रमाद्येऽसिद्धिरित्याह * नेति * पक्षविशेषनिष्ठधूमकालीनाग्निना व्याप्तिग्रहाभावादसम्भव इत्यर्थः । अप्रतीतव्याप्तिकत्वं व्याप्याभिमतस्येति शेषः । द्वितीयमपवदति * यदिति * पक्षमात्रनिष्ठधूममात्रस्य कालान्तरेऽपि सत्वं यत्र क्वचिद्यत्किञ्चिद्धूमधर्मिणो यत्किञ्चित्साध्यवत्तया येन केन चित्पक्षीकरणादतश्च कालान्तरे ऽप्यग्न्यर्थिप्रवृत्तिः स्यादिति कथितदोषापत्तिरित्यर्थः । व्याप्तिमात्रान्न साध्यासिद्धिः किन्तु हेतोः पक्षधर्मतयाऽपि तेन न पर्वतानिष्ठात् धूमाद्देशान्तरकालान्तरवह्निसिद्धिरिति शङ्कते * हेतोरिति * हेतोर्व्याप्त्या पक्षधर्मतयाऽप्यपर्वतादिधर्मः पर्वतेतरदेशगतस्तत्कालेतरकालगतो वह्निः साध्यो मा भूत् किन्तु तद्देशकालीन एव साध्यो भवेदिति योजना । पक्षधर्मताबलात् पक्षध-

र्मनियमवत्कालनियमोऽपि भविष्यतीति भावः। पक्ष-धर्मताबलात्पक्षनियम इति दृष्टान्तांशमङ्गीकरोति * तत इति * हेतोः पक्षधर्मता देशान्तरव्यावर्त्तिका तर्हि कालान्तरव्यावर्त्तिकाऽपि किं नाङ्गीकृता तत्राह *कालेति* पक्षधर्मता खल्वनुमानवादिभिः पक्षे साध्यसिद्ध्यर्थमङ्गीकृता साध्यसाधनयोरैकाधिकरण्यव्याप्तिबलान्न चैवं कालसिद्धिस्तस्य साध्यतद्विशेषणयोरभावादित्यर्थः। पक्षधर्मता पक्षे साध्यं साधयन्ती कालनियममपि साधयत्येव कालस्यापि पक्षान्तर्भावादित्यत आह * तमिति * द्वितीयतृतीयक्षणादौ वन्ह्यर्थी तत्र न प्रवर्त्तेत कालनाशेनान्तर्भावितकालपक्षस्यापि नष्टत्वादित्यर्थः। धूमपरामर्शे नियतोत्तरकालमन्तर्भाव्य पक्षो न भवति येन द्वितीयक्षणादावप्रवृत्तिः किं तु धूमकालमन्तर्भाव्यातो द्वितीयक्षणादौ प्रवृत्त्युपपत्तिर्नापि कालान्तरे प्रवृत्तिरिति शङ्कते * धूमेति * धूममात्रकालमन्तर्भाव्य किं वा तद्धूमकालमन्तर्भाव्य पक्षत्वमिति विकल्प्य प्रथमं प्रत्याह * उक्तमिति * धूममात्रकालस्य सर्वदा भावात्सर्वदाऽपि प्रवृत्तिः स्यादित्युक्तं दूषणमावर्तत इत्यर्थः। द्वितीयं प्रत्याह *तदिति* तद्धूमकालमन्तर्भाव्य यः पक्षस्तास्मिंस्तस्यैव धूमस्य वृत्तावंशत आत्माश्रयो धूमस्य पक्षविशेषणतया स्वं प्रत्याश्रयत्वादित्यर्थः।

व्याप्यस्य पक्षधर्मत्वं लिङ्गत्वमित्यत्र पक्षधर्मत्वमखण्डि, व्याप्यत्वमपि खण्डयितुं तद्विशेषणव्याप्तिखण्डनं प्रस्तौति।

त्रिकत्वं सम्बन्धस्य । सर्वासु तज्जातीयव्यक्तिषु विद्यमानतेति चेत् । नेयं सर्वतज्जातीयव्यक्त्यपरिज्ञाने शक्यावधारणा । न च सर्व्वास्ता व्यक्तयो विशेषतो ज्ञातुं शक्याः तत्तत्प्रमितिकरणासम्भवात् ।

* न काचित्क इति * व्याप्यमात्रस्य[1] व्यापकमात्रेण यः सम्बन्धः स व्याप्तिर्न[2]चैतत्पार्थिवत्वलोहलेख्ययोरस्ति वज्रे पार्थिवत्वे सत्येव लोहलेख्यत्वाभावादिति भावः । विशेषणासम्भवेन विशिष्टलक्षणासम्भवं वक्तुं विशेषणस्वरूपं पृच्छति * किमिति * यावत्यो व्याप्यव्यापकव्यक्तयस्तावतीषु सर्वासु विद्यमानत्वं सम्बन्धस्य सार्वत्रिकत्वमिति शङ्कते * सर्वास्विति * सर्वतज्जातीयव्यक्तिपरिज्ञाने सति तद्गतत्वं सार्वत्रिकत्वं सम्बन्धस्य ज्ञायते, किं वा तदज्ञान इति विकल्प्य न द्वितीयोऽसम्भवादित्याह *नेयमिति* अस्तु तर्हि प्रथमः कल्पस्तत्राह * न चेति * कुत इत्यत आह *तत्रेति* स्वेन स्वेनासाधारणरूपेण सर्वव्यक्तिपरिज्ञाने करणभूतेन्द्रियसन्निकर्षाभावादित्यर्थः ।

प्रमितिकरणासम्भवोऽसिद्ध इन्द्रियस्यैव प्रमितिकरणत्वादिति शङ्कते ।

४१८ सामान्यप्रत्यासत्तिखण्डनम् ।

इन्द्रियेण सामान्यलक्षणया प्रत्यासत्त्या व्याप्तिग्रहणकाले सर्वास्तज्जातीयव्यक्तयो गृह्यन्ते यदनभ्युपगमे पण्डक-

---

१ मात्रस्याव्यापकेति सो० पु० पा० ।

२ सव्याप्तिर्जीवेत्पार्थिवत्वेति पु० पा० ।

४९६ व्याप्तिखण्डनम् ।

कश्च व्याप्तिशब्दार्थ इति वक्तव्यम् । अविनाभाव इति चेन्न । किमेकस्याव्यतिरेकेऽपरस्य भावोऽविनाभावपदार्थः, उत एकस्य व्यतिरेकेऽपरस्य व्यतिरेकः । यद्याद्यस्तदाऽव्यतिरेकोऽन्वयार्थ इत्येकस्यान्वयेऽपरस्यान्वय इत्युक्तं स्यात् । एवञ्च सति पार्थिवत्वलोहलेख्यत्वयोरन्वयोव्याप्तिः स्यात् ।

*कश्चेति* व्याप्यत्वं वदता व्याप्तिर्निरूपणीया सा च दुर्निरूपेत्याशयः। व्याप्तिलक्षणं शङ्कते *अविनेति* दूषणं प्रकटयन्विकल्पयति *किमिति* न विनाभावः अविनाभाव स्तत्र नञो विनेत्यनेन सम्बन्ध, उत भावेत्यनेन, यदि विनापदसंबन्धस्तर्हि एकस्य व्यापकस्याव्यतिरेके भावे परस्य व्याप्यस्य भाव इत्यर्थः स्या,द्यदि भावपदेन संबन्धस्तर्ह्येकस्य व्यापकस्य व्यतिरेकेऽभावेऽपरस्य व्याप्यस्य व्यतिरेकोऽभावोऽविनाभाव इति विकल्पार्थः। प्रथमपक्षमनुवदति *यदीति* व्यतिरेकव्याप्तिरसङ्गृहीता स्यादित्यभिप्रेत्य परिनिष्पन्नमर्थमाह * तदेति * न केवलमव्याप्तिरतिव्याप्तिरपीत्याह * एवं चेति * यत्पार्थिवं तल्लोहच्छेद्यमिति व्याप्त्यभावे लक्षणातिव्याप्तिरित्यर्थः ।

उक्तातिव्याप्तिपरिहाराय लक्षणविशेषणं शङ्कते ।

४९७ सार्वत्रिकसम्बन्धस्य व्याप्तित्वखण्डनम् ।

न काचित्कः सम्बन्धो व्याप्तिः सार्व्वत्रिकस्य तथात्वेन विवक्षितत्वादिति चेत् । किमिदं सार्व्व-

त्रिकत्वं सम्बन्धस्य । सर्व्वासु तज्जातीयव्यक्तिषु विद्यमानतेति चेत् । नेयं सर्व्वतज्जातीयव्यक्त्यपरिज्ञाने शक्यावधारणा । न च सर्व्वास्ता व्यक्तयो विशेषतो ज्ञातुं शक्याः तत्तत्प्रमितिकरणासम्भवात् ।

* न काचित्क इति * व्याप्यमात्रस्य[1] व्यापकमात्रेण यः सम्बन्धः स व्याप्तिर्नचैतत्पार्थिवत्वलोहलेख्ययोरस्ति वज्रे पार्थिवत्वे सत्येव लोहलेख्यत्वाभावादिति भावः । विशेषणासम्भवेन विशिष्टलक्षणासम्भवं वक्तुं विशेषणस्वरूपं पृच्छति * किमिति * यावत्यो व्याप्यव्यापकव्यक्तयस्तावतीषु सर्वासु विद्यमानत्वं सम्बन्धस्य सार्वत्रिकत्वमिति शङ्कते * सर्वास्विति * सर्वतज्जातीयव्यक्तिपरिज्ञाने सति तद्गतत्वं सार्वत्रिकत्वं सम्बन्धस्य ज्ञायते, किं वा तदज्ञान इति विकल्प्य न द्वितीयोऽसम्भवादित्याह *नेयमिति* अस्तु तर्हि प्रथमः कल्पस्तत्राह * न चेति * कुत इत्यत आह *तत्रेति* स्वेन स्वेनासाधारणरूपेण सर्वव्यक्तिपरिज्ञाने करणभूतेन्द्रियसन्निकर्षाभावादित्यर्थः ।

प्रमितिकरणासम्भवोऽसिद्ध इन्द्रियस्यैव प्रमितिकरणत्वादिति शङ्कते ।

४१८ सामान्यप्रत्यासत्तिखण्डनम् ।

इन्द्रियेण सामान्यलक्षणया प्रत्यासत्त्या व्याप्तिग्रहणकाले सर्व्वास्तज्जातीयव्यक्तयो गृह्यन्ते यदनभ्युपगमे पण्डक-

---

१ मात्रस्याव्यापकेति सो० पु० पा० ।

२ सव्याप्तिजीवेत्पार्थिवत्वेति पु० पा० ।

मुद्वाह्य मुग्धायाः पुत्रप्रार्थनमिवेति वाचस्पतिरुपालम्भम-वादीदिति चेत् । मैवम् । सामान्यलक्षणया प्रत्यासत्त्या व्याप्तिं गृह्णतः सार्वज्ञप्रसङ्गात् । क्वचिदप्यज्ञानं ते नस्यादिति च सार्व्वज्ञापादनमिति न प्रतिकृत्यापि । प्रमेयतया व्याप्तिग्रहणकाले सर्वतज्जातीयव्यक्तिग्रहणे प्रमेयत्त्वादिसर्व्वं तदा ज्ञायत एव न तु रूपान्तरेणेति चेन्न । यदि रूपान्तरेण तत् प्रमेयं तदा रूपान्तरवतोऽपि प्रमेयत्वाधारतया कथमग्रहणम् । अथ न प्रमेयं नास्त्येव रूपान्तरेण तत् । येन तु रूपेणास्ति तेन सर्व्वेण प्रमेयमिति यावद्विद्यमानाकारेण ज्ञातत्वप्रङ्गः । तथात्वस्वीकारे च ज्ञायतां प्रमेयत्वदर्शिना भवता मामकी चित्तवृत्तिः ततः श्रद्धास्ये ।

* इन्द्रियेणेति * यदा यत्र धूमस्तत्राग्निरिति व्याप्तिग्रहणकाले चक्षुषा धूमाग्नी संयोगात् गृह्येते तदा धूमत्वाग्नित्वसामान्ये संयुक्तसमवायात् गृह्येते तद्विशेषणभूताश्च व्याप्यव्यापकव्यक्तयः सर्वाः सामान्यलक्षणया प्रत्यासत्त्या गृह्यन्त इत्यर्थः । विपक्षे दण्डं न्यायवाचस्पतिरेवावोचदित्याह *यदिति* यस्य सर्वोपसंहारवत्या व्याप्तेरनभ्युपगमे पण्डकं नपुंसकमुद्वाह्य परिणीय मुग्धाया मूढकामुक्याः परिणेतुः पुत्रप्रार्थनसदृशं व्याप्यदर्शनाद्व्यापकानुमानमित्याक्षेपमवादीदित्यर्थः । अतिप्रसङ्गेन परिहरति *मैवमिति* यद्वस्तु तत्प्रमेयमिति वस्तुत्वादेः प्रमेयत्वादिना

व्याप्तिग्रहणकाले सामान्यलक्षणप्रत्यासत्त्या सर्वपदार्थग्रहणप्रसङ्गेन सर्वज्ञत्वं ते स्यादित्यर्थः । सर्वज्ञत्वं ते स्यादित्यतिप्रसङ्गस्याऽपि सर्वज्ञानव्यतिरेकेणासम्भवात्तथापि सर्वज्ञत्वप्रसङ्ग इत्याऽऽशङ्क्याह *क्वचिदिति* मत्पृष्टपदार्थाकथनात्तद्विषयज्ञानाभावस्तव सिद्धः स नस्यात्तद्विषयज्ञानवत्त्व इति मदीयप्रसङ्गार्थ इति कृत्वा तवापि सर्वज्ञत्वं स्यादिति न प्रतिकृत्यापि प्रभवतीत्यर्थः । क्वचिदपि मच्चित्तस्थे पदार्थे पृष्टस्यावचनात् यत्तवाज्ञानं निश्चितं तत् न स्यादित्यनेन प्रकारेण सार्वज्ञापादनमिति कृत्वा तत्र प्रतिकृत्यापीति योजना । कृत्या नाम काश्चिद्देवताविशेषोऽनर्थहेतुस्तस्य विनाशकं देवतान्तरं प्रतिकृत्येत्युच्यते न प्रतिबन्दीत्यर्थः। इदमिष्टापादनं सर्वस्यापि प्रमेयाकारेण व्याप्तिग्रहणकाले ग्रहणादिति शङ्कते * प्रमेयेति* तर्हि सर्वस्य व्याप्तिग्रहणकाले सिद्धत्वादसाधारणविषयाभावोऽनुमाया इत्यत आह* न त्विति * तद्रूपान्तरं प्रमेयं न वा, यदि प्रथमस्तत्राह *नेति* रूपान्तरस्य प्रमेयत्वे तदात्मना तद्रूपमपि गृहीतं स्यादित्यर्थः।द्वितीयमुत्थापयति *अथेति* यदस्ति तत्प्रमेयमिति भवन्नियमात्तत्र स्यादेवेत्याह *नास्तीति* माऽस्तु तदप्रमेयं रूपान्तरं तथापि विद्यमानरूपेष्वेव कतिपयरूपापरिज्ञानान्न सार्वज्ञप्रसङ्गस्तत्राह * येनेति * विद्यमानाकारस्य सर्वस्य प्रमेयत्वाधारतया ज्ञातत्वात्सार्वज्ञ्यमप्यस्तु को दोषस्तत्राह *तथा त्वेति* तत्र अज्ञास्ये त-

१ नापीति सो० पु० पा० ।

त्सार्वज्ञमिति शेषः ।

भेदाभेदमतावलम्बनेन चोद्यति ।

४९९. भेदाभेदमतावलम्बनेन शङ्कानिरासः ।

स्यादेतत् यथा भेदोऽन्योन्याभाववैधर्म्यादिः पृथक् तथैक्यमपि वस्तूनां, ततः प्रमेयत्वाद्यपि धर्मिणामेकत्वमेकमेव ततः प्रमेयत्वेन ज्ञायमानं तत् सर्वमपि तेनैक्येन प्रतीयमानैकव्यक्त्यात्मकमेव ज्ञायमानं भवतीति कथं तदेकत्ववेदिनः सार्व्वज्ञम् । नच वाच्यं नानात्वमपि व्यक्तीनां प्रमेयमिति तदपि धर्मितया ग्राह्यमेवेति, यतस्तदपि प्रमेयत्वादिना गृह्यमाणमेकमेव गृहीतं भवतीति । तस्मात्——

"एको भावस्तत्त्वतो येन दृष्टः

सर्व्वे भावास्तत्त्वतस्तेन दृष्टा इति ।,,

तत्त्वतस्तद्रूप्येण एकीभूता इति । तदेतदपि नोपपन्नम् । नानैकमिति व्याहतप्रतीत्यापत्तेः ।

*स्यादेतदिति* अन्योन्याभावादिर्भेद एको न भवति किं तु भिन्न इति वैधर्म्यदृष्टान्तमाह *यथेति* भेदस्य भिन्नत्वात्तद्विलक्षणमभेदापरपर्यायमैक्यं वस्तूनामेकमेवेत्याह *तथेति* ऐक्यस्यैकत्वेन प्रमेयत्वस्य किमायातमिति तत्राह *तत इति* प्रमेयत्वं वस्तुत्वं च सर्वभावानामैक्यत्वमेकमेव तथाऽपि कथमनिष्टापत्तिपरिहार इत्यत आह *तत इति* यतः प्रमेयत्वादिलक्षणेनैकत्वेनै-

१ मेकमेवेति का॰ मु॰ पु॰ नास्ति ।

क्यात्प्रमीयमाणायाः पुरोवर्तिन्या एकस्या व्यक्तेरात्मना स्वरूपेण ज्ञायमानमेकमेव ज्ञानं भवतीत्यैकत्ववेदित्वान्न सार्वज्ञप्रसङ्ग इत्यर्थः । नानात्वस्यापि प्रमेयत्वात्प्रमेयग्रहणे तद्धर्मितया नानात्वमपि गृह्यत एवेति स एव सार्वज्ञप्रसङ्ग इत्यत आह *न चेति* कुत इत्यत आह *यत इति* नानात्वमपि गृह्यमाणं प्रमेयत्वादिना गृह्यमाणत्वादेकमेव गृहीतं भवतीत्यर्थः। नानात्वमपि प्रमेयत्वादिना गृह्यमाणमेकमेव भवति यस्मात्तस्मादित्युत्तरश्लोकार्थमपेक्षितमाह *तस्मादिति* अभियुक्तवचनमुदाहरति * एक इति * सर्वे भावास्तत्वत इतीति * यथायथमसाधारणरूपेण सर्वपदार्थज्ञानं तत्रोक्तं नैकत्वज्ञानमित्याशङ्क्य तत्त्वत इति पदं व्याचष्टे * तत्त्वत इति * एकत्वं नानात्वं च किमेकेन रूपेण सर्वभावानामुत रूपभेदेनेति विकल्प्य प्रथमं प्रत्याह * तदिति * हेतुं व्याचष्टे *नानेति* एकत्वनानात्वयोरेकतयाऽवस्थानव्याघातस्तथाहि एकं नानेति शब्दप्रत्ययानामेकार्थत्वे ऽन्योन्यविषयस्यान्योन्यान्तर्भावाभ्युपगमे ऽन्यतरपरिशेषादन्यतरत् लुप्येतेत्यर्थः ।

द्वितीयं कल्पमुत्थापयति ।

५०० द्वितीयकल्पनिरासः ।

अथ रूपान्तरेण नानात्वं प्रमेयत्वादिना चैक्यमिति व्यवस्थित्या न व्याघातः स्यात् । तर्हि प्रमेयत्वाद्याधारस्य व्यक्तिभेदस्य कृत्स्नस्य ग्रहणात् सार्वज्ञापत्तिस्तादवस्थ्येति ।

*अथेति* रूपान्तरेण घटपटादिव्यक्त्यात्मनेति यावत्। रूपान्तरस्य प्रमेयत्वानधिकरणत्वेऽसत्त्वापातात्प्रमेयत्वाधिकरणतया साकल्येन ग्रहात्सार्वज्ञापत्तिर्वज्रलेपायितेति परिहरति * तर्हीति *

सार्वज्ञ्यप्रसङ्गात् न सर्वव्याप्यव्यापकव्यक्तिग्रहसम्भव इत्युक्तमधुना प्रौढ्या सर्वव्यक्तिग्रहमुपेत्य न सार्वत्रिकसम्बन्धलक्षणव्याप्तिग्रहसम्भवस्तद्ग्राहकानिरूपणादित्याशयवानाह ।

५७१ सर्वव्यक्तिग्रहं उपेत्यापि व्याप्तिग्रहासम्भवः ।

किञ्च सामान्यलक्षणया प्रत्यासत्त्या तज्जातीयविशेषग्रहणे तासु सर्व्वासु व्यक्तिषु सम्बन्धास्तित्वे किं प्रमाणम्। सर्व्वव्यक्तिवृत्तत्सम्बन्धग्रहेऽपि व्याप्तिग्राहकमिन्द्रियमेव प्रमाणमिति चेत्तर्हि क्वचिदेवमवधारितस्य यद्व्यभिचारो दृश्यते तन्न स्यात् इन्द्रियेण तत्सम्बन्धस्य प्रमितत्वात् । भ्रान्तिस्तत्र सम्बन्धप्रतीतिः पश्चाद्बाधादिति चेन्न । सामग्र्यभेदे काचिद्भ्रान्तिः काचिद्भ्रान्तिरिति विभागानुपपत्तेः दोषादोषवैचित्र्यविवेचनस्य च दुष्करत्वात् ।

* किं चेति * किं प्रमाणमिति प्रत्यक्षमुतानुमानादीति विकल्पाभिप्रायः। नानुमानादि तस्य व्याप्तिसापेक्षतया तद्ग्रहात्प्रागप्रवृत्तेरित्येकं कल्पं दुर्गन्धं निरस्य

१ इन्द्रियेण तत्र सम्बन्धित्त्वस्येति सो० पु० पा० ।
२ दूरगन्धमिति सो० पु० पा० ।

प्रत्यक्षं प्रमाणमिति कल्पान्तरमाशङ्कते * सर्वेति * संयुक्तसमवेतविशेषणभूता व्याप्तिविशिष्टा व्यक्तयस्तेन व्याप्तिरपि संयुक्तसमवेतविशेषणतया व्यक्तिवदिन्द्रियेण गृह्यत इत्यर्थः । धूमाग्न्योर्व्याप्तिग्रहे या सामग्री सैव पार्थिवत्वलोहलेख्यत्वयोर्व्याप्तिग्रहेप्युत तद्विलक्षणेति विकल्प्य प्रथममपाकरोति * तर्हीति * पार्थिवत्वलोहलेख्यत्वयोः काष्ठादाववधारिततया व्याप्तेर्वज्रादौ व्यभिचारो दृश्यते स न स्यादित्यर्थः । सामान्यप्रत्यासत्त्या सार्वत्रिकसम्बन्धस्य प्रमितत्वादिति हेतुमाह * इन्द्रियेणेति * धूमाग्न्योरिवेति दृष्टान्तः । प्रमितत्वादित्यसिद्धो हेतुः पार्थिवत्वलोहलेख्यत्वयोर्व्याप्तिग्रहस्य भ्रान्तित्वादिति शङ्कते * भ्रान्तिरिति * व्याप्तिग्रहत्वाविशेषे सा किं नाभ्रान्तिर्धूमाग्निव्याप्तिग्रहवदित्याशङ्क्याबाधितार्थत्वमभ्रान्तित्वप्रयोजकमित्याह * पश्चादिति * अबाध्याऽपि सा धूमाग्निव्याप्तिग्रहसामग्रीगतकार्यजन्यत्वात्तदेवेति परिहरति * नेति * धूमाग्न्योरदुष्टमिन्द्रियं व्याप्तिग्राहकं दुष्टंतु पार्थिवत्वलोहलेख्यत्वयोरिति सामग्री विलक्षणेति द्वितीयं कल्पमाशङ्क्याह * दोषेति * किमिदानीमिह वैचित्र्यं प्रत्यक्षगम्यमुतानुमेयं, नाद्य इन्द्रियस्याप्रत्यक्षत्वादित्यर्थः ।

बाध्यत्वाबाध्यत्वलक्षणकार्यगतवैलक्षण्यात्सामग्रीवैलक्षण्यमनुमेयमिति द्वितीयकल्पमाशङ्कते ।

५०२ कार्यवैलक्षण्येन कारणवैलक्षण्यमितिशङ्कानिरासः ।

कार्यभेदादेव सामग्रीभेदोऽप्युन्नेय इति चेत् । उन्नी-

यताम्। स एव तु कीदृगुन्नेय इति वाच्यम्। न तावत्सा-र्वत्रिकसम्बन्धभावाभावात्मकस्तदानीं भाविनां सम्बन्धानामसत्त्वेनाकारणत्वात् । सामान्यतश्च तज्जातीययोः सम्बन्धस्य प्रतीतेः पूर्वं सत्त्वं भ्रान्त्यभ्रान्तिसाधारणं, क्वचिदपि सम्बन्धाभावे भ्रान्तेरनुत्पादात् ।

*कार्येति* कार्यवैलक्षण्यं सामग्रीवैलक्षण्यानुमापकमित्युक्तमङ्गीकरोति *उदिति* अनङ्गीकृतमंशं स्फोरयति * स इति * यत्र दोषस्तत्र सार्वत्रिकसम्बन्धाभावो यत्र दोषाभावस्तत्र सार्वत्रिकसम्बन्धः कर्मतया व्याप्तिग्रहणसामग्र्यामन्तर्भवतीत्येवंरूपो विशेष उन्नेय उतान्य इति विकल्पाभिप्रायमेतत्प्रत्यक्षज्ञाने कर्मतयाकारप्रदस्यैव विषयत्वनियमात् । प्रथम एव कल्पोऽस्त्वित्यत आह * तदानीमिति * सम्बन्धस्य-सामग्र्यन्तर्भावे प्राक्सत्वलक्षणं करणत्वं वाच्यं तन्न सम्भवति कालान्तरभाविधूमाग्निसम्बन्धानां व्याप्तिग्रहणापेक्षया प्रागसत्वादित्यर्थः। यद्यपि भावसम्बन्धा विशेषात्मना तदानीं न सन्ति तथाऽपि सामान्यात्मना सन्त्येव व्याप्यव्यापकसम्बन्धस्य कस्य चित्तदा सद्भावादित्याशङ्क्याह * सामान्येति * तज्जातीययोर्व्याप्यव्यापकजातीययोः सम्बन्धस्य प्रतीतेः पूर्वं सामान्यतः सत्वमिति सम्बन्धः। पार्थिवत्वलोहलेख्यत्वयोरपि काष्ठादौ सम्बन्धो भवतीति भावः। तदेवोपपादयति *क्वचिदिति* सख्यादिनो मते देशान्तरादिगतस्यैव भ्रान्तौ स्फुरणं

क्वचित्प्रामाणिकस्यैवान्यत्रारोपावगमादिति भावः।
प्रथमकल्पदोषो ऽनङ्गीकारपरास्त इत्यभिप्रेत्य द्वितीयकल्पमाशङ्कते।

५०३ द्वितीकल्पनिराकरणम्।

किमेतावता अन्यएव तर्हि कार्य्यभेदात्कारणभेदः कल्पयिष्यत इति चेत्। स हि किमिन्द्रियसहकारिभूतः करणान्तरमेव वा कल्पनीय इति वाच्यम्। नाद्यः इन्द्रियस्य भाविभूतसम्बन्धांशे प्रमाणत्वकल्पनायां प्रमाणाभावात्। प्रत्युत व्युपरतेन्द्रियव्यापारस्यापि विचारयतः पूर्व्वप्रतीतसम्बन्धधर्म्मिद्वयस्य व्याप्त्यवधारणदर्शनात्। तदापि मनोऽस्तीन्द्रियमिति चेत् अस्तु, तस्मिन् कार्य्ये मनसः करणत्वे तु प्रमाणाभावः। अवश्यपरिकल्पनीयेनान्येनैव सर्व्वानुपपत्त्युपशान्तेः। कारणत्वमात्रं तु चक्षुरादिजज्ञानवन्मनसस्तत्र स्यात्। चक्षुरादिवत्करणं अन्यदेव तत्कल्पनीयमिति सप्तममिन्द्रियं प्रमाणान्तरं वा प्रसज्येत। अन्यथा चाक्षुषादिप्रतीतावपि चक्षुरादेः करणत्वं न स्यात्। शक्यते तत्रापि वक्तुं मन एव तत्र सुखादिप्रतीतिवत्करणं चक्षुरादयस्तु सहकारिमात्रम्। नापि द्वितीयः इन्द्रियान्तरप्रसङ्गात् प्रमाणान्तरप्रसङ्गाद्वा।

* किमिति * अस्य पक्षस्यासम्भवं वक्तुं विक-

त्पयति * स हीति * इन्द्रियसहकारितया कारण-निरपेक्षमेव कारणं वेति विकल्पार्थः । प्रथमपक्षं नि-षेधति * नेति * सार्वत्रिकसम्बन्धग्रहणकारणस्य वर्त्तमानैकग्राहीन्द्रियसहकारित्वासम्भवादिति भा-वः । न केवलमिन्द्रियस्य कारणत्वे प्रमाणाभावः प्रत्यु-त व्यापारव्यतिरेकेण व्याप्तिग्रहणदर्शनादकारणमेवे-त्याह * प्रत्युतेति * पूर्वं प्रतीतः सम्बन्धो यस्य व्या-प्यव्यापकधर्मिद्वयस्य तस्य व्याप्त्यवधारणदर्शनादु-परतः चक्षुरादीन्द्रियव्यापारो यस्य तस्य पुंसो व्या-प्तिमन्तरेण धूमाग्न्योर्भूयः साहित्यदर्शनं नोपपद्यत इति विचारयतो ऽन्वयव्यतिरेकाभावान्नेन्द्रिये व्याप्ति-ग्रहकारणत्वमित्यर्थः । भूतभाविसम्बन्धांशे बहिरि-न्द्रियस्याप्रमाणत्वेऽपि मनसः प्रामाण्यं भवतीत्या-शङ्कते * तदेति * व्याप्तिग्रहणं मनोऽतिरिक्तकरणजन्यं बाह्यार्थग्रहणत्वात् घटादिग्रहणवदिति परिहरति * अस्त्विति * न च स्वप्नप्रत्यये व्यभिचारः प्रमाणत्वेन विशेषणीयत्वाच्चक्षुरादेर्व्यभिचारित्वेनाकारणत्वादका-रणप्रतीतेरनुपपत्त्या मनसस्तत्र करणत्वं कल्प्यत इत्यत आह * अवश्येति * कार्यवैलक्षण्यदर्शनाद्यः कारणविशेषः कल्प्यते तेनैव करणानुपपत्त्यादेरुपशा-न्तेर्न मनसस्तत्र करणत्वमित्याशयः । मनसः समा-धानमन्तरेण कदाचिदपि व्याप्तेरग्रहात्केवलव्यतिरे-कविरोधोऽकारणत्ववादिन इत्यत आह *कारणेति* रूपादिज्ञाने मनोऽन्वयव्यतिरेकौ कारणतामात्रेण त-थेहापीत्यर्थः । अस्तु मनसस्तत्र कारणत्वमात्रमतस्त-

स्यैव कल्प्यमानो विशेषः सहकारी भविष्यतीत्याश-ङ्काह * चक्षुरिति * करणमन्तरेण कार्यानुत्पत्तेः करणान्तरं कल्पनीयं यथा रूपादिज्ञानेन मनोऽतिरिक्तं चक्षुरादि करणं कल्प्यते तद्वदित्यर्थः। तथाऽपि क-थमनिष्टापत्तिरित्यत आह * सप्तेति * व्याप्तिग्रह-स्य साक्षात्त्वे तत्करणं सप्तममिन्द्रियं प्रसज्यते शरीर-संयुक्तमतीन्द्रियं साक्षात्प्रतीतिसाधनमिन्द्रियमिति तल्लक्षणात् परोक्षत्वे तत्करणं सप्तमं प्रमाणं प्रसज्येत व्याप्त्यादिनिरपेक्षतया लिङ्गादिवैलक्षण्यादतश्चापसि-द्धान्त इत्यर्थः। व्याप्तिग्रहणं मनोतिरिक्तकरणं मा भूद्भू-याश्च बाह्यार्थग्रहणमतश्च विपक्षे बाधकाभावादप्रयोजक इत्यत आह * अन्यथेति * रूपादिज्ञानस्यापि चक्षु-राद्यकरणत्वप्रसङ्गो बाध इत्यर्थः। व्याप्तिग्रहणस्य म-नःकरणमात्रत्वे रूपादिज्ञानस्य कथं चक्षुराद्यकरणत्वं तत्राह *शक्यत इति* तत्रापि–रूपादिज्ञानेऽपि। तत्र-इन्द्रियाणां मध्य इत्यर्थः। अन्धादेरूपाद्यनुपलम्भाच्च-क्षुरादिकरणत्वासिद्धिरित्यत आह * चक्षुरिति * कल्प्यमानो विशेषो निरपेक्षकरणमिति द्वितीयं दूषयति * नापीति * तत्कल्प्यमानमिन्द्रियरूपं प्र-माणान्तरं वा,ऽऽद्ये कथितरीत्या षडिन्द्रियान्तर्भावा-सम्भवात्सप्तममिन्द्रियं प्रसज्येत द्वितीये तु स्वसम-यपरिगणितप्रमाणप्रकाराधिक्यं प्रसिद्धप्रमाणवैलक्ष-ण्यादित्यर्थः।

अविनाभाव इत्यत्र नञो विनापदसम्बन्ध इति प्रथमकल्पमपास्य भावपदेन नञः सम्बन्ध इति द्वि-

त्वीयं पक्षे प्रति क्षिपति ।

५०४ भावपदेन नञः सम्बन्ध इति कल्पनिराकरणम् ।

नापि विनाभाव एकस्य व्यतिरेकेणापरस्याव्यतिरेक स्तन्निषेधोऽविनाभाव इति द्वितीयः पक्षः । एवं हि लोहलेख्यत्वव्यतिरेकश्च पार्थिवत्वव्यतिरेकश्च क्वचिदस्तीति पार्थिवत्वलोहलेख्यत्वयोरप्यविनाभावः प्रसज्येत । सार्व्वत्रिकं व्यतिरेकयौगपद्यं विवक्षितं न तु क्काचित्कं अत एवोच्यते अविनाभावनियम इति चेन्न। सार्व्वत्रिकान्वयावधारणानिरासन्यायेन सार्व्वत्रिकव्यतिरेकावधारणस्याप्यशक्यत्वात् । शक्यत्वे चाऽन्वयावधारणमेवास्तु सार्वत्रिकं कृतं व्यतिरेकावधारणकुटिलिकया ।

*नापीति* विनाभाव इत्येतद्व्याचष्टे *एकस्येति* एकस्य—व्यापकस्य व्यतिरेकेणाभावेनापरस्य—व्याप्यस्याव्यतिरेकोभावस्तन्निषेधोऽविनाभाव इति । अतिव्याप्तेरिति हेतुमाह *एवं हीति* लोहलेख्यत्वस्य व्यापकस्य व्यतिरेके ऽभावे व्याप्यस्य पार्थिवत्वस्यापि व्यतिरेकोऽस्तीति तयोरप्यविनाभावः स्यादित्यतिव्याप्तिरित्यर्थः । व्यतिरेकसाहित्यमात्रं यदि लक्षणं तदा स्यादतिव्याप्तिर्न तथा, सार्वत्रिकव्यतिरेकसाहित्यस्य लक्षणत्वान्नैवमतिव्याप्ति र्वज्रे लोहलेख्यत्वव्यतिरेकेऽपि पार्थिवत्वाव्यतिरेकादिति शङ्कते *सार्वेति* उक्तेऽभियुक्तसम्मतिमाह * अत इति * एवं सति विशिष्टलक्षणासिद्धिरिति दूषयति * नेति * सामान्यप्रत्यास-

स्या शक्यावधारणत्वमित्युपेत्यापि दूषयति * शक्यत्वे चेति * व्याप्यव्यापकव्यतिरेकावधारणस्याप्यन्वयावधारणपर्यवसायितया गौरवात् कुटिलिका ततो वरं सार्वत्रिकमन्वयस्य प्रामाणिकमनुमानमुक्तं लाघवादित्यर्थः।

अविनाभावो व्याप्तिरिति लक्षणं निरस्य लक्षणान्तरं शङ्कते।

५०५ व्याप्तेर्लक्षणान्तरनिरासः।

यत्र विपक्षे वृत्तौ बाधकमस्ति तयोरन्वयो व्याप्तिरिति केचित्। तन्न। यत्तु विपक्षे वृत्तौ बाधकं तत्प्रमाणं वा तर्को वा स्यात्। आद्ये न तावदिन्द्रियं तदसम्भवात्। अन्यथा व्यभिचाराव्यभिचारसंशयो न स्यात्। नाप्यनुमानम्। अनवस्थाप्रसङ्गात्। नाप्यर्थापत्तिः अनुमानाव्यतिरेकात्। व्यतिरेके वा यदि लिङ्गिव्यतिरेकेण लिङ्गस्यानुपपत्तिस्तदा तत एव लिङ्गिसिद्धेः कृतमनुमानेन। अनेवम्भावे च तयोः किमायातम्।

* यत्रेति * यत्र हेतोर्विपक्षे वृत्तौ बाधकं प्रमाणरूपं तर्करूपं वाऽस्ति यस्य च साध्यस्याभावेन विपक्षता तयोरन्वयो व्याप्तिर्यद्वा यत्र ययोः साध्यसाधनयोर्मध्ये साधनस्य विपक्षे वृत्तौ बाधकमस्ति तयोरन्वयो व्याप्तिरिति। यस्य वृत्तौ बाधकमस्ति तदन्वय इत्युक्ते सर्वधारान्वयव्याप्तिस्तद्व्यावृत्तये हेतोरिति विशेषणम्। तथाऽपि स्वरूपासिद्धस्य पक्षे वृत्तौ बाधक-

मस्ति तद्व्यावृत्त्यर्थं विपक्षेति विशेषणम् । नैवमतिव्याप्ति-र्लोहलेख्यत्वाभावेऽपि वज्रे पार्थिवत्वप्रतीतौ बाधकाभावादित्याशयः । विपक्षबाधकसहितोऽन्वयो व्याप्तिरित्येवमुक्तं स्यात्तन्न सम्भवति विशेषणासिद्ध्या विशिष्टासिद्धेरिति दूषयति * तदिति * विशेषणासिद्धि-मुपपादयितुं विकल्पयति * यदिति * प्रमाणतर्कातिरिक्तबाधकासम्भवात् । यदि प्रमाणं तदपि प्रत्यक्षमुतानुमानमाहो स्विदर्थापत्तिरिति विकल्प्य प्रथमं प्रत्याह * आद्य इति * कुत इत्यत आह * तदिति * इन्द्रियस्य सम्बन्धबोधमात्रपर्यवसायितया ऽतीतानागतविप्रकृष्ट-विपक्षसन्निकर्षासम्भवाच्च बाधकत्वासम्भवादित्यर्थः । विपक्षदण्डमाह * अन्यथेति * भूः शशविषाणोल्लिखिता भूत्वादित्यादौ विपक्षबाधकाभावेन व्यभिचाराशङ्का न स्यादिन्द्रियेणैव विपक्षवृत्त्यभावस्य प्रमितत्वेन संशयनिवारकविशेषदर्शनसद्भावादतश्च सन्दिग्धानैकान्त्यं क्वापि न स्यादित्यर्थः । अस्तु तर्हि गिरिरयमधूमः स्यादनग्नित्वाद्धादिवदित्यनुमानं बाधकमिति द्वितीयस्तत्राह * नापीति * हेतुमाह * अनवस्थेति * तस्याप्यनुमानस्य व्याप्तिसापेक्षतया हेतोर्विपक्षवृत्ति-बाधकानुमानान्तरगवेषणेऽनवस्थाऽन्योन्याश्रयो वा स्वेनैव सिद्धौ स्वाश्रयप्रसङ्गादित्यर्थः । अनग्नित्वे धूमानुपपत्तिरित्यादिरूपार्थापत्तिर्बाधिकेति तृतीयकल्पं पराकरोति * नेति * अर्थापत्तेर्व्याप्तिसापेक्षतया केवलव्यतिरेकिप्रयोगान्तर्भावात्तार्किकमते तस्य च बाधकत्वं निरस्तमित्यर्थः । अर्थापत्त्युत्पत्तौ त्रिरूपत्वानपे-

क्षणादनुमानेन तदपेक्षयैवोत्पद्यमानत्वात्तयोर्व्यतिरेक इति मीमांसकमतमनुसृत्याह * व्यतिरेकेति * लिङ्गिव्यतिरेकेण लिङ्गानुपपत्तिरर्थापत्तिरुतान्यादृशी यदि प्रथमस्तत्राह * यदीति * अग्न्यभावे धूमानुपपत्तिरित्येवंरूपार्थापत्तित एव पर्वतनिष्ठाग्निसिद्धेः कृतमलमनुमानेनेत्यर्थः । द्वितीयं प्रत्याह * नैवमिति * लिङ्ग्यभावे लिङ्गानुपपत्तिरित्येवंरूपस्याभावेऽर्थापत्तेस्तयोर्लिङ्गलिङ्गिनोः किमायातं लिङ्गिव्यतिरेकेण लिङ्गस्य वृत्तावनुपपत्त्यभावान्न तयाऽर्थापत्त्या व्यभिचारासिद्धिरित्याशयः ।

अर्थापत्तेर्बाधकत्वमुपेत्यापि प्रति ब्रूते ।

५०६ उपेत्याऽपि दोषकथनम् ।

अस्तु वा कथमपि तावदर्थापत्तिर्बाधिका । तथापि कीदृगभ्युपगम इतिप्रष्टव्यम् । किं ? विपक्षवृत्तिबाधकसध्रीचीनो यत्र क्वचिदन्वयो व्याप्तिः, उत तत्सहितः सार्वत्रिकोऽन्वयः उत किं नो विशेषणान्वेषणेन तत्सध्रीचीनः सामान्यतोऽन्वयोव्याप्तिः उत सार्वत्रिकान्वयः स च विपक्षे बाधकादवगम्यते । नाद्यः विकल्पानुपपत्तेः । तथा हि किं विपक्षे वृत्तौ बाधकं सर्व्वव्यक्तिविषयं उत सामान्यविषयम् । आद्ये यत्राप्यनुमानं प्रवर्त्तनीयं तत्रावश्योपस्थाप्यया अन्यथाभावबाधकभूतयाऽर्थापत्त्यैव साध्यसिद्धेः शान्तमनुमानव्यसनेन ।

*अस्त्विति* निर्हेतुधूमानुपपत्तिर्हेतुमात्रमाक्षिपति न

श्वग्निमिति कथमपि केनापि प्रकारेणेत्युक्तम् । ताव-दिति सम्प्रतिपत्तौ बाधकं प्रमाणमिति शेषः । तथा-ऽपि व्याप्तिस्वरूपं विवेचनीयामित्याह * तथाऽपीति * विकल्पमेव करोति *किमित्यादिना* विपक्षबाधकस-हितः क्वापि तर्कान्वयो व्याप्तिरिति प्रथमकल्पार्थः । स-ध्रीचीनः सहित इत्येतत् विपक्षबाधकोपेतः सार्वत्रिको ऽन्वयो व्याप्तिरिति द्वितीयविकल्पार्थः । सार्वत्रि-कत्वासार्वत्रिकत्वविशेषणगवेषणेनास्माकं किं स्या-दूबाधकोपेतमन्वयमात्रं व्याप्तिरिति तृतीयकल्पार्थः। सार्वत्रिकान्वय एव व्याप्तिर्न बाधको व्याप्तावन्तर्भ-वति किं तु तद्गमक इति तुरीयार्थः । प्रथममपाकरोति * नेति * अनुपपत्तिं प्रथयितुं विकल्पयति * तथा हीति * किं शब्दस्य सर्वशब्देन सम्बन्धः । सा-ध्याभाववत्यो यावत्यो विपक्षव्यक्तयः सन्ति तासु सर्वासु हेत्वभावविषयामिति प्रथमकल्पार्थः । साध्या-भाववद्वृत्त्यभावं हेतोर्बोधयति न तु सार्वत्रिकत्वा-दिविशेषं इति द्वितीयार्थः । आद्यं प्रतिवक्ति * आद्य इति * यत्र पक्षेऽनुमीयतेऽग्निस्तत्राप्यन्यथाभावबा-धिकयाऽग्न्यभावे धूमभावोऽन्यथाभावस्तद्बाधिकया तत्र साध्यासिद्धेरनुमानकथया शान्तं निवृत्तमित्य-र्थः । सा च तत्रावश्योपस्थाप्याऽन्यथा तत्राग्न्यभावे धूमभावस्याविरुद्धतया व्याप्त्यसिद्धेरिति भावः ।

द्वितीयमपवदति ।

५०७ द्वितीयविकल्पनिरासः ।

द्वितीये क्वचिद्व्यभिचारेऽपि क्वचिदव्यभिचारमाश्रित्य बा-धकस्य चरितार्थत्वं धूमवत्तामात्रमग्निमत्तामात्रव्यतिरे-

कीर्त्येवं रूपो हि सामान्यतो विपक्षपक्षः तत्र च बाधकं तयोरविरोधे पर्य्यवस्यति। अविरोधश्च कचित्साहित्यात्क्वत्येवेति पार्थिवत्वलोहलेख्यत्वयोरप्येवम्भूतव्याप्तत्व-प्रसङ्गः।

* द्वितीय इति * सामान्यविषयस्य काचित्कव्यभिचारमाश्रित्य चरितार्थत्वमिति पार्थिवत्वलोहलेख्यत्वयोरप्येवम्भूतव्याप्तिप्रसङ्ग इत्युपरि सम्बन्धः। चरितार्थत्वं दर्शयितुं बाधकविषयं सामान्यतोविपक्षं दर्शयति * धूमेति * विपक्षं प्रदर्श्य बाधककृत्यमाह * तत्रेति * सर्वविषयत्वाभावे बाधके कथमविरोधे पर्यवस्येदिति न काचित्कव्यभिचारमाश्रित्य बाधकत्वस्य चरितार्थत्वमित्यत आह * विरोधश्चेति * विरोधः सहानवस्थानं तदभावोऽविरोधः स च क चित्साहित्यमात्रेणापि भवतीत्यर्थः।

बाधकोपेतसार्वत्रिकोऽन्वयो व्याप्तिरिति द्वितीयं प्रत्याह।

५०८ द्वितीयतृतीयनिराकरणम्।

नापि द्वितीयः विशेषणवैयर्थ्यात्। सार्वत्रिकोऽन्वय इत्येवोच्यताम्। न च सोऽपि सङ्गत इत्युक्तम्। नाऽपि तृतीयः। बाधकस्य सामान्यविशेषविषयताविकल्पोक्तयुक्त्यैव निरस्तत्वात्।

*नापीति* बाधकसहित इति पदेन पार्थिवत्वलोहलेख्यत्वयोरन्वयो व्युदस्येत सार्वत्रिकविशेषणेनैव त-

प्याप्तं तस्यासार्वत्रिकत्वादित्यर्थः । तर्हि तद्विशेषणं परित्यज्य लक्षणं ब्रूमः तत्राह * न चेति * सम्बन्धसार्वत्रिकत्वस्यासर्वज्ञेन गृहीतुमशक्यत्वादित्युक्तमित्यर्थः । बाधकोपेतमन्वयमात्रं व्याप्तिरिति तृतीयं परास्यति * नापीति * बाधकस्य विपक्षसामान्यविषयत्वे क्वचिद्व्यभिचारमाश्रित्य चरितार्थत्वात्पार्थिवत्वलोहलेख्यत्वयोरपि व्याप्तित्वप्रसङ्गो विशेषविषयत्वे बाधकार्थापत्त्यैव साध्यसिद्धेरनुमानं व्यर्थमित्युक्तयुक्त्यैव निरस्तत्वादित्यर्थः ।

तुरीयोऽपि न चातुरीयं प्राप्नोतीत्याह ।

५०९ चतुर्थविकल्पनिरासः ।

नापि चतुर्थः । तथा हि यद्धूमवत् तदग्निमदित्यत्रेदमन्वयस्य सार्वत्रिकत्वं वाच्यं यत्सर्वासां धूमव्यक्तीनामग्निसम्बन्धित्वं तद्यदि व्याप्तिग्रहकाले गृहीतं तदा पक्षस्यापि धूमवद्व्यक्तेरग्निमत्त्वं प्राक् गृहीतं स्मर्य्यत एवेति गतमनुमानम् । सामान्याऽग्निमत्त्वं तस्यापि गृहीतमेव विशेषतस्त्वनुमीयत इति चेन्न । विशेषत इति किमग्निमत्त्वस्य विशेषो व्यक्तिरूपो विवक्षितः उत कालदेशादिसम्बन्धस्तस्य । नाद्यः सर्वव्यक्तीनां व्याप्तौ प्रतीतत्वेन भवतैवाङ्गीकारात् । नापि द्वितीयः अग्निमद्रूपतया स्मृतस्य पक्षीभूतस्य धूमवद्विशेषस्य चक्षुरादिभिरेव पर्वतत्वादिदेशकालविशेषादिमत्तया परिच्छेदात् ।

यथा प्राक्प्रत्ययाहितसंस्कारसध्रीचीनैश्चक्षुरादिभिः प-रिच्छिद्यमानेदानीम्भावदेशविशेषावस्थानादेः स एवाय-मिति प्रत्यभिज्ञायमानताऽङ्गीक्रियते । तथैवात्राऽप्यस्तु कृतमनुमानेन ।

*नापीति* दूषणं दातुमन्वयस्य सार्वत्रिकत्वं दर्श-यति * तथा हीति * सार्वत्रिकत्वस्वरूपं प्रदर्श्य स-म्प्रति तस्य व्याप्तिग्रहणकाले गृहीतत्वेऽनुमानप्रविलय इत्याह * यदिति * धूमवद्व्यक्तेः पक्षस्याग्निमत्वं व्याप्तिग्रहणकाले गृहीतं कालान्तरे सदृशसन्दर्शनसमु-द्बुद्धसंस्कारबलात्स्मर्यते इत्यनुमानोच्छेद इत्यर्थः। यदि-ति सन्देहः।व्याप्तिबलादग्निमदंशे स्मृतिसम्भवेऽपि पक्ष-धर्मताबललभ्यो विशेषः प्रमेयोऽनुमानस्येति शङ्कते * सामान्येति * विकल्पासहत्वेन दूषयति * नेति * तदुपपादनाय विकल्पयति * विशेषेति * प्रथमं स्वाङ्गी-कारविरोधेन परिहरति * नेति * हेतुमाह * स-र्वेति * सार्वत्रिकान्वयो व्याप्तिरिति वदता त्वयैव सर्वव्यक्तीनां व्याप्तिग्रहकाले गृहीतत्वाङ्गीकारादगृ-हीतो विशेषो ऽनुमेयो न वक्तुं शक्य इत्यर्थः। दे-शकालहस्तवितस्त्यादिपरिमाणसम्बन्धो विशेष इ-ति द्वितीयं दूषयति * नापीति * कुत इत्यत आह * अग्निमदिति * धूमवद्विशेषस्य पक्षीभूतस्य पर्व-तादेरग्निमत्तया स्मृतस्य पर्वतत्वादिदेशकालविशे-षादिमत्तया चक्षुरादिभिरेव परिच्छेदादनुमानवैय्य-र्थ्यमिति सम्बन्धः।तत्र पर्वतो देशः कालो वर्त्तमानो वि-

शेषादीत्यत्र सामान्यं गृह्यते । अग्निमद्रूपतया स्मृ
स्य कथं देशादिविशेषवत्तया चक्षुरादिभिः परि
दस्तत्राह * अग्निमद्रूपतया स्मृतस्येति * अग्नि
द्रूपस्य प्रागनुभूतत्वात्तत्संस्कारसहितचक्षुरादेर्विशि
ष्टाग्निमद्बुद्धौ करणत्वमित्यर्थः । उक्तमर्थं दृष्टान्ते
स्फुटयति * यथेति * प्राक्प्रत्ययः पूर्वानुभवसं
नाहितो निक्षिप्तस्तत्संस्कारसहितइति यावत् । परि
च्छिद्यमान इदानीम्भावविशेषावस्थानादिर्यस्य स
परिच्छिद्यमानेदानीम्भावदेशविशेषावस्थानादिस्तस
ति विग्रहः । इदानीम्भावो वर्त्तमानकालसत्त्वम् । देश
विशेषावस्थानं पुरोदेशवृत्तित्वमादिपदात्कृशत्वस्थू
लत्वादि गृह्यते । दृष्टान्तोक्तमर्थं दार्ष्टान्तिकेऽर्पयति
* तथेति * पूर्वानुभवसंस्कारसहितचक्षुःसम्प्रयो
गजनिते स एवायमिति प्रत्यभिज्ञाने यथा देशका-
लादिविशिष्टो देवदत्तः स्फुरति तद्वद्व्याप्तिग्रहणका-
लगृहीताग्नेस्तत्संस्कारसहितचक्षुरादिना देशादिवि-
शिष्टतया प्रत्यभिज्ञोपपत्तेरनुमानवैयर्थ्यमित्यर्थः ।

उपमानं बाधकमिति कल्पान्तरं निराकरोति ।

५१० उपमानशब्दयोर्बाधकत्वनिरासः ।

नाप्युपमानं बाधकं विपक्षे शक्यं वक्तुं तस्य नि-
यतविषयत्वेनैतादृशे विषयेऽनुदयात् । नापि शब्दः आ-
प्तस्योपदेष्टुरभावे व्याप्त्यनवगमप्रसङ्गात् ।

* नापीति * कुत इत्यत आह * तस्येति * उ-
पमानं संज्ञासंज्ञिसम्बन्धमात्रविषयमित्येके । सादृश्यवि-

षयमित्यपरे। सर्वथा तस्य नियताविषयत्वेन व्याप्तिग्राहकत्वाभावादित्यर्थः। शब्दस्तर्हि हेतोर्विपक्षवृत्तौ बाधकं मानमित्यत आह * नापीति * शब्दोऽपि कृतको नित्यो वा, न नित्यः व्याप्तिग्राहकवेदवचनानुपलम्भाद्धूमादेर्नापि कृतकः उपदेष्टुर्व्याप्तिग्रहकालेऽभावेन तद्ग्रहणप्रसङ्गादित्यर्थः।

अभावस्तर्हि विपक्षवृत्तिबाधकं मानमित्यत्राह।

५११ अनुपलब्धेर्बाधकत्वनिरासः।

अभावस्तु कदाचित् स्यात् सोऽपि निरूप्यमाणो न घटते एवं स वाच्यो यदि वह्निव्यतिरेकेण धूमः स्यात्तदा तथोपलभ्येत न चोपलभ्यतेऽतोऽनुपलम्भान्नास्ति तद्व्यतिरेकेणेति। तच्च न। तथा हि क्वचिद्व्यभिचारादर्शनाद्वाऽयमभावः प्रवर्तते सर्व्वत्र व्यभिचारादर्शनाद्वा। नाद्यः पार्थिवत्वलोहलेख्यत्वयोरपि व्याप्तत्वप्रसङ्गात्। न द्वितीयः सर्वत्र योग्यानुपलम्भो वाऽनुपलम्भमात्रं वा वाच्यम्। नाद्यः सर्वत्र योग्यानुपलम्भासम्भवात्। नापि द्वितीयः पार्थिवत्वलोहलेख्यत्वयोरपि सम्भवात्। तत्र वज्र एव व्यभिचार इति चेन्न। तदीयादर्शनदशायां व्यभिचारानवगमात्। तद्दर्शनदशायां तावदस्ति व्यभिचारो यत्र तु न कदाचिदपि व्यभिचारदर्शनं तत्र व्याप्तिरिति चेत्। अत्रापि व्यभिचारो न द्रक्ष्यत इत्यत्रापि नियामकादर्शनात्।

* अभावस्त्विति * अभावमानस्याभावविषयत्वा-द्धेतोर्वृत्त्यभावे मानत्वं सम्भवतीति सम्भावनया स्या-दित्युक्तम् । कदा चिदित्यापातत इत्यर्थः । अस्तु तर्हि स एव बाधकं मानं नेत्याह * सोऽपीति * अघटमानतां दर्शयितुं बाधकत्वेनेष्टमाणाभावप्रमाणस्वरूपं द-र्शयति * एवं हीति * ग्रन्थस्तु स्पष्टार्थः । स एवं उच्यते को दोषस्तत्राह * तच्चेति * प्रतिज्ञानमुपपादयितुं वि-कल्पयति * तथा हीति * क्वाचित्कमदर्शनं व्यभिचा-राभावं प्रमापयति सार्वत्रिकं वेति विकल्पार्थः । आ-द्यमपवदति * नेति * कुत इत्यत आह * पार्थिवे-ति * पार्थिवत्वलोहलेख्यत्वयोरपि क्वचित्काष्ठादौ व्यभिचारादर्शनाद्व्याप्तत्वप्रसङ्ग इत्यर्थः । सार्वत्रिकमद-र्शनमिति द्वितीयमपवदति * नेति * योग्यताऽनुप-लम्भविशेषणं न वेति विकल्पार्थः । उपलब्धुं योग्य-स्यानुपलम्भो योग्यता तु स्वेतरस्योपलम्भकपौष्कल्य-मात्रं वाऽयोग्यतादिनिवृत्तिः । प्रथमकल्पमसम्भवेन पराकरोति * नेति * अतीतानागतविप्रकृष्टानां व्यभिचाराणां योग्यत्वासम्भव इत्यर्थः । द्वितीयं दूष-यति * नापीति * हेतुमाह * पार्थिवेति * सर्वत्र व्यभिचारदर्शनं तत्र नास्ति वज्रमणौ पार्थिवत्वस्य लोहलेख्यत्वव्यभिचारदर्शनादिति शङ्कते * तत्रेति * अतिव्याप्त्यैव परिहरति * नेति * यदा वज्रमणि-र्न दृश्यते तदा पार्थिवत्वव्यभिचारानुपलम्भव्याप्ति-रित्यर्थः । अतिप्रसङ्गपरिहारं शङ्कते * तादिति * ता-वदिति निश्चये । क्व तर्हि व्याप्तिस्वीकारस्तत्राह * य-

त्रेति * यत्र विषये न क्वचिन्न कदाचिदपि व्यभिचारदर्शनं तत्र व्याप्तिर्नैवं पार्थिवत्वलोहलेख्यत्वयोर्व्याप्तिप्रसङ्गः क्व चित्कदा चित् व्यभिचारदर्शनादित्यर्थः। विशेषणासिद्ध्या दूषयति * नेति * धूमादिविषये यद्यपि व्यभिचारो न दृष्टो दृश्यते वा तथाऽपि न द्रक्ष्यत इति मानाभावात् व्याप्तिप्रसङ्ग इत्यर्थः।

विपक्षबाधकं प्रमाणमिति प्रथमकल्पमपाकृत्य तर्क इति द्वितीयपक्षं प्रतिषेधति।

५१२ तर्कस्य बाधकत्वनिरासः।

नापि विपक्षे बाधकस्तर्को वाच्यः तर्कस्य व्याप्तिमूलत्वाभ्युपगमे ऽनवस्थाप्रसङ्गात्। तदनभ्युपगमे मूलशैथिल्येन तर्काभासत्वापातात्।

* नापीति * योऽपि विपक्षबाधकाभिमतस्तर्कः सोऽप्याप्याद्यापादकयोर्व्याप्तिमूल उत नेति विकल्प्य प्रथमं प्रत्याह * तर्कस्येति * मूलभूतव्याप्तिसाधकं तर्कान्तरं तस्यापि व्याप्तिमूलतया तर्कान्तरमित्यनवस्थेत्यर्थः। द्वितीयं प्रत्याह * तदिति * तर्कस्य व्याप्तिमूलत्वात्तदनभ्युपगमे प्रशिथिलमूलतर्काभास इत्यर्थः। नन्वयमपि कश्चित्तर्कोऽस्य व्याप्तिमूलत्वे तत्खण्डनव्याघातस्तदमूलत्वे प्रशिथिलमूलत्वमिति कथं नोट्टलकुटन्यायापात इति। मैवम्। अनिर्वचनीयव्याप्तिमुपेत्य तत्सत्तांशखण्डनात्परासिद्धां व्याप्तिमुपेत्य तत्खण्डनादिति।

तर्कस्य व्याप्तिमूलत्वमुपेत्यैवानवस्थादिपरिहार उदयनोक्तस्तमाशङ्कते ।

५१३ उदयनोक्तशङ्कानिरूपणम् ।

अथ ब्रूषे न शक्यमिदं वक्तुं—तथाह्यग्निधूमव्यभिचारशङ्कायां बाधकस्तर्कोऽयमभिधीयते यदि धूमोऽग्निं व्यभिचरेदकारणकः सन्नित्यः स्यात् न स्यादेव वा । स चायमनुत्तरस्तर्कः तत्र शङ्कायां व्याघातापत्तेः । तदेव ह्याशङ्क्यते यस्मिन्नाशङ्क्यमाने स्वक्रियाव्याघातादयो दोषा नावतरन्तीति लोकमर्य्यादा । एवं सर्वत्रानुत्तरस्तर्को बाधकोऽभिधेय इति ।

* अथेति * इदमित्यनवस्थानादीति यावत् । कुतो न शक्यमित्यत आह * तथा हीति * अयमिति वक्ष्यमाणः । कोऽसावित्यत आह * यदीति * यदीति सन्देहे । भावत्वे सत्यकारणत्वादात्मवन्नित्यं स्यादेव । विपक्षेदोषमाह * नेति * यस्मिन्क्षणे सत्वमिष्टं तस्मिन्नपि न स्यादविशेषादिति शशविषाणवदत्यन्ताभावः स्यादित्यर्थः । कार्यं कारणपूर्वकमिति व्याप्तिमूलश्चेदयमपि तर्कस्तर्हि साऽपि व्याप्तिः शङ्क्यते तत्रापि तर्कान्तरं वाच्यमित्यनवस्थापात उक्त इत्यत आह * स चेति * उत्तरो न विद्यते यस्य असावनुत्तरः व्याप्तिनिर्णयार्थमपेक्ष्यमाणोत्तरतर्कहीन इत्यर्थः । अनुत्तरोऽपरिहार्य इति वा । तर्कत्वे सति व्याप्तिमूलत्वाशङ्क्या कथमनवस्थादि न स्यादित्यत आह * तत्रेति * येन

तर्केण शङ्काऽऽपाद्यते त्वया तस्मिन्नपि तर्के प्रसङ्गसामान्येन व्याघातापत्तिरित्यर्थः। तर्ह्येवंविधशङ्कायाः कोऽविषयः तत्राह *तदिति* यथा जगत्कारणं प्रधानं परमाणुर्वेति पुरुषेण शङ्क्यते चेत्क्रियाव्याघातो नाम कथाव्याघातः स्वयं स्वीकृतव्याप्तिसाधनक्रियाव्याघातो वा इदमव्याप्तं शङ्कितव्यभिचारादित्यादिरूप एवं शङ्कमानस्य सर्वस्यैवानुमानस्य प्रविलयेन कथाप्रवृत्त्यनुपपत्तेरुक्तं हि साधकाभावे मुखस्पन्दनमात्रस्यापि कर्तुमशक्यत्वादिति। यद्वा कार्यं कारणपूर्वकं न भवतीत्याशङ्कमाने कारणोपादानक्रियाव्याघात आदिपदात् स्ववचनस्वभावव्याघातादयो गृह्यन्ते कारणाधीनात्मलाभत्वं कार्यत्वं तदकारणमित्युक्ते स्वभावव्याघातो वचनव्याघातश्चेति। लोकमर्यादा–प्रमाणव्यवस्था। धूमविषये यद्यप्येष तर्को ऽनुत्तरस्तथाऽपि न सर्वत्र संभवति कृतकत्वस्य नित्येऽपि प्रध्वंसे दर्शनादतो न कृतकत्वादनित्यव्याप्तिस्तर्कलभ्येति तत्राह * एवमिति * यदि नित्यः शब्दस्तर्हि सर्वदोपलभ्येतेत्यादितर्को वाच्य इत्याशयः।

व्याघातपरिहारेण शङ्कां दर्शयन्परिहरति।

५१४ शङ्कापरिहारः।

मैवम्। किमित्येवं शङ्कितव्यं यद्धेतुफलभाव एव न भविष्यति। एवन्तु शङ्कितव्यम्। अग्निं विहायान्यस्मादपि हेतोरयमुदेष्यतीति। न च वाच्यमेवं हि सति धूमस्यैकजातित्वं न स्यादिति। क्वचिदिन्द्रियज-

न्यत्वे क्वचिदनुमानादिजन्यत्वेऽपि ज्ञानैकजात्यवत्तदुपपत्तेः । तत्रेन्द्रियादीनामवान्तरसामान्ये साक्षात्कारित्वादौ प्रयोजकत्वं न ज्ञानतायामिति चेन्न । ज्ञानत्वस्याऽऽकस्मिकत्वपरिहारार्थं तत्कारणस्यानुगतस्य भवताऽवश्यं वक्तव्यत्वात् । धूमेऽपि वह्नेर्विशेष एव प्रयोजकत्वस्य तद्वच्छङ्कितुं शक्यत्त्वात् । न दृश्यते तावदग्निप्रयोज्यो धूमे विशेष इति च न वाच्यम् । तददर्शनस्यापाततो हेत्वन्तरप्रयोज्यावान्तरजात्यदर्शनेनायोग्यतयाऽविकल्प्यत्वादप्युपपत्तेः । यदा तु हेत्वन्तरप्रयोज्यो धूमस्य विशेषो द्रक्ष्यते तदाऽसौ विकल्पिष्यत इति सम्भावनाया दुर्निवारत्वात् ।

* नैवमिति * एवमाशङ्कितव्यमिति सम्बन्धः । यस्मिन् शङ्क्यमान इति यावत् । हेतुफलभावः कार्यकारणभावः । हेतुफलभावव्याघातपरिहारेण शङ्कैव न सम्भवतीत्यत आह * एवमिति * कथमित्यत आह * अग्निमिति * धूमस्याग्निव्यभिचारं शङ्कमानस्य नाकारणत्वमभिप्रेतं किं तु वन्हिमदन्योऽपि हेतुर्धूमस्य सम्भवति इति तेन व्याघात इत्यर्थः । क्वचिदग्निजन्यो धूमः क्वचिद्धेत्वन्तरजन्य इति कारणविकल्पो न सम्भवति कार्यस्यैकजातीयत्वादेकं हि नानेकहेतुकमिति न्यायादित्यत आह * न चेति * कुत इत्यत आह * क्वचिदिति * घटादौ ज्ञानमिन्द्रियजन्यं ग्राहकेन्द्रियादौ लिङ्गजन्यं धर्मादौ शब्दादिजन्यमिति कारणविकल्पेऽ-

पि ज्ञानत्वेन कार्यैकजात्यवद्वह्नितदितरजत्वेऽपि धूमै-क्योपपत्तिरित्यर्थः। विभिन्नकारणवत्त्वे घटपटादिवदेकजातीयं न स्यादित्यस्य न क्वचिद्व्यभिचार इन्द्रियलिङ्गादीनां साक्षात्कारत्वानुमितित्वादौ प्रयोजकत्वादिति शङ्कते * तत्रेति * परिहरति * नेति * यदीन्द्रियादि ज्ञानत्वप्रयोजकं न भवति तर्हि ज्ञानत्वमाकस्मिकं स्यान्न तद्युक्तं "नियामकाद्धि भावानां कादाचित्कत्वस्य सम्भव" इति न्यायादनुगतनियामकं वाच्यं न तद्वक्तुमशक्यमात्मनः संयोगस्य तदप्रयोजकत्वस्य वक्ष्यमाणत्वादिन्द्रियाद्येव प्रयोजकमित्यर्थः। यदीन्द्रियादेर्ज्ञानविशेष एव प्रयोजकत्वं तत्रैवान्वयव्यतिरेकदर्शनादित्याग्रहस्तत्राह * धूमेऽपीति * यथेन्द्रियादेर्ज्ञानविशेषे प्रयोजकत्वं तथा वन्हेरपि धूमविशेष एव प्रयोजकत्वमिति शङ्कितुं शक्यतेऽतो वन्ह्यभावे धूमविशेष एव न स्यान्न धूममात्रमित्यर्थः। इन्द्रियादिप्रयोज्यसाक्षात्त्वादिवदग्निप्रयोज्यो विशेषो धूमे न दृश्यतेऽतः स नास्त्येवेति शङ्कते * नेति * तावदिति निश्चये। आपाततस्तन्न दृश्यत इत्युच्यते किं विचारेऽपीति विकल्प्य प्रथमं प्रत्याह * तदिति * विचारमन्तरेणेति यावत्। नानुपलम्भमात्रादसत्त्वनिश्चयः किन्तु, योग्यानुपलम्भात् योग्यता च नास्ति वह्निप्रयोज्यधूमविशेषदर्शनस्य हेत्वन्तरप्रयोज्यतद्विशेषप्रतियोगिकत्वात्तद्दर्शने ततो विकल्प्यत्वाद्विशिष्टज्ञानायोग्यत्वादपि तद्दर्शनस्योपपत्तेरन्यथासिद्धं तदित्याशयः। द्वितीयोऽसिद्ध इत्याह * यदेति * प्र-

तियोगिहेत्वन्तरविशेषदर्शने वह्निकृतविशेषोऽपि विकल्पिष्यते विशेषतो ज्ञास्यत इति सम्भावयितुं शक्यत्वादसिद्धमदर्शनं इत्यर्थः।

ज्ञानत्वस्येन्द्रियप्रयोज्यत्वे यदाऽऽकस्मिकत्वमुक्तं तत्परिहारं सिंहावलोकनन्यायेन शङ्कते।

५१९ ज्ञानत्वस्याऽऽकस्मिकत्वे शङ्कापरिहारः।

अस्त्यात्ममनोयोगोऽनुगतं कारणं ज्ञानोत्पत्ताविति चेन्न। यद्यात्ममनोयोगादुत्पद्यमानं ज्ञानं स्यादिच्छादयोऽपि ज्ञानं प्रसज्येरन्। यदि त्वदृष्टविशेषो वा शक्तिभेदो वा ज्ञानत्वजातिर्वा ज्ञानप्रागभावो वा तत्रानुगतं कारणमुच्यते तदा तदितरत्रापि वह्निव्यभिचारे धूमस्यैकजात्यप्रयोजकतया शक्यत एव शङ्कितुम्।

* अस्तीति * अतिव्याप्त्या दूषयति * नेति * आत्ममनःसंयोगस्य ज्ञानत्वप्रयोजकत्वे रागद्वेषसुखादय आत्मगुणा ज्ञानं स्युस्तेषामप्यात्ममनःसंयोगासमवायिकारणजत्वाविशेषादित्यर्थः। अदृष्टाद्यनुगतं ज्ञानत्वस्य कारणान्तरं शङ्कते *यदीति* अदृष्टस्य सर्वकार्यसाधारण्याद्विशेष इत्युक्तम्। आत्ममनःसंयोगस्य सकलज्ञानजनने काचिदनुगता शक्तिः सा वा कारणं, ज्ञानत्वजातेर्नित्यतया ज्ञानमात्रात्प्राक्सत्वसम्भवात्सा वा कारणं, प्रागभावरहितस्यानुत्पत्तेर्ज्ञानप्रागभावो ज्ञानत्वप्रयोजक इति मीमांसकानामाशङ्कां शक्तेस्तार्किकैरनङ्गीकारात्साम्यापादनेनैव परि-

इरति * तदिति * तददृष्टादि धूमगतैकजात्यप्रयोजकतया शङ्कितुं शक्यतेऽदृष्टविशेषस्य धूमकारणानुगतशक्तेर्धूमत्वजातेर्धूमप्रागभावस्य च भावादतो वह्नितदितरयोर्धूमविशेषप्रयोजकत्वेऽपि नैकजात्यानुपपत्तिरित्यर्थः।

अदृष्टादेः कारणात् ज्ञानस्यैकजातीयत्वकल्पनं युक्तमिन्द्रियादेः कारणस्य व्यभिचारदर्शनाद् धूमस्य तु वह्निव्यभिचारदर्शनान्नादृष्टादेरैकजात्यं दृष्टे सत्यदृष्टकल्पनायोगादिति शङ्कते।

५१६ दृष्टेसत्यदृष्टकल्पना नेति शङ्कानिरासः।

दृष्टे व्यभिचारे युक्तमदृष्टादेरैकजात्यपरिकल्पनमिति चेत्। अस्तु दृष्टे तन्निश्चयः। अत्रापि व्यभिचारो न द्रक्ष्यत इत्यत्र नियामकाभावात् शङ्किष्यते। एवं शङ्कमानस्य भवतो न क्वचिदनुमानं स्यात् प्रतिवाद्यात्माद्यनुमानादिव्यतिरेकेण कथायामेव प्रवृत्त्यनुपपत्त्या स्वयं स्वकर्त्तव्येष्वनुमानेष्वेतादृशशङ्काक्रमणात् स एव व्याघात इति चेन्न। धूमव्यक्तेरपि वह्निकारणविशेषानुमानस्यैवं सति सदनुमानत्वप्रसङ्गात्। सामग्रीसाम्येन प्रमाप्रमावैचित्र्यानुपपत्तेः। साधारणधर्मदर्शनविशेषादर्शनादौ सत्यपि शङ्कायाश्चानुदये सामग्र्यां सत्यामपि कार्य्यानुदयात्परप्रतिपत्त्युत्पादनार्थं वचनादिरूपां प्रतिपत्तिसामग्रीमुत्पादयितुं यतमानस्य भवतोऽपि

स्वक्रियाव्याघातस्तुल्यः ।

* दृष्ट इति * अर्द्धाङ्गीकारेण परिहरति * अस्त्विति * दृष्टे व्यभिचार इत्यनुषङ्गः । तावता तव को लाभस्तत्राह * अत्राऽपीति * वह्निव्यतिरेकेण धूमः कारणान्तरादप्युत्पद्यत इति शङ्कमानस्य प्रागभिहितव्याघातापत्तेर्नैवं शङ्कितव्यमिति चोदयति * त्वमिति * स एव व्याघातः कुत इत्यत आह * प्रतीति * प्रतिवादिशरीरं सात्मकं प्राणादिमत्वादस्मत्शरीरवदिति शरीरातिरिक्तानुमानाभावे कस्य प्रबोधनार्थं कथायां प्रवृत्तिरादिपदात्परचैतन्यानुमानं परास्फुरणाद्यनुमानं च गृह्यते । असति चानुमाने परचैतन्यानवगतौ किमुद्दिश्य साधकं वा ब्रूयादिति न्यायादनिष्टान्तरमाह * स्वेति * यैरनुमानैः स्वयं परपक्षं बाधते स्वपक्षं साधयति तेष्वप्याशङ्काक्रमणादिति एवं शङ्कामनिच्छतोऽपि व्याघातः समान इति परिहरति * नेति * उच्यमानोऽयमनुमादोषो न भवतीत्यभिधीयते उत दोषोपेतमपि प्रमाणं भवतीति, नाद्यः शङ्कितव्यभिचारस्य दोषत्वोपगमान्न द्वितीयस्तार्णः पूर्णो वाऽयमग्निस्त्वात्सतिपन्नवदित्यनुमानस्यापि सदनुमानत्वप्रसङ्गादित्यर्थः । सदनुमानत्वप्रसङ्गकमाह * सामग्रीति * अधर्मत्वाद्दोषस्य च सामग्र्याः समानत्वाद्धूमानुमानं प्रमाणं वन्ह्यनुमानं न प्रमाणमिति वैचित्र्यानुपपत्तिरित्यर्थः । वह्निव्यतिरेकेण धूमः स्यादिति शङ्कैव नोदेति व्याघातभयादतो नोक्तदोष इत्यत

आह * साधारणेति * साधारणधर्मविशेषदर्शनादौ सत्यपि शङ्काया अनुदयेऽङ्गीक्रियमाणे भवतोऽपि स्वक्रियाव्याघातस्तुल्यः। कुत इत्यत आह * सामग्र्यामिति * सामान्यदर्शनं कोटिद्वयस्मरणं च शङ्कासामग्रीष्यते तत्र धूमगतकार्यत्वं वह्नितदितरयोः कारणयोः तुल्यं वह्निजत्वप्रापकविशेषश्च न दृश्यते सहचरितसाधारणदर्शनाद्वह्नितदितरजत्वकोटिद्वयं स्मर्यत इति शङ्कासामग्र्यां सत्यामेव सर्वत्रैवंविधशङ्कया क्रियाव्याघातभयाद्यदि कारणान्तरजत्वशङ्का नाङ्गीक्रियते तर्हि परप्रतिपाद्यहेत्वसम्प्रतिपत्तिसामग्री या वचनादिरूपा तामुत्पादयतस्तवापि व्याघातस्तस्या अपि कार्याजनकत्वादित्यर्थः। अपि[1] विरोधः समुच्चये व्याघातदर्शने विशेषादर्शनरूपकारणाभावाच्छङ्कासामग्र्येव नास्त्यतो न व्याघातसाम्यमिति शङ्कते।

५१७ व्याघातसाम्याभावशङ्कापरिहारः।

व्याघातस्यैव विशेषत्वात् तद्दर्शनेन शङ्कासामग्र्येव नास्ति मत्पक्षे कुतो व्याघातसाम्यमिति चेन्न। तद्धि न तावत् आहारादिकारणाज्जायमानमेष्टव्यं कूटविषः यस्य तस्यातिप्रसञ्जकत्वात्। कूटभिन्नः प्रसञ्जकः प्रमितस्यैव स्यादिति चेन्न। तस्य तर्कावसरे निरस्यत्वात्। तस्माद्यदेतद्व्याघातरूपस्य विशेषस्य दर्शनं शा-

१ अपि चेत्तविरोधः इति पु० पा०।

ङ्काप्रतिपक्षभूतमुच्यते तत् किं प्रमाणात् कुतश्चिदु-पजायमानं वक्तव्यं तर्काद्वा, यदि प्रथमः शङ्कास्तित्त्वमपि तेनैव प्रमाणेनापनेयं शङ्कायां सत्यां व्याघातात्। यदि च शङ्कां विनापि व्याघातः तदा शङ्कमानाशङ्कमानयोर्व्याघातस्य साम्यं सिद्धमेव। भवतु शङ्कायामपि तत्प्रमाणं किमेतावता प्रथमोपजातशङ्कामवलम्ब्य व्यवस्थितस्य व्याघातरूपस्य विशेषस्य दर्शनात् शङ्कान्तरं नोत्पद्यत इति चेन्न। व्याघातसत्ताकाले तदवलम्ब्यया शङ्कयैव शङ्कयमानव्यभिचारता, तस्याः शङ्काया व्युपरमे च तदवलम्बिनो व्याघातरूपस्य विशेषस्याभावात् कः शङ्कान्तरोत्पत्तेर्वारयितेति वक्तव्यम्।

* व्याघातेति * अनिर्वचनवादिपक्षे अज्ञानमेव शङ्कादिकारणं न सामान्यदर्शनादि तेन विशिष्टमिदमित्युक्तं हि—

"प्रत्यङ्मोहैकहेतुत्वात्सर्वानर्थमृषामतेरिति।

तुरीयपरिच्छेदे व्याघातस्यैव पराकरिष्यमाणत्वान्मैवमिति परिहरति * नेति * किं च विशेषरूपव्याघातदर्शनमाहारादिरूपाज्जायमानं शङ्काविरोधि उतानाहारादिरूपादिति विकल्प्य प्रथमं पराचष्टे * तर्हीति * आहार उत्प्रेक्षा आदिपदेन वाक्याभासादिति गृह्यते। कुत इत्यत आह * कूटेति * कूटं मिथ्या। यदि पार्थिवत्वं लोहलेख्यत्वं

व्यभिचरेत्तर्हि प्रमेयमेव तन्न स्यादित्यादिनित्य-व्याघातदर्शनस्याभासकारणजन्यस्य सर्वत्र सम्भ-वेन क्वापि व्यभिचारादिशङ्कानुदयादित्यर्थः। उत्प्रे-क्षादिजन्यमपि विद्यमानव्याघातदर्शनं प्रमितस्यैव व्यभिचाराभावस्य प्रसञ्जकं तेन नातिप्रसङ्गः पार्थि-वत्वादावनेवंरूपत्वादिति शङ्कते * कूटेति * कूटा-द्भिन्नः कूटभिन्नः परमार्थविषयो बोध इति यावत्। प्रमाणवत्प्रमिताविषयत्वे उत्प्रेक्षादिविषयत्वमेव न स्यादिति तर्केण निरस्यत्वान्नेत्याह * नेति * यद्वा ऽसौ बोधः प्रमाणमप्रमाणं वा नाद्यः क्लृप्तकारणाज-न्यत्वात् द्वितीयेऽपि न स्मृतिरननुभूतगोरत्वाद्विपर्यय-त्वे संशयत्वे च प्रमिताप्रसञ्जकत्वमिति तर्कनिरस-नीयत्वादित्याह * नेति * तस्मात् द्वितीयः पक्षः प-रिशिष्यत इत्याह * तस्मादिति * तस्माद्यदेत-द्व्याघातदर्शनं शङ्काप्रतिपक्षभूतमुच्यते तदाहारादेव जायमानं वक्तव्यमिति तदपि न विचारसहमित्यु-पपादनाय विकल्पयति * किमिति * प्रथममनूद्य दूषयति * यदिति * व्याघातोपनायकप्रमाणेन त-द्विशेषणभूतशङ्कास्थितमप्युपनेयमित्यर्थः। कुत इ-त्यत आह * शङ्केति * शङ्कायां सत्यामेव व्याघा-ताभिधानेन शङ्काविशिष्टत्वाद्व्याघातस्य विशेषण-विशेष्ययोरेकप्रमाणविषयत्वादित्यर्थः। अन्वय-मुखेनोपपादितं व्यतिरेकमुखेनाप्युपपादयति * य-दिति * यथा शङ्कमानस्य समस्तक्रियाव्याघातस्त-था तामकुर्वतस्तत्रापि क्रियाव्याघातः स्याच्छङ्कासद्-

सत्वयोर्व्याघाताप्रयोजकत्वादित्यर्थः । व्याघातविषयस्य तद्विशेषणशङ्कायामपि प्रामाण्यमुपेत्याव्यभिचारसिद्धिं शङ्कते * भवत्विति * व्याघातप्रमाणस्य शङ्कायामपि प्रामाण्यमात्रेण व्यभिचारासिद्धौ किं दूषणं स्यादित्यर्थः । तर्हि शङ्काऽस्तित्वेन निःसन्दिग्धव्याप्त्यसिद्ध्याऽनुमानप्रवृत्तिरित्यत आह * प्रथमेति * प्रथमशङ्कायां तत्प्रमाणमस्तु तस्यां च व्याघातविशेषादर्शनेन निवृत्तायां पुनः शङ्कान्तरं नोदेति विशेषदर्शनानुवृत्तिविरोधादतो व्याप्तिरित्याशयः । व्याघातसत्ताकाले व्यभिचाराभावसिद्धिरुतोत्तरकालमिति विकल्प्य प्रथमं दूषयति * नेति * व्याघातास्तित्वे तद्विषयशङ्कायामप्यस्तित्वात्तथैवं शङ्क्यमानव्यभिचारिता हेतोरित्यर्थः । द्वितीयमपवदति *तस्या इति* पुष्कलकारणे सति कार्योत्पादविरोधिप्रतिबन्धः प्रसिद्धः स च तदुत्पत्तिकाले वक्तव्य इत्यर्थः ।

शङ्काभावे तदवलम्बिव्याघाताभावमङ्गीकृत्य चोदयति ।

५१८ व्याघाताभावाङ्गीकारेण शङ्का तत्परिहारश्च ।

मा नामास्तु तदा व्याघातात्मा विशेषस्तदवगमस्तदाहितो वा संस्कारस्तावदस्ति विशेषावगमतत्संकारौ च शङ्काविरोधिनौ ननु स्वरूपेण क्वचिदपि विशेषस्यावस्थानं तथेति चेन्न । अयावदाश्रयभाविनो विशेषस्य पूर्वस्थितस्य यद्दर्शनं तदाहितो वा संस्कारः तस्य कालान्तरेपि तत्प्रतिधर्मसंशयविरोधित्वेऽव्ययवि-

पाकपक्षे कुम्भस्य परमाणुपाकपक्षे परम्परया तदारम्भकस्य परमाणोः पूर्वं श्यामतया ज्ञातस्य कालान्तरे सम्भावितपाकस्य पाकजन्यरूपविशेषवत्तायां संशयो न स्यात् । यदि च शङ्कायां व्याघातस्तदा शङ्काश्रयस्य विशेषरूपस्य व्याघातस्य दर्शनाच्छङ्कायां शङ्कान्तरं मा भूत् । यदि तु व्यभिचाराश्रयस्तदा व्यभिचारः स्यादेव व्याघाताश्रयस्य व्यभिचारस्यापि प्रमित्यापत्तेः ।

* मेति* माऽस्तु नामेति यावत् । व्याघाताभावोऽङ्गीकृतश्चेत्कः संशयान्तरोत्पत्तेर्वारयितेत्यत आह * तदिति * तदवगमस्तत्संस्कारोत्पत्तिं निरुणद्धीत्याशयः । तदवगमतत्संस्कारयोः शङ्कानिवारकत्वानुपपत्तिरविरोधित्वाद्विरोधिन एव निवारकत्वादित्यत आह * विशेषेति * तर्हि क्व चिद्व्याघातः संशयनिवारकः क्व चित्तदवगमः क्व चित्तदवगमजनितसंस्कार इति प्रयोजकवैरूप्येण गौरवं स्यादित्यत आह * न त्विति * सर्वत्रापि विशेषावगमतत्संस्कारयोरन्यतरः संशयविरोधी न तु विशेषस्तस्मिन् सत्यपि वक्रकोटरत्वादौ संस्काराद्यभावे स्थाणुर्वा पुरुषो वेति संशयदर्शनादसत्यपि तद्विशेषदर्शनेऽनुमानजादौ संस्कारे च सति संशयादर्शनादन्वयव्यतिरेकव्यभिचाराभ्यामित्यर्थः * तथेति * संशयनिवारकमित्यर्थः । अतिप्रसङ्गेन दूषयति * नेति * अयावदाश्रयभाविनः पूर्वस्थितस्य यद्दर्शनं यो वा संस्कारस्तस्य कालान्तरे-

ऽपि तत्प्रतिधर्म्मसंशयविरोधित्वे स्वीक्रियमाणे सति कुम्भस्य परमाणोर्वा पूर्वं श्यामतया ज्ञातस्य सम्भावितपाकस्य पाकजन्यरूपविशेषवत्तया कालान्तरे संशयो न स्यादिति सम्बन्धः। यावन्तं कालमाश्रयो भवति तावत्कालं यो भवति स यावदाश्रयभावी न यावदाश्रयभाव्ययावदाश्रयभावी व्याघातः शङ्कोच्छेदे व्याघातोच्छेदादाश्रयस्य हेतोरनुच्छेदात्तस्य प्रतिधर्मस्तत्प्रतिकूल इत्यर्थः। व्याघाताभावेऽपि तदवगमात्तत्संस्काराद्वा तद्विरुद्धव्यभिचारधर्मवत्तया संशयानुत्पत्तौ सत्यां कुम्भस्य परमाणोर्वा पाकनिक्षिप्तस्य किमयं रक्त उतारक्त इति पाकजन्यलोहितरूपवत्तया कालान्तरे संशयो न स्यादस्ति च, कुलालस्य तदुपरिनिहितभस्माद्यावरणातिरस्करणेन वीक्षणदर्शनात्। कुत इत्यत आह * पूर्वं श्यामतया ज्ञातस्येति * आमदशायां श्यामतया ज्ञातत्वात् श्यामतानाशेऽपि तदवगमादिसम्भवात्तत्प्रतिकूलसंशयो न स्यात्। पिठरपाकपक्षेऽप्यवयवी कुम्भः पच्यते पीलुपाकपक्षे परमाणवः पच्यन्ते क्रमेण कुम्भस्य परमाणोर्वेति सम्बन्धः। ननु पाकजन्यत्वे संशयो न तु रक्तिमगुण इति। सत्यम्। तत्राप्यनुपपत्तिस्तुल्या पाकजत्वस्य पूर्वमुपलम्भादिति।

एवं तावद्व्याघातविषयत्वे शङ्काया दोषोऽभाषि, सम्प्रति हेत्वादिधर्मिस्वरूपस्य व्याघातानाश्रयत्वात् व्याघाताश्रयः किं शङ्कोत व्यभिचार इति विकल्प्य प्रथममनुवदति *यदीति* परिहरति *तदेति* व्याघाताश्रय-

भूतप्रथमशङ्कायाः शङ्कान्तरं मा भूत्सा तु स्यादेवेति न व्याप्तिसिद्धिरित्यर्थः। द्वितीयं प्रत्याह * यदीति * कुत इत्यत आह * व्याघातेति * व्यभिचाराश्रयव्याघातप्रमापकेण तद्विशेषणव्यभिचारस्याऽपि प्रमित्यापत्तिरन्यथा व्याघातस्य प्रमातुं शक्यत्वादित्याशयः।

विपक्षबाधकतर्काणां व्याप्तिमूलत्वे याऽनवस्था पुरस्तादुपन्यासि तत्परिहारं शङ्कते।

५१९ अनवस्थापरिहारशङ्कापरिहारः

अनादिसिद्धव्याप्तिकास्ते तर्का इति चेन्न। तद्बुद्धेः प्रमितत्वासिद्धेः। शरीरे स्वात्मप्रत्ययस्य तादृशस्याप्यप्रमात्वोपगमात्। अनादित्वासिद्धेश्चोभयत्राविशेषात्।

* अनादीति * अनादिसिद्धा मूलभूता व्याप्तिर्येषां तेऽनादिसिद्धव्याप्तिकाः अनादिपुरुषपरम्परायां तद्बुद्धिधारास्तित्वमनादिसिद्धिरतो ऽनादिसिद्धत्वान्न युगपत् व्याप्तिग्रहापेक्षेति नानवस्थाऽतोऽसञ्जातविरोधितया लब्धप्रतिष्ठत्वाद्बलवत्तराश्चेत्तर्का आगन्तुकं शङ्कितव्यभिचारं शमयिष्यन्तीति भावः। यद्यपीयं शङ्काऽनवस्थोक्त्यनन्तरं युक्ता तथाऽपि शिष्यबुद्धिपरीक्षार्थमत्र कृतेत्यदोषः। प्रमाधीनत्वात्प्रमेयसत्त्वस्य न तद्बुद्धिपरम्परामात्रेण व्याप्तिसिद्धिरिति दूषयति * नेति * व्याप्तिबुद्धेरनादित्वात्प्रमात्वसिद्धिरित्यत आह * शरीरेति * शरीरे स्वात्मप्रत्ययस्यानादित्वमासिद्धं पूर्वेषां केषांचिद्विवेकिनां तदभावादित्यत आह * अनादीति * तत्त्वदृशां मुक्तानां व्याप्ति-

बुध्यभावोऽपि तुल्य इत्यर्थः ।

व्यभिचारशङ्काप्रतिपक्षभूतं व्याघातरूपविशेषदर्शनं प्रमाणादुपजायते किं वा तर्कादिति विकल्प्य प्रथमो निरस्तो द्वितीयमिदानीं निरस्यति ।

५२० तर्काद्व्याघातावगमनिरासः ।

नापि यद्यत्र व्यभिचारः शङ्क्येत तदा व्याघातः स्यादित्येवंरूपात्तर्काद्व्याघातावगमः व्याघातप्रतिपादकस्य तर्कस्य मूलशैथिल्ये तर्काभासत्वापातात् । तादृशस्यापि व्याघातोपनायकत्वे व्याघातापत्तेश्च साम्यम् । शक्यत एव तर्काभासाद्भवतोऽपि व्याघात उपनेतुम् ।

* नापीति * अत्र धूमादावग्न्यादिव्यभिचारः स्यादित्याशङ्क्येत यदीत्यर्थः । एवंरूपात्तर्कादपि व्याघातदर्शनं न स्यादित्यन्वयः । कुत इत्यत आह-*व्याघातेति* व्याघातप्रतिपादको यः तर्कः स व्याप्तिहीन उत तन्मूलः प्रथमे मूलशैथिल्येनाभासत्वापत्तेरित्यर्थः। व्याप्तिसमर्थनकाले तद्धीनस्यैव तर्कस्य व्याघातापादकत्वमित्यत आह *तादृशेति* तर्कस्याभासतया साधकत्वं चेति विरुद्धसमुच्चयरूपव्याघातापत्तेः साम्यं तेऽपीत्यर्थः । अयं व्याघातस्त्वया नापादयितुं शक्यते व्याप्त्यनङ्गीकारेण तस्याभासत्वादित्याशङ्क्याह *शक्यत इति* त्वया यथाऽऽभासरूपा व्याघाता आपाद्यन्ते तथा मयाऽप्यापादयितुं शक्यत इत्यर्थः ।

व्याघातदर्शनहेतुस्तर्को व्याप्तिमूल इति द्वितीयमवलम्बते ।

५२१ तर्कस्य व्याप्तिमूलत्वेऽनवस्थादोषः ।

अथ तर्कस्य व्याप्तिर्मूलभूताऽभ्युपगम्यते । तत्रापि व्यभिचारशङ्कायां पुनरनवस्थैव । तत्रापि व्याघातापादने पुनरित्थमनवस्थैव ।

तस्मादस्माभिरप्यस्मिन्नर्थे न खलु दुष्पठा ।
त्वद्गाथैवान्यथाकारमक्षराणि कियन्त्यपि ॥ ४४ ॥
व्याघातो यदि शङ्काऽस्ति नचेच्छङ्का ततस्तराम् ।
व्याघातावधिराशङ्का तर्कः शङ्कावधिः कुतः ॥४५॥

*अथेति* मूलभूतव्याप्तौ व्यभिचारशङ्कायां पुनस्तर्कान्तरं पुनस्तत्राप्येवमनवस्थेति परिहरति *तत्रेति* अनवस्थावलम्बने न क्वाप्यनुमानमिति स्वक्रियाव्याघात आपतेदित्यत आह *तत्रापीति* व्याघातो येन तर्केणानवस्थायामापाद्यते तस्याऽपि व्याप्तिमूलत्वात्पुनरित्थं अनवस्था स्यादित्यर्थः। एवं च व्याघातसदसत्वयोः शङ्कास्तित्वमापाद्य सम्प्रति यदुदयनेन शङ्कासदसत्वयोरनुमास्तित्वयुक्त्यभिधायकं वाक्यमुक्तं तदस्मत्पक्षेऽपि वक्तुं शक्यते इत्युष्ट्रलकुटन्यायापातो भवत इत्युपहसन्नाह * तस्मादिति * यस्मादेवं व्याघातसदसत्वयोः शङ्का स्यादेव तस्मादस्मिन्नर्थेऽस्माभिरपि त्वद्गाथैव दुःपठा न खलु सुपठैव। कथं सुपठत्वमत्राह * अन्यथाकार मन्यथाकारो यथा भवति तथा कियन्त्यक्षराणि कृत्वेत्यर्थः। तदीया च गाथेयम् ।

शङ्का चेदनुमाऽस्त्येव न चेच्छङ्का ततस्तराम् ।

व्याघातावधिराशङ्का तर्कः शङ्कावधिर्मतः ॥

अस्यायमर्थः । कालान्तरे कदाचिद्व्यभिचरिष्यतीति कालं भाविनमाकलय्य शङ्केत तदाकलनं चाऽनुमानवमधीर्य न कस्य चि,न्मुहूर्त्तयामाहोरात्रपक्षमासायनसंवत्सरादयो हि भाविनो भवन्मुहूर्त्ताद्यनुमेया एवानवगतेषु स्मरणस्याप्यनाशङ्कनीयत्वादनाकलने वा कमाश्रित्य व्यभिचारः शङ्क्येत तथा च सुतरामनुमानस्वीकार एवं देशान्तरे वक्तव्यं स्वीकृतमनुमानम् । सुहृद्भावेन तु पृच्छामः कथमाशङ्का निवर्त्तनीयेति चेन्न । यावदाशङ्कं तर्कप्रवृत्तेस्तेन हि प्रवर्त्तमानेनोपाधिकोटौ वा तदायत्तव्यभिचारकोटौ वाऽनिष्टमुपनयतेच्छा विच्छिद्यते विच्छिन्नविपक्षेच्छश्च प्रमाता भूयोदर्शनोपलब्धसाहचर्यं लिङ्गमनाकुलोऽधितिष्ठति स्वाधिष्ठिताच्च करणात् क्रियानिष्पत्तिरिति किमनुपपन्नम् । ननु तर्कोऽप्ययमविनाभावमपेक्ष्य प्रवर्त्तते ततोऽनवस्थया भवितव्यम् । न । शङ्काया व्याघातावधित्वात् तदेव ह्याशङ्क्यते यस्मिन्नाशङ्क्यमाने क्रियाव्याघातादयो दोषा नावतरन्तीति लोकमर्यादा न हि हेतुफलभावो न भविष्यतीति शङ्कितुमपि शक्यते तथा सति शङ्कैव न स्यात्सम्यङ्मिथ्या भविष्यतीत्यादिवदिति । अन्यथाकृत्याक्षराणि गाथां पठति * व्याघात इति * शङ्कायां सत्यां प्रामाणिको व्याघातोऽस्त्युत न, यद्यस्ति तत्राह *व्याघातो यद्यस्ति तदा शङ्काऽस्ति* व्याघातप्रमाणेन तद्वलम्बशङ्काया अपि प्रमितत्वादित्यर्थः । द्वितीयं प्रत्याह *नचेदिति* व्याघातो न चेत्ततः शा-

ङ्कान्तरमस्ति व्याघाते प्रतिपक्षभूतेऽप्यस्ति तदभावे सुतरां स्यात्। प्रथमकल्पमेवाश्रित्य शङ्का नास्तीति शङ्कते *व्याघातेति* यावन्तं कालं व्याघातस्तावन्तं कालं विशेषदर्शनाच्छङ्कान्तरं न जायते सा च नश्यतीति चेदित्यर्थः। अनुषङ्गं दूषयति *तर्क इति* व्याघातदर्शनजनकेन तर्केणावधिरवसानं कुतस्तथाऽपि व्याप्तिमूलतया शङ्कान्तरजननस्यावश्यकत्वादित्यर्थः । यद्वा न चेच्छङ्का ततस्तरामित्युक्तं तत्र तरबर्थमाह * व्याघातावधिराशङ्केति * व्याघातादाशङ्कष्यते ततस्तदभावे सा सुतरां स्यादित्यर्थः । तर्कः शङ्कावधिर्मत इति यदुक्तमुदयनेन तं दूषयति * तर्क-इति* विपक्षप्रतिपक्षभूते तर्के सति शङ्कावधिरवसानं कुतो न कुतोऽपि, सति तस्मिन् शङ्काया आवश्यकत्वादित्यर्थः ।

विरुद्धानेकप्रकारावलम्बी प्रत्ययः संशयस्तत्र व्यभिचार एका कोटिरव्यभिचारोऽपरा तत्राव्यभिचारस्य क्वचित्सिद्धत्वेऽनुमानासिद्धिरसिद्धत्वे संशयानुपपत्तेरनुमानासिद्धिरिति न व्यभिचारशङ्कया ऽनुमानं दूषयितुं शक्यत इत्याशङ्क्याह ।

५२२ व्यभिचारशङ्कयाऽनुमानस्य दुष्टत्वम् ।

अव्यभिचारश्चैकपरित्यागव्यवच्छेदेनापरान्वयः स-मकालदृष्टे नष्टेऽदृष्टः शङ्कयत इत्याहुः ।

* अव्यभीति* यद्वा व्यभिचारशङ्कया व्याप्त्यसिद्धिमुक्त्वा सम्प्रति दूषणान्तरमाह * अव्यभिचारेति *

अन्वय इत्युक्ते पार्थिवत्वलोहलेख्यत्वान्वयेऽतिव्याप्तिस्तन्निरासायाह *एकेति* वज्रे लोहलेख्यत्वाभावेऽपि पार्थिवत्वाभावात्तन्निवृत्तिरेवं समन्वय—रूपमुक्त्वा दूषयति * समेति * समकालं दर्शनानन्तरमेव यत्र दृष्टं व्याप्यव्यापकभावहीनतया गम्यगमकभावहीनं तस्मिन्नपि दृष्टोत्पन्नधूमादावपि गम्यगमकभावः प्रयोजको भवतीति शङ्क्यते सार्वत्रिकत्वादिति विशेषणस्य वक्तुमशक्यत्वादित्यर्थः ।

व्याप्तेर्लक्षणान्तरं शङ्कते ।

५२३ व्याप्तेर्लक्षणान्तरखण्डनम् ।

स्वाभाविकः सम्बन्धो व्याप्तिरित्यपरः । स प्रष्टव्यः कस्य स्वाभाविकः किं सम्बन्धिनोरुतान्यस्य । न चरमः वैपरीत्यापत्तेः ।

* स्वेति * पार्थिवत्वादिसम्बन्धव्युदासाय भाविकेति विशेषणम् । स्वाभाविकशौक्ल्यादिव्युदासाय सम्बन्ध इति । दूषयितुं पृच्छति * स इति * स्वभावप्रयुक्तः स्वाभाविकस्तस्य स्वभावप्रयुक्त इत्यर्थः । सामान्योक्तमेव विशदयति *किमिति* जघन्यत्वादन्त्यमपि कल्पं प्रथमं दूषयति *नेति* कुत इत्यत आह *वा इति* असम्बन्धिनोः सम्बन्धसम्बन्धिनोरसम्बन्ध इति विपरीतापत्तेरित्यर्थः *

प्रथममपि पराकर्तुं स्वाभाविकशब्दार्थं पृच्छति ।

५२४ स्वभावशब्दार्थविकल्पः ।

आद्ये कः स्वाभाविकशब्दार्थ इति प्रष्टव्यं किं स-

म्बन्धिस्वभावाश्रितः। अथ सम्बन्धिस्वभावजन्यः। अथ सम्बन्धित्वविवक्षितस्वभावानतिरिक्तः। अथवा सम्बन्धिस्वभावव्याप्यः। अथवा सम्बन्धिस्वभावादन्येन न प्रयुक्तः। उतान्य एव कश्चिद्विवक्षितः।

*आद्य इति* अग्नेरौष्ण्यं स्वभाव उच्यते तत्स्वरूपाश्रयत्वादेवं सम्बन्धिस्वरूपाश्रयत्वात्सम्बन्धः स्वाभाविक इति प्रथमकल्पार्थः। वसन्ते वृक्षस्य प्रसूतिः स्वभावस्तज्जन्यत्वादेव, सम्बधिकार्यत्वं स इति द्वितीयकल्पार्थः। पुरुषस्य चैतन्यं स्वभाव इति सम्बन्धिस्वरूपमेव स्वाभाविकोऽनन्यार्थश्च तद्धित इति तृतीयकल्पार्थः। वाह्निको धूम इत्यत्र धूमस्य वह्नियोगित्वं तद्धितार्थः एवं सम्बन्धिस्वभावव्याप्यत्वं स इति चतुर्थकल्पार्थः। आत्मन आत्मत्वसमवायः स्वाभाविक इति वत्सम्बन्धः सम्बन्धिस्वरूपातिरिक्तहेतुजन्यो न भवतीति पञ्चमार्थः। न्यूनतापरिहाराय कल्पान्तरमाह * उतेति *

प्रथममतिव्याप्त्या दूषयति *

५२५ स्वाभाविकशब्दार्थविकल्पनिरासः।

आद्ये पार्थिवत्वलोहलेख्यत्वयोरपि व्याप्तत्वप्रसङ्गः। न द्वितीयः आतव्याप्तेरव्याप्तेश्च। अतएव न तृतीयः। नापि चतुर्थः व्याप्त्यानिरुक्त्या व्याप्यत्वानिरुक्तेः। सम्बन्धस्य व्याप्यत्वे च सम्बान्धिनोर्व्यापकयोः सम्भाविनसम्बन्धाधिकदेशकालतया एकसम्बन्धिदर्शनेऽपरा-

नुमानाय नियामकत्वायोगात् । नापि पञ्चमः न प्रयुक्त इति यदि न जनितस्तदा सम्बन्धस्याकृतकत्वपक्षेऽन्यनेति विशेषणवैयर्थ्यमकृतकस्य सम्बन्धिस्वभावेनाऽप्यजनितत्वात् । सम्बन्धस्य कृतकत्वपक्षे स्वरूपासिद्धिरेव स्यात् । सामग्र्याः सर्वसम्भवादन्ततः कालदेशादृष्टादिभिरपि तज्जन्यत्वस्यावश्यवक्तव्यत्वात् । नापि षष्ठः पक्षः तस्य निर्वक्तुमशक्यत्वात् । एवमेव विकल्पयाम्यं चरमविकल्पः सर्वत्रोपन्यस्य दूष्यो न्यूनत्वशङ्काभयादिति ।

*आद्य इति* पार्थिवत्वलोहलेख्यत्वयोः सम्बन्धोऽपि सम्बन्धिस्वरूपाश्रय इति व्याप्तिः स्यादित्यर्थः । उक्तहेतुनैव द्वितीयं दूषयति *नेति* रज्जुघटयोगः सम्बन्धिस्वरूपजन्यो भवति तयोरसौ व्याप्तिरित्यतिव्याप्तिः पृथिवीत्वद्रव्यत्वयोरेकार्थसमवायरूपा व्याप्तिर्नित्यतया जन्या नेत्यव्याप्तिश्चेत्यर्थः । तृतीयं दूषयति *अन्तत इति* अव्याप्तेरतिव्याप्तेरेव । पार्थिवत्वलोहलोहलेख्यत्वसम्बन्धस्यापि सम्बन्धिस्वरूपानातिरिक्ततयाऽतिव्याप्तिरिति धूमसम्बन्धस्य सम्बन्धिस्वरूपातिरिक्ततयाऽव्याप्तिरित्यर्थः । तुरीयं दूषयति *नापीति* हेतुमाह *व्याप्तीति* व्याप्यत्वं नाम व्याप्तिमत्वं व्याप्तिरव्याप्यसिद्धा तस्या एव परीक्षाकालत्वादतो विशिष्टलक्षणासिद्धिरित्यर्थः । सम्बन्धस्य व्याप्यत्वमुपेत्यापि खण्डयति *सम्बन्धस्य व्याप्यत्वे चेति* एकसम्बन्धिदर्शने-धूमादिदर्शने

सत्यपरानुमानाय–वन्ह्यभावाद्यनुमानाय सम्बन्धस्य नियामकत्वायोगात् । कुत इत्यत आह *सम्बन्धिनोरिति *व्यापकस्य व्याप्यापेक्षयाऽधिकवृत्तित्वं वाच्यमन्यथा व्याप्यव्यापकभावानिश्चयात्तत्संभवाच्चैवं च वन्हिव्यतिरेकेणापि धूमावस्थानसम्भवान्नानुमानं स्यादित्यर्थः। पञ्चमं निषेधति * नापीति * प्रयुक्तशब्देन जनिमभिधाय न प्रयुक्त इति तन्निषेधः क्रियत उतव्याप्तिमभिधायेति विकल्प्य द्वितीयमात्माश्रयेण बहिरेव दूषयित्वा प्रथममनुवदति * यदीति * असौ सम्बन्धः कृतकोऽकृतको वेति विकल्प्य प्रथमं प्रत्याह * तदेति * सम्बन्ध इत्येवालं स्वाभाविक इति पराजन्यत्वविशेषणं व्यर्थमित्यर्थः। कुतो वैयर्थ्यमित्यत आह *अकृतकेति* स्वेन जन्यत्वे सति हेत्वन्तरनिवारणाय विशेषणमुपादेयं स्वरूपेणैवाजन्यत्वेऽनादिसम्बन्ध इति वक्तव्यं तथा च धूमादिसम्बन्धे ऽव्याप्तिरित्याशयः। द्वितीयेऽवद्यं निगदति *सम्बन्धस्येति* असम्भव एवस्यादित्यर्थः । * सामग्र्या इति * असम्भवमेवोपपादयति * सामग्र्या इति * अन्ततः कालदेशादृष्टादिभिरपि सम्बन्धजन्यत्वस्यावश्यवक्तव्यत्वात्तत्रापि हेतुः * सामग्र्या इति *

“न किञ्चिदेकमेकस्याः सामग्र्याः सर्वसम्भव”

इति न्यायेन सम्बन्धस्यापि सम्बन्धिस्वरूपातिरिक्तदेशादिजन्यत्वं वक्तव्यं देशादृष्टेश्वरेच्छादीनामुत्पत्तिमन्मात्रनिमित्तत्वादित्यर्थः। अन्ततोऽवसानेऽपीति यावत् । अन्य एवेति परिशिष्टं दूषयति

*नापीति* ननु कथं निर्वक्तुमशक्यत्वं यावतोदयनेन न्यायवाचस्पतिटीकायां स्वाभाविको निरुपाधिरित्यर्थ इति निरुक्तं इति। मैवम्। तस्य प्रतियोगिभूतोपाधिखण्डनप्रस्तावे पराकरिष्यमाणत्वात्। निर्वक्तुमशक्योऽयं विकल्पः कस्मात्कृतइति तत्राह * एवमिति * कुत इत्यत आह *न्यूनेति* यदि स्वयं प्रतिभातविकल्पा एव क्रियन्ते तर्हि परो ब्रूतेऽन्य एव प्रकारो ममाभिप्रेत इति न्यूनोक्तिस्तवेति तत्परिहारार्थमित्यर्थः।

व्याप्तिलक्षणान्तरमुपस्थापयति।

५२६ व्याप्तिलक्षणान्तरखण्डनम्।

अनौपाधिकः सम्बन्धो व्याप्तिरित्यपरः। स प्रष्टव्यः कोऽयमुपाधिर्नाम यच्छून्यत्वमनौपाधिकत्वम्। उपाधिः साध्यव्यापकत्वे सति साधनाव्यापकः। अयञ्च–

"एकसाध्याविनाभावे मिथः सम्बन्धशून्ययोः।
साध्याभावाविनाभावी स उपाधि र्यदत्ययः"–

इत्यस्य व्यतिरेकमुखस्य यदत्ययः स उपाधिरिति योज्यमानस्य पर्य्यवसितोऽर्थः। तद्धर्म्मभूना हि व्याप्ति र्जपाकुसुमरक्ततेव स्फटिके साधनाभिमते चकास्तीत्युपाधिरसावुच्यते। तदिदमाहुः–

* "व्याप्तेश्च दृश्यमानायाः कश्चिद्धर्मः प्रयोजकः।
अस्मिन्सत्यमुना भाव्यमिति यत्सा निरूप्यते॥

---

* अयं श्लोकः का० मु० पु० नास्ति।

अस्यां चौखम्बा-संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतकं सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तबको मुद्रयित्वा प्रकाश्यते। एकस्मिन् स्तबके एव ग्रन्थो मुद्र्यते।

२ प्राचीनादुर्लभाश्चाऽमुद्रिता मीमांसावेदान्तादिदर्शन, व्याकरण, धर्मशास्त्र. साहित्य, पुराणादिग्रन्था एवात्र सुपरिष्कृत्यमुद्र्यते

३ काशिकराजकार्यप्रधानसंस्कृतपाठालयाऽध्यापकाः पण्डिता अन्येच शास्त्रदृष्टयो विद्वांसः एतत्परिशोधनादिकार्यकारिणो भवन्ति।

४ भारतवर्षीयै, ब्रह्मदेशीयैः. सिंहलद्वीपवासिभिश्च एतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम् मुद्राः ७ आणकाः ८

५ अन्यैर्देयं प्रतिस्तवक " " १ " ०

६ प्रापणव्ययः पृथग् नास्ति।

७ साम्प्रतं मुद्र्यमाणा ग्रन्थाः- मुद्रिताः स्तबकाः

| | | |
|---|---|---|
| (१) संस्काररत्नमाला। गोपीनाथभट्टकृता | ( संस्कारः ) | २ |
| (२) शब्दकौस्तुभः। भट्टोजिदीक्षितकृतः | ( व्याकरणम् ) | १० |
| (३) श्लोकवार्तिकम्। भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृत-न्यायरत्नाकराख्यया व्याख्याया सहितम् सम्पूर्णम्। | ( मीमांसा ) | १० |
| (४) भाष्योपबृंहितं तत्त्वत्रयम् विशिष्टाद्वैतदर्शनप्रकरणम् श्रीमल्लोकाचार्य्यप्रणीतम्। श्रीनारायणतीर्थ विरचित भाट्टभाषा प्रकाश सहितम्। स० | (वेदान्त) | २ |
| (५) करणप्रकाशः। श्रीब्रह्मदेवाविरचितः सम्पूर्णः | ( ज्योतिषः ) | १ |
| (६) भाट्टचिन्तामणिः महामहोपाध्याय-श्रीगागाभट्ट विरचितः। तर्कपादः | ( मीमांसा ) | २ |
| (७) न्यायरत्नमाला-श्रीपार्थसारथिमिश्र वि० स० | ( मीमांसा ) | २ |
| (८) ब्रह्मसूत्रभाष्यम्-वादरायण प्रणीत वेदान्त सूत्रस्य यतीन्द्र श्रीमद्विज्ञानभिक्षु कृत व्याख्यानम्। सम्पूर्णः। | ( वेदान्तः ) | ६ |
| (९) स्याद्वादमञ्जरी-मल्लिषेणनिर्मिता सम्पूर्णा। | ( जैनदर्शनम् ) | २ |
| (१०) सिद्धित्रयम्-विशिष्टाद्वैत-ब्रह्मनिरूपणपरम्-श्रीभाष्यकृतां परमगुरुभिः श्री ६ यामुनमुनिभिर्विरचितम्। सम्पूर्णम् | ( वेदान्तः ) | १ |
| (११) न्यायमकरन्दः। श्रीमदानन्दबोधभट्टारकाचार्यसंगृहीतः आचार्यचित्सुखमुनिविरचितव्याख्योपेतः | ( वेदान्तः ) | ४ |
| (१२) विभक्त्यर्थनिर्णयःन्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायरचितः। सम्पूर्णः | ( न्यायः ) | ५ |

(१३) विधिरसायनम् श्रीअप्पयदीक्षितकृतम् स० ( मीमांसा ) २

(१४) न्यायसुधा ( तन्त्रवार्तिकटीका ) भट्टसोमेश्वरविरचिता । ( मीमांसा ) १६

(१५) शिवस्तोत्रावली । उत्पलदेवविरचिता । श्रीक्षेमराजाविरचितवृत्तिसमेता । ( वेदान्तः ) २

(१६) मीमांसाबालप्रकाशः ( जैमिनीयद्वादशाध्यायार्थसंग्रहः ) श्रीभट्टनाराणात्मजभट्टशङ्करविरचितः । ( मीमांसा ) २

(१७) प्रकरणपञ्चिका ( प्रभाकरमतानुसारि मीमांसादर्शनम ) महामहोपाध्यायश्रीशालिकनाथमिश्रविरचितम । श्रीशङ्करभट्टकृता मीमांसासारसंग्रहश्च सम्पूर्णः ( मीमांसा ) ३

(१८) अद्वैतसिद्धिसिद्धान्तसारः । पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृतश्च । ( वेदान्त ) ३

(१९) कात्यायनश्रौतसूत्रम् महामहोपाध्यायश्रीकर्काचार्यविरचितभाष्यसहितम् । १३

(२०) ब्रह्मसूत्रभाष्यम् श्रीभास्कराचार्यविरचितम् ( वेदान्तः ) १

(२१) श्रीहर्षप्रणीतम् खण्डनखण्डखाद्यम् आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया ( विद्यासागरी ) ति प्रसिद्धया समेतम् । (वेदान्तः) ७

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता । १

(२३) श्रीलक्ष्मीसहस्रम्—बालबोधिनीव्याख्यया ऽवतरणिकया च सहितम् । ८

(२४) ब्रह्मसूत्रवृत्तिः मरीचिका श्रीव्रजनाथभट्टकृता । ( वेदान्त ) २

(२५) क्रोडपत्रसंग्रहः अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्याः प्रत्यक्षानुमानगादाधर्याः प्रत्यक्षानुमानमाथुर्या व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकायाः कुसुमाञ्जलेश्च क्रोडपत्राणि । ( न्यायः ) १

(२६) ब्रह्मसूत्रम्,द्वैताद्वैतदर्शनम्।श्रीसुन्दरभट्टरचितसिद्धान्तसेतुकाभिधटीकासहितश्रीदेवाचार्यप्रणीतसिद्धान्तजान्हव्याख्यव्याख्या० २

(२७) षड्दर्शनसमुच्चयः । बौद्ध नैयायिक कापिलय जैन वैशेषिक जैमिनीयदर्शन संक्षेपः । मणिभद्रकृतटीकया सहितः । हरिभद्रसूरिकृतः । १

(२८) शुद्धाद्वैतमार्तण्डः प्रकाशव्याख्यासहितः । प्रमेयरत्नार्णवश्च १

(२९) अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृतदीधित्याः जागदीशी टीका । १३

(३०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः । ५

(३१) स्मृतिसारोद्धारः ।विद्वद्वरविश्वम्भरत्रिपाठिसंकलितः । २

(३२) वेदान्तरत्नमञ्जुषा । श्रीभगवत्पुरुषोत्तमाचार्यं कृता । २

पत्रादिप्रेषणस्थानम् } हरिदासगुप्तः,

March. 1909.

THE

# CHOWKHAMBÂ SANSKRIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

## NO. 135.

श्रीहर्षप्रणीतम्

## खण्डनखण्डखाद्यम् ।

आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया
व्याख्यया 'विद्यासागरी'-ति प्रसिद्धया समेतम् ।
चित्सुख-शङ्करमिश्र-रघुनाथकृतटीकावल-
म्बिन्या टिप्पण्या सनाथम् ।

द्राविड-श्रीलक्ष्मण-शास्त्रिणा परिशोधितम् ।

SRÎ HARSHA'S

## KHANDANAKHANDAKHÂDYA,

WITH THE COMMENTARY

'khandanaphakkikâvibhajana'(vidyâsâgarî)of Ânandapûrna

WITH EXTRACTS FROM THE COMMENTARIES OF

Chitsukha, Sankara Misra and Raghunâtha,

EDITED BY

PANDIT LAKSHMANA ŜÂSTRÎ DRÂVIDA,

*Professor of Vedânta, The Gaurishankar*
*Central Hindu College, Benares.*

FASCICULUS VIII.

*PUBLISHED AND SOLD BY THE SECRETARY*
CHOWKHAMBÂ SANSKRIT BOOK-DEPÔT:
BENARES:
AGENTS:—OTTO HARRASSOWITZ, LEIPZIG:
PANDITA JYESHTHÂRÂMA MUKUNDAJÎ, BOMBAY.
PROBSTHAIN & CO., BOOKSELLERS, LONDON
*Printed by Harikrishna Dâs, Proprietor,*
AT THE VIDYÂ-VILÂS PRESS.
BENARES.

*Price Rupee One.*

॥ श्रीः ॥

-*-

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितभव्याभशतपत्त्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दामोदमोहितम् ॥ २ ॥

स्तबकः—१३५

अन्ये परप्रयुक्तानां व्याप्तीनामुपजीवकाः ।
तैर्दृष्टैरपि नैवेष्टा व्यापकांशावधारणा" ॥
स चोपाधिर्निश्चित इवाशङ्कितश्च यत्तदमुच्यते ।
"यावच्चाव्यतिरेकित्वं शतांशेनापि शङ्क्यते ।
विपक्षस्य कुतस्तावद्धेतोर्गमनिका बल"
मिति चेत् ।

*अनौपेति* सम्बन्धो व्याप्तिरित्युक्ते पार्थिवत्वलोहलेख्यत्वसम्बन्धेऽतिव्याप्तिरिति तत्परिहाराय विशेषणमनौपाधिकेति । तस्य प्रशिथिलावयवत्वोपाधिकत्वादुपाधावेव लक्षणगमनपरिहाराय विशेषणं सम्बन्ध इति । दूषणायोपक्रमते * स इति * व्याप्तिखण्डनप्रस्ताव उपाधिप्रश्नो ऽयुक्तो ऽप्रस्तुताभिधानप्रसङ्गादित्यत आह *यदिति* व्याप्तिविशेषणाभावप्रतियोगितयोपाधिरपि प्रस्तुत इत्यर्थः । कुसुमाञ्जलावुदयनेन जल्पितमुपाधिलक्षणं शङ्कते * उपाधिरिति * अव्यापक उपाधिरित्युक्ते घटाव्यापकपटेऽतिव्याप्तिस्तन्निरासायाह * साधनस्याव्यापक इति * तावत्युक्ते शब्दोऽनित्यः कृतकत्वाद्घटवदित्यत्र सामान्यवत्वे सत्यस्मदादिबाह्येन्द्रियग्राह्यत्वमुपाधिः स्यात्तत्र सत्यपि कृतकत्वे बुद्ध्यादावभावेन साधनाव्यापकत्वात्तद्व्यावृत्त्यर्थमाह * साध्यस्य व्यापक इति * तथाऽग्निमान् पर्वतो धूमवत्त्वादित्यत्र तत्पुष्कलकारणवत्वमुपाधिः स्याद्यत्रयत्राग्निस्तत्र तत्र तत्पुष्कलकारणवत्त्वमिति साध्यव्यापकत्वेऽपि साधनाव्यापकत्वं

नास्ति तेनैव हेतुना पर्वतेऽपि तस्य साधयितुं शक्यत्वा-त्सद्भावेत्यर्थमाह * साधनाव्यापकेति * साध्यव्यापक-त्वे सति साधनाव्यापकत्वमुपाधित्वमित्यत्रोदय-नसम्मतिमाह * अयं चेति * अयश्चास्य श्लोकस्य पर्यवसितोऽर्थ इति सम्बन्धः । कथमस्याऽयमर्थः स्यात्त-द्वाचकस्य पदस्यादर्शनादित्यत आह * व्यतिरेकेति * व्यतिरेको मुखं द्वारं यस्य स तथोक्तः । व्यतिरेकमुखत्व-मेव कथमित्यत आह * यदिति * तमेव श्लोकं पठ-ति * एकेति * स श्यामो मैत्रतनयत्वाद् गृहगतमैत्रत-नयवदित्यत्र एकेन साध्येन श्यामतालक्षणेन सह मैत्रतनयत्वशाकाद्याहारपरिणतिपरम्परापूर्वत्वयोरवि-नाभावे साहचर्ये सति । कीदृशयोस्तयोरित्यत आह * मिथ इति * परस्परसम्बन्धशून्ययोर्व्याप्यव्यापक-भावहीनयोर्मध्ये यदन्यथः यस्य शाकाद्याहारपरिण-तिपूर्वकत्वस्याप्यन्ययो ऽभावः साध्याभावाविना-भावी श्यामतालक्षणसाध्याभावव्याप्यः यत्र शाका-द्याहारपरिणतिपूर्वकत्वं नास्ति तत्र श्यामत्वमपि नास्ति यथा गौरः पुरुष इति । स–शाकाद्याहारपरिण-तिपूर्वकत्वधर्म उपाधिरत्र मिथः सम्बन्धशून्ययोरिति साधनाव्यापकत्वमुक्तम् । यदन्ययः साध्याभावाविना-भावीति साध्यव्यापकत्वमुक्तं व्यापकाभावस्य व्या-प्यत्वात् व्याप्याभावस्य च व्यापकत्वादेकसाध्येत्या-दिस्वरूपसङ्कीर्त्तनम् । यत्र साध्यं तत्रोपाध्यभिमतो धर्मो यत्रोपाध्यभिमतो धर्मो नास्ति तत्र न साध्यमपीत्यन्वय-व्यतिरेकाभ्यां तयोरेव व्याप्यव्यापकभावनिश्चयेऽपि

तत्रोपाधिशब्दप्रवृत्तिः किं निबन्धनेत्याशङ्क्याह * तदिति * तस्योपाध्यभिमतस्य धर्मभूता व्याप्तिः साधनाभिमते धर्मे चकास्ति भातीति कृत्वाऽसावुपाधिरुच्यतेऽत्रोदाहरणमाह * जपेति * जपाकुसुमधर्मो रक्तता स्फटिक इव उप समीप आधीयत इत्युपाधिः स्वसम्बन्धादन्यत्र स्वधर्माध्यारोपकत्वमुपाधिशब्दप्रवृत्तिनिमित्तमित्यर्थः। इदमुदितं कुसुमाञ्जलौ तद्धर्म्मभूता हि व्याप्तिर्जपाकुसुमरक्ततेव स्फटिके साधनाभिमते चकास्तीत्युपाधिरसावुच्यत इति। अन्यत्राप्युक्तं स्वसम्बधेन स्वीयं धर्ममन्यत्र दर्शयन्स उपाधिर्यथा लोके जपाकुसुमादिःस्फटिकोपल इति। अन्यत्र स्वधर्मारोपकत्वादुपाधित्वमित्यत्र भट्टवचनं प्रमाणयति * तदिति * ननु व्याप्यस्य गमकत्वेऽग्नीषोमीयादिष्वधर्मत्वावगतौ हिंसात्वस्यापि हेतुव्याप्तत्वप्रसङ्गः व्याप्ता हि हिंसा ब्रह्महत्यादिष्वधर्मत्वेनानिष्टं चेदमित्याशङ्क्याह *

व्याप्तेश्च दृश्यमानायाः कश्चिद्धर्मः प्रयोजकः।
अस्मिन् सत्यमुना भाव्यमितिशक्त्या निरूप्यते ॥
अन्ये परप्रयुक्तानां व्याप्तीनामुपजीविकाः।
तैर्दृष्टैरपि नैवेष्टा व्यापकांशावधारणेति ॥

इदं श्लोकद्वयं भट्टोक्तं तात्पर्येन इत्थं व्याख्यातमिह तावद्ब्रह्महत्यादिष्वधर्मत्वयुक्तेषु हिंसात्वनिषेधत्वे उपलब्धे ततउभयधर्मसंनिधानेऽपि निषिद्धत्वमेवाक्षेपकमधर्मत्वस्य न हिंसात्वं यतो निषेधविधिप्रयुक्तैवाऽनिष्टानुबन्धिता न हिंसात्वप्रयुक्ता आक्षेपकं चाक्षि-

प्यमाणेन नियतं तत्र हिंसात्वमाक्षेपकं यदि हि नि-
षेधविधानं न स्यात्ततो विनाप्यधर्मत्वं न स्यादेव
हिंसात्वमाक्षेपकश्चान्यत्रोपलभ्यमानमाक्षेप्यं सन्निधा-
पयति अनाक्षेपकस्तूपलभ्यमानो ऽपि न धर्मान्तरं स-
न्निधापयत्यनियतत्वादिति । अत्रोदाहृतवार्त्तिकस्येथ-
मक्षरयोजना । परप्रयुक्तानां व्याप्तीनामुपजीवका
अन्ये समर्थहेतोरन्ये हेत्वाभासा इत्यर्थः।यद्वा अन्ये हिं-
सात्वादयः यथा ऽग्नीषोमीयपश्वालम्भोऽधर्मसाध-
नं हिंसात्वाद्यर्थहिंसावदित्यत्र निषिद्धत्वप्रयुक्तव्या-
प्त्युपजीवको हिंसात्वादिति हेतुः तत्प्रभृतिभिः
तैः परप्रयुक्तव्याप्तिभिर्दृष्टैः पक्षधर्मतयाऽवगतैरपि व्या-
पकांशावधारणा नेष्टैव साध्यनिश्चयो न जायत
इत्यर्थः । एवमुपाधिं लक्षयित्वा तदवान्तरभेदमाह *
स चेति * द्विविध इत्यध्याहारस्तदुक्तं कुसुमाञ्जलौ
यत्रानुकूलस्तर्को नास्ति सोऽप्रयोजकः स च द्विविधो
हि निश्चितोपाधिराशङ्कितोपाधिः । शङ्कितोपाधाव-
भियुक्तवचनमुदाहरति * यत्रेति * विपक्षस्य साध्या-
भाववतो यावद्व्यतिरेकित्वं हेत्वभावरहितत्वं शतां-
शेनापि उपाधिशङ्काद्वारेणापि शङ्क्यते तावद्धेतोर्गम-
निकाबलं साध्यनिश्चयजननसामर्थ्यं कुतो न कुतोऽपि
निःसन्दिग्धव्याप्तिलक्षणाङ्गविकलत्वादित्यर्थः *

अतिव्याप्त्या खण्डयति *

५२७ उपाधिखण्डनम् ।

साध्यव्यापकं पक्षेतरत्वेऽपि प्रसङ्गात् । तद्व्याति-

रिक्त इत्यपीति चेन्न । बाधोन्नीतस्य तस्याव्यापनात् । अन्यथा निरुपाधिसम्बन्धित्वे बाधासिद्धेः । यदाह बाधेन वोपाधिरुन्नीयतां अन्येन वेति न कश्चिद्विशेषः । एतदर्थमपि विशेषणीयमिति चेन्न । तथापि साधनाव्यापकत्वे सतीति तद्व्यासञ्जनवधारणे न शक्यावधारणम् । एवं साध्यव्यापक इत्यपि ।

* नेति * क्षित्यादिकं सकर्तृकं कार्यत्वात् घटवदित्यत्र पक्षेतरत्वं साध्यव्यापकं भवति सकर्तृकघटादौ सर्वत्र भावात्साधनाव्यापकं च पक्ष एव कार्यत्वे सति पक्षेतरत्वाभावादिति तत्रातिव्याप्तिरित्यर्थः । अत्रैके समादधते न हि पक्षेतरत्वं साध्यव्यापकं पक्ष एव साध्यसन्देहे ऽप्युपाध्यभावस्य निश्चितत्वादिति । तैः कथमनुमानमेव मानमिष्टं पक्षे साध्यसद्भावसन्देहेऽपि साधनसद्भावनिश्चयेन शङ्कितव्यभिचारत्वाद्धेतोः । पक्षादन्यत्र हेतोः साध्यसम्बन्धनिश्चय इति चेत्तर्हि इहापि साध्याभावेऽपि पक्षेतरत्वस्य वृत्तेर्विरोधात्स्वयं न वर्तत इति व्यतिरेकनिश्चयस्वरूपभेदादेव न तस्य पक्षत्वापत्तिरिति

"मधु पश्यसि दुर्बुद्धे प्रपातं किं न पश्यसी"

त्याभाणकविषयतां नातिवर्तत इति तद्दूषणाय न यत्यत इति । पक्षेतरत्वव्यतिरिक्तत्वे सति साध्यव्यापकः साधनाव्यापक उपाधिरिति लक्षणं विशिनष्टि * तदिति * पक्षेतरत्वं पक्षान्यो-

न्याभाववत्त्वं तद्व्यतिरिक्तं पुनस्तदन्योन्याभाववत्त्वं तत्र सम्भवत्यनवस्थानादिति दूषयति * नेति * अभ्युपेत्यापि दूषयति * बाधेति * तेजो द्रव्यमनुष्णं रूपित्वाद्धटवदित्यत्र पक्षे साध्याभावस्य प्रत्यक्षतया हेतोः प्रत्यक्षविरुद्धत्वं तत्र रूपित्वानुष्णत्वसम्बन्धेऽतेजस्त्वमुपाधिः पक्षेतरत्वमेव वा बाधेनोन्नीयते तन्न व्याप्नुयात्पक्षेतरत्वव्यतिरिक्तेतिविशेषणाभावादित्यर्थः। बाधोऽप्रामाण्यगमको नोपाधेरित्यत आह *अन्यथेति *दुष्टकरणजन्यस्यैव शुक्तिरूप्यादिज्ञानस्य बाध्यत्वान्निरुपाधिसम्बन्धत्वे कल्पतकरणजन्यतया प्रमाणमेव स्यादित्यत एवोदयनेनातेजस्त्वमुपाधिरुक्तः। बाधेनोपाधिरुन्नेय इत्यत्र तदीयवचनमुदाहरति *यदिति* अन्येन—व्यभिचारेण विपक्षप्रतिकूलतर्काभावेन वेत्यर्थः। ननु शब्दो नित्य आकाशैकगुणत्वात्तद्गतपरममहत्त्ववदित्यनुमानमिति चेन्न। अकार्यत्वस्योपाधेर्भावादन्यथाऽऽत्मविशेषगुणा नित्यास्तदेकगुणत्वात्तद्गतपरममहत्त्ववदिति च स्यात्। अस्य प्रत्यक्षबाधितत्वादहेतुत्वमिति चेन्न। निरुपाधेर्बाधाभावात्स्वभावप्रतिबन्धस्य तत्परित्यागे स्वभावपरित्यागप्रसङ्गात्तस्मात् बाधेन वोपाधिरुन्नीयतामन्यथा वेति न कश्चिद्विशेष इति कुसुमाञ्जलावुक्तमित्यर्थः। बाधोन्नेयपक्षेतरत्वव्यतिरिक्तत्वे सति कथितलक्षण उपाधिरिति शङ्कते * एतादिति * अतिव्याप्तिपरिहारेऽप्यसिद्धिरपरिहार्येति दूषयति * नेति * साधनव्यापकत्वं तद्व्याप्तिकर्तृत्वं तदभावः साधनाव्यापकत्वमेवं च व्याप्तिसिद्धौ

व्यापकत्वसिद्धिस्तत्सिद्धौ तदपेक्षाऽव्यापकसिद्धिस्तत्सिद्धावुक्तोपाधिसिद्धिरुपाधिसिद्धौ च निरुपाधिकसम्बन्धव्याप्तिसिद्धिरिति चक्रकापत्तेरित्यर्थः । उक्तन्यायं विशेषांशेऽप्यतिदिशति * एवमिति * व्याप्त्यनवधारणे साध्यव्यापक इत्यपि शक्यावधारणं नेति सम्बन्धः । व्याप्तिसिद्धौ साध्यव्यापकत्वसिद्धिस्तत्सिद्धावुपाधिसिद्धिरुपाधिसिद्धौ च निरुपाधिकसम्बन्धव्याप्तिसिद्धिरिति चक्रकापत्तेरत्राऽपि तुल्यत्वादित्यर्थः । एतेन समव्याप्तिपक्षोऽपि ।

" समासमाविनाभावावेकत्र स्तो यदा तदा ।
समेन यदि नो व्याप्तस्तयोर्हीनोऽप्रयोजक" ॥
इत्युक्तो निरस्तश्चक्रकापत्तेस्तुल्यत्वात् ।

निरुपाधिकसम्बन्धो व्याप्तिर्न साध्येन सहोपाधेर्येन चक्रकं स्यात्किन्तु साहचर्यमात्रमतो नोक्तदोष इति शङ्कते ।

५२८ चक्रकापत्तिपरिहारशङ्कानिरासः ।

अथ मन्यसे ऽदृष्टव्यभिचारसाध्यत्वं साध्यव्यापकत्वम् । न । वस्तुगत्या व्यभिचारिसाध्यस्याप्यापाततोऽदृष्टव्यभिचारसाध्यत्वसम्भवात् तस्याप्युपाधित्वापत्तेः । न द्रक्ष्यत इति च निरूपयितुमशक्यम् । व्याप्तिग्रहकाले च साध्यत्वाभावेन तदव्यभिचारः कथमवधार्य्यः । साध्यं व्यापकमपेक्षितमिति चेन्न । व्याप्त्यनवगमे व्यापकार्थानवगमात् । सम्भावितव्यापकभावो व्यापकोऽपेक्षित

इति चेन्न । व्यापकस्यानिरुक्तौ किंरूपतया सम्भाव-नापि स्यात् । अथ साध्यव्यापक इत्येव भद्रं तदानीं साध्यत्वाभावेऽपि साधयितुमर्हत्त्वस्य विवक्षितत्वात् । न । कथं ह्यवगन्तव्यमिदमेव साधयितुमर्हमिदं नेति । व्यापकत्वादिति वक्तुमशक्यत्वात् । नच साधनाव्यापक-त्वं सर्व्वत्र निश्चेतुं शक्यम् । स श्यामो मैत्रतनयत्वादि-त्यत्र शाकाद्याहारपरिणतिपरम्परायाः मैत्रतनयेऽभाव-स्य दुरधिगमत्वात् ।

* अथेति * न दृष्टो व्यभिचारः साध्येन यस्य सोऽदृष्टव्यभिचारः साध्यस्तथात्वमुपाधेः साध्यव्याप-कत्वमित्यर्थः । आपाततो ऽदृष्टव्यभिचारत्वमुत का-लान्तरेऽपीति विकल्प्य प्रथमं प्रत्याह * नेति * वस्तु-गत्या व्यभिचारि साध्यं यस्योपाधेस्तस्यापाततो न दृष्टो व्यभिचारः साध्येन यस्य स तथोक्तस्तथा-त्वसम्भवात् क्षित्यादिकं सकर्तृकं कार्यत्वाद्घटवदि-त्यत्र रूपित्वमुपाधिः स्यात्तस्य साधनाव्यापकत्वादा-पाततो व्यभिचारादर्शनाच्चेत्यतिव्याप्तिरित्यर्थः । द्विती-ये लक्षणासिद्धिरित्याह * नेति * कालान्तरभाविव्य-भिचारस्य सम्प्रति ज्ञातुमशक्यतया तदभावोऽपि दुर्निरूप इत्यर्थः । व्याप्तिग्रहणकाल इति काकाक्षिवदु-भयतः सम्बध्यते । एवं साध्यव्यापक इत्यत्र व्यापकांश-प्रयुक्तदूषणमभिधाय साध्यांशदूषणमाह *व्याप्तीति* साध्यत्वं नाम सिद्धिविषयत्वं सिद्धिश्च व्याप्तलिङ्गधी-

ना तल्लिङ्गं व्याप्तिग्रहणकाले नास्ति तेन तदा साध्यत्वाभावात्तेन सह व्यभिचाराभावो नावधारयितुं शक्यत इत्याशयः। साध्यत्वं न सिद्धिविषयत्वं किं तु व्याप्तिकर्तृत्वमेवातस्तद्व्यभिचारः शक्यनिरूपण इति शङ्कते *साध्यमिति* असम्भवेन दूषयति *नेति* व्याप्त्यनवगमे यद्यपि तत्कर्तृत्वव्यापकत्वप्रमा न सम्भवति तथाऽपि सम्बन्धकर्तृत्वे सत्यधिकवृत्तितया व्यापकत्वसम्भावनाऽस्ति सम्भावितव्यापकादृष्टव्यभिचारत्वं साध्यव्यापकत्वमिति शङ्कते *सम्भावितेति* क्वचित्प्रमितस्यैवान्यत्र सम्भावनाविषयत्वं निश्चयपूर्वकत्वात्संशयस्य संभावनस्येहान्तर्भावात्क्वचिदप्यनिश्चये सम्भावनमपि न स्यादिति परिहरति *नेति* किंरूपतया–केन प्रकारेणेति यावत्। व्याप्तिग्रहणकाले साध्यत्वाभावप्रयुक्तोक्तदोषपरिहारं शङ्कते *अथेति* कुतो भद्रत्वमुक्तदोषापाकरणमन्तरेणेति तत्राह *तदानीमिति* साध्यत्वं न सिद्धिविषयत्वं किन्तु तद्योग्यता सा तु यावद्द्रव्यभाविनीति भावः। नैतदपि सिद्ध्यति मानाभावादिति परिहरति *नेति* इदमग्न्याद्येव साध्यं नेदं धूमादि इति कथमवगन्तव्यमित्यन्वयः। धूमाग्न्योः साधनसाध्यभावो व्याप्यव्यापकभावादवगम्यते तत्राह *व्यापकेति* साधनाव्यापकत्वविशेषणस्य प्रकारान्तरेण खण्डनं प्रस्तौति *न चेति* शब्दो नित्यः ध्वन्यत्वे सति श्रावणत्वाच्छब्दत्ववदित्यत्राकृतकत्वोपाधौ साधनाव्यापकत्वं निश्चेतुं श-

क्यत इति सर्वत्रेत्युक्तम् । कुतोऽनिश्चय इत्यत आह * स इति * मैत्रतनयत्वश्यामत्वसम्बन्धे शाकाद्याहारपरिणतिपरम्परोपाधिराश्रीयते तस्याः पक्षीकृतमैत्रतनये भावो दुरधिगमो मानाभावात्कथंचिच्छाकपरिणामाभावावगमेऽप्याद्दिपदोपात्ताहारान्तरपरिणतिपरम्पराभावो दुरधिगम इत्याशयः ।

तर्हि साधनाव्यापकत्वानिश्चयान्माभून्निश्चितोपाधित्वमथापि सन्दिग्धोपाधित्वं भविष्यति साधनाऽव्यापकत्वस्याप्यनिश्चयादिति शङ्कते ।

५२९ सन्दिग्धोपाधित्वनिरासः ।

यत्रोक्तलक्षणस्य निश्चायकं प्रमाणमस्ति तत्र निश्चितोपाधित्वमन्यत्र शङ्कितोपाधित्वं मैत्रतनयत्वव्याप्यशाकाद्याहारपरिणतिपरम्परया स्थातव्यमित्यत्र नियामकाभावादिति चेन्न । मैत्रतनयत्वेनैव हेतुना तस्यापि प्रसाधने तच्छङ्काया अपि छेत्तुमशक्यत्वात् । तत्रापि तत्तत्सामग्रीत्युपाधिपरम्पराभिधाने च तस्या अपि मैत्रतनयत्वेनैव प्रसाधनस्य कर्त्तुं शक्यत्वात् ।

* यत्रेति * यत्र निषिद्धत्वादौ साधनव्यापकत्वादिकथितलक्षणस्य निश्चायकं श्रुत्यादिकं प्रमाणमस्ति तत्र निषिद्धत्वादौ निश्चितोपाधित्वमित्याशयः । निश्चितोपाधिस्थलमुक्त्वा शङ्कितोपाधिस्थलमाह * अन्यत्रेति * शाकाद्याहारपरिणत्यादौ सन्दिग्धोपाधित्वमित्यर्थः । साधारणधर्म्मदर्शनादि-

शङ्कासामग्र्यां सत्यामुपाधिशङ्कानङ्गीकारे स्वक्रियाव्याघातापत्तिरित्यभिप्रेत्य हेतुमाह * मैत्रेति * शाकाद्याहारपरिणतिपरम्परया मैत्रतनयत्वं व्याप्य स्थातव्यमित्यत्र प्रमाणाभावाद्विशेषादर्शनं साहचर्यमात्रे सामान्यदर्शनं च विद्यत इति भावः। विशेषादर्शनादिकारणाभावमापादयन् शङ्कानङ्गीकारे नास्ति व्याघात इति परिहरति * नेति * मैत्रतनयः शाकाद्याहारपरिणतिपरम्परापूर्वको मैत्रतनयत्वादिति हेतुनैव व्यापकत्वविशेषदर्शनात् कारणाभावादेव शङ्काभाव इति भावः। मैत्रतनयत्वेत्र शाकाद्याहारपरिणतिपरम्परापूर्वकत्वे साध्ये शाकाद्याहारसामग्रीसत्वमुपाधिस्तस्य मैत्रतनयत्वेन प्रसाधने तत्सामग्र्युपाधिरित्युपाधिपारम्पर्याभिधानान्नोपाध्यनुमानसम्भव इत्यत आह * तत्रापीति * तस्याः सामग्र्या मैत्रतनयत्वेनैव साधनस्य कर्तुं शक्यत्वात्साधनाव्यापकत्वमिति शेषः।

तत्सामग्र्या साधनव्यापकत्वानुमाने साधनानवस्था स्यात् सा च न युक्ताऽनवस्थायां प्रमाणाभावाद्गौरवाच्चेति शङ्कते।

५३० अनवस्थानिरासः।

अनवस्थैवं स्यादिति चेत्। न। उपाध्युपन्यास एव कुतोऽनवस्था न स्यात्। साध्यसामग्र्या उपाधित्वे धूमानुमानसाधारण्यात्। एवं च साध्ये सामग्र्युपाधित्वव्यवच्छेदार्थमपि लक्षणं विशेषणीयम्। श्यामत्वादौ साध्ये

शाकाद्याहारपरिणतिपारम्पर्यादेस्तस्मिन्साध्ये श्यामत्वादेरुपाधित्वसम्भवेन कथमुपाधिरपि साधयितुं शक्यत इति चेत्। मैवम्। प्रत्येकं द्वयोरपि मैत्रतनयत्वादिना साधने साधनाव्यापकत्वस्य शङ्कितुमशक्यत्वात्। अन्यथा सकर्तृकत्वे साध्येऽदृष्टजत्वं अदृष्टजत्वे च सकर्तृकत्वमुपाधिरित्युभयासिद्धिः स्यात् एवं बुद्धिमत्पूर्वकत्वे प्रयत्नवत्पूर्वकत्वं प्रयत्नवत्पूर्वकत्वे बुद्धिमत्पूर्वकत्वमेवं वह्नित्वजात्याक्रान्तवत्त्वेऽपीन्धनत्वजात्याक्रान्तत्वं तस्मिन्वह्नित्वजात्याक्रान्तवत्वमुपाधिः स्यादित्यत्राऽपि विश्वमनुमानं व्याकुलं स्यात्।

* अनवस्थेति * अनवस्थासाम्यापादनेन परिहरति * नेति * साध्यसामग्र्या उपाधित्वमुपेत्य दूषणं निरगादिदानीं तदेवानुपपन्नमतिप्रसङ्गादित्याह * साध्येति * पर्वतोऽग्निमानित्यत्रापि सामग्र्युपाधिः स्यात्तत्साधने तत्सामग्रीति साध्यसामग्रीपरम्परया सर्वानुमानोच्छेद इत्यर्थः। माभूत्तर्हि साध्यसामग्र्या उपाधित्वमतिप्रसङ्गनिवृत्तय इत्यत आह * एवमिति * साध्यसामग्र्यन्यत्वे बाधोन्नेयपक्षेतरत्वव्यतिरिक्तपक्षेतरत्वान्यत्वे सति कथितलक्षण उपाधिरिति विशेषणीयमेवं विशेषितेऽपि शाकाद्याहारपरिणतिपारम्पर्यस्य साधनाव्यापकत्वासिद्धिरित्याशयः। स श्यामो मैत्रतनयत्वादित्यनुमाने शाकाद्या-

हारपारम्पर्यमुपाधिः शाकाद्याहारपरिणतिपारम्पर्य-पूर्वको मैत्रतनयत्वादित्यनुमाने श्यामत्वमुपाधिरि-ति इतरेतरोपाधित्वसम्भवान्नोपाधेः साधनव्याप-कत्वानुमानं शक्यमिति शङ्कते * श्यामेति * आ-दिपदादुपाध्यन्तरस्थलस्वीकारः। द्वयोर्युगपत्साधनान्न परस्परोपाधित्वमिति परिहरति * मैवमिति * स श्यामत्वे सति शाकाद्याहारपरिणतिपूर्वकः मैत्रत-नयत्वादिति साधने प्रत्येकं साधनाव्यापकत्वस्य शङ्कि-तुमशक्यत्वादित्यर्थः। यदि द्वयोर्युगपत्साध्यत्वं नाङ्गी-क्रियेत तर्हि सर्वमप्यनुमानं भज्येतेत्याह *अन्यथेति* अन्यथा विश्वमनुमानं व्याकुलि स्यादिति सम्बन्धः। तदुपपादनं * सकर्तृकत्व इत्यादि * एवमन्योन्योपा-धितयेश्वराऽनुमानासिद्धिमुक्त्वा तस्य सर्वज्ञत्वानुमा-नासिद्धिमाह * एवमिति * उपाधिरित्युभयसिद्धिरि-ति सर्वत्रानुषङ्गः। तेजोवत्त्वमात्रं पर्वतेऽप्यस्तीति वि-शिनष्टि *इन्धनतेजोवत्त्वमिति * इन्धनं मण्याद्युप-लक्षणम्। एतदुक्तं भवति। पर्वतो वन्हिमान् धूमव-त्त्वादित्युक्ते काष्ठाद्यन्यतमजन्यतेजोवत्त्वमुपाधिरिति। वन्हित्वं जातिर्यस्य स वन्हित्वजातिरग्निस्तदाक्रान्त-त्वं वन्हिमत्त्वमित्यर्थः। केचित्तु अयं वन्हित्वजात्याक्रा-न्तः धूमकेतनत्वात्सम्प्रतिपन्नवदित्यनुमाने काष्ठादि-जन्यप्रकाशगुणवत्त्वमुपाधिरिति व्याचक्षते। तत्सदसत्त्वे-ति पण्डितैरेव निरूप्यम्। आदिशब्दाद्द्व्यणुकं स्वपरि-माणन्यूनपरिमाणारब्धं सावयवत्वाद्घटवदित्यत्र कार्यद्र-व्यत्वमुपाधिस्तस्मिँश्च साध्ये स्वपरिमाणाऽन्यूनपरि-

माणारब्धत्वमित्यादि गृह्यते । अन्योन्याश्रयोपाधित्व इवोपाधित्वेऽपि सम इत्यदोष इति भावः ।

साध्यसाधनसम्बन्धव्यापकत्वं साध्यव्यापकत्वम-स्त्वित्यत आह ।

५३१ सर्वज्ञनारायणमतनिरासः ।

अत एव साध्यसाधनसम्बन्धं प्रति व्यापकत्वं साध्यव्यापकत्वमिष्टमित्यपि प्रत्युक्तम् ।

* अत इति * व्याप्त्यनिरुक्तौ व्यापकत्वानिरुक्तेरेवेत्यर्थः । साध्यवन्निष्ठात्यन्ताभावाप्रतियोगित्वं साध्यव्यापकत्वं साधनवन्निष्ठात्यन्ताभावप्रतियोगित्वं साधनाव्यापकत्वमिति नारायणसर्वज्ञमतमपि निरस्तम् । व्याप्त्यसिद्धौ साध्यसाधनभावासिद्धेरिति द्रष्टव्यम् । ननु चसाधनाव्यापकत्वमपि सर्वत्र निश्चेतुं शक्यमित्यस्मात्प्रागिदं वक्तव्यम् । सत्यम् । ग्रन्थार्थ उपदेशतोऽवगन्तव्य इत्यभिप्रेत्य व्यवहितसम्बन्धितया करणाददोष इति ।

यत्रोक्तलक्षणस्य निश्चायकं प्रमाणमस्ति तत्र नानिश्चितोपाधित्वमिति यदुक्तं तदपि न प्रसङ्गार्ह-मित्याह ।

५३२ निश्चितोपाधावपि साधनाव्यापकत्वस्य दुर्ग्रहत्वम् ।

यत्राप्युपाधिर्निश्चीयते तत्राप्यतीन्द्रियोपाधिविषये तदभावस्य साधनाव्याप्त्यर्थमनुमेयतायां सोपाधीक्रियमाणेन साधनेनैव सत्प्रतिपक्षस्य कर्तुं शक्यत्वात् ।

तथा सति तत्र शङ्कितोपाधित्वमेव निर्व्यूढं स्थास्यतीति चेत् । एवं ब्रुवाणो नियतमजैषीः परं मन्द मन्दाक्षं न प्रतिपक्षम् । तथा हि-स्वीकृतनिश्चितोपाधिमात्रे शङ्कितोपाधित्वमापतदनुकूलं मन्यते कोऽन्यो जितलज्जात् । न च क्वचिन्निश्चितोपाध्यनभ्युपगमे तच्छङ्का शक्या । यत्र प्रत्यक्षेणोपाधिनिश्चयस्तदेव तद्दर्शनस्थानं भविष्यतीति चेन्न । ऐन्द्रियकबाधे तज्जातीयस्यातीन्द्रियस्याप्रयोजकीक्रियमाणेन हेतुनैव साधयितुं शक्यत्वात् । नच यदेकत्रैकजातीयमैन्द्रियकं तदन्यत्रै-न्द्रियकबाधे हेतुबलादतीन्द्रियं न प्रसाध्येत पाकदर्शनात् जठरानलादि । साधनाव्यापकत्वे सति साध्यव्यापक इति च शाकाद्याहारपरिणतिपरम्परासाध्यं व्याप्नोतीत्यव्यापकतादोषः । न हि शाकादित्वं नाम किञ्चिदेकमस्ति यत्साध्यं व्याप्नुयात् ।

* यत्रेति * तेजोऽनुष्णं रूपित्वादित्यत्र बाधेनोपाधिमात्रमुन्नीयातेजस्त्वमुपाधिविशेषः कल्प्यते तस्य प्रत्यक्षतया तदभावः पक्षे प्रत्यक्ष इति विशिनष्टि * अतीन्द्रियेति * वज्रादिर्लोहलेख्यः पार्थिवत्वात्काष्ठवदित्यत्र शिथिलावयवत्वमुपाधिराश्रीयते स चातीन्द्रियो लोहलेख्यत्वेनानुमेयत्वादत एव वाचस्पतिटीकायामुदयनेन स्फटिके कथमेवं प्रतिपत्तिरिति चोदिते प्रत्युक्तं लोहलेख्यत्वादेवेति तस्य

कत्वस्थानमित्यर्थः। यद्वा तदेवानुमानं तद्दर्शनस्थानमुपाधिनिश्चयस्थानमित्यर्थः। प्रत्यक्षोपाधावपि साधनाव्यापकत्वनिश्चयं पराकुर्वन्परिहरति *नेति* तेजोऽनुष्णं रूपित्वादित्यत्रातेजस्त्वं पक्षेतरत्वं प्रत्यक्षं तस्य पक्षे साधन ऐन्द्रियकबाधे सति तज्जातीयस्यातीन्द्रियस्याप्रयोजकीक्रियमाणेन रूपित्वहेतुना साधयितुं शक्यतया न तद्दर्शनस्थानत्वमित्यर्थः। एकत्रोपाधेरैन्द्रियकत्वे तज्जातीयस्यातीन्द्रियस्य प्रत्यक्षबाधेन तदनुमेयत्वं दृष्टमित्यत आह *न चेति* न च न प्रसाध्य इति सम्बन्धः। उदाहरणमाह *पाकेति* बाह्यानलस्य प्रत्यक्षत्वात्तस्य वाऽशितपीतपाकलिङ्गेनान्तरतीन्द्रियस्तज्जातीयोऽनुमीयते। आदिग्रहणेन तद्गतरूपादिसङ्ग्रहः। एवं साधनाव्यापकत्वांशं निरस्य साध्यव्यापकत्वांशं निरस्यति *साधनेति* साधनाव्यापकत्वे सति साध्यव्यापक इत्यस्य लक्षणस्याव्यापकतादोषश्च कुत इत्यत आह *शाकेति* शाकाद्याहारपरिणतिपरम्परासाध्यं श्यामत्वन्न व्याप्नोति यस्मादित्यर्थः। शाकादित्वस्य नानात्वेन व्यावृत्ततयाऽनुगतश्यामत्वव्यापकत्वायोगादिति हेतुमाह *न हीति* क्वचिच्छाकं क्वचित्तैलं क्वचिल्लवणमिति शाकादित्वमनुगतमेकं नास्ति तेनाव्यापकत्वमित्यर्थः।

यद्यपि शाकादिरूपेणानुगतिर्नास्ति तथाऽपि श्यामिकाकारणत्वोपाधावनुगतिरस्त्येवेत्याशङ्कामुपेत्याह।

५३३ शाकादित्वस्यानुगतत्वेऽपि दोषः।

अस्तु वा कथमपि तथापि, श्यामत्वं न व्याप्नोति इन्द्र-

नीलशिलादिश्यामत्वस्याहाराजन्यत्वात् । शरीरश्यामत्वं साध्यं तच्च व्याप्नोत्येवेदमिति चेन्न । व्याप्तावुपाधेरभिधेयत्वात् । नच पुरुषश्यामत्वेन व्याप्तिः । हेतुपक्षधर्मतयैव हि साध्यं पक्षधर्मः सिध्यति न व्याप्तया अन्यथा-पुरुषपदस्य व्यवच्छेदकस्याविशेषणत्वापातात् । परम्परा-सम्बन्धिकज्जलादिलेपश्यामत्वव्यवच्छेदकत्वे च संयुक्तश्यामपुरुषसमवेतश्यामत्वस्य परम्परासम्बन्धिनः कथं व्यवच्छेदः स्यात् । नच साध्यसाधनसम्बन्धादृष्टव्यभिचारत्वं साध्यव्यापकत्वं मा रूपसाक्षात्कृतिकरणादेस्तैजसादित्वे साध्ये भूदुद्भूतरूपवत्त्वादेरुपाधित्वम् । साधनेनापि च विशेषणतया निवेश्येन यदि केवलसाध्यव्यापकं व्यवच्छेद्यं तदा तस्य व्यभिचारशङ्काधानक्षमस्याप्युपाधित्वं न स्यात् । अथ न किञ्चिद्व्यवच्छेद्यं तदा विशेषणत्वासिद्धिरेव । न हि प्रयोजनमात्राद्विशेषणमर्थवद्भवति किन्तु किञ्चिद्व्यवच्छेदादिति । अन्यथा शरीरजन्यत्वमिवाकर्तृकत्वे व्यक्तमासिद्धौ पर्य्यवस्येदिति ।

*अस्त्विति* शाकाद्याहाराजन्यश्यामत्वाभावात्कथमव्यापकत्वमित्यत आह * इन्द्रेति * इन्द्रनीलमणौ श्यामत्वसाध्यमस्ति नचोपाधिरित्यव्यापकत्वमित्यर्थः । श्यामतामात्रस्य साध्यत्वाभावात्तत्रोपाध्यभावो न दोषाय शरीरश्यामत्वस्यैव साध्यत्वात्तत्र च

सर्वत्रोपाधिरस्त्येवेति शङ्कते *शरीरेति* इदं शाकादित्वामिति यावत् । साध्यसाधनसम्बन्धस्यैव सोपाधिकत्वं नतु साध्यत्वस्येति परिहरति *नेति* साध्यसाधनसम्बन्ध एवोपाधिर्वक्तव्यो न तु साध्येऽन्यथा हेतोरप्रयोजकत्वासिद्धेर्व्याप्तिनिश्चयो यो मैत्रतनयः स श्याम इत्येतावद्रूप इति स्यादेवाव्यापकत्वमित्यर्थः । मैत्रतनयत्वस्येति शेषः । पुरुषश्यामत्वेन व्याप्त्यग्रहे मैत्रतनयत्वस्य श्यामत्वमात्रप्रयोजकतया पुरुषश्यामत्वासिद्धिरित्यत आह * हेत्विति * हेतुव्याप्त्या साध्यसामान्यसिद्धेर्हेतोः पक्षधर्म्मतया साध्यविशेषस्य पक्षधर्म्मस्य सिद्धिरित्यभ्युपगमादन्यथा

"विशेषेऽनुगमाभावः सामान्ये सिद्धसाध्यता ।
इत्यादिदोषदुष्टत्वान्न च नोऽनुमितिः प्रमा" ।

इति कथितदोषानिस्तारादित्यर्थः । पुरुषश्यामत्वेन मैत्रतनयत्वव्याप्त्यभ्युपगमेपि नाननुगमप्रसङ्गस्तदेतत्पुरुषेति विशेषणाभावान्न च हेतोः पक्षधर्म्मवैयर्थ्यं तद्‌बलादेव तन्निष्ठपुरुषश्यामत्वसिद्धेस्तत्पुरुषत्वाविशेषणमपि व्याप्त्यन्तर्गतमेवेत्यत आह * अन्यथेति * श्यामतामात्रव्याप्तमैत्रतनयत्वहेतुपक्षधर्म्मत्वबलादेवैतत्पुरुषश्यामत्वासिद्धेः पुरुषेति विशेषणं व्यर्थं व्यभिचाराभावादित्यर्थः । न वैयर्थ्यं मैत्रतनयत्वं पुरुषसम्बन्धि तत्सम्बन्धि च तन्मैत्रस्थकज्जलादि तत्सम्बन्धि तत्समवेतश्यामलादीति परम्परासम्बन्धि श्यामलादिव्यवच्छेदकत्वात्तत्पुरुषविशेषणस्येति तत्राह * पर-

म्परेति * परम्परया सम्बन्धि च तत्कज्जलादिलेपेन जायमानश्यामलादि चेति तथोक्तं तद्व्यवच्छेदकत्वे पुरुषविशेषणस्येति सम्बन्धः । परम्परासम्बन्धिनः श्यामत्वस्य व्यवच्छेदकं कथं स्यान्न कथं चित् तथा विधश्यामत्वमेव नास्ति तत्राह * संयुक्तेति * मैत्र-तनयेन संयुक्तो यः श्यामलपुरुषः तस्मिन्समवेतं यच्छ्यामत्वं तत्परम्परया मैत्रतनयसम्बन्धीति यथा स श्याम इत्युक्ते कज्जलादिलेपनिमित्तश्यामत्वेन सिद्धसाधनता तथा पुरुषविशेषणेऽपि परम्परासम्ब-न्धिपुरुषश्यामत्वेन सिद्धसाधनता स्यादिति तदर्थम-पि विशेषणान्तरमुपादेयमिति न कदाचित्कोऽप्यविच्छेद इत्यर्थः। श्यामलादीत्यत्रादिपदेन पीतादि न गृह्यते किं तु कज्जलश्यामलापेक्षया श्यामलान्तरमेव स्वीक्रियते साध्यरूपे व्यापकत्वं यदि तर्हि शाकादित्वस्येन्द्रनील-श्यामत्वे भावादव्यापकत्वं स्याद्यदा तु साध्यसाधनस-म्बन्धव्यापकत्वं तदा नाव्यापकतादोषो यत्र मैत्रतनय-त्वश्यामत्वसम्बन्धस्तत्र शाकादिजन्यत्वमपि तत्सम्भ-वादित्यत आह*न चेति*व्याप्त्यनिरुक्तौ व्यापकत्वानि-रुक्तेरिति दूषणस्य कथितत्वात् दूषणान्तरमाह*मेति* साक्षात्कृतिकरणत्वादेर्हेतोस्तैजसादित्वे साध्ये उद्भूत-रूपत्वादेरुपाधित्वं मा भूदित्यन्वयः। चक्षुस्तैजसं रूपा-दिषु रूपस्यैव ग्राहकत्वात् दीपवदित्यत्रोद्भूतरूपत्वमुपा-धिः स्याद्रूपस्यैव ग्राहकत्वस्य तैजसत्वसम्बन्धे सर्वत्र भावात्तथा स्पर्शनेन्द्रियं वायवीयं स्पर्शादिषु स्पर्शस्यैव व्यञ्जकत्वाद्व्यञ्जनाभिघातवायुवदित्यत्रोद्भूतस्पर्शवत्वं,

घ्राणं पार्थिवं गन्धादिषु गन्धस्यैव व्यञ्जकत्वात्कुङ्कुमवदित्यत्रोद्भूतगन्धत्वमुपाधिः स्यान्न चैतदिष्यते । चक्षुरादेस्तैजसादित्वसिद्धेरतस्तस्योपाधित्वं मा भूदिति साध्यसाधनसम्बन्धव्यापकत्वं साध्यव्यापकत्वतनुर्न साध्यव्यापकत्वे तु नोद्भूतरूपत्वादेरुपाधिधित्वं द्व्यणुके तैजसादित्वे सत्यप्युद्भूतरूपत्वाद्यभावेनाव्यापकत्वादित्यर्थः । साध्यसाधनसम्बन्धव्यापक इत्यत्र सम्बन्धद्वारा निवेशनीयं यत्साधनं तेन केवलसाध्यव्यापको व्यवच्छिद्यते किं वा न किञ्चिदिति विकल्प्य प्रथममपवदति * साधनेति * अव्याप्त्या दूषयति *तदेति* तस्य—केवलसाध्यव्यापकस्येति यावत् । अध्वरे पश्वालम्भोऽधर्मसाधनं हिंसात्वान्निषिद्धहिंसावदित्यत्र निषिद्धत्वमुपाधिः केवलसाध्यव्यापकोऽन्यथा निषिद्धत्वेन परदारगमनादेरधर्मसाधनत्वानुमानायोगादतस्तस्य व्यभिचारशङ्कां साधनस्याधातुं क्षमस्याप्युपाधित्वं न स्यादित्यर्थः । द्वितीयमुद्भावयति *अथेति* व्यर्थविशेषणासिद्धत्वं लक्षणस्येति दूषयति * तदेति * अव्यवच्छेदकत्वेऽपि साधनवन्निष्ठसाध्यव्यापकशाकादित्वोपाधित्वस्वीकारप्रयोजनतया भवत्येव विशेषणमित्यत आह * न हीति * कुतस्तर्हि विशेषणार्थवत्त्वमित्यत आह *किन्त्विति* सदृष्टान्तं विशेषणासिद्धिमुपपादयन्नुपसंहरति *शारीरीति * पृथिव्याद्यकर्तृकं शरीरजन्यत्वादात्मवदिति मीमांसकेनोक्तेऽजन्यत्वमेवाकर्तृत्वे प्रयोजकमित्युक्ते व्यभिचाराभावेन शरीरिविशेषणवैयर्थ्याद्वि-

शेषणासिद्धो हेतुर्यथा तथेदमपि लक्षणं हेतुविशेषत्वादसिद्धौ पर्यवस्येदित्यर्थः । बाधोन्नेयोपाधौ साधनवन्निष्ठसाध्यव्यापकत्वासम्भवात्केवलसाध्यव्यापकत्वमिति तदव्याप्तिरित्यपि द्रष्टव्यम् ।

एवमन्वयव्यतिरेक्यनुमान उन्नीयमानोपाधौ लक्षणाव्याप्तिमुक्त्वा केवलव्यतिरेकिहेतूपाधावपि लक्षणाव्याप्तिरित्याह ।

८३४ केवलव्यतिरेकिहेतूपाधौ लक्षणाव्याप्तिः ।

किञ्च आभासे व्यतिरेकिणि पक्षधर्म्महेतौ जीवच्छरीरं पृथिव्याद्यष्टद्रव्यातिरिक्तानेकद्रव्यवत् प्राणादिमत्त्वादित्यादौ कथमिदमुपाधिलक्षणं व्यवस्थाप्यं न ह्याभासे व्यतिरेक्यनुमानात्मनि यत्साध्यं तदुपाधिना व्याप्तमिष्यते तस्य पराभिमतस्य क्वचित् सिद्ध्यापत्तेः । व्यतिरेकयोर्व्याप्तावुपाधिश्चेत् तर्हि व्यतिरेके यद्व्याप्यं तस्य व्याप्य उपाधिरवश्यं मन्तव्योऽन्यथोपाधेरन्वये साध्यान्वयापत्तिरित्युपाधिव्यतिरेकव्याप्तयत्रश्यम्भावस्याभ्युपगम्यतया उपाधेर्यद्व्यापकं तद्व्यतिरेक उपाधेर्व्यतिरेकस्य व्याप्यतया मन्तव्य इति परसाध्यापत्तिः । असमव्याप्तिकयोरन्वयव्याप्तिसाध्यसाधनभाववैपरीत्येन व्यतिरेकव्याप्तिरिति । नच दोषान्तरमेव तर्हि वाच्यमिति वाच्यम् । हेतोः पक्षधर्म्मत्वास्थितौ व्याप्तिक्षत्यर्थं त्वयापाभ्युपगमध्रौव्यात् ।

* किं चेति * विपक्षबाधकतर्कहीनं केवलं व्यतिरेक्याभास इष्यते। आभासेति विशेषणमुपाधेरावश्यकत्वद्योतनाय। स्वरूपासिद्ध्यैव तत्परिहार इत्यपि न वक्तव्यमित्याह *पक्षेति* तत्स्वरूपं दर्शयति * जीववदिति * इन्द्रियायतनं शरीरमिति लक्षणाच्छरीरमात्रपक्षीकरणे भागे बाधितत्वं तदाभासत्वमिति तद्व्यावर्त्तनाय जीववदित्युक्तम्। उपाधिव्यतिरेकेण नान्यो दोषः सम्भवतीति वक्तुं विशेषणप्रक्षेपः। पृथिव्यप्तेजोवाय्वाकाशकालदिङ्मनांसि पृथिव्याद्यष्टद्रव्याणि तदितिरिक्तानेकद्रव्यवदिति साध्यते। जीवच्छरीरमनेकद्रव्यवदित्युक्ते पृथिव्याद्यनेकद्रव्यसम्बन्धीति सिद्धसाधनं तद्व्यावृत्त्यर्थं पृथिव्यादीति विशेषणम्। व्यतिरिक्तद्रव्यवदित्युक्ते सात्मकत्वेन सिद्धसाधनं तदर्थमनेकेति विशेषणम्। एकस्मिन् शरीरे भोक्तृनानात्वं दशमद्रव्यं वा साध्यते। आदिपदेन भूः शशविषाणोल्लिखिता भूत्वाद्व्यतिरेकेण गगनवदित्याभाससङ्ग्रहः। अत्रोपाधिस्त्वयाऽवश्यं वक्तव्यो ऽन्यथा निरुपाधिसम्बन्धस्याऽऽभासस्यासिद्धेरेवं चान्वयव्याप्तावुपाधिरुपन्यस्यत उत व्यतिरेकव्याप्ताविति विकल्पाभिप्रायेण कथमित्याह। अन्वयव्याप्तावुपाद्ध्युपन्यासेऽनुपपत्त्यभावात्प्रथम एव कल्पोऽस्त्वित्यत आह * न हीति * व्यतिरेकीति विशेषणमसम्भवद्योतनाय। उपाधिरिष्यते चेत्तेन व्याप्तं साध्यं किं नेष्यत इत्यत आह * तस्येति * पराभिमतस्य तस्य साध्यस्य क्वचि-

ऽपक्षे सपक्षे वा सिद्ध्यापत्तेर्यदि पक्षव्यतिरिक्ते साध्यमुपाधिव्याप्तमुच्यते तदा सपक्षभावात्केवलव्यतिरेकिव्याघातः यदि पक्षे तदोपाधेर्हेतुस्वरूपमात्रसम्बन्धितया व्यभिचाराधानासामर्थ्याभावात् हेतुदोषत्वासम्भवेन सदनुमानत्वापत्तिरित्यभिप्रायः। यत्प्राणादिमत्तत्पृथिव्याद्यष्टद्रव्यातिरिक्तानेकद्रव्यवदित्यन्वये यद्युपाध्यसम्भवस्तर्हि व्यतिरेकव्याप्तावुपाधिरुद्भाव्यत इति द्वितीयं शङ्कते * व्यतीति * यत्पृथिव्याद्यष्टद्रव्यातिरिक्तानेकद्रव्यवन्न भवति तत्प्राणादिमदपि न भवति यथा लोष्टादीति व्यतिरेकव्याप्तावभोगायतनत्वमुपाधिरुद्भाव्यते सर्वत्र व्याप्तावुपाधेर्वक्तव्यत्वाद्व्यतिरेकव्याप्तौ वैपरीत्येन साध्यव्यापक उपाधिरित्यर्थः। परिहरति * तर्हीति * यदुक्तसाध्यं न भवति तदुक्तसाधनमपि न भवतीति व्यतिरेके यत्पृथिव्याद्यष्टद्रव्यातिरिक्तानेकद्रव्यत्वाभावरूपसाध्यासत्वं तद्व्याप्तं साधनाभावेन तस्य साध्याभावस्य उपाधिर्व्याप्यो मन्तव्यो यत्र यत्रोपाधिस्तत्र तत्र पृथिव्याद्यष्टद्रव्यातिरिक्तानेकद्रव्यत्वन्नास्तीत्यन्यथा साध्याभावाभावेऽप्युपाध्यनुवृत्तिः स्यादिति साधनव्यापकत्वांशाभावप्रसङ्ग इत्यर्थः। अवश्यशब्दोपात्तां युक्तिमाह * अन्यथेति * उपाधिर्व्याप्यतया यदि नेष्यते तर्ह्युपाधेरन्वये सत्वे साध्यान्वयापत्तेः साध्यसत्वप्रसङ्गात्क चित् साध्याभावाभावेऽप्युपाधिसत्वमन्तरेण तस्य व्यापकत्वाभावासिद्धेः साध्याभावाभावश्च साध्यमेवेति क चित् साध्यासिद्धिरित्याशयः। इतिशब्द उपाधेर्व्याप्य-

त्वप्रतिपादनसमाप्तौ। यत्रोपाधिस्तत्र साध्यन्नास्तीति साध्याभावेनोपाधेरन्वयव्याप्त्यैव व्याप्यत्वन्न पुनः साध्याभावोपाध्योर्व्यतिरेकव्याप्तिरपीति न परसाध्यसिद्धिरित्याशङ्क्याह *उपाधीति* उपाधौ भोगायतनत्वस्य व्यतिरेकव्याप्तेर्यत्र साध्याभावो नास्ति तत्र भोगायतनत्वं नास्तीत्येवं—रूपाया व्यतिरेकव्याप्तेरवश्यम्भावस्याव श्यकत्वस्याभ्युपगन्तव्यतया साऽऽवश्यकता वाऽन्वयव्यतिरेकवतो धर्मस्यैवोपाधित्वादन्वयव्याप्तेर्व्यतिरेकनियमाच्च केवलान्वयिन्यपि विपक्षस्य समर्थनीयत्वादुपाधेर्यस्य यद्व्यापकं साध्याभावरूपतद्व्यतिरेकस्तस्य साध्याभावस्य व्यतिरेकोऽभावः साध्यसत्त्वमेव स उपाधिर्व्यतिरेकस्याभोगायतनत्वाभावस्य भोगायतनत्वस्य व्याप्यतया मन्तव्य इति कृत्वा परसाध्यापत्तिः क्वचित्साध्यासत्वे व्यतिरेकानवधारणादेवं च सपक्षसद्भावाद्व्यतिरेकित्वक्षतिरित्यर्थः। व्यापकाभावो व्याप्याभावव्याप्य इति नियमो नास्ति वस्तुत्वप्रमेयत्वयोर्व्यतिरेके व्यभिचारादत उपाधेर्यद्व्यापकं तद्व्यतिरेक उपाधिव्यतिरेकस्य व्याप्यतया न मन्तव्य इत्यत आह *असमेति* समव्याप्तिकयोरिदमेव साधनमिदमेव साध्यमिति नियमाभावात्तत्र व्यतिरेकेऽपि व्यापकनियमो माभूद्यथाऽप्यसमव्याप्तिकयोर्धूमाद्यग्न्याद्योरन्वये यः साध्यसाधनभावस्तद्वैपरीत्येन व्यतिरेके साध्यसाधनभावो यत्राग्न्यादिर्नास्ति तत्र धूमादिर्नास्ति इति व्याप्तेरत्राऽपि भवितव्यं व्यापकाभावस्य व्याप्यत्वेनेति भावः। तर्हि व्यतिरेक्याभासे

नोपाधिरुच्यतेऽपितु दोषान्तरमेवोच्यत इत्यत आह * न चेति * कुतो न वाच्यमित्यत आह * हेतोरिति * व्याप्यत्वपक्षधर्म्मत्वाभ्यामप्रामितस्यैवाभासत्वात्पक्षधर्म्मत्वनिश्चये तस्य व्याप्तिज्ञानिर्वक्तव्या तदर्थमुपाधिरभ्युपगम्यत इति नियमादन्यथा व्याप्तिमतः पक्षधर्म्मस्य हेतोराभासत्वानुपपत्तेरतिप्रसङ्गादित्यर्थः।

एवमुपाध्यनिरूपणेन निरुपाधिकसम्बन्धरूपव्याप्त्यसिद्धिमभिधायाधुना तामुपेत्यापि दूषणमभिधत्ते

५३५ व्याप्तिसिद्धिमुपेत्याऽपि दूषणम्।

भवतु वा या काचिद्व्याप्तिर्नाम तत्सत्त्व एवानुमितिभावात् तस्याश्चानुमितेश्च व्याप्तिरेष्टव्या ततश्चाऽऽत्माश्रयः। तद्भेदेचाऽननुगमाविनिगमौ स्यातामिति।

* भवत्विति * दोषं वक्तुं व्याप्त्यनुमित्योर्व्याप्तिमुपपादयति * तदिति * अग्निभाव एव धूमभावात् धूमाग्न्योर्व्याप्तिरिष्टा तद्व्याप्तिभाव एवानुमितिभावात्तयोरपि व्याप्तिरेष्टव्या समानन्यायत्वादित्यर्थः। इष्यते चेल्लिङ्गलिङ्गिनोर्या व्याप्तिः सैव व्याप्त्यनुमित्योरुतान्येति विकल्प्याऽऽद्यमपवदति * ततश्चेति * व्याप्यव्यापकयोर्व्याप्त्याश्रयत्वाद्व्याप्तेर्व्यापकत्वे व्याप्यत्वे वा स्वयमेव स्वाश्रय इति स्ववृत्त्यापात इत्यर्थः। द्वितीयं दूषयति * तदिति * सम्बन्धस्य सजातीयसम्बन्धानाश्रयत्वाद्विजातीयत्वसिद्धये भिन्नलक्षणं वाच्यमतश्च लक्षणाननुगमस्तथा का व्याप्तिरनुमानलक्षणान्तर्गता

का वा व्याप्त्यनुमित्योरित्यनिश्चयोऽव्यवस्था स्यादित्यर्थः ।

व्याप्तिः पक्षधर्म्मता चानुमित्युत्पत्तेरङ्गं तत्र व्याप्तिरखण्डीदानीं पक्षधर्म्मतां खण्डयितुं स्थलशुद्धिं विधत्ते ।

५३६ पक्षधर्मताखण्डनम् ।

व्याप्तिपक्षधर्म्मते अनुमितिं भावयत इति वदन्ति। कश्चायं पक्षो नाम यद्धर्म्मत्वं पक्षधर्मत्वम् । सिषाधयिषितधर्मा धर्मीति चेन्न । सिषाधयिषा हि प्रतिपिपादयिषा वा स्यात् प्रतिपित्सा वा । आद्ये स्वार्थानुमित्यनुदयप्रसङ्गः । द्वितीये चासुरभिगन्धानुमेयकुत्सितरसविषयस्वार्थानुमित्यनुदयप्रसङ्गः ।

*व्याप्तीति*भावयतो भवन्तीमुत्पादयतः।वदन्ति तार्किकाः पक्षानिर्णयेन पक्षधर्म्मताऽनिश्चयं वक्तुं पक्षं विकल्पयति *कश्चेति*सिषाधयिषितधर्म्मा धर्मी पक्ष उतानवधारितधर्मा धर्म्मीति विकल्पार्थः।पक्षाविकल्पस्याऽऽकस्मिकत्वपरिहारायाह*यदिति*आद्यं कल्पमवलम्बते *सिषाधयिषितेति* साधयितुमिष्टो धर्म्मो यस्य धर्मिणः स सिषाधयिषितधर्मा धर्मी। पक्ष इत्युक्ते सपक्षेऽतिव्याप्तिः तस्य साध्यसमानधर्मत्वात्तद्व्यावृत्त्यर्थमाह *सिषेति* सिषाधयिषितधर्म्मेत्युक्ते धर्म्मिविशिष्टस्य पक्षत्वं स्यादतश्चासम्भवः साध्यस्य पक्षवृत्तित्वेन तस्यान्तः स्ववृत्त्यापातात्तद्व्यावृत्त्यर्थमाह *धर्म्मीति* विशेष्यांश

इत्यर्थः। विशेषणासिद्ध्या विशिष्टलक्षणासिद्धिरिति- परिहरति * नेति * तदुपपादनाय विकल्पयति *सिषाधयिषेति* प्रतिपादयितुमिच्छा प्रतिपत्तुमिच्छा चेति विकल्पार्थः। प्रथमं प्रतिक्षिपति * आद्य इति * स्वार्थानुमाने प्रतिपादनरहिते प्रतिपिपादयिषाया अभावेन कथितपक्षाभावाद्धेतोराश्रयासिद्धतया स्वार्थानुमानोच्छेदप्रसङ्गात्तत्र लक्षणाव्याप्तिरित्याशयः। द्वितीयं दूषयति * द्वितीय इति * असुरभिगन्ध एवासावनुमेयश्चेत्यसुरभिगन्धानुमेयः स च कुत्सितरसश्चासुरभिगन्धानुमेयकुत्सितरसौ तद्विषयेति विग्राह्यम्। विमतोऽसुरभिगन्धः क्लिन्नत्वात्सम्प्रतिपन्नवत् विमतः कुत्सितरसोऽसुरभिगन्धत्वात् शुक्तादिवदिति स्वार्थानुमित्यनुदयप्रसङ्ग इत्यर्थः *

द्वितीयं विकल्पं दूषयति *

५३७ द्वितीयविकल्पनिरासः।

न चानवधारितधर्मा धर्मी पक्षः। हेतुमत्तयाऽप्यनवधारणेऽनुमानोदयनिदानभावासम्भवात् अवधारणे-चानवधारितधर्मत्वानुपपत्तेः।

*नचेति* पूर्ववद्विशेषणकृत्यम्। अनवधारितो हेतुलक्षणो धर्म्मो यस्य स पक्ष उतानवधारितहेतुविषयधर्मो यस्य स इति विकल्प्य प्रथमं दूषयति *हेत्विति* निदानभावो निदानत्वम्। हेतोः पक्षधर्म्मतयाऽनिश्चये सन्दिग्धासिद्धत्वेनाभासत्वादनुमितिकरणत्वन्न स्यादि-

त्यर्थः । दूषणान्तरमाह * अनवधारणे चेति * धर्म्मानवधारणे तद्विशिष्टधर्म्मिणोऽप्यवधारणासम्भवेन पक्षासिद्धिर्विशेषणनिश्चयपूर्वकत्वाद्विशिष्टसिद्धेरित्यर्थः । न चानवधारितरूपतया धर्म्मस्य निश्चितत्वात्तद्विशिष्टपक्षसिद्धिरिति वाच्यम् । अनिश्चितरूपेण निश्चितमित्युक्तौ निश्चितभावाभावयोरेकोपाधौ व्याघातापातात् ।

द्वितीयं कल्पं दूषयति ।

६३८ द्वितीयकल्पनिरासः ।

नचाऽनवधारितहेतुविषयधर्मा धर्मी पक्षः, तथाहि-केनानवधारितधर्मा न तावदनुमानप्रयोक्त्रा स्वयमज्ञाते परं प्रत्यप्रयोगात् । प्रतिवादिनेति चेन्न । प्रतिवादिविते ह्यर्थे वादितया परस्परविद्योत्कर्षापकर्षनिरूपणार्थमनुमानदर्शनात् ।

*न चेति* हेतुविषयः साध्यमनवधारितसाध्यधर्म्मेति यावत् । अनवधारितसाध्यविशिष्टपक्षस्यासम्भवमुपपादयति * तथा हीति * हेतुविषयस्यानवधारितत्वमनुमानप्रयोक्त्रा प्रतिवादिना वेति विकल्पयति * केनेति * प्राथमिकत्वादनुमानप्रयोक्त्रेति प्रथमकल्पमाशङ्क्याह * न तावदिति * स्वेनानवधारितस्य परं प्रति प्रमाणेन प्रतिपादयितुमशक्यत्वात् सन्देहविषयस्य प्रमाणस्य व्याघातात्तथाऽऽप्तस्य स्वानिश्चितार्थस्यैव परं प्रति प्रतिपादकत्वादित्यर्थः । द्वितीयं शङ्कते * प्रतीति *

अव्याप्त्यैव दूषयति * नेति * सह श्रोत्रोः परस्परं विद्योत्कर्षापकर्षनिरूपणार्थं प्रतिवादित्वं विहाय केवलवादितयाऽनुमानप्रयोगो दृश्यते तत्र प्रतिवादिनाऽनवधारितधर्म्मत्वलक्षणाभावादव्याप्तिः। न च तत्राऽपि दूषक एव प्रतिवादीति वचनीयं केवलमात्मविद्योत्कर्षानिश्चयफलतया तत्वनिर्णयविजयफलकामित्वाभावात्तत्कामितया दूषकस्यैव प्रतिवादित्वात्। एवं वाद्यपि तत्र न स्यादिति चेन्न, स्यान्नाम न हि वयं तत्र वादिसमर्थनाय प्रवृत्ता इति न किञ्चिदवद्यम्।

दोषान्तरं भाषितुं प्रकारान्तरेण विकल्पयति।

५३९ प्रकारान्तरेण विकल्प्य दोषः।

तथाऽनवधारणं यत्किञ्चिद्धेतुविषयधर्मगोचरं वादिप्रयोक्तव्यहेतुविषयगोचरं वा। न तावदाद्यः अग्निमत्वनिश्चयदशायामपि तत्तद्धेतुविषयबहुतरापरधर्मानवधारणात् धूमं प्रति पर्वतस्य पक्षत्वप्रसङ्गात्। न द्वितीयः तथापि तत्र प्रसङ्गात्। तद्धेतूनामपि वादिप्रयोज्यत्वात्। असाधारणविवक्षायाश्चाननुगमात्। इतरेतराश्रयदोषाच्च। पक्षधर्मत्वेन हेतुत्वनिरूपणात्। व्याप्तपक्षधर्मत्वस्यैहेतुत्वात्। हेतुना च पक्षानिरूपणात्। स्वार्थानुमाने च हेतोरप्रयोज्यत्वात् पक्षाभावेनानुमानानुदयप्रस-

(१) स्वस्य हेतुत्वादिति का० मु० पु० पा०।

ङ्गात् । विरुद्धहेतौ पक्षस्याभासत्वप्रसङ्गात् तत्र साध्य-स्य तद्धेतुविषयत्वाभावात् हेतोरेव च साध्यविपरीत-व्याप्तया दुष्टत्वात् ।

*तथेति* कस्मिन्सति किं स्यादित्यत आह *नेति* कुत इत्यत आह *अग्निमत्त्वेति* अग्निमान्पर्वतो धूम-वत्त्वादित्यनुमानेन पर्वतस्याऽग्निमत्त्वनिश्चयकालेऽपि कृतकत्वसावयवत्वादिहेतुसाध्यानित्यत्वकार्यत्वादिध र्मस्य पर्वतेऽनवधारणात्पर्वतस्य धूमं प्रति पक्षत्वं प्रसज्येत न च तदिष्यते सन्दिग्धाग्नित्वस्यैव धूमं प्रति पक्षत्वादित्यातिव्याप्तिरित्यर्थः । अस्तु तर्हि द्वि-तीयस्तत्राह * नेति * कुत इत्यत आह * तथापी-ति * तत्प्रसङ्गमुपपादयति * तदिति * तेषां कृत-कत्वादिहेतूनामपि वादिप्रयोज्यत्वात्तद्विषयानित्या-दिधर्म्मानवधारणादग्निमत्त्वनिश्चयदशायामपि पर्व-तस्य धूमं प्रति स एव पक्षत्वप्रसङ्ग इत्यर्थः । वा-दिप्रयोक्तव्यधूमवत्वहेतुविषयधर्मानवधारणवत्त्वमग्नि-मत्वं प्रति पर्वतस्य पक्षत्वमतो नातिव्याप्तिरित्यत आह * असाधारणेति * नकेवलमव्याप्त्यादि-रसम्भवोऽपीत्याह * इतरेति * कुत इतरेराश्रयत्वं तत्राह * पक्षेति * व्याप्यत्वं हेतुत्वं तच्च व्याप्ति-तः पक्षधर्म्माधिकरणत्वमात्रेण भवतीति न पक्षधर्म-त्वापेक्षेत्यत आह *व्याप्तेति* सिद्धस्यैव हेतुत्वाद्व्याप्त-

(१) चपक्षधर्मत्वाभावप्रसङ्गात् का० मु० पु० पा० । पक्ष-त्वासत्वप्रसङ्गात् पु० पा० ।

त्वपक्षधर्म्मत्वाभ्यां प्रमितस्यैव सिद्धत्वात्पक्षधर्मतापेक्षेत्यर्थः। हेतोः पक्षधर्मत्वापेक्षायामपि पक्षस्य हेत्वनपेक्षत्वान्नेतरेतराश्रयस्तत्राह * हेतुनेति * हेतुविषयानवधारितधर्मवान्पक्ष इति लक्षणादित्यर्थः । अव्याप्त्यन्तरमाह * स्वेति * स्वार्थानुमाने हेतोर्वादिना प्रयोक्तव्यत्वाभावादुक्तलक्षणस्य तत्राव्याप्तिरित्याशयः। किं च अनित्यः परमाणुर्वायवीयो नीरूपद्रव्यत्वादित्यत्र वायवीयपरमाणोर्नीरूपद्रव्यत्वविरुद्धहेतुविषयधर्मानवधारणाभावात् पक्षत्वन्न स्यादित्याह * विरुद्धेति * कुत इत्यत आह * तत्रेति * अनित्यत्वस्य नीरूपद्रव्यत्वहेतुविषयत्वाभावादित्यर्थः । प्रदर्शितानुमानस्याभासत्वोपपत्तौ न पक्षस्याप्याभासत्वं कल्पनीयं गौरवादित्यर्थः ।

उक्तदूषणं पक्षान्तरेऽप्यतिदिशति ।

५४० दूषणातिदेशः ।

एतेन सन्दिग्धसाध्यधर्माधर्मी पक्षः साध्यत्वञ्च स्वपरार्थानुमानसाधारणमुत्पाद्यज्ञानत्वमिति निरस्तम् ।

* ऐतेनेति * एतेन निरस्तमिति सम्बन्धः । किमिदं साध्यत्वं प्रतिपिपादयिषितत्वं प्रतिपित्सितत्वं वाऽऽद्ये स्वार्थानुमानाव्याप्तिः द्वितीये परार्थानुमानाव्याप्तिरित्यत उक्तं *साध्यत्वं चेति* वादिप्रयोक्तव्यहेतूत्पाद्यज्ञानत्वमुत हेतुमात्रोत्पाद्यज्ञानत्वमुत वादिप्रयोक्तव्यैतद्धेतूत्पाद्यज्ञानत्व,माद्यद्वितीययोरग्निमत्त्वनिश्चयदशायामपि पर्वतस्याग्निमत्त्वं प्रति पक्ष-

त्वप्रसङ्गः तृतीयेऽननुगम इत्येतेनेत्यर्थः ।

एवं पक्षानिरुक्त्या पक्षधर्म्मताऽनिरुक्तिमापाद्य सम्प्रति पक्षधर्म्मता स्वरूपमेव निरसितुं प्रौढ्या पक्षमुपगच्छति ।

५४१ पक्षधर्मता निरासः ।

भवतु वायः कश्चन पक्षः केयं पक्षधर्मता । पक्षाश्रिततेति चेन्न। नैयायिकादीन् प्रति प्रमेयत्वस्याहेतुत्वप्रसङ्गात् । विषयविषयिभावस्य ज्ञेयज्ञानस्वरूपातिरिक्तस्यानङ्गीकारात् । तयोश्च ज्ञेयाश्रितत्वायोगात् ।

*भवत्विति* एवं पक्षमुपेत्य पृच्छति *केति* पक्षाश्रितता व्याप्यस्य सामर्थ्यं वा सेति पृच्छार्थः । प्रथमं शङ्कते *पक्षेति* आश्रिततेत्युक्ते रूपाद्याश्रिततायामतिव्याप्तिस्तन्निरासायोक्तं पक्षेति । नेदं पक्षधर्मतालक्षणं पक्षाव्यापकत्वादिति दूषयति * नेति * आदिपदेन वैशेषिकादय उपादीयन्ते । व्यक्तिरभिधेया प्रमेयत्वादाकृतिवदित्यत्र प्रमेयत्वस्य हेतुत्वं न स्यात्पक्षाश्रितत्वाभावादित्यर्थः । हेतुत्वाविशेषात्प्रमेयत्वमपि धूमादिवत्पक्षाश्रितमिति तत्राह * विषयेति * प्रमाविषयः प्रमेयमिति लक्षणाभिधानात्प्रमाविषयत्वमेव प्रमेयत्वं प्रमाप्रमेययोः स्वरूपमेव विषयविषयिभावस्य स्वभावसम्बन्धत्वोपगमादित्यर्थः । ज्ञानज्ञेयस्वरूपस्यैव तस्य पक्षाश्रितत्वं किन्न स्यात्तत्राह * तयोश्चेति * ज्ञानस्यात्मगुणत्वात् ज्ञेयाश्रितत्वायोगात् ज्ञेयस्य स्ववृत्त्यापातेन तदयो-

गादिति भावः।

व्याप्यस्य सामर्थ्यं पक्षधर्म्मतेति द्वितीयं शङ्कते

५४२ द्वितीयविकल्पनिरासः।

प्रतीतिं व्याप्तिबलेन सामान्यतो व्यापकावगाहनप्रवृत्तां विशेषमादाय परं पर्य्यवसाययितुं व्याप्यस्य सामर्थ्यं सेति चेन्न। तस्याः सामान्यविषयाया अनुपपत्तेरासिद्धेर्व्याप्तिवत्सम्भवात् अनुपपत्तित्वे व्याप्त्यनुप्रवेशात् अधिकविषयाकाङ्क्षित्वे विरम्य व्यापारापत्तेः मानान्तरत्वापत्तेर्व्वा। विशेषविषयायाश्चानुपपत्तित्वेऽतिप्रसङ्गात्। पक्षधर्म्मतया च यदि साध्यव्यक्तिभेदः सिद्ध्येत् तर्ह्यनुमाय तां प्रत्यक्षेण पश्यन् पुंशब्दात् पुरुषमनुमाय प्रत्यक्षेण पुरुषद्वयदर्शने तद्विशेषासंशयी[1] स्यात्। प्राग्विशेषादर्शनात्तथा स्यादिति चेन्न। पश्चात्तत्र तद्दर्शित्वान्न संशयीतेति।

* प्रतीति * व्याप्तिबलेन सामान्यतो व्यापकावगाहनप्रयुक्तां प्रतीतिमादाय विशेषं पर्यवसाययितुं व्याप्यस्य सामर्थ्यं सा पक्षधर्म्मतेत्यन्वयः। यद्वा सामान्यतो व्यापकावगाहनप्रयुक्तां प्रतीतिं विशेषमादाय सामान्यं पर्यवसाययितुं व्याप्यस्य सामर्थ्यं सेत्यन्वयः। परं-केवलं। सामर्थ्यमनुपपत्त्याक्षेपकस्वशक्तिविशेषमनुपादाय सामान्यापर्यवसानं त्वनुप-

१ पुरुषानुमायी इति का० मु० पु० पा०।

पत्तिः। असम्भवेनैतद् दूषयति *नेति* यो धूमवान् सोऽग्निमानिति व्याप्तिबललब्धव्यापकसामान्यप्रतीतेर्विशेषाविषयत्वं विनाऽनुपपत्तेरसिद्धेर्व्याप्यस्य विशेषाक्षेपकत्वसामर्थ्यंन्न पक्षधर्मतेत्यर्थः। सामान्यस्य प्रतीतौ विशेषपरतन्त्रत्वाद्विशेषाविषयत्वमन्तरेण सामान्यप्रतीतिरनुपपन्नेत्यत आह * व्याप्तीति * धूमाग्न्यादिनिष्ठसंयोगादिसम्बन्धविशेषरूपतामन्तरेणैव संम्बन्धरूपा व्याप्तिर्यथा सम्भवति तद्वदित्यर्थः। यद्वा यो धूमवान्सो ऽग्निमानिति व्याप्तिग्रहणकाले यथा व्याप्यव्यापकयोः सामान्येनैव प्रतीतिर्विशेषे ऽनुगमाभावेन सामान्योपाधौ तद्ग्रहादेवमिहापीत्यर्थः । उक्तमर्थं व्यतिरेकदण्डं दर्शयन् दृढीकरोति * अनुपपत्तित्व इति * उपपत्तिर्न्न विद्यते यस्याः साऽनुपपत्तिस्तथात्वे व्याप्तिग्रहणकाले व्यापकसामान्यप्रतीतौ तद्विशेषानुप्रवेशः एवं च कतिपयविशेषानुप्रवेशेऽननुगमोऽशेषविशेषानुप्रवेशे सर्वज्ञतापत्तिरनुमानोच्छेदश्च व्याप्तिग्रह एवाशेषविशेषासिद्धेरित्यर्थः। व्याप्त्यननुप्रवेशादिति पाठे व्याप्तिग्रहे व्यापकसामान्यं यत्र प्रमीयेत तत्र विशेषास्फुरणादतो व्याप्तिसिद्धिरित्यर्थः[1]। व्याप्तिबलसिद्धव्यापकसामान्यप्रतीतेर्विशेषविषयत्वं विना ऽनुपपत्यभावे ऽप्यधिकविषयाकाङ्क्षित्वमस्तीदमेवापर्यवसानमित्यत आह *अधिकेति* व्याप्तिसिद्धिसामान्यप्रतीतेरेवाधिकाकाङ्क्षाऽन्यस्या वा, आद्ये प्रथमं सामान्यव्यापारःपश्चात्कुतोऽधिकविषय इति जन्मता-

१ व्याप्त्यासिद्धिरित्यर्थइति पु० पा० ।

त्र्व्यापाराया बुद्धेर्विरम्य व्यापारापत्तेरित्यर्थः । यद्य-न्यस्यास्तत्राह *मानेति* व्याप्तिबलसिद्धसामान्यज्ञान-मेकमपरं पक्षधर्मतासिद्धविशेषविषयं मानमिति माना-न्तरापत्तिरित्यर्थः । सामान्यप्रतीतेर्नानुपपत्तिर्येनोक्त-दोषः किं तु विशेषविषयायाः पर्वतनिष्ठत्वादिवि-शेषान्तरमन्तरेणानुपपत्तिः सा व्याप्यस्य सामर्थ्यं प-क्षधर्मतेत्यत आह * विशेषेति * अनवस्थानादि-त्यर्थः । व्यापकसामान्यस्य व्याप्तिसिद्धत्वात् व्याप्य-स्य पक्षधर्मतया व्यापकविशेषः सिध्यतीति वाच्यं तत्र दूषणमाह * पक्षेति * तर्ह्यनुमाय प्रत्यक्षेण तामनुमितां व्यक्तिं पश्यन् तद्विशेषासंशयी स्यादि-त्यन्वयः । तथा संशय एव नास्तीत्यत आह * पुंश-ब्दादिति * बहिरवस्थितोऽभ्यन्तराध्ययनध्वनिश्रवणा-दभ्यन्तरे पुरुषार्थोऽनुमायी भवति अयं शब्दः पुरुष-विनिर्गतः शब्दविशेषत्वात्सम्प्रतिपन्नवदिति स पुरु-षानुमायी पश्चात्तत्र च पुरुषद्वयदर्शने अयं मयाऽनुमितो ऽयं वेति तद्विषयसंशयो न स्यादनुमानतस्तद्विशेषद-र्शनाद्भवति चातो न पक्षधर्मतया साध्यव्यक्तिभेदासि-द्धिरित्यर्थः । यद्यप्यनुमानतः प्राग्विशेषो दृष्टस्तथाऽ-पि प्रत्यक्षतस्तद्दर्शनं नास्ति परोक्षं च विशेषदर्श-नं नापरोक्षसंशयनिवर्त्तकमिति शङ्कते * प्रागिति * अनुमितस्यैव विशेषस्यैव पश्चात् प्रत्यक्षत उपलम्भान्न संशयं कुर्यादिति परिहरति * नेति * अनुमानन्न-सामान्ये प्रमाणमन्यत एव तत्सिद्धेर्नापि विशेषे त-त्सत्याधनसामर्थ्याभावादतः कल्पितमेव तत्प्रामा-

पमित्यभिसन्धिः । इति शब्दः समाप्तौ ।

। इत्यनुमानखण्डनम् ।

---

अनुमानानिरुक्त्याऽनुमेयस्यानिर्वचनीयस्य सिद्धेर्न तेनाद्वैतव्याकोप इति प्रत्यपीपदिदानीं पुनरेतस्यैव द्रढिम्ने उपमानलक्षणं क्रमप्राप्तं खण्डयितुमुपक्रमते ।

५४३ उपमानखण्डनम् ।

उपमानमपि किमुच्यते । सादृश्यज्ञानमुपमानमित्येके । तन्न । स्मृतावपि प्रसङ्गात् । अनुभव इत्यभिधाने च सदृशाविमावितीन्द्रियजेऽपि प्रसङ्गात् । सोऽपि गवयो गवा सदृशो गवयत्वात् गवयान्तरवदित्यनुमानस्यापि तत्त्वापत्तेः । एवमाप्तोक्तिजेऽपि ।

*उपमानमिति* किमः प्रश्ने आक्षेपे च साधारण्यादाक्षिप्तमपि पृष्टं मत्वोत्तरमाह *सादृश्येति* ज्ञानमुपमानमित्युक्तेऽक्षजेऽतिव्याप्तिपरिहाराय विशिनष्टि * सादृश्येति * तावत्युक्ते तत्रैवातिव्याप्तिपरिहाराय ज्ञानमिति विशेषणम् । एके मीमांसकैकदेशिनः । यथाश्रुतमेवेदं न लक्षणमतिव्याप्तेरिति दूषयति * तन्नेति * सादृश्यमिति सादृश्यविषयिणी स्मृतिः सा नोपमितिकरणं तदनन्तरमेवानुभवान्तरादर्शनान्नाप्युपमितिः स्मृतेरप्रमात्वादित्यतिव्याप्तिरित्याशयः । अपिशब्दात्सादृश्यसंशयविपर्ययोरतिव्याप्तिं समुच्चिनोति । सादृश्या-

नुभव उपमितिरिति ब्रूमो नातः स्मृतावतिप्रसक्ति-र्नापि तत्संशयादौ, यथार्थत्वविशेषणस्य विवक्षितत्वा-दित्याशङ्क्याह * अनुभव इति * इमौ भिन्नाविति संयुक्तसमवायादिना भेदानुभव इवेमौ घटौ सदृशा-विति संयुक्तसमवायादेव सादृश्याऽनुभवो भवति सादृश्यस्यावयवगुणानां भूयसां साम्यस्यान्यस्य वा विवक्षितत्वादित्यतिव्याप्तिरित्यर्थः । प्रत्यक्षान्यत्वे सति सादृश्यानुभवो यथार्थ उपमितिर्विवक्षित इति चेत्तत्राह * सोऽपीति * तत्त्वापत्तेः—उपमिति-त्वापत्तेरिति यावत् । अतिव्याप्तिस्थलान्तरमाह * एवमिति * गोसदृशो गवय इत्याप्तवचनजनितोऽनु-भवः सादृश्यविषयो भवति न तत्र संज्ञासंज्ञिसम्ब-न्धपरिच्छित्तिरस्तीत्यतिव्याप्तिरित्यर्थः ।

उपमानशब्दस्य करणे भावे च साधारण्यात् द्विधा विकल्पयन्नि दोषान्तरं भाषितुम् ।

५४४ विकल्पद्वयनिरासः ।

किञ्चोपमितिलक्षणमिदमुपमितिकरणलक्षणं वा स्या-त् । नाद्यः सादृश्यस्योपमेयत्वापत्तेः । सदृशे चोपमेय-व्यवहारोऽस्ति चन्द्रोपमेयं मुखमित्यादि । सदृशमितिः से-ति चेन्न । अक्षादिकरणासम्भवे तदुदाहरणासिद्धेः । नापि द्वितीयः । सादृश्यज्ञानस्य सर्वस्यासम्भवत्प्रमाणा-न्तरव्यापारफलजनकताया दर्शयितुमशक्यत्वात् ।

*किञ्चेति* उपमितिरुपमानमिति भावव्युत्पत्त्यो-

पमितिरेवोच्यत उतोपमीयतेऽनेनेति करणव्युत्पत्त्योपमितिकरणमित्यर्थः । कस्मिन्सति किं स्यादित्यत आह *नेति* कुत इत्यत आह *सादृश्यस्येति* सादृश्यमप्युपमेयं तेन नानिष्टापत्तिरित्यत आह *सदृशे चेति* सत्यं सादृश्यमप्युपमेयं न तन्मात्रं तद्विशिष्टद्रव्यस्योपमेयत्वात्तदस्मिन्पक्षे न स्यादित्यर्थः । तदुदाहरणनिष्ठं दर्शयति * चन्द्रेति * करिपुष्करोपमेयः कर इत्यादि । शोणो धावतीति शोणाश्वधावनवत् सादृश्यज्ञानमिति सदृशज्ञानं लक्षणया विवक्षितं नातोऽतिप्रसङ्ग इति शङ्कते * सदृशेति* स्मृत्यपोहार्थं प्रमितिग्रहणम् । असम्भवेनैतत् दूषयति *नेति* अक्षादिजन्यकुम्भाद्यनुभवेभ्यो मानान्तरमुपमानमिच्छता यत्राक्षादीनि करणानि न सम्भवन्ति तत्र कारणान्तरादुत्पद्यमाना सदृशमितिरुदाहरणीया न चोदाहर्तुं शक्या सर्वत्र सदृशज्ञानेऽक्षादिसम्भवादित्यसम्भावि लक्षणमित्यर्थः । सादृश्यज्ञानमुपमितिकरणलक्षणमिति द्वितीयं दूषयति * नापीति * कुत इत्यत आह * सादृश्येति * न सम्भवति प्रमाणान्तराणां व्यापारो यस्मिन् फले तदसम्भवत्प्रमाणान्तरव्यापारफलं तज्जनकतया । न च सादृश्यव्यवहारस्तत्फलं सम्यगनुभवस्यैव प्रमाणफलत्वात् । न च सादृश्यानुभवस्तत्फलं तस्य प्रत्यक्षादिनैव सिद्धेः । नापि सादृश्यानुभव एव करणफलयोरेकत्वायोगात् । नापि संज्ञासंज्ञिसम्बन्धपरिच्छेदस्तत्फलं दृष्टगोररण्यंगतस्यातिदेशकवाक्यं श्रुतवतोऽयं गवयसंज्ञोऽन्यथा गोसादृश्यानुपप-

त्तेरित्यर्थापत्त्यैव तत्सिद्धेरिति लक्षणासिद्धिरित्यभिसन्धिः ।

किं च सादृश्यं ज्ञानस्योपलक्षणं विशेषणं वा, आद्ये सादृश्यस्योपलक्षणतया लक्षणबहिर्भावेन ज्ञानमात्रस्यातिव्याप्तेर्विशेषणत्वे सादृश्यस्य प्रतिव्यक्ति व्यावृत्त्या तद्विशिष्टलक्षणस्यापि व्यावृत्त्या ऽव्यापकतेत्यभिसन्धायाह ।

५७५ सादृश्यस्य विशेषणत्वे उपलक्षणत्वे च दोषः ।

नच सादृश्यमेकमनुगतमस्ति । मुखसादृश्यस्य हस्तसादृश्यस्य च भेदेनैवोपलम्भात् । नच सादृश्यरूपत्वमनुगतं तेष्वपीत्यदोषः । तथापि सादृश्येन सह सादृश्येऽनेकस्थत्वादौ सादृश्यरूपत्वाश्रिते सादृश्यरूपत्वस्याश्रयणाभ्युपगमे परस्पराश्रयभावोऽनभ्युपगमे वाऽननुगमः । तयोः सादृश्यानभ्युपगमे वाऽन्यत्रापि तथापत्तिः । किञ्च वैधर्म्यप्रतीतेरपि प्रमाणान्तरत्वमेवं स्यादविशेषात् । एवमेवाभ्युपगमे च परिगणितप्रमाणाधिक्यप्रसङ्गो वा सादृश्यबुद्धेरपि वा परिगणितेष्वेवान्तर्भावः स्यादिति ।

* न चेति * कुत इत्यत आह *मुखेति* मुखस्य चन्द्रसादृश्यं दीप्तिमत्त्वं हस्तकरिपुष्करसादृश्यं दीर्घत्वे सति क्रमतनुत्वमिति भेदोपलम्भादित्यर्थः। यद्यपि सादृश्यव्यक्तयो भिन्नास्तथाऽपि तासु सादृश्यरूपत्वमनुगतमेकमस्ति तद्रूपाधौ लक्षणकरणान्नातिव्या-

पकृता यथाऽऽत्मव्यक्तीनां भेदेऽप्यात्मत्वसामान्यानुगतेर्ज्ञातात्मेति लक्षणकरणं इत्यत आह * न चेति * कथमित्यत आह * तथा हीति * सादृश्यरूपत्वस्य सादृश्येन सह सादृश्यमस्ति अनेकस्थत्वादिसादृश्यरूपस्यानेकाश्रयत्वात्सादृश्यस्य च द्विगामितया ऽनेकस्थत्वादादिपदेन ज्ञेयत्वादि वर्तते तस्मिँश्च सादृश्यरूपत्वाश्रिते सादृश्येऽनेकस्थत्वादौ सादृश्यरूपत्वस्याश्रयभावोऽभ्युपगम्यते न वा, आद्यो यद्यभ्युपगम्यते तर्हि सादृश्यरूपेऽनेकस्थत्वादि वर्त्तते तस्मिंश्च सादृश्यरूपत्वमिति परस्पराश्रयत्वान्नैकस्यापि सिद्धिरित्यर्थः। यद्यनेकस्थत्वादेः सादृश्यरूपत्वं प्रति आश्रयभावो नाभ्युपगम्यते तत्राह *अनभ्युपगमेति* सर्वसादृश्येषु सादृश्यरूपत्वस्येति शेषः। सादृश्येन सादृश्यरूपत्वस्य सादृश्यमेव नास्तीति नोक्तोपालम्भ इत्यत आह * तयोरिति * तयोः सादृश्यसादृश्यरूपत्वयोः सादृश्यानुपगमेऽन्यत्रापि मुखचन्द्रयोरपि सादृश्याभावापत्तिस्तदभावे ऽपि सादृश्यव्यवहारोपपत्तेरिहैवेत्यर्थः। सादृश्यज्ञानस्य प्रत्यक्षादिभ्यः प्रमाणान्तरत्वे वैधर्म्यज्ञानमपि तेभ्यः प्रमाणान्तरं स्यादित्यतिप्रसङ्गेनापि लक्षणासिद्धिमभिसन्धायाह * किं चेति * कुत इत्यत आह * अविशेषादिति * साधर्म्यप्रतीतिः प्रमाणान्तरं न वैधर्म्यप्रतीतिरिति विशेषाभावादित्यर्थः।

"प्रमाणवत्त्वादायातः प्रवाहः केन वार्यते"।

इति तदप्युपेयत इत्यत आह * एवमिति * परिगणितानि चत्वारि पञ्च वा प्रमाणानि तेभ्य आ-

धिक्यप्रसङ्ग इति यावत् । यद्युक्तदोषभयाद्वैधर्म्य-प्रतीतेः प्रत्यक्षाद्यन्तर्भावस्तत्राह * सादृश्येति * इति शङ्को लक्षणखण्डनसमाप्तौ ।

इदानीं मीमांसकाभिमतमुपमानलक्षणं पराचष्टे ।

५४६ मीमांसकोक्तोपमानलक्षणनिरासः ।

अप्रतीयमानस्य प्रतीयमानेन सह सादृश्यप्रमितिरु-पमानमित्यपि न । आप्तवाक्यादपि तथा प्रमितेः ।

* अप्रतीयमानेति * अप्रतीयमानस्य गोः प्रती-यमानेन गवयेन सह सादृश्यप्रमितिः सोपमितिरिति तत्करणं चोपमानं सैव वा ऽस्मृत्याद्यपोहाय प्रमिति विशेषणम् । अनुमाद्यपोहार्थं सादृश्यविशेषणम् । सादृ-श्यप्रमितिरुपमानमित्युक्ते इमौ सदृशावितीन्द्रिय-जायामतिव्याप्तिस्तन्निरासायाह * अप्रतीयमानस्ये-ति * अप्रत्यक्षस्येत्यर्थः । सादृश्यधर्मितया तस्यापि परोक्षप्रतीतेः । केनेति साकाङ्क्षतयाऽऽनर्थक्यपरिहा-रायोक्तं प्रतीयमानेनेति । कुत इत्यत आह *आप्तेति* नागरिकं प्रत्यारण्यकस्याप्तस्य वाक्यं त्वदीयगवा स-दृशोऽसावरण्यगतो गवय इति तस्मादप्यप्रतीयमा-नगवा प्रतीयमानस्य गवयस्य सादृश्यप्रमितिरुत्प-द्यत इति तत्रातिव्याप्तेरित्यर्थः ।

आप्तवाक्याजन्यत्वे सत्युक्तविशेषणमुपमानमिति लक्षणं विशिंषन्नाशङ्कते

५४७ मीमांसकोक्तलक्षणदूषणम् ।

यत्र तद्व्यापारोनास्तीति चेन्न । स चायञ्च अ-

भिन्नाविति वत् सचायश्च सदृशाविति पूर्व्वप्रतीतस्य प्रतीयमानेन सहैवैन्द्रियकसादृश्यप्रतीतावपि प्रसङ्गा-त्। इन्द्रियासम्पृक्तस्येति चेन्न। प्रत्यक्षतो गोगवयसादृ-श्यं प्रतीत्य साऽपि च गौ गैवयेन सदृशी गोत्वादि-यमित्येत्यनुमितावपि प्रसङ्गात्। अलिङ्गजापीति चे-न्न। नन्वेवं प्रत्यक्षानुमानशब्दानुत्थत्वे सतीत्युक्तं स्यात्। तथा च विशेषणमेव समर्थमित्यप्रती-यमानस्येत्यादि व्यर्थम्। नोपादेयमेव पदान्तरमिति चेन्न। अर्थापत्तेरवश्यं सम्भवात्। तेन सार्द्धमेतत्सादृश्य स्यानेन सार्द्धं तत्सादृश्यव्यतिरेकेणानुपपद्यमानत्वा-त्। अन्यथा [1]प्रत्ययोत्पत्तिविषयं प्रमाणान्तरमापद्ये-त। तस्मादयं ह्रस्व इति प्रतीते रस्मात् स दीर्घ इति चान्यथा कतमा प्रमा स्यात्। अर्थापत्तिं प्रमाणान्तरम-निच्छतापीयमर्थापत्तिरनुमाने वाऽन्तर्भाव्या पृथक् प्रमा-णीकर्त्तव्या वा।

* यत्रेति * तद्व्यापार आप्तव्यापारस्तद्वाक्यव्या-पारो वेत्यर्थः। एवं विशेषणेनाप्तवाक्यजप्रमिति-व्यवच्छेदेऽपि नाद्यजप्रमितिव्यवच्छेद इति दूषयति। * स चेति * स च पूर्वोपलब्धश्चायं च सम्प्रत्य-नुभूयमानश्च देवदत्तावभिन्नाविति वत्स च नगरेऽनु-

१ वैधर्म्यप्रत्ययेति का० मु० पु० पा०।

भूतो गौरयं चेदानीमनुभूयमानगवयश्च सदृशाविति पूर्वप्रतीतस्य गोः प्रतीयमानेन गवयेन सह ऐन्द्रियकसादृश्यप्रमितिः तस्यामपि प्रसङ्गादिति योजना। इदमत्राकूतं सोऽयं देवदत्त इति यथा पूर्वानुभूतसंस्कारसहितेदानींतनसम्प्रयोगात् संस्कारप्रत्यासत्त्या पूर्वप्रतीतदेवदत्तस्येदानीं प्रतीयमानदेवदत्तेनाभेदप्रत्यय ऐन्द्रियकस्तथा पूर्वप्रतीतगोः प्रतीयमानेन गवयेन सह पूर्वसंस्कारसहितेदानीन्तनसंयोगादैन्द्रियकसादृश्यप्रमिति रुत्पद्यत इति तत्रातिव्याप्तिरन्यथा देवदत्तैक्यप्रत्यभिज्ञानस्याप्यनुपपत्तेरिति। आप्तवाक्याजन्यत्वे सतीन्द्रियासम्प्रयुक्तस्याप्रतीयमानस्य प्रतीयमानेन सह सादृश्यप्रमितिरुपमानामिति लक्षणं विशिषन्नाशङ्कते *इन्द्रियेति * तत्रेन्द्रियेण संस्कारलक्षणप्रत्यासत्तिरस्तीति तद्व्यवच्छेदः। न च सादृश्यप्रमायाः प्राक् संस्कारोद्बोधकाभावादप्रत्यासत्तिस्तत्रेति वाच्यम्। अदृष्टचिन्तादेरपि तदुद्बोधकत्वादनुद्बुद्धसंस्कारस्य च प्रत्यासत्तित्वासम्भवादिति। अतिव्याप्त्यन्तरप्रदर्शनेन परिहरति * नेति * इमौ गोगवयौ सदृशाविति प्रत्यक्षेणैव गवयसादृश्यं गोरुपलभ्य असौ नगरस्थापि गौर्गवयसदृशी गोत्वादियमिवेति यदाऽऽरण्यकोऽनुमिमीते साऽपि प्रमितिरुक्तविशेषणेति तत्रातिव्याप्तिरित्याशयः। उक्तातिव्याप्तिपरिहाराय विशेषणान्तरं शङ्कते *अलिङ्गजेति* इन्द्रियासम्प्रयुक्तस्याप्रतीयमानस्य प्रतीयमानेन सह सादृश्यप्रमितिरलिङ्गजोपमितिरित्यर्थः। एवं विशेषणे विशेषणवैयर्थ्यं दर्शयितुं प-

र्यवसितमर्थं लक्षणवाक्यस्य दर्शयन्नाह सिद्धान्ती * नन्वेवमिति * ननु प्रसिद्धौ । तथोच्यतान्नाम को दोषस्त-त्राह * तथा चेति * तथा विशेषणेऽपि प्रत्यक्षा-द्यनुत्थत्वविशेषणमेवान्यतो व्यावर्तयितुं शक्तमि-त्यप्रतीयमानस्येत्यादिविशेषणवैयर्थ्यमित्यर्थः । त-र्ह्यप्रतीयमानेत्यादिविशेषणं परित्यज्य प्रत्यक्षानु-मानशब्दानुत्थसादृश्यप्रमितिरुपमानमिति लक्षणं ब्रूम इति शङ्कते * नेति * परिहरति * नेति * प्रत्य-क्षाद्यनुत्था या सादृश्यप्रमितिः साऽनुपपत्त्या गवयेन सह गोरपि सादृश्यं गमयतीत्यर्थः । अनुपपत्तिज-न्यमपीदं ज्ञानमुपमानमेव प्रत्यक्षाद्यनुत्थत्वे सति सादृश्यमितित्वात्सम्प्रतिपन्नवदित्यत आह * अ-न्यथेति * अन्यथा—ऽर्थापत्तित्वानङ्गीकारे अन्यथाप्र-त्ययोऽनुपपत्त्या प्रत्ययस्तस्योत्पत्तिस्तज्जनकमनुपपत्त्या प्रत्ययोत्पत्तिजनकमिति यावत् । जीवद्देवदत्तस्य गृ-हाभावो बहिर्भावमन्तरेणानुपपद्यमानो बहिर्भावं गमयन्नर्थापत्तेः प्रमाणान्तरमापद्येताविशेषादित्यर्थः । एतादृशविषयेऽर्थापत्तित्वानङ्गीकारे प्रमाणान्तराप-त्तिस्थलान्तरमुदाहरति * तस्मादिति * अस्मात्तस्य दीर्घत्वमन्तरेण तस्मादस्य-ह्रस्वत्वानुपपत्त्या या दी-र्घप्रतीतिः साऽन्यथा कतमा प्रमा स्यान्न तावत् प्र-त्यक्षाद्यन्यतमा अक्षशब्दलिङ्गानां तत्राव्यापारादिति सामर्थ्यापत्तेरपि प्रमाणान्तरे स्यादिति परिगणित-प्रमाणप्रकाराधिक्यप्रसङ्ग इत्यर्थः । अर्थापत्तेरमानत्वान्न तया सादृश्यसिद्धिरित्यत आह * अर्थेति * नैयया-

ग्यिकेनार्थापत्तेः स्वरूपमेव नापलपनीयं किं त्वर्थाप-त्त्यनुमित्योर्भेद एवापलपनीय इत्यर्थः। अनुपपद्यमान-दर्शनादुपपादके बुद्धिरर्थापत्तिर्व्याप्यदर्शनात् व्या-पके बुद्धिरनुमितिरिति लक्षणभेदात्कथमैक्यमित्यत आह * पृथगिति *

उक्तन्यायेन लक्षणान्तरं निरस्तमित्यतिदिशति।

५४८ उपमानलक्षणान्तरनिरासः।

एतेनाप्रतीतगवयगवान्तरसामान्यस्या दृष्टान्तानुमाना-सम्भवात् गवयेनानेन सदृशी सा गौरिति मितिरुपमि-तिरित्यपि व्युदस्तम्। तयैतत्साद्दश्यस्यैतेन तत्साद्दश्यं विनाऽनुपपत्त्यैव सिद्धेरिति।

* एतेनेति * मितिग्रहणं स्मरणाद्यपोहार्थम्। घटोऽ-यमित्यपोहार्थं गौरिति ग्रहणम्। इयं गौरिति प्रत्यक्षा-पोहार्थं सेति। अश्वाद्भिलक्षणा सा गौरिति मित्य-पोहाय सदृशीति। केनेति साकाङ्क्षतया ऽसम्भवपरि-हाराय गवयेनेति। पूर्वदृष्टगवयेन सदृशी सा गौरित्यु-पमितिफलसिद्ध्युत्तरकालीनमित्यपोहाय। अनेनेति अनेन सदृशी सा गौर्गोत्वादिर्यमिवेत्यनुमानापोहाय। अप्रतीतेति। अप्रतीतं गवयेन गवान्तरस्य साम्यं येन तस्य दृष्टान्तासम्भवादनुमानासम्भवः अप्रतीतग-वयगवान्तरसाम्यस्यानेन सदृशी सा गौरिति मि-तिरुपमितिरिति यावत्। एतेनेति परामृष्टन्यायं

---

१ साद्दश्यस्येति का० मु० पु० पा०।

२ दृष्टान्ताभावेनानुमानासम्भवात् इति का० मु० पु० पा०।

स्पष्टयति * तयेति * पूर्वं प्रतीयमानेनाप्रतीयमानस्य सादृश्यमितिरूपमितिरित्याशङ्का निरस्तमिदानीं सदृशमितावतिदिश्यत इति भेदः।

उदयनोदीरितं उपमानलक्षणमुपन्यस्य पराचष्टे।

५४९ उदयनकृत लक्षणनिरासः।

अनवगतसङ्गतिसंज्ञासमभिव्याहृतवाक्यार्थस्य संज्ञिन्यनुसन्धानमुपमानमित्यपि न। प्रस्मृतसङ्गतेरेवम्भूतोपमित्यव्यापनात्। अस्मृतसङ्गतीत्यभिधेयमिति चेन्न। अनुभूतस्मृतकालान्तरप्रस्मृतसङ्गतेरव्यापनात्। अस्मर्य्यमाणेति चेन्न। कदाचित् स्मर्य्यमाणताया स्तत्रापि सम्भवात्। सर्व्वदा अस्मर्य्यमाणतायाः क्वचिदप्यसम्भवात्। उपमितिप्राक्काल इति चेत्स्यादेवैतद्यद्युपमितिर्लक्षिता स्यात् तदर्थमेव तु क्रन्दनमिदम्भवतः।

* अनवगतेति * अनवगता सङ्गतिर्यस्याः संज्ञायास्तया समभिव्याहृतं सह पठितं यद्वाक्यं तदर्थस्य संज्ञिन्यनुसधानं कीदृशो गवय इत्यादि नागरिकेण पृष्ट आरण्यको ब्रवीति गोसदृशो यो गवय इति तत्र गवयसंज्ञाऽनवगतसङ्गतिसंज्ञिको गोसदृशो गवय इत्याप्तोपदिष्टः सोऽयमित्यनुसन्धानमुपमानमिति यावत्। संज्ञिनीति ग्रहणं संज्ञासम्बन्धिपरिच्छित्तिरुपमानफलमिति दर्शनार्थं न लक्षणान्त-

१ कदाचि दस्मर्य्यमाणेति का० मु० पु० पा०।

गिकेनार्थापत्तेः स्वरूपमेव नापलपनीयं किं त्वर्थाप स्यनुमित्योर्भेद एवापलपनीय इत्यर्थः। अनुपपद्यमान दर्शनादुपपादके बुद्धिरर्थापत्तिर्गम्यदर्शनात् व्या पके बुद्धिरनुमितिरिति लक्षणभेदात्कथमैक्यमित्यत आह * पृथगिति *

उक्तन्यायेन लक्षणान्तरं निरस्तमित्यतिदिशति

६४८ उपमानलक्षणान्तरनिरासः।

एतेनाप्रतीतगवयगवान्तरसामान्यस्या दृष्टान्तानुमाना सम्भवात् गवयेनानेन सदृशी सा गौरिति मितिरुपमितिरित्यपि व्युदस्तम। तथैतत्साहृश्यस्यैतेन तत्साहृश्य विनाऽनुपपत्त्यैव सिद्धेरिति।

* एतेनेति * मितिग्रहणं स्मरणाद्यपोहार्थम्। घटोऽ यमित्यपोहार्थं गौरिति ग्रहणम्। इयं गौरिति प्रत्यक्षा पोहार्थं सेति। अश्वाद्विलक्षणा सा गौरिति मित्य पोहाय सदृशीति। केनेति साकाङ्क्षतया ऽसम्भवपरि हाराय गवयेनेति। पूर्वदृष्टगवयेन सदृशी सा गौरित्यु पमितिफलसिद्ध्युत्तरकालीनमित्यपोहाय। अनेनेति अनेन सदृशी सा गौर्गोत्वादित्यमितेत्यनुमानापोहाय अप्रतीतेति। अप्रतीतं गवयेन गवान्तरस्य साम्यं ये तस्य दृष्टान्तासम्भवादनुमानासम्भवः अप्रतीतग वयगवान्तरसाम्यस्यानेन सदृशी सा गौरिति मि तिरुपमितिरिति यावत्। एतेनेति परामृष्टन्या

१ साहृश्यस्येति का० मु० पु० पा०।

२ दृष्टान्ताभावेनानुमानासम्भवात् इति का० मु० पु० पा०।

स्पष्टयति * तथेति * पूर्वं प्रतीयमानेनाप्रतीयमानस्य सादृश्यमितिरुपमितिरित्याशङ्क्य निरस्तमिदानीं सदृशमितावतिदिश्यत इति भेदः।

उदयनोदीरितं उपमानलक्षणमुपन्यस्य पराचष्टे।

५४९ उदयनकृत लक्षणनिरासः।

अनवगतसङ्गतिसंज्ञासमभिव्याहृतवाक्यार्थस्य संज्ञिन्यनुसन्धानमुपमानमित्यपिन। प्रस्मृतसङ्गतेरेवम्भूतोपमित्यव्यापनात्। अस्मृतसङ्गतीत्याभिधेयमिति चेन्न। अनुभूतस्मृतकालान्तरप्रस्मृतसङ्गतेरव्यापनात्। अस्मर्य्यमाणेति चेन्न। कदाचित्[1] स्मर्य्यमाणतायास्तत्रापिसम्भवात्। सर्व्वदा अस्मर्य्यमाणतायाः क्वचिदप्यसम्भवात्। उपमितिप्राक्काल इति चेत्स्यादेवैतच्चपमितिर्लक्षिता स्यात् तदर्थमेव तु क्रन्दनमिदम्भवतः।

* अनवगतेति * अनवगता सङ्गतिर्यस्याः संज्ञायास्तया समभिव्याहृतं सह पठितं यद्वाक्यं तदर्थस्य संज्ञिन्यनुसधानं कीदृशो गवय इत्यादि नागरिकेण पृष्ट आरण्यको ब्रवीति गोसदृशो यो गवय इति तत्र गवयसंज्ञाऽनवगतसङ्गतिसंज्ञिको गोसदृशो गवय इत्याप्तोपदिष्टः सोऽयमित्यनुसन्धानमुपमानमिति यावत्। संज्ञिनीति ग्रहणं संज्ञासम्बन्धिपरिच्छित्तिरुपमानफलमिति दर्शनार्थं न लक्षणान्त-

[1] कदाचि दस्मर्य्यमाणेति का० मु० पु० पा०।

गतम्। अनुसन्धानमुपमानमित्युक्ते सोऽयं देवदत्त इत्यनुसन्धानेऽतिव्याप्तिस्तत्परिहारायाह * वाक्येति * महति कानने शतं हस्तिनस्तिष्ठन्तीति वाक्यार्थानुसन्धानेऽतिव्याप्तिपरिहारायाह *अनवगतेति* नच वचनादसति वृत्त्यन्तरे तत्र प्रयोगाद्वा लिङ्गाद्वा पूर्वमेवायमवगतः संज्ञासंज्ञिसम्बन्धः केवलमधुना स्मार्यत इति वाच्यम्। निमित्तस्य प्रागनधिगतेरधिगतस्य च सादृश्यस्यानिमित्तत्वान्निमितत्वे वा गौरवादप्रतीतगूनामरण्यवासिनां गवयव्यवहारानुत्पत्तिप्रसङ्गाच्च। अतएवोक्तं—

सादृश्यस्यानिमित्तत्वान्निमित्तस्याप्रतीतितः।
समयो दुर्ग्रहः पूर्वं शब्देनानुमयाऽपि चेति ॥

कुत इत्यत आह * प्रस्मृतेति * पूर्वमनुभूय प्रस्मृता सङ्गतिर्येन तस्य एवंभूतोपमितिरभ्युपगम्यते तत्राव्याप्तिरनवगतेति विशेषणाभावादित्यर्थः। अव्याप्तिपरिहाराय विशेषणान्तरं शङ्कते *अस्मृतेति* अनवगतेति विशेषणस्थाने अस्मृतेतिविशेषणं निधातव्यं नैवमव्याप्तिरनुभूय प्रस्मृतसङ्गतेः संस्कारलोपादेवास्मरणादननुभूतसङ्गतेः संस्काराभावादित्याशयः। अव्याप्त्यन्तरप्रदर्शनेन परिहरति * नेति * विशेषणाभावादित्यर्थः। सर्वानुपपत्त्युपशान्तये स्मर्यमाणसङ्गतिसंज्ञासमभिव्याहृतवाक्यार्थस्येति लक्षणं कार्यमिति शङ्कते *अस्मर्येति* अस्मर्यमाणेति लब्धस्य विवक्षितत्वा-

प्याप्यव्याप्तिरित्यर्थः। किं कदा चिदस्मर्यमाणत्वं विवक्षितमुत सर्वदा, उत उपमितिप्राक्काल, इति विकल्प्य प्रथमं दूषयति *नेति* कदा चिदस्मर्यमाणतायास्तत्रापि महति च कानने शतं हस्तिनास्तिष्ठन्ति इत्यादौ व्यवच्छेद्याभिमतेऽपि सम्भवात्तदर्थानुसन्धानेऽतिव्याप्तिरित्यर्थः। कदा चित्स्मर्यमाणताया इति पाठे कदा चिदस्मर्यमाणताया अनुभूतस्मृतकालान्तरप्रस्मृतस्थलेऽपि सम्भवेनास्मर्यमाणताया असम्भवादव्याप्तिरेवेत्यर्थः। द्वितीयं दूषयति * सर्वदेति * लक्ष्याभिमतेऽपि फलसिद्ध्युत्तरकालं स्मरणोपपत्त्या सर्वदाऽस्मर्यमाणत्वविशेषणासिद्ध्या विशिष्टलक्षणासिद्धिरित्याशयः। अन्त्यं कल्पमुत्थापयति * उपेति * उपमितिप्राक्कालेऽस्मर्यमाणसङ्गतिसंज्ञासमभिव्याहृतवाक्यार्थस्यानुसन्धानमित्युक्तं स्यादेवं चोपमितिरपि लक्षणविशेषणं स्यान्न तद्युक्तं सिद्धस्यैव विशेषणत्वादिति परिहरति * स्यादिति * मानान्तरसिद्धामुपमितिं लक्षणे विशेषणतया निवेश्य तल्लक्षणं ब्रूम इत्यत आह * तदिति * मानान्तरसिद्धौ लक्षणानर्थक्यादुपमितिसिद्ध्यर्थमेव लक्षणं प्रणेतव्यमतश्च लक्षणसिद्धावुपमितिसिद्धिस्तत्सिद्धौ च लक्षणसिद्धिरिति परस्पराश्रय इत्यर्थः। क्रन्दनमाक्रोशः।

सङ्गतेरनवगतत्वं च किं सर्वैरेव किं वा येन केनापि यद्वोपमात्राऽथ वा यस्याः प्रमितेर्यः प्रमाता तेनेति विकल्प्य प्रथमं दूषयति।

५५० सङ्गतेरनवगतत्त्वविकल्पनिरासः।

किञ्च सर्व्वैरनवगतसङ्गतित्वस्य प्रकृतेऽप्यसिद्धेः। केनाप्यनवगतसङ्गतित्वस्य वाक्यजेऽपि सम्भवात्। उपमात्रेति च पूर्ववत् निरस्तम्। यस्याः प्रमितेर्येन प्रमात्रेति चाभिधाने अनुगतरूपाभावात् व्यक्तौ पतनेन लक्षणाऽननुगत्यापत्तेः।

* किञ्चेति * सर्वज्ञेश्वराङ्गीकारात्तेन विदितसङ्गतित्वं गोसदृशो गवय इत्यत्रापि सम्भवतीति लक्षणासिद्धिरित्यर्थः। द्वितीयं प्रत्याह * केनेति * महति कानने हस्तिनः शतं तिष्ठन्तीत्यादिवाक्यजानुसन्धानेऽपि सम्भवति पृथग्जनानां बहुलत्वादित्यतिव्याप्तिरित्यर्थः। तृतीयमाशङ्कते * उपेति * न सर्वैः केनापि चेति ब्रूमः किं तूपमात्रेति नातोऽसिद्धिरतिव्याप्तिर्वेत्यर्थः। परिहरति * पूर्वेति * उपमितिसिद्धौ तदाश्रय उपमाता सिध्यति तत्सिद्धौ च लक्षणसिद्धिस्तत्सिद्धावुपमितिसिद्धिरिति चक्रकापत्तेरसम्भव इत्यर्थः। यदि चतुर्थस्तत्राप्यभिधानीयं यस्यास्तेनेति यत्तच्छब्दावनुगतं रूपं वदत उत व्यक्तिमितिविकल्प्य प्रथमं प्रत्याह * यस्या इति * अनुगतरूपस्य सामान्यस्योपाधेर्वा ऽसम्भवस्तस्यापि च यत्तच्छब्दवाच्यत्वेनात्माश्रयादनवस्थानाद्वा ऽतो ऽसम्भव इत्यर्थः। द्वितीयं दूषयति * व्यक्ताविति।

एवमनवगतसङ्गतीति विशेषणं निरस्य संज्ञिविशेषणन्निरसितुमाह।

५५१ संज्ञेति विशेषणनिरासः ।

संज्ञेत्यप्याकुलं गोसदृशो गवयः प्रायः कानने महति दृश्यत इति श्रुतवाक्यस्य कानपदाविदितसङ्गतेर्गवयपदविदितसङ्गतेश्चा[1]संज्ञासंज्ञिसम्बन्धप्रतिपत्तिफलायामीदृशप्रतिपत्तौ गतत्वेनातिव्यापकत्वात् । विनापि वा प्रायः शब्दमभिहितस्य तस्यानुसन्धाने प्रसङ्गः । तत्र काननसंज्ञासंज्ञिसम्बन्धावधारणेऽप्यन्यत्रेव पदान्तरसमभिव्याहारोत्थाया अन्यथानुपपत्तेः प्रमाणत्वात् । नतूपमानस्य । उपमेयसंज्ञासमभिव्याहृतेतिविशेषणे च पूर्वोक्त एव निरासः ।

* संज्ञेति * आकुलमनवस्थमित्यर्थः । कुत इत्यत आह * गोसदृश इति * काननपदस्याविदिता सङ्गतिर्येन तस्य । गवयपदस्य विदिता सङ्गतिर्येन तस्य । एतदुक्तं भवति । गोसदृशो गवयः प्रायः कानने महति दृश्यत इति वाक्यं श्रुतवतः काननं गतस्य स एवाऽयमुपदिष्टो गवय इत्यनुसन्धानात्मिका प्रतिपत्तिर्जायते न चासावुपमितिः गवयसंज्ञायाः संज्ञिना सह सम्बन्धपरिच्छित्तेरतत्फलत्वाभावात्तत्फलाया एवोपमितित्वाङ्गीकारात्काननपदेनाविदितसङ्गतिना समभिव्याहाराच्च तत्र वाक्यजप्रतिपत्तौ गतत्वेन तेन वाक्यजानुसन्धानेऽतिव्याप्तिरिति प्रायः शब्दप्रयोगात्तत्र काननपदस्यापि पूर्वं विदितसङ्गति-

१ सङ्गतेश्च सज्ञा इति का० मु० पु० पा० ।

त्वं गम्यतेऽतोऽनवगतसङ्गतीति लक्षणांशाभावान्नाऽतिव्याप्तिरित्यत आह * विनेति * प्रायो नूनमिदमप्युपमानमेव काननपदस्य गवयाधिकरणमर्थ इति संज्ञासंज्ञिसम्बन्धस्य प्रमितेरित्यत आह * तत्रेति * प्रसिद्धपदैरन्यैः सहपाठानुपपत्त्या व्युत्पन्नविभक्त्यर्थस्य यद्गवयाधिकरणं तत्काननसंज्ञमिति सम्बन्धपरिच्छेदस्यानुपपत्त्यैव सिद्धत्वान्नोपमानस्य तत्र मानत्वमन्यानधिगतविषयाभावात् प्रसिद्धपदार्थे व्युत्पत्तिर्लीलालभ्येत्यत्र दृष्टान्तमाह * अन्यत्रेति * इह प्रभिन्नकमलोदरे मधूनि मधुकरः पिबतीत्यत्र यथेत्यर्थः। उक्तं च

पदमज्ञातसन्दिग्धं प्रसिद्धैरपृथक्श्रुति।
निर्णीयते निरूढन्तु न स्वार्थादपनीयत इति।

ननु गोसदृशपदयोः प्रसिद्धत्वात्तत्समभिव्याहारादेव गवयपदव्युत्पत्तेरपि सिद्धेर्नोपमानमेवास्तीति-वक्तव्यं सत्यमभ्युपगम्यापि दोषो भाष्यत इत्ययं संरम्भ इति न दोषः। अनवगतसङ्गतित्वं न यस्याः कस्याश्चित्किं त्वनवगतोपमेयसंज्ञासङ्गतीति-विशेष्यते वनसंज्ञापदस्यानुपमेयसंज्ञात्वान्न वाक्यजानुसन्धानेऽतिव्याप्तिरित्यत आह *उपमेयेति* उपमानस्याप्यसिद्धोपमेयेति विशेषणासिद्धिरिति पूर्वोक्त एवेत्यर्थः।

एवमनवगतत्वसंज्ञात्वविशेषणासिद्ध्या विशि-

---

(१) रहितप्रायः शब्दमुक्तलक्षणमुपमानमिति नातिव्याप्तिरिति सो० पु० पा०।

ष्टलक्षणासिद्धिमभिधाय वाक्येति विशेषणासिद्ध्यापि तदाह।

५५२ वाक्यार्थेति विशेषणनिरासः।

वाक्यार्थेत्यपि तादृगेव, प्रतिपत्तिकालास्मृतातिदेशवाक्यावगतकाननादिपदार्थस्य तथाविधप्रत्ययाव्यापनात्। वाक्यैकदेशस्यापि वाक्यत्वेन विवक्षितत्वे सदृशो गवय इत्यादि स्मारिणोऽपि प्रत्यये प्रसङ्गात्। प्रतीत्युत्पत्तिं प्रति प्रयोजकीभूतं यावत्तावद्वाक्यं विवक्षितमिति चेन्न। अन्तर्भावितवनाधिकरणतादृशप्रतिपत्तिं प्रति तस्याऽपि प्रयोजकत्वात्। उपमितिं प्रतीति तु पूर्ववन्निरस्तमिति। यावत्संज्ञासंज्ञिबुद्ध्यौपयिकं तावद्विवक्षितमिति चेन्न। लक्षणसहचारितसंज्ञोपदेशार्थानुसन्धानेऽपि प्रसङ्गात्।

* वाक्येति * तादृगाकुलमित्यर्थः। अतिदेशकवाक्ये यावन्ति पदानि श्रूयन्ते तावत्सर्वं वाक्यत्वेन विवक्षितमुत तदेकदेश उत प्रतिपत्तिप्रयोजकतदेकदेश इति विकल्प्य प्रथमं प्रत्याह * प्रतीति * गोसदृशो गवयो महति कानने दृश्यत इत्यपि कदाचिदतिदेशवाक्यं भवति तत्र यदा गोसदृशः स एवायं गवय इति प्रत्ययो भवति तदा तस्याऽव्याप्तिस्तत्र हेतुः * प्रतिपत्तीति * प्रतिपत्तिकालेऽस्मृतोऽतिदेशवा-

१ वाक्यार्थैकदेशस्याऽपि वाक्यार्थत्वेनेति का० मु० पु० पा०।

वगतकाननादिपदार्थो येन तस्येति विग्रहः। अदृष्ट-प्रतिबन्धात्काननपदस्य महत्पदस्य वार्थास्मरणे क-थितलक्षणविशेषणाभावादव्याप्तिः काननादिपदा-र्थास्मरणे वाक्यार्थस्मरणाभावादित्यर्थः। अस्तु तर्हि द्वितीयस्तत्राह * वाक्येति * गोसदृशो गवय इति वा-क्यैकदेशस्यापि वाक्यत्वेन विवक्षितत्वात्तदर्थानुसं-धानं वाक्यार्थानुसंधानं भवत्येवेति चेत्तर्हि गोस-दृशो गवय इति स्मरणेऽपि सादृश्यमात्रवत्त्वानु-सन्धानेऽपि लक्षणातिव्याप्तिस्तस्यापि कथितरीत्या वाक्यार्थानुसन्धानत्वादादिपदेन काननादिपदानुस-न्धानसङ्ग्रहः। न चैतदुपमानमेष्टव्यं प्रतियोग्यस्मरणा-त्प्रतियोगिस्मरणसहितानुसन्धाने तत्सङ्केतस्य का-र्यत्वादिति भावः। न च प्रतियोग्यस्मरणे सादृश्यस्म-रणानुपपत्तिरिति वाच्यम्। प्रतियोगिज्ञानपूर्वकत्वनि-यमोपगमे परस्पराश्रयप्रसङ्गादनुयोगिसदृशतयाऽव-गतस्यैव सादृश्यप्रतियोगित्वात्तथा च गवयप्रतीतौ तत्सदृशतयाऽवगतगोःप्रतियोगित्वं तथाविधतत्प्र-तीतौ सदृशतयाऽवगतगवयस्य प्रतियोगित्वमिति तस्मात्सादृश्यग्रहमिच्छता प्रतियोगिज्ञानं विनाऽपि तद्ग्रहो वक्तव्य इति तृतीयं शङ्कते * प्रतीति * प्र-तिपत्तिजनकं यावत्पदवृन्दं तावद्वाक्यं विवक्षितमतो नाव्याप्तिः काननादिपदस्य प्रतिपत्त्यप्रयोजकत्वान्ना-प्यतिव्याप्तिर्गोपदस्यापि प्रतिपत्तिप्रयोजकत्वादि-त्याशयः। प्रतिपत्तिमात्रं प्रति प्रयोजकत्वं विवक्षित-मुतोपमितिरूपां प्रतिपत्तिं प्रति किं स्विरसंज्ञासंज्ञि-

सम्बन्धप्रतिपत्तिं प्रतीति त्रिधा विकल्प्य प्रथमं दूषयति * नेति * अन्तर्भावितमधिकरणं यस्मिन् गोसदृशो गवय इत्यत्र तत्सदृशप्रतिपत्तिं प्रति वनपदस्यापि प्रयोजकत्वात्तदस्मारिणस्तथाविधप्रत्ययाव्याप्तिरेवेत्यर्थः । द्वितीयमसिद्ध्या दूषयति * उपेति * उपमितेरद्याप्यसिद्धत्वादिति निरस्तमित्यर्थः । तृतीयं शङ्कते * यावदिति * औपाधिकं साधनमितियावत् । काननादिपदस्य संज्ञासंज्ञिसम्बन्धबुद्ध्यनौपधिकत्वान्नाव्याप्तिरित्यर्थः । एवं विशेषणमतिप्रसञ्जकमिति परिहरति * नेति * गन्धवतीति लक्षणेन सह चरिता या पृथिवीति संज्ञा तस्या उपदेशो लक्षणवाक्यं तदर्थानुसन्धानेऽतिव्याप्तिः गन्धवती पृथिवीति लक्षणवाक्यमुपश्रुत्य गन्धवद्व्यक्तिमुपलभ्य सेयं गन्धवती पृथिवीत्यनुसन्धानं भवति न चैतदुपमानं लक्षणं केवलव्यतिरेकीति पृथिव्यधिकारे कथितत्वादित्यर्थः ।

संज्ञासंज्ञिसम्बन्धप्रतिपत्तिजनकवाक्यैकदेशार्थानुसन्धानमुपमानमिति पक्षेऽतिव्याप्त्यन्तरमाह ।

५५३ अतिव्याप्त्यन्तरम् ।

किञ्च यदा तर्कानुसन्धानविरहिणः सत्यप्येवंविधानुसन्धाने सादृश्यमेव गवयपदप्रवृत्तिनिमित्तमिति मितिः फलमुत्पद्यते तदा तस्याप्रमाकरणस्यापि उपमानत्वमापद्यते । प्रमाफलकमितिविशेषणप्रक्षेपपक्षे चानुसंहि-

तद्रूपव्यवहारयनानुमित्युत्पादेनाप्येनादृशानुसन्धानमुप-मानं स्यात् । अव्याप्तिविषयप्रमाफलकमिति विशेषणीयमिति चेन्न । वस्तुगत्याऽव्याप्तत्वस्योपमेयेऽप्यभावात् । व्याप्ततयाऽनवगम्यमानस्येति च कृते यत्प्रति तल्लिङ्गं तेन सहव्याप्तत्वावगतमुपमितिकरणमपि न व्याप्नुयात् । उपमेयेन सह व्याप्तत्वानवगतत्वोक्तावप्यनुमाने प्रसङ्गस्तदवस्थः । अनुमेयेन सहेति कृते च तदनपायादव्याप्तिस्तदवस्थैव ।

* किं चेति * एवं विधानुसन्धाने सोऽयं गोसदृशो गवय इत्यनुसन्धाने सत्यपि, गवयपदस्य गोसदृशार्थे वृत्तौ निमित्तं गोसादृश्यं मितिफलमुत्पद्यते यदा तदा तस्याप्युपमानत्वमापाद्यते सति गवयत्वे सादृश्यमेव निमित्तमिति कथं फलोत्पत्तिस्तत्राह * तर्केति * तर्कस्तु लाघवाख्यो वक्ष्यतेऽतएव तर्कसहायमुपमानमाहुः । अस्तु तस्याप्युपमानत्वं को दोषस्तत्राह * अप्रमेति * उपमानस्य प्रमाणस्य प्रमाजनकत्वेन प्रयोजकत्वं वाच्यमिदं तु सादृश्यमेव निमित्तमिति भ्रान्तिजनकतया तदाभासमितीहातिव्याप्तिरुक्तलक्षणस्य सर्वस्याप्यत्राभावादित्यर्थः । प्रमाफलकमुक्तानुसन्धानमुपमानमिदं तु न प्रमाफलकमिति तन्निवृत्तिरित्याशङ्क्याह * प्रमेति * प्रमामात्रफलकमुक्तानुसन्धानमुपमानमुताव्याप्तिविषयप्रमा-

१ विषयेति सो० पु० पा० नास्ति ।

फलक्रमाहोस्वित्संज्ञासंज्ञिसम्बन्धप्रमाफलकं नाद्योऽनुसंहितरूपस्य गोसदृशस्य व्यवहार्यताऽनुमितिश्च विमतो गवयनया व्यवहर्त्तव्यो गोसादृश्याधिकरणत्वात् व्यतिरेकेण गोवदिति न चैतत्प्रमाजनकमनुसन्धानमुपमानमस्य लिङ्गान्तर्भावादित्यर्थः। अनुसंहितं परामृष्टमिति यावत्। द्वितीयं शङ्कते * अव्याप्तेति * व्याप्तं लिङ्गं तद्विषयादन्यदव्याप्तविषयं तत्प्रमाफलकमुक्तानुसन्धानमुपमानमिदं तु व्याप्तविषयप्रमाफलकमिति नातिव्याप्तिरित्यर्थः। अव्याप्तविषयं च तत् प्रमाफलकं चेति विग्रहः। वस्तुगत्या व्याप्तविषयत्वमुत व्याप्ततयाऽनवगम्यमानविषयत्वमिति विकल्प्य प्रथमं प्रत्याह *नेति* उपमेयः सदृशस्तस्यापि वस्तुतो नास्त्यव्याप्तत्वं अप्रतिबद्धस्वसामग्र्या व्याप्तत्वादतस्तत्प्रमाकरणमुपमानमेतल्लक्षणं न व्याप्नुयादित्यसिद्धिरित्यर्थः। द्वितीयं शङ्कते *व्याप्तेति* व्याप्ततयाऽनवगम्यमानस्यानुसन्धानस्योपमानत्वमिति विवक्षितं तेन नातिव्याप्तिः व्यवहार्यतानुमित्युत्पादकस्य तेन व्याप्तत्वावगमान्नाव्याप्तिरुपमेयस्य वस्तुगत्या स्वसामग्र्या व्याप्तत्वेऽपि व्याप्तत्वानवगमादित्याशयः। अत्रेदं वाच्यं येन केनापि व्याप्ततयाऽनवगतमुतोपमेयेन किं वाऽनुमेयेनेति न तावदाद्य इत्याह * इति च कृत इति * विशेषण इति शेषः। यत्प्रति–स्वकारणादिप्रति तदनुसन्धानं तेन सह व्याप्ततयाऽवगतमिदं लक्षणं न व्याप्नुयाद्व्याप्ततया ऽनवगतेति विशेषणाभावाद्भवति च कदा चित् कार्यं सका-

रणमिति व्याप्तत्वावगमो ऽनुसन्धानस्येत्यव्याप्तिरित्यर्थः। तदव्याप्तिर्न दोषायेत्यत आह * उपमितिकरणमपीति * उपमेयेन सह व्याप्ततयाऽनवगतमनुसन्धानमुपमानमिति द्वितीयकल्पे नास्त्यव्याप्तिस्तस्यानुमेयेनैव सह व्याप्तत्वावगमादित्याशङ्क्याह * उपेति * व्यवहारार्थतानुमित्युत्पादकं यदनुसन्धानं तदुपमेयेन संज्ञासंज्ञिसम्बन्धेन व्याप्ततयाऽनवगतं किं त्वनुमेयेनैवेति तत्रातिव्याप्तिस्तदवस्थेत्यर्थः। तर्ह्यनुमेयेन सह व्याप्तत्वानवगतमिति तृतीयोऽस्तु तत्र समनन्तरोक्त्या ऽतिव्याप्त्यभावादित्यत आह *यदिति*यत्प्रति लिङ्गन्तेन स्वकारणादिना व्याप्तत्वावगमस्यानपायात्प्रागुक्ताव्याप्तिरित्यर्थः।

संज्ञासंज्ञिसम्बन्धप्रमाकरणमुक्तानुसन्धानमिति प्राक्तनकल्पेषु परिशिष्टकल्पं शङ्कते।

५५४ परिशिष्टकल्पशङ्कानिरासः।

संज्ञासंज्ञिसम्बन्धप्रमितिकरणमिति चेन्न। तथात्वासिद्धेः। अर्थापत्त्यादितस्तत्सिद्धेर्वक्ष्यमाणत्वात्। अननुमितिजनकं तादृक् प्रतिसन्धानमुपमानमिति चेन्न। तज्जातीयस्यानुमितिजनकत्वात्। व्यक्त्यपेक्षायाश्च जनकत्वस्य सामान्याकारवर्त्ययत्रसायिनोनित्यं व्यक्त्यावसम्भावितत्या अननुगमेन चायुक्तत्वादिति।

* संज्ञेति * असिद्धेनदूषयति * नेति * तथात्वासिद्धेः संज्ञासंज्ञिसंबन्धप्रमितिकरणत्वासिद्धेरित्य-

र्थः। सम्बन्धप्रमितिदृश्यत्वे तस्याश्च करणापेक्षायामुक्तानुसन्धानं तथात्वेन सम्बध्यते इति नासिद्धिरित्यत आह *अर्थेति* अनवगतसङ्गतिसंज्ञासमभिव्याहृतवाक्यार्थानुसन्धानं प्रमाफलकमनुमित्यजनकमिति विवक्षितत्वान्नैको ऽपि दोष इति शङ्कते *अनन्विति* अननुमितिजनकमिति किमनुमितिजनकजातीयेतरत्वं विवक्षितमुतानुमितिजनकव्यक्तीतरत्वमिति विकल्प्य प्रथमं प्रत्याह *नेति* उक्तानुसन्धानजातीयस्य व्यवहार्यतानुमितिजनकत्वस्य दर्शितत्वादसिद्धिरित्यर्थः। यदि द्वितीयस्तत्राह *व्यक्तीति* व्यक्त्यपेक्षायां च जनकत्वस्यायुक्तत्वादिति सम्बन्धः। तत्र हेतुर्नित्यामिति तत्रापि हेतुः सामान्येति। नियतप्राक् सत्वं जनकत्वं नियतत्वं वाऽन्वयव्यतिरेकाभ्यां सामान्यापाधौ ग्राह्यमिति व्यक्तौ न सम्भवतीति कथिताव्याप्तिरेवेत्यर्थः। दोषान्तरमाह *अननुगमेति* यद्वा जनकत्वस्य व्यक्त्यपेक्षायां लक्षणस्या युक्तत्वादिति सम्बन्धस्तदुपपादनाय सामान्येत्यादि जनकत्वं च सामान्यगतमेवेति लक्षणासिद्धिरव्याप्तिश्चेत्यर्थः।

पूर्वं संज्ञासंज्ञिसंबन्धप्रमितिरुपमानफलमित्यूरीकृत्य तल्लक्षणं निरासि, सम्प्रति सम्बन्धप्रमितिरुपमानफलमेवेत्यभिसन्धायाह।

५५५ सम्बन्धप्रमितेरुपमानफलत्वमेव।

किञ्च गोसादृश्यं विहाय गवयत्वजातौ गवयशब्दार्थताप्रतीतिः कल्पनालाघवाख्यं तर्कमपास्य न स्यादिति

तदुपन्यासस्थितौ किमानुमानिक्येव तत्र गवयत्वस्य गवयपदवाच्यताप्रमितिरियं नेष्यते । सम्भवति हि प्रयोगः विमतिपदं गवयशब्दप्रवृत्तिनिमित्तं तथात्वे तर्केणं[1] विषयीक्रियमाणविपर्ययकत्वात् न यदेवं नतदेवं यथा गोत्वं तथा चेदं ततस्तथेति । न ह्यस्ति सम्भवो-मूलशैथिल्यादिदोषविरहिततर्कनिवेदितविपर्ययश्चार्थो नच तथेति । अथवा गवयपदमसम्भवत्प्रवृत्तिनिमित्तान्त-रमनुपपद्यमानाप्रोक्तगोसादृश्यसामानाधिकरण्यमर्थाद्गव-यत्वप्रवृत्तिनिमित्तकतामाक्षिपतीत्यर्थापत्तिरेवात्र प्रमाण-मस्तु । सा च त्वया व्यतिरेकीकृत्य परेण पृथग-वावश्यं प्रमाणनीयेति ।

* किं चेति * गवयत्वजातौ गोसादृश्यं विहाय गवयशब्दार्थताप्रतीतिर्लाघवाख्यं तर्कमपास्य न स्या-दिति तदुपन्यासस्थितौ गवयत्वस्य गवयपदवाच्य-ताप्रतीतिरानुमानिक्येव किं नेष्यते इति स-म्बन्धः । अयं च लाघवतर्कः यदि गोसादृश्यं गवय-पदप्रवृत्तिनिमित्तं तदा तद्विशेषणतया गोरपि तन्नि मितत्वं स्यादिति शक्तिकल्पनागौरवं तच्चायुक्तं निर्विशेषणं गवयत्वे तन्निमित्ते सम्भवतीति तर्क-स्यावश्यकत्वे तत्प्रतीतिर्यौक्तिकी स्यान्न त्वानुमा-निकी तत् कारणलिङ्गाभावादित्यत आह * सम्भ-

१ तर्केणाविषयीक्रियमाणेति का० मु०पु०पा० ।

यतीति * प्रयोगं रचयति * विमतीति * विमतिपदं—विप्रतिपत्तिविषयं गवयत्वं गवयशब्दस्य प्रवृत्तौ निमित्तं तथात्वे गवयत्वस्य गवयपदप्रवृत्तिनिमितत्वे लाघवाख्यतर्केण विषयीक्रियमाणो बोध्यमानः सादृश्यादेर्निमित्तान्तरस्य विपर्ययोऽभावो यस्य तत्तथोक्तं तद्भावस्तत्त्वं तस्मादित्यर्थः। न यदेवं गवयपदप्रवृत्तिनिमित्तं भवति तदेवं न तथात्वे तर्केण विषयीक्रियमाणविपर्ययकं न भवतीति व्यतिरेकव्याप्त्यभिधानम्। यथा गोत्वमिति व्यतिरेकदृष्टान्तस्तथा चेदं इदं च गवयत्वं तथा तथात्वे तर्केण विषयीक्रियमाणविपर्ययकमित्युपनयः ततस्तथा तत उक्तहेतोस्तथा उक्तसाध्यमिति निगमनम्। विमतिपदं निमित्तमित्युक्ते स्वज्ञाननिमित्तमिति सिद्धसाधनं तद्व्यावृत्त्यर्थमाह * शब्देति * बाधपरिहारार्थं गवयेति विशेषणम्। विषयीक्रियमाणविपर्ययकत्वादित्युक्ते प्रमाणेन विषयीक्रियमाणविपर्ययकत्वं नास्तीत्यसिद्धिस्तत्परिहाराय तर्केति विशेषणम्। अस्तूक्तसाधनं मास्तूक्तसाध्यं च तथा विपक्षबाधकाभावादप्रयोजकत्वमित्यत आह * नहीति * मूलशैथिल्यं व्याप्तिहीनत्वमादिपदेन विपर्ययापर्यवसानेष्टापदनाश्रयहीनत्वादीनि गृह्यन्ते। सत्तर्कनिवेदितनिमित्तान्तराभावोऽपि स्वयन्तत्प्रवृत्तिनिमित्तं न भवतीति न सम्भवोऽस्ति एवं पदस्य निरालम्बनत्वापातादित्यर्थः। एवमर्थापत्त्यादिन इत्यत्रोक्तादिपदार्थमुक्त्वार्थापत्तिमिदानी-

१ गवयपदस्येति पु० पा०।

माह * अथवेति * गवयपदमर्थादात्मनो गवयत्वप्रवृत्तिनिमित्ततामाक्षिपतीत्यर्थः । अनुपपत्तिमूलमाह * अनुपपद्यमानेति * अनाप्तप्रयुक्तपदसामानाधिकरण्यं निरर्थकत्वेनापि सम्भवति इदं त्वाप्तोक्तपदसामानाधिकरण्यमतो भवितव्यमवश्यं प्रवृत्तिनिमित्तेनेत्यर्थानुपपत्तिः सादृश्यमेव निमित्तमित्यन्यथानुपपत्तिर्नेत्याह * असम्भवदिति * नन्वत्र सामानाधिकरण्यं शाब्दमनुपपन्नमित्युच्यते किं वाऽऽर्थं न तावदाद्यो व्योमपुष्पमिति वदुपपत्तेर्नापि क्रियाकाररूपार्थसामानाधिकरण्यानुपपत्तिर्वटे गावः सुशेरत इति वदुपपत्तेरिति मैवम् । प्रामाणिकार्थिकसामानाधिकरण्यस्यानुपपद्यमानत्वस्य विवक्षितत्वादिति अर्थापत्तिर्नाम प्रमाणमेव नास्ति तत्कथं सा तत्र प्रमाणं भवेत्तत्राह * सेति * नैयायिकेनार्थापत्तिं व्यतिरेकानुमाने ऽन्तर्भाव्य प्रमाणानीया प्रमाणीकर्त्तव्या व्याप्तिमूलत्वेनाभेदाङ्गीकारात्परेण मीमांसकेन पृथगेव वा प्रमाणीकर्त्तव्या षट् पञ्च वा प्रमाणानीति जैमिनीयैरङ्गीकारादित्यर्थः । तस्मात्प्रसिद्धपदसमभिव्याहारजनितायाः अन्यथानुपपत्तेरेव सम्बन्धप्रमितिमूलत्वात्रोपमानं नाम प्रमाणं किं चित्पश्याम इति ।

उपमानखण्डनम् ।

---

अभ्युदयनिश्रेयसहेतोः शब्दप्रमाणस्य स्वीकारवदुपमानमपि किं न स्वीक्रियत इत्याशङ्क्य सोऽप्य-

विचारितरमणीय एव न वस्तुतस्तल्लक्षणाभावादित्याह।

५५६ शब्दप्रमाणखण्डनारम्भः।

शब्दोऽपि क उच्यते। आप्तवाक्यं हि शब्दः प्रमाणमिति न युक्तं विकल्पानुपपत्तेः।

* शब्दोऽपीति * किमाप्तवाक्यं शब्दः प्रमाणमुत निर्दोषस्य वाक्यमाहो स्विद्यथार्थवाक्यमिति विकल्पाभिप्रायः। विकल्पक्रमेण प्रथमकल्पं प्रथममपाकरोति * आप्तेति * वाक्यमित्युक्ते कराग्रे करिवृन्दमास्त इत्यनाप्तवाक्ये ऽतिव्याप्तिस्तन्निरासायाह * आप्तेति * प्रणेतृतीव्रशक्तिनिवारणाय वाक्यग्रहणम्। वर्णात्मकशब्दमात्रस्य नेदं लक्षणं किन्तु प्रमाणभूतवाक्यस्येति द्योतनाय प्रमाणग्रहणम्। हि शब्दः प्रसिद्धौ। कुत इत्यत आह * विकल्पेति *

अनुपपत्तिप्रकटनाय विकल्पयति।

५५७ आप्तत्वानिरुक्तिः।

तथा हि कोऽयमाप्तो नाम। यथादृष्टवादीति चेन्न। भ्रान्तिप्रतिपन्नवादिवाक्येऽपि प्रसङ्गात्। प्रमाणदृष्टेतिविशेषणे च तथा भूतस्यान्यथावादव्यापनात्। यथाप्रमाणेति करणे चांशे तथाभूतवादिवाक्यस्याऽयथार्थस्याऽपि व्यापनात्। यावद्यथाप्रमाणदृष्टनिरुक्तौ च प्रायेणातथाभूतत्त्वादेव लक्ष्याणां तदव्याप्तः। नहि

१ तर्हि यावत्प्रमितमिति का० मु० पु० पा०।

यावत्प्रमितं तावदभिधीयते । यथाप्रमितस्यैव च वक्तुर्वाक्यमिति व्याकारे च युधिष्ठिरवाक्यस्याप्यनवम्भूतत्त्वेनाव्याप्त्यापत्तेः । तत्र विषय इति विशेषणं च विशेषरूपस्य विषयस्यासाधारण्येनाऽव्यापकत्त्वापतात् ।

* तथाहीति * यद्यथादृष्टार्थवाद्याप्त उत प्रमाणादृष्टार्थवादी किं वा यथा प्रमाणदृष्टवादीति विकल्पार्थः । प्रथमं कल्पं शङ्कते * यथेति * विप्रलम्भकनिरासाय यथेति विशेषणम् । अतिव्याप्त्या दूषयति * नेति * देहात्मनोरैक्यं भ्रान्त्या प्रतिपद्य यो वक्ति देह एवात्मेति सोऽप्याप्तः स्यात् तद्वाक्यं चाप्तवाक्यतया प्रमाणं स्यादित्यति व्याप्तिरित्यर्थः । अस्तु तर्हि द्वितीयस्तत्र कथितातिव्याप्तेरभावात्प्रमाणप्रतिपन्नत्वविशेषणाभावादित्यत आह * प्रमाणेति * तथाभूतस्य प्रमाणदृष्टस्य साङ्ख्यादीनामिन्द्रियभौतिकत्वस्यान्यथावादः प्राकृतानीतितज्ज्ञापनादतिव्याप्तिःप्रमाणेनार्थमुपलभ्य तस्यैवान्यथात्वं यो वक्ति स आप्तः तद्वाक्यं च प्रमाणं स्यादित्यर्थः । तृतीयं शङ्कते * यथेति * येन प्रकारेण प्रमाणतोऽर्थो दृष्टस्तस्य तथा वाद्याप्त इति विवक्षितत्वान्न पूर्वयोरतिव्याप्तिर्यथा प्रमाणेति विशेषणयोरभावादित्यर्थः । यथा प्रमाणेति कोऽर्थः प्रमाणदृष्टमपि वक्तीति किं वा यत्प्रमितं तदेव वक्ति किं वा यावत्प्रमाणदृष्टं तदेव वक्तीति नाद्य इत्याह * अंश इति * ते ग्रावाणः प्लवन्त इति यो वक्ति स आप्तः स्यात्तद्वाक्यं प्रमाणं स्यात्ते ग्रावाण इत्यंशे त-

थाभूतत्वात् प्लवन्त इत्यंशे चातथाभूतत्वात्तस्मिन्नप्यंशे प्रमात्वमिति संसृष्टार्थ एव प्रामाणिकः स्यादित्यर्थः । द्वितीयं शङ्कते *यावदिति* निरुक्तौ नातिव्याप्तिरिति शेषः । यावदिति विशेषणाभावादित्यभिसन्धिः । दूषयति * प्रायेणेति * लक्ष्याणामाप्तानां चातथाभूतत्वात्प्रमाणदृष्टस्य कात्स्न्र्येनावक्तृत्वादसिद्धिरित्यर्थः । तदुपपादयति * तर्हीति * अस्तु तर्हि तृतीयो यथा प्रमितस्यैव वक्ताऽऽप्त इति नैवमसिद्धिः प्रमितस्यैव वक्तृत्वान्नाप्यतिव्याप्तिः प्रमितस्यैवेति विशेषणाभावादन्यत्रेत्यत आह * यथेति * आप्तवाक्यमिति लक्षणस्य यथा प्रमितस्यैव वक्तुर्वाक्यमिति व्याकारे व्याख्याने युधिष्ठिरवाक्यस्याव्याप्तेरिति सम्बन्धस्तत्र च हेतुरनेवमिति * युधिष्ठिरः खलु सर्वलोके सत्यत्वेन प्रसिद्धस्तस्यापि क्व चिदनृतवादित्वं भारते स्मर्यते अतो ऽव्याप्तिरित्याशयः । यथा प्रमितस्यैव वक्ता तत्र विषये आप्तस्तद्वाक्यं च तत्र प्रमाणमिति विशेष्यते ततो युधिष्ठिरस्यानेवम्भूतविषये नाप्तत्वं न तद्वाक्यं च प्रमाणमित्यत आह * तत्रेति * विशेषणे च व्यापकत्वापातादिति सम्बन्धस्तत्र हेतुर्विशेषेत्यादि । विषयविशेषस्यापि लक्षणान्तर्भावात्तस्य च व्यावृत्त्या तद्विशिष्टलक्षणाव्याप्तिरित्यर्थः । एतेन समग्रबलेन सम्यक् परोक्षानुभवसाधनमागमः स द्विविधो दृष्टादृष्टार्थभेदात्तत्र दृष्टार्थानां तु वाक्यानां प्रायेण प्रवृत्तिसामर्थ्यात्प्रामाण्यं गम्यते अदृष्टानां तु पुनराप्तोक्तत्वेनेति य-

दुक्तं भूषणकृता तदपि निरस्तमाप्तानिरुक्तौ तत्प्रामाण्यानिरुक्तेः किं च परोक्षेति विशेषणं व्यर्थं व्यवच्छेद्याभावात्सम्यक्त्वानुभवत्वसाधनत्वानि च खण्डितानीत्येषा दिक् ।

द्वितीयं कल्पं शङ्कते ।

५५८ निर्दोषवाक्यस्य प्रमाणत्वनिरासः ।

अथ निर्दोषस्य वाक्यं तथेति चेन्न । सदोषस्य नास्ति घट इत्यभिधित्सतोऽस्ति घट इति दैवान्निर्गतयथार्थवाक्याव्याप्तेः । तत्प्रमाणं न भवत्येवेति चेन्न । पूर्वमुक्तोत्तरत्वात् । प्रवृत्तिसामर्थ्येन प्रामाण्यावधारणसम्भवादापाततः सन्देहेऽप्यदोषात् सामान्यतोनिर्दोषत्वस्य भीमाग्रजेऽप्यभावात् विशेषतस्तथात्वस्यासाधारण्यपर्यवसायित्वात् ।

* अथेति * दोषा अज्ञानसंशयविपर्ययरागद्वेषादयस्तद्धीनो निर्दोषस्तद्वाक्यमागम इत्यर्थः । दैवागतविज्ञाने ऽव्यापकमिदमिति दूषयति * नेति * वस्तुनो भूतलमधितिष्ठत्यपि घटे आशयदोषान्नास्ति घट इत्यभिधातुमिच्छति तस्य दैववशादस्तीति मुखाद्वाक्यं निर्गच्छति तद्वाक्यं प्रमाणमप्रमाणं वाऽऽद्येऽव्याप्तिः तत्प्रयोक्तुः सदोषत्वेन निर्दोषविशेषणाभावादित्यर्थः । द्वितीयं शङ्कते *तदिति* आशयदोषदुष्टपुरुषप्रयुक्तवाक्यत्वाद्बुद्धादिवाक्यवदप्रमाणमिति नाव्याप्तिरित्यर्थः । उक्तं संस्मर्तुमर्हसीति परिहरति

* नेति * प्रमाणलक्षणगतविशेषणेन वा व्यवच्छेद्यं परिगणितप्रमाराशिष्वेव वाऽन्तर्भावनीयमिति प्रमाखण्डन उक्तमित्यर्थः। किं च अबाधितस्वसमानविषयप्रवृत्तिजननसमर्थत्वात्तज्ज्ञानं प्रमा तत्करणं च प्रमाणमिति निश्चेतुं शक्यते स्मरणविलक्षणज्ञानस्य तथात्वाव्यभिचारादित्यभिप्रेत्याह * प्रवृत्तीति * दुष्टपुरुषप्रयुक्तवाक्यान्तरे ऽप्रामाण्यस्य निश्चितत्वादिदमपि किं प्रमाणमप्रमाणंवेति सन्देहो जायतेऽतः संशयजनकत्वेनाप्रमाणमित्यत आह *आपातेति* सम्वादात्प्रामाण्यमुपगच्छतः प्रवृत्तिसंवादेन पश्चात्प्रामाण्यनिश्चयसम्भवादित्यर्थः। किं च निर्दोषेति सकलदोषरहितत्वं विवक्षितमुत यत्किञ्चित् दोषराहित्यमाद्येऽसंभवो युधिष्ठिरस्य सकललोकाभिमतस्यापि किं चिद्दोषदर्शनात् किमितरेषां सूक्ष्मापराधबाहुल्यमित्यभिप्रेत्याह * सामान्येति * द्वितीयं प्रत्याह * विशेषेति * दोषविशेषाभावस्य व्यावृत्तत्वेन लक्षणाननुगम इत्यर्थः। एतेन च निर्दोषत्वमशक्यावधारणं न पुंसां विषयभेदेषु विपर्ययबाधकावधारणादर्शनात् दृश्यते खलु म्लेच्छानामप्यपहृतसर्वस्वानां मार्गमुपदिशतां तद्गोचराप्तत्वावधारणं लोके तत्रैव पटुतराभ्यासानामविभ्रमव्याद्विप्रलम्भकत्वासम्भवाच्च सर्वस्वस्य स्वीकृतत्वाच्छरीरस्य वा ऽनुपयोगित्वादुपयोगे वा परित्यागानुपपत्तेर्यदा चैवं म्लेच्छानामव्याप्तत्वमवधार्यते किं पुनस्तदा महापुरुषाणां तदुपदेश्येषु विषयविशेषेष्विति च यदपि काश्चिद्विपश्चिदवोचत्तदपि निरस्तम् ।

विषयाविशेषदोषाभावस्याव्यापकत्वात्सामान्यतो दु-रवधारणत्वात् ।

तृतीयं कल्पमाशङ्कते ।

६५९ तृतीयकल्पनिराकरणम् ।

यथार्थवाक्यं शब्दः प्रमाणमित्यत्र को दोष इति चेन्न ।पूर्वोक्तयाथार्थ्यदूषणानि तावत्प्रथमः। यथार्थमिति विशेषणस्य व्यवच्छेदकत्वाव्यवच्छेदकत्वयोः पूर्ववद्दोषश्च द्वितीयः । वाक्यत्वानिरुक्तिश्च तृतीयः ।

* यथेति * पदकृत्यं विशदम् । पूर्वमाप्तत्वानिरुक्त्या दूषणमुक्तमिदानीमाप्तपदस्थाने यथार्थपदोपादाने को दोषो वक्तुं शक्यत इति पृच्छाम इति पृष्टः सिद्धान्त्याह * पूर्वेति * यथार्थोऽनुभवः प्रमेत्यत्र किमिदं यथार्थत्वमर्थसादृश्यमबाधितार्थत्वं वेति विकल्पोक्तानि दूषणानि तावदेको दोष इत्यर्थः । बहूनामपि दोष इत्येकवचनं वेदाः प्रमाणमिति वदविरुद्धम् । दोषान्तरं दर्शयति * यथार्थमिति * यथार्थविशेषणस्याभासव्यवच्छेदकत्वे दैवान्निर्गतवाक्यव्यवच्छेदकत्वं वाच्यं तन्न सम्भवति तथांशतोयथार्थवाक्यव्यवच्छेदकत्वं वा वाच्यं अव्यवच्छेदकत्वे विशेषणवैयर्थ्यमतिव्याप्तिश्चेति द्वितीयो दोष इत्यर्थः । विशेषणांशप्रयुक्तदोषमुक्त्वा विशेष्यांशप्रयुक्तं दर्शयति * वाक्येति * प्रश्नवाक्यगतं दोषपदमुत्तरवाक्ये सर्वत्रानुषज्यते ।

वाक्यानिरुक्तिं दर्शयितुं वाक्यलक्षणं पृच्छति ।

५६० वाक्यलक्षणनिरासः ।

तथाहि किमिदं वाक्यं नाम ? एकार्थावच्छिन्नपदसमुदायो वाक्यमिति चेन्न। एकत्वविषयत्वावच्छिन्नत्वानां वाच्यानि दूषणानि तावत्सन्तु पदपदार्थन्तु चिन्तयामः ।

* तथा हीति * वाक्यलक्षणं शङ्कते * एकेति * समुदायो वाक्यमित्युक्ते वर्णसमुदायपदेऽतिव्याप्तिस्तन्निरासाय पदेति विशेषणम् । कराग्रे करिवृन्दमास्त इत्यादिपदसमुदायेऽतिव्याप्तिस्तत्परिहाराय विशेषणमेकार्थेति । क्रियाकारकादिभावेन विशिष्ट एको ऽर्थस्तदवच्छिन्नपदसमुदायो वाक्यमिति नातिव्याप्तिरित्यर्थः । असम्भवेनैव तद्दूषयति * नेति * एकत्वन्नाम सङ्ख्या किं वा द्वित्वादिविरहः आद्ये नित्यमैश्वरज्ञानं गुणः प्रमेति वाक्याव्याप्तिस्तदर्थस्य एकत्वसङ्ख्या नास्ति गुणत्वात् द्वितीये द्वित्वादिसङ्ख्यावच्छिन्नपदार्थविषयगौरश्वः पुरुषो हस्तीत्यादिपदसमुदायेऽतिव्याप्तिः द्वित्वावच्छिन्नेऽपि तदन्योन्याभावस्य सम्भवादित्यर्थः । न चैतदपि वाक्यमेव तदाभासाभावप्रसङ्गादित्येकत्वस्य वाच्यं दूषणं वाक्यस्य विषयत्वमेवार्थावच्छिन्नत्वं तथात्वं विषयविषयिभावस्वरूपमुतातिरिक्तं इति विकल्पादिदूषणं चतुर्थपरिच्छेदे भविष्यति । अवच्छिन्नत्वमपि विशेषणविशेष्यतत्सम्बन्धत्वातिरिक्तोऽनतिरिक्तो वेति दूषणं तत्रैव वक्ष्यते तानि दूषणान्यस्मिल्लक्षणे

सन्तीत्यर्थः । तावदिति प्राथम्योक्त्या दूषणान्तरं ध्वनितं दर्शयति * पदेति * पदमित्येतस्य पदस्यार्थमित्यर्थः ।

पदनिरूपणाय तल्लक्षणमनुवदति ।

५६१ पदप्रथमलक्षणखण्डनम् ।

सुप्तिङन्तं पदमिति केचित् । वर्णा विभक्त्यन्ताः पदमित्यन्ये । तत्र नाद्यः प्रत्येकं मिलितस्य चाव्यापकत्वात् । पृथक्प्रवृत्तिनिमित्ततायाश्च वाक्यलक्षणाव्यापकत्वापातात् ।

* सुबिति * सुबन्तमित्युक्ते तिङन्ताव्याप्तिस्तिङन्तमित्युक्ते सुबन्ताव्याप्तिरत उभयावरोधार्थमुभयग्रहणम् । केचित्पाणिनीयाः । लक्षणान्तरमाह * वर्णेति * विभक्त्यन्ताः पदमित्युक्ते वाक्येऽप्यतिव्याप्तिस्तदर्थमाह * वर्णा इति * तावत्युक्ते कखगघङ इत्यादिवर्णेष्वतिव्याप्तिस्तदर्थं विभक्तिग्रहणम् । अपरः कालापादिरित्यर्थः । प्रथमलक्षणमपाकरोति * तत्रेति * सुबन्तं तिङन्तं च प्रत्येकं लक्षणमुत मिलितमाद्ये सुबन्तस्य पदत्वे तिङन्ताव्याप्तिस्तिङन्तस्य पदत्वे सुबन्तस्यापदत्वप्रसङ्गः उभयस्य मिलितस्य लक्षणत्वे सर्वाव्याप्तिरेकस्याप्युभयान्तत्वाभावादित्यर्थः । केषांचित्पदशब्दवाच्यत्वे सुबन्तत्वान्निमित्तं केषांचित्तिङन्तत्वं यथा गोशब्दवाच्यत्वं गवादीनां गोत्वादीन्यनेकानि निमित्तानीत्यत आह * पृथगिति *

पदार्थस्यानेकत्वेन पदस्याननुगमात्तत्समुदायो वाक्यलक्षणमप्यननुगतं स्यादित्यर्थः।

द्वितीयलक्षणं दूषयति।

५६२ पदद्वितीयलक्षणखण्डनम्।

नापि द्वितीयः विभक्त्यर्थस्यानुगतस्यासम्भवात् "विभक्ति"रित्यनेन सुप्तिङोः "प्राग्दिशोऽविभक्ति"रित्यनेन च तासिलादेः पृथक् पृथगेव विभक्तिसंज्ञाविधानात् शब्दसाम्येन च लक्षणायोगात्।

* नापीति * कुत इत्यत आह * विभक्तीति * विभक्त्यर्थस्य व्यावृत्त्या तदन्तवर्णत्वमपि पदलक्षणं व्यावृत्तं स्यादित्यर्थः। कथं विभक्त्यर्थस्यानुगतस्यासम्भव इति तदुपपादयति * विभक्तीति * विभक्तिश्चेत्यनेन प्रकृतयोः सुप्तिङोर्विभक्तिसंज्ञाभिधानात्प्राग्दिशोविभक्तिरित्यनेन सूत्रेण तसिलादेः प्रत्ययस्य पृथगेव संज्ञाविधानाद्विभक्तिपदार्थोऽनुगतो न लभ्यत इत्यर्थः। आदिपदेन यत्तदः काले दा प्रकारवचने थालित्यादिप्रत्यया गृह्यन्ते। विभक्तिपदार्थस्यानुगतस्यासम्भवेऽपि विभक्तिरिति संज्ञैव सर्वत्र तेन तदुपाधौ लक्षणं ब्रूमो विभक्तिशब्दवाच्यान्ता वर्णाः पदमिति तत्राह * शब्देति * अर्थस्यानुगत्यभावे प्रत्येकमिलितविकल्पदोषापत्तेः शब्दसाम्येऽपि न लक्षणोपपत्तिर्न च तच्छब्दवाच्यत्वमिति रूपमनुगतप्रवृत्तिनिमित्तं वाच्यं तद्भावस्तत्वं

**तस्यैकस्यानङ्गीकारादङ्गीकारे वा पृथक् संज्ञाविधानद्वयगौरवानर्थक्यादित्यर्थः ।**

**इतश्च विभक्त्यन्ता वर्णाः पदमित्यलक्षणमित्याह ।**

५६३ विभक्त्यन्ता वर्णाः पदमिति लक्षणस्य निरासः ।

किञ्च वर्णा इति बहुत्वस्य विवक्षितत्वे अहमित्यादेरपदत्वप्रसङ्गः । अविवक्षितत्वे देवदत्त इत्यन्ताकारस्य पदत्वापातः तस्य विभक्त्यन्तत्वात् । सार्थककस्तथेति चेत् । भवतीत्यादौ शवकारादीनां पदत्वप्रसङ्गः शपः सार्थकत्वात् । यत्र विहिता विभक्तिस्तदिति चेन्न । शवकारं परित्यज्य पदत्वप्रसङ्गात् । तन्मध्यपतितत्वाच्छवकारोऽपि गृह्यत इति चेत् तर्हि यत्र विभक्तिर्विधीयते तत्र तद्विभक्तिमध्यपतितं पदमिति वा विवक्षितं यत्र विभक्तिर्विधीयते तत्तद्विभक्तिमध्यवर्त्तिसहितं पदमिति वा, आद्ये शवकारस्यापि पृथगेव पदत्वप्रसङ्गः लक्षणस्य चाव्यापकत्वात् । द्वितीये देवदत्त इत्यस्यापदत्वप्रसङ्गः मध्यवर्तिनोऽभावेन मध्यवर्तिसहितविशेषणाभावात् । क्वचिन्मध्यवर्तिसहितस्य क्वचित्केवलस्येति यथासम्भव इति चेन्न । एकानुगतरूपानभिधाने लक्षणस्याव्यापकतापत्तेर्दुर्निवारत्वात् ।

*** किं चेति * "बहुषु बहुवचनमिति" बह्वर्थविवक्षायां बहुवचनविधानादिह च वर्णशब्दस्य बहुव-**

चनान्तत्वाद्वर्णबहुत्वं विवक्षितन्न वा आद्यं प्रत्याह * वर्णेति * अहं त्वं सः क इत्यादेरपदत्वं प्रसज्येत विभक्त्यन्तबहुवर्णत्वाभावादित्यर्थः । द्वितीये दूषणमाह * अविवक्षितेति * देवदत्त इत्यत्र तकारोपर्यकारस्तस्य पदत्वं स्यादित्यतिव्याप्तिरित्यर्थः । कुत इत्यत आह * तस्येति * प्रथमैकवचनस्य सो रुत्वे कृते विसर्गादेशस्तद्वद्भवतीति न्यायेन विसर्गान्तस्याकारस्य विभक्त्यन्तत्वादित्यर्थः । अतिव्याप्तिपरिहारं शङ्कते * सेति * सार्थको वर्णो विभक्त्यन्तः पदमिति विवक्षितत्वान्नातिव्याप्तिरित्यर्थः । अतिव्याप्त्यन्तरप्रदर्शनेन परिहरति * नेति * भूतिबिति स्थिते कर्तरि शबिति शब्भवति शपावनुबन्धौ तयोर्लोपे अ इति शिष्यते गुणे कृते एचोऽयवायाव इत्यवादेशे कृते पकारानुबन्धलोपे च भवतीति रूपं सिद्धं तत्र शवकारस्य पदत्वं प्रसज्येत । आदिपदेन श्यनुप्रभृतयो गृह्यन्ते हेतुं कथयति * शप इति * शप्श्यनुप्रभृतीनां कर्तरि विहितत्वात्सार्थकत्वं विभक्त्यन्तत्वं चेत्यतिव्याप्तिरित्यर्थः। शङ्कते अतिव्याप्तिपरिहारं * यत्रेति * यस्मिन्वर्णे विहिता विभक्तिः स सार्थको विभक्त्यन्तः पदं न शवकारे विभक्तिर्विहिता तस्य प्रत्ययत्वात्प्रकृतावेव विभक्तिविधानादिति तन्निवृत्तिरित्यर्थः । एवमपि नातिव्याप्त्या विमुच्यस इति परिहरति * नेति * भू इत्येतावन्मात्रे विभक्तेर्विहितत्वात्तन्मध्यपतितशवकारं परित्यज्य पदत्वमापाद्येत तस्य सार्थकत्वाद्विभक्तिविधानोद्देश्यत्वाद्विभक्त्यन्तत्वाच्चेत्यति-

व्याप्तिरित्यर्थः । प्रत्याहारग्रहणन्यायेन प्रातिपदिकस्य तदुपरिवर्त्तिविभक्तेश्च ग्रहणे तन्मध्यवर्तिशवकारोऽपि गृहीत एवेति नोक्तदोष इति शङ्कते * तदिति * तदेतद्विशकलयितुं विकल्पयति * तर्हीत्यादिना * यत्र प्रकृतौ विभक्तिर्विधीयते तत्प्रकृतिरूपं पदं त-द्विभक्त्योर्मध्यपातितशवकारादि च पदमिति प्रथमकल्पार्थः । तत्प्रकृतिरूपमेव मध्यपातितशवकारादिना सहितं पदमिति द्वितीयार्थः । कस्मिन्सति किं स्यादित्यत आह * आद्य इति * भवतीत्यादौ प्रकृतिरूपं भूति इति शवकारश्च पदमिति पदद्वयं स्यादित्येकपदत्वप्रसिद्धिविरोध इत्यर्थः । दूषणान्तरमाह * लक्षणेति * मध्यवर्तित्वस्य पदलक्षणत्वे प्रकृतेरपदत्वे प्रकृतित्वस्य तल्लक्षणत्वे मध्यवर्तिनो पदत्वं मिलितस्य लक्षणत्वे सर्वाव्याप्तिरित्यर्थः । अस्तु तर्हि द्वितीयस्तत्राह * द्वितीय इति * कुत इत्यत आह * मध्येति * देवदत्त इति प्रातिपदिकात्सु इति विभक्तिर्विहिता न च तयोर्मध्ये किं चिद्विहितमस्तीति तत्सहितविशेषणाभावादित्यर्थः । यत्र विभक्तिर्विधीयते तन्मध्यवर्तिसहितं पदमिति न पदमात्रस्य लक्षणं किं तु तद्विशेषस्यातो नाव्याप्तिरिति शङ्कते * क चिदिति * क चिद्भवतीत्यादौ मध्यवर्त्तिसहितस्य तत्त्वं क चिद्देवदत्त इत्यादौ केवलस्येत्यर्थः । पदमात्रलक्षणासिद्धौ तद्विशेष एव लक्षयितुमशक्यो ऽसिद्धसामान्यस्य विशेषस्य बुद्धावारोपयितुमशक्यत्वात्तथा लक्षणे वा पदसमुदायो वाक्यमि-

त्यत्र पदपदार्थाननुगत्या वाक्यलक्षणस्याप्यननुगतिरिति दूषयति * नेति *

विभक्त्यन्ता वर्णाः पदमित्यस्य लक्षणस्यातिव्याप्त्यन्तरमाह।

५६४ पदलक्षणनिरासः।

किंच देवदत्तस्त्वित्यपि पदंस्यात्। अथ अपशब्दोऽयं पदत्वेसति रुत्वादेर्विधानस्यावश्यवश्यम्भावित्वात् इति चेन्न। यत एवायमपशब्दः अत एव भवतो दोषः प्रसज्यते अपशब्देऽपि पदलक्षणं गतमिति। तस्मात् पाणिनिनाऽऽचार्येण शब्दसिद्ध्यर्थं पदसंज्ञेयं रुत्वादिविध्यनुरोधेनापशब्ददशायामन्यैव कृता नदीसंज्ञावन्न लौकिकपदव्यवहारसिद्ध्यर्थं साधुशब्दविशेषे, ततश्च तस्यान्यदेव लक्षणं वाच्यमन्यथा दाक्षीनन्दनोदीरितनदीसंज्ञाप्रत्यभिज्ञायां पाथः प्रार्थयमानः काननस्थलीमलीकाभिमानी भवानीहेत।

* किं चेति * देवदत्त इत्यस्य "अर्थवदधातुरप्रत्ययः प्रातिपदिक"मिति प्रातिपदिकसंज्ञायां स्वौजसमावित्यादिना प्रथमैकवचनं सुर्भवति उकारस्येत्संज्ञालोपे देवदत्त स् इति भवति तदपि पदं स्यात् विभक्त्यन्तत्वादित्यतिव्याप्तिरित्यर्थः। अतिव्याप्तिमेव प्रकटयितुं चोद्यमुद्भावयति *अथेति* कुतोऽपशब्दत्वमिति तत्राह *पदेति* विभक्त्यन्तदेवदत्तप्रातिपदिकस्य पद-

संज्ञायां "ससजुषोरुरिति" रुत्वं ततः "खरवसानयोर्विसर्जनीय" इति विसर्जनीयश्चावश्यकोऽतोऽपशब्दत्वान्नातिव्याप्तिरित्याशयः। अपशब्दत्वेनापदे पदलक्षणगमनस्यातिव्याप्तिसाधकत्वान्नायं समाधिः साधीयानिति समाधत्ते * नेति * का तर्हि सुप्तिङन्तं पदमिति अपशब्दस्य पदसंज्ञाविधानस्य गतिरित्याशङ्क्य तामुपपादयन्नुपसंहरति * तस्मादिति * अपशब्ददशायामन्यैव पदसंज्ञा कृता अपशब्ददशायां पदसंज्ञाविधाने प्रयोजनमाह *शब्देति* पदसंज्ञा वा केन द्वारेण शब्दसिद्धावुपकरोतीत्यत उक्तं * रुत्वेति * देवदत्त इत्यस्य सुबन्तत्वेन पदसंज्ञायामेव ससजुषोरुरिति रुत्वं खरवसानयोरिति विसर्गश्च भवतीति पदसिद्धिरित्यर्थः। अपदे पदसंज्ञा किं घटते भगवतः पाणिनेरित्यत आह *नदीति* "यूस्त्र्याख्यौनदी" त्यनयामेव नदीसंज्ञा क्रियते यद्वदित्यर्थः। अन्यैवेत्येवकारव्युदस्यमाह *नन्विति* अस्तु तावता प्रकृते किं स्यादित्यत आह * ततश्चेति * यदि पाणिनीरितपदलक्षणव्यतिरेकेण लौकिकपदस्य लक्षणान्तरं नोरीक्रियते तदा दण्डं दर्शयति * अन्यथेति * दाक्षीनन्दनः पाणिनिरन्यथा भवान्काननस्थलीमाहेति सम्बन्धः। पाथः शब्दः सलिलवाची काननस्थलीशब्दस्य स्त्रियाख्यत्वादीकारान्तत्वाच्च यूस्त्र्याख्यौ नदीत्यनेन नदीसंज्ञया संज्ञितत्वादेतदुक्तं भवति मध्यान्हे विन्ध्याटव्यामटमानं ललाटोपरि गभस्तिमालिनि भगवति खरतरकरे विपरिवर्त्तिनि पिपासुः सलिलं प्रार्थयमाणो दाक्षीनन्द-

नपरिभाषितकाननस्थलीं नदीसंज्ञां प्रत्यभिजानानस्तत्र प्रवर्तेत भवानिति। अभिमानो ज्ञानं न तु भ्रमः मिथ्यापर्यायस्यालीकशब्दस्य पृथग्ग्रहणात्। इति शब्दः परिसमाप्तौ।

गदितावग्रपरम्परापरिजिहीर्षया लौकिकपदस्य चिन्हान्तरं शङ्कते।

५६५ पदस्य लक्षणान्तरनिरासः।

अथोच्यते विभक्त्यन्तमेव सर्व्वलक्षणप्रवृत्त्या निष्पन्नं व्यावहारिकं पदमिति लक्षणमस्तु। मैवम्। सर्व्वलक्षणप्रवृत्तेः सर्वत्रासम्भवात्। सम्भवत्सर्वलक्षणप्रवृत्त्येति चेन्न। सम्भवत्त्वं तत्काले कालान्तरे वा विवक्षितम्। आद्ये देवदत्तावित्यपि पदं स्यात् रुत्वविधानकाले विसर्गस्यासम्भावितत्वात्। कालान्तरेऽपीतिपक्षे देवदत्त इत्यपि पदं न स्यात्। इत्यादिपदपूर्व्वकालभाविनो यत्वयलोपादेरकरणात्।

* अथेति * विभक्त्यन्तं पदमित्युक्ते देवदत्त सु इत्यस्यापि पदत्वप्रसक्तिस्तन्निवारणायाह * सर्वेति* लक्षणं सूत्रम्। विभक्त्यन्तं लक्षणप्रवृत्तिनिष्पन्नमित्युक्ते देवदत्तावित्यस्यापि पदत्वप्रसङ्गस्तन्निरासाय सर्वेति विशेषणम्। यावन्ति लक्षणानि प्रणीतानि पाणिनिना तावतां सर्वेषां प्रवृत्त्या निष्पन्नमिति विवक्षितमुत

१ सर्वत्राऽभावात् इति का मु० पा० पा०।

यत्र यावन्ति सम्भवन्ति तावतां सर्वेषां प्रवृत्त्या निष्पन्नमिति विकल्प्य प्रथमसम्भवेनापाकरोति * नैवमिति * सर्वलक्षणानां प्रवृत्तिस्सर्वत्रापि न सम्भवति क्वचित्केषांचिदेव प्रवृत्तेरित्यर्थः। द्वितीयं कल्पमवलम्बते * सम्भवादिति * नैतद्विकल्पासहत्वादिति दूषयति * नेति * लक्षणानां सम्भवत्वं यदेकलक्षणं वर्तते तदेकस्मिन्नेव काले विवक्षितमिति प्रथमकल्पार्थः। कालान्तरे लक्षणसम्भवत्त्वमिति द्वितीयार्थः। प्रथमकल्पमतिव्याप्त्या दूषयति * आद्य इति * देवदत्त सु इति स्थिते पदसंज्ञायां "ससजुषो-रु"रिति रुत्वं भवति तदा देवदत्त इति रूपं भवति तदपि पदं स्यादित्यतिव्याप्तिः रुत्वविधानकाले "खरवसानयो"रिति सूत्रस्यासम्भवात् कृतरुत्वाश्रयेण तत्प्रवृत्तेरित्यर्थः। कालान्तरेऽपि सम्भवल्लक्षणप्रवृत्त्यापि निष्पन्नमिति पक्षे नातिव्याप्तिः विसर्गविधायकसूत्रकालान्तरसम्भवत्प्रवृत्त्यनिष्पन्नत्वादतोऽस्तु द्वितीयस्तत्राह * कालेति * यद्यप्यतिव्याप्तिः परिह्रियेत तथाप्यव्याप्तिः स्याद्देवदत्त इति विसर्गान्तं प्रथमैकवचनं पदत्वेन प्रसिद्धमपि यतः पदं न स्यादित्यर्थः। कुत इत्यत आह * इत्यादीति * इतिशब्द आदिर्यस्य स्वरादिपदस्य तदित्यादिपदं तस्मात्पूर्वताकाले कृतरुत्वस्य "भोभगोअघोअपूर्वस्य योऽशि"त्यनेन यत्वं "लोपः शाकल्यस्ये"त्यनेन यलोपस्तस्याकरणादित्यर्थः। आदिपदेन यलोपाभावपक्षे श्लिष्टोच्चारणं गृह्यते।

१ यदेतल्लक्षणं वर्तते इति पु- पा०।

अव्याप्तिपरिहाराय विशेषणं शङ्कते।

५६६ अव्याप्तिपरिहाराय विशेषणान्तरमितिशङ्कानिरासः।

शब्दान्तरसन्निधिव्यतिरेकेण यद्भाति लक्षणं तद्विवक्षितमिति चेन्न। जीविकाकृत्य व्याचष्ट इत्यर्थे जीविकां कृत्वा व्याचष्ट इति प्रयुज्यमानं वाक्यं स्यात्। एकार्थावच्छिन्नपदसमुदायस्य तत्रापि गतत्वात्। कृत्वेत्यनेन सम्बद्धस्य जीविकामित्यस्योक्तपदलक्षणेन सङ्गृहीतत्वात्।

* शब्देति * शब्दान्तरसन्निधिव्यतिरेकेण—कालान्तरे यावन्ति लक्षणानि सम्भवन्ति तावतां प्रवृत्त्या निष्पन्नं पदं विवक्षितमतो नाव्याप्तिर्देवदत्त इत्यस्य इत्यादिपदसन्निधावेव यत्वादिलक्षणानां सम्भवान्नाप्यतिव्याप्तिर्देवदत्तरु इत्यस्य सर्वलक्षणप्रवृत्त्या निष्पन्नत्वाभावादित्यर्थः। अतिव्याप्त्यन्तरदर्शनेन परिहरति * जीविकेति * यत्रौपम्यमन्तरेण जीविकां कृत्वेति भवति प्रयोगस्तद्वाक्यमेव सम्मतमित्यत उक्तं जीविकाकृत्य व्याचष्ट इति। एतद्वस्तुतः पदद्वयात्मकं वाक्यं तदर्थे जीविकां कृत्वा व्याचष्ट इति पदत्रयमर्थे बोधयद्भिः प्रयुज्यते जीविकामिव कृत्वा व्याचष्ट इत्यस्यार्थे। न चैतद्वाक्यमेव जीविकां कृत्वेत्यनयोरपशब्दत्वा"ज्जीविकोपनिषदावौपम्य"इत्यनेन सूत्रेण जीविकाशब्दस्य गतिसंज्ञायां"नित्यं क्रीडाजीविकयो"रित्यादिना समासेन विभक्तिलोपस्य भावितव्यत्वा"द्ध्रस्व-

स्य पिति कृति तुगि"ति तुगागमे विहिते "समासेऽन-ञपूर्वे क्त्वो ल्यबि"त्यनेन क्त्वाप्रत्ययस्थाने ल्यपा भवितव्यत्वादित्यर्थः। कुत इत्यत आह *एकेति* कृत्वेत्यादीनां पदत्वप्रसङ्गेनेत्यर्थः। जीविकामित्यस्य सम्भवत्सर्वलक्षणप्रवृत्तिनिष्पन्नत्वमेव नास्ति "कृत्तद्धितसमासाश्चे"ति प्रातिपदिकसंज्ञायां "सुपोधातुप्रातिपदिकयो"रित्यनेन विभक्तिलोपस्यावश्यकत्वादित्यत आह *कृत्वेति* सन्निध्यभावे कृत्वेत्यनेन सम्बद्धस्य जीविकापदस्य कथितलक्षणमेवेत्यर्थः।

प्रकारान्तरेण पदलक्षणं शङ्कते।

५६७ प्रकारान्तरेण पदलक्षणनिरासः।

यदुपाधिका यल्लक्षणप्रवृत्तिस्तदुपाधिसम्पत्तौ तेन निष्पन्नं तथेति चेन्न। यत्र नास्त्युपाधिसम्पत्तिस्तत्र केवले तस्यां सत्यामित्यस्याभावादपदत्वापत्तेः। यस्यामवस्थायां यस्य लक्षणस्योपनिपातस्तत्सर्वसम्पत्तौ विभक्त्यन्तं पदमिति चेन्न। यस्यामवस्थायामित्यत्रस्थानां भिन्नभिन्नाकारेण परामर्शे लक्षणस्याननुगमादव्यापककतादोषः। अवस्थानामैक्यं व्यविवक्षितमसम्भावितं च। सर्वदा सर्वावस्थाविषये लक्षणप्रसङ्गादिति। स च भवति भवति भवतीति भवत्यस्तीति पटः पटाविति पटं पट इति चेत्यतिव्याप्तिः।

*यदिति* य उपाधिः कारणं यस्याः सा य-

दुपाधिका उपाधिश्च समास उपम्यादिर्वा तदु-
पाधिसम्पत्तौ सत्यां सम्भवत्सर्वलक्षणप्रवृत्त्या नि-
ष्पन्नं पदं जीविकामित्यादेस्तु समासाद्युपाधौसत्यपि
सर्वलक्षणसिद्धत्वन्नेति तन्निवृत्तिरित्यर्थः। तर्हि प्रागुक्ता
ऽव्याप्तिरेवेति परिहरति *नेति* यत्र देवदत्त इत्यादौ
समासाद्युपाधिर्नास्ति तत्र उपाधिसम्पत्तौ सत्यामिति
विशेषणाभावादव्याप्तिरित्यर्थः। उपाधिशब्देन न स-
मासादिविशेषो विवक्ष्यते किं तु तत्तत्पदस्यावस्था न-
चैवमव्याप्तिः केवलावस्थायां सम्भवत्सर्वलक्षणसिद्ध-
त्वाद्देवदत्त इत्यस्य, न वाऽतिव्याप्तिरनेवंरूपत्वात् जी-
विकामित्यादेरिति शङ्कते *यस्यामिति* किमवस्था-
विशेष उच्यते किं वाऽवस्थामात्रमिति विकल्प्य प्रथमं
प्रत्याह *नेति* देवदत्त इत्येतत्पदावस्थायां सम्भव-
त्सर्वलक्षणात् सिद्धत्वाभावात् घटादिपदेष्वव्याप्तिः।
द्वितीयमपवदति *अवस्थेति* समासाद्यवस्थानाम-
नेकत्वादेकत्वमविवक्षितं तत्रापीत्यर्थः। न केवल-
मनभिप्रेतत्वमसम्भवोऽपीत्याह *सम्भावितमि-
ति* एकस्योपाधेः सामान्यस्य वा निरूपयितु-
मशक्यत्वादित्यर्थः। यदि कश्चिद्वृद्धव्यवहार-
सिद्धपदसिद्ध्यनुगुणकालत्वादिरूपेणावस्थानामैक्यं ब्रू-
यात्तं प्रत्याह *सर्वेति* सर्वावस्थाविषयाणां सर्व-
लक्षणानां सर्वत्र प्रसङ्गादित्यर्थः। तमेव प्रसङ्गं दर्शयति
*सचेति* किमवस्थानामैक्यं पदानामैक्यरूपं का-
लत्वमुत पदार्थैक्यसम्बन्धित्वमाहो स्विदेकरूपप्रकृति-
सम्बन्धित्वमिति, यदि प्रथमस्तदा भवति भवतीति

पदत्रयमप्येकं पदं स्याद्रूपसाम्येन तत्सामान्येन तत्सम्बन्धावस्थायां एकत्वेन तत्र सम्भावितसर्वलक्षणासिद्धत्वादित्यतिव्याप्तिस्तत्रैकं भवति पदं तिङन्तं, द्वितीयं पुल्लिङ्गं सप्तम्यन्तं, तृतीयं स्त्रियां सम्बुद्धौ। यदि द्वितीयस्तर्हि भवत्यस्तीति पदद्वयमेकं स्यादेकार्थत्वात् तृतीये पटः पटावित्यनयोरेकद्विवचनयोरैकपद्यं स्यादेकप्रकृतिकत्वादित्यतिव्याप्तिरित्यर्थः।

एवं काणादनये शब्दप्रमाणखण्डनकथिरीतिं मीमांसकनयेऽप्यतिदिशति।

५६८ मीमांसकमतेऽतिदेशः

एतेनापौरुषेयं वाक्यं तदित्यपि निरस्तम्।

*एतेनेति* वाक्यत्वानिरुक्तिदोषेणेत्यर्थः *तदिति* शब्दप्रमाणमित्यर्थः। लिङ्गप्रकरणादावव्याप्तिश्च। न च तदपि वाक्यमेव तथा च श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्येति षट् प्रमाणानीत्यभ्युपगमात् श्रुतिमूलत्वेन तत्रान्तर्भावे प्रत्यक्षमूलतयाऽनुमानादेः सर्वस्य तत्रान्तर्भावापातादाप्तवाक्येऽव्याप्तिरित्यादि स्वयमूह्यम्।

इति शब्दप्रमाणखण्डनम्।

---

आगमानन्तरभाव्यर्थापत्तिखण्डनं प्रस्तावयति।

५६९ अर्थापत्तिखण्डनम्।

का पुनरर्थापत्तिरपि। अन्यथाऽनुपपत्तिरितिचेन्न।

यतोऽन्यत्त्वं तत्सिद्धेरग्रे तदसिद्धेः।

* केति * परोक्तलक्षणं शङ्कते * अन्यथेति *

जीवद्देवदत्तगेहाभावो बहिर्भावं विनाऽनुपपद्यमानो बहिः सत्त्वं गमयतीति जीवद्देवदत्तगेहाभावानुपपत्तिरर्थापत्तिरित्यर्थः । अनुपपत्तिरित्युक्ते सर्वथाऽनुपपत्तौ फलविरोधिन्यामतिव्याप्तिस्तन्निरासायाह * अन्यथेति * अन्यथेत्युक्ते अन्यथाऽप्युपपत्तावतिव्याप्तिस्तन्निरासायाह * अन्यथेति * अन्यथाऽनुपपत्तिर्नामान्येन प्रकारेणानुपपत्तिस्तथाऽन्वयत उपपादकादन्यथात्वं तदुपपादकमन्यत्वप्रतियोगि प्रागसिद्धं सिद्धं वा इति विकल्पाद्यं प्रत्याह * नेति * अन्यत्वस्य प्रतियोगिज्ञानाधीनत्वात्तस्य बहिःसत्वादिरूपप्रतियोगिनः सिद्धेरग्रे तदसिद्धेरन्यथानुपपत्त्यसिद्धेस्तत्सिद्धिः प्रागेव वक्तव्या ततश्चानुपपत्तिसिद्धावुपपादकासिद्धिस्तत्सिद्धौ चानुपपत्तिसिद्धिरिति परस्पराश्रय इत्याशयः ।

तर्हि सिद्धेनोपपादकेनानुपपत्तिर्ज्ञायतामिति दूषितमपि पक्षं पुनः शङ्कते दूषणान्तरदर्शनाय ।

५६९ दूषितपक्षस्यैवपुनर्निराकरणम् ।

सिद्धे नानुपपत्तिरितिचेन्न । विशेषणव्यवच्छेद्याप्रतीतौ तद्वैयर्थ्येन तदनुपादाने सर्वथाऽनुपपत्त्यर्थतायां फलविरोधात् । केनाऽप्यनुपपत्त्यर्थत्वे साध्यसिद्ध्यपर्यवसानात् ।

* सिद्धेनेति * सिद्धेति विशेषणमकिञ्चित्करमिति मत्वा दूषयति * नेति * सिद्धेनेति विशेषणेनासिद्धं व्यावर्तनीयं तस्यासिद्धत्वादेवाप्रतीतौ सप्त-

मरसादिवद्व्यवच्छेद्यत्वानुपपत्त्या विशेषणवैयर्थ्येन त-दनुपादानं प्राप्तं तदनुपादाने चानुपपत्तिरिति शि-ष्यते मा सर्वप्रकारेणापि केनापि प्रकारेण वा, न तावत्प्रथमः सर्वथा ऽनुपपत्त्यर्थतायामनुपपत्तिशब्दस्य फलावरोधादुपपादकप्रमानुपपत्तेस्तस्यापि सर्वान्तःपा-लितयाऽनुपपत्तेरित्यसम्भवि लक्षणमित्यर्थः । द्वि-तीयं प्रत्याह * केनेति * येन केन च विना ऽनुप-पत्तिर्यत् किं चित्साधयेन्न तु विवक्षितं बहिःसत्वा-दीति साध्यासिद्धेरसम्भव एवेत्यर्थः ।

उक्तदोषपरिहारायाऽनुपपत्तिं प्रकारान्तरेणोपस्था-पयति ।

५७० प्रकारान्तरेणाऽनुपपत्तिनिरासः ।

प्रमाणयोर्विरोधानुपपत्तिरितिचेन्न । असिद्धत्वात् । प्रमाणत्वेनाभिमन्यमानयोरितिचेन्न । अभिमतेर्भ्रमार्थत्वे-ऽतिप्रसङ्गात् । ज्ञानार्थत्वेऽप्युक्तदोषाऽनिवृत्तिरेव । अनि र्णीयमानप्रामाण्याप्रामाण्ययोरित्यत्रापि तथैव । तथाहि-स-त्प्रतिपक्षेऽपि तस्य तदुपपादकप्रमाफलकत्वापत्तेः । तत्र विरोधे व्याहत्यैकाप्रामाण्यनिश्चयो यत्र तु नैवं तद्विवक्षित-मिति चेन्न । एवं सत्प्रतिपक्षवदन्यत्रापि विरोधार्थत्वे-नैवाभासत्वाविशेषात् । तर्कयोर्विरोधोऽपेक्षित इति चे-न्न । मिथो विरोधेन तर्कयोरप्याभासत्वात् ।

* प्रमेति * जीवति देवदत्त इत्याप्तवाक्यं देव-

दृतसत्त्वं सामान्येन प्रमापयति गृहेऽनुपलब्धिस्तद्सत्त्वमिति प्रमाणयोर्विरोधोऽनुपपत्तिः सा च बहिःसत्त्वं प्रकल्प्य शाम्यतीत्याशयः । असम्भवेनैव दूषयति * नेति * भिन्नविषययोरेकविषययोर्वा प्रमाणयोर्विरोधोऽसिद्ध इत्यर्थः । स्वविषयशूरत्वात्प्रमाणयोर्विरोधाभावेऽपि प्रमाणत्वेनाभिमन्यमानयोः सोऽस्तीति शङ्कते *प्रमेति* अभिमतिरपि भ्रम उत ज्ञानं किं स्विदनिर्णय इति विकल्प्य प्रथमं दूषयति * नेति * स्रजि सर्पोऽयमित्येकस्य भ्रान्तस्य बन्धनमपरस्य दण्डोऽयमिति तयोरपि विरोधानुपपत्तिरित्युपपादकं कल्पयेदित्यतिव्याप्तिरित्यर्थः । द्वितीयमपवदति * ज्ञानेति * ज्ञानस्य प्रमाणत्वे विरोधासिद्धिरप्रमाणत्वे साधारणत्वे चातिप्रसङ्ग इति कथितदोषानुषङ्ग इति भावः । तृतीयेऽप्यतिप्रसङ्ग एवेत्याह * अनिर्णीयेति * अतिप्रसङ्गमेव स्फुटयति * तथा हीति * वायुः प्रत्यक्षः अनुद्भूतरूपानाधिकरणत्वे सति गृह्यमाणस्पर्शाधिष्ठानत्वात् घटवद्वायुर्न स्पर्शग्राह्यो नीरूपद्रव्यत्वादात्मवदित्यत्र सत्प्रतिपक्षहेत्वोरनिर्णीयमानप्रामाण्याप्रामाण्ययोर्विरोधोऽनुपपत्तिरिति तस्य विरोधस्य तदुभयोपपादकविषयप्रमाकरणत्वेनार्थापत्तित्वप्रसङ्ग इत्यर्थः । विशेषं शङ्कते * तत्रेति * यत्र विरोधेऽपि व्याहत्याऽप्रमाणनिश्चयो नास्ति तदिह विवक्षितं सत्प्रतिपक्षे तु तन्निश्चय इति तद्व्यावृत्तिरित्यर्थः । तदसम्भव एवेत्याह * नेति * देवदत्तसत्त्वासत्त्वग्राहकयोरपि विरोधे व्याहत्यैवाप्रमाणत्व-

निश्चयात्सत्प्रतिपक्षवदसिद्धिरित्यर्थः । शङ्कते * स- केति * देवदत्तस्य जीवित्वात्मत्वेन भवितव्यमिहा- नुपलभ्यमानत्वाद्सत्त्वेनेति तर्कयोर्विरोधो ऽनुपपत्तिः साऽन्यत्र सत्वापादनेन शाम्यतीत्यर्थः । अत्रापि तु- ल्यमुत्तरमित्याह * नेति *

तर्कत्वेनाभिमन्यमानेत्यादिविशेषणेऽपि पूर्ववदेव पुनरपि प्रमाणविरोधाऽनुपपत्तिरिति पक्षमवलम्ब्य शङ्कते ।

५७२ पुनः शङ्कान्तरनिरासः ।

विशेषप्रवृत्तप्रमाणार्थप्रतिक्षेपविषयत्वसंशयोऽविशेषप्रवृत्ततद्विपरीतार्थप्रमाणस्य विरोधे इति चेन्न । विशेषविषयप्रमाणबाधितवैपरीत्ये सति तद्विरुद्धार्थनांश संशयस्य दुर्बलस्यानवकाशत्वेनाविशेषप्रवृत्तप्रमाणविषयतां तदीयां गोचरयितुमप्यसामर्थ्यादेव । अविशेषप्रवृत्तस्य प्रमाणस्य तद्विपरीतार्थविशेषविषयप्रमाणदर्शनं तदितराविशेषविषयप्रमाफलकं तथेति चेन्न । अविशेषप्रवृत्तस्य प्रमाणस्य तद्विपरीतार्थविशेषविषयस्य च प्रमाणस्य च विषययोस्तद्विपरीतत्वविशेषणप्रतीत्यङ्गीकारलब्धायां परस्परविरुद्धत्वप्रतीतौ धर्मिणोर्विरुद्धधर्माध्यासस्य भेदस्य विरोधविवेचनस्फुटतद्गर्भप्रवेशतया तत्सहज्ञेयस्य तन्नान्तरीयकस्य वान्यत्रैवाऽन्यत एव प्राप्तेः।

१ स इतिचेदिति का० मु० पु० पा० ।

* विशेषेति * अविशेषप्रवृत्ततद्विपरीतार्थप्रमाणस्य विशेषप्रवृत्तप्रमाणार्थप्रतिक्षेपाविषयत्वसंशयः स इति सम्बन्धः । विशेषे देवदत्तगृहाभावे प्रवृत्तं प्रमाणमनुपलब्धिरूपं तस्यार्थो गृहे ऽभावस्तस्य प्रतिक्षेपो निरासः गृहेऽसत्वं स विषयो यस्य तद्विशेषप्रवृत्तप्रमाणार्थप्रतिक्षेपविषयस्तद्भावस्तत्त्वं तत्र संशयः तद्विषयत्वमस्ति वा न वेति अविशेषे देवदत्तसत्तामात्रे प्रवृत्तं जीवति देवदत्त इति प्रमाणं तस्माद्विशेषप्रवृत्तलक्षणाद्विपरीतार्थप्रमाणं यस्य स इति विरोधः स च गृहावच्छिन्नसत्त्वं बोधयन्न शाम्यति बहिर्भावमापाद्यैव शाम्यति साऽर्थापत्तिरित्याशयः । विशेषादर्शनमूलत्वात्संशयस्य विशेषदर्शने सति स नोपपद्यते इति परिहरति * नेति * वैपरीत्ये विशेषविषयप्रमाणबोधिते सति तद्विरुद्धार्थतांशे संशयस्याविशेषप्रवृत्तप्रमाणविषयतां तदीयां विशेषप्रमाणबोधितवैपरीत्यविरुद्धार्थांशसम्बन्धिनीं गोचरयितुमप्यसामर्थ्यादेवेत्यन्वयः । असामर्थ्ये हेतुर्दुर्बलस्येत्यादि । न हि स्थाणुरेवायमिति विशेषप्रमाणबोधिते स्थाणुत्वे ऊर्द्धत्वदर्शनात्तद्विरुद्धपुरुषत्वसंशयो भवति तद्वदनुपलब्ध्या गेहाभावे निश्चिते सति सामान्यप्रमाणेन तत्प्रतिक्षेपसंशयो ऽसम्भवीत्यर्थः । प्रकारान्तरेण प्रमाणविरोधमनुपपत्तिं शङ्कते * अविशेषेति * अविशेषप्रवृत्तस्य प्रमाणस्य तदितरविशेषविषयप्रमाफलकत्वं तद्विपरीतार्थविशेषविषयप्रमाणदर्शनं तथा विरोध इति सम्बन्धः । अविशेष-

प्रवृत्तस्य प्रमाणस्य—जीवति देवदत्त इति वाक्यस्य तद्विपरीतार्थे—तस्मात्सामान्यप्रमाणाद्विपरीतार्थे गेहाभावविषयविशेषप्रमाणमनुपलब्धिस्तद्दर्शनं तस्मादितरोविशेषो गेहाभावादितरो बहिर्भावात्मको विशेषस्तद्विषयमविशेषप्रमाणमिति—प्रमाणजनकमित्यर्थः । अर्थापत्तिमन्तरेणैव सामान्यविशेषप्रमाणार्थभेदसिद्धेर्मैवमिति परिहरति * नेति * अविशेषप्रवृत्तस्य तद्विरीतार्थविशेषविषयस्य च प्रमाणस्य विषययोः परस्परविरुद्धत्वप्रतिपत्तौ धर्मिणोर्भेदस्यान्यत एव प्राप्तेरित्यन्वयः । विरुद्धत्वप्रतीतौ हेतुस्तद्विपरीतेति। तस्माद्विशेषप्रवृत्तप्रमाणाद्विपरीतत्वाविशेषणप्रतीत्यङ्गीकारेण लब्धायां अन्यत एव प्राप्तौ हेतुः विरोधेति। विरोधस्य सहानवस्थानरूपस्य विवेचनं तस्मिन् स्फुटस्तद्गर्भे प्रवेशो यस्य स तथोक्तस्तद्भावस्तत्ता तया सह ज्ञेयस्य । तदुपपादनाय भेदस्वरूपमाह * विरुद्धधर्माध्यासस्येति * विरुद्धयोर्धर्मयोर्भावत्वाभावत्वयोः सम्बन्धो विरुद्धधर्म्माध्यासः स खलु विरोधगर्भे प्रविशति तेन विरोधेन सह ज्ञेयस्ततो विरोधप्रतीत्यैव विषयभेदस्य विरोधप्रतीतिकाल एव सिद्धत्वादर्थापत्तिरफला अयमेव हि भेदो भेदहेतुर्वा यद्विरुद्धधर्म्माध्यासः कारणभेदश्चेति मतमवलम्ब्योक्तमन्योन्याभावो भेद इति मतेऽप्याह * तदिति * तन्नान्तरीयकत्वं विरोधापर्यवसानवृत्त्या तदनुबन्धित्वम्। अन्यत एव-विरोधप्रतीतेरेव। अन्यत्रेव घटतदभावयोरिव। देवदत्तभावाभावयोरपि भेदः सिद्धोऽन्यथा त-

आप्यर्थापत्तिः स्यादिति विफलैवार्थापत्तिरित्यर्थः ।

प्रकारान्तरेण विकल्प्यापास्यति ।

५७३ अर्थापत्तेः प्रकारान्तरेण निरासः ।

किञ्चाविशेषप्रवृत्तस्यैव तस्य किं विशेषविषयत्वं ? अथ सामान्यतः प्रवृत्तस्य नान्तरीयकतया प्रागेव विशेषविषयस्य विशेषाविषयत्वेनाज्ञातस्य विशेषविषयत्वं ? अथ वा सामान्यस्य तद्विषयस्य विशेषः ? उत तद्विषयीकृतविशेषगतं किमपि धर्मान्तरमिदानीं प्रमीयते । नाद्यः अर्थापत्तेर्भ्रमकरणत्वापत्तेः । न द्वितीयः तदनुव्यवसायोत्पत्तेस्तद्विषयप्रतीत्यसम्भवात् । न तृतीयः सामान्यस्यानन्तर्भावितायस्य प्रत्येतुमशक्यत्वात् प्रागेवतत्सिद्धेः ।

* किं चेत्यादिना * जीवति देवदत्त इत्यविशेषप्रवृत्तप्रमाणस्य बहिर्भावरूपविशेषविषयत्वं प्रमीयत इति प्रथकल्पार्थः । प्रमाणस्य सामान्यतः प्रवृत्तत्वं तदपर्यवसानेनार्थापत्तेः प्रागेव विशेषविषयस्य सतो विशेषविषयत्वेनाज्ञातस्य विशेषविषयत्वमिदानीं प्रमीयत इति द्वितीयार्थः ।जीवति देवदत्त इति प्रमाणविषयस्य सत्वसामान्यस्य बहिर्देशत्वादिविशेष इदानीं प्रमीयत इति तृतीयार्थः। सामान्यप्रमाणविषयीकृते विशेषे किमपि धर्मान्तरमिदानीं प्रमीयत इति तुरीयार्थः। पूर्वं तु विकल्पद्वयं प्रमाणाश्रयमपरं प्रमेयाश्रयम्।

विकल्पक्रमेण निराकरोति*नेति* सामान्यविषयस्यैव प्रमाणस्य विशेषविषयत्वप्रतीतिर्भ्रमस्तत्करणं चार्थापत्तिः प्रमाणं स्यादित्यर्थः। द्वितीयमपवदति *नेति* कुत इत्यत आह *तदिति* विशेषाविषयस्य प्रमाणस्य तद्विषयत्वेनाज्ञातस्यैवासम्भवात्। तत्रापि हेतुस्तदिति। व्यवसायो निश्चयस्तमनु जायमानोऽनुव्यवसायस्तद्वादिमते फललिङ्गानुमानज्ञानवादिनयेऽप्यनुव्यवसायोऽस्त्येवानुमारूपः स्वयं प्रकाशत्वे त्वज्ञानमेव न सम्भवतीति भावः। तृतीयं निराकरोति*नेति* अर्थापत्तेः प्रागेव विशेषसिद्धेरिति हेतुस्तत्रापि कारणं सामान्येत्यादि। सामान्यस्य सत्तायामपराधीनस्यापि प्रतीतौ व्यक्तिपरतन्त्रत्वाज्ञानन्तर्भविताधिकरणं ज्ञातुं शक्यत इत्यर्थः।

तुरीयोऽपि न चातुरीयं प्राञ्चतीत्याह।

५७४ चतुर्थविकल्पनिरासः।

नापि चतुर्थः। तद्धि प्रतीयमानविरोधिव्यतिरिक्तत्वमन्यद्वा स्यात्। नान्त्यः तत्प्रतीतौ सामर्थ्यानुपदर्शनेनानियमप्रसङ्गात्। न प्रथमः अनुगताननुगतजातिव्यक्तिचाक्षुषाचाक्षुषादिव्यक्तिगन्धादितादात्म्यवादिनये तदुभयप्रमातादात्म्यविषयताव्युदासं विना विरोधाऽसिद्ध्या तद्गमनिकाबलस्यैवासिद्धेः। तदुभयप्रतीतौ च तदवधारणप्रागेव तत्प्रतीत्याऽर्थापत्त्यनुवादतापत्तेः।

*नेति* तदनुपपत्तिप्रकटनाय विकल्पयति *तदिति* प्रतीयमानो गृहेऽभावो विरोधी यस्य तत्प्र-

तीयमानविरोधि गृहे सत्वं ततो व्यतिरिक्तत्वं बहिस्सत्वमिति यावत् । अन्यदिति तद्गतपरिणामादिधर्मान्तरमित्यर्थः । प्रधानपरिवारन्यायेनान्त्यमादौ दूषयति * नान्त्य इति * तत्प्रतीतौ विशेषदर्शनरूपार्थापत्तेः सामर्थ्यं दर्शयितुमशक्यत्वेनार्थापत्त्या इदं प्रमीयत इति निश्चेतुमशक्यत्वादर्थापत्तिः संशयकरणं प्रमाणं न स्यादित्यर्थः । प्रथमकल्पेऽपि किं भट्टनयानुसारेणेदमुच्यते गुरुमतानुसरणेन वेति विकल्प्य प्रथमं प्रत्याह * नेति * अनुगता चाननुगता चानुगताननुगते ते च जातिव्यक्ती चाक्षुषा चाचाक्षुषा च चाक्षुषाचाक्षुषे ते च आदी यासां व्यक्तीनां ता अनुगताननुगतजातिव्यक्तिचाक्षुषाचाक्षुषादिव्याक्तिगन्धादयस्तासां तादात्म्यवादिनये तदुभयप्रमायास्तादात्म्यविषयताव्युदासं विना विरोधस्यैवासिद्धेः । एतदुक्तं भवति । अनुगता जातिरननुगता व्यक्तिरनुगत्यभावो ऽननुगतिस्तयोस्तादात्म्यविषया प्रतीतिः प्रमा तथा घटश्चाक्षुषो ऽचाक्षुषो गन्धः स न ग्राह्यो रसो नापस्तथा तत्र च तादात्म्यविषया प्रतीतिः प्रमा इत्यभ्युपगच्छता तादात्म्यप्रतीतेः प्रमात्वव्युदासं विना देवदत्तभावाभावयोरेकस्मिन् गेहे विरोधासिद्ध्या विशेषदर्शनस्यैव बहिःसत्वगमनिकासामर्थ्यस्यैवासिद्धेरर्थापत्तेरसम्भव इति । यदि गुरुमतानुसारेणोच्यते तत्राह * तदिति * तयोर्विशेषाविशेषप्रमाणार्थयोः प्रतीतौ तन्निष्ठो विरोधोऽवधार्यः अनवधारणे तद्धर्मविरोधस्यैवावधारणानुपपत्तेः त-

था च तन्निष्ठासद्भावस्थाने विरोधावधारण एवार्थापत्तिविषयस्य बहिःसत्त्वस्य सिद्धेः सामान्यप्रमाणस्य तद्विरुद्धार्थविशेषप्रमाणदर्शनरूपार्थापत्तिरनुवादत्वेनाप्रमाणं स्यादित्यर्थः। एतेनानुपपद्यमानदर्शनादुपपादके बुद्धिरर्थापत्तिरिति निरस्तमनुपपत्तिविषयस्यानुपपद्यमानत्वादनुपपत्तेश्च दुर्निरूपत्वादिति।

इत्यर्थापत्तिखण्डनम्।

---

भट्टाभिमतषष्ठप्रमाणखण्डनमुपक्रमते।

५७५ अनुपलब्धिप्रमाणखण्डनम्।

योग्यानुपलम्भोऽभावप्रमाकरणमित्यप्ययुक्तम्। प्रमाणाभावस्य[1] तथात्वे विभ्रमानुदय[2]प्रसङ्गात्। उपलम्भाभावमात्रस्य तथात्वे शङ्खधवलिमप्रतिसन्धानवतः पीतभ्रमानुदयप्रसङ्गात्। कालभेदात्तत्नाविरोध इति चेन्न। तथाऽपि संसृष्टयोरन्योन्याभावाग्रहणप्रसङ्गात्। तादात्म्यस्य स्वरूपमात्राऽनतिरेकात्। अभावस्फुरणे च तत्प्रतिभानस्य ध्रौव्यात्।

* योग्येति * योग्यत्वे सत्यनुपलम्भोऽभावप्रमाकरणमित्याहुर्योग्यत्वं च प्रतियोगितादिन्द्रियसन्निकर्षातिरिक्तप्रतियोगिप्रमापकयावदिन्द्रियमनःसमा-

---

१ प्रमाभावस्येति का० मु० पु० पा०।

२ प्रमानुदयेति का० मु० पु० पा०।

धानादिदृष्टसामग्रीसम्पत्तिस्तस्यां सत्यां प्रतियोग्यनुपलम्भः तदभावप्रमां कुर्वन्नभावप्रमाणमुच्यते यथा भूतले घटो नास्तीति । अयोग्यभूतललग्नसलिलानुपलम्भनिरासायाह * योग्येति * योग्यस्योपलम्भनिरासायानुपलम्भेति । किमनुपलम्भशब्देन प्रमाणाभावो विवक्षित उत ज्ञानमात्राभाव इति विकल्प्य प्रथमं पराचष्टे * प्रमेति * तथात्वे–अभावप्रमाकरणत्वे इत्यर्थः । शुक्तौ योग्यत्वे सति रजतविषयप्रमाणाभावस्य तदभावप्रमाकरणस्य सत्वेन नेदं रजतमिति तदभावप्रमैव स्यान्न त्विदं रजतमिति भ्रम इत्यर्थः । न च तदा गुणाभावेन करणस्य दोषप्रतिहतशक्तित्वेन वा प्रतियोगिप्रमापकसाकल्यं योग्यत्वमेव नास्तीति वाच्यम् । स्वतः प्रामाण्यपक्षे गुणस्य प्रमाऽकरणत्वाद्दोषस्य करणगतज्ञानजननशक्त्यभिघातकत्वे वा भ्रमज्ञानस्याप्यनुदयादत एव प्रामाण्यस्य स्वतस्त्वं ज्ञानहेतुमात्राधीनत्वमाहुः । अस्तु तर्हि द्वितीयस्तत्र रजतप्रामाण्याभावेऽपि तज्ज्ञानमात्रसम्भवेन भ्रमोपपत्तेरित्यत आह *उपेति* पूर्वानुभूतधवलिमानं स्मरतस्तद्विरोधात्पीतज्ञानमेव नास्ति युगपज्ज्ञानानुत्पत्तेर्मनसो लिङ्गत्वादतः पीतिमोपलम्भाभावस्य तदभावप्रमाकरणस्य विद्यमानतया तदभावप्रमैव स्यान्न तु पीतः शङ्ख इति विभ्रम उक्तदोषवतोऽपीत्यर्थः । शङ्खश्वैत्यस्मरणकाले पीतानुपलम्भेऽपि तदुत्तरकाले पीतोपलम्भसम्भवेन तद्भ्रमोत्पादाविरोध इति शङ्कते * कालेति * प्राक्काले तदभावप्रमाकरण-

पोष्कल्ये तदभावप्रमोत्पत्तेरेव तदुपलम्भो ऽसम्भवेति परिहरति *नेति* अङ्गीकृत्यापि दूषयति *तथपीति* संसृष्टयोर्गिरितर्वोर्नायं गिरिस्तरुरिति इतरेतराभावग्रहणं तस्य तत्प्रतियोगितादात्म्यस्य तदोपलम्भे तदभावप्रमाकरणानुपलम्भाभावादिति भावः। गिरितरुस्वरूपप्रतिभानेऽपि तत्सम्बन्धस्तादात्म्यं न भातीति तदभावप्रमा किन्न स्यादित्यत आह * तदेति * अन्योन्याभावे तत्स्वरूपेणैव प्रतियोगित्वन्न संसृष्टस्य संसर्गस्य वा तथा सति संसर्गाभावादितरेतराभावस्य भेदाभावप्रसङ्गादतस्तादात्म्यं प्रतियोगिस्वरूपमेवेत्यर्थः। तादात्म्यस्य स्वरूपमात्रं वा कथं तत्प्रतिभासोऽभावग्रहणकाल इत्यत आह * अभावेति *

"गृहीत्वा वस्तु सद्भावं स्मृत्वा च प्रतियोगिनम्।
मानसन्नास्तिताज्ञानं जायते ऽक्षानपेक्षया"
इति भाषितत्वादित्यर्थः।

एवं विशेष्यानुपलम्भांशप्रयुक्तदूषणमभिधाय विशेषणांशयोग्यत्वप्रयुक्तं दूषणमभिधत्ते।

५७६ योग्यत्वप्रयुक्तदूषणम्।

किञ्च योग्यता हि तत्तदविनाभूतान्यप्रतियोगिप्रमापकसाकल्यमिष्यते तथा सति च यत्र भावोपलम्भस्तत्राप्यभावप्रमा स्यात्। नहि तत्र हेतु व्यतिरेकेणैव वा सत्येव वा तदभावप्रमोत्पद्यते। तत्तदविनाभूतविरहसहितः स तथेति चेन्न। तदविनाभूतव्यतिरेकस्य तद्व्यतिरेकेणैवान्यथासिद्धसन्निधेरपि हेतुत्वाङ्गीकारे

प्रमाणाभावात् । अतएवालोकस्याध्यक्षणे नालोकान्तरवत्ताऽवंयवेनावयविना वा, आलोकेनान्यथासिद्धसन्निधिरहेतुरित्यालोकाभावग्रहे सा नापेक्ष्यते ।

* किं चेति * तदिति प्रतियोग्युच्यते । तदविनाभूतेति तदिन्द्रियसन्निकर्षः सम्बन्धस्य सम्बन्ध्यविनाभूतत्वात् ताभ्यामन्यानि प्रतियोगिप्रमापकाणीन्द्रियाणि मनःसमाधानादीनि तेषां पौष्कल्यं योग्यता स्वस्वेतरातिरिक्तस्वप्रमापकसामग्रीयोग्यत्वमिति यावत् । उत्पादकसामग्रीव्यावृत्त्यर्थं प्रमापकेत्याह । अभावप्रमापकसाकल्यनिरासाय प्रतियोगीति । प्रतियोगितदविनाभूतयोरपि प्रतियोगिप्रमापकत्वमस्तीति योग्यत्वमसम्भवि स्यात्तन्निराकरणाय तत्तदविनाभूतान्येति । अस्त्विदं योग्यत्वमस्मिंश्चानुपलम्भोऽभावप्रमाकरणं एतावता को दोषस्तत्राह * तथेति * यत्र घट इति प्रमा भवति तत्र घटो नास्तीत्यपि प्रमा स्यात् कुत इत्यत आह * नहीति * प्रतियोगिप्रमापकसाकल्यव्यतिरेकेणाभावप्रमा न जायते कार्यस्य कारणसाकल्यपूर्वकत्वनियमात्तत्र प्रमापकसद्भावे भावोपलम्भादेव नाभावप्रमोत्पद्यते ऽनुपलम्भाभावादित्यत आह * सतीति * भावोपलम्भे सत्येव न[1] भावप्रमा भवति वैयर्थ्यादनवस्थानाच्चाऽतः प्रमापकसाकल्ययोग्यत्वे सति प्रतियोगिप्रमोत्पत्तिक्षणे ऽनुपलम्भस्य सम्भवात् द्वितीयक्षणे तदभावप्रमा स्यादित्याशयः । उक्तातिव्या-

१ नेति सो० पु० नास्ति ।

प्तिपरिहाराय विशेषणं शङ्कते * तादिति * प्रतियो-गितदिन्द्रियसन्निकर्षव्यतिरेकसहितयोग्यानुपलम्भो-भावप्रमाणमिति नातिप्रसङ्ग इत्यर्थः । तदविनाभूत व्यतिरेकेति विशेषणं व्यर्थं तद्व्यतिरेकसाहित्यविशे-षणेनैवातिप्रसङ्गनिवृत्तेरिति परिहरति * नेति * तद विनाभूतव्यतिरेकस्य हेतुत्वाङ्गीकारे प्रमाणाभावाद भावप्रमायां इति[1] शेषः । इन्द्रियसन्निकर्षे सत्य भावप्रमानुत्पादादसति चोत्पादादन्वयव्यतिरेकौ प्र माणमित्यत आह * तादिति * प्रतियोग्यभावादे व सन्निकर्षाभावो न त्वभावप्रमाकरणत्वादित्यन्य-थासिद्धावन्वयव्यतिरेकावित्यर्थः । अन्यथासिद्धस-न्निधेरहेतुत्वं क्व दृष्टमित्यपेक्षायां तद्दृष्टान्तेन स्प-ष्टयति * अत इति * अत एवान्यथासिद्धसन्निधेरालो-काध्यक्षणेऽन्यालोकान्तरवत्ता ऽन्यथासिद्धसन्निधिरहे-तुः कथमालोकान्तरवत्ता तत्राह * अवयवेति * अ-वयव्यालोकाध्यक्षणेऽवयवेनावयवालोकाध्यक्षणे ऽव-यविना वा याऽऽलोकान्तरवत्ता चक्षुषः साऽन्यथासि-द्धसन्निधिस्तदन्वयव्यतिरेकावन्यथासिद्धौ कार्यकार-णत्वेन सन्निधिर्नत्वन्योन्यज्ञानहेतुत्वेनेति (क्रियावदा लोकाध्यक्षणे हेतुर्न भवतीति) कृत्वा तदभावग्रहे-ऽप्यालोकाभावतमोग्रहे ऽप्यालोकवत्ता नापेक्ष्यते या-वता प्रतियोगिज्ञानं तदभावो ऽपि तावतेति न्या-यादित्यर्थः ।

---

१ इत्यर्थ इति सो०पु०पा० ।

() एतदन्तर्गतो ग्रन्थः सो०पु०नास्ति ।

तत्तदविनाभूतविरहसहितेत्यादिलक्षणे व्यर्थविशेषणत्वमुक्त्वा सम्प्रत्यसम्भवमाह ।

५७७ असम्भवकथनम् ।

अर्थाक्षयोगस्तु नार्थव्याप्तोऽशतयैक्यात् । तद्विरहसहितः स तथेति चेन्न । इन्द्रियसन्निकर्षस्य हि प्रतियोग्यनुपलम्भे तावद्धेतुताऽङ्गीक्रियते तत्र किं सन्निकर्षव्यतिरेके कार्य्यानुदयोदाहरणमेष्टव्यं न वा, न यदि तदा सन्निकर्षस्य हेतुतैव कुतोमन्तव्याऽन्यथैव कार्य्योत्पत्त्युपपत्तेः । एष्टव्यश्चेत्तर्हि तत्रैवोदाहरणे व्यवधायकेनेन्द्रियसन्निकर्षशून्ये परमार्थतश्चाभाववत्युक्तकरणसम्पत्तेरभावप्रमा स्यात् । तत्र व्यवधायकाभावः प्रतियोग्युपलम्भको नास्तीति चेन्न । सन्निकर्षस्य प्रमाव्यतिरेकप्रयोजकत्वावधारणोदाहरणमेव तर्हि तन्न स्यात् । व्यवधायकस्य सन्निकर्षविरोधिनैव प्रमाविरोधित्वमिति चेत्तर्हि व्यवधायकाभावः सन्निकर्षोत्पत्तौ कारणं न त्वभावप्रमाविशेषोत्पत्ताविति स्थिते स प्रसङ्गस्तदवस्थ एव । नच सन्निकर्षाभावादेव तदानीमुक्तकारणासम्पत्तिः प्रतियोगिसन्निकर्षस्याभावप्रमोत्पादकत्वे नित्यं तदनुत्पत्त्यापत्तेः । अतएव नाव्यवधानमधिकं कारणमेष्टव्यं इन्द्रियसन्निकर्ष एव तदुपपत्तेः । नचाश्रयसाक्षात्कारो-

तिरेकलभ्यत्वादिह च तदभावादित्यर्थः । प्रथममनुवदति दूषणाय * एष्टव्यमिति * यदभिसन्धाय तदर्थमर्थान्तरमुपवर्णितं तदिदानीमाविष्करोति * तर्हीति * तत्रैवोदाहरणे सन्निकर्षव्यतिरेके कार्यानुदयोदाहरणेऽभावप्रमा स्यादिति सम्बन्धः । उक्तकारणसम्पत्तेरिति हेतुः । प्रतियोग्यभावसहितयोग्यानुपलम्भत्वादित्यर्थः । तदप्युपपादयति व्यवधायकेन कुड्यादिनेन्द्रियसन्निकर्षशून्ये परमार्थतश्चाभाववति घटादौ । न च तथा भावप्रमा भवति बहिःस्थस्यापवरकैकदेशे घटो विद्यते न वेति सन्देहदर्शनादित्यतिव्याप्तिरित्यर्थः । योग्येति विशेषणाभावान्न तत्रातिव्याप्तिरिति शङ्कते * तत्रेति * प्रतियोग्युपलम्भहेतुव्यवधायकस्य व्यवधानहेतोः कुड्यादेरप्यभावोऽपि योग्यपदार्थः स्वस्वेतरस्वप्रमापककारणपौष्कल्यस्य योग्यत्वेन विवक्षितत्वादिह च तन्नास्तीत्यर्थः । व्यवधायकाभावस्य न योग्यतान्तःप्रविष्टत्वं प्रतियोग्यनुपलम्भकत्वादित्यभिसन्धाय परिहरति * नेति * यदि व्यवधायकाभावः कारणं तर्हि कुड्यादिव्यवहितसन्निकर्षव्यतिरेकस्य प्रमाव्यतिरेकप्रयोजकत्वावधारणोदाहरणमेव न स्यात् किं सन्निकर्षाभावात्प्रतियोगिप्रमाऽभाव उत व्यवधायकाभावाभावादिति संदेहापत्तेरित्यर्थः । व्यवधायकाभावाभावो व्यवधायक एव तस्य स्वरूपेणैव प्रमाभावप्रयोजकत्वे भवेत्सन्निकर्षव्यतिरेकस्य प्रमाव्यतिरेकप्रयोजकत्वानवधारणं सन्निकर्षव्यतिरेकद्वारा प्रयोजकत्वेनाप्यदोष इति शङ्कते * व्यवधायके-

